पदपाठसहिता

# ऋग्वेद-संहिता

सायणाचार्यकृत-भाष्यसंवलिता

सैव

हिन्दीभाषामन्त्रानुवादसमन्विता

अनुवादक

पण्डित रामगोविन्द त्रिवेदी

।।श्रीः।।

विद्याभवन प्राच्यविद्या ग्रन्थमाला

३५

पदपाठसहिता

# ऋग्वेद-संहिता

सायणाचार्यकृत-भाष्यसंवलिता

सैव

हिन्दीभाषामन्त्रानुवादसमन्विता

चतुर्थोऽष्टकः



चौखम्बा विद्याभवन

वाराणसी

प्रकाशक

**चौखम्बा विद्याभवन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

चौक ( बैंक ऑफ बड़ोदा भवन के पीछे )

पो. बा. नं. 1069, वाराणसी 221001

दूरभाष : 2420404

ई-मेल : cvbhawan@yahoo.co.in

पुर्नमुद्रित संस्करण २००७

१-९ भाग (सम्पूर्ण)

मूल्य : ३५००.००

अन्य प्राप्तिस्थान

**चौखम्बा पब्लिशिंग हाउस**

4697/2, भू-तल ( ग्राउण्ड फ्लोर )

गली नं. 21-ए, अंसारी रोड

दरियागंज, नई दिल्ली 110002

दूरभाष : 23286537



**चौखम्बा संस्कृत प्रतिष्ठान**

38 यू. ए. बंगलो रोड, जवाहर नगर

पो. बा. नं. 2113

दिल्ली 110007

दूरभाष : 23856391



**चौखम्बा सुरभारती प्रकाशन**

के. 37/117 गोपालमन्दिर लेन

पो. बा. नं. 1129, वाराणसी 221001

दूरभाष : 2335263

THE
VIDYABHAWAN PRACHYAVIDYA GRANTHAMALA
35

# ṚG-VEDA-SAṀHITĀ

Together with

## PADAPĀṬHA
## &
## SĀYAṆABHĀṢYA

## FOURTH AṢṬAKA



CHOWKHAMBA VIDYABHAWAN
VARANASI

प्रकाशक

**चौखम्बा विद्याभवन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

चौक ( बैंक ऑफ बड़ोदा भवन के पीछे )

पो. बा. नं. 1069, वाराणसी 221001

दूरभाष : 2420404

ई-मेल : cvbhawan@yahoo.co.in

पुर्नमुद्रित संस्करण २००७

१-९ भाग (सम्पूर्ण)

मूल्य : ३५००.००

अन्य प्राप्तिस्थान

**चौखम्बा पब्लिशिंग हाउस**

4697/2, भू-तल ( ग्राउण्ड फ्लोर )

गली नं. 21-ए, अंसारी रोड

दरियागंज, नई दिल्ली 110002

दूरभाष : 23286537



**चौखम्बा संस्कृत प्रतिष्ठान**

38 यू. ए. बंगलो रोड, जवाहर नगर

पो. बा. नं. 2113

दिल्ली 110007

दूरभाष : 23856391



**चौखम्बा सुरभारती प्रकाशन**

के. 37/117 गोपालमन्दिर लेन

पो. बा. नं. 1129, वाराणसी 221001

दूरभाष : 2335263

THE
VIDYABHAWAN PRACHYAVIDYA GRANTHAMALA
35

# ṚG-VEDA-SAṀHITĀ

Together with

## PADAPĀṬHA
## &
## SĀYAṆABHĀṢYA

## FOURTH AṢṬAKA



CHOWKHAMBA VIDYABHAWAN
VARANASI

# ॥ श्रीगणेशायनमः ॥

यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगव ॥ निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥
पंचमेमंडलेप्रथमेनुवाकेपूर्वमष्टौसूक्तानिव्याख्यातानि त्वामग्नेहविष्मन्तइतिसप्तर्चंनवमं सूक्तम् आत्रेयस्यगयस्यार्षं सप्तमोपंचम्यौपंक्ती शिष्टाःपंक्त्यन्तस्यचसूक्तस्येतिपरिभाषयाअनुष्टुभः अग्निर्देवता तथाचानुक्रम्यते—त्वामग्नेगयोन्त्यापंचम्यौपंक्तीइति । प्रातरनुवाकेआश्विनशस्त्रेचएतदादिकेद्वेसूक्तेशंसनीये तथैवसूत्रितम्—त्वामग्नेहविष्मन्तइतिसूक्तेइति ।

तत्रैषाप्रथमा—

ओम् त्वामंग्नेहविष्मंन्तोदेवंमर्तासईळते ।
मन्यैत्वाजातवैदसंसहव्यावंक्ष्यानुषक् ॥ १ ॥

त्वाम् । अग्ने । हविष्मंन्तः । देवम् । मर्तासः । ईळते । मन्यै ।
त्वा । जातऽवैदसम् । सः । हव्या । वक्षि । आनुषक् ॥ १ ॥

हेअग्ने त्वां देवं दीप्यमानं हविष्मन्तः होमसाधनद्रव्यसमेताः मर्तासोमर्त्याः ईळते स्तुवन्ति अहंच जातवेदसं जातमुत्पन्नंचराचरभूतजातंवेत्तीतिजातवेदाः अथवा जातानिस्थावरजंगमात्मकानि एनंविदुरितिजातवेदाः यद्वा वेदइतिधननाम जातंसर्ववेदोधनंयस्यासौजातवेदाः एवंविधं त्वा त्वां मन्ये स्तौमि मनिरत्रस्तुत्यर्थेवर्तते धातूनामनेकार्थत्वाव् सत्वं हव्या हवनसाधनानिहवींषि आनुषक् निरन्तरतयाअनुषक्तं यथा तथा वक्षि वहसि ॥ हविष्मन्तः हविःशब्दऔणादिकइस्प्रत्ययान्तः प्रत्ययस्वरेणान्तोदात्तः तदस्यास्तीतिमतुप् पदसंज्ञायाअपवादत्वेनतसौमत्वर्थेइतिभसंज्ञायांरुत्वाभावः मतुप्जसोरनुदात्तत्वात्प्रत्ययस्वरएवशिष्यते। देवं अच्प्रत्ययान्तत्वाद्देवशब्दोन्तोदात्तः । मर्तासः मृङ्प्राणत्यागे असिहसिमृङित्यादिनातन् गुणः मर्तः जसेरसुक् मर्तासः नित्त्वादाद्युदात्तः। ईळते ईडस्तुतौ अदादित्वाच्छपोलुक् आत्मनेपदेष्वनतः टेरेत्वम् अत्रढकारस्याध्येतृसंप्रदायप्राप्तोळकारः लसार्वधातुकानुदात्तत्वेनधातुस्वरेप्राप्ते आष्टमिकोनिघातः । मन्ये श्यनोनित्त्वादाद्युदात्तत्वम् । त्वा युषिमिश्रणे मदिक्प्रत्ययान्तोयुष्मच्छ-

ब्दः प्रत्ययस्वरेणान्तोदात्तः त्वमावेकवचनेइतिमपर्यन्तस्यत्वादेशः द्वितीयांचेत्याकारः एकादेशउदात्तेनोदात्तइत्येकादेशोप्युदात्तएव त्वामौद्वितीयायाइतित्वादेशः स्थानिवद्भावेनान्तत्वे प्राप्ते अनुदात्तंसर्वमपादादावित्यनुदात्तत्वम् । जातवेदसम् जनीप्रादुर्भावे कः श्वीदितोनिष्ठायामितीट्प्रतिषेधः जनसनखनांसनझलोरित्यात्वं प्रत्ययस्वरेणान्तोदात्तः वेदस्शब्दोप्यसुन्प्रत्ययान्तत्वादाद्युदात्तः कर्मधारयपक्षे समासान्तोदात्तापवादत्वेन तत्पुरुषेतुल्यार्थेत्यादिनापूर्वपदप्रकृतिस्वरत्वेप्राप्तेकृदुत्तरपदप्रकृतिस्वरत्वं तदपवादत्वेनगतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वं चेतिपूर्वपदप्रकृतिस्वरत्वं बहुव्रीहिपक्षे बहुव्रीहौप्रकृत्यापूर्वपदमिति । हव्या हवमर्हतीत्यस्मिन्नर्थेयइत्यनुवर्तमाने छंदसिचेतियः नपुंसकत्वाच्छिरादेशः शेश्छन्दसिबहुलमितिलोपः प्रत्ययलक्षणेननुम् दीर्घनलोपौ प्रत्ययस्वरेणान्तोदात्तः।वक्षि वहप्रापणे सिप् लुगनुवृत्तौ बहुलं छन्दसीतिशपोलुक् ढत्वकत्वषत्वानि सिपःपित्त्वादनुदात्तत्वेन धातुस्वरेणाद्युदात्तत्वेप्राप्तेनिघातः। आनुषक् अनुपूर्वस्यषंजेःक्विप् नकारलोपः कुत्वंच धात्वादेःसकारस्यउपसर्गात्सुनोतीत्यादिनाषत्वं दीर्घश्छान्दसः कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ १ ॥

१. हे अग्नि, तुम दीप्यमान देव हो। होमसाधक द्रव्य से युक्त होकर मर्त्यलोग तुम्हारी स्तुति करते हैं। तुम चराचर भूतजात को जानते हो। हम तुम्हारी स्तुति करते हैं। तुम हवन-साधन हव्य का, निरन्तर, वहन करते हो।

अथद्वितीया—

अ॒ग्निर्होता॑दा॒स्वतः॒क्षयं॑स्यवृ॒क्तब॑र्हिषः ।
संय॒ज्ञास॒श्चर॑न्ति॒यंसं॑वाजा॒सः॑श्रव॒स्यवः॑ ॥ २ ॥

अ॒ग्निः । होता॑ । दा॒स्वतः॑ । क्षय॑स्य । वृ॒क्तऽब॑र्हिषः । सम् । य॒ज्ञासः॑ । चर॑न्ति । यम् । सम् । वाजा॑सः । श्र॒व॒स्यवः॑ ॥ २ ॥

यं अग्निं यज्ञासः सर्वेयज्ञाः संचरन्ति सहितागच्छन्ति श्रवस्यवः यजमानस्यप्रभूतांकीर्तिंसंपादयन्तोवाजासोहवींषियमग्निंसंचरन्ति प्राप्नुवन्ति एवंविशिष्टोग्निः दास्वतः हविःप्रक्षेपणादिदानवतः वृक्तबर्हिषः वृक्तानिलूनानिबर्हींषिदर्भायेनासौवृक्तबर्हिः तस्य क्षयस्य क्षियन्तिनिवसंत्यस्मिन्स्वर्गसाधनफलानीतिक्षयः तस्य यजमानस्य यागार्थंहोतादेवानामाह्वाताभवति ॥ दास्वतः दादाने असुन्प्रत्ययान्तः मतुपः अदुपधात्वाद्वत्वं धातुस्वरेणाद्युदात्तएव । क्षयस्य क्षिनिवासगत्योः क्षयोनिवासेइत्याद्युदात्तत्वं । वृक्तबर्हिषः वृजीवर्जने वर्जनमत्रोपचाराच्छेदनं निष्ठाप्रत्ययस्वरेणान्तोदात्तः बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरत्वं । यज्ञासः यज्ञशब्दःयजयाचेत्यादिनानङ्प्रत्ययान्तोन्तोदात्तः । चरन्ति चरगतिभक्षणयोः अदुपदेशाल्लसार्वधातुकानुदात्तत्वं यद्वृत्तान्नित्यमितिनिघाताभावः। वाजासः वजेर्घञ् वाजः कर्षात्वतइत्यन्तो-

दात्तत्वं छान्दसत्वात् ञ्नित्यादिर्नित्यमित्याद्युदात्तः । श्रवस्यवः छन्दसिपरेच्छायामितिक्यच् क्याच्छन्दसीत्युप्रत्ययः प्रत्ययस्वरेणान्तोदात्तः ॥ २ ॥

२. निखल यज्ञ जिन अग्नि के साथ गमन करते हैं, यजमान की प्रभूत कीर्ति के सम्पादक हव्य जिन अग्नि को प्राप्त करते हैं, वह अग्नि हव्य-दाता और कुशच्छेदक यजमान के यज्ञ के लिए देवों के आह्वाता होते हैं।

उतस्मयंशिशुंयथानवंजनिष्टारणी ।
धर्तारंमानुषीणांविशामग्निंस्वध्वरम् ॥ ३ ॥

उत । स्म । यम् । शिशुम् । यथा । नवम् । जनिष्ट । अरणी इति ।
धर्तारम् । मानुषीणाम् । विशाम् । अग्निम् । सुऽअध्वरम् ॥ ३ ॥

उतस्म अपिच मानुषीणां मनोर्जातानां विशां विशन्तिप्रविशन्तिगर्भाशयमितिविशः प्रजाः तासांधर्तारं आहारादिपाकद्वारेणशरीरधातूनांपोषकं स्वध्वरं शोभनयज्ञं यमग्निं अरणी द्वेअरणी नवंनूतनंशिशुं यथा अपत्यमिवजनिष्ट अजनिषाताम् अरणी प्रजानांपोषणार्थंच एतमग्निं असृजतामित्यर्थः ॥ शिशुं शोतनूकरणे आदेचइत्यादिनाआत्वं शःकित्सन्वच्चेत्युप्रत्ययः सन्वद्भावश्च द्विर्भावः अभ्यासस्यह्रस्वश्च सन्यतइतीत्वं आतोधातोरित्याकारलोपः धान्येनिवअस्मात्सूत्रान्निदित्यनुवर्तते नित्त्वादाद्युदात्तः । यथा यथेतिपादान्तेइतिसर्वानुदात्तः । जनिष्ट जनीप्रादुर्भावे लुङ् छान्दसत्वाद्वचनव्यत्ययः । अरणी ऋगतौ अर्तिसृधृधम्यश्यवितृभ्योनिरितिअनिःप्रत्ययः आद्युदात्तः आभ्यामर्तिगच्छत्यग्निरित्यरणी कथमपादानार्थेऔणादिकोनिः ताभ्यामन्यत्रोणादयइतिनियमात् भीमादित्वात्सिद्धम् । मानुषीणां मनोर्जातावन्यतौषुक्चेत्यञ्प्रत्ययः षुगागमश्च ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वम् । विशां विशप्रवेशने कर्तरिक्विप् सावेकाचइतिविभक्तेरुदात्तत्वं । स्वध्वरं हिंसार्थस्यध्वरतेःपचाद्यच् नविद्यतेध्वरोयागहिंसायस्मिन्नित्यध्वरः बहुव्रीहिस्वरापवादत्वेननञ्सुभ्यामित्यन्तोदात्तः ॥ ३ ॥

३. आहारादि के पाक-द्वारा मनुष्यों के पोषक और यज्ञ-शोभाकारी अग्नि को अरणिद्वय नव शिशु की तरह उत्पन्न करते हैं।

अथचतुर्थी—

उतस्मंदुर्गृभीयसेपुत्रोनह्वार्याणाम् ।
पुरुयोदग्धासिवनाग्नेपशुर्नयवसे ॥ ४ ॥

उत । स्म । दुःऽगृभीयसे । पुत्रः । न । ह्वार्याणाम् । पुरु । यः ।
दग्धा । असि । वना । अग्ने । पशुः । न । यवसे ॥ ४ ॥

उतस्म अपिच ह्वार्याणां कुटिलंगच्छतां सर्पाणां यद्वा आस्कन्दितादिगतिविशेषणवक्रगमनानां अश्वानां पुत्रोन पुत्रइव वालसर्पइवअशिक्षितवालाश्वइव वा दुर्गृभीयसेदुःखेनगृह्यसे हेअग्ने यस्त्वं पुरु पुरूणि बहूनि वना वनानि दग्धासि दाहकोभवसि कथमिव यवसेतृणेपशुर्न पशुरिव अयमर्थः अत्यन्तक्षुधार्तःपशुः तृणविषयेविसृष्टःसन् यथासर्वंभक्षयति तद्वदित्यर्थः ॥ दुर्गृभीयसे ग्रहउपादाने यक् ग्रुवईडित्यनुवृत्तौ बहुलंछन्दसीतीडागमः ग्रह्यादिनासंप्रसारणं हृग्रहोर्भश्छन्दसीतिभकारः निघातः। ह्वार्याणां ह्वृकौटिल्ये ऋहलोर्ण्यत् आदिवृद्धिः तित्स्वरितइतिस्वरितत्वम्। पुरु पृपालनपूरणयोः पृभिदिव्यधिधृषिदृशिभ्यइतिकुप्रत्ययः उदोष्ठ्यपूर्वस्येतिउत्वम् प्रत्ययस्वरेणान्तोदात्तः। असि यद्वृत्तान्नित्यमितिननिघातः ॥ ४ ॥

४. हे अग्नि, कुटिलगति सर्प या वक्रगति अश्व के शिशु की तरह तुम कष्टपूर्वक धारण करने के योग्य हो। तृणमध्य में परित्यक्त पशु जिस तरह से तृण भक्षण करता है, उसी तरह से तुम समग्र वन के दाहक होते हो।

अधस्मयस्यार्चयःसम्यक्संयन्तिधूमिनः।
यदीमहत्रितोदिव्युपध्मातेवधमतिशिशीतेध्मातरीयथा ॥ ५ ॥

अध। स्म। यस्य। अर्चयः। सम्यक्। सम्ऽयन्ति। धूमिनः।
यत्। ईम्। अह। त्रितः। दिवि। उप। ध्माताऽइव। धमति।
शिशीते। ध्मातरि। यथा ॥ ५ ॥

अधस्म अपिच धूमिनः धूमवतोयस्याग्नेरर्चयः अर्चींषि सम्यक् शोभनं संयन्ति सर्वतःप्रामुवन्ति त्रितः त्रिषुस्थानेषु ततोव्याप्तः त्रीणिस्थानानिवाअतीत्य दिवि अन्तरिक्षे यत् यदा ईमयंआत्मानमुपधमति उपवर्धयति तदा ज्वालाः सर्वतोनिर्गच्छन्तीत्यर्थः कथमिव ध्मातेव कर्मारोयथाभस्त्रादिभिरग्निंसंवर्धयतितद्वत् स्वात्मानंवर्धयतीत्यर्थः किंच ध्मातरियथायथाध्मातृसमीपेविद्यमानोग्निः तेनध्मायमानः आत्मानंशिशीते तीक्ष्णीकरोति तद्वत् स्वयमेव स्वात्मानंतीक्ष्णीकरोतीत्यर्थः अहेतिपादपूरणः ॥ यन्ति इणूगतौ यच्छब्दयोगान्निघाताभावः। धमति ध्माशब्दाग्निसंयोगयोः पाघ्रादिनाधमादेशः पूर्ववन्निघाताभावः। शिशीते शोतनूकरणे व्यत्ययेनात्मनेपदी श्लावित्यनुवर्तमाने बहुलंछन्दसीतिविकरणस्यश्लुः आदेचउपदेशेशितीत्यात्वम् श्लाविति द्विर्वचनं बहुलंछन्दसीत्यभ्यासस्येत्वं उभेअभ्यस्तमित्यभ्यस्तसंज्ञायां आतईहल्यघोरितीत्वं तिङउत्तरत्वान्निघाताभावः॥ ५ ॥

५. धूमवान् अग्नि की शिखायें शोभन रूप से सर्वत्र व्याप्त होती हैं। तीनों स्थानों में व्याप्त अग्नि अपनी ज्वाला को स्वयमेव अन्तरिक्ष में उपवर्द्धित करते हैं, जैसे भस्त्रादि के द्वारा कर्मकार अग्नि को संवर्द्धित करते हैं। अग्नि कर्मकार-द्वारा सन्धुक्षित अग्नि की तरह अपने को तीक्ष्ण करते हैं।

अथषष्ठी—

तवाहमग्नऊतिभिर्मित्रस्यचप्रशस्तिभिः ।
द्वेषोयुतोनदुरितातुर्यामर्त्यानाम् ॥ ६ ॥

तव । अहम् । अग्ने । ऊतिऽभिः । मित्रस्य । च । प्रशस्तिऽभिः ।
द्वेषःऽयुतः । न । दुःऽइता । तुर्याम । मर्त्यानाम् ॥ ६ ॥

हेअग्ने अहं मित्रस्य सर्वेषांमित्रभूतस्य तव ऊतिभिः युष्मत्कर्तृकरक्षणैः युष्मत्प्रशस्तिभिश्च अस्मत्कृतैःस्तोत्रैश्चमर्त्यानां शत्रुभूतानां मनुष्याणां दुरिता दुरितानि तत्कर्तृकानि पापसाधनकर्माणि द्वेषोयुतोन द्वेषयुक्तानशत्रूनिव तुर्याम तरेयं अयमर्थस्त्वद्रक्षणैस्त्वत्संबन्धिस्तुतिभिश्च बाह्याभ्यन्तरशत्रून्तरेयमित्यर्थः ॥ ऊतिभिः अवरक्षणे क्तिन् ज्वरत्वरस्रिव्यविमवामुपधायाश्चेत्यूठ् ऊतियूतिजूतिसातिहेतिकीर्तयश्चेत्यन्तोदात्तत्वेनिपातितः । प्रशस्तिभिः शंसुस्तुतौ क्तिन् कृदुत्तरपदप्रकृतिस्वरापवादत्वेन तादौचनितिकृत्यताविति गतेरुदात्तत्वम् । द्वेषोयुतः द्विषअप्रीतौ भावे असुन्प्रत्ययः युमिश्रणे कर्तरिक्विप् तुक् कृदुत्तरपदप्रकृतिस्वरत्वम् । तुर्याम तॄप्लवनतरणयोः प्रार्थनायांलिङ् यासुट् लिङःसलोपोनंत्यस्येतिसकारलोपः बहुलंछन्दसीतिशपोलुक् उदोष्ठ्यपूर्वस्यबहुलंछन्दसीत्युत्वं यासुडागमस्यउदात्तत्वात् शेषनिघातः अपादादावितिप्रतिषेधात् निघाताभावः ॥ ६ ॥

६. हे अग्नि, तुम सबके मित्र-स्वरूप हो। तुम्हारी रक्षा-द्वारा और तुम्हारा स्तव करके हम शत्रुभूत मनुष्यों के पाप साधन कर्म्मों से उत्तीर्ण हों। तुम्हारी रक्षा और तुम्हारे स्तोत्रों के द्वारा हम बाह्याभ्यन्तर शत्रुओं से उत्तीर्ण हों।

अथसप्तमी—

तंनोअग्नेअभीनरोरयिंसहस्वआभर ।
सक्षेपयत्सपोषयद्भुवद्वाजस्यसातयउतैधिपृत्सुनोवृधे ॥ ७ ॥ १ ॥

तम् । नः । अग्ने । अभि । नरः । रयिम् । सहस्वः । आ । भर । सः ।
क्षेपयत् । सः । पोषयत् । भुवत् । वाजस्य । सातये । उत ।
एधि । पृत्ऽसु । नः । वृधे ॥ ७ ॥ १ ॥

हेअग्ने सहस्वः बलवन् नरः हविषांनेतारः नोस्माकं तं रयिं लोकेप्रसिद्धं पश्वादिलक्षणं धनं अभ्याभर आभिमुख्येनआहर पूर्वोक्तःसोग्निः क्षेपयत् अस्मदीयान् शत्रूनक्षेपयतु सोग्निःपोषयत् अस्मान्पोषयतु वाजस्यान्नस्यसातयेलाभायभुवत् भवतु उत

अपिच हेअग्ने पृत्सु पृतनासु युद्धेषु नोस्माकंवृधे समृद्धये एधि भव संग्रामेशत्रुविजयार्थंसत्वसमृद्धिंकुर्वित्यर्थः ॥ सहस्वः सहमर्षणे असुन् सहत्यनेनशत्रूनितिसहोबलं मतुप् मादुपधायाइतिवत्वम् मतुवसोरुसंबुद्धौछन्दसीतिरुत्वम् आमंत्रितस्यचेतिनिघातः। क्षेपयत् क्षिपप्रेरणे णिजंताल्लेट् इतश्चलोपः लेटोडाटावित्यडागमः शप् गुणायादेशौ पररूपत्वं च। पोषयत् पुषपुष्टौ। भुवत् भूसत्तायां भूसुवोस्तिङीतिगुणप्रतिषेधः उवङ्। एधि असभुवि घ्वसोरेद्धावभ्यासलोपश्चेत्येत्वं तस्यासिद्धत्वात् हुझल्भ्योहेर्धिरितिधिरादेशःनिघातः। पृत्सुः पदादिष्वित्यादिनापृतनाशब्दस्यपृदादेशः सावेकाचूत्वादन्तोदात्तत्वम्॥ ७ ॥

७. हे अग्नि, तुम बलवान् और हव्यवाहक हो। तुम हम लोगों के निकट प्रसिद्ध धन आहरण करो। हम लोगों के शत्रुओं को पराभूत करके हम लोगों का पोषण करो। अन्न प्रदान करो और युद्ध में हम लोगों की समृद्धि का विधान करो।

॥ इतिचतुर्थस्यप्रथमेप्रथमोवर्गः ॥ १ ॥

अग्नओजिष्ठमितिसप्तर्चंदशमंसूक्तं ऋष्यादिविनियोगश्चपूर्ववत् चतुर्थीसप्तम्यौपंक्ती अग्नओजिष्ठमंत्याचतुर्थीचेत्यनुक्रान्तम्।

तत्रप्रथमा—

अग्नओजिष्ठमाभरद्युम्नमस्मभ्यमध्रिगो।
प्रनोरायापरीणसारत्सिवाजायपन्थाम्॥ १ ॥

अग्ने। ओजिष्ठम्। आ। भर। द्युम्नम्। अस्मभ्यम्।
अध्रिगोइत्यध्रिऽगो। प्र। नः। राया। परीणसा। रत्सि।
वाजाय। पन्थाम्॥ १ ॥

हेअग्ने ओजिष्ठं बलवत्तमं द्युम्नं द्योततेकटकमुकुटादिरूपेणसर्वत्रप्रकाशतइतिद्युम्नं धनं अस्मभ्यं आभर आहर हेअध्रिगो अधृतगमन अधृतमप्रतिहतं गमनंयस्येत्यधृताः अनिवारितागावोरश्मयोयस्येतिवाअधृतगुः अध्रिगुः तस्यसंबोधनं नःअस्मान् परीणसा परितोव्यापकेन राया धनेन प्रकर्षेणयोजय वाजाय अन्नलाभाय पंथां पंथानं अन्नस्यमत्समीपप्राप्तिसाधनंमार्गंरत्सि विलिख कुर्वित्यर्थः॥ ओजिष्ठं उब्जआर्जवे उब्जेर्बलेबलोपश्चेत्यसुन् बलोपश्च गुणः ओजः तदस्यास्तीत्यर्थे अस्मायामेधेत्यादिनाविनिः अतिशायनेइतिइष्ठन् विन्मतोर्लुक् टेरितिटिलोपः नित्त्वादाद्युदात्तः। द्युम्नं द्युतदीप्तावित्यस्माद्धातोः सुम्नद्युम्ननिम्नेत्यादिना कप्रत्ययः मकारश्चान्तादेशोनिपात्यते प्रत्ययस्वरेणान्तोदात्तः। अध्रिगो अधृतशब्दस्य अध्रिआदेशः गोशब्दस्योपसर्जनह्रस्वत्वं आमंत्रितस्यनिघातः। परीणसा णसकौटिल्ये अ-

नव्याप्त्यर्थः धातूनामनेकार्थत्वात् अस्मात्संपदादिलक्षणोभावेक्विप् परिप्राप्तं नसृव्यापनंयस्य तत्तथोक्तं उपसर्गादसमासेपीतिणत्वं अत्रप्रापणक्रिययायुक्तस्यपरेःणसर्तिंप्रतिउपसर्गसंज्ञानास्ति यत्क्रियायुक्तास्तंप्रतिगत्युपसर्गसंज्ञकाइतिन्यायात् अतःकथंणत्वं एवंतर्हिउपसर्गाद्बहुलमितिवचनात् णसोणत्वं भविष्यति निपातस्यचेतिपूर्वपदस्यदीर्घः बहुव्रीहौप्रकृत्येतिपूर्वपदप्रकृतिस्वरत्वम् । रत्सि रदविलेखने भौवादिकः बहुलंछन्दसीतिशपोलुक् पादादित्वान्निघाताभावः । पंथां द्वितीयैकवचने इतोत्सर्वनामस्थानेइत्यत् नकारलोपश्छान्दसः पथिमथोःसर्वनामस्थानेइत्याद्युदात्तत्वम् ॥ १ ॥

१. हे अग्नि, तुम हम लोगों के लिए अत्युत्कृष्ट (कटक-मुकुटादिरूप) धन आहरण करो। तुम अप्रतिहत-गति हो। तुम हम लोगों को सर्वत्र व्याप्त धन से युक्त करो और अन्न-लाभ के लिए हम लोगों के पथ का आविष्कार करो।

त्वंनो॑अग्नेअद्भुत॒क्रत्वा॒दक्ष॑स्यमं॒हना॑ ।
त्वेअ॑सु॒र्यं१॒मारु॑हत्क्रा॒णामि॒त्रोनय॒ज्ञियः॑ ॥ २ ॥
त्वम् । नः॒ । अ॒ग्ने॒ । अ॒द्भु॒त॒ । क्रत्वा॑ । दक्ष॑स्य । मं॒हना॑ । त्वे इति॑ ।
अ॒सु॒र्य॑म् । आ । अ॒रु॒ह॒त् । क्रा॒णा । मि॒त्रः । न । य॒ज्ञियः॑ ॥ २ ॥

हेअग्ने अद्भुतसामर्थ्यातिशयेनसर्वेषामाश्चर्यभूत त्वं नोस्माकं क्रत्वा कर्मणा अस्मत्कृतेनयज्ञादिव्यापारेणप्रीतःसन् दक्षस्य बलस्य धनस्यवा मंहना मंहनंनामदानंकुर्वितिशेषः यतःकारणात् त्वे त्वयि असुर्यं असुरघ्नंबलं आरुहत् आरूढं अतः मित्रोन सूर्यइव यज्ञियः यज्ञार्हस्त्वं क्राणायज्ञघातकराक्षसापनोदनलक्षणानिकर्माणिकुर्वाणोभव ॥ अद्भुत आमंत्रितस्याद्युदात्तत्वम् । क्रत्वा डुकृञ्करणे कृञःकतुरितिकतुप्रत्ययः ककारोगुणवृद्धिप्रतिषेधार्थः यणादेशः क्रतुःकर्मतृतीयैकवचनेजसादिषुवावचनमितिवचनान्नाभावाभावः। दक्षस्य दक्षगतिहिंसनयोः दक्ष्यन्तेहिंस्यन्तेअनेनशत्रवइतिदक्षंबलं करणाधिकरणयोश्चेतिघञ् ञित्त्वादाद्युदात्तः । मंहना मंहतिर्दानकर्मा सुपांसुलुगित्याकारादेशः । त्वे सुपांसुलुगित्यादिनाङेःशेआदेशः सुवादेशत्वादनुदात्तः त्वशब्दःप्रत्ययस्वरेणान्तोदात्तः एकादेशउदात्तेनोदात्तइत्येकादेशस्योदात्तत्वं । आरुहत् रुहेर्धातोर्लुङि कृमृदृरुहिभ्यश्छन्दसीतिच्लेरङादेशः ङित्त्वाद्गुणाभावः । क्राणा डुकृञ्करणे शानच् बहुलंछन्दसीतिविकरणस्यलुक् यणादेशः सुपांसुलुगित्यात्वं चितइत्यन्तोदात्तः । यज्ञियः यज्ञमर्हतीत्यस्मिन्नर्थे यज्ञर्त्विग्भ्यांघखञाविति घः प्रत्ययस्वरेणान्तोदात्तः ॥ २ ॥

२. हे अग्नि, तुम सबके मध्य में आश्चर्यभूत हो। तुम हम लोगों के यज्ञादि व्यापार से प्रसन्न होकर के हम लोगों के लिए बल या धन का दान करो। तुम्हारा बल असुरों को विनष्ट करनेवाला है। तुम सूर्य की तरह यज्ञ-कार्य का सम्पादन करो।

अथतृतीया—

त्वंनोअग्नएषांगयंपुष्टिंचवर्धय ।
येस्तोमेभिःप्रसूरयोनरोमघान्यानशुः ॥ ३ ॥

त्वम् । नः । अग्ने । एषाम् । गयम् । पुष्टिम् । च । वर्धय । ये ।
स्तोमेभिः । प्र । सूरयः । नरः । मघानि । आनशुः ॥ ३ ॥

हेअग्ने त्वं एषां नः त्वद्स्तावकानामस्माकं गयं गम्यतेनिवासायेतिगयंगृहं गीयते स्तूयतइतिवागयंधनं पुष्टिंच गवादिविषयांपुष्टिंचवर्धय वृद्धिंप्रापय येलोकेप्रसिद्धाः सूरयो-लब्धवर्णानरःस्तोतारोमनुष्याः स्तोमेभिः स्तोमैःस्तोत्रैः मघानिमंहनीयानिगवादिधनानि यथाप्रानशुः प्राप्नुवन् तद्वद्वयमपीत्यर्थः ॥ गयं गृहपक्षेगमेरव्यादयश्चेतियत्प्रत्ययान्तोमकारलोपश्चनिपात्यते धनपक्षे गास्तुतौ अस्माद् यत्प्रत्ययोह्रस्वत्वं यतोनावइत्याद्युदात्तत्वम् । पुष्टिम् पुषपुष्टौ स्त्रियांक्तिन् छान्दसत्वादन्तोदात्तत्वम् । स्तोमेभिः ष्टुञ्स्तुतौ अर्तिस्तुसुहुइत्यादिनामन् गुणः नित्त्वादाद्युदात्तः । आनशुः अशूव्याप्तौ लिट् द्विर्वचनं हलादिशेषः अतआदेरित्यात्वं अश्नोतेश्चेतिनुडागमः निघातः ॥ ३ ॥

३. हे अग्नि, प्रसिद्ध स्तवकारी मनुष्यगण तुम्हारी स्तुति करके उत्कृष्ट (गो आदि) धन लाभ करते हैं। हम भी तुम्हारी स्तुति करते हैं। हम लोगों के लिए धन और पुष्टि का वर्द्धन करो।

अथचतुर्थी—

येअग्नेचन्द्रतेगिरःशुंभन्त्यश्वराधसः ।
शुष्मेभिःशुष्मिणोनरोदिवश्चिद्येषांबृहत्सुकीर्तिर्बोधतित्मना ॥४॥

ये । अग्ने । चन्द्र । ते । गिरः । शुंभन्ति । अश्वऽराधसः ।
शुष्मेभिः । शुष्मिणः । नरः । दिवः । चित् । येषाम् । बृहत् ।
सुऽकीर्तिः । बोधति । त्मना ॥ ४ ॥

हेअग्ने चन्द्र सर्वेषांप्राणिनामाह्लादकर येनरः तेगिरः त्वत्संबन्धिस्तोत्ररूपावाचः शुंभन्ति शोभनाःकुर्वन्ति ते अश्वराधसः अश्वधनाभवन्ति एतेनसर्वसमृद्धिरुपलक्ष्यते किंच शुष्मिणःबलवन्तःसन्तः शुष्मेभिःशुष्मैः स्वकीयैर्बलैः सत्वैः शत्रुशोषकाभवन्ति येषां त्वत्संबन्धिनंस्तवंकुर्वतां दिवश्चिद् आकाशादपि बृहद् महतीसुकीर्तिर्भवति सर्वदिगन्तरालवर्तिनीकीर्तिर्भवतीत्यर्थः एवंविधंत्वां गयः त्मना आत्मना स्वयमेवबोधति बोधयति ॥

शुंभंति शुभशुंभदीप्तौ तुदादिः पादादित्वान्निघाताभावः लसार्वधातुकानुदात्तत्वेप्राप्ते सतिशिष्टत्वा-द्विकरणस्वरएव । अश्वराधसः अशूव्याप्तौ अशूप्रुषीत्यादिनाक्वन् अश्नुतेव्याप्नोत्यध्वान-मित्यश्वः निस्वादाद्युदात्तः राधसाधसंसिद्धौ असुन् राध्नुवन्ति साधयन्ति अनेन धर्मादी-नीतिराधोधनम् बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरत्वम् । बृहत् बृहवृहिवृद्धौ शतृ ङीपोलो-पश्छान्दसः प्रत्ययस्वरः । बोधति बुधअवगमने ण्यन्ताव शपिकृते तस्यछन्दस्युभयथे-तिसार्वधातुकसंज्ञायांणिलोपः यद्वृत्तान्नित्यमितिनिघाताभावः धातुस्वरेणाद्युदात्तः । त्मना मं-त्रेष्वाङ्यादेरात्मनइत्याकारलोपः ॥ ४ ॥

४. हे आनन्ददायक अग्नि, जो लोग सुन्दर रूप से तुम्हारी स्तुति करते हैं, वे अश्वधन लाभ करते हैं और बलशाली होकर अपने बल से शत्रुओं को विनष्ट करते हैं एवम् स्वर्ग से भी बड़ी सुकीर्ति लाभ करते हैं। गय ऋषि ने तुम्हें स्वयं जागरित किया है।

तवत्येअंग्नेअर्चयोभ्राजंन्तोयन्तिधृष्णुया ।
परिंज्मानोनविद्युतःस्वानोरथोनवाजयुः ॥ ५ ॥

तवं । त्ये । अग्ने । अर्चयः । भ्राजंन्तः । यन्ति । धृष्णुऽया ।
परिंऽज्मानः । न । विऽद्युतः । स्वानः । रथः । न । वाजऽयुः ॥ ५ ॥

हेअग्ने धृष्णुया धृष्णवः अत्यन्तप्रगल्भाः भ्राजन्तः दीप्यमानाः त्ये ते प्रसिद्धाः तव अर्चिषः त्वदीयारश्मयः यन्ति सर्वतोगच्छन्ति कथमिव परिज्मानः परितोगंत्र्यः सर्वतो-व्याप्ताः विद्युतोन अचिरप्रभाइवअनेनप्रकाशातिशयउक्तः स्वानः शब्दायमानः रथोन रथइव अनेनअर्चिषां स्वनाधिक्यमुक्तं वाजयुर्न अन्नकामइव अन्नार्थयुद्धेषुशत्रुविजयाययथाप्र-वर्ततेतद्वदित्यर्थः अनेनआहुतिविषयोभिलाषउक्तः ॥ यंति इणूगतौ । धृष्णुया ञिधृषाप्राग-ल्भ्ये त्रसिगृधिधृषीत्यादिनाक्नुप्रत्ययः आदितश्चेतीट्प्रतिषेधः बहुवचने सुपांसुलुगित्यादिनाया-जादेशः चितइत्यंतोदात्तत्वम् । परिज्मानः अजव्रजगतौ परिपूर्वाद्धातोः अन्येभ्योपिदृश्यन्तइ-तिमनिन् अकारलोपश्छान्दसः निस्वादाद्युदात्तः । वाजयुः वाजंआत्मनइच्छतीतिक्यच् नच्छं-दस्यपुत्रस्येतिईत्वदीर्घयोःप्रतिषेधः क्याच्छन्दसीत्युप्रत्ययः ॥ ५ ॥

५. हे अग्नि, तुम्हारी अत्यन्त प्रगल्भ और दीप्तिमती रश्मियाँ सर्वत्र व्याप्त विद्युत् की तरह, शब्दायमान रथ की तरह और अन्नार्थियों की तरह सर्वत्र गमन करती हैं। (इससे आहुति-विषयक अभिलाष व्यक्त हुआ है।)

नूनोंअग्नऊतयेसबाधसश्चरातये ।
अस्माकांसश्चसूरयोविश्वाआशास्तरीषणि ॥ ६ ॥

नु । नः । अग्ने । ऊतये । सऽबाधसः । च । रातये । अस्माकासः ।
च । सूरयः । विश्वाः । आशाः । तरीषणि ॥ ६ ॥

हेअग्ने नोस्माकं नु क्षिप्रं ऊतये रक्षायै भव सबाधसश्च दारिद्र्यनिमित्तबाधसहितस्यच धनस्य रातये दानायभव किंच अस्माकासः अस्माकाः पुत्रमित्रादयः सूरयःस्तोतारः विश्वाः सर्वाः आशाः दिशः तरीषणि तासांतरणेक्षमाभवन्तु अथवा आशाःकामाः अयमर्थः स्वाभिलषितप्रशस्तसमस्तवस्तुसंपादनंकुर्वित्यर्थः ॥ सबाधसः बाधेरसुन् बाधसासहवर्ततेइति सबाधाः वोपसर्जनस्येतिसहस्यसभावः ऋदुत्तरपदप्रकृतिस्वरत्वम् । रातये रादाने क्तिन् मंत्रेवृषेषपचमनविदभूवीराउदात्तइतिअन्तोदात्तः । अस्माकासः तस्मिन्नणिचयुष्माकास्माकावितिअणिकृते अस्माकादेशः छान्दसत्वादणोलोपः बहुवचने असुगागमः षष्ठीबहुवचनेमध्योदात्तत्वेनदृष्टत्वात् तथाविधमादेशमत्रापिकृतवानाचार्यः । विश्वाः विशेःअशूप्रुषीत्यादिनाक्वन् नित्त्वादाद्युदात्तः । तरीषणि तॄप्लवनतरणयोः कॄतॄभ्यामीषन्नितीषन् बहुलवचनत्वे अल्लोपाभावः अन्तोदात्तश्छान्दसः ॥ ६ ॥

६. हे अग्नि, तुम शीघ्र ही हम लोगों की रक्षा करो और धन-दान करके दारिद्र्य दुःख का अपनोदन करो। हमारे पुत्र और मित्र तुम्हारी स्तुति करके पूर्ण-मनोरथ हों।

अथसप्तमी—

त्वंनोअग्नेअङ्गिरःस्तुतःस्तवानआभर।
होतर्विभ्वासहंरयिंस्तोतृभ्यस्तवसेचनउतैधिपृत्सुनोवृधे॥७॥२॥

त्वम् । नः । अग्ने । अंगिरः । स्तुतः । स्तवानः । आ । भर ।
होतरिति । विभ्वऽसहम् । रयिम् । स्तोतृऽभ्यः । स्तवसे । च ।
नः । उत । एधि । पृत्ऽसु । नः । वृधे ॥ ७ ॥ २ ॥

हेअग्ने अंगिरः कार्यकारणयोरभेदोपचारात् अंगिरसांप्रकृतिभूतोप्यग्निः अंगिराइत्युच्यते हेअंगिरः पूर्वैर्महर्षिभिःस्तुतः स्तवानः इदानींतनैश्च स्तूयमानस्त्वं विश्वसहं महतामप्यभिभवितारंअभिभव हेतुत्वादभिभवितृधनमित्युच्यते रयिं धनं नोस्माकं आभर आहर हेहोतः देवानामाह्वातःस्तोतृभ्योनोस्मभ्यं स्तवसे स्तोतुं सामर्थ्यंचप्रयच्छ उतापिच पृत्सुयुद्धेषु नोस्माकं वृधे समृद्धये एधि भव ॥ स्तवानः ष्टुञ्स्तुतौ शानचि कर्मणि व्यत्ययेनशप्प्रत्ययः आद्युदात्तश्च । विभ्वासहं संहितायांविभूनामितिषष्ठी-

बहुवचनस्यसुपामित्यादिनाआकारादेशः तत्पुरुषेकृतिबहुलमितिषष्ठ्याअलुक् पदकारस्तु विपूर्वाद्भवतेरगागमे अन्येषामपिदृश्यतइतिदीर्घत्वंचमत्वा अवग्रहंकुर्वंति तदुत्तरपदप्रकृतिस्वरत्वम्। स्तवसे ष्टुञ्स्तुतौ तुमर्थेअसेन्प्रत्ययः नित्त्वादाद्युदात्तः ॥ ७ ॥

७. हे अङ्गिरा, पुरातन महर्षियों ने तुम्हारी स्तुति की है और इस समय के महर्षि भी तुम्हारी स्तुति कर रहे हैं। धन महान् व्यक्तियों को भी अभिभूत करनेवाला है, वह धन हमारे लिए लाओ। हे देवों के आह्वानकारी, हम तुम्हारी स्तुति करते हैं। तुम हमें स्तुति सामर्थ्य प्रदान करो एवम् युद्ध में हमारी समृद्धि का विधान करो।

जनस्यगोपाइतिषळृचमेकादशंसूक्तं आत्रेयस्यसुतंभरस्यार्षं जागतमाग्नेयं तथाचानुक्रान्तम्—जनस्यषट्सुतंभरोजागतमिति । प्रातरनुवाकेआश्विनशस्त्रेचास्यसूक्तस्यविनियोगः जनस्यगोपास्त्वामग्नऋतायवइति ।

जन॑स्य गो॒पा अ॑जनिष्ट॒ जागृ॑विर॒ग्निः सु॒दक्षः॑ सुवि॒ताय॒ नव्य॑से ।
घृ॒तप्र॑तीको बृह॒ता दि॑वि॒स्पृशा॑ द्यु॒मद्वि भा॑ति भर॒तेभ्यः॒ शुचिः॑ ॥ १ ॥

जन॑स्य । गो॒पाः । अ॒ज॒नि॒ष्ट॒ । जागृ॑विः । अ॒ग्निः । सु॒ऽदक्षः॑ । सु॒वि॒ताय॑ । नव्य॑से । घृ॒तऽप्र॑तीकः । बृ॒ह॒ता । दि॒वि॒ऽस्पृशा॑ । द्यु॒ऽमत् । वि । भा॒ति॒ । भ॒र॒तेभ्यः॑ । शुचिः॑ ॥ १ ॥

जनस्यगोपाःगोपायिता रक्षिता जागृविः जागरणशीलः सदाप्रबुद्धः सुदक्षः सुबलः सर्वैः श्लाघनीयबलः सोग्निः नव्यसे नवतराय सुविताय लोकानांकल्याणायअजनिष्टजातः घृतप्रतीकः घृतेनप्रज्वालितांगः बृहतामहतादिविस्पृशा अभ्रंलिहेनतेजसायुक्तः शुचिः शुद्धः एवंविधोग्निः भरतेभ्यः ऋत्विग्भ्यः तदर्थंद्युमत् दीप्तिमत् यथाभवतितथाविभाति प्रकाशते ॥ गोपाः गुपूरक्षणे आयःप्रत्ययः गोपायतेःक्विप् परत्वादकारलोपः अत्र परत्वादपृक्तलोपेकृते वर्णाश्रयत्वात्प्रत्ययलक्षणाभावेनयलोपोनस्यात् लोपोव्योर्वलीतिप्रथमंलोपग्रहणात् ज्ञापकात् यलोपएवभवति लोपाजादेशस्य यलोपविधिंप्रतिनस्थानिवद्भावः प्रत्ययस्वरः । जागृविः जागृनिद्राक्षये जॄशॄस्तॄजागृभ्यःक्विन्निति क्विन्प्रत्ययःजाग्रोविचिण्णल्ङित्स्वितिप्रतिषेधाद्गुणाभावः नित्त्वादाद्युदात्तः। सुदक्षः आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम्। सुविताय तन्वादीनांछन्दस्युपसंख्यानमितिसोरुवङादेशः सूपमानात्क्तइत्युत्तरपदाद्युदात्तत्वम्। नव्यसे नवशब्दादतिशायनेर्थेईयसुन्प्रत्ययः ईकारलोपश्छान्दसः अतोलोपः आद्युदात्तः । दिविस्पृशा हद्युभ्यांङेरित्युपसंख्यानमित्यलुक् कृदुत्तरपदप्रकृतिस्वरत्वम्। द्युमत् ह्रस्वनुड्भ्यांमतुबितिह्रस्वात्परस्यमतुपः अन्तोदात्तत्वम् ॥ १ ॥

१. लोगों के रक्षक, सदा प्रबुद्ध और सबके द्वारा श्लाघनीय बलवाले अग्नि लोगों के नूतन कल्याण के लिए उत्पन्न हुए हैं। घृत-द्वारा प्रज्वलित

होने पर तेजोयुक्त और शुद्ध अग्नि ऋत्विकों के लिए द्युतिमान् होकर प्रकाशित होते हैं।

यज्ञस्यकेतुंप्रथमंपुरोहितमग्निनरस्त्रिषधस्थेसमीधिरे।
इन्द्रेणदेवैःसरथंसबर्हिषिसीदन्निहोतायजथायसुक्रतुः ॥ २ ॥

यज्ञस्य । केतुम् । प्रथमम् । पुरःऽहितम् । अग्निम् । नरः ।
त्रिऽसधस्थे । सम् । ईधिरे । इन्द्रेण । देवैः । सऽरथम् । सः ।
बर्हिषि । सीदत् । नि । होता । यजथाय । सुऽक्रतुः ॥ २ ॥

नरः ऋत्विजः यज्ञस्ययागस्यकेतुं प्रज्ञापकं पुरोहितं यजमानैःपुरस्कृतं इंद्रेण देवैश्च सरथं तेषां मान्यत्वात्समानरथं अग्निं त्रिसधस्थे त्रिस्थाने विहारप्रदेशे प्रथमं समीधिरे समैन्धत सुक्रतुः शोभनकर्माहोता देवानामाह्वाता सोग्निः बर्हिषि बर्हिर्युक्तेतस्मिन्स्थाने यजथाय यज्ञाय निषीदत् प्रतिष्ठितोभवदितियावत्॥ केतुं कितज्ञाने औणादिकउप्रत्ययःअन्तोदात्तः। पुरोहितं पुरोव्ययमितिगतिसंज्ञायांगतिरनन्तरइतिपूर्वपदप्रकृतिस्वरत्वम्। त्रिषधस्थे आहवनीयादिलक्षणेनत्रिप्रकारेणअग्निनासहतिष्ठतीतित्रिषधस्थः कप्रत्ययः सधमादस्थयोश्छन्दसीतिसधादेशः कृदुत्तरपदप्रकृतिस्वरत्वम्। सीदत् सदेःपाघ्रादिनासीदादेशः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः पादादित्वान्निघाताभावः। यजथाय यजेरौणादिकःअथप्रत्ययः प्रत्ययस्वरेणान्तोदात्तः॥२॥

२. अग्नि यज्ञ के केतुस्वरूप हैं अर्थात् प्रज्ञापक हैं। अग्नि यजमाना-द्वारा पुरस्कृत होते हैं—पुरोभाग में स्थापित होते हैं। अग्नि इन्द्रादि देवों के समकक्ष हैं। ऋत्विकों ने तीन स्थानों में अग्नि को समिद्ध किया था। शोभनकर्मा और देवों के आह्वानकारी अग्नि उस कुशयुक्त स्थान पर यज्ञ के लिए प्रतिष्ठित हुए थे।

असंमृष्टोजायसेमात्रोःशुचिर्मन्द्रःकविरुदतिष्ठोविवस्वतः।
घृतेनत्वावर्धयन्नग्नआहुतधूमस्तेकेतुरभवद्दिविश्रितः ॥३॥

असम्ऽमृष्टः । जायसे । मात्रोः । शुचिः । मन्द्रः । कविः । उत् ।
अतिष्ठः । विवस्वतः । घृतेन । त्वा । अवर्धयन् । अग्ने ।
आऽहुत । धूमः । ते । केतुः । अभवत् । दिवि । श्रितः ॥ ३ ॥

हेअग्ने मात्रोररण्योः स्वजननिमित्तत्वादरणीमातरावित्युच्येते ताभ्यां असंमृष्टः अबाधितएवजायसे प्रादुर्भूतोभवसि मंद्रः सर्वैःस्तुत्यः कविः क्रान्तः सर्वत्रव्याप्तः अथवा मेधावी शुचिस्त्वं विवस्वतः अग्निहोत्रार्थं गृहे विशेषेणवसतोयजमानादुदतिष्ठः उदितो भवःपूर्वेमहर्षयः त्वा त्वां घृतेन अवर्धयन् वृद्धिमनयन् हेआहुत आहुतिभिर्हुत ते तवदिवि

अन्तरिक्षे श्रितोव्याप्तः धूमःकेतुः प्रज्ञापकोअभवत् अग्न्यनुमापकत्वात्धूमस्य ॥ मानोः उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम् । मन्द्रः मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु अत्रस्तुत्यर्थादस्मात् स्फायितंचीत्यादिनारक् अन्तोदात्तः। कविः कमेरिन्सर्वधातुभ्यइतीन्प्रत्ययः बाहुलकान्मकारस्यवत्वंरेफलोपश्च व्यत्ययेनान्तोदात्तत्वम् । उदतिष्ठः उत्पूर्वादूर्ध्वकर्मवाचिनस्तिष्ठतेरात्मनेपदाभावः । विवस्वतः विपूर्वाद्वसतेःसंपदादिलक्षणोभावेक्विप् तदस्यास्तीतिमतुप् मादुपधायाश्चेतिवत्वं मतुपोनुदात्तत्वाद्धातुस्वरः ॥ ३ ॥

३. हे अग्नि, तुम जननीस्वरूप अरणिद्वय से, निर्विघ्न होकर, जन्म ग्रहण करते हो। तुम पवित्र, कवि और मेधावी हो। तुम यजमानों से उदित होते हो। पूर्व महर्षियों ने घृत-द्वारा तुम्हें वर्द्धित किया था। हे हव्यवाहक, तुम्हारा अन्तरिक्षव्यापी धूम केतुस्वरूप है—तुम्हारा प्रज्ञापक या अनुमापक है।

अ॒ग्निर्नो॑ य॒ज्ञमुप॑वेतु सा॒धु॒याग्निंनरो॒विभ॑रन्तेगृ॒हेगृ॑हे ।
अ॒ग्निर्दू॒तोअ॑भवद्धव्य॒वाह॑नो॒ग्निंवृ॑णा॒नावृ॑णतेक॒विक्र॑तुम् ॥ ४ ॥

अ॒ग्निः । न॒ः । य॒ज्ञम् । उप॑ । वे॒तु॒ । सा॒धु॒ऽया । अ॒ग्निम् ।
नरः॑ । वि । भ॒र॒न्ते॒ । गृ॒हेऽगृ॑हे । अ॒ग्निः । दू॒तः । अ॒भ॒व॒त् ।
ह॒व्य॒ऽवाह॑नः । अ॒ग्निम् । वृ॒णा॒नाः । वृ॒ण॒ते॒ । क॒विऽक्र॑तुम् ॥ ४ ॥

साधुया सर्वपुरुषार्थानांसाधकः अग्निर्नोयज्ञेअस्मदीयंयागंप्रति उपवेतु आगच्छतु नरः मनुष्याः गृहेगृहे अनुगृहं अग्निंविभरन्ते विहरन्ति विहरणंकुर्वतीत्यर्थः हव्यवाहनः हव्यानांहविषांवोढाअग्निः दूतः देवानांदूतःअभवत् वृणानाः संभजमानाःसन्तः कविक्रतुं क्रान्तयज्ञं अग्निंवृणते संभजन्ते ॥ साधुया सुपांसुलुगित्यादिनाविभक्तेर्यादेशः ॥ ४ ॥

४. सब पुरुषार्थों के साधक अग्नि हमारे यज्ञ में आगमन करें। मनुष्य प्रतिगृह में अग्नि-संस्थापन करते हैं। हव्यवाहक अग्नि देवों के दूत-स्वरूप हैं। यज्ञसम्पादक कहकर लोग अग्नि का सम्भजन करते हैं।

तुभ्ये॒दम॑ग्ने॒मधु॑मत्तमं॒वच॒स्तुभ्यं॑मनी॒षाइ॒यम॑स्तु॒शंहृ॒दे ।
त्वांगिरः॒सिन्धु॑मिवा॒वनी॑र्म॒हीरापृ॑ण॒न्ति॒शव॑सावर्धयन्ति॒च ॥ ५ ॥

तुभ्य॑ । इ॒दम् । अ॒ग्ने॒ । मधु॑मत्ऽतमम् । वचः॑ । तुभ्य॑म् । म॒नी॒षा ।
इ॒यम् । अ॒स्तु॒ । शम् । हृ॒दे । त्वाम् । गिरः॑ । सिन्धु॑म्ऽइव ।
अ॒वनीः॑ । म॒हीः । आ । पृ॒ण॒न्ति॒ । शव॑सा । व॒र्धय॑न्ति । च॒ ॥ ५ ॥

हेअग्ने तुभ्य तुभ्यं त्वदर्थं मधुमत्तमं अत्यन्तमधुरंइदंवचः क्रियते हृदे हृदि शंसुखंकुर्वती इयंमनीषास्तुतिः तुभ्यमस्तु गिरःस्तुतिरूपावाचःत्वांआपृणन्ति पूरयन्ति शवसाबलेनवर्धयन्तिच कथमिव महीः महत्यः अवनीः अवन्योनद्यः सिन्धुमिव समुद्रमिव ॥५॥

५. हे अग्नि, तुम्हारे उद्देश्य से यह सुमधुर वाक्य प्रयुक्त होता है। यह स्तुति तुम्हारे हृदय में सुख उत्पन्न करे। महानदियाँ जिस तरह से समुद्र को पूर्ण और सबल करती हैं, उसी तरह से स्तुतियाँ तुम्हें पूर्ण और सबल करती हैं।

त्वाम॑ग्ने॒ अङ्गि॑रसो॒ गुहा॑ हि॒तमन्व॑विन्दञ्छिश्रिया॒णं वने॑वने।
स जा॑यसे म॒थ्यमा॑नः॒ सहो॑ म॒हत्त्वामा॑हुः॒ सह॑सस्पु॒त्रम॑ङ्गिरः ॥ ६ ॥३॥

त्वाम्। अ॒ग्ने॒। अंगि॑रसः। गुहा॑। हि॒तम्। अनु॑। अ॒वि॒न्द॒न्। शि॒श्रि॒या॒णम्। वने॑ऽवने। सः। जा॒य॒से॒। म॒थ्यमा॑नः। सहः॑। म॒हत्। त्वाम्। आ॒हुः॒। सह॑सः। पु॒त्रम्। अ॒ङ्गि॒रः॒ ॥ ६ ॥३॥

हेअग्ने अंगिरसऋषयः गुहा गुहायां हितं निहितं निगूढं वनेवने वृक्षेवृक्षे शिश्रियाणं आश्रितं त्वां अन्वविंदन् अलभन्त महत् महता सहः सहसा बलेनयुक्तः सत्वं मथ्यमानोजायसे हेअंगिरः अंगिरसांप्रकृतिभूत त्वांसहसस्पुत्रमाहुः ॥ शिश्रियाणं श्रिञ्सेवायां लिटःकानच् शपःश्लुः श्लाविति द्विर्वचनं इयङादेशः चित्त्वादन्तोदात्तः ॥ ६ ॥

६. हे अग्नि, तुम गुहामध्य में निगूढ़ होकर और वन (वृक्ष) का आश्रय ग्रहण करके अवस्थान करते हो। अङ्गिराओं ने तुम्हें प्राप्त (आविष्कृत) किया है। हे अङ्गिरा, तुम विशेष बल के साथ मथित होने पर उत्पन्न होते हो; इसी लिए सब तुम्हें बलपुत्र कहते हैं।

॥ इतिचतुर्थस्यप्रथमेतृतीयोवर्गः ॥ ३ ॥

प्राग्नयेबृहतइतिषळृचंद्वादशंसूक्तं सुतंभरस्यार्षंत्रैष्टुभमाग्नेयं प्राग्नयइत्यनुक्रान्तम्। प्रातरनुवाकेआग्नेयेक्रतौत्रैष्टुभेछन्दसिआश्विनशस्त्रेचेदंसूक्तं सूत्रितंच—प्राग्नयेबृहतेप्रवेधसेकवयइति।

प्राग्नये॑ बृह॒ते य॒ज्ञिया॑य ऋ॒तस्य॒ वृष्णे॒ असु॑राय॒ मन्म॑।
घृ॒तं न य॒ज्ञ आ॒स्ये॒३॑ सुपू॑तं॒ गिरं॑ भरे वृष॒भाय॑ प्रती॒चीम् ॥ १ ॥

प्र। अ॒ग्नये॑। बृ॒ह॒ते। य॒ज्ञिया॑य। ऋ॒तस्य॑। वृष्णे॑। असु॑राय। मन्म॑। घृ॒तम्। न। य॒ज्ञे। आ॒स्ये॑। सु॒ऽपू॑तम्। गिर॑म्। भ॒रे॒। वृ॒ष॒भाय॑। प्र॒ती॒चीम् ॥ १ ॥

बृहते सामर्थ्यातिशयेनमहते यज्ञियाय यज्ञार्हाय ऋतस्योदकस्य वृष्णेवर्षित्रे ऋतमित्युदकनामसुपाठात् असुरायबलवते असेरौणादिकउरन्प्रत्ययः वृषभाय कामानांवर्षित्रे मन्म ज्ञानसाधनं प्रतीचीं अभिमुखींगिरं स्तुतिरूपांवाचं प्रभरे प्रणयामि कथमिव सुपूतं सम्यक्संस्कृतमास्येप्रहुतं यज्ञेघृतंन घृतमिव आस्येप्रहुतंघृतंयथाप्रीतिकरंभवति तथा प्रीतिकरींस्तुतिमित्यर्थः ॥ १ ॥

१. अग्नि सामर्थ्यातिशय से महान्, याग-योग्य और जल-वर्षणकारी, असुर (बलवान्) और अभीष्टवर्षी हैं। यज्ञ में, अग्नि के मुख में हुत परम पवित्र घृत की तरह हमारी स्तुतियाँ अग्नि के लिए प्रीतिकर हों।

ऋतंचिकित्वऋतमिच्चिकिद्धृतस्यधाराअनुतृन्धिपूर्वीः।
नाहंयातुंसहसानद्वयेनऋतंसपाम्यरुषस्यवृष्णः॥ २ ॥

ऋतम्। चिकित्वः। ऋतम्। इत्। चिकिद्धि। ऋतस्य। धाराः। अनु। तृन्धि। पूर्वीः। न। अहम्। यातुम्। सहसा। न। द्वयेन। ऋतम्। सपामि। अरुषस्य। वृष्णः॥ २ ॥

ऋतं स्तोत्रं हेचिकित्वः जानन् अग्ने त्वं ऋतं मयाक्रियमाणमिदंस्तोत्रंचिकिद्धि जानीहि कितज्ञाने जुहोत्यादिः लोटिरूपं इदितिपूरणः ऋतमितिपदस्य परस्मिन्नामंत्रितेविद्यमानेपिछांदसत्वात्परांगवद्भावाभावः किंच पूर्वीः बह्वीः ऋतस्योदकस्यधाराः तस्यपोषणार्थं उत्पादयितुं अनुतृन्धि मेघाननुविध्य पातय सहसाबलेनयुक्तोहं यातुं कर्मणांनाशकरीं हिंसां नसपामि नस्पृशामि नकरोमीतियावत् द्वयेनच सत्यानृताभ्यांयत्किंचिद्वैदिकंकृत्यं नसपामि षपसमवायेइतिधातुः किंतु अरुषस्यारोचमानस्यवृष्णः कामानांवर्षितुः तव ऋतंस्तोत्रमेवसपामि ॥ २ ॥

२. हे अग्नि, हम यह स्तुति करते हैं, तुम इसे जानो एवम् इसका अनुमोदन करो तथा प्रचुर वारिवर्षण के लिए अनुकूल होओ। हम बलपूर्वक यज्ञ में विघ्नोत्पादक कार्य नहीं करते हैं और न अवैध वैदिक कार्य में प्रवृत्त होते हैं। तुम दीप्तिमान् हो, कामनाओं के पूरक हो। हम तुम्हारी ही स्तुति करते हैं।

कयानोअग्नऋतयन्नृतेनभुवोनवेदाउचथस्यनव्यः।
वेदामेदेवऋतुपाऋतूनांनाहंपतिंसनितुरस्यरायः॥ ३ ॥

कया। नः। अग्ने। ऋतयन्। ऋतेन। भुवः। नवेदाः। उचथस्य। नव्यः। वेद। मे। देवः। ऋतुऽपाः। ऋतूनाम्। न। अहम्। पतिम्। सनितुः। अस्य। रायः॥ ३ ॥

हेअग्ने ऋतयन्सर्वप्राणिनांजीवनहेतुकमुदकंकुर्वन् त्वं कया केनापिऋतेन सत्येनक्रियमाणेनकर्मणा न उचथस्य अस्मदीयस्यस्तोत्रस्यनवेदाः ज्ञाताभुवः भवेः नव्यःस्तुत्यः ऋतूनां ऋतुपाः वसन्तादीनांप्रसन्नपालकः द्वितीयऋतुशब्दोनुवादकः दिवोद्योतमानोग्निः मे मां वेद वेत्तु सनितुर्भजमानस्यास्य मम रायः पश्वादिलक्षणस्यपतिं स्वामिनं तमग्निमहंनजानामि॥ भुवः भूसत्तायां लिङर्थेलेटयडागमः उवङादेशः। नवेदाः ननवेत्तीतिवेत्तीत्यस्मिन्नर्थेवर्तते कथमेतल्लभ्यते निपातनात् द्विनञ्पूर्वस्यासुन्प्रत्ययान्तस्यवेदेरेकस्यनञोलोपोअन्यस्यप्रकृतिभावश्चस्कंदस्वामिनानिपातितः पाणिनिनातु नभ्राण्नपादितिसूत्रे नवेत्तीत्येतस्मिन्नर्थेनिपातितः अस्यार्थस्यानुपपन्नत्वात्स्कन्दस्वामिपक्षएवाश्रियते ॥ ३ ॥

३. हे जलवर्षणकारी अग्नि, तुम स्तुति-योग्य हो। हम लोगों के किस सत्य-कार्य-द्वारा तुम हम लोगों की स्तुति के ज्ञाता होओगे? ऋभुओं (वसन्त आदि) के रक्षाकर्त्ता और दीप्तिमान् अग्नि हमें जानें। हम अग्नि के सम्भजनकर्त्ता हैं। अपने पशु आदि धन के स्वामी अग्नि को हम नहीं जानते हैं।

**केतेअग्नेरिपवेबन्धनासःकेपायवःसनिषन्तद्युमन्तः।**
**केधासिमग्नेअनृतस्यपान्तिकआसतोवचसःसन्तिगोपाः ॥ ४॥**

के। ते। अग्ने। रिपवे। बन्धनासः। के। पायवः। सनिषन्त।
द्युऽमन्तः। के। धासिम्। अग्ने। अनृतस्य। पान्ति। के। असतः।
वचसः। सन्ति। गोपाः॥ ४॥

हेअग्ने येरिपवे स्वकीयस्यशत्रोःबंधनासोबन्धकाः स्युः तेत्वत्संबन्धिनस्तेपुरुषाः के कीदृशाः सामर्थ्यातिशयादेवंविधाइतिकेनापिज्ञातुंनशक्यन्तइत्यर्थः येपायवोजनानांरक्षितारः द्युमन्तोदीप्तिमन्तः सनिषन्त दीनेभ्योधनंप्रयच्छन्ति त्वदीयाः के कीदृशाः ये अनृतस्यासत्यस्यधासिं धारकं जनं पान्तिरक्षन्ति ते त्वदीयाजनाः केसन्ति नकेपीत्यर्थः येअसतोदुष्टस्यअभिशापादिलक्षणस्यवचसोगोपाः गोपायितारोरक्षितारः तेत्वदीयाः केसन्ति नकेपीत्यर्थः अथवा येकेजनाः रिपोर्बन्धकाः येकेपायवोरक्षितारः सनिषन्त धनं प्रयच्छन्ति द्युमन्तः येकेअनृतस्यासत्यस्यधासिं धारकं जनं पान्ति अनृतजनितपापात्परिहृत्यसन्मार्गप्रदानेनरक्षन्ति येकेअसतः अभिशापादिलक्षणात्वचसोगोपाः गोपायितारःसन्ति तेसर्वेत्वदीयाःत्वदुपासकाःइत्यर्थः॥४॥

४. हे अग्नि, कौन शत्रुओं का बन्धनकारी है? कौन लोकरक्षक है? कौन दीप्तिमान् और दानशील है? कौन असत्यधारकों का आश्रयदाता है? अथवा कौन अभिशापादि-रूप दुष्ट वचन का उत्साहदाता है? अर्थात् अग्नि-सम्बन्धी कोई पुरुष इस तरह का नहीं है।

सखायस्तेविषुणाअग्नएतेशिवासःसन्तोअशिवाअभूवन्।
अधूर्षतस्वयमेतेवचोभिर्ऋजूयतेवृजिनानिब्रुवन्तः ॥ ५॥

सखायः । ते । विषुणाः । अग्ने । एते । शिवासः । सन्तः । अशिवाः ।
अभूवन् । अधूर्षत । स्वयम् । एते । वचःऽभिः । ऋजुऽयते ।
वृजिनानि । ब्रुवन्तः ॥ ५॥

हेअग्ने तेसखायः स्तोतारोविषुणाः विप्रकीर्णाः सर्वत्रव्याप्ताः एतेपूर्वमशिवाः परनिन्दादि-कुर्वाणाः त्वत्परिचर्यांत्यजन्तोभद्राःसन्तः इदानींत्वत्परिचर्यांकुर्वन्तः शिवासः शिवाः आढ्याः अभूवन् किंच येऋजूयते ऋजुसम्यगाचरतेपि मह्यंवचोभिः असाधूक्तिभिः वृजिनानि कुटिलानि ब्रुवन्तः तएतेममसपत्नाः स्वयमेववाधूर्षत अहिंस्यंत धूर्वतेर्हिंसाकर्मणइदंरूपम् ॥ ५ ॥

५. हे अग्नि, सर्वत्र व्याप्त तुम्हारे ये बन्धुगण पूर्व में तुम्हारी उपासना के त्याग से असुखी हुए थे, पश्चात् तुम्हारी आराधना करके फिर सौभाग्यशाली हुए। हम सरल आचरण करते हैं; फिर भी जो हमें, असाधुभाव से, कुटिलाचारी कहता है, वह हमारा शत्रु स्वयम् अपना अनिष्ट उत्पादन करता है।

यस्तेअग्नेनमसायज्ञमीट्टऋतंसपात्यरुषस्यवृष्णः।
तस्यक्षयःपृथुरासाधुरेतुप्रसर्स्राणस्यनहुषस्यशेषः ॥ ६ ॥ ४ ॥

यः । ते । अग्ने । नमसा । यज्ञम् । ईट्टे । ऋतम् । सः । पाति ।
अरुषस्य । वृष्णः । तस्य । क्षयः । पृथुः । आ । साधुः । एतु ।
प्रऽसर्स्राणस्य नहुषस्य । शेषः ॥ ६ ॥ ४ ॥

हेअग्ने योमनुष्यः यज्ञं यजनीयं ते त्वां नमसा स्तोत्रेण ईट्टे स्तौति यद्वा तेतुभ्यं यज्ञं यागं नमसा अन्नरूपेण हविषाईट्टेयजति अस्मिन्पक्षे यजेर्बहुलंछन्दसीतिशपःश्लुः श्लाविति द्विर्वचनं वहुलंछन्दसीतिसंप्रसारणं सवर्णदीर्घः जकारस्यटकारः सः अरुषस्यरोचमानस्य वृष्णः कामानांवर्षितुरग्नेः ऋतं स्तोत्रं पाति रक्षति तस्य यजमानस्य क्षयोगृहं पृथुविस्तीर्णंभ-वति पश्वादिलक्षणैर्धनैःसंपूर्णंभवतीत्यर्थः प्रसर्स्राणस्य प्रकर्षेणपरिचर्यांगच्छतः नहुषस्य मनु-ष्यस्य साधुः कामानांसाधकः शेषः शिष्यतइतिशेषःपुत्रः एतुआगच्छतु भवत्वित्यर्थः ॥ ६ ॥

६. हे अग्नि, तुम दीप्तिमान् और अभीष्टपूरक हो। जो हृदय से तुम्हारी स्तुति करता है और तुम्हारे लिए यज्ञ-रक्षा करता है, उस यजमान का गृह विस्तीर्ण होता है। जो भली भाँति से तुम्हारी परिचर्या करता है, उस मनुष्य को कामनाओं को सिद्ध करनेवाला पुत्र प्राप्त होता है।

अर्चन्तस्त्वेतिषळृचंत्रयोदशंसूक्तं सुतंभरस्यार्षं गायत्रमाग्नेयं अनुक्रान्तंच—अर्चन्तोगायत्रंत्विति—प्रातरनुवाकाग्नेयेक्रतौगायत्रेछन्दसि आश्विनशस्त्रेइदमादिकेद्वेसूक्ते सूत्रितंच—अर्चन्तस्त्वेतिसूक्तेइति। आहवनीयोपस्थानेत्वमग्नेसप्रथाअसीत्येका सूत्रितंच--संनःसृजसुमत्यावाजवत्यात्वमग्नेसप्रथाअसीतिचेति। अश्वमेधेपौष्णेष्टौ त्वमग्नेसप्रथाइतिप्रथमाज्यभागानुवाक्या त्वमग्नेसप्रथाअसिसोमयास्तेमयोभुवःसद्वन्ताविति।

**अर्चन्तस्त्वाहवामहेर्चन्तःसमिधीमहि। अग्नेअर्चन्तऊतये॥ १ ॥**

**अर्चन्तः। त्वा। हवामहे। अर्चन्तः। सम्। इधीमहि। अग्ने। अर्चन्तः। ऊतये॥ १ ॥**

हेअग्ने त्वा त्वां अर्चन्तः पूजयन्तोवयं हवामहे आह्वयामः अर्चन्तस्तुवन्तोवयं ऊतये रक्षणाय तर्पणायवा त्वांसमिधीमहि समिन्द्धिःसंदीपयामः अर्चन्तइतितृतीयंपदमादरातिशयार्थम्॥ १ ॥

१. हे अग्नि, हम तुम्हारी पूजा करके आह्वान करते हैं एवम् स्तुति करके हम लोग अपनी रक्षा के लिए तुम्हें प्रज्वलित करते हैं।

**अग्नेःस्तोमंमनामहेसिध्रमद्यदिविस्पृशः। देवस्यंद्रविणस्यवः॥२॥**

**अग्नेः। स्तोमंम्। मनामहे। सिध्रम्। अद्य। दिविऽस्पृशः। देवस्यं। द्रविणस्यवः॥ २ ॥**

द्रविणस्यवः द्रविणंधनमिच्छन्तोवयं दिविस्पृशः सूर्यंआकाशंव्यामुवतोदेवस्यद्योतमानस्याग्नेः सिध्रं पुरुषार्थानांसाधकं स्तोमं स्तोत्रं अद्यास्मिन्नहनि मनामहे ब्रूमः॥ २ ॥

२. आज हम लोग धनार्थी होकर दीप्तिमान् और आकाशस्पर्शी अग्नि की पुरुषार्थ-साधक स्तुति का पाठ करते हैं।

**अग्निर्जुषतनोगिरोहोतायोमानुषेष्वा। सयंक्षद्दैव्यंजनम्॥ ३ ॥**

**अग्निः। जुषत। नः। गिरः। होता। यः। मानुषेषु। आ। सः। यक्षत्। दैव्यम्। जनम्॥ ३ ॥**

होता देवानामाह्वाता योग्निर्मानुषेषु आवसति सोग्निर्नोस्माकंगिरःस्तुतीः जुषत सेवतां सोग्निर्दैव्यंजनंदेवसंबन्धिनंजनं यक्षत् यजतु॥ ३ ॥

३. जो अग्नि मनुष्यों के मध्य में अवस्थान करके देवों का आह्वान करते हैं, वे अग्नि हम लोगों की स्तुतियों को ग्रहण कर एवं यज्ञीय द्रव्यजात को देवों के समक्ष वहन करें।

**त्वमंग्नेसप्रथाअसिजुष्टोहोतावरेण्यः। त्वयायज्ञंवितन्वते॥ ४ ॥**

त्वम् । अग्ने । सऽप्रथाः । असि । जुष्टः । होता । वरेण्यः । त्वया । यज्ञम् । वि । तन्वते ॥ ४ ॥

हेअग्ने जुष्टः सर्वदाप्रीतः वरेण्यः सर्वैर्वरणीयः होता त्वं सप्रथाः सर्वतःपृथुरसि भवसि तथाहयास्कः—सप्रथाःसर्वतःपृथुरिति । किंचसर्वेयजमानाः त्वयासाधनेन यज्ञं वितन्वते ॥ ४ ॥

४. हे अग्नि, तुम सर्वदा प्रीत हो। तुम होता और लोगों-द्वारा वरणीय होकर स्थूल (पृथु) होते हो। तुम्हें प्राप्त कर यजमान यज्ञ सम्पादन करते हैं।

त्वामग्नेवाजसातमंविप्रावर्धन्तिसुष्टुतम् । सनोरास्वसुवीर्यम् ॥५॥

त्वाम् । अग्ने । वाजऽसातमम् । विप्राः । वर्धन्ति । सुऽस्तुतम् । सः । नः । रास्व । सुऽवीर्यम् ॥ ५ ॥

हेअग्ने विप्रामेधाविनः स्तोतारोवाजसातमं वाजोन्नंतद्ददतं सुष्टुतं पूर्वैर्महर्षिभिःसम्यक्स्तुतं त्वां वर्धन्ति स्तोत्रैर्वर्धयन्ति सत्वंनोस्मभ्यं सुवीर्यं सर्वैःश्लाघनीयंबलं रास्व देहि ॥ ५ ॥

५. हे अग्नि, तुम अन्नदाता और स्तुतियोग्य हो। मेधावी स्तोता समुचित स्तुति-द्वारा तुम्हें संवर्द्धित करते हैं। तुम हम लोगों को उत्कृष्ट बल प्रदान करो।

अथषष्ठी—

अग्नेनेमिरराँइवदेवाँस्त्वंपरिभूरसि । आराधश्चित्रमृंजसे ॥ ६॥५॥

अग्ने । नेमिः । अरान्ऽइव । देवान् । त्वम् । परिऽभूः । असि । आ । राधः । चित्रम् । ऋञ्जसे ॥ ६ ॥ ५ ॥

हेअग्ने त्वं देवान् परिभूरसि स्वतेजसापरिभवसि कथमिव नेमिः प्रकाशमानः चक्रस्य बाह्योवलयः अरानिव नाभावर्पितान्सूक्ष्मान्स्थासकानिव किंच चित्रं नानाविधं राधः राध्नुवन्तिसाधयंत्यनेनपुरुषार्थानितिराधोधनं आऋंजसे स्तोतृभ्यःप्रसाधय धननामसुपाठ्वराधोधनमित्युक्तम् ॥ ६ ॥

६. हे अग्नि, नेमि जिस तरह से चक्र के अरों (कीलों) को वेष्टित करती है, उसी तरह से तुम देवों को व्याप्त करते हो। तुम हम लोगों को नाना प्रकार का धन प्रदान करो।

अग्निंस्तोमेनेतिषळृचंचतुर्दशंसूक्तं सुतंभरस्यार्षंगायत्रमाग्नेयं अग्निंस्तोमेनेत्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोःपूर्वसूक्तेनसहोक्तोविनियोगः ।

तत्रप्रथमा—

अ॒ग्निंस्तोमे॑नबोधयसमिधा॒नोअम॑र्त्यम् । ह॒व्यादे॒वेषु॑नोदधत् ॥१॥

अ॒ग्निम् । स्तोमे॑न । बो॒ध॒य॒ । स॒म्ऽइ॒धा॒नः । अम॑र्त्यम् ।
ह॒व्या । दे॒वेषु॑ । न॒ः । द॒ध॒त् ॥ १ ॥

हेस्तोतः अमर्त्यं अमरणधर्माणमग्निंस्तोमेनस्तोत्रेणबोधय स्वाभिलषितार्थसिद्धयेप्रबोधय योग्निःसमिधानः स्तोत्रैःसम्यक्प्रकाशमानः सनोहव्या अस्मदीयानिहव्यानिहवींषि देवेषुदधत् निदधातु ॥ १ ॥

१. हे यजमान, तुम अमर अग्नि को स्तोत्र-द्वारा प्रबोधित करो। अग्नि के प्रदीप्त होने पर वे देवों-समक्ष हम लोगों के लिए हव्य वहन करेंगे।

तम॑ध्व॒रेष्वी॑ळतेदे॒वंमर्ता॒अम॑र्त्यम् । यजि॑ष्ठंमानु॑षे॒जने॑ ॥ २ ॥

तम् । अ॒ध्व॒रेषु॑ । ई॒ळ॒ते॒ । दे॒वम् । मर्ताः॑ । अम॑र्त्यम् । यजि॑ष्ठम् ।
मानु॑षे । जने॑ ॥ २ ॥

मर्ताः मनुष्याः देवंद्योतमानममर्त्यं अमरणधर्माणं मानुषे मनुष्याणांसंबन्धिनि जने लोके यजिष्ठं यष्टृतमं तमग्निं अध्वरेषु सप्ततंतुषु ईळते स्तुवन्ति ॥ २ ॥

२. मनुष्यगण दीप्तिमान्, अमर और मनुष्यों के मध्य में परमाराध्य अग्नि की, यज्ञस्थल में, स्तुति करते हैं।

अथतृतीया—

तंहिशश्व॑न्त॒ईळ॑तेस्रु॒चादे॒वंघृ॒त॒श्चुता॑ । अ॒ग्निंह॒व्याय॒वोळ्ह॑वे ॥ ३ ॥

तम् । हि । शश्व॑न्तः । ईळ॑ते । स्रु॒चा । दे॒वम् । घृ॒त॒ऽश्चुता॑ ।
अ॒ग्निम् । ह॒व्याय॑ । वोळ्ह॑वे ॥ ३ ॥

शश्वन्तोबहवस्तोतारः तंदेवं अग्निंईळते स्तुवन्ति कीदृशास्ते घृतश्चुता घृतक्षरंत्यास्रुचासहिताः किमर्थंस्तुवन्ति हव्याय हव्यवहनार्थं चरुपुरोडाशादिलक्षणं हविर्वोढवे वोढुम् ॥ ३ ॥

३. यज्ञस्थल में बहुतेरे स्तोता घृतसिक्त स्रुक् के सहित, देवों के निकट हव्य वहनार्थ, दीप्तिमान् अग्नि की स्तुति करते हैं।

अ॒ग्निर्जा॒तोअ॑रोचत॒घ्नन्दस्यू॒न्ज्योति॑षा॒तमः॑ । अवि॑न्द॒द्गाअ॒पःस्वः॑ ॥ ४ ॥

अ॒ग्निः । जा॒तः । अ॒रो॒च॒त॒ । घ्नन् । दस्यू॑न् । ज्योति॑षा । तमः॑ ।
अवि॑न्दत् । गाः । अ॒पः । स्वः१॒रिति॑स्वः॑ ॥ ४ ॥

जातः अरण्योर्मथ्यमानेनप्रादुर्भूतोग्निः दस्यून्यज्ञविघ्नकारिणःशत्रून् घ्नन् हिंसन् ज्योतिषा स्वेनतेजसा तमोघ्नन् अरोचत अदीप्यत किंच गाः अपः उदकानि स्वः सूर्यंच अविन्दत् अवेदयत् ॥ ४ ॥

४. अरणि-मन्थन से उत्पन्न अग्नि अपने तेजःप्रभाव से अन्धकार को और यज्ञविघातक दस्युओं को विनष्ट कर प्रदीप्त होते हैं। गौ, अग्नि और सूर्य अग्नि से ही उत्पन्न हुए हैं।

अ॒ग्निमी॒ळेन्यं॑क॒विं घृ॒तपृ॑ष्ठंसपर्यत । वेतु॑मेशृ॒णव॒द्धव॑म् ॥ ५ ॥

अ॒ग्निम् । ई॒ळेन्य॑म् । क॒विम् । घृ॒तऽपृ॑ष्ठम् । स॒प॒र्य॒त॒ । वेतु॑ ।
मे॒ । शृ॒णव॑त् । हव॑म् ॥ ५ ॥

हेजनाः ईळेन्यंस्तुत्यंकविं क्रान्तदर्शिनं घृतपृष्ठं दीप्तोपरिभागं अग्निं सपर्यत पूजयत सोग्निर्मेहवं मदीयमाह्वानं वेतु कामयतां शृणवत् शृणोतुच ॥ ५ ॥

५. हे मनुष्यो, तुम उस ज्ञानी और आराध्य अग्नि की पूजा करो, जो ऊर्ध्व भाग में घृताहुति-द्वारा प्रदीप्त होते हैं। अग्नि हमारे इस आह्वान को सुनें और जानें।

अ॒ग्निंघृ॒तेन॑वावृधु॒स्तोमे॑भिर्वि॒श्वच॑र्षणिम् । स्वा॒धीभि॑र्वच॒स्युभिः॑ ॥ ६ ॥ ६ ॥

अ॒ग्निम् । घृ॒तेन॑ । व॒वृ॒धुः॒ । स्तोमे॑भिः । वि॒श्वऽच॑र्षणिम् ।
सु॒ऽआ॒धीभिः॑ । व॒च॒स्यु॒ऽभिः॑ ॥ ६ ॥ ६ ॥

ऋत्विजः विश्वचर्षणिं विश्वस्यद्रष्टारं स्वाधीभिः शोभनाध्यानैः वचस्युभिः स्तुतिकामैर्देवैःसमेतमग्निं घृतेन स्तोमेभिः स्तोमैःस्तोत्रैः ववृधुः अवर्धयन् ॥ ६ ॥

६. ऋत्विग्गण घृत और स्तोम-द्वारा स्तुत्यभिलाषी और ध्यानगम्य देवों के साथ सर्वदर्शी अग्नि को संवर्द्धित करते हैं।

॥ इतिचतुर्थस्यप्रथमेषष्ठोवर्गः ॥ ६ ॥

॥ इतिपंचमेमडंलेप्रथमोनुवाकः ॥ १ ॥

द्वितीयेनुवाकेऽष्टादशसूक्तानि तत्रप्रवेधसइतिपंचर्चंप्रथमंसूक्तं आंगिरसस्यधरुणस्यार्षं त्रैष्टुभमाग्नेयं अत्रानुक्रमणिका—प्रवेधसेपंचांगिरसोधरुणइति । प्रातरनुवाकेआग्नेयेक्रतौ त्रैष्टुभेछन्दसि आश्विनशस्त्रेचेदंसूक्तं सूत्रितंच—प्रवेधसेकवयेत्वंनोअग्नेवरुणस्यविद्वानितीति ।

तत्रेयंप्रथमा—

प्रवे॒धसे॑क॒वये॒वेद्या॑य॒गिरं॑भरेय॒शसे॒पू॒र्व्या॑य ।
घृ॒तप्र॑सत्तो॒असु॑रःसु॒शेवो॑रा॒यो॒ध॒र्ता॑ध॒रुणो॒वस्वो॑अ॒ग्निः ॥ १ ॥

प्र । वे॒धसे॑ । क॒वये॑ । वेद्या॑य । गिर॑म् । भ॒रे । य॒शसे॑ । पू॒र्व्या॑य ।
घृ॒तऽप्र॑सत्तः । असु॑रः । सु॒ऽशेवः॑ । रा॒यः । ध॒र्ता । ध॒रुणः॑ । वस्वः॑ ।
अ॒ग्निः ॥ १ ॥

योग्निर्घृतप्रसत्तः हवीरूपेणघृतेनप्रसन्नः असुरोबलवान् सुशेवः शोभनं शेवं सुखं यस्यासौसुशेवः शेवमितिसुखनामसुपाठात् रायोधनस्यधर्ता पोषकः धरुणः हविषां धारकः वस्वः वासकोग्निर्भवति वेधसे विधात्रे कवये क्रांतदर्शे वेद्याय स्तुत्याय विदिरयंमनिनासमानार्थः मनिश्चस्तुतिकर्मा यशसेयशस्विने पूर्व्याय मुख्याय तस्मैअग्नये गिरं स्तुतिं प्रभरेप्रणयामि ॥ १ ॥

१. हविस्वरूप घृत से अग्नि प्रसन्न होते हैं। वे बलवान्, सुखस्वरूप, धन के अधिपति, हविर्वाहक गृहदाता, विधाता, क्रान्तदर्शी, स्तुतियोग्य, यशस्वी और श्रेष्ठ हैं। ऐसे अग्नि के लिए हम स्तुति प्रणयन करते हैं।

ऋ॒तेन॑ऋ॒तंध॒रुणं॑धारयन्तय॒ज्ञस्य॑शा॒केप॑र॒मेव्यो॑मन् ।
दि॒वोधर्म॑न्ध॒रुणे॑से॒दुषो॒नॄञ्जा॒तैरजा॑ताँअ॒भिये॑न॑न॒क्षुः ॥ २ ॥

ऋ॒तेन॑ । ऋ॒तम् । ध॒रुण॑म् । धा॒रय॑न्त । य॒ज्ञस्य॑ । शा॒के । प॒र॒मे ।
विऽओ॑मन् । दि॒वः । धर्म॑न् । ध॒रुणे॑ । से॒दुषः॑ । नॄन् । जा॒तैः ।
अजा॑तान् । अ॒भि । ये । न॒न॒क्षुः ॥ २ ॥

येयजमानाः दिवोद्युलोकस्य धरुणे धारके धर्मन् यज्ञे सेदुषः आसीनान् नॄन् नेतॄन् अजातान् देवान् जातैर्मनुष्यैर्ऋत्विग्भिः अभिननक्षुः अभिप्राप्नुवन्ति तेयजमानाः यज्ञस्यधरुणं धारकं ऋतं सत्यरूपमग्निं शाके कर्मणिनिमित्ते परमे उत्कृष्टे व्योमन् स्थाने उत्तरवेद्यां ऋतेनस्तोत्रेणधारयन्तधारयन्ति ॥ २ ॥

२. जो यजमान द्युलोक के धारक, यज्ञस्थल में आसीन, नेता देवों को ऋत्विकों-द्वारा प्राप्त करते हैं, वे यजमान यज्ञधारक, सत्यस्वरूप अग्नि को, यज्ञ के लिए उत्तम स्थान में अर्थात् उत्तम वेदी पर, स्तोत्र-द्वारा, धारण करते हैं।

अं॒हो॒युव॑स्त॒न्व॑स्तन्वते॒विवयो॑म॒हद्दु॒ष्टरं॑पू॒र्व्या॑य ।
ससं॒वतो॒नव॑जातस्तुतु॒र्या॑त्सि॒ंहंनक्रु॒द्धम॒भित॒ःपरि॑ष्ठुः ॥ ३॥

अंहःऽयुवः। तन्वः। तन्वते। वि। वयः। महत्। दुस्तरम्।
पूर्व्याय। सः। सम्ऽवतः। नवऽजातः। तुतुर्यात्। सिंहम्।
न। क्रुद्धम्। अभितः। परि। स्थुः॥ ३॥

येयजमानाः पूर्व्याय मुख्याय अस्मै अग्नये महत् अधिकं दुष्टरं राक्षसैर्दुःप्रापं वयः हवीरूपमन्नं प्रयच्छन्ति तेयजमानाः तन्वः स्वास्तनूः अंहोयुवः अंहसावियोजिकाः वितन्वते विस्तारयन्ति नवजातः सोग्निः संवतः संगतान्शत्रून् तुतुर्यात् तरतु किंच अभितः सर्वतोवर्तमानाः शत्रवः मां परिवर्जयित्वास्थुः तिष्ठेयुः कथमिव क्रुद्धंसिंहं सिंहमिव॥ ३॥

३. जो यजमान मुख्य अग्नि के लिए राक्षसों-द्वारा दुष्प्राप्य हविस्वरूप अन्न प्रदान करते हैं, वे यजमान निष्पाप कलेवर होते हैं। नवजात अग्नि क्रुद्ध सिंह की तरह संगत शत्रुओं को दूर करें। सर्वत्र वर्त्तमान शत्रु मुझे छोड़कर दूर में अवस्थिति करें।

मातेवयद्भरसेपप्रथानोजनंजनंधायसेचक्षसेच।
वयोवयोजरसेयद्दधानःपरित्मनाविषुरूपोजिगासि॥ ४॥

माताऽइव। यत्। भरसे। पप्रथानः। जनम्ऽजनम्। धायसे।
चक्षसे। च। वयःऽवयः। जरसे। यत्। दधानः। परि। त्मना।
विषुऽरूपः। जिगासि॥ ४॥

पप्रथानः सर्वत्रप्रथानोयत् यस्त्वं मातेव जननीव जनंजनं सर्वंजनं भरसे बिभर्षि किंच धायसे धारणाय चक्षसे दर्शनायच सर्वैःप्रार्थ्यसे यत् यदा दधानोधार्यमाणोभवसि तदावयोवयः सर्वमन्नं जरसे जरयसि अपिच विषुरूपोनानारूपःसन् त्मना आत्मना परिजिगासि सर्वभूतानिपरिगच्छसि॥ ४॥

४. सर्वत्र प्रख्यात अग्नि जननी की तरह निखिल जन को धारण करते हैं। धारण करने के लिए और दर्शन देने के लिए सब कोई उनकी प्रार्थना करते हैं। जब वे धार्यमाण होते हैं, तब वे सब अन्न को जीर्ण कर देते हैं। नानारूप होकर अग्नि सर्वभूतजात का परिगमन करते हैं।

वाजोनुतेशवसस्पात्वन्तमुरुंदोघंधरुणंदेवरायः।
पदंनतायुर्गुहादधानोमहोरायेचितयन्नत्रिमस्पः॥ ५॥ ७॥

वाजः। नु। ते। शवसः। पातु। अन्तम्। उरुम्। दोघम्। धरुणम्।
देव। रायः। पदम्। न। तायुः। गुहा। दधानः। महः।
राये। चितयन्। अत्रिम्। अस्परित्यस्पः। ५॥ ७॥

हेदेव द्योतमानाग्ने उरुं पृथुं दोघं कामानांदोग्धारं रायोधनस्यधरुणं धारकं वाजो-हविर्लक्षणमन्नं तेत्वदीयस्यशवसोबलस्यान्तं समाप्तिं संपूर्तिं नु अद्य पातु रक्षतु तायुस्तस्करः तायुरितिस्तेननाम पदमिव आत्मीयंमार्गमिव गुहा गुहायां दधानः आत्मनःशत्रूणांप्रकाशं निदधानः महोमहते राये धनाय धनलाभार्थं चितयन् सन्मार्गंप्रकाशयन् अत्रिमस्यः अत्रिमृर्षिं अमीणयः यद्वा तं आपद्भ्यःअपारयः स्पृप्रीणनपारणयोरितिधातुः ॥ ५ ॥

५. हे द्युतिमान् अग्नि, पृथु कामनाओं के पूरक और धनधारक हविर्लक्षण अन्न तुम्हारे सम्पूर्ण बल की रक्षा करे। तस्कर जिस तरह से गुहामध्य में छिपाकर अपहृत धन की रक्षा करता है, उसी तरह तुम प्रचुर धन-लाभ के लिए सन्मार्ग को प्रकाशित करो और अत्रि मुनि को प्रीत करो।

॥ इतिचतुर्थस्यप्रथमेसप्तमोवर्गः ॥ ७ ॥

बृहद्वयइतिपंचर्चंद्वितीयंसूक्तं आत्रेयस्यपूरोरार्षं अन्त्यापंक्तिः शिष्टाअनुष्टुभः अग्निर्देवता तथाचानुक्रान्तम्—बृहत्पूरुःपंक्त्यंतंहीति । प्रातरनुवाकेआग्नेयेक्रतौआनुष्टुभेछन्दसि आश्विनशस्त्रेचेदमादीनिदशसूक्तानि चतुर्थनवमवर्जितानि आदितस्त्रिषुसूक्तेषुअंत्यामुद्धरेत् तथाचसूत्रितम्—बृहद्वयइतिदशानांचतुर्थनवमेउद्धरेदुत्तमांचादितस्त्रयाणामिति ।

बृहद्वयोहिभानवेर्चादेवायाग्नये ।
यंमित्रंनप्रशस्तिभिर्मर्तासोदधिरेपुरः ॥ १ ॥

बृहत् । वयः । हि । भानवे । अर्च । देवाय । अग्नये । यम् ।
मित्रम् । न । प्रशस्तिऽभिः । मर्तासः । दधिरे । पुरः ॥ १ ॥

यज्ञे भानवे दीप्तिमते अग्नये बृहत् महते वयोहवीरूपमन्नंदीयतेहि अतस्त्वमपिदेवायद्योतमानायाग्नये अर्च प्रयच्छ मर्तासोमनुष्याःयमग्निंमित्रंन सखायमिव प्रशस्तिभिःप्रकृष्टाभिःस्तुतिभिः पुरोदधिरे पुरस्कुर्वन्ति ॥ १ ॥

१. मनुष्यगण जिन सखिभूत अग्नि की, प्रकृष्ट स्तुतियों-द्वारा, स्तुति करके पुरोभाग में स्थापित करते हैं, उन द्युतिमान् अग्नि को महान् हविर्लक्षण अन्न दिया जाता है।

अथद्वितीया—

सहिद्युभिर्जनानांहोतादक्षस्यबाह्वोः ।
विहव्यमग्निरानुषग्भगोनवारमृण्वति ॥ २ ॥

सः । हि । द्युऽभिः । जनानाम् । होता । दक्षस्य । बाह्वोः । वि ।
हव्यम् । अग्निः । आनुषक् । भगः । न । वारम् । ऋण्वति ॥ २ ॥

योग्निर्हव्यं हविः आनुषक् देवेष्वनुषक्तंकरोति बाह्वोर्भुजयोर्दक्षस्यबलस्यद्युभिः द्युतिभिर्युक्तःसोग्निः जनानांयजमानानांहोता देवानामाह्वाताभवति भगोन सूर्यइव वारं वरणीयंधनं न्यृण्वति विशेषेणप्रयच्छतिमनुष्येषु ॥ २ ॥

२. जो अग्नि देवों के लिए हव्य वहन करते हैं, जो बाहुबल की द्युति से युक्त हैं, वे अग्नि यजमानों के लिए देवों का आह्वान करते हैं, वे सूर्य की तरह मनुष्यों को विशेष रूप से वरणीय धन प्रदान करते हैं।

अस्यस्तोमेमघोनःसख्येवृद्धशोचिषः।
विश्वायस्मिन्तुविष्वणिसमर्येशुष्ममादधुः ॥ ३ ॥

अस्य । स्तोमे । मघोनः । सख्ये । वृद्धऽशोचिषः । विश्वा । यस्मिन् । तुविऽस्वनि । सम् । अर्ये । शुष्मम् । आऽदधुः ॥ ३ ॥

मघोनोमघवतोधनवतः वृद्धशोचिषः वृद्धानिप्रवृद्धानिशोचींषितेजांसियस्यासौवृद्धशोचिः तस्यएवंविधस्यास्याग्नेः स्तोमे स्तोत्रे सख्येचस्याम तुविष्वणि बहुशब्दे अर्येस्वामिनि यस्मिन्नग्नौविश्वा सुपांसुलुगितिडादेशः विश्वेसर्वेऋत्विजः शुष्मंबलं हविर्भिःस्तोत्रैः समादधुः सम्यगादधति ॥ ३ ॥

३. सब ऋत्विक् हव्य और स्तोत्र-द्वारा जिन बहुशब्दविशिष्ट स्वामी अग्नि में बल का आधान, भली भाँति से, करते हैं, हम लोग उन्हीं प्रवृद्ध तेजवाले और धनवान् अग्नि की स्तुति करते हैं। हम लोग उनके साथ मित्रता करते हैं।

अधाह्यग्नएषांसुवीर्यस्यमंहना।
तमिद्यह्वंनरोदसीपरिश्रवोबभूवतुः ॥ ४ ॥

अध । हि । अग्ने । एषाम् । सुऽवीर्यस्य । मंहना । तम् । इत् । यह्वम् । न । रोदसी इति । परि । श्रवः । बभूवतुः ॥ ४ ॥

हेअग्ने अध अथ एषामस्माकंयजमानानांसुवीर्यस्य सर्वैःस्पृहणीयस्य बलस्य मंहना मंहनायै दानायभव मंहतिर्दानकर्मा रोदसीद्यावापृथिव्यौ यह्वंन महान्तंसूर्यमिव श्रवःसर्वैः श्रवणीयंतमित् तमग्निमेवपरिबभूवतुः परिगृह्णीतः ॥ ४ ॥

४. हे अग्नि, हम यजमानों को तुम सबके द्वारा स्पृहणीय बल प्रदान करो। द्यावा-पृथिवी ने सूर्य की तरह श्रवणीय अग्नि को परिगृहीत किया है।

नूनएह्विवार्यमग्नेगृणानआभर।
येवयंयेचसूरयःस्वस्तिधामहेसचोतैधिपृत्सुनोवृधे ॥ ५ ॥ ८ ॥

नु । नः । आ । इहि । वार्यम् । अग्ने । गृणानः । आ । भर । ये । वयम् । ये । च । सूरयः । स्वस्ति । धामहे । सचा । उत । एधि । पृत्ऽसु । नः । वृधे ॥ ५ ॥ ८ ॥

हेअग्ने गृणानः स्तूयमानःसन् नुक्षिप्रं एहि यज्ञंप्रत्यागच्छ आगत्यच नोस्मभ्यंवार्यंवरणीयंधनं आभर संपादय येवयंयजमानाःयेचसूरयःस्तोतारः सचाहविर्भिःसहिता उभे ये वयं स्वस्ति स्तोत्रंधामहे कुर्मः उतअपिच पृत्सु पृतनासुनोस्माकंवृधेसमृद्ध्ये एधि भव ॥ ५॥

५.-हे अग्नि, हम यजमान तुम्हारी स्तुति करते हैं। तुम शीघ्र ही हमारे यज्ञ में आओ और हमारे लिए वरणीय धन का सम्पादन करो। हम यजमान स्तोता तुम्हारे लिए स्तुति करते हैं। हम लोगों को तुम युद्ध में समृद्धियुक्त करो।

॥ इतिचतुर्थस्यप्रथमेष्टमोवर्गः ॥ ८ ॥

आयज्ञैरितिपंचर्चंतृतीयंसूक्तं आत्रेयस्यपूरोरार्षमाग्नेयम् अंत्यापंक्तिः शिष्टाःपंक्त्यंतपरिभाषयाअनुष्टुभः आयज्ञैरित्यनुक्रमणिका अंत्यावर्जमातरनुवाकाश्विनशस्त्रयोर्बृहद्वयइत्यादिदशसूक्तमध्येविनियोगउक्तः ।

आयज्ञैर्देवमर्त्यइत्थातव्यांसमूतये ।
अग्निंकृतेस्वध्वरेपूरुरीळीतावसे ॥ १ ॥

आ । यज्ञैः । देव । मर्त्यः । इत्था । तव्यांसम् । ऊतये । अग्निम् । कृते । सुऽअध्वरे । पूरुः । ईळीत । अवसे ॥ १ ॥

हेदेव मर्त्यः मनुष्यः ऋत्विक् इत्था इत्थं तव्यांसं स्वतेजोभिःप्रवृद्धमग्निं ऊतयेतर्पणाय यज्ञैःस्तोत्रैराह्वयति किंच पूरुर्मनुष्यः स्तोता कृतेस्वध्वरेशोभनेक्रतौ तमग्निंअवसे रक्षणाय ईळीत स्तौति ॥ १ ॥

१. हे देव, ऋत्विग्गण अपने तेज से प्रवृद्ध अग्नि को, स्तोत्रों-द्वारा तृप्त करने के लिए, आहूत करते हैं। मनुष्य स्तोता यज्ञकाल में रक्षा के लिए अग्नि की स्तुति करते हैं।

अस्यहिस्वयशस्तरआसाविधर्मन्मन्यसे ।
तंनाकंचित्रशोचिषंमन्द्रंपरोमनीषया ॥ २ ॥

अस्य । हि । स्वयशःऽतरः । आसा । विऽधर्मन् । मन्यसे । तम् । नाकम् । चित्रऽशोचिषम् । मन्द्रम् । परः । मनीषया ॥ २ ॥

हेविधर्मन् विशिष्टोधर्मोयस्यासौविधर्मा स्तोता तस्यसंबोधनं हेस्तोतः स्वयशस्तरः सुयशसांमध्येअतिशयेनसुयशास्त्वंमनीषयाप्रकृष्टबुद्ध्यासाधनेन तं प्रसिद्धं अस्य अमुं सर्भि

आसा आस्येन वाचामन्यसेस्तौषि किंविशिष्टमग्निं नाकं सुखं अकंदुःखं नविद्यतेअकंयस्यसः तं चित्रशोचिषं चित्रंतेजसं मन्द्रं स्तुत्यं परः परस्तात्स्थितम् ॥ २ ॥

२. हे धर्मविशिष्ट स्तोता, तुम्हारा यज्ञ श्रेष्ठ है। तुम प्रकृष्ट बुद्धि-द्वारा उन्हीं अग्नि को, वचन से, स्तुति करते हो, जिन्हें दुःख नहीं है, जिनका तेज विचित्र है और जो स्तुति-योग्य है।

अस्यवासाउंअर्चिषायआयुक्ततुजागिरा।
दिवोनयस्यरेतसाबृहच्छोचंन्त्यर्चयः ॥ ३ ॥

अस्य। वै। असौ। ऊँ इति। अर्चिषा। यः। अयुक्त। तुजा।
गिरा। दिवः। न। यस्य। रेतसा। बृहत्। शोचन्ति। अर्चयः ॥३॥

योग्निः तुजा जगद्रक्षणसमर्थेनबलेन गिरास्तुत्या अयुक्त संबद्धोभवत् दिवोन द्योतमानस्यादित्यस्येव यस्याग्नेरेतसा प्रभया कृत्स्नंजगद्व्याप्तं यस्याग्नेर्बृहद्बृहन्तःअर्चयोदीप्तयः शोचन्तिप्रकाशन्ते अस्यवैखल्वग्नेरर्चिषाप्रभयाअसावादित्यः अर्चिष्मान्भवति उइतिपरणः ॥ ३ ॥

३. जो अग्नि जगद्रक्षण समर्थ बल से और स्तुति से युक्त हैं, जो आदित्य की तरह द्युतिमान् हैं, जिन अग्नि की प्रभा से जगद् व्याप्त है, जिन अग्नि की बृहती दीप्ति प्रकाशित होती है, उन्हीं अग्नि की प्रभा से आदित्य प्रभावान् होते हैं।

अस्यक्त्वाविचेतसोदस्मस्यवसुरथआ।
अधाविश्वासुहव्योग्निर्विक्षुप्रशस्यते ॥ ४ ॥

अस्य। क्त्वा। विऽचेतसः। दस्मस्य। वसु। रथे। आ। अध।
विश्वासु। हव्यः। अग्निः। विक्षु। प्र। शस्यते ॥ ४ ॥

विचेतसः सुमतयः ऋत्विजः दस्मस्य दर्शनीयस्यास्याग्नेः क्त्वा कर्मणा यज्ञादिना वसु वसूनि धनानि रथे आदधति हव्यः यज्ञार्थआह्वातव्यः सोग्निः अध अथ उत्पत्त्यनंतरमेवविश्वासुसर्वासुविक्षुप्रजासु प्रशस्यते स्तूयते ॥ ४ ॥

४. सुन्दर मतिवाले ऋत्विक् दर्शनीय अग्नि का यज्ञ (पूजा) करके धन और रथ प्राप्त करते हैं। यज्ञार्थ आहूत होनेवाले अग्नि उत्पन्न होते ही, सम्पूर्ण प्रजा-द्वारा, स्तुत होते हैं।

नूनइद्धिवार्यमासासंचन्तसूरयः।
ऊर्जोनपादभिष्टयेपाहिशग्धिस्वस्तयंउतैधिपृत्सुनोवृधे ॥५॥९॥

नु। नः। इत्। हि। वार्यम्। आसा। सचन्त। सूरयः। ऊर्जः।

नपात् । अभिष्टये । पाहि । शग्धि । स्वस्तये । उत । एधि ।
पृत्ऽसु । नः । वृधे ॥ ५ ॥ ९ ॥

हेअग्ने नोस्मभ्यंवार्यंवरणीयंधनंनुक्षिप्रंप्रयच्छ इद्धीतिपूरणौ यतःसूरयःस्तोतारः त्वत्तः सकाशादासा आस्येनस्तोत्रेणसचंत धनंलभन्ते किंच हेऊर्जोनपात् अन्नस्यनपातयितः बलस्यपुत्रवा अभिष्टये अभीच्छते मह्यं अन्नंप्रयच्छेतिशेषः पाहि अस्मानापद्भ्योरक्ष स्वस्तये क्षेमाय पश्वादिलक्षणस्यधनस्यक्षेमार्थंशग्धि त्वां याचे व्यत्ययेनमध्यमः शक्तोभवेतिवा हे अग्ने उतापिच पृत्सु पृतनासु नोवृधे समृद्धये एधि भव ॥ ५ ॥

५. हे अग्नि, हम लोगों को शीघ्र ही वही वरणीय धन दान करो, जिस धन को स्तोता लोग तुम्हारी स्तुति करके प्राप्त करते हैं। हे बलपुत्र, हमें अभिलषित अन्न प्रदान करो, हम लोगों की रक्षा करो। हम मंगलकारक पशु आदि की याचना तुमसे करते हैं। हे अग्नि, तुम संग्राम में हम लोगों की समृद्धि के लिए, उपस्थित रहो।

प्रातरग्निमितिपंचर्चंचतुर्थंसूक्तं अत्रेयमनुक्रमणिका—प्रातर्मृक्तवाहाद्वितइतिविशेषणविशिष्टः आत्रेयोद्वितऋषिः पंक्त्यंतंहीति हिशब्दादस्यापिसूक्तस्यपंचमीपंक्तिः पंक्त्यंतपरिभाषया शिष्टाअनुष्टुभः उक्तोविनियोगःप्रातरनुवाकाश्विनशस्त्रयोः।

प्रातरग्निःपुरुप्रियोविशस्तवेतातिथिः ।
विश्वानियोअमर्त्योहव्यामर्तेषुरण्यति ॥ १ ॥

प्रातः । अग्निः । पुरुऽप्रियः । विशः । स्तवेत । अतिथिः । विश्वानि ।
यः । अमर्त्यः । हव्या । मर्तेषु । रण्यति ॥ १ ॥

पुरुप्रियः बहुप्रियः विशः यजमानेधनस्यनिवेशकः अतिथिः यजमानानांगृहान्प्रतितिथिषु अभ्येतीत्यतिथिः तथाहयास्कः—अतिथिरभ्यतितोगृहान्भवत्यभ्येतितिथिषुपरकुलानीतिवापरगृहाणीतिवेति । एवंविधोग्निः प्रातःस्तवेत स्तूयते अमर्त्यः अमरणधर्मायोग्निः मर्तेषुमनुष्येषु यजमानेषु स्थितानि विश्वानि सर्वाणि हव्या हव्यानि हवींषि रण्यति कामयते ॥ १॥

१. अग्नि बहुप्रिय हैं, यजमानों के लिए धनदाता हैं और यजमानों के गृह में अभिगमन करते हैं। इस तरह के अग्नि प्रातःकाल में स्तुत होते हैं। अमरणशील अग्नि यजमानों के मध्य में स्थित निखिल हव्य की कामना करते हैं।

द्वितायंमृक्तवाहसेस्वस्यदक्षस्यमंहना ।
इन्दुंसधत्तआनुषक्स्तोताचित्तेअमर्त्य ॥ २ ॥

द्विताय । मृक्तऽवाहसे । स्वस्य । दक्षस्य । मंहना । इन्दुम् ।
सः । धत्ते । आनुषक् । स्तोता । चित् । ते । अमर्त्य ॥ २ ॥

हेअग्ने द्वितायद्वितनाम्नेत्रिपुत्राय मृक्तवाहसे मृक्तंशुद्धंहविर्देवेभ्योवहतिमापयतीतिमृक्तवाहः तस्मै स्वस्य आत्मीयस्यदक्षस्यबलस्यधनस्यवा मंहनामंहनायै दानायभव हेअमर्त्य नित्याग्ने यतःकारणात् तेतुभ्यंसमृक्तवाहाः आनुषक् सर्वदाआनुषकमिन्दुंसोमंधत्ते धारयति स्तोताचित् स्तोताचभवति ॥ २ ॥

२. हे अग्नि, अत्रिपुत्र द्वित ऋषि विशुद्ध हव्य वहन करते हैं, तुम उन्हें अपना बल प्रदान करो; क्योंकि वे सब काल में तुम्हारे लिए सोमरस का आनयन करते हैं और तुम्हारी स्तुति करते हैं।

तंवोदीर्घायुशोचिषंगिराहुवेमघोनाम्।
अरिष्टोयेषांरथोव्यंश्वदावन्नीयते ॥ ३ ॥

तम्। वः। दीर्घायुऽशोचिषम्। गिरा। हुवे। मघोनाम्।
अरिष्टः। येषाम्। रथः। वि। अश्वऽदावन्। ईयते ॥ ३ ॥

हेअग्ने दीर्घायुशोचिषं दीर्घगमनदीप्तिं तं वः पूजायांबहुवचनं त्वांमघोनां धनिनां कृते गिरा स्तोत्रेण हुवे आह्वयामि हेअश्वदावन् अश्वानांदातः येषांधनिनांरथः युद्धेषु अरिष्टः शत्रुभिरहिंसितोविनीयते विगच्छतु ॥ ३ ॥

३. हे अग्नि, हे अश्वदाता, तुम दीर्घगमन-दीप्तिवाले हो। धनिकों के लिए हम तुम्हारा आह्वान, स्त्रोत्र-द्वारा, करते हैं, जिससे धनिकों का रथ शत्रुओं-द्वारा अहिंसित होकर युद्ध में गमन करे।

चित्रावायेषुदीधितिरासन्नुक्थापान्तिये।
स्तीर्णंबर्हिःस्वर्णरेश्रवांसिदधिरेपरि ॥ ४ ॥

चित्रा। वा। येषु। दीधितिः। आसन्। उक्था। पान्ति। ये।
स्तीर्णम्। बर्हिः। स्वःऽनरे। श्रवांसि। दधिरे। परि ॥ ४ ॥

येषुऋत्विक्षु चित्रानानाविधादीधितिः यज्ञविषयाक्रियाभवति ये आसन् आस्ये उक्थाउक्थानि स्तोत्राणि पान्ति रक्षन्ति तैर्ऋत्विग्भिःस्तीर्णं स्तीर्णस्यबर्हिः बर्हिषःपर्युपरिश्रवांसि अन्नानि हवींषि स्वर्नरेः स्वःस्वर्गंनरंयजमानंनयतीतिस्वर्णरोयज्ञः तस्मिन् निदधिरे निधीयन्ते ॥ ४ ॥जिन ऋत्विकों-द्वारा नानाविध यज्ञ-विषयक कार्य सम्पादन होता है, जो मुख (उच्चारण) द्वारा स्तोत्रों की रक्षा करते हैं, उन ऋत्विकों-द्वारा, यजमानों के स्वर्गप्रापक यज्ञ में, विस्तीर्ण कुशों के ऊपर अन्न स्थापित होता है।

येमेपञ्चाशतंददुरश्वानांसधस्तुति।
द्युमदग्नेमहिश्रवोबृहत्कृधिमघोनांनृवदमृतनृणाम् ॥ ५ ॥ १० ॥

ये । मे । पंचाशतम् । दुदुः । अश्वानाम् । सधऽस्तुति । द्युऽमत् ।
अग्ने । महि । श्रवः । बृहत् । कृधि । मघोनाम् । नृऽवत् ।
अमृत । नृणाम् ॥ ५ ॥ १० ॥

येमघवानोदातारोमेमह्यं सधस्तुतिस्तुत्यासहितं त्वत्स्तोत्रसमनंतरं अश्वानांपंचाशतंददुः हेअमृत अग्ने त्वं तेषांमघोनां नृणां द्युमत् दीप्तिमत् महि महत् बृहत् परिवृढं नृवत् परिचारकमनुष्ययुक्तं श्रवोन्नं कृधि कुरु देहीत्यर्थः ॥ ५ ॥

५. हे अमर अग्नि, तुम्हारी स्तुति के अनन्तर जो धनदाता मुझे पचास अश्व प्रदान करते हैं, तुम उन धनिक मनुष्यों को दीप्तिशील परिचारकयुक्त महान् अन्न प्रदान करो ।

॥ इतिचतुर्थस्यप्रथमेदशमोवर्गः ॥ १० ॥

अभ्यवस्थाइतिपंचर्चंपंचमंसूक्तं अत्रेयमनुक्रमणिका—अभ्यवस्थावव्रिर्गायत्र्यावनुष्टुभौविराड्रूपेति । आत्रेयोवव्रिर्ऋषिः प्रथमाद्वितीयेगायत्र्यौ तृतीयाचतुर्थ्यावनुष्टुभौ पंचमीविराड्रूपा एकादशिनस्त्रयोष्टकाश्चविराड्रूपेत्युक्तलक्षणोपेतत्वात् ।

अभ्यवस्थाःप्रजायन्तेप्रवव्रेर्वव्रिश्चिकेत । उपस्थेमातुर्विचष्टे ॥ १ ॥

अभि । अवऽस्थाः । प्र । जायन्ते । प्र । वव्रेः । वव्रिः । चिकेत ।
उपऽस्थे । मातुः । वि । चष्टे ॥ १ ॥

वव्रेः ऋषेः अभि उत्तरोत्तरमवस्थाः अशोभनादशाः प्रजायन्ते तादृशीः वव्रिर्हविषां संभक्तासोग्निः प्रचिकेत प्रजानीयात् ज्ञात्वाचापनयत्विति भावः योग्निर्मातुःपृथिव्याउपस्थेसमीपेस्थितंपदार्थजातं विचष्टे पश्यति ॥ १ ॥

१. जो अग्नि माता पृथिवी के समीप स्थित होकर पदार्थजात को देखते हैं, वे ही अग्नि वव्रि ऋषि की अशोभन दशा को जानें और उनके हव्य को ग्रहण कर उसका अपनोदन करें ।

अथद्वितीया—

जुहुरेविचितयन्तोनिमिषंनृम्णंपान्ति । आदृह्लांपुरंविविशुः ॥ २ ॥

जुहुरे । वि । चितयन्तः । अनिऽमिषम् । नृम्णम् । पान्ति ।
आ । दृह्लाम् । पुरम् । विविशुः ॥ २ ॥

येविचितयन्तः तव प्रभावंजानंतोजनाः अनिमिषं सर्वदाविजुहुरे जुह्विरे विशेषेणयज्ञार्थंत्वामाह्वयन्ति आहूयच नृम्णं तवबलं हविर्भिःस्तोत्रैश्च पांति रक्षंति तेदृह्लां शत्रुभिःसाधयितुमशक्यांपुरं पुरीं आविविशुः प्रविशन्ति शतंपूर्भिरायसीभिर्निपाहीतिनिगमः ॥ २ ॥

२. तुम्हारे प्रभाव को जानकर जो लोग, यज्ञ के लिए, सदा तुम्हारा आह्वान करते हैं तथा जो लोग हवि और स्तोत्र के द्वारा तुम्हारे बल की रक्षा करते हैं, वे शत्रुओं-द्वारा अशक्य (दुर्गम्य) पुरी में प्रवेश करते हैं।

आश्वैत्रेयस्यंजन्तवोद्युमद्वर्धन्तकृष्टयः।
निष्कग्रीवोबृहदुंक्थएनामध्वानवाजयुः॥ ३ ॥

आ। श्वैत्रेयस्य। जन्तवः। द्युऽमत्। वर्धन्त। कृष्टयः।
निष्कऽग्रीवः। बृहत्ऽउक्थः। एना। मध्वा। न। वाजऽयुः॥३॥

जायन्तइतिजन्तवः कृष्टयोमनुष्याऋत्विजः मध्वान मधुनेव एना एनयास्तुत्या यद्वा नकारश्चार्थे मधुनाचश्वैत्रेयस्यश्वित्रमन्तरिक्षं तत्रभवस्यवैद्युतस्याग्नेर्द्युमत् दीप्तिमत् बलं आवर्धन्त अभिवर्धयन्ति किंविधाः कृष्टयः निष्कग्रीवः निष्केणसुवर्णेनालंकृतग्रीवाः व्यत्ययेनैकवचनं बृहदुक्थः बृहत्स्तोत्राः वाजयुः अन्नकामाः ॥ ३ ॥

३. महान् स्तोत्र करनेवाले, अन्नाभिलाषी, सुवर्णालङ्कार को कण्ठ में धारण करनेवाले, जायमान (उत्पन्नशील) मनुष्य (ऋत्विगादि) स्तोत्र-द्वारा, अन्तरिक्षवर्ती वैद्युत अग्नि के दीप्तिमान् बल को वर्धित करते हैं।

प्रियंदुग्धंनकाम्यमजामिजाम्योःसचा।
घर्मोनवाजंजठरोदब्धःशश्वंतोदभः॥ ४ ॥

प्रियम्। दुग्धम्। न। काम्यम्। अजामि। जाम्योः। सचा।
घर्मः। न। वाजंऽजठरः। अदब्धः। शश्वतः। दभः॥ ४ ॥

जाम्योर्द्यावापृथिव्योःसचासहायभूतोग्निः दुग्धंन पयइव काम्यंकमनीयं अजामि दोषरहितंप्रियंअस्मदीयंस्तोत्रंशृणोतु किंविधोग्निः घर्मोन प्रवर्ग्यइव वाजजठरः वाजोन्नंजठरेयस्यसः घर्मोयथाहव्येनाज्येनपयसा आसिक्तोवाजजठरः तद्वद्धविर्जठरइत्यर्थः अदब्धःशत्रुभिःस्वयमहिंसितः शश्वतः शाश्वतोनित्यः दभः शत्रूणांहिंसकः ॥ ४ ॥

४. पयोमिश्रित हव्य की तरह जिन अग्नि के जठर में अन्न है अर्थात् जो हव्य जठर हैं, जो स्वयम् शत्रुओं-द्वारा अहिंसित होकर सदा शत्रुओं के हिंसक हैं, द्यावा-पृथिवी के सहायभूत वे ही अग्नि दुग्ध की तरह कमनीय और निर्दोष होकर हमारे स्तोत्र को सुनें।

अथपंचमी–

क्रीळंन्नोरश्मआभुवःसंभस्मनावायुनावेविदानः
ताअंस्यसन्धृषजोनतिग्माःसुसंशितावक्ष्योवक्षणेस्थाः॥५॥११॥

क्रीळंन् । नः । रश्मे । आ । भुवः । सम् । भस्मना । वायुना ।
वेविदानः । ताः । अस्य । सन् । धृषजः । न । तिग्माः । सुऽसंशिताः ।
वक्ष्यः । वक्षणेऽस्थाः ॥ ५ ॥ ११ ॥

हेरश्मे रश्मिमन्नग्ने क्रीळन् वनेषुक्रीडन् भस्मनास्वकार्येणभसितेनवायुनाप्रेरकेणमरुताचसंवेविदानःसम्यक्ज्ञायमानः त्वंनोस्माकं आभुवः अभिमुखोभव वक्षणेस्थाः वक्षणेवह्नौस्थिताः वक्ष्यः हविर्वहन्तीतिवक्ष्योज्वालाः सुसंशिताः सुतीक्ष्णाः धृषजः शत्रूणांधर्षकाः ताज्वालाः अस्ययजमानस्यमम न तिग्माः नतीक्ष्णाः सन् सन्तु अस्तेर्लिङिटिरूपम् ॥ ५ ॥

५. हे प्रदीप्त अग्नि, तुम अपने द्वारा किये गये भस्म से वन में क्रीड़ा करते हो। प्रेरक वायु-द्वारा भली भाँति से ज्ञायमान होकर तुम हमारे अभिमुख होओ। तुम्हारी शत्रुनाशक ज्वालायें हम यजमानों के निकट सुकोमल हों।

यमग्नइतिचतुर्ऋचंषष्ठंसूक्तं अत्रीणांप्रयस्वतामार्षं आग्नेयं अंत्यापंक्तिः शिष्टाअनुष्टुभः तथाचानुक्रान्तं–यमग्नेचतुष्कंप्रयस्वन्तःपंक्त्यंतंहेति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः अत्रेश्वतुर्वीराख्येहीतिद्वितीयेहनीदंसूक्तंआज्यशस्त्रं सूत्रितंच–यमग्नेवाजसातमेतिद्वितीयेहन्याज्यमिति ।

यमंग्नेवाजसातमत्वंचिन्मन्यसेर॒यिम् ।
तंनोगीर्भिःश्रवाय्यंदेवत्रापनयायुजंम् ॥ १ ॥

यम् । अग्ने । वाजऽसातम । त्वम् । चित् । मन्यसे । रयिम् ।
तम् । नः । गीःऽभिः । श्रवाय्यम् । देवऽत्रा । पनय । युजम् ॥ १ ॥

हेअग्ने हेवाजसातम अत्यन्तमन्नद त्वं यं रयिं धनं अस्माभिर्दीयमानं हवीरूपंधनं मन्यसेबुध्यसे चिदितिपादपूरणः श्रवाय्यंश्रवणीयं प्रशस्यं गीर्भिःस्तुतिभिःयुजं युक्तं नोस्मदीयंहविर्लक्षणंधनं तं देवत्रा देवेषु पनय प्रापयेत्यर्थः ॥ १ ॥

१. हे अग्नि, हे अत्यन्त अन्नप्रद, हम लोगों-द्वारा प्रदत्त जो हविस्वरूप अन्न तुम्हारा अभिमत है, हम लोगों की स्तुतियों के साथ उसी हव्य धन को तुम देवों के निकट ले जाओ।

येअ॒ग्नेनेरय॑न्तितेवृ॒द्धाउ॒ग्रस्य॒शव॑सः ।
अप॒द्वेषो॒अप॒ह्वरो॒न्यव्र॑तस्यसश्चिरे ॥ २ ॥

ये । अ॒ग्ने॒ । न । ई॒रय॑न्ति । ते॒ । वृ॒द्धाः । उ॒ग्रस्य॑ । शव॑सः । अप॑ ।
द्वेषः॑ । अप॑ । ह्वरः॑ । अ॒न्यऽव्र॑तस्य । स॒श्चि॒रे॒ ॥ २ ॥

हेअग्ने येजनाःवृद्धाः पश्वादिलक्षणैर्धनैःसमृद्धाःसन्तः तेतुभ्यंनेरयन्ति हवींषिनप्रयच्छन्ति तेउग्रस्य अधिकेनशवसोबलेन अन्नेनवा अप अपनीताः बलान्नहीनाभवन्तीत्यर्थः किंच अन्यव्रतस्य अन्यद्वैदिकाद्विभक्तंव्रतंकर्मयस्यतस्यासुरस्यद्वेषः तत्संबंधिनंविरोधं ह्वरोहिंसाच अपसश्चिरे आत्मानं प्रापयन्ति ॥ २ ॥

२. हे अग्नि, जो व्यक्ति पशु आदि धन से समृद्ध होकर तुम्हें हव्य प्रदान नहीं करता है, वह अन्न या बल से अत्यन्त हीन होता है। जो व्यक्ति वेद-भिन्न अन्य कर्म करता है, वह असुर तुम्हारा विरोध-भाजन होता है और तुम्हारे द्वारा हिंसित होता है।

होता॑रंत्वावृणीमहे॒ग्नेदक्ष॑स्य॒साध॑नम् ।
य॒ज्ञेषु॑पू॒र्व्यंगि॒राप्रय॑स्वन्तोहवामहे ॥ ३ ॥

होता॑रम् । त्वा॒ । वृ॒णी॒म॒हे॒ । अग्ने॑ । दक्ष॑स्य । साध॑नम् ।
य॒ज्ञेषु॑ । पू॒र्व्यम् । गि॒रा । प्रय॑स्वन्तः । ह॒वा॒म॒हे॒ ॥ ३ ॥

हेअग्ने प्रयस्वन्तोन्नवन्तः एतन्नामकावयं दक्षस्यबलस्यसाधनं साधयितारं त्वां होतारं देवानामाह्वातारंवृणीमहे किंच यज्ञेषु पूर्व्यंमुख्यंत्वां गिरास्तुतिरूपयावाचाहवामहे स्तुमः ॥३॥

३. हे अग्नि, तुम देवों के आह्वाता और बल के साधयिता हो। हम लोग प्रयस्वत् (अन्नवान्) तुम्हारा वरण करते हैं। यज्ञ में हम श्रेष्ठ अग्नि की, स्तुति रूप वचन से, स्तवन करते हैं।

अथचतुर्थी—

इ॒त्थायथा॑तऊ॒तये॒सह॑सावन्दि॒वेदि॑वे ।
रा॒यऋ॒ता॑यसुक्रतो॒गोभिः॑ष्यामसध॒मादो॑वी॒रैः स्या॑मसध॒मादः॑ ॥ ४ ॥ १२ ॥

इ॒त्था । यथा॑ । ते॒ । ऊ॒तये॑ । सह॑साऽवन् । दि॒वेऽदि॑वे । रा॒ये । ऋ॒ताय॑ ।
सु॒क्र॒तो॒ इति॑सुऽक्रतो । गोभिः॑ । स्या॒म॒ । स॒ध॒ऽमादः॑ । वी॒रैः ।
स्या॒म॒ । स॒ध॒ऽमादः॑ ॥ ४ ॥ १२ ॥

हेसहसावन् बलवन्नग्ने दिवेदिवे अन्वहं वयं ते तव ऊतये रक्षणाय यथास्याम तथा इत्थाइत्थंकुरु हेसुक्रतो राये धनाय ऋताय यज्ञायच यथास्याम तथाकुरु किंच गोभिःसधमादः सहमाद्यन्तः स्याम वीरैःपुत्रैश्चसधमादः सहमाद्यंतःस्याम तथाकुरु ॥ ४ ॥

४. हे बलवान् अग्नि, प्रतिदिन जिससे हम तुम्हारी रक्षा प्राप्त करें, वैसा करो। हे सुक्रतु, हम लोग जिससे धन लाभ कर सकें और यज्ञ कर सकें, वैसा करो। हम लोग जिससे गौओं को प्राप्त करें और वीर पुत्रों को प्राप्त कर सुखी हों, वैसा करो।

मनुष्वत्त्वेतिचतुर्ऋचंसप्तमंसूक्तं आत्रेयस्यसप्तस्यार्षं मनुष्वत्सप्तइत्यनुक्रमणिका पंक्त्यंतं-हेतिपूर्वोक्तत्वादिदमादीनित्रीणिसूक्तानिपंक्त्यन्तानि शिष्टाअनुष्टुभः अग्निर्देवता प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः।

मनुष्वत्त्वा निधीमहि मनुष्वत्समिधीमहि।
अग्ने मनुष्वदङ्गिरो देवान्देवयते यज ॥ १ ॥

मनुष्वत्। त्वा। नि। धीमहि। मनुष्वत्। सम्। इधीमहि।
अग्ने। मनुष्वत्। अंगिरः। देवान्। देवऽयते। यज ॥ १ ॥

हेअग्ने त्वा त्वां मनुष्वत् मनुरिवनिधीमहि स्थापयामः मनुःशब्दोमनुपर्यायः नभोंगिरोमनुषांवत्युपसंख्यानमितिभसंज्ञायांरुत्वाभावः मनुष्वत् मनुरिव त्वासमिधीमहि समिन्धिः संदीपयामः हेअंगिरः अंगारात्मकाग्ने देवयते देवकामाय यजमानाय मनुष्वत् मनवे मनोरपत्यायदेवान्यज ॥ १ ॥

१. हे अग्नि, मनु की तरह हम तुम्हें स्थापित और संदीप्त करते हैं। हे अङ्गारात्मक अग्नि, देवाभिलाषी मनुष्य यजमानों के लिए तुम देवों का यजन करो।

त्वं हि मानुषे जनेऽग्ने सुप्रीत इध्यसे।
स्रुचस्त्वा यन्त्यानुषक्सुजात सर्पिरासुते ॥ २ ॥

त्वम्। हि। मानुषे। जने। अग्ने। सुऽप्रीतः। इध्यसे। स्रुचः। त्वा।
यन्ति। आनुषक्। सुऽजात। सर्पिःऽआसुते ॥ २ ॥

हेअग्ने त्वं मानुषेजने मनुष्यलोके सुप्रीतःस्तोत्रैःसुष्ठुप्रीतःसन् इध्यसे दीप्यसे स्रुचोहविर्भिः संपूर्णाआनुषक् अनुषक्तंयथाभवतितथा त्वा त्वाम् यन्ति प्राप्नुवन्ति हेसुजात हेसर्पिरासुते घृतयुक्तान्नेति २. हे अग्नि, स्तोत्रों-द्वारा सुप्रीत होकर तुम मनुष्यों के लिए दीप्त होते हो। हे सुजात, घृतयुक्तान्न, हव्य-विशिष्ट पात्र तुम्हें निरन्तर प्राप्त करता है।

अथतृतीया—

त्वांविश्वेसजोषसोदेवासोदूतमक्रत ।
सपर्यन्तस्त्वाकवेयज्ञेषुदेवमीळते ॥ ३ ॥

त्वाम् । विश्वे । सऽजोषसः । देवासः । दूतम् । अक्रत । सपर्यन्तः ।
त्वा । कवे । यज्ञेषु । देवम् । ईळते ॥ ३ ॥

सजोषसः सहप्रीयमाणाः विश्वेसर्वेदेवासोदेवाः त्वां दूतं अक्रत अकुर्वन् अतःकारणात् हेकवे क्रान्तदर्शिन् देवंद्योतमानं त्वा त्वां सपर्यन्तःपरिचरन्तोयजमानाः यज्ञेषुईळते देवानाह्वातुंयाचन्ते ॥ ३ ॥

३. हे क्रान्तदर्शी अग्नि, प्रसन्न हो करके सब देवों ने तुम्हें दूत बनाया था; इसी लिए परिचर्या करनेवाले यजमान तुम्हारा (अग्निदेव का), यज्ञ में देवों को बुलाने के लिए, यजन करते हैं।

देवंवोदेवयज्ययाग्निमीळीतमर्त्यः ।
समिद्धःशुक्रदीदिह्यृतस्ययोनिमासदःससस्ययोनिमासदः ॥४॥१३॥

देवम् । वः । देवऽयज्यया । अग्निम् । ईळीत । मर्त्यः ।
सम्ऽइद्धः । शुक्र । दीदिहि । ऋतस्य । योनिम् । आ । असदः ।
ससस्य । योनिम् । आ । असदः ॥ ४ ॥ १३ ॥

मर्त्योमनुष्यः देवंद्योतमानमग्निं अग्रण्यं वः त्वांदेवयज्यया देवयज्यायै देवयागार्थं ईळीत स्तोतुमर्हति हेशुक्र शोचिष्मन् समिद्धः हविर्भिःप्रवृद्धःसन् दीदिहि दीप्यस्व ऋतस्य सत्यभूतस्य ससस्यऋषेः ममयोनिःकारणं स्वर्गसाधनं यज्ञस्थानं आसदः देवतारूपेण आसीद आदरातिशयद्योतनार्थंपुनर्वचनम् ॥ ४ ॥

४. हे दीप्तिशील अग्नि, मनुष्य लोग देवयज्ञ के लिए तुम्हारी स्तुति करते हैं। हवि-द्वारा प्रवृद्ध होकर तुम दीप्त होओ। तुम सत्यभूत सस ऋषि के स्वर्गसाधन यज्ञस्थल में देवरूप से ठहरो।

॥ इतिचतुर्थस्यप्रथमेत्रयोदशोवर्गः ॥ १३ ॥

प्रविश्वसामन्नितिचतुर्ऋचमष्टमंसूक्तं आत्रेयोविश्वसामाऋषिः चतुर्थीपंक्तिः शिष्टाअनुष्टुभः अग्निर्देवता तथाचानुक्रान्तं—प्रविश्वसामन्विश्वसामेति । उक्तोविनियोगःप्रातरनुवाकाश्विनशस्त्रयोः ।

प्रविश्वसामन्नत्रिवदर्चापावकशोचिषे।
योअध्वरेष्वीड्योहोतामन्द्रतमोविशि ॥ १ ॥

प्र। विश्वऽसामन्। अत्रिऽवत्। अर्च। पावकऽशोचिषे। यः।
अध्वरेषु। ईड्यः। होता। मन्द्रऽतमः। विशि ॥ १ ॥

हेविश्वसामन् ऋषेःसंबोधनमेतत् त्वं अत्रिवत् अत्रिरिवपावकशोचिषे शोधकदीप्तये तस्मै अग्नये प्रार्च प्रगाय योग्निःअध्वरेषुईड्यःसर्वैर्यज्वभिःस्तुत्यः होता देवानामाह्वाता विशि जने मन्द्रतमः स्तुत्यतमः ॥ १ ॥

१. हे विश्वसामा ऋषि, तुम अत्रि की तरह शोधक दीप्तिवाले उन अग्नि की अर्चना करो, जो यज्ञ में सब ऋत्विकों-द्वारा स्तुत्य हैं, देवों के आह्वाता हैं और जो अत्यन्त स्तवनीय हैं।

न्य१ग्निंजातवेदसंदधातादेवमृत्विजम्।
प्रयज्ञएत्वानुषगद्यादेवव्यचस्तमः ॥ २ ॥

नि। अग्निम्। जातऽवेदसम्। दधात। देवम्। ऋत्विजम्। प्र।
यज्ञः। एतु। आनुषक्। अद्य। देवव्यचःऽतमः ॥ २ ॥

हेयजमानाः जातवेदसं जातप्रज्ञं जातधनंवा देवं द्योतमानं ऋत्विजं ऋतुयष्टारं अग्निं निदधात निधत्त किंच देवव्यचस्तमः देवानामाप्ततमोयज्ञोयज्ञसाधनं अस्माभिर्दीयमानंहविः आनुषक् अनुषक्तंयथाभवतितथा अद्यास्मिन्नहनि तमग्निंप्रैतु प्रयच्छतु ॥२ ॥

२. हे यजमानो, तुम सब जातवेदा, द्युतिमान् और यज्ञकारक अग्नि को धारण करो—संस्थापित करो, जिससे आज देवों के प्रिय, यज्ञसाधन और हम लोगों के द्वारा प्रदत्त हव्य अग्नि को प्राप्त करे।

चिकित्विन्मनसंत्वादेवंमर्तासऊतये।
वरेण्यस्यतेवसइयानासोअमन्महि ॥ ३ ॥

चिकित्वित्ऽमनसम्। त्वा। देवम्। मर्तासः। ऊतये। वरेण्यस्य।
ते। अवसः। इयानासः। अमन्महि ॥ ३ ॥

हेअग्ने चिकित्विज्जानन्मनोयस्यासौचिकित्विन्मनाः तं देवं त्वा त्वां इयानासः उपगच्छन्तोमर्तासोमनुष्यावयं ऊतये रक्षणार्थं वरेण्यस्य संभजनीयस्य ते तव अवसः अवसे तर्पणाय अमन्महि स्तुमः ॥ ३ ॥

३. हे दीप्तिशील अग्नि, तुम्हारा हृदय ज्ञानसम्पन्न है। तुम्हारे निकट हम लोग रक्षा के लिए उपस्थित होते हैं। हम मनुष्य सम्भजनीय अग्नि को तृप्त करने के लिए स्तवन करते हैं।

अथचतुर्थी—

अग्नेचिकिद्ध्य१स्यनइदंवचःसहस्य ।
तंत्वासुशिप्रदंपतेस्तोमैर्वर्धन्त्यत्रयोगीर्भिःशुंभन्त्यत्रयः॥४॥१४॥

अग्ने । चिकिद्धि । अस्य । नः । इदम् । वचः । सहस्य । तम् । त्वा ।
सुऽशिप्र । दम्ऽपते । स्तोमैः । वर्धन्ति । अत्रयः । गीःऽभिः ।
शुंभन्ति । अत्रयः ॥ ४ ॥ १४ ॥

हेअग्ने सहस्य सहसोबलस्यपुत्र नोस्मदीयं अस्येदंपरिचरणं इदंवचः स्तोत्रंच चिकिद्धि जानीहि हेसुशिप्र शोभने शिप्रेहनूनासिकेवायस्यासौसुशिप्रः तस्यसंबोधनंसुशिप्र सुहनो दंपते गृहपते तं त्वां अत्रयोत्रिपुत्राः स्तोमैःस्तोत्रैः वर्धन्ति वर्धयन्ति अत्रयोगीर्भिःशुंभंत्यलंकुर्वन्ति ॥ ४ ॥

४. हे बलपुत्र अग्नि, तुम हमारे इस परिचरण स्तवन को जानो। हे सुन्दर हनू-नासिकावाले, हे गृहपति, अत्रि के पुत्र स्तोत्रों-द्वारा तुम्हें वर्द्धित करते हैं और वचनों-द्वारा अलंकृत करते हैं।

॥ इतिचतुर्थस्यप्रथमेचतुर्दशोवर्गः ॥ १४ ॥

अग्नेसहन्तमितिचतुर्ऋचंनवमंसूक्तं अत्रानुक्रमणिका—अग्नेद्युम्नोविश्वचर्षणिरिति । द्युम्नऋषिः चतुर्थीपंक्तिराद्यास्तिस्रोनुष्टुभः अग्निर्देवता प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्तान्तःपातितत्वादुक्तोविनियोगः ।

अग्नेसहन्तमाभरद्युम्नस्यप्रासहारयिम् ।
विश्वायश्चर्षणीरभ्या३सावाजेषुसासहत् ॥ १ ॥

अग्ने । सहन्तम् । आ । भर । द्युम्नस्य । प्रऽसहा । रयिम् ।
विश्वाः । यः । चर्षणीः । अभि । आसा । वाजेषु । ससहत् ॥ १ ॥

हेअग्ने प्रासहा प्रकृष्टेनबलेनसहंतं शत्रूनभिभवन्तं रयिं पुत्रं द्युम्नस्य द्युम्नाय मम ऋषये आभर आहर चतुर्थ्यर्थेषष्ठी एतदेवंविवृणोति यःपुत्रः आसा आस्येन स्तोत्रेणयुक्तः सन् वाजेषु युद्धेषु अभि आभिमुख्येनगतान् विश्वाः सर्वान्चर्षणीर्मनुष्यान् शत्रून् ससहत् अभिभवति ॥ १ ॥

१. हे अग्नि, तुम मुझ द्युम्न ऋषि के लिए एक बलशाली शत्रु-विजेता पुत्र प्रदान करो। जो पुत्र स्तोत्र से युक्त होकर संग्राम में निखिल शत्रुओं को अभिभूत करे।

अथद्वितीया—

तमंग्नेपृतना॒षहं॑र॒यिंसं॑हस्व॒आभ॑र।
त्वंहिस॒त्योअद्भु॑तोदा॒तावाजं॑स्य॒गोमं॑तः ॥ २ ॥

तम्। अग्ने॑। पृत॒ना॒ऽसहं॑म्। र॒यिम्। सह॒स्व॒ः। आ। भ॒र।
त्वम्। हि। स॒त्यः। अद्भु॑तः। दा॒ता। वाजं॑स्य। गोऽमं॑तः ॥ २ ॥

हेअग्ने हेसहस्वः बलवन् पृतनासहं पृतनाःसेनाः अभिभवितारं रयिं पुत्रं तं त्वमाभर आहर त्वंहिसत्यःसत्यभूतः अद्भुतोमहान् गोमतः गोभिर्युक्तस्यवाजस्यान्नस्य दाता ॥ २ ॥

२. हे बलवान् अग्नि, तुम सत्यभूत, अद्भुत और गोयुक्त अन्न के दाता हो। तुम इस तरह का एक पुत्र प्रदान करो, जो सेनाओं का अभिभूत करने में समर्थ हो।

विश्वे॒हित्वा॑स॒जोषं॑सो॒जना॑सोवृ॒क्तब॑र्हिषः।
होता॑रं॒सद्म॑सुप्रि॒यंव्यन्ति॒वार्या॑पु॒रु ॥ ३ ॥

विश्वे॑। हि। त्वा॒। स॒ऽजोषं॑सः। जना॑सः। वृ॒क्तऽब॑र्हिषः।
होता॑रम्। सद्म॑ऽसु। प्रि॒यम्। व्यन्ति। वार्या॑। पु॒रु ॥ ३ ॥

हेअग्ने सजोषसः सहप्रीयमाणाः वृक्तबर्हिषोलूनबर्हिषोविश्वेसर्वेजनासोजनाः ऋत्विजः सद्मसु यज्ञगृहेषु होतारं देवानामाह्वातारं प्रियं सर्वेषांप्रीतिकरं त्वा त्वां पुरु पुरूणि बहूनि वार्या वरणीयानिधनानि व्यंति याचन्ते ॥ ३ ॥

३. हे अग्नि, तुम देवों के आह्वाता और सबके प्रियकर हो। समान प्रीतिवाले और कुशच्छेद करनेवाले निखिल ऋत्विक् यज्ञगृह में बहुविध वरणीय धन की याचना करते हैं।

अथचतुर्थी—

सहि॒ष्मावि॒श्वच॑र्षणिर॒भिमा॑ति॒सहो॑द॒धे।
अग्नं॑ए॒षुक्षये॒ष्वारे॒वन्नः॑शुक्रदीदिहिद्यु॒मत्पा॑वकदीदिहि ॥ ४ ॥ १५ ॥

सः। हि। स्म॒। वि॒श्वऽच॑र्षणिः। अ॒भिऽमा॑ति। सहः॑।
द॒धे। अग्ने॑। ए॒षु। क्षये॑षु। आ। रे॒वत्। न॒ः। शु॒क्र॒।
दी॒दि॒हि॒। द्यु॒ऽमत्। पा॒व॒क॒। दी॒दि॒हि॒ ॥ ४ ॥ १५ ॥

हेअग्ने सः लोकेषुप्रसिद्धोविश्वचर्षणिर्ऋषिः अभिमाति शत्रूणांहिंसकंसहोबलंदधे धारयतु हेशुक्र शोचिष्मन् त्वं नोस्मदीयेषुक्षयेषुगृहेषुरेवत् धनयुक्तंयथाभवतितथाआदीदिहि आदीप्यस्व हेपावक पापानांशोधक अग्ने त्वं द्युमत् दीप्तियुक्तं यशोयुक्तंच दीदिहि दीप्यस्व ॥ ४ ॥

४. हे अग्नि, लोकप्रसिद्ध विश्वचर्षणि ऋषि शत्रुओं के हिंसक बल को धारण करें। हे द्युतिमान्, तुम हमारे गृह में धनयुक्त प्रकाश करो। हे पापशोधक अग्नि, तुम दीप्तियुक्त और यशोयुक्त होकर दीप्यमान होओ। ॥ इतिचतुर्थस्यप्रथमेपंचदशोवर्गः ॥ १५ ॥

अग्नेत्वंनइतिचतुर्ऋचंदशमंसूक्तं अत्रानुक्रमणिका—अग्नेत्वंगौपायनालौपायनावाबन्धुःसुबन्धुश्रुतबन्धुर्विप्रबन्धुश्चैकर्चाद्विपदमिति। विंशतिकाद्विपदाविराजइत्युक्तत्वाच्चतस्रोद्विपदाविराजः बन्धुःसुबन्धुःश्रुतबन्धुर्विप्रबन्धुश्चक्रमेणचतसृणामृषयः तेचगौपायनालौपायनावा अग्निर्देवता महापितृयज्ञेआहवनीयंप्रतिगच्छन्तऋत्विजःइदंसूक्तंजपेयुः तथाचसूत्रितं—अथैनमभिसमायन्ति माप्रगामाग्नेत्वंनइतिजपन्तइति । दशरात्रेषष्ठेहनितृतीयसवनेमैत्रावरुणस्यअग्नेत्वमितिद्वे तंत्वाशोचिष्ठेत्येका एवंमिलितोद्विपदस्तृचःस्तोत्रियःतथैवसूत्रितं—अग्नेत्वंनोअन्तमोग्नेभवसुषमिधेति।

अग्ने॒त्वंनो॒अन्त॑मउ॒तत्रा॒ताशि॒वोभ॑वावरू॒थ्यः॑ ।
वसु॑र॒ग्निर्वसु॑श्रवा॒अच्छा॑नक्षिद्यु॒मत्त॑मंर॒यिंदाः॑ ॥ १ ॥ २ ॥

अग्ने॑ । त्वम् । नः॒ । अन्त॑मः । उ॒त । त्रा॒ता । शि॒वः । भ॒व ।
व॒रू॒थ्यः॑ । वसुः॑ । अ॒ग्निः । वसु॑ऽश्रवाः । अच्छ॑ । न॒क्षि॒ ।
द्यु॒मत्ऽत॑मम् । र॒यिम् । दाः॒ ॥ १ ॥ २ ॥

हेअग्ने वरूथ्यः वरणीयः संभजनीयः यद्वा वरूथैःपरिधिभिर्वृतस्त्वंनोस्माकंअंतिमोन्तिकतमोभव उतापिच त्राता रक्षकः शिवः सुखकरश्चभव वसुर्वासकोग्निःसर्वेषामग्रणीः वसुश्रवाः व्याप्तान्नस्त्वं अच्छ आभिमुख्येननक्षि अस्मान्व्याप्नुहि द्युमत्तमं अतिशयेनदीप्तिमत् रयिं पश्वादिलक्षणंधनं दाः अस्मभ्यंदेहि ॥ १ ॥ २ ॥

१-२. हे अग्नि, तुम सम्भजनीय, रक्षक और सुखकर हो। तुम हमारे निकटतम होओ। हे गृहदाता और अन्नदाता, तुम हम लोगों के प्रति अनुकूल होकर अतिशय दीप्तिशील पशुस्वरूप धन हम लोगों को प्रदान करो।

सनो॑बोधिश्रु॒धीहव॑मुरु॒ष्याणो॑अघाय॒तःस॑मस्मात् ।
तंत्वा॑शोचिष्ठदीदिवःसु॒म्नाय॑नू॒नमी॑महे॒सखि॑भ्यः ॥ ३ ॥ ४ ॥ १६ ॥

सः । नः । बोधि । श्रुधि । हवम् । उरुष्य । नः । अघऽयतः ।
समस्मात् । तम् । त्वा । शोचिष्ठ । दीदिऽवः । सुम्नाय ।
नूनम् । ईमहे । सखिऽभ्यः ॥ ३॥ ४ ॥ १६ ॥

हेअग्ने सत्वंनोस्मान्बोधि बुध्यस्व हवमस्मदीयमाह्वानंश्रुधि शृणु अघायतः अघमिच्छतः समस्मात् सर्वस्मात् जनात् नोस्मानुरुष्य रक्ष हेशोचिष्ठ अतिशोचिष्मन् दीदिवः स्वतेजोभिर्दीप्ताग्ने तं त्वा त्वां सुम्नाय सुखाय सुम्नमितिसुखनाम तदर्थंसखिभ्यःसमानख्यातिभ्यः पुत्रेभ्यः तदर्थंच नूनं ईमहे याचामहे ॥ ३ ॥ ४ ॥

३-४. हे अग्नि, तुम हम लोगों को जानो। हम लोगों के आह्वान को श्रवण करो। समस्त पापाचारियों से हम लोगों की रक्षा करो। हे अपने तेज से प्रदीप्त अग्नि, हम लोग सुख के लिए और पुत्र के लिए तुमसे याचना करते हैं।

॥ इतिचतुर्थस्यप्रथमेषोडशोवर्गः ॥ १६ ॥

अच्छावोअग्निमितिनवर्चमेकादशंसूक्तं अत्रानुक्रमणिका—अच्छावोनववसूयवआनुष्टुभमिति । आत्रेयावसूयुनामानऋषयः अनुष्टुप् मंडलादिपरिभाषयाग्निर्देवता प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः प्रातःसवनेअच्छावाकवदस्वेत्युक्ते अच्छावोअग्निमवसइतितृचमनुब्रूयात् तथाचसूत्रितं—अच्छावोअग्निमवसइतितृचमन्वाहेति ।

अच्छावोअग्निमवसेदेवंगासिसनोवसुः ।
रासत्पुत्रऋषूणामृतावापर्षतिद्विषः ॥ १ ॥

अच्छ । वः । अग्निम् । अवसे । देवम् । गासि । सः । नः । वसुः ।
रासत् । पुत्रः । ऋषूणाम् । ऋतऽवा । पर्षति । द्विषः ॥ १ ॥

हेवसूयवः वोयूयं देवमग्निं अवसे रक्षणाय अच्छगासि अभिगायत वसुः अग्निहोत्रार्थंयजमानानांगृहेवासयितासोग्निर्नोस्मभ्यंरासत् कामान्ददातु ऋषूणामृषीणांपुत्रः ऋषिभिर्मन्थनेनजनितत्वात् पुत्रउपचर्यते ऋतावा ऋतावान् सत्यवानुदकवान्वासोग्निः द्विषः अस्माकं शत्रून्पर्षति पारयतु ॥ १ ॥

१. हे वसुयु ऋषियो, रक्षा के लिए तुम लोग अग्नि का स्तवन करो। अग्निहोत्र के लिए यजमानों के घर में रहनेवाले अग्नि हम लोगों की कामना पूर्ण करें। ऋषियों के पुत्र (अरणि-मन्थन से उत्पन्न) सत्यवान् अग्नि हम लोगों की शत्रुओं से रक्षा करें।

सहिसत्योयंपूर्वेचिद्देवासश्चिद्यमीधिरे ।
होतारंमन्द्रजिह्वमित्सुदीतिभिर्विभावसुम् ॥ २ ॥

सः । हि । सत्यः । यम् । पूर्वे । चित् । देवासः । चित् ।

यम् । ईधिरे । होतारम् । मन्द्रऽजिह्वम् । इत् । सुदीतिऽभिः ।

विभाऽवसुम् ॥ २ ॥

पूर्वेचित्पूर्वेमहर्षयः होतारं देवानामाह्वातारं मन्द्रजिह्वं हविषांप्रदानेनदेवानांमादयित्री जिह्वायस्यसः तं यद्वा मोदनजिह्वं तथाहयास्कः—मन्द्रजिह्वंमंदनजिह्वंमोदनजिह्वमितिवेति । सुदीतिभिः शोभनदीप्तिभिर्युक्तं विभावसुं प्रभाधनं यमग्निंईधिरे समैन्धत देवासश्चित् देवा-अपियमग्निमीधिरे समैन्धत सह्यग्निःसत्योभवति सत्यप्रतिश्रवोभवति इदितिपूरणः ॥ २ ॥

२. पूर्ववर्ती महर्षियों और देवों ने जिन अग्नि को सन्दीप्त किया था, जो अग्नि मोदनजिह्व (हव्य ग्रहण करके जिनकी जिह्वा मुदित होती है), शोभन दीप्ति से युक्त, अतिशय प्रभावान् और देवों के आह्वाता हैं, वे अग्नि सत्यप्रतिज्ञ हैं।

सनोधीतीवरिष्ठयाश्रेष्ठयाचसुमत्या ।

अग्नेरायोदिदीहिनःसुवृक्तिभिर्वरेण्य ॥ ३ ॥

सः । नः । धीती । वरिष्ठया । श्रेष्ठया । च । सुऽमत्या । अग्ने ।

रायः । दिदीहि । नः । सुवृक्तिऽभिः । वरेण्य ॥ ३ ॥

सुवृक्तिभिः स्तुतिभिः स्तूयमान वरेण्य वरणीय हेअग्ने सत्वंवरिष्ठया वरतमेन श्रेष्ठया अतिशयेनप्रशस्येननोधीती धीत्या अस्मदीयेनपरिचरणात्मकेनकर्मणा सुमत्याच सुमतिरितिशस्त्रमुच्यते शस्त्रेणचप्रीतःसन् रायोधनानिनोस्मभ्यं दीदिहि देहि ॥ ३ ॥

३. हे स्तुतियों-द्वारा स्तूयमान और वरणीय अग्नि, तुम हम लोगों के अतिशय प्रशस्य और अत्यन्त श्रेष्ठ परिचरणात्मक कर्म से और शस्त्र (स्तोत्र) से प्रसन्न होकर हम लोगों को धन प्रदान करो।

अग्निर्देवेषुराजत्यग्निर्मर्तेष्वाविशन् ।

अग्निर्नोहव्यवाहनोग्निंधीभिःसपर्यत ॥ ४ ॥

अग्निः । देवेषु । राजति । अग्निः । मर्तेषु । आऽविशन् ।

अग्निः । नः । हव्यऽवाहनः । अग्निम् । धीभिः । सपर्यत ॥ ४ ॥

योग्निर्देवेषु देवानांमध्येराजति देवतारूपेणप्रकाशते योग्निर्मर्तेषु मनुष्येषु आविशन् आहवनीयादिरूपेणप्रविष्टोभवति योग्निर्नोस्माकंहव्यवाहनोभवति अस्मदीयेषुयज्ञेषुदेवतार्थं हव्यानांवोढाभवति हेयजमानाः तमग्निंधीभिःस्तुतिभिःसपर्यत परिचरत ॥ ४ ॥

४. जो अग्नि देवों के मध्य में देवता-रूप से प्रकाशित होते हैं, जो मनुष्यों के बीच आहवनीय रूप से प्रविष्ट होते हैं और जो हम लोगों

के यज्ञों में देवता के लिए,] हव्य वहन करते हैं, हे यजमानो, स्तुतियों-द्वारा तुम लोग उन अग्नि की परिचर्या करो।

पुत्रकामेष्ट्यांअग्निस्तुविश्रवस्तममितिद्वेस्विष्टकृतोयाज्यानुवाक्ये सूत्रितंच—अग्निस्तुविश्रवस्तममितिद्वेसंयाज्येइति।

अ॒ग्निस्तु॒विश्र॑वस्तमं॒तु॒विब्र॑ह्माणमु॒त्तम॑म्।
अ॒तूर्तं॑श्राव॒यत्प॑तिंपु॒त्रंद॑दातिदा॒शुषे॑ ॥ ५ ॥ १७ ॥

अ॒ग्निः। तु॒विश्र॑वःऽतमम्। तु॒विऽब्र॑ह्माणम्। उ॒त्ऽत॒मम्। अ॒तूर्त॑म्। श्र॒वय॒त्ऽप॑तिम्। पु॒त्रम्। द॒दा॒ति॒। दा॒शुषे॑ ॥ ५ ॥ १७ ॥

अग्निस्तुविश्रवस्तमं अतिशयेनबह्वन्नं तुविब्रह्माणं बहुस्तोत्रं उत्तममुत्कृष्टं अतूर्तं शत्रुभिरहिंसितं श्रावयत्पतिं श्रावयति विश्रुतान्करोति पतीन् पालयितॄन्पितॄनिति स्वकर्मणापितॄणांप्रख्यापकइतिश्रावयत्पतिः तथाविधं पुत्रं दाशुषेहवींषिदत्तवतेयजमानाय ददातिददातु॥५॥

५. हवि देनेवाले यजमानों को अग्नि एक ऐसा पुत्र प्रदान करें, जो बहुविध अन्नों से युक्त, बहुत स्तोत्रवाला, उत्तम, शत्रुओं-द्वारा अहिंसित और अपने कर्म से पिता-पितामह आदि के यश को प्रख्यात करनेवाला हो।

अ॒ग्निर्द॑दाति॒सत्प॑तिंसा॒साह॒योयु॒धानृभिः॑।
अ॒ग्निरत्यं॑रघु॒ष्यदं॒जेता॑र॒मप॑राजितम् ॥ ६ ॥

अ॒ग्निः। द॒दा॒ति॒। सत्ऽप॑तिम्। स॒साह॑। यः। यु॒धा। नृऽभिः॑। अ॒ग्निः। अत्य॑म्। र॒घु॒ऽस्यद॑म्। जेता॑रम्। अप॑राऽजितम् ॥ ६ ॥

यःपुनः युधा युद्धेन नृभिःपरिजनैःससाह शत्रूनभिभवति सत्पतिं सतांपालयितारं तथाविधंपुत्रं अग्निर्ददाति अस्मभ्यंददातु किंचाग्निः रघुष्यदं रघुःलघुःस्यदोजवोयस्यतं जेतारंशत्रूणां अपराजितंशत्रुभिः अत्यं अततिसततंगच्छत्यत्योश्वःतंददातु ॥ ६ ॥

६. अग्नि हम लोगों को उस तरह का पुत्र दें, जो सत्य का पालन करनेवाला हो और अपने परिजनों के साथ, युद्ध में, शत्रुओं को पराभूत करनेवाला हो एवम् द्रुत वेगवाला और शत्रुओं को जीतनेवाला घोड़ा भी दें।

अश्वमेधेपौष्ण्यामिष्टौ यद्वाहिष्ठमितियाज्या सूत्रितंच—यद्वाहिष्ठंतदग्नयइतिसंयाज्येति।

यद्वाहि॑ष्ठं॒तद॒ग्नये॑बृ॒हद॑र्चविभावसो।
महि॑षीव॒त्वद्र॒यिस्त्वद्वाजा॒उदी॑रते ॥ ७ ॥

यत्। वाहिष्ठम्। तत्। अग्नये। बृहत्। अर्च।
विभावसो इति विभाऽवसो। महिषीऽइव। त्वत्।
रयिः। त्वत्। वाजाः। उत्। ईरते॥ ७॥

वाहिष्ठं वोढ्ढतमं यत्स्तोत्रं तदग्नये क्रियते अतोहेविभावसो प्रभाधनाग्ने बृहद् बहुलं धनं अर्च अस्मभ्यंप्रयच्छ कथमस्यात्धनप्रदातृत्वमित्यपेक्षायामाह यतः त्वद् त्वत्तः सकाशाद् महिषीमहती रयिर्धनं उदीरते उद्गच्छति वाजाःअन्नानिच त्वद् उदीरते उद्गच्छन्ति इवेतिपूरणः॥ ७॥

७. जो श्रेष्ठतम स्तोत्र है, वह अग्नि के लिए ही किया जाता है। हे तेजोधन अग्नि, हम लोगों को बहुत धन प्रदान करो; क्योंकि तुम्हारे समीप से ही महान् धन उत्पन्न हुए हैं और निखिल अन्न भी तुमसे ही उत्पन्न हुए हैं।

तवंद्युमन्तोअर्चयोग्रावेवोच्यतेबृहत्।
उतोतेतन्यतुर्यथास्वानोअर्तत्मनादिवः॥ ८॥

तव। द्युऽमन्तः। अर्चयः। ग्रावाऽइव। उच्यते। बृहत्।
उतो इति। ते। तन्यतुः। यथा। स्वानः। अर्त। त्मना। दिवः॥८॥

हेअग्ने तवअर्चयोरश्मयः द्युमन्तोदीप्तिमन्तोभवन्ति बृहद् महद् त्वं ग्रावेव अभिषवग्रावेव उच्यते स्तूयसे उतअपिच त्मना आत्मना दिवोद्योतमानस्यतेतवस्वानःशब्दः तन्यतुर्यथामेघगर्जितमिवअर्तउद्गच्छति॥ ८॥

८. हे अग्नि, तुम्हारी शिखायें दीप्तिमती हैं। तुम सोमलतापेषक पत्थर की तरह महान् कहे जाते हो। तुम द्युतिमान् हो। तुम्हारा शब्द मेघगर्जन की तरह द्युतिमान् व्याप्त होता है।

एवाँअग्निंवसूयवःसहसानंववन्दिम।
सनोविश्वाअतिद्विषःपर्षन्नावेवसुक्रतुः॥ ९॥ १८॥

एव। अग्निम्। वसुऽयवः। सहसानम्। ववन्दिम। सः। नः।
विश्वाः। अति। द्विषः। पर्षत्। नावाऽइव। सुऽक्रतुः॥ ९॥ १८॥

वसूयवोवसुकामावयंसहसानमस्माकंबलमिवाचरंतमग्निं एवमुक्तप्रकारेण ववन्दिम स्तुमः सुक्रतुः शोभनकर्मासोग्निर्नोस्मान् विश्वाः सर्वान् द्विषःशत्रून् अतिपर्षद् अतिपारयतु कथमिव नावासाधनेनसिंधुमिव॥ ९॥

॥ इतिचतुर्थस्यप्रथमेष्टादशोवर्गः॥ १८॥

९. हम (वसुयुगण) इस प्रकार से बलवान् अग्नि का स्तवन करते हैं। शोभनकर्मा अग्नि हम लोगों को निखिल शत्रुओं से उत्तीर्ण करें, जैसे नौका-द्वारा नदी पार की जाती है।

अग्नेपावकेतिनवर्चंद्वादशंसूक्तं वसूयवऋषयः गायत्रीछन्दः अग्निर्देवता तथाचानुक्रान्तम्—अग्नेगायत्रमिति। प्रातरनुवाकेआग्नेयेक्रतौगायत्रेछंदसिआश्विनशस्त्रेचेदंसूक्तं सूत्रितंच—अग्नेपावकंदूतंवइतिसूक्तेइति। आधानेद्वितीयायामिष्टौप्रथमस्यहविषोग्नेपावकेत्येषायाज्या सूत्रितंच—सनःपावकदीदिवोग्नेपावकरोचिषेति।

अग्नेपावकरोचिषामन्द्रयादेवजिह्वया। आदेवान्वक्षियक्षिच ॥ १ ॥

अग्ने। पावक। रोचिषा। मन्द्रया। देव। जिह्वया। आ।
देवान्। वक्षि। यक्षि। च ॥ १ ॥

हेपावक शोधक रोचिषा स्वदीप्त्या मन्द्रया देवानांमादयित्र्या जिह्वयाच हेदेव द्योतमानाग्ने देवानावक्षि यज्ञार्थमावह यक्षिच तान्यज ॥ १ ॥

१. हे शोधक और द्युतिमान् अग्नि, तुम अपनी दीप्ति से और देवों को प्रहृष्ट करनेवाली जिह्वा से, यज्ञ में देवों का आनयन करो और उनका यजन करो।

तंत्वाघृतस्नवीमहेचित्रभानोस्वर्दृशम्। देवाँआवीतयेवह ॥ २ ॥

तम्। त्वा। घृतस्नो इति घृतऽस्नो। ईमहे। चित्रभानो इति-
चित्रऽभानो। स्वःऽदृशम्। देवान्। आ। वीतये। वह ॥ २ ॥

हेघृतस्नो घृतस्यप्रेरक यद्वा घृतेनजनित हेचित्रभानो चित्रानानाविधाभानवोरश्मयोयस्यासौचित्रभानुः तस्यसंबोधनं स्वर्दृशं सर्वद्रष्टारं तं त्वा त्वांईमहे याचामहे अतोवीतयेहविषां भक्षणायदेवानावह ॥ २ ॥

२. हे घृतोत्पन्न और हे बहुविध रश्मिवाले अग्नि, तुम सर्वद्रष्टा हो। हम लोग तुमसे याचना करते हैं कि हव्य भक्षण के लिए तुम देवों का वहन करो।

वीतिहोत्रंत्वाकवेद्युमन्तंसमिधीमहि। अग्नेबृहन्तमध्वरे ॥ ३ ॥

वीतिऽहोत्रम्। त्वा। कवे। द्युऽमन्तम्। सम्। इधीमहि।
अग्ने। बृहन्तम्। अध्वरे ॥ ३ ॥

हेकवे क्रान्तदर्शिन् अग्ने वीतिहोत्रं कांतयज्ञं यद्वा प्रिययज्ञं द्युमन्तं दीप्तिमन्तं बृहन्तं महान्तं त्वा त्वां अध्वरेयज्ञे समिधीमहि समिद्भिःसंदीपयामः ॥ ३ ॥

३. हे क्रान्तदर्शी (ज्ञानसम्पन्न) अग्नि, तुम हव्य-भक्षणशील, दीप्तिमान् और महान् हो। हम लोग तुम्हें यज्ञस्थल में सन्दीप्त करते हैं।

अथचतुर्थी–

अग्ने विश्वेभिरा गहि देवेभिर्हव्यदातये । होतारं त्वा वृणीमहे ॥ ४ ॥

अग्ने । विश्वेभिः । आ । गहि । देवेभिः । हव्यऽदातये ।
होतारम् । त्वा । वृणीमहे ॥ ४ ॥

हेअग्ने विश्वेभिःसर्वैः देवेभिःदेवैः सह त्वं हव्यदातये हविषांदात्रे यजमानाय तदर्थं आगहि यज्ञंप्रत्यागच्छ यतः होतारंदेवानामाह्वातारं त्वा त्वां वृणीमहे प्रार्थयामहे ॥ ४ ॥

४. हे अग्नि, सब देवों के साथ तुम हव्यदाता यजमान के यज्ञ में उपस्थित होओ। तुम देवों के आह्वानकारी हो। हम लोग तुमसे प्रार्थना करते हैं।

यजमानाय सुन्वत आग्ने सुवीर्यं वह । देवैरा सत्सि बर्हिषि ॥ ५ ॥ १९ ॥

यजमानाय । सुन्वते । आ । अग्ने । सुऽवीर्यम् । वह ।
देवैः । आ । सत्सि । बर्हिषि ॥ ५ ॥ १९ ॥

हेअग्ने सुन्वते अभिषवंकुर्वतेयजमानाय सुवीर्यंशोभनं बलं आवह प्रापय किंच देवैः सहबर्हिषियज्ञे आसत्सि आसीदेति ॥ ५ ॥

५. हे अग्नि, अभिषव (यज्ञस्नान) करनेवाले यजमान को तुम शोभन बल प्रदान करो एवम् देवों के साथ कुश पर उपवेशन करो।

समिधानः सहस्रजिदग्ने धर्माणि पुष्यसि । देवानां दूत उक्थ्यः ॥ ६ ॥

सम्ऽइधानः । सहस्रऽजित् । अग्ने । धर्माणि ।
पुष्यसि । देवानाम् । दूतः । उक्थ्यः ॥ ६ ॥

हेसहस्रजित् सहस्रजेतरग्ने समिधानः हविर्भिःसमिध्यमानः उक्थ्यः प्रशस्यस्त्वं देवानांदूतःसन् धर्माणि नः कर्माणि यज्ञादिक्रियाः पुष्यसि पोषयसि ॥ ६ ॥

६. हे सहस्रों को जीतनेवाले अग्नि, हवि-द्वारा प्रज्वलित होकर, प्रशस्यस्तान होकर और देवों के दूत होकर तुम हम लोगों के यज्ञकर्म का पोषण करते हो।

अथसप्तमी–

न्यग्निं जातवेदसं होत्रवाहं यविष्ठ्यम् । दधाता देवमृत्विजम् ॥ ७ ॥

नि । अग्निम् । जातऽवेदसम् । होत्रऽवाहम् । यविष्ठ्यम् ।
दधात । देवम् । ऋत्विजम् ॥ ७ ॥

हेयजमानाः जातवेदसं जातानिभूतानिवेत्तीतिजातवेदाः तं होत्रवाहं होत्रस्ययज्ञस्य वोढारं यविष्ठ्यंयुवतमं देवं द्योतमानं ऋत्विजं ऋतौयष्टारं अग्निंनिदधात निधत्त ॥ ७ ॥

७. हे यजमानो, तुम लोग अग्नि को संस्थापित करो। वे भूतजात को जाननेवाले, यज्ञ के प्रापक, युवतम द्युतिमान् और ऋत्विक् (यष्टा) हैं।

प्रयज्ञएत्वानुषगद्यादेवव्यचस्तमः। स्तृणीतबर्हिरासदे ॥ ८॥

प्र। यज्ञः। एतु। आनुषक्। अद्य। देवव्यचःऽतमः।
स्तृणीत। बर्हिः। आऽसदे ॥ ८ ॥

अद्यास्मिन्नहनि देवव्यचस्तमः देवैःप्रकाशमानैःस्तोतृभिर्व्याप्ततमोयज्ञोयज्ञसाधनंहविरानुषक् अनुषक्तंयथाभवतितथाप्रैतु देवान्गच्छतु हेऋत्विजः आसदे अग्नेरासदनार्थं बर्हि स्तृणीत ॥ ८ ॥

८. प्रकाशमान स्तोताओं-द्वारा प्रदत्त हविरन्न आज देवों के निकट निरन्तर गमन करे' हे ऋत्विक् तुम अग्नि के उपवेशनार्थ (बैठने के लिए) कुश विस्तृत करो—बिछाओ।

एदंमरुतोअश्विनामित्रःसीदन्तुवरुणः। देवासःसर्वयाविशा ॥९॥२०॥

आ। इदम्। मरुतः। अश्विना। मित्रः। सीदन्तु। वरुणः।
देवासः। सर्वया। विशा ॥ ९ ॥ २० ॥

मरुतोमरुद्गणाः अश्विना अश्विनौ देवानांभिषजौ मित्रःसूर्योवरुणश्च देवासः एते सर्वेदेवाः सर्वयाविशा समस्तेनस्वीयेनपरिजनेन सार्धमिदंबर्हिःसीदन्तु आसीदन्तु ॥ ९ ॥

९. मरुद्गण, देवभिषक् अश्विद्वय, सूर्य, वरुण आदि देव अपने परिजनों के साथ कुश पर उपवेशन करें।

अनस्वन्तेतिषळृचंत्रयोदशंसूक्तं अत्रानुक्रमणिका—अनस्वन्ताषट् त्रैवृष्णपौरुकुत्स्यौद्वौ त्र्यरुणत्रसदस्यूराजानौ भारतश्चाश्वमेधोन्त्यास्तिस्रोनुष्टुभोनात्मात्मनेदध्यादितिसर्वास्वत्रिंके चिदंत्यैन्द्राग्नीइति। त्रिवृष्णस्यपुत्रस्त्र्यरुणः पुरुकुतसस्यपुत्रस्त्रसदस्युः भरतस्यपुत्रोश्वमेधःएतेत्रयोपिराजानः संभूयास्यसूक्तस्यऋषयः यद्वात्रिरेवऋषिः आद्यास्तिस्रस्त्रिष्टुभः चतुर्थ्याद्यास्तिस्रोनुष्टुभःषष्ठीन्द्राग्निदेवत्या शिष्टाःपंचाग्नेय्यः विनियोगोलैङ्गिकः।

तत्रेयंप्रथमा—

अनस्वन्तासत्पतिर्मामहेमेगावाचेतिष्ठोअसुरोमघोनः।
त्रैवृष्णोअग्नेदशभिःसहस्रैर्वैश्वानरत्र्यरुणश्चिकेत ॥ १ ॥

अनस्वन्ता । सत्ऽपतिः । ममहे । मे । गावा । चेतिष्ठः ।
असुरः । मघोनः । त्रैवृष्णः । अग्ने । दशऽभिः । सहस्रैः ।
वैश्वानर । त्रिऽअरुणः । चिकेत ॥ १ ॥

अत्रीराजर्षीणांदानमग्नेःपुरतोनेनसूक्तेनावर्णयत् हेवैश्वानर विश्वेषांनराणांनेतः अग्ने सत्पतिः सतांपालयिताचेतिष्ठोज्ञातृतमः असुरोबलवान् मघोनः मघवाधनवान् प्रथमार्थेङसि त्रैवृष्णः त्रिवृष्णपुत्रः त्र्यरुणःत्र्यरुणइतिनामाराजर्षिः अनस्वन्ता अनस्वन्तौ अनसाशकटेनसंपृक्तौ गावा गावौ अनड्वाहौ गवांहिरण्यानांवादशभिःसहस्रैःसहमेमह्यंममहे ददौ महिदानेसराजर्षिः चिकेत सर्वैर्जनैरनेनदानेनज्ञायते ॥ १ ॥

१. हे मनुष्यों के नेता अग्नि, तुम साधुओं के पालक, ज्ञानसम्पन्न, बलवान् और धनवान् हो। त्रिवृष्ण के पुत्र त्र्यरुण नामक राजर्षि ने शकट-संयुत दो वृषभ और दस सहस्र सुवर्ण मुझे प्रदान करके ख्यातिलाभ किया था अर्थात् उसी दान के कारण सब लोगों ने उन्हें जाना था।

योमेशताचविंशतिंचगोनांहरीचयुक्तासुधुराददाति ।
वैश्वानरसुष्टुतोवावृधानोग्नेयच्छत्र्यरुणायशर्म ॥ २ ॥

यः । मे । शता । च । विंशतिम् । च । गोनाम् । हरी इति । च ।
युक्ता । सुऽधुरा । ददाति । वैश्वानर । सुऽस्तुतः । ववृधानः । अग्ने ।
यच्छ । त्रिऽअरुणाय । शर्म ॥ २ ॥

यस्त्र्यरुणः शता शतानि सुवर्णानांगोनांगवांविंशतिंचयुक्ता रथेनयुक्तौ सुधुरा सुधुरौ सुष्ठुधुरंवहन्तौ हरी अश्वौच मे मह्यं ददाति अददात् हेवैश्वानर अग्ने सुष्टुतः अस्माभिःसम्यक्स्तुतः ववृधानोहविर्भिर्वर्धमानः त्वं तस्मै त्र्यरुणाय शर्म सुखं यच्छ प्रयच्छ ॥ २ ॥

जिस त्र्यरुण ने मुझे सौ सुवर्ण, बीस गौएँ और रथ से युक्त भार वहन करनेवाले दो घोड़े दिये थे, हे वैश्वानर अग्नि, हम लोगों के द्वारा स्तुत होकर और हवि-द्वारा वर्द्धमान होकर तुम उस त्र्यरुण को सुख प्रदान करो।

एवातेअग्नेसुमतिंचकानोनविष्ठायनवमंत्रसदस्युः ।
योमेगिरस्तुविजातस्यपूर्वीर्युक्तेनाभित्र्यरुणोगृणाति ॥ ३ ॥

एव । ते । अग्ने । सुऽमतिम् । चकानः । नविष्ठाय । नवमम् ।
त्रसदस्युः । यः । मे । गिरः । तुविऽजातस्य । पूर्वीः । युक्तेन ।
अभि । त्रिऽअरुणः । गृणाति ॥ ३ ॥

यस्त्र्यरुणः तुविजातस्य बह्वपत्यस्य मे पूर्वीर्बह्वीः गिरः स्तुतीः श्रुत्वाप्रीतःसन् युक्तेनाभियुक्तेनमनसा अभिगृणाति इदंगृहाणेदंगृहाणेतियथामांब्रवीति एव एवं हे-अग्ने नविष्ठाय अत्यन्तंस्तुत्याय ते तुभ्यं नवमं नवतमांसुमतिंस्तुतिंचकानः कामयमान-स्त्रसदस्युरपिइदंगृहाणेदंगृहाणेतिमांप्रार्थितवान् ॥ ३ ॥

३. हे अग्नि, हम बहुत सन्तानवालों की स्तुति से प्रसन्न होकर त्र्यरुण ने जैसे हमें कहा था, "यह ग्रहण करें, यह ग्रहण करें।" हे स्तुतियोग्य अग्नि, वैसे ही तुम्हारी स्तुतिकामना करनेवाले त्रसदस्यु ने भी हमसे प्रार्थना की थी कि "यह ग्रहण करें, यह ग्रहण करें।"

योमइतिप्रवोचत्यश्वमेधायसूरये ।
दददृचासनिंयतेददन्मेधामृतायते ॥ ४ ॥

यः । मे । इति । प्रऽवोचति । अश्वऽमेधाय । सूरये । ददत् ।
ऋचा । सनिम् । यते । ददत् । मेधाम् । ऋतऽयते ॥ ४ ॥

योभिक्षमाणोर्थीसूरयेप्रेरकाय धनानांदात्रेवा अस्मै अश्वमेधाय राजर्षये मे मह्यं देहीति प्रवोचति प्रब्रवीति योश्वमेधंधनानिभिक्षतइत्यर्थः ऋचाग्नेःस्तोत्रेणसहयते आत्मनःसमीपंगच्छ-ते तस्मै अर्थिने अश्वमेधः सनिं धनं ददत् ददाति हेअग्ने ऋतायते यज्ञमिच्छते तस्मै अश्व-मेधायमेधांयज्ञविषयांप्रज्ञां ददत् देहि ॥ ४ ॥

४. हे अग्नि, जब कोई भिक्षाभिलाषी, तुम्हारी स्तुति के साथ, धनदाता राजर्षि अश्वमेध के निकट जाकर कहता है कि "हमें धन दो", तब वे उस याचक को धन देते हैं। हे अग्नि, यज्ञ की इच्छा करनेवाले अश्वमेध को तुम यज्ञ करने की बुद्धि प्रदान करो।

यस्यमापरुषाःशतमुद्धर्षयन्त्युक्षणः ।
अश्वमेधस्यदानाःसोमाइवत्र्याशिरः ॥ ५ ॥

यस्य । मा । परुषाः । शतम् । उत्ऽहर्षयन्ति । उक्षणः ।
अश्वऽमेधस्य । दानाः । सोमाःऽइव । त्रिऽआशिरः ॥ ५ ॥

यस्य येन अश्वमेधस्याश्वमेधेन दानादत्ताःपरुषाःकामानांपूरकाःशतमुक्षणः उक्षाणो-बलीवर्दाः मा मां उद्धर्षयन्ति उत्कर्षेणहर्षयन्ति हेअग्ने ते उक्षाणःत्र्याशिरः दधिसक्तुपयो-रूपास्तिस्रआशिरः अधिश्रयणसाधनभूतायेषांतेत्र्याशिरः सोमाइव तवप्रीणनायभवन्तु ॥५॥

५. राजर्षि अश्वमेध-द्वारा प्रदत्त, अभिलाषाओं के पूरक सौ बैलों ने हमें प्रमुदित किया है। हे अग्नि, दही, सत्तू और दूध आदि तीन द्रव्यों से मिश्रित सोम की तरह वे बैल तुम्हारी प्रीति के लिए हों।

इन्द्राग्नीशतदाव्न्यश्वमेधेसुवीर्यम् ।
क्षत्रंधारयतंबृहद्दिविसूर्यमिवाजरम् ॥ ६ ॥ २१ ॥

इन्द्राग्नी इति । शतऽदाव्नि । अश्वऽमेधे । सुऽवीर्यम् । क्षत्रम् ।
धारयतम् । बृहत् । दिवि । सूर्यम्ऽइव । अजरम् ॥ ६ ॥ २१ ॥

हेइन्द्राग्नी शतदाव्नि शतमपरिमितमर्थिभ्योधनंददातीतिशतदावा तस्मिन्नश्वमेधेराजर्षौ सुवीर्यं शोभनवीर्यसहितं बृहन्महत् अजरं जरारहितं क्षत्रं धनं धारयतं निधारयतं कथमिव दिव्यंतरिक्षे सूर्यमिव ॥ ६ ॥

६. हे इन्द्र और अग्नि, तुम दोनों याचकों के लिए, अपरिमित धन के दाता राजर्षि अश्वमेध को अन्तरिक्ष-स्थित सूर्य की तरह, शोभन बल के साथ (दीप्तिमान्), महान् और जरारहित (अक्षय) धन प्रदान करो।

समिद्धोअग्निरितिषळृचंचतुर्दशंसूक्तं अत्रेयमनुक्रमणिका—समिद्धोविश्ववाराऽत्रेयीत्रिष्टुब्जगतीत्रिष्टुबनुष्टुब्गायत्र्याविति । अत्रिगोत्रोत्पन्नाविश्ववारानामिकाअस्यसूक्तस्यऋषिः आद्यातृतीयेत्रिष्टुभौ द्वितीयाजगती चतुर्थ्यनुष्टुप् अंत्येगायत्र्यौ अग्निर्देवता सूक्तविनियोगोलैंगिकः ।

समिद्धोअग्निर्दिविशोचिरश्रेत्प्रत्यङ्ङुषसमुर्वियाविभाति ।
एतिप्राचीविश्ववारानमोभिर्देवाँईळानाहविषाघृताची ॥ १ ॥

सम्ऽइद्धः । अग्निः । दिवि । शोचिः । अश्रेत् । प्रत्यङ् । उषसम् ।
उर्विया । वि । भाति । एति । प्राची । विश्वऽवारा । नमःऽभिः ।
देवान् । ईळाना । हविषा । घृताची ॥ १ ॥

समिद्धः सम्यक्दीप्तोग्निः दिवि द्योतमानेन्तरिक्षे शोचिस्तेजः अश्रेत् श्रयति तथा उषसं प्रत्यङ्ङुषसमभिमुखःसन् उर्विया उरु विस्तीर्णं विभाति विशेषेणभ्राजते नमोभिः स्तोत्रैः देवान् इन्द्रादीन् ईळाना स्तुवती हविषापुरोडाशादिलक्षणेनयुक्तया घृताची घृताच्या स्रुचा सहिता विश्ववारा सर्वमपिपापरूपंशत्रुंवारयित्री एतन्नामिका प्राची प्राङ्मुखी सती एति एवंभूतमग्निंप्रतिगच्छति ॥ १ ॥

१. भली भाँति से दीप्त अग्नि द्युतिमान् अन्तरिक्ष में तेज को प्रकाशित करते हैं और उषा के अभिमुख विस्तृत होकर विशेष शोभा पाते हैं। इन्द्र आदि देवों का स्तवन करती हुई और पुरोडाश आदि से युक्त स्रुक् को लेकर विश्ववारा पूर्व की ओर मुंह करके अग्नि के अभिमुख गमन करती हैं।

समिध्यमानोअमृतस्यराजसिहविष्कृण्वन्तंसचसेस्वस्तये ।
विश्वंसधत्तेद्रविणंयमिन्वस्यातिथ्यमग्नेनिचधत्तइत्पुरः ॥ २ ॥

सम्ऽइध्यमानः । अमृतस्य । राजसि । हविः । कृण्वन्तम् । सचसे ।
स्वस्तये । विश्वम् । सः । धत्ते । द्रविणम् । यम् । इन्वसि ।
आतिथ्यम् । अग्ने । नि । च । धत्ते । इत् । पुरः ॥ २ ॥

हेअग्ने समिध्यमानः सम्यगिध्यमानस्त्वं अमृतस्योदकस्यराजसि ईशिषे तथा हविष्कृण्वंतंपुरोडाशादिहविष्कर्तारं यजमानं स्वस्तये अविनाशाय सचसेसेवसे किंच यं यजमानं इन्वसि गच्छसि यजमानः विश्वं समस्तं द्रविणं पश्वादिलक्षणंधनं धत्ते धारयति अपिच हेअग्ने आतिथ्यं अतिथिरूपस्यतव योग्यं हविः पुरइत् पुरस्तादेवनिधत्तेच स्थापयतिच ॥ २ ॥

२. हे अग्नि, तुम भली भाँति से प्रज्वलित होकर उदक के ऊपर प्रभुत्व करते हो और हव्यदाता यजमान-द्वारा, मङ्गलार्थ, सेवित होते हो। तुम जिस यजमान के निकट गमन करते हो, वह पशु आदि समस्त धन को धारण करता है। हे अग्नि, तुम्हारे आतिथ्य-योग्य हव्य को वह यजमान तुम्हारे सम्मुख स्थापित करता है।

पवित्रेष्टयांस्विष्टकृतोग्नेशर्धेतियाज्या सूत्र्यतेहि—जुष्टोदमूनाअग्नेशर्धमहतेसौभगायेति संयाज्येइति । साकमेधेषुमरुद्भ्यःक्रीडिभ्यःपुरोडाशंसप्तकपालंइत्यत्राप्येषैवस्विष्टकृतोयाज्या सूत्रितंच—जुष्टोदमूनाअग्नेशर्धमहतेसौभगायेतिसंयाज्येइति ।

अग्नेशर्धमहतेसौभगायतवद्युम्नान्युत्तमानिसन्तु ।
संजास्पत्यंसुयममाकृणुष्वशत्रूयतामभितिष्ठामहांसि ॥ ३ ॥

अग्ने । शर्ध । महते । सौभगाय । तव । द्युम्नानि । उत्ऽतमानि ।
सन्तु । सम् । जाःऽपत्यम् । सुऽयमम् । आ । कृणुष्व । शत्रुऽयताम् ।
अभि । तिष्ठ । महांसि ॥ ३ ॥

हेअग्ने त्वं महते प्रभूताय सौभगाय अस्माकं शोभनधनत्वाय शर्ध शत्रून्सहस्व तथा तवसंबन्धीनिद्युम्नानिधनानितेजांसिवा उत्तमान्युत्कृष्टानिसन्तु भवन्तु किंच हेअग्ने संजास्पत्यं जाः जायाचपतिश्चजायापती तयोःकर्मजास्पत्यम् तत्सुयमं सुष्ठु नियमनोपेतं अन्योन्यसंश्लिष्टमित्यर्थः समाकृणुष्व सम्यक्कुरुष्व अपिच शत्रूयतां शत्रुमात्मनइच्छतां सपत्नानां महांसितेजांसिअभितिष्ठ आक्रमस्व ॥ ३ ॥

३. हे अग्नि, तुम हम लोगों के प्रभूत ऐश्वर्य के लिए और शोभन धन के लिए शत्रुओं को दमन करो। तुम्हारे धन या तेज उत्कृष्ट हों। हे अग्नि, तुम दाम्पत्य कार्य को, अच्छी तरह से, सुनियमित करो और शत्रुओं के तेज को आक्रान्त करो।

समिद्धस्यप्रमहसोग्नेवन्देतवश्रियम् ।
वृषभोद्युम्नवाँअसिसमध्वरेष्विध्यसे ॥ ४ ॥

सम्ऽइद्धस्य । प्रऽमहसः । अग्ने । वन्दे । तव । श्रियम् । वृषभः । द्युम्नऽवान् । असि । सम् । अध्वरेषु । इध्यसे ॥ ४ ॥

हेअग्ने समिद्धस्य प्रवृद्धस्य प्रमहसः प्रकृष्टतेजसस्तवसंबन्धिनींश्रियंदीप्तिंवन्दे अहं यजमानःस्तौमि वृषभः कामानांवर्षिता त्वं द्युम्नवानसि धनवान्भवसि अध्वरेषयज्ञेषुसमिध्यसे सम्यक्दीप्यसे ॥ ४ ॥

४. हे अग्नि, जब तुम प्रज्वलित और दीप्तिमान् होते हो, तब हम यजमान तुम्हारी दीप्ति का स्तवन करते हैं। तुम कामनाओं के पूरक, धनवान् और यज्ञस्थल में भली भाँति से दीप्त होते हो।

दर्शपूर्णमासयोःसमिद्धोअग्नआहुतेतिद्वेसामिधेन्यौ सूत्रितंच–समिद्धोअग्नआहुतेति-द्वेइति ।

समिद्धोअग्नआहुतदेवान्यक्षिस्वध्वर । त्वंहिहव्यवाळसि ॥ ५ ॥

सम्ऽइद्धः । अग्ने । आऽहुत । देवान् । यक्षि । सुऽअध्वर । त्वम् । हि । हव्यऽवाट् । असि ॥ ५ ॥

हेआहुत यजमानैरासमन्ताद्धुत हेस्वध्वर शोभनयज्ञोपेत हेअग्ने समिद्धः सम्यग्दी-प्तस्त्वं देवान् द्योतमानानिन्द्रादीन् यक्षि यजस्व हियस्मात्कारणात् हेअग्ने त्वंहव्यवाडसि हव्यानांवोढाभवसि अतःकारणाद्देवान्यजस्वेतिसंबंधः ॥ ५ ॥

५. हे अग्नि; हे यजमानों-द्वारा आहूत, हे शोभन यज्ञवाले, भली भाँति से दीप्त होकर तुम इन्द्र आदि देवों का यजन करो; क्योंकि तुम हव्य का वहन करते हो अथषष्ठी–

आजुहोतादुवस्यताग्निंप्रयत्यध्वरे । वृणीध्वंहव्यवाहनम् ॥ ६ ॥ २२ ॥

आ । जुहोत । दुवस्यत । अग्निम् । प्रऽयति । अध्वरे । वृणीध्वम् । हव्यऽवाहनम् ॥ ६ ॥ २२ ॥

हेऋत्विजोयूयं अध्वरे अस्मदीयेयागे प्रयति प्रवृत्तेसति हव्यवाहनं हविषांवोढारं एतन्नामकमग्निं आजुहोत आसमंताज्जुहोत तथा दुवस्यत परिचरत वृणीध्वंसंभजध्वंच हव्यवा-हनंहव्यवाहननामकस्यैवाग्नेर्देवतासंबन्धोयजमानैर्वरणीयत्वंचतैत्तिरीयेस्पष्टमाम्नातं–वृणोआअ-

भयोहव्यवाहनोदेवानांकव्यवाहनःपितॄणांसहरक्षाअसुराणांतएतर्ह्यांशंसंतेमांवरिष्यतेमामिति । वृणीध्वंहव्यवाहनमित्याहयएवदेवानांतंवृणीतइति ॥ ६ ॥

६. हे ऋत्विको, तुम लोग हमारे यज्ञ में प्रवृत्त होकर हव्यवाहक अग्नि में हवन करो और उनका परिचरण तथा सम्भजन करो एवम् देवों के निकट हव्यवहनार्थ उनका वरण करो।

॥ इतिचतुर्थस्यप्रथमेद्वाविंशोवर्गः ॥ २२ ॥

त्र्यर्यमेतिपंचदशर्चंपंचदशंसूक्तं अत्रानुक्रमणिका—त्र्यर्यमापंचोनागौरिवीतिःशाक्त्य-ऐन्द्रमुशनायदौशनसौवापादइति ।शक्तिगोत्रोत्पन्नोगौरिवीतिर्नामऋषिः अनुक्तत्वात्त्रिष्टुप् इन्द्रो-देवता मंडलादिपरिभाषयानिवृत्तत्वात्उशनायत्सहस्यैरितिपादऔशनसः ऐन्द्रोवा आभिप्लवि-केतृतीयेहनिमरुत्वतीयेएतन्निविद्धानं सूत्रितंच—तृतीयस्यत्र्यर्यमायोजातएवेतिमाध्यंदिनइति ।

त्र्य॑र्य॒मा मनु॑षो दे॒वता॑ता॒ त्री रो॑च॒ना दि॒व्या धा॒रय॑न्त ।
अर्च॑न्ति त्वा म॒रुतः॑ पू॒तद॑क्षा॒स्त्वमे॑षा॒मृषि॑रिन्द्रासि॒ धीरः॑ ॥ १ ॥

त्री । अ॒र्य॒मा । मनु॑षः । दे॒वऽता॑ता । त्री । रो॒च॒ना । दि॒व्या ।
धा॒रय॑न्त॒ । अर्च॑न्ति । त्वा॒ । म॒रुतः॑ । पू॒तऽद॑क्षाः । त्वम् । ए॒षा॒म् ।
ऋषिः॑ । इ॒न्द्र॒ । अ॒सि॒ । धीरः॑ ॥ १ ॥

मनुषोमनोःसंबंधिनिदेवताता देवताती यज्ञे त्री त्रीणि अर्यमा अर्यमाणि यानितेजांसि सन्ति तथा त्री त्रीणि रोचना रोचनानि वाय्वग्निसूर्यात्मकानि दिव्या दिव्यान्यंतरिक्षेभवा-नि तानि तेजांसि धारयन्त मरुतोधारयन्ति पूतदक्षाः शुद्धबलामरुतः त्वा त्वां अर्चन्ति स्तुवन्ति हेइन्द्र धीरः धीमांस्त्वं एषांमरुतांऋषिरसि द्रष्टाभवसि ॥ १ ॥

१. मनु-सम्बन्धी यज्ञ में जो तीन तेज हैं तथा अन्तरिक्ष में उत्पन्न होनेवाले जो रोचमान वायु, अग्नि और सूर्यात्मक तेज हैं, उनको मरुतों ने धारण किया है। हे इन्द्र, शुद्ध बलवाले मरुद्गण तुम्हारी स्तुति करते हैं। तुम बुद्धिमान् हो, इन मरुतों को देखो।

अनु॒ यदी॑म्म॒रुतो॑ मन्द॒सा॒नमार्च॒न्निन्द्रं॑ पपि॒वांसं॑ सु॒तस्य॑ ।
आद॑त्त॒ वज्र॑म॒भि यदहिं॒ हन्न॒पो य॒ह्वीर॑सृज॒त्सर्त॒वा उ॑ ॥ २ ॥

अनु॑ । यत् । ई॒म् । म॒रुतः॑ । म॒न्द॒सा॒नम् । आर्च॑न् । इन्द्र॑म् ।
प॒पि॒ऽवांस॑म् । सु॒तस्य॑ । आ । अ॒द॒त्त॒ । वज्र॑म् । अ॒भि । यत् ।
अहि॑म् । हन् । अ॒पः । य॒ह्वीः । अ॒सृ॒ज॒त् । सर्त॒वै । ऊँ इति॑ ॥ २ ॥

---

१ तै० सं० २. ५. ८. ।

यचदामरुतः मन्दसानं तृप्यन्तं सुतस्याभिषुतंसोमं पपिवांसं पीतवन्तं ईमेनमिन्द्रं अन्वार्चन् अन्वस्तुवन् तदेन्द्रः वज्रमादत्त आददौ ततोयचदाअहिंवृत्रंअहिहन् अम्यहन् अभिहतवान् तदायह्वीर्महतीरपः वृत्रेणनिरुद्धान्युदकानि सर्तवै स्वैरत्वेनसर्तुंगन्तुंअसृजत् निरोधाद्यामुंचत् ॥ २ ॥

२. जब मरुतों ने अभिषुत सोमरस के पान से तृप्त इन्द्र की स्तुति की, तब इन्द्र ने वज्र ग्रहण किया और वृत्र को मारा एवम् वृत्रनिरुद्ध महान् जल-राशि को, स्वेच्छानुसार से, बहने के लिए मुक्त किया।

उतब्रह्माणोमरुतोमेअस्येन्द्रःसोमस्यसुषुतस्यपेयाः।
तद्धिहव्यंमनुषेगाअविन्ददहन्नहिंपपिवाँइन्द्रोअस्य ॥ ३ ॥

उत। ब्रह्माणः। मरुतः। मे। अस्य। इन्द्रः। सोमस्य।
सुऽसुतस्य। पेयाः। तत्। हि। हव्यम्। मनुषे। गाः। अविन्दत्।
अहन्। अहिम्। पपिऽवान्। इन्द्रः। अस्य ॥ ३ ॥

उतापिच हेब्रह्माणोबृहन्तोहेमरुतोयूयमिन्द्रश्च सुसुतस्य सुष्ठुअभिषुतस्य मे मदीयस्यास्य सोमस्य इमंसोमं द्वितीयार्थेषष्ठी पेयाः पिबत पिबतेराशीर्लिङिमध्यमबहुवचनस्यैकवचनं तद्धि तत्खलु हव्यं युष्माभिःपीतंसोमात्मकंहविः मनुषे मनुष्याय यजमानाय गाः धेनूः वृष्टिलक्षणान्युदकानि वा अविन्दत् वेदयति यजमानंगालंभयतीत्यर्थः किंचास्येमंसोमंपपिवान्पीतवानिन्द्रः अहिंवृत्रं अहन् अवधीत् ॥ ३ ॥

३. हे बृहत् मरुतो, तुम सब और इन्द्र भली भाँति से हमारे इस अभिषुत सोमरस का पान करो। तुम लोगों के द्वारा यह सोमात्मक हव्य पिया जाय, जिससे मनुष्य यजमान गौओं को प्राप्त करे। इस सोमरस को पीकर इन्द्र ने वृत्र को मारा था।

आद्रोदसीवितरंविष्कभायत्संविव्यानश्चिद्भियसेमृगंकः।
जिगर्तिमिन्द्रोअपजर्गुराणःप्रतिश्वसन्तमवदानवंहन् ॥ ४ ॥

आत्। रोदसी इति। विऽतरम्। वि। स्कभायत्। सम्ऽविव्यानः।
चित्। भियसे। मृगम्। करिति कः। जिगर्तिम्। इन्द्रः।
अपऽजर्गुराणः। प्रति। श्वसन्तम्। अव। दानवम्। हन्निति हन् ॥ ४ ॥

इन्द्रः परमैश्वर्ययुक्तः आत् सोमपानानंतरं रोदसी द्यावापृथिव्यौ वितरमतिशयेन अमुचछन्दसीतिविस्तरपिकृते अमुप्रत्ययः विष्कभायत् व्यस्तभात् चलनरहिते अकरोत् संविव्यानश्चित् संवृण्वानः संगच्छमानोवेन्द्रः व्ययतेर्वासंवरणकर्मणोवेतेर्वागतिकर्मणोरूपं चिदित्येवेत्यस्यार्थेवर्तते मृगं मृगवत्पलायमानं वृत्रं भियसे भयाय कःअकार्षीत् करोतेर्लुङि मंत्रेघसह्वरे-

त्यादिनाच्लेर्लोपः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः इन्द्रः जिगर्ति गिरंतमाच्छादयन्तं श्वसंतं भयार्थंश्वासं अकुर्वन्तं दानवं दनोःपुत्रं वृत्रं अपजगुंराणः आच्छादनाद्विमोचयन् प्रति प्रतिगत्य अवहन् अवहतवान् ॥ ४ ॥

४. सोमपान के अनन्तर इन्द्र ने द्यावा-पृथिवी को निश्चल किया था। गमनशील होकर इन्द्र ने मृगवत् पलायमान वृत्र को भयभीत किया था। दनुपुत्र (वृत्र) छिप रहा था और भय से श्वास ले रहा था। इन्द्र ने उसे आच्छादनविहीन करके मारा था।

अधक्रत्वांमघवन्तुभ्यंदेवाअनुविश्वेअददुःसोमपेयम् ।
यत्सूर्यस्यहरितःपतन्तीःपुरःसतीरुपराएतशेकः ॥ ५ ॥ २३ ॥

अर्ध । क्रत्वा । मघऽवन् । तुभ्यम् । देवाः । अनु । विश्वे । अददुः ।
सोमऽपेयम् । यत् । सूर्यस्य । हरितः । पतन्तीः । पुरः । सतीः ।
उपराः । एतशे । करिति । कः ॥ ५ ॥ २३ ॥

अधापिच हेमघवन् धनवन्निन्द्र क्रत्वा क्रतुना त्वदीयेनकर्मणा विश्वे सर्वे देवाः द्योतमानावह्न्यादयः तुभ्यं त्वदर्थं सोमपेयं सोमपानं अन्वददुः आनुपूर्व्येणदत्तवन्तः ततःप्रभृतीन्द्रोदेवेभ्यः सर्वेभ्योधिकोभवदित्यर्थः तथाचश्रूयते—समहान्भूत्वादेवताअब्रवीदुद्धारंमउद्धरतेत्यादि । हेइन्द्र यत् यस्त्वं पतन्तीरागच्छन्तीःपुरःसतीःपुरस्ताद्भवतीः सूर्यस्यसंबन्धिनीः हरितोवडवाः उपराउपरतीः मंदगतीःएतशे एतशाख्यायऋषये अकःअकार्षीत् एतशोहि स्वभावेनसूर्येणसहस्पर्धामकरोदितियावत् तथाचनिगमांतरे—प्रैतशंसूर्येपस्पृधानंसौवश्व्येसुष्विमावदिन्द्रइति ॥ ५ ॥

५. हे धनवान् इन्द्र, तुम्हारे इस कर्म से वह्नि आदि निखिल देवों ने तुम्हें अनुक्रम से सोमरस, पान के लिए, दिया था। तुमने एतश के लिए सम्मुखवर्ती सूर्य के अश्वों का गतिरोध किया था।

नवयदस्यनवतिंचभोगान्त्साकंवज्रेणमघवाविवृश्चत् ।
अर्चन्तीन्द्रंमरुतःसधस्थेत्रैष्टुभेनवचसाबाधतद्याम् ॥ ६ ॥

नव । यत् । अस्य । नवतिम् । च । भोगान् । साकम् । वज्रेण ।
मघऽवा । विऽवृश्चत् । अर्चन्ति । इन्द्रम् । मरुतः । सधऽस्थे ।
त्रैस्तुभेन । वचसा । बाधत । द्याम् ॥ ६ ॥

१ ऐ० ब्रा० ३. २१. १ २ ऋ० सं० १. ४. २९. १

यद्यदा मघवा धनवानिन्द्रः अस्येत्यनेनशंबरउच्यते अस्यशंबरस्यसंबन्धीनि नव-नवसंख्याकानि नवतिंच नवतिसंख्याकानिच भोगान् पुराणि भोगानित्यन्तोदात्तः पुर-वचनः साकं युगपदेव वज्रेण विवृश्चत् व्यवृश्चत् अभिनत् तदामरुतःसधस्थे सह-स्थाने युद्धेवा स्थितमिन्द्रं त्रैष्टुभेन त्रिष्टुप्छन्दस्केनवचसा वाग्रूपेण स्तोत्रेणार्चन्ति अ-स्तुवन् इन्द्रः एवंस्तुतःसन् यां मरुद्भिःप्रयज्यमानेनमंत्रेणदीप्तंशंबराख्यमसुरं बाधताबाध-त पिपीडे ॥ ६ ॥

६. जब धनवान् इन्द्र ने वज्र-द्वारा शम्बर के ९९ नगरों को एक काल में ही विनष्ट किया था, तब मरुतों ने संग्राम-भूमि में ही इन्द्र की स्तुति, त्रिष्टुप् छन्द में, की थी। इस तरह से मरुतों के मन्त्रों-द्वारा स्तुत होने पर दीप्त इन्द्र ने शम्बर असुर को पीड़ित किया था।

सखा सख्ये अपचत्तूयमग्निरस्य क्रत्वा महिषा त्री शतानि ।
त्री साकमिन्द्रो मनुषः सरांसि सुतं पिबद्वृत्रहत्याय सोमम् ॥ ७ ॥

सखा । सख्ये । अपचत् । तूयम् । अग्निः । अस्य । क्रत्वा ।
महिषा । त्री । शतानि । त्री । साकम् । इन्द्रः । मनुषः । सरांसि ।
सुतम् । पिबत् । वृत्रऽहत्याय । सोमम् ॥ ७ ॥

सखा इन्द्रस्यमित्रभूतोऽग्निः महिषा महिषाणांपशूनां त्री त्रीणि शतानि शतसं-ख्याकानि सख्ये सख्युर्मित्रभूतस्यास्येन्द्रस्य क्रत्वा कर्मणा निमित्तभूतेन तूयं क्षिप्रं अपचत् पपाच किंच इन्द्रःपरमैश्वर्ययुक्तःमनुषोमनोःसंबंधीनि त्री त्रीणिसरांसि पात्राणि अत्रसरस्शब्देन पूतभृदाधवनीयद्रोणकलशसंज्ञानिपात्राण्युच्यन्ते तेषुस्थितंसुतम भिषुतंसोमंसाकं युगपदेव वृत्रहत्याय वृत्रहननाय पिबदपिबत् पपौ ॥ ७ ॥

७. इन्द्र के मित्रभूत अग्नि ने मित्र इन्द्र के कार्य के लिए सौ महिषों को शीघ्र ही पकाया था। परमैश्वर्ययुक्त इन्द्र ने वृत्र को मारने के लिए मनु-सम्बन्धी तीन पात्रों में स्थित सोमरस को एक काल में ही पिया था।

त्री यच्छता महिषाणामघो मास्त्री सरांसि मघवा सोम्यापाः ।
कारं न विश्वे अह्वन्त देवा भरमिन्द्राय यदहिं जघान ॥ ८ ॥

त्री । यत् । शता । महिषाणाम् । अघः । माः । त्री । सरांसि ।
मघऽवा । सोम्या । आपाः । कारम् । न । विश्वे । अह्वन्त ।
देवाः । भरम् । इन्द्राय । यत् । अहिम् । जघान ॥ ८ ॥

हेइन्द्र त्वं यद्यदा त्री त्रयाणांशता शतसंख्याकानांमहिषाणांपशूनांमाः मांसानि

अथ:भक्षितवानसि घसेरत्तेर्वारूपं यदाच मघवाधनवांस्त्वं सोम्या सोममयानि त्री त्रीणि सरांसि पात्राणि अपाः पीतवानसि यद्यदाइन्द्रोहिंवृत्रं जघान हतवान् तदाविश्वेसर्वेदेवाः भरं सोमपानादिनापूर्णं इन्द्रायेन्द्रं युद्धार्थं अह्वंत आह्वयंत तत्रदृष्टान्तः—कारंन स्वामिनःकर्मकरमिव तद्वत् ॥ ८ ॥

८. हे इन्द्र, जब तुमने तीन सौ महिषों के मांस का भक्षण किया था, धनवान् होकर जब तुमने तीन पात्रों में स्थित सोमरस का पान किया था, जब तुमने वृत्र का वध किया था, तब सब देवों ने युद्ध के लिए सोमपान से पूर्ण इन्द्र का आह्वान किया था, जैसे स्वामी दास का आह्वान करते हैं।

उशनसःस्तोमेउशनायत्सहस्यैरितिमरुत्वतीयेसूक्तमुखीया सूत्रितंच—उशनसःस्तोमें नगरगीर्णमिवात्मानंमन्यमानोयजेतोशनायत्सहस्यैरयातमिति ।

उशनायत्संहस्यै३रयातंगृहमिन्द्रजूजुवानेभिरश्वैः ।
वन्वानोअत्रंसरथंययाथकुत्सेनदेवैरवनोर्हशुष्णम् ॥ ९ ॥

उशना । यत् । सहस्यैः । अयातम् । गृहम् । इन्द्र । जूजुवानेभिः । अश्वैः । वन्वानः । अत्र । सऽरथम् । ययाथ । कुत्सेन । देवैः । अवनोः । ह । शुष्णम् ॥ ९ ॥

यद्यदा हेइन्द्र त्वं उशनाकाव्यश्च सहस्यैरभिभवनशीलैःजूजुवानेभिः जूजुवानैर्गच्छद्भिः अश्वैः कुत्सस्यगृहं अयातं अगच्छतं तदा हेइन्द्र त्वं अस्मिन्काले वन्वानः शत्रून्हिंसन् कुत्सेन देवैश्चसह सरथं समानमेकंरथं ययाथ जगन्थ किंच शुष्णमेतन्नामानमसुरं अवनोर्ह अहिंसीःखलु ॥ ९ ॥

९. हे इन्द्र, तुम और कवि (उशना) जब अभिभवनशील एवम् द्रुतगामी अश्वों के साथ कुत्स के गृह में उपस्थित हुए थे, तब तुमने शत्रुओं को हिंसित करके कुत्स और देवों के साथ एक रथ पर आरूढ़ हुए थे। हे इन्द्र, शुष्ण नामक असुर को तुमने ही मारा है।

प्रान्यच्चक्रमवृहःसूर्यस्यकुत्सायान्यद्वरिवोयातवेकः ।
अनासोदस्यूँरमृणोवधेननिर्दुर्योणआवृणङ्मृध्रवाचः ॥ १० ॥ २४ ॥

प्र । अन्यत् । चक्रम् । अवृहः । सूर्यस्य । कुत्साय । अन्यत् । वरिवः । यातवे । अकरित्यकः । अनासः । दस्यून् । अमृणः । वधेन । नि । दुर्योणे । अवृणक् । मृध्रऽवाचः ॥ १० ॥ २४ ॥

हेइन्द्र पूर्वं द्विचक्रस्यसूर्यस्य अन्यदेकंचक्रं प्रावृहः पृथक्चकर्थ अन्यदेकंचक्रं कुत्साय कुत्सस्यवरिवोधनं यातवे प्राप्तुं अकः अकार्षीः किंच अनासः आस्यरहितान् आस्यशब्देनशब्दोलक्ष्यते अशब्दान् मूकान् दस्यून् असुरान् वधेनायुधेनवज्रेण अमृणः अहिंसीः दुर्योणे संग्रामे मृध्रवाचः हिंसितवागिन्द्रियानसुरान् न्यवृणक् नितरांछिन्नवानसि अमृणोन्यवृणगितिद्विरुक्तिरादरार्था ॥ १० ॥

१०. हे इन्द्र, पहले ही तुमने सूर्य के दो चक्कों में से एक चक्के को पृथक् किया था एवम् दूसरे एक चक्के को तुमने धन-लाभ के लिए कुत्स को दिया था। तुमने शब्द-रहति असुरों को हतबुद्धि करके वज्र-द्वारा सग्राम में मारा था।

स्तोमासस्त्वागौरिवीतेरवर्धन्नरंन्धयोवैदथिनायपिप्रुम् ॥ ॥
आत्वामृजिश्वासख्यायचक्रेपचन्पक्तीरपिबःसोममस्य ॥ ११ ॥

स्तोमासः । त्वा । गौरिऽवीतेः । अवर्धन् । अरंन्धयः । वैदथिनाय ।
पिप्रुम् । आ । त्वाम् । ऋजिश्वा । सख्याय । चक्रे । पचन् ।
पक्तीः । अपिबः । सोमम् । अस्य ॥ ११ ॥

हेइन्द्र गौरिवीतेः एतन्नामकस्यमंत्रद्रष्टुर्ममसंबन्धीनिस्तोमासःस्तोत्राणि त्वा त्वां अवर्धन् वर्धयन्तु वैदथिनाय विदथिनःपुत्राय ऋजिश्वनाम्ने पिप्रुंएतन्नामकमसुरं अरंधयः वशमनयः हेइन्द्र ऋजिश्वनामाकश्चिदृषिः सख्याय तवसखित्वाय पक्तीःपक्तव्यानि पुरोडाशादीनि पचन् पाकं कुर्वन् त्वा त्वां आचक्रे अभिमुखीचकार किंच त्वं अस्य ऋजिश्वनः संबन्धिनं सोमं अपिबः अपाः ॥ ११ ॥

११. हे इन्द्र, गौरिवीति ऋषि के स्तोत्र तुम्हें वर्द्धित करें। तुमने विदथिपुत्र ऋजिश्वा के लिए पिप्रु नामक असुर को वशीभूत किया था। ऋजिश्वा नामवाले किसी ऋषि ने तुम्हारी सखिता के लिए पुरोडाश आदि को पकाकर तुम्हें अभिमुख किया था। तुमने ऋजिश्वा के सोम का पान किया था।

दशपेयेहनिमरुत्वतीयशस्त्रेनवग्वासइतिसूक्तमुखीया सूत्रितंच—नवग्वासःसुतसोमासइन्द्रंसखाहयत्रसखिभिर्नवग्वैरितिनिविद्धानयोराज्येइति ।

नवंग्वासःसुतसोमासइन्द्रंदशंग्वासोअभ्यर्चन्त्यर्कैः ।
गव्यंचिदूर्वमंपिधानवन्तंतंचिन्नरःशशमानाअपंव्रन् ॥ १२ ॥

नवंऽग्वासः । सुतऽसोमासः । इन्द्रम् । दशंऽग्वासः । अभि । अर्चन्ति ।
अर्कैः । गव्यम् । चित् । ऊर्वम् । अपिधानंऽवन्तम् । तम् । चित् ।
नरः । शशमानाः । अपं । व्रन् ॥ १२ ॥

नवग्वासः सत्रयागमनुतिष्ठन्तोयेनवभिर्मासैःसमाप्यगताः तेनवग्वाः दशभिर्मासैःसमाप्ययेगतास्तेदशग्वाः एतेउभयविधाअंगिरसः सुतसोमासः अभिषुतसोमाःसन्तः इन्द्रमर्कैरर्चनीयैःस्तोत्रैरभ्यर्चन्ति अभिष्टुवन्ति तथा शंशमानाः स्तुवन्तः नरोनेतारोंगिरसः अपिधानवन्तं बलेनासुरेणाच्छादितवन्तं तंचित् बहुषुप्रदेशेषुप्रसिद्धमपि गव्यंचित् गोसंबंधिनमपि ऊर्वं समूहं अपव्रन् अपावृण्वन् ॥ १२ ॥

१२. नौ महीनों में समाप्त होनेवाले और दस महीनों में समाप्त होनेवाले यज्ञ को करनेवाले अङ्गिरा लोग सोमाभिषव करके अर्चनीय स्तोत्रों-द्वारा इन्द्र की स्तुति करते हैं। स्तुति करनेवाले अङ्गिरा लोगों ने असुरों-द्वारा आच्छादित गो-समूह को उन्मुक्त किया था।

परिक्रीनाम्येकाहेमरुत्वतीयनिष्केवल्ययोःसूक्तमुखीये कथोनुतइत्याद्येद्वेऋचौ सूत्रितंच—कथोनतेपरिचराणिविद्वानितिद्वेइति।

कथोनुतेपरिचराणिविद्वान्वीर्यामघवन्याचकर्थ।
याचोनुनव्याकृणवःशविष्ठप्रेदुतातेविदथेषुब्रवाम ॥ १३ ॥

कथो इति। नु। ते। परि। चराणि। विद्वान्। वीर्या। मघऽवन्।
या। चकर्थ। या। चो इति। नु। नव्या। कृणवः। शविष्ठ। प्र।
इत्। ऊँ इति। ता। ते। विदथेषु। ब्रवाम ॥१३॥

हेमघवन् धनवन्निन्द्र त्वं या यानि वीर्या वीर्याणि चकर्थ चकृषे अहं तानि वीर्याणि विद्वान् जानन् ते तुभ्यं कथोनु कथंनु परिचराणि परिचर्यांकरवाणि हेशविष्ठ बलवत्तमेन्द्र याचो यानिचैव नव्या नव्यानि नूतनानि वीर्याणि नु क्षिप्रं कृणवः कुर्याः ते त्वदीयानि ता तानि वीर्याणि विदथेषु यज्ञेषु प्रेदु ब्रवाम प्रैववदाम ॥ १३ ॥

१३. हे धनवान् इन्द्र, तुमने जिस वीर्य (पराक्रम) को प्रकट किया था, हम उसको जानते हुए भी किस प्रकार से तुम्हारे लिए प्रकट करें—क्योंकर स्तवन करें? हे बलवान् इन्द्र, तुम जिस नूतन वीर्य (पराक्रम) को प्रकट करोगे, हम यज्ञ में तुम्हारे उस वीर्य का कीर्तन करेंगे।

एताविश्वाचकृवाँइन्द्रभूर्यपरीतोजनुषावीर्येण।
याचिन्नुवज्रिन्कृणवोदधृष्वान्नतेवर्तातविष्याअस्तितस्याः ॥ १४ ॥

एता। विश्वा। चकृऽवान्। इन्द्र। भूरि। अपरिऽइतः। जनुषा।
वीर्येण। या। चित्। नु। वज्रिन्। कृणवः। दधृष्वान्। न। ते।
वर्ता। तविष्याः। अस्ति। तस्याः ॥ १४ ॥

हेइन्द्र अपरीतः शत्रुभिरपरिगतस्त्वं जनुषा जननसिद्धेनात्मीयेनवीर्येणवलेनभूरि भूरीणि बहूनिएता एतानि प्रत्यक्षेणोपलभ्यमानानि विश्वा विश्वानि व्याप्तानि भुवनजातानि चकृवान् कृतवान् हेवज्रिन् वज्रवन्निन्द्र दधृष्वान् सपत्नान् धर्षयंस्त्वं नुक्षिप्रं याचिद् यानिच विश्वानि कृणवः कुर्याः तेत्वदीयस्यतस्यास्तविष्याः तस्यवलस्यवर्ता निवारयिता नकोप्यस्ति ॥ १४ ॥

१४. हे इन्द्र, तुम शत्रुओं-द्वारा दुर्द्धर्ष्य हो। तुमने अपने प्रकृत बल से प्रत्यक्ष दृश्यमान बहुतेरे भुवनजाल को किया है। हे वज्रधर, शत्रुओं को शीघ्र ही विनष्ट करते हुए तुम जो कुछ करते हो, तुम्हारे उस बल या कर्म का निवारण कोई भी नहीं कर सकता है।

इन्द्र॒ब्रह्म॑क्रि॒यमा॑णाजुषस्व॒यातेश॑विष्ठ॒नव्या॒अक॑र्म।
वस्त्रे॑वभ॒द्रासुकृ॑तावसू॒यूरथं॒नधीरः॒स्वपा॑अतक्षम् ॥ १५ ॥ २५ ॥

इन्द्र॑। ब्रह्म॑। क्रि॒यमा॑णा। जु॒ष॒स्व॒। या। ते॒। श॒वि॒ष्ठ॒। नव्याः॑। अक॑र्म। वस्त्रा॑ऽइव। भ॒द्रा। सुऽकृ॑ता। व॒सु॒ऽयुः। रथ॑म्। न। धीरः॑। सुऽअपाः॑। अ॒त॒क्ष॒म् ॥ १५ ॥ २५ ॥

हेशविष्ठ बलवत्तम शूरतमवेन्द्र ते तुभ्यं या यानि स्तोत्राणि नव्याःनूतनाः अद्यतनावयं अकर्म अकुर्म हेइन्द्र त्वं क्रियमाणा अस्माभिः क्रियमाणानि ब्रह्म ब्रह्माणि तानि स्तोत्राणि जुषस्व सेवस्व धीरोधीमान् स्वपाःशोभनकर्मा वसूयुर्धनकामोहं वस्त्रेव वस्त्राणीव भद्रा भद्राणि भजनीयानि सुकृता सुष्ठुकृतानि स्तोत्राणि रथंन रथमिव अतक्षं अकरवं स्तोत्राण्युपसंहारवद्भ्राह्माणीत्यभिप्रायेण वस्त्रनिदर्शनमुक्तं रथदृष्टान्तस्तु आगमनसाधनत्वप्रतिपादनाय स्तोत्राणिस्वीकृत्यमह्यंधनंप्रयच्छेत्यर्थः ॥ १५ ॥

१५. हे अतिशय बलवान् इन्द्र, हम लोगों ने आज तुम्हारे लिए जिन नूतन स्तोत्रों को रचा है, हम लोगों-द्वारा विहित उन सकल स्तोत्रों को तुम ग्रहण करो। हम धीमान्, शोभन कर्म करनेवाले और धनाभिलाषी हैं। इन भजनीय स्तोत्रों को हम वस्त्र और रथ की तरह तुम्हें अर्पित करते हैं।

॥ इतिचतुर्थस्यप्रथमेपंचविंशोवर्गः ॥ २५ ॥

कस्यवीरइतिपंचदशर्चंषोडशंसूक्तं अत्रानुक्रमणिका—कस्यबभ्रुर्ऋणंचयोप्यत्रराजास्तुतइति। बभ्रुर्ऋषिः अनुक्तत्वात्त्रिष्टुप् इन्द्रोदेवता ऋणंचयनामराजापिक्वचित्स्तूयते अतःसोपिदेवता तीव्रसोमाख्येएकाहेमरुत्वतीयशस्त्रेइदंसूक्तंनिविद्धानं सूत्रितंच—तीव्रसोमेनात्राद्यकामःकस्यवीरइति।

क॑१स्यवी॒रःकोअ॑पश्य॒दिन्द्रं॑सु॒खर॑थ॒मीय॑मानं॒हरि॑भ्याम्।
योरा॒याव॒ज्रीसु॒तसो॑ममि॒च्छन्तदोको॒गन्ता॑पुरुहूतऊ॒ती ॥ १ ॥
कः॑। स्यः। वी॒रः। कः। अ॒प॒श्य॒त्। इन्द्र॑म्। सु॒ख॒ऽर॑थम्।
ईय॑मानम्। हरि॑ऽभ्याम्। यः। रा॒या। व॒ज्री। सु॒तऽसो॑मम्।
इ॒च्छन्। तत्। ओकः॑। गन्ता॑। पु॒रु॒ऽहू॒तः। ऊ॒ती ॥ १ ॥

वज्री वज्रवान्पुरुहूतोबहुभिराहूतोयइन्द्रः राया देयेनधनेनसहसुतसोममिच्छन् अभिषुतसोमंयजमानमन्विच्छन् ऊती ऊत्यै रक्षायै तत् तस्ययजमानस्य ओकोगृहंगंता प्राप्तोभवति वीरोविक्रान्तस्यसइन्द्रःक्कुत्रविद्यते सुखरथं शोभनाख्यद्वारोरथोयस्यससुखरथः सुष्ठुखनतिलिखतिभूमिमितिवासुखं तादृग्रथं सुहितं खेभ्यः खंपुनःखनतेरितियास्कः। हरिभ्यां स्ववाहनाभ्यामश्वाभ्यांईयमानंगच्छन्तमिन्द्रंकोपश्यत् कश्चददृशे ॥ १ ॥

१. वज्रधर, बहुतों-द्वारा आहूत इन्द्रदान योग्य धन के साथ सोमाभिषव करनेवाले यजमान की इच्छा करते हुए, रक्षा के लिए यजमान के गृह में जाते हैं। वे पराक्रमी इन्द्र कहाँ विद्यमान हैं? अपने दोनों घोड़ों-द्वारा आकृष्ट सुखकर रथ पर जानेवाले इन्द्र को किसने देखा है?

अवा॑चचक्षं॒प॒दम॑स्य॒सस्व॑रु॒ग्रंनि॑धा॒तुर॒न्वा॑यमि॒च्छन्।
अपृ॑च्छम॒न्याँउ॒तते॒मआ॑हु॒रिन्द्रं॒नरो॑बुबुधा॒नाअ॑शेम ॥ २ ॥

अव॑। च॒च॒क्ष॒म्। प॒दम्। अ॒स्य॒। स॒स्वः॑। उ॒ग्रम्। नि॒ऽधा॒तुः।
अनु॑। आ॒य॒म्। इ॒च्छन्। अपृ॑च्छम्। अ॒न्यान्। उ॒त। ते।
मे॒। आ॒हुः॒। इन्द्र॑म्। नरः॑। बु॒बु॒धा॒नाः। अ॒शे॒म ॥ २ ॥

अस्येन्द्रस्य पदं स्थानं अवाचचक्षं अहमवाद्राक्षं कीदृशं सस्वोंतर्हितं उग्रमुदूर्णं किंच इच्छन्निन्द्रमन्विच्छन् अहं निधातुः स्वस्थापयितुरस्येन्द्रस्यपदमन्वायं अन्वगमं अन्यानुत अन्यान्विदुषोपि मार्गं इन्द्रमपृच्छं पृष्टवानस्मि पृष्टास्ते मे मह्यं इन्द्रमाहुः किमाहुरितिउच्यते—नरोयज्ञानांनेतारोबुबुधानाः बुभुत्समानाः वयं अशेम इन्द्रंप्राप्तवन्तःस्म यद्यपीन्द्रोविद्यते तथापि दुर्लभश्चेदनुपगन्तव्यइति बुभुत्समानस्वभावमपृच्छत् पृष्टेश्चसुलभइत्युक्ते इन्द्रप्राप्त्यर्थंसूक्तशेषमपश्यदित्यर्थः ॥ २ ॥

२. हमने इन्द्र के अन्तर्हित और उग्र स्थान को देखा है। अन्वेषण करते हुए हम आधारभूत इन्द्र के स्थान में गये हैं। हमने अन्य विद्वानों से भी इन्द्र के सम्बन्ध में पूछा है। पूछे जाने पर यज्ञ के नेता और ज्ञानाभिलाषियों ने हमें कहा कि हम लोगों ने इन्द्र को प्राप्त किया है।

---

१ नि० ३.१३.।

प्रनुवयंसुतेयातेकृतानीन्द्रब्रवामयानिनोजुजोषः।
वेददविद्वाञ्छृणवच्चविद्वान्वहतेयंमघवासर्वसेनः ॥ ३ ॥

प्र। नु। वयम्। सुते। या। ते। कृतानि। इन्द्र। ब्रवाम। यानि।
नः। जुजोषः। वेदत्। अविद्वान्। शृणवत्। च। विद्वान्।
वहते। अयम्। मघऽवा। सर्वऽसेनः ॥ ३ ॥

हेइन्द्र तेत्वदीयानि यानिकृतानि कर्माणि सन्ति नु अद्यवयं स्तोतारः सुतेसोमे अभिषुतेसति तानिकर्माणिप्रब्रवाम प्रकर्षेणवदाम त्वमपिनोस्मदर्थंयानिकर्माणिजुजोषः असेवथाः तानिकर्माणि अविद्वान् इतःपूर्वमजानन् जनःवेदत् जानातु शृणवच्च शृणुयाच्च यद्वा विद्वान्जाननपुरुषःशृणवच्च अजानंतमपिजनंश्रावयेच्च सर्वसेनः सर्वाभिःसेनाभिर्युक्तः मघवा-धनवान्विद्वान्जानन् अयमिन्द्रःजानतश्चशृण्वतश्च तान्जनान् प्रतिवहते अश्वैरुह्यते व्यत्ययेनकर्तृप्रत्ययः प्रापयति ॥ ३ ॥

३. हे इन्द्र, तुमने जिन कार्यों को किया है, सोमाभिषव करने पर हम स्तोता उनका वर्णन करते हैं। तुमने भी हमारे लिए जिन कर्मों का सेवन किया है, उन कर्मों को इसके पहले नहीं जाननेवाले लोग जानें। जो लोग जानते हैं, वे नहीं जाननेवालों को सुनावें। सब सेनाओं से युक्त होकर धनवान् इन्द्र अश्व पर आरोहण कर उन जाननेवाले और सुननेवाले के पास गमन करे।

स्थिरंमनश्चकृषेजातइन्द्रवेषीदेकोयुधयेभूयसश्चित्।
अश्मानंचिच्छवसादिद्युतोविविदोगवामूर्वमुस्रियाणाम् ॥ ४ ॥

स्थिरम्। मनः। चकृषे। जातः। इन्द्र। वेषि। इत्। एकः।
युधये। भूयसः। चित्। अश्मानम्। चित्। शवसा। दिद्युतः।
वि। विदः। गवाम्। ऊर्वम्। उस्रियाणाम् ॥ ४ ॥

हेइन्द्र जातःउत्पन्नमात्रएवत्वं स्थिरं चलनरहितंमनश्चित्तंचकृषे चकर्थ सर्वान् बलिष्ठान् जयेयमितीदृशं तथाहेइन्द्र एकइव् असहायएवत्वं युधये युद्धाय भूयसश्चिव बहुतरान्राक्षसादीनपिवेषि अवेः अगमः किंच अश्मानंचित् गवामावरकंपर्वतमपिशवसाबलेनविदिद्युतः व्यभिनः किंच उस्रियाणांक्षीरमुत्सारयन्तीनांगवांधेनूनांऊर्वंसमूहंविदः अवेदयः अलंभयः ॥ ४ ॥ हे इन्द्र, उत्पन्न होते ही तुमने सब शत्रुओं को जीतने के लिए चित्त को स्थिर (दृढ़संकल्प) किया था। हे इन्द्र, अकेले ही तुमने बहुतेरे राक्षसों से युद्ध करने के लिए गमन किया था। गौओं के आवरक पर्वत को तुमने बल द्वारा विदीर्ण किया था। तुमने क्षीरदायिनी गौओं के समूह को प्राप्त किया था।

परोयत्त्वंपरमआजनिष्ठाःपरावतिश्रुत्यंनामबिभ्रत् ।
अतश्चिदिन्द्रादभयन्तदेवाविश्वाअपोअजयद्दासपत्नीः ॥ ५ ॥ २६ ॥

परः । यत् । त्वम् । परमः आऽजनिष्ठाः । पराऽवति । श्रुत्यम् ।
नाम । बिभ्रत् । अतः । चित् । इन्द्रात् । अभयन्त । देवाः ।
विश्वाः । अपः । अजयत् । दासऽपत्नीः ॥ ५ ॥ २६ ॥

यद्यदा हेइन्द्र परः परस्तात् उपरिष्टात् स्थितः परमउत्कृष्टतमस्त्वं परावति दूरे श्रुत्यं श्रवणीयंनामनामधेयंबिभ्रत् धारयन् आजनिष्ठाः आसमंतादजायथाः शेषःपरोक्षकृतः अतश्चित् अतआरभ्यैव देवाद्योतमानाःअग्न्यादयः इन्द्रादभयन्त बिभ्युःविश्वाअपः सर्वाण्युदकानि इन्द्रः अजयत् वशीचक्रे कीदृशाः दासपत्नीः दासोवृत्रःपतिःपालयितायासांताः ॥ ५ ॥

५. हे इन्द्र, तुम सर्व-प्रधान और उत्कृष्टतम हो। दूर से ही श्रवणीय नाम को धारण करके जब तुम उत्पन्न हुए थे, तब अग्नि आदि देवता इन्द्र से भयभीत हुए थे। वृत्र-द्वारा पालित सकल उदक को इन्द्र ने वशीभूत किया था।

तुभ्येदेतेमरुतःसुशेवाअर्चन्त्यर्कंसुन्वन्त्यन्धः ।
अहिमोहानमपआशयानंप्रमायाभिर्मायिनंसक्षदिन्द्रः ॥ ६ ॥

तुभ्य । इत् । एते । मरुतः । सुऽशेवाः । अर्चन्ति । अर्कम् ।
सुन्वन्ति । अन्धः । अहिम् । ओहानम् । अपः । आऽशयानम् ।
प्र । मायाभिः । मायिनम् । सक्षत् । इन्द्रः ॥ ६ ॥

एतेमरुतः महद्रवन्तिवदन्तीति मरुतस्तोतारःसुशेवाः शेवमितिसुखनामैतत् शोभनसुखाःसन्तः स्तोत्रेण शोभनं सुखमुत्पादयन्तइत्यर्थः हेइन्द्र तुभ्येत् तुभ्यमेव अर्कमर्चनीयंस्तोत्रं अर्चन्ति स्तुवन्ति कुर्वन्तीत्यर्थः अन्धः सोमलक्षणमन्नंसुन्वन्ति अभिषवंकुर्वन्ति इन्द्रःपरमैश्वर्ययुक्तः मायाभिःस्वकीयाभिःशक्तिभिः अहिंवृत्रंप्रसक्षत् अभ्यभवत् कीदृशं ओहानं देवान्बाधमानं अपउदकानि आशयानं आवृत्यशयनंकुर्वन्तं मायिनं कपटवन्तमिति ॥ ६ ॥

६. ये स्तुतिपाठ करनेवाले सुखी मरुद्गण स्तोत्र-द्वारा सुख उत्पन्न करते हैं। हे इन्द्र, ये तुम्हारा ही स्तवन करते हैं और सोमलक्षण अन्न प्रदान करते हैं। जो वृत्र समस्त जलराशि को आच्छन्न करके निद्रित था, अपनी शक्ति-द्वारा इन्द्र ने उस कपटी और देवों को बाधा पहुँचानेवाले वृत्र को अभिभूत किया था।

विपूर्मधोजनुषादानमिन्वन्नहन्गवामघवन्त्संचकानः ।
अत्रादासस्यनमुचेःशिरोयदवर्तयोमनवेगातुमिच्छन् ॥ ७ ॥

वि। सु। मृधः। जनुषा। दानम्। इन्वन्। अहन्। गवा।
मघऽवन्। सम्ऽचकानः। अत्र। दासस्य। नमुचेः। शिरः। यत्।
अवर्तयः। मनवे। गातुम्। इच्छन्॥ ७॥

हेमघवन् धनवन्निन्द्र संचकानः अस्माभिःस्तूयमानस्त्वं संपूर्वःकायतिःशब्दकर्मा तस्यलडर्थेलिटिरूपं दानं देवानांबाधकंवृत्रमसुरंगवावज्रेणइन्वन् प्रेरयन् हिंसन् जनुषाजन्मनामृधः तदनुचरान् राक्षसादीन् शत्रून् सु सुष्ठु व्यहन् विजघन्थ इन्द्रस्यासुराः जन्मआरभ्य शत्रवइत्यर्थः हेइन्द्र त्वं अत्रास्मिन्युद्धे मनवे नमुचिनापहृतगोधनायमह्यंगातुंसुखमिच्छन् अभिलषन् नमुचेरेतन्नामकस्य दासस्य उपक्षपयितुरसुरस्यसंबन्धिशिरः शीर्षं यद्यदाअवर्तयः अचूर्णयः तदाशत्रून्विजघन्थेतिपूर्वेणसंबन्धः॥ ७॥

७. हे धनवान् इन्द्र, हम लोग तुम्हारा स्तवन करते हैं। तुम देव-पीड़क वृत्र को वज्र-द्वारा पीड़ित करो। तुमने जन्म से ही शत्रुओं का संहार किया है। हे इन्द्र, इस युद्ध में तुम हमारे सुख के लिए दास नमुचि के सिर को चूर्ण करो।

युजंहिमामकृथाआदिदिन्द्रशिरोदासस्यनमुचेर्मथायन्।
अश्मानंचित्स्वर्यं१वर्तमानंप्रचक्रियेवरोदसीमरुद्भ्यः॥ ८॥

युजम्। हि। माम्। अकृथाः। आत्। इत्। इन्द्र। शिरः।
दासस्य। नमुचेः। मथायन्। अश्मानम्। चित्। स्वर्यम्।
वर्तमानम्। प्र। चक्रियाऽइव। रोदसी इति। मरुत्ऽभ्यः॥ ८॥

हेइन्द्र त्वं स्वर्यं स्वरेणसहितं वर्तमानं भ्रमन्तं अश्मानंचित् मेघमिवस्थितं दासस्य उपक्षपयितुर्नमुचेरसुरस्यशिरः मथायन् चूर्णयन् आदिदनन्तरमेवमां युजं सखायं अकृथाहि चकृषेखलु तदानींमरुद्भ्यः त्वत्सहायेभ्यः रोदसी द्यावापृथिव्यौचक्रियेव चक्रेइव प्रास्तां उपसर्गश्रुतेर्योग्यक्रियाध्याहारः॥ ८॥

८. हे इन्द्र, तुमने शब्द करनेवाले और भ्रमण-शील मेघ की तरह, दास नमुचि असुर के मस्तक को चूर्ण करके हमारे साथ मैत्री की थी। उस समय मरुतों के प्रभाव से द्यावापृथिवी चक्र की तरह घूमने लगी थी।

स्त्रियोहिदासआयुधानिचक्रेकिंमाकरन्नबलाअस्यसेनाः।
अन्तर्ह्यख्यदुभेअस्यधेनेअथोपप्रैद्युधयेदस्युमिन्द्रः॥ ९॥

स्त्रियः। हि। दासः। आयुधानि। चक्रे। किम्। मा। करन्।
अबलाः। अस्य। सेनाः। अन्तः। हि। अख्यत्। उभे इति। अस्य।
धेने इति। अथ। उप। प्र। ऐत्। युधये। दस्युम्। इन्द्रः॥ ९॥

दासः उपक्षपयितानमुचिरसुरः स्त्रियःस्त्रीः आयुधानि युद्धसाधनानिचक्रेहि कृतवान्खलु इन्द्रेणसहयोद्धुंप्रहितवानित्यर्थः अस्यासुरस्यसंबन्धिन्यः अबलाः स्त्रीरूपाः सेनाःमा मां किंकरन् किंकुर्युरितिमन्यमानइन्द्रः तासांमध्येअस्यासुरस्यधेनेप्रीणयित्र्यौ सुरूपे उभेद्वेस्त्रियौ अन्तरख्यद्धि गृहमध्येनिदधेखलु अथानंतरमिन्द्रः दस्युंनमुचिं यधये युद्धाय उपप्रैत् उपप्रागच्छत्॥९॥

९. दास नमुचि ने स्त्रियों को युद्धसाधन (सेना) बनाया था। असुर की वह स्त्री-सेना मेरा क्या कर लेगी? इस तरह सोचकर इन्द्र ने उन सेनाओं के मध्य से उस असुर की दो प्रेयसी स्त्रियों को, अपने घर में रख लिया और नमुचि से लड़ने के लिए प्रस्थान किया।

**समत्रगावोभितोनवन्तेहेहवत्सैर्वियुतायदासन्।**
**सन्ताइन्द्रोअसृजदस्यशाकैर्यदींसोमासःसुषुताअमन्दन् ॥१०॥२७॥**

**सम्। अत्र।। गावः। अभितः। अनवन्त। इहऽइह। वत्सैः। विऽयुताः। यत्। आसन्। सम्। ताः। इन्द्रः। असृजत्। अस्य। शाकैः। यत्। ईम्। सोमासः। सुऽसुताः। अमन्दन्॥१०॥ २७॥**

यदा गावः वत्सैःवियुताआसन् वियुक्ताअभवन् अत्रास्मिन्काले अभितः सर्वतोनमुचिनापहृतागावः इहेह इहचेहचसर्वतःसमनवन्त अत्यन्तमगच्छन् यत् यदा सुषुताः बभ्रुनाम्नाऋषिणासुष्ठ्वभिषुताःसोमासःसोमाः ईमेनमिन्द्रं अमन्दन् अमादयन् तदाइन्द्रः शाकैः शक्तैर्मरुद्भिःसह अस्यबभ्रोःसंबन्धीर्नमुचिनापहृतास्तागाः समसृजत् वत्सैःसह समयोजयत्॥१०॥

१०. जब गौएँ बछड़ों से विमुख हुई थीं, तब उस समय वे नमुचि-द्वारा अपहृत गौएँ इधर-उधर सर्वत्र भटक रही थीं। बभ्रु ऋषि-द्वारा अभिषुत सोम से जब इन्द्र प्रहृष्ट हुए, तब समर्थ मरुतों के साथ इन्द्र ने बभ्रु की गौओं को बछड़ों के साथ मिला दिया।

**यदींसोमाबभ्रुधूताअमन्दन्नरोरवीद्वृषभःसादनेषु।**
**पुरंदरःपपिवाँइन्द्रोअस्यपुनर्गवामददादुस्रियाणाम्॥ ११ ॥**

**यत्। ईम्। सोमाः। बभ्रुऽधूताः। अमन्दन्। अरोरवीत्। वृषभः। सदनेषु। पुरम्ऽदरः। पपिऽवान्। इन्द्रः। अस्य। पुनः। गवाम्। अददात्। उस्रियाणाम्॥ ११ ॥**

यद्यदाबभ्रुधूताः बभ्रुणाभिषुताःसोमाः ईमेनमिन्द्रं अमन्दन् अमादयन् तदावृषभःकामानांवर्षितेन्द्रः सदनेषु युद्धेषु अरोरवीत् अत्यर्थंशब्दमकरोत् पुरंदरः पुरांदारयिता अस्येमंसोमंपपिवान् पीतवान् इन्द्रः पुनःउस्रियाणांक्षीरमुत्स्राविणीःगवांगाः अददात् बभ्रवेददौ॥११॥

११. जब बभ्रु के अभिषुत सोम ने इन्द्र को प्रहृष्ट किया, तब कामनाओं के पूरक इन्द्र ने, संग्राम में, महान् शब्द किया। पुरन्दर (नगर-विनाशक) इन्द्र ने सोम-पान किया और बभ्रु को फिर से दुग्ध देनेवाली गाएँ दीं।

भद्रमिदंरुशमाअग्नेअक्रन्गवांचत्वारिददतःसहस्रा।
ऋणंचयस्यप्रयतामघानिप्रत्यग्रभीष्मनृतमस्यनृणाम् ॥ १२ ॥

भद्रम्। इदम्। रुशमाः। अग्ने। अक्रन्। गवाम्। चत्वारि।
ददतः। सहस्रा। ऋणम्ऽचयस्य। प्रऽयता। मघानि। प्रति।
अग्रभीष्म। नृऽतमस्य। नृणाम् ॥ १२ ॥

रुशमइतिकश्चिज्जनपदविशेषः अत्ररुशमशब्देनतत्रत्याजनाउच्यन्ते रुशमाः ऋणंचयनाम्नोराज्ञःकिंकराः हेअग्ने भद्रंकल्याणमिदंकर्म अक्रन् अकुर्वन् कीदृशाः गवांधेनूनांचत्वारि चतुःसंख्यायुक्तानि सहस्रासहस्राणि ददतः मह्यंप्रयच्छतः राज्ञाहिदीयमानानिधनानि राजपुरुषाएवप्रयच्छन्तीत्यर्थः नरांनेतॄणांमध्येनृतमस्य अतिशयेननेतृतमस्य ऋणंचयस्य एतन्नामकेनराज्ञाप्रयताप्रयतानिदत्तानिमघानि गोरूपाणिधनानि वयं प्रत्यग्रभीष्म प्रतिगृहीतवन्तःस्म पूजार्थंबहुवचनम् ॥ १२ ॥

१२. हे अग्नि, ऋणञ्चय राजा के किंकर रुशम देशवासियों ने मुझे चार सहस्र गौएँ देकर कल्याण-कारक कर्म किया था। नेताओं के बीच श्रेष्ठ नेता ऋणञ्चय राजा-द्वारा प्रदत्त गोरूप रत्नों को मैंने ग्रहण किया है।

सुपेशसंमावसृजंत्यस्तंगवांसहस्रैरुशमासोअग्ने।
तीव्राइन्द्रममन्दुःसुतासोक्तोर्व्युष्टौपरितक्म्यायाः ॥ १३ ॥

सुऽपेशसम्। मा। अव। सृजन्ति। अस्तम्। गवाम्। सहस्रैः।
रुशमासः। अग्ने। तीव्राः। इन्द्रम्। अममन्दुः। सुतासः। अक्तोः।
विऽउष्टौ। परिऽतक्म्यायाः ॥ १३ ॥

हेअग्ने रुशमासः रुशमाः ऋणंचयस्यकिंकराः सुपेशसं सुरूपमलंकाराच्छादनादिभिः सत्कृतं मा मांअस्तं गृहं गवांधेनूनांसहस्रैःसह अवसृजन्ति प्रापयन्तिस्म तदनंतरमेवतीव्राः रसवन्तः सुतासः लब्धबहुधनेनमयाभिषुताःसोमाः परितक्म्यायाः तमसाभूतानिपरितस्तकतिगच्छतीतिपरितक्म्या तस्याः अक्तोःरात्रेः व्युष्टौ व्युच्छनेसति उषःकालइत्यर्थः इन्द्रममन्दुः अमादयन् बभ्रुः गवांप्राप्त्यनन्तरमविलंबितमेवसोमेनेजइत्यर्थः ॥ १३ ॥

१३. हे अग्नि, ऋणञ्चय राजा के किंकर रुशम देशवासियों ने मुझे अलंकार और आच्छादन आदि से सुसज्जित गृह तथा हजार गौएँ दी हैं। रात्रि के बीतने पर अर्थात् उषाकाल में सरस सोम ने इन्द्र को प्रसन्न किया था। (गौओं को पाकर बभ्रु ने तुरन्त ही इन्द्र को सोमरस पिलाया था)।

औच्छत्सारात्रीपरितक्म्यायाँऋणंचयेराजनिरुशमानाम्।
अत्योनवाजीरघुरज्यमानोबभ्रुश्चत्वार्यसनत्सहस्रा ॥ १४ ॥

औच्छत्। सा। रात्री। परिऽतक्म्या। या। ऋणम्ऽचये। राजनि। रुशमानाम्। अत्यः। न। वाजी। रघुः। अज्यमानः। बभ्रुः। चत्वारि। असनत्। सहस्रा ॥ १४ ॥

रुशमानां रुशमनाम्नांजनानांराजनिप्रभौ ऋणंचये एतत्संज्ञके तत्समीपएवयारात्रिः परितक्म्या परितोगंत्रीभवति सारात्री औच्छत् व्युष्टाअभवत् अत्यः सततगामी वाजीन अश्वइव रघुः शीघ्रगामी अज्यमानः प्रेर्यमाणः बभ्रुः एतन्नामकऋषिः चत्वारि चतुःसंख्याकानि सहस्रा सहस्राणि गोरूपाणिधनानि असनत् अलभत ॥ १४ ॥

१४. रुशम देश के राजा ऋणञ्चय के समीप में ही सर्वत्र गमन करनेवाली रात्रि बीत गई। बुलाये जाने पर बभ्रु ऋषि ने वेगवान् घोड़े की तरह चार सहस्र शीघ्रगामिनी गौओं को प्राप्त किया।

चतुःसहस्रंगव्यस्यपश्वःप्रत्यग्रभीष्मरुशमेष्वग्ने।
घर्मश्चित्तप्तःप्रवृजेयआसीदयस्मयस्तम्वादामविप्राः ॥ १५ ॥ २८ ॥

चतुःऽसहस्रम्। गव्यस्य। पश्वः। प्रति। अग्रभीष्म। रुशमेषु। अग्ने। घर्मः। चित्। तप्तः। प्रऽवृजे। यः। आसीत्। अयस्मयः। तम्। ऊँ इति। आदाम। विप्राः ॥ १५ ॥ २८ ॥

हेअग्ने वयं रुशमेषु एतत्संज्ञकेषुजनेषु गव्यस्य गवात्मकस्यपश्वःपशोः पशूनां जातावेकवचनं चतुःसहस्रं चत्वारिसहस्राणि प्रत्यग्रभीष्म प्रतिगृहीतवन्तःस्म प्रवृजे प्रवृंजनार्थं तप्तः संतप्तः शोभनवर्णोघर्मश्चित् महावीरइव अयस्मयः अयोमयः हिरण्मयोयःकलशआसीत् अभवत् तमुदोहनार्थं कलशंच विप्रामेधाविनोवयंरुशमेषुआदाम आदत्तवन्तः ॥ १५ ॥

१५. हे अग्नि, हमने रुशम देशवासियों से चार सहस्र गौएँ प्राप्त की हैं। हम मेधावी हैं। यज्ञ के लिए महावीर की तरह सन्तप्त हिरण्मय कलश को, हमने रुशम देशवासियों से दूध दूहने के लिए, ग्रहण किया है।

इन्द्रोरथायेतिषोदशर्चंसप्तदशंसूक्तं अवस्युर्नामात्रेयऋषिः त्रिष्टुप्छन्दः इन्द्रोदेवता उग्रमयातंसंहयद्वामितिपादयोःक्रमेणकुत्सोशनसौविकल्पेनदेवता इन्द्राकुत्सावहमानेत्यस्या-

इन्द्रःकुत्सश्च तथाचानुक्रान्तं—इन्द्रोरथायसप्तोनावस्युरुग्रमितिकौत्स्यौशनसौवापादौपरैन्द्रा-कौत्सीति। विनियोगोलैंगिकः।

इन्द्रोरथायप्रवतंकृणोतियमध्यस्थान्मघवावाजयन्तम्।
यूथेवपश्वोव्युनोतिगोपाअरिष्टोयातिप्रथमःसिषासन्॥ १॥

इन्द्रः। रथाय। प्रऽवतम्। कृणोति। यम्। अधिऽअस्थात्।
मघऽवा। वाजऽयन्तम्। यूथाऽइव। पश्वः। वि। उनोति।
गोपाः। अरिष्टः। याति। प्रथमः। सिसासन्॥ १॥

मघवा धनवानिन्द्रः वाजयन्तमन्नमिच्छन्तं यं रथं अध्यस्थादधितिष्ठति तस्मैरथाय प्रवतं प्रवणमार्जिकृणोति करोति अपिच गोपाः गोपालः पश्वोयूथेव पशोःपशूनांयूथानिय-थाव्युनोतिप्रेरयति तथा शत्रुसैन्यानिप्रेरयति अरिष्टः शत्रुभिःस्वयमहिंसितः प्रथमोदेवानां मुख्यः इन्द्रः सिषासन् शत्रुधनानीच्छन् याति गच्छति॥ १॥

१. धनवान् इन्द्र जिस रथ पर अधिष्ठान करते हैं, उस रथ का संचालन भी करते हैं। गोपालक जिस तरह से पशुओं के समूह को प्रेरित करते हैं, उसी तरह से इन्द्र शत्रुसेनाओं को प्रेरित करते हैं। शत्रुओं-द्वारा अहिंसित और देव-श्रेष्ठ इन्द्र शत्रुओं के धन की कामना करते हुए गमन करते हैं।

आप्रद्रवहरिवोमाविवेनःपिशङ्गरातेअभिनःसचस्व।
नहित्वदिन्द्रवस्योअन्यदस्त्यमेनांश्चिज्जनिवतश्चकर्थ॥ २॥

आ। प्र। द्रव। हरिऽवः। मा। वि। वेनः। पिशंगऽराते।
अभि। नः। सचस्व। नहि। त्वत्। इन्द्र। वस्यः। अन्यत्।
अस्ति। अमेनान्। चित्। जनिऽवः। चकर्थ॥ २॥

हेहरिवः हरिवन्निन्द्र त्वं आ अस्मानभिमुखं प्रद्रव प्रकर्षेणगच्छ किन्तु माविवे-नः वेनतिःकान्तिकर्मा अस्मासुविगतकामोमाभूः किंच हेपिशंगराते बहुरूपधनेन्द्र नोस्मा-नभिसचस्व अभिसेवस्व अपिच हेइन्द्र वस्योवसीयः श्रेयस्करं त्वत् त्वत्तः अन्यन्नस्-स्ति अन्यद्वसुजातंनास्ति अमेनांश्चित् मेनाशब्दःस्त्रीवाची अपगतस्त्रीकांश्चित् जनिवतः जायावतश्चकर्थ करोषि॥ २॥

२. हे हरिनामक अश्ववाले, तुम हम लोगों के अभिमुख भली भाँति से गमन करो; किन्तु हम लोगों के प्रति हीनमनोरथ—उदासीन—मत होओ। हे बहुविध धनवाले इन्द्र, तुम हम लोगों का सेवन करो। हे इन्द्र, दूसरी कोई भी वस्तु तुमसे श्रेष्ठ नहीं है। अपत्नीकों को तुम स्त्री प्रदान करते हो।

उद्यत्सहःसहसआजनिष्टदेदिष्टइन्द्रइन्द्रियाणिविश्वा ।
प्राचोदयत्सुदुघावव्रेअन्तर्विज्योतिषासंववृत्वत्तमोवः ॥ ३ ॥

उत् । यत् । सहः । सहसः । आ । अजनिष्ट । देदिष्टे । इन्द्रः । इन्द्रियाणि । विश्वा । प्र । अचोदयत् । सुऽदुघाः । वव्रे । अन्तः । वि । ज्योतिषा । सम्ऽववृत्वत् । तमः । अवरित्यवः ॥ ३ ॥

यद्यदा सहः सूर्यसंबन्धितेजः सहसःउषःसंबन्धिनस्तेजसःउदाजनिष्ट उपरिष्टात्प्रादुर्बभूव तदाइन्द्रः विश्वा विश्वानि सर्वाणि इन्द्रियाणिधनानि इन्द्रियमितिधननामैतत् देदिष्टे यजमानेभ्योदिशति वव्रे निवारकेपर्वते अन्तर्मध्येबलेननिरुद्धाः सुदुघाः सुष्ठुदोग्ध्रीर्गाः प्राचोदयत् प्रैरयत् ज्योतिषातेजसासंववृत्वत् संवरणशीलंतमः विवः निवारितवान् ॥३॥

३. जब सूर्य का तेज उषा के तेज से बढ़ जाता है, तब इन्द्र यजमानों को निखिल धन प्रदान करते हैं। वे निवारक पर्वत के मध्य से दुग्धदायिनी निरुद्ध गौओं को मुक्त करते हैं और तेज-द्वारा संवरणशील (सर्वत्र व्याप्त) अन्धकार को दूर करते हैं।

अनवस्तेरथमश्वायतक्षन्त्वष्टावज्रंपुरुहूतद्युमन्तम् ।
ब्रह्माणइन्द्रंमहयन्तोअर्कैरवर्धयन्नहयेहन्तवाउ ॥ ४ ॥

अनवः । ते । रथम् । अश्वाय । तक्षन् । त्वष्टा । वज्रम् । पुरुऽहूत । द्युऽमन्तम् । ब्रह्माणः । इन्द्रम् । महयन्तः । अर्कैः । अवर्धयन् । अहये । हन्तवै । ऊँ इति ॥ ४ ॥

हेपुरुहूत बहुभिराहूतेन्द्र तेत्वदीयंरथं अश्वाय अश्वाभ्यांसंयोगार्हं अनवः मनवोमनुष्याऋभवः तक्षन्नतक्षन्नकुर्वन् त्वष्टाचत्वदीयंवज्रं द्युमन्तंदीप्तिमन्तमकरोत् उ अपिच महयन्तः इन्द्रंपूजयन्तोब्रह्माणोङ्गिरसः परिवृढामरुतोवा अहये अहिंवृत्रंहन्तवै हन्तुं अर्कैःस्तोत्रैरवर्धयन् वर्धितवन्तः ॥ ४ ॥

४. हे बहुजनाहूत इन्द्र, ऋभुओं ने तुम्हारे रथ को घोड़ों से संयुक्त होने के योग्य बनाया है, त्वष्टा ने तुम्हारे वज्र को द्युतिमान् किया है। इन्द्र की पूजा करनेवाले अङ्गिरा लोगों ने अथवा मरुतों ने वृत्रवध के लिए स्तोत्रों-द्वारा, इन्द्र को संवर्द्धित किया है।

वृष्णेयत्तेवृषणोअर्कमर्चानिन्द्रग्रावाणोअदितिःसजोषाः ।
अनश्वासोयेपवयोरथाइन्द्रेषिताअभ्यवर्तन्तदस्यून् ॥ ५ ॥२१॥

वृष्णे । यत् । ते । वृषणः । अर्कम् । अर्चान् । इन्द्र । ग्रावाणः ।
अदितिः । सऽजोषाः । अनश्वासः । ये । पवयः । अरथाः ।
इन्द्रऽइषिताः । अभि । अवर्तन्त । दस्यून् ॥ ५ ॥ २९ ॥

हेइन्द्र यद्यदा वृषणः सेचनसमर्थामरुतः वृष्णे कामानां वर्षित्रेते तुभ्यं अर्कं स्तोत्रंअ-र्चान् स्तुवन्नकुर्वन्नित्यर्थः तदा अदितिःअदीनाः वचनव्यत्ययः ग्रावाणोअभिषवणपाषाणाः सजोषाः संगताबभूवुरितिशेषः अनश्वासः अश्ववर्जिताः अरथाः रथहीनाः इन्द्रेषिताः इ-न्द्रेणप्रेषिताः पवयः पवमानागच्छन्तोयेमरुतः दस्यून्शत्रून् अभ्यवर्तन्त अभिभूतान्कुर्वंतोवर्तन्ते स्म तेमरुतः अर्चानितिसंबन्धः ॥ ५ ॥

५. हे इन्द्र, तुम अभिलाषाओं के पूरक हो। सेचनसमर्थ मरुतों ने जब तुम्हारी स्तुति की थी, तब सोमाभिषव करनेवाले पत्थर भी प्रसन्न होकर संगत हुए थे। इन्द्र-द्वारा प्रेषित होने पर अश्वहीन और रथहीन मरुतों ने अभिगमन करके शत्रुओं को अभिभूत किया था।

प्रतेपूर्वाणिकरणानिवोचंप्रनूतनामघवन्याचकर्थ ।
शक्तीवोयद्विभरारोदसीउभेजयन्नपोमनवेदानुचित्राः ॥ ६ ॥

प्र । ते । पूर्वाणि । करणानि । वोचम् । प्र । नूतना । मघऽवन् ।
या । चकर्थ । शक्तिऽवः । यत् । विऽभराः । रोदसी इति ।
उभे इति । जयन् । अपः । मनवे । दानुऽचित्राः ॥ ६ ॥

हेइन्द्र तेत्वदीयानि पूर्वाणि पुरातनानि करणानि कर्माणि प्रवोचं अहंप्रकर्षेणब्रवीमि नूतना नूतनानि नवानिकर्माणिप्रवोचं प्रब्रवीमि हेमघवन्धनवन्निन्द्र या यानिकर्माणिच-कर्थ कृतवानसि तानिप्रवोचमितिसंबन्धः हेशक्तीवः शक्तिमन् शक्तिर्वज्रंकर्मवातद्वन्निन्द्र य-त् यस्त्वंउभेरोदसी द्यावापृथिव्यौ जयन् वशीकुर्वन् अपः उदकानि मनवेमनुष्याय विभ-राः विविच्यबिभर्षि कीदृशीः दानुचित्राःचित्रदानाः ॥ ६ ॥

६. हे इन्द्र, हम तुम्हारे पुरातन तथा नूतन कर्मों का स्तवन करते हैं। हे धनवान् इन्द्र, तुमने जिन कार्यों को किया है, हम उसे कहते हैं। हे वज्रधर इन्द्र, तुम द्यावा-पृथिवी को वशीभूत करके मनुष्यों के लिए विचित्र जल धारण करते हो।

अथसप्तमी—

तदिन्नुतेकरणंदस्मविप्राहिंयद्घ्नन्नोजोअत्रामिमीथाः ।
शुष्णस्यचित्परिमायाअगृभ्णाःप्रपित्वंयन्नपदस्यूँरसेधः ॥ ७ ॥

तत् । इत् । नु । ते । करणम् । दस्म । विप्र । अहिम् । यत् ।
घ्नन् । ओजः । अत्र । अमिमीथाः । शुष्णस्य । चित् । परि । मायाः ।
अगृभ्णाः । प्रऽपित्वम् । यन् । अप । दस्यून् । असेधः ॥ ७ ॥

हेदस्म दर्शनीयविप्र मेधाविन्निन्द्र त्वं अत्रास्मिंल्लोके अहिंवृत्रमसुरंघ्नन् हिंसन् यदोजोयद्बलंअमिमीथाः प्रकाशितवानसि तदित्खलु तवखलु ते त्वदीयंकरणंकर्मविद्यते अपिच शुष्णस्यचित् एतन्नामकस्याप्यसुरस्यसंबंधिनीर्मायाः युवतीःपर्यगृभ्णाः परिगृहीतवानसि हेइन्द्र त्वंप्रपित्वं संग्रामं समीपंवायन् प्राप्नुवन् दस्यून् असुरान् अपासेधः अपबाधथाः ॥ ७ ॥

७. हे दर्शनीय तथा बुद्धिमान् इन्द्र, वृत्र को मार करके तुमने जो अपने बल को इस लोक में प्रकाशित किया है, वह तुम्हारा ही कर्म है। तुमने शुष्ण असुर की युवती को ग्रहण किया है। हे इन्द्र, युद्धस्थल में जाकर तुमने असुरों को विनष्ट किया है।

त्वमपोयदवेतुर्वशायारमयःसुदुघाःपारइन्द्र ।
उग्रमयातमवहोहकुत्संसंहयद्वामुशनारन्तदेवाः ॥ ८ ॥

त्वम् । अपः । यदवे । तुर्वशाय । अरमयः । सुऽदुघाः । पारः ।
इन्द्र । उग्रम् । अयातम् । अवहः । ह । कुत्सम् । सम् । ह । यत् ।
वाम् । उशना । अरन्त । देवाः ॥ ८ ॥

हेइन्द्र त्वं पारे नदीनांतीरे प्रवृद्धइतिशेषः सुदुघाः ओषधिवनस्पतीन् सुष्ठुदुहतीः अपउदकानियदवे यदुनामकायराज्ञे तुर्वशाय एतन्नामकायराज्ञेच अरमयः रमितवानसि हे इन्द्र युवां त्वं कुत्सश्चेतिशेषः उग्रं उद्गूर्णं शुष्णं अयातं अगच्छतं तदनंतरं त्वं शुष्णंहत्वा कुत्समवहोह स्वगृहंप्रापितवानसिखलु यद्यदा वां युवां इन्द्राकुत्सौउशनाभार्गवौ देवाश्च समरन्तह संभेजिरेखलु ॥ ८ ॥

८. हे इन्द्र, नदी के तीर में प्रवृद्ध होकर अर्थात् अवस्थान करके यदु और तुर्वश राजाओं को तुमने वनस्पतियों को बढ़ानेवाला जल दिया है। हे इन्द्र, कुत्स के प्रति आक्रमण करनेवाले भयानक शुष्ण को मारकर तुमने कुत्स को अपने गृह में पहुँचा दिया था। तब उशना (भार्गव) और देवों ने तुम दोनों का सम्भजन किया था।

इन्द्राकुत्सावहमानारथेनावामत्याअपिकर्णेवहन्तु ।
निष्षीमद्भ्योधमथोनिष्षधस्थान्मघोनोहृदोवरथस्तमांसि ॥ ९ ॥

इन्द्राकुत्सा । वहमाना । रथेन । आ । वाम् । अत्याः । अपि ।
कर्णे । वहन्तु । निः । सीम् । अत्ऽभ्यः । धमथः । निः ।
सधऽस्थात् । मघोनः । हृदः । वरथः । तमांसि ॥ ९ ॥

हेइन्द्राकुत्सा इन्द्राकुत्सौ रथेनवहमानावहमानौ उह्यमानौ वां युवां अत्याःअश्वाः कर्णेपि स्तोत्राणिकृणोतिकरोतीतिकर्णःस्तोता यजमानोवा तत्समीपेअपीतियावत् आवहन्तु आसमन्ताद्वाहकाभवन्तु युवामपि अद्भ्योप्सुप्रविष्टंसीमेनंशुष्णासुरंनिर्धमथः अबाधेथां सीमिति शुष्णासुरोबुद्धिस्थःपरामृश्यते सधस्थात् स्वकीयावस्थानात् निरबाधेथाम् मघोनोमघवतोहविष्मतोयजमानस्यहृदोहृदयात्तमांस्यज्ञानरूपाणि पापानि वरथोनिवारयथः ॥ ९ ॥

९. हे इन्द्र और कुत्स, एक रथ पर आरूढ़ तुम दोनों को अश्वगण यजमानों के निकट आनयन करें। तुम दोनों ने शुष्ण को उसके आवासभूत जल से दूर किया था। तुम दोनों ने धनवान् यजमानों के हृदय से अज्ञानरूप अन्धकार को दूर किया था।

वातस्ययुक्तान्त्सुयुजश्चिदश्वान्कविश्चिदेषोअजगन्नवस्युः ।
विश्वेतेअत्रमरुतःसखायइन्द्रब्रह्माणितविषीमवर्धन् ॥१०॥३०॥

वातस्य । युक्तान् । सुऽयुजः । चित् । अश्वान् । कविः । चित् ।
एषः । अजगन् । अवस्युः । विश्वे । ते । अत्र । मरुतः । सखायः ।
इन्द्र । ब्रह्माणि । तविषीम् । अवर्धन् ॥ १० ॥ ३० ॥

कविश्चिन्माज्ञोपि अवस्युरेतन्नामकएषमंत्रद्रष्टावा तस्यवायोर्वेगेनयुक्तान् संयुक्तान् सुयुजश्चित् सुष्ठुयोजनीयानश्वान् अजगन् प्राप्नोत् अवस्योः सखायः विश्वेसर्वेमरुतोबहवः स्तोतारः हेइन्द्र अत्रास्मिन्लोके तेत्वदीयां तविषीं बलं ब्रह्माणि ब्रह्मभिःस्तोत्रैः अवर्धअवर्धयन् ॥ १० ॥

१०. विद्वान् अवस्यु नामक ऋषि ने वायु की तरह वेगवान् और रथ में भली भाँति से युक्त करने के योग्य अश्वों को प्राप्त किया है। हे इन्द्र, अवस्यु के मित्रभूत सकल स्तोताओं ने, स्तोत्रों-द्वारा, तुम्हारे बल को संवर्द्धित किया है।

अथैकादशी—

सूरश्चिद्रथंपरितक्म्यायांपूर्वंकरदुपरंजूजुवांसम् ।
भरच्चक्रमेतशःसंरिणातिपुरोदधत्सनिष्यतिक्रतुंनः ॥ ११ ॥

सूरः। चित्। रथम्। परिऽतक्म्यायाम्। पूर्वम्। करत्। उपरम्।
जूजुऽवांसम्। भरत्। चक्रम्। एतशः। सम्। रिणाति। पुरः।
दधत्। सनिष्यति। क्रतुम्। नः॥ ११॥

इन्द्रः परितक्म्यायां संग्रामेपरितोगच्छन्त्यस्यांभयइतिपरितक्म्या संग्रामः तस्मिन्एत-शाख्येनऋषिणासहयोद्धुः सूरश्चित् सूर्यस्यापिसंबन्धिनं जूजुवांसं वेगेनगच्छन्तं रथं उपरं उपरतव्यापारंपूर्वंकरत् पुराकरोत् एतशःएतशाय विभक्तिव्यत्ययः इन्द्रः पूर्वंद्विचक्रस्यरथस्य एकंचक्रंभरत् अहरत् सइन्द्रः तेनचक्रेणासुरान्संरिणाति हिनस्ति अपिच पुरोदधत् अस्मा-न्पुरस्कुर्वन्नोस्मदीयंक्रतुंयज्ञंसनिष्यति संभजतु ॥ ११ ॥

११. पूर्व में जब एतश ऋषि के साथ सूर्य का संग्राम हुआ था, तब इन्द्र ने सूर्य के वेगवान् रथ की गति को अवरुद्ध किया था। इन्द्र ने पूर्व में द्विचक्र रथ के एक चक्र को हरण किया था। उसी चक्र-द्वारा इन्द्र शत्रुओं को विनष्ट करते हैं। हम लोगों को पुरस्कृत करके इन्द्र हम लोगों के यज्ञ का सम्भजन करें।

आयंजनाअभिचक्षेजगामेन्द्रःसखायंसुतसोममिच्छन्।
वदन्ग्रावाववेदिंभ्रियातेयस्यंजीरमध्वर्यवश्चरन्ति॥ १२॥

आ। अयम्। जनाः। अभिऽचक्षे। जगाम। इन्द्रः। सखायम्।
सुतऽसोमम्। इच्छन्। वदन्। ग्रावा। अव। वेदिम्। भ्रियाते।
यस्य। जीरम्। अध्वर्यवः। चरन्ति॥ १२॥

हेजनाः अभिचक्षे युष्मानभिद्रष्टुमयमिन्द्रःसखायंस्तोतारंसुतसोमं अभिषुतसोमंयज-मानं इच्छन्नभिलषन् आजगामागच्छति अध्वर्यवः यस्यग्राव्णः जीरंक्षेपणंप्रेरणंचरन्तिकुर्व-न्तिसग्रावा सोमाभिषवपाषाणः वदन् शब्दंकुर्वन् वेदिं अवभ्रियाते अभिह्रियते ॥ १२ ॥

१२. हे मनुष्यो, तुम लोगों को देखने के लिए इन्द्र सोमाभिषव करनेवाले मित्रस्वरूप यजमानों की इच्छा करते हुए आये हैं। अध्वर्युगण जिस पत्थर का प्रेरण करते हैं, वह सोमाभिषव करनेवाला पत्थर शब्द करता हुआ वेदी के ऊपर आरोहण करता है।

येचाकनन्तचाकनन्तनूतेमर्ताअमृतमोतेअंहआरन्।
वावन्धियज्यूँरुततेषुधेह्योजोजनेषुयेषुतेस्याम॥ १३॥ ३१॥

ये। चाकनन्त। चाकनन्त। नु। ते। मर्ताः। अमृत। मो इति।
ते। अंहः। आ। अरन्। ववन्धि। यज्यून्। उत। तेषु।
धेहि। ओजः। जनेषु। येषु। ते। स्याम॥ १३॥ ३१॥

हेइन्द्र धनार्थंयेजनाः त्वांचाकनन्त अकामयन्त पुनश्चते नु क्षिप्रमेवत्वां चाकनन्त हे-अमृत अमरणशीलेन्द्र मर्ताः मरणधर्माणस्तेजनाः अंहोनर्थं मोआरन् मागमन् माउइतिनि-पातसमुदायोमेत्येकनिपातार्थेवर्तते उतापिच यज्यून् यजमानान् ववन्धि संभजस्व येषुजनेषु येषांजनानांमध्ये वयंस्तोतारः तेत्वदीयाःस्याम भवाम हेइन्द्र त्वंतेषुजनेषु ओजोबलंधेहि॥१३॥

१३. हे इन्द्र, हे अमरणशील, जो मनुष्य तुम्हारी कामना करता है और शीघ्रतापूर्वक तुम्हारी अभिलाषा करता है, उस मरणशील मनुष्य का कोई अनर्थ नहीं हो। तुम यजमानों का सम्भजन करो—उनके प्रति प्रसन्न होगो। जिन मनुष्यों के मध्य में हम लोग स्तोता हैं, वे सब तुम्हारे हों। हे इन्द्र, तुम उन मनुष्यों को बल प्रदान करो।

अदर्दरुत्समितिद्वादशर्चमष्टादशंसूक्तं गातुर्नामात्रेयऋषिः त्रिष्टुप्छन्दः इन्द्रोदेवता तथा-चानुक्रान्तं—अदर्दर्द्वादशगातुरिति । गतोविनियोगः ।

तत्रप्रथमा—

अदर्दरुत्समसृजोविखानित्वमर्णवान्बद्बधानाँअरम्णाः ।
महान्तमिन्द्रपर्वतंवियद्वःसृजोविधाराअवदानवंहन् ॥ १ ॥

अदर्दः । उत्सम् । असृजः । वि । खानि । त्वम् । अर्णवान् ।
बद्बधानान् । अरम्णाः । महान्तम् । इन्द्र । पर्वतम् । वि । यत् ।
वरितिवः । सृजः । वि । धाराः । अव । दानवम् । हन्निितिहन् ॥१॥

हेइन्द्र त्वं उत्सं उत्स्यंदमानंमेघं अदर्दः विदारितवानसि तदनंतरं खानि मेघस्थोदका-नांनिर्गमनद्वाराणि व्यसृजः विशेषेणसृष्टवानसि किंच बद्बधानान् बाध्यमानान् अर्णवान् उदकवतोमेघान् अरम्णाः विसर्जयसि क्षारयसीत्यर्थः अत्ररम्णातिविसर्जनकर्मा हेइन्द्र यत् यस्त्वं यदितिलिंगव्यत्ययः महान्तंप्रभूतंपर्वतंमेघं विवः विवृतवानसि धाराः अपांविसृजः विसृष्टवानसि अपिच दानवं दनोःपुत्रं वृत्रमसुरं यद्वा उदकस्यदातारंमेघंवा अवहन् अभि-हतवानसि अत्रनिरुक्तम्—अद्दणाउत्समुत्सउत्सदनाद्वोत्स्यंदनाद्वोनत्तेर्वास्याझसृजोस्यखानित्व-मर्णवानर्णस्वतएतानित्यादि ॥ १ ॥

१. हे इन्द्र, तुमने बरसनेवाले मेघ को विदीर्ण किया है और मेघस्थ जल के निर्गमन द्वार को विसृष्ट किया है—बनाया है। हे इन्द्र, तुमने प्रभूत मेघ को उद्घाटित करके जल बरसाया है एवम् दनुपुत्र वृत्र का संहार किया है।

त्वमुत्साँऋतुभिर्बद्बधानाँअरंहऊधःपर्वतस्यवज्रिन् ।
अहिंचिदुग्रप्रयुतंशयानंजघन्वाँइन्द्रतविषीमधत्थाः ॥ २ ॥

त्वम् । उत्सान् । ऋतुऽभिः । बद्धधानान् । अरंहः । ऊर्धः ।
पर्वतस्य । वज्रिन् । अहिम् । चित् । उग्र । प्रऽयुतम् । शयानम् ।
जघन्वान् । इन्द्र । तविषीम् । अधत्थाः ॥ २ ॥

हेवज्रिन् वज्रवन्निन्द्र त्वं ऋतुभिः ऋतुषुवृष्टिकालेषुबद्धधानान् प्रतिबध्यमानान् उत्सान् मेघान् प्रतिबन्धनादमोचयइतिशेषः अपिच पर्वतस्यमेघस्यसंबन्धि ऊधोबलं अरंहः अगमयः हेउग्र उद्गूर्णबलेन्द्र प्रयुतमुद्युक्तं शयानं जलेशयनंकुर्वन्तं अहिंचिद्वृत्रंचजघन्वान् हतवानसि हेइन्द्र त्वंतविषींबलं अधत्थाः अधारयः वृत्रवधानंतरंइन्द्रोलोकेप्रख्यातोभवतीत्यर्थः ॥ २ ॥

२. हे वज्रवान् इन्द्र, तुम वर्षाकाल में निरुद्ध मेघों को बन्धनमुक्त करो। तुम मेघ को बलसम्पन्न करो। हे उग्र, जल में शयन करनेवाले वृत्र को तुमने मारा है और अपने बल को प्रख्यात किया है अर्थात् वृत्रवध के अनन्तर इन्द्र लोगों के मध्य प्रख्यात होते हैं।

त्यस्यचिन्महतोनिर्मृगस्यवधर्जघानतविषीभिरिन्द्रः ।
यएकइदप्रतिर्मन्यमानआदस्मादन्योअजनिष्टतव्यान् ॥ ३ ॥

त्यस्य । चित् । महतः । निः । मृगस्य । वधः । जघान ।
तविषीभिः । इन्द्रः । यः । एकः । इत् । अप्रतिः । मन्यमानः ।
आत् । अस्मात् । अन्यः । अजनिष्ट । तव्यान् ॥ ३ ॥

निर्जघानायुधंशक्रोवृत्रेणक्षिप्तमोजसा ॥ वृत्रस्यगात्रादन्योन्यःप्रादुर्भूतोमहासुरः ॥ १ ॥
वृत्रंपूर्वंनिहत्येन्द्रोद्वितीयंशुष्णसंज्ञकं ॥ पुनर्जघानेन्द्रइतिपराभिःकीर्तयत्यृषिरिति ॥ २ ॥
इन्द्रोमहतःप्रभूतस्यमृगस्यमृगवच्छीघ्रगामिनः त्यस्यचित् तस्यवृत्रस्यसंबन्धि वधरायुधं तविषीभिः स्वकीयैर्बलैर्निर्जघान निःशेषेणावधीत् एकइत् असहायएव अप्रतिः प्रतिद्वंद्विरहितः मन्यमानाः आत्मानंयोस्तीतिशेषः आत् तदानींअस्मात्वृत्रात् तव्यान् प्रवृद्धतरोन्योसुरः अजनिष्ट प्रादुरभूत् ॥ ३ ॥

३. अप्रतिद्वन्द्वी एकमात्र इन्द्र ने हवि प्रभूत मृग की तरह शीघ्रगामी उस वृत्र के आयुधों को अपने बल-द्वारा विनष्ट किया। उस समय वृत्र के शरीर से दूसरा अतिशय बलवान् असुर प्रादुर्भूत हुआ।

अथचतुर्थी—

त्यंचिदेषांस्वधयामदन्तंमिहोनपातंसुवृधंतमोगाम् ।
वृषप्रभर्मादानवस्यभामंवज्रेणवज्रीनिजघानशुष्णम् ॥ ४ ॥

त्यम् । चित् । एषाम् । स्वधया । मदन्तम् । मिहः । नपातम् ।
सुऽवृधम् । तमःऽगाम् । वृषऽप्रभर्मा । दानवस्य । भामम् ।
वज्रेण । वज्री । नि । जघान । शुष्णम् ॥ ४ ॥

एषांप्राणिनां स्वधयान्नेन मदन्तं मोदमानं सर्वप्राणिनामन्नं स्वयमेवभुंजानं मिहः सेचनसमर्थस्यमेघस्य नपातं पातारंरक्षितारं अत्रनपाच्छब्दःपातरिवर्तते प्राणोवैतनूनपात्सहितन्वःपातीतिब्राह्मणम् । सुवृधंप्रवृद्धं तमोगांतमोन्धकारंगच्छन्तं त्यंचित् तंचवृत्रंनिजघानेतिशेषः वृषप्रभर्मा वर्षणशीलस्यमेघस्यप्रहर्ता वज्रीवज्रवानिन्द्रः वज्रेणस्वकीयेनायुधेन दानवस्य दनुजस्यभामं अत्रक्रोधवाचिभामशब्देनक्रोधादुत्पन्नःशुष्णासुरोलक्ष्यते तंशुष्णमसुरंनिजघान हतवान् ॥ ४ ॥

४. वर्षणशील मेघ के ऊपर प्रहार करनेवाले वज्रधर इन्द्र ने वज्र-द्वारा बलवान् शुष्ण को मारा था। शुष्ण वृत्रासुर के क्रोध से उत्पन्न होकर अन्धकार में विचरण करता था और सेचन-समर्थ मेघ की रक्षा करता था। वह सम्पूर्ण प्राणियों के अन्न को स्वयम् खाकर प्रमुदित होता था।

त्यंचिदस्यक्रतुभिर्निषत्तममर्मणोविददिदस्यमर्म ।
यदींसुक्षत्रप्रभृतामदस्ययुयुत्सन्तंतमसिहर्म्येधाः ॥ ५ ॥

त्यम् । चित् । अस्य । क्रतुऽभिः । निऽसत्तम् । अमर्मणः ।
विदत् । इत् । अस्य । मर्म । यत् । ईम् । सुऽक्षत्र । प्रऽभृता ।
मदस्य । युयुत्सन्तम् । तमसि । हर्म्ये । धाः ॥ ५ ॥

अमर्मणोमर्महीनमात्मानंमन्यमानस्याम्यवृत्रस्यनिषत्तं निषण्णं त्यंचित् त्यत् तदेव लिंगव्यत्ययः मर्म प्राणस्थानं यत्रस्थानेविद्धोम्रियते तन्मर्मेत्युच्यते अस्यवृत्रस्य क्रतुभिः प्रज्ञानैः हेइन्द्र त्वंविददित् अज्ञासीरेव यद्यदा हेसुक्षत्र सुबलेन्द्र त्वं मदस्यमादकस्यसोमस्यप्रभृता प्रभृतौ संभरणेसति युयुत्सन्तं योद्धुमिच्छन्तं ईमेनंवृत्रं हर्म्ये हारके तमसि धाः न्यदधाः वृत्रः इन्द्रस्यभयात्तमसिप्राविशदित्यर्थः ॥ ५ ॥

५. हे इन्द्र, हे बलवान्, मादक सोमरस के पान से हृष्ट होकर तुमने अन्धकार में निमग्न युद्धाभिलाषी वृत्र को जाना था। अपने को मर्महीन (अवध्य) समझनेवाले वृत्र के प्राणस्थान को तुमने उसके कार्यों-द्वारा जाना था।

अथषष्ठी—

त्यंचिदित्थाकत्पयंशयानमसूर्येतमसिवावृधानम् ।
तंचिन्मन्दानोवृषभःसुतस्योच्चैरिन्द्रोअपगूर्याजघान ॥ ६ ॥३२॥

त्यम् । चित् । इत्था । कत्पयम् । शयानम् । असूर्ये । तमसि ।
ववृधानम् । तम् । चित् । मन्दानः । वृषभः । सुतस्य । उच्चैः ।
इन्द्रः । अपऽगूर्य । जघान ॥ ६ ॥ ३२ ॥

सुतस्याभिषुतेनसोमेनमंदानोमोदमानःवृषभः कामानांवर्षितेन्द्रः उच्चैरूर्ध्वं अपगूर्य व-ज्रमुद्यम्य तंचित् तमेववृत्रंजघानावधीत् कीदृशं इत्थामुत्रान्तरिक्षलोके कत्पयं कत्सुखकरंप-योयस्यतं शयानं अप्सुशयानंकुर्वन्तं असूर्ये सूर्यरहिते तमस्यन्धकारे ववृधानं वर्धमानंत्यं चिदितिपुनर्वचनंपूरणार्थम् ॥ ६ ॥

६. वृत्र सुखकर उदक के साथ जल में शयन करता हुआ अन्धकार में वर्द्धमान हो रहा था। अभिशुत सोमपान से हृष्ट होकर अभिलाषाओं के पूरक इन्द्र ने वज्र को ऊपर उठाकर उसे मारा था।

उद्यदिन्द्रोमहतेदानवायवधर्यमिष्टसहोअप्रतीतम् ।
यदींवज्रस्यप्रभृतौददाभविश्वस्यजन्तोरधमंचकार ॥ ७ ॥

उत् । यत् । इन्द्रः । महते । दानवाय । वधः । यमिष्ट । सहः ।
अप्रतिऽइतम् । यत् । ईम् । वज्रस्य । प्रऽभृतौ । ददाभ ।
विश्वस्य । जन्तोः । अधमम् । चकार ॥ ७ ॥

यद्यदाइन्द्रः महतेप्रभूतायदानवाय वृत्रासुराय सहः शत्रूणामभिभवितृअप्रतीतं के-नाप्यप्रतिगतंवधोवज्रंउद्यमिष्ट उदयच्छत् यद्यदावज्रस्यप्रभृतौ प्रहृतौ प्रहरणेसति इन्द्रो-ऽमिंइतिभत्वं ईमेनंवृत्रं ददाभ अहिंसीत् तदाविश्वस्यसर्वस्यजन्तोःप्राणिनः अधमंनीचंचका-र अकरोत् ॥ ७ ॥

७. जब इन्द्र ने उस प्रभूत दानव वृत्र के प्रति विजयी वज्र को उठाया था, जब वज्र के द्वारा उसके ऊपर प्रहार किया था, तब सब प्राणियों के बीच उसे नीच बनाया था।

अथाष्टमी–

त्यंचिदर्णंमधुपंशयानमसिन्वंवव्रंमह्यादंदुग्रः।
अपादंमत्रंमहतावधेननिदुर्योणआवृणङ्मृध्रवांचम् ॥ ८॥

त्यम् । चित् । अर्णम् । मधुऽपम् । शयानम् । असिन्वम् । वव्रम् ।
माहि । आदंत् । उग्रः । अपादम् । अत्रम् । महता । वधेन । नि ।
दुर्योणे । अवृणक् । मृध्रऽवाचम् ॥ ८ ॥

उग्रः उद्गूर्णबलः इन्द्रोमहि महान्तं त्यंचित् तमेववृत्रं आददाददौ प्रत्यग्रहीत् कीदृशं अर्णं गन्तारं जलमेवंवा आवृत्यशयानं शयनंकुर्वन्तं स्थितवन्तमित्यर्थः मधुपं मधुनोंभसःपातारं पालयितारं असिन्वंसपत्नानामवक्षेप्तारं अस्यतेरिदंरूपं वव्रं वृण्वन्तं सर्वमप्याच्छादयन्तं सइमान्लोकानवृणोद्यदिमान्लोकानवृणोत्तद्वृत्रस्यवृत्रत्वमितिहितैत्तिरीयकं। तदनंतरमिन्द्रः दुर्योणे संग्रामे महताप्रभूतेनवधेन वज्रेण अपादं पादरहितं अत्रममानं परिमाणरहितं मृध्रवाचं हिंसितवागिन्द्रियं जृंभाभिभूतमित्यर्थः वृत्रंन्यवृणक् नितरामहिंसीत् तस्माज्जंजभ्यमानात् अग्नीषोमौ निरक्रामतां प्राणापानौवाएनंतदुज्जिहातामितिहितैत्तिरीयकम् ॥ ८ ॥

८. उग्र इन्द्र ने महान्, गमनशील मेघ को घेरकर शयन करनेवाले, जल-रक्षक, शत्रुओं के संहारक और सबको आच्छादित करनेवाले वृत्र को ग्रहण किया और उसके अनन्तर संग्राम में पाद-रहित परिमाण-रहित और जृम्भाभिभूत वृत्र को अपने प्रभूत वज्र-द्वारा भली भाँति से मारा।

अथनवमी–

कोअस्यशुष्मंतविषींवरातएकोधनाभरतेअप्रतीतः।
इमेचिदस्यज्रयसोनुदेवीइन्द्रस्यौजसोभियसाजिहाते ॥ ९ ॥

कः । अस्य । शुष्मम् । तविषीम् । वराते । एकः । धना । भरते ।
अप्रतिऽइतः । इमे इति । चित् । अस्य । ज्रयसः । नु । देवी इति ।
इन्द्रस्य । ओजसः । भियसा । जिहाते इति ॥ ९ ॥

१ तै० सं० २. ४. १२. ।

अस्येन्द्रस्यसंवन्धिनींशुष्मंशोषणींतविषींबलं कोवराते निवारयेत् शुष्मशब्दस्यस्त्री-लिंगविशेषणत्वेपि नियतलिंगत्वात्पुंसिपुल्लिंगत्वमेव अप्रतीतः केनाप्यप्रतिगतइन्द्रः एकोऽसहा-यएव धना धनानि शत्रूणांवसूनि भरते बिभर्ति हरतेवा देवी देव्यौ द्योतमाने इमेचिव एतेएवद्यावापृथिव्यौ जयसोवेगवतोस्येन्द्रस्यसंबन्धिनः ओजसोबलादुद्भूतेनभियसाभयेन नुक्षिप्रं जिहाते गच्छतः चलतइत्यर्थः ॥ ९ ॥

९. इन्द्र के शोषक बल का निवारण कौन कर सकता है ? किसी के द्वारा भी अप्रतीयमान इन्द्र अकेले ही शत्रुओं के धन को हरण करते हैं। द्युतिमान् द्यावा-पृथिवी वेगवान् इन्द्र के बल से भीत होकर शीघ्र ही चलायमान होती हैं।

न्यस्मैदेवीस्वधितिर्जिहीतइन्द्रायगातुरुशतीवयेमे ।
संयदोजोयुवतेविश्वमाभिरनुस्वधाव्नेक्षितयोनमन्त ॥ १० ॥

नि । अस्मै । देवी । स्वऽधितिः । जिहीते । इन्द्राय । गातुः ।
उशतीऽइव । येमे । सम् । यत् । ओजः । युवते । विश्वम् । आभिः ।
अनु । स्वधाऽव्ने । क्षितयः । नमन्त ॥ १० ॥

स्वधितिः स्वधृतिः स्वेनधृतादेवीद्योतमानाद्यौः अस्माइन्द्रायनिजिहीते नीचत्वेनया-ति गातुर्भूमिः उशतीव कामयमानायोषिदिव इन्द्राय येमे आत्मानंनियच्छती यथेष्ट-मात्मानंविनियोक्तुंयोग्याभवतीत्यर्थः यद्यदेन्द्रः विश्वंसमस्तं ओजोबलं आभिः प्रजाभिः संयुवते संयोजयति इन्द्रःस्वकीयंबलं सर्वासुप्रजासुनिहितवानित्यर्थः अनुआनुकूल्येनव-र्तमानाःक्षितयोमनुष्याः क्षितयइतिमनुष्यनामैतत् स्वधाव्नेबलवतइन्द्राय नमन्त सन्नमन्ति प्रह्वीभवंति ॥ १० ॥

१०. स्वयम् धार्यमाण और द्युतिमान् द्युलोक इन्द्र के लिए नीचभाव से गमन करता है। भूमि अभिलाषिणी स्त्री की तरह इन्द्र के लिए आत्म-समर्पण करती है। जब इन्द्र अपने समस्त बल को प्रजाओं के मध्य में स्थापित करते हैं, तब मनुष्यगण अनुक्रम से, बलवान् इन्द्र के लिए नमस्कार करते हैं।

एकंनुत्वासत्पतिंपाञ्चजन्यंजातंशृणोमियशसंजनेषु ।
तंमेजगृभ्रआशसोनविष्ठंदोषावस्तोर्हवमानासइन्द्रम् ॥ ११ ॥

एकंम् । नु । त्वा । सत्ऽपंतिम् । पांचंऽजन्यम् । जातम् । शृणोमि ।
यशसंम् । जनेंषु । तम् । मे । जगृभ्रे । आऽशसंः । नविंष्ठम् ।
दोषा । वस्तोंः । हवंमानासः । इन्द्रंम् ॥ ११ ॥

हेइन्द्र त्वा त्वां एकंनु मुख्यमेव जनेषुसर्वेषुमनुष्येषुमध्ये अहं मंत्रद्रष्टाशृणोमि ऋषिमुख्येभ्यः कीदृशं सत्पतिं सतांपालकं पांचजन्यं पंचजनेभ्योमनुष्येभ्योहितं जातमुत्पन्नं यशसं यशोयुक्तं दोषा क्षपायां वस्तोर्वासरेच वहमानासः स्तुवन्तः आशसः कामानांशंसमानाः मे मदीयाःप्रजाः नविष्ठं अतिशयेनस्तुत्यं तमिन्द्रंजगृभ्रे गृह्णन्तु स्वीकुर्वन्तु ॥ ११ ॥

११. हे इन्द्र, हमने ऋषियों से सुना है कि तुम मनुष्यों के मध्य में मुख्य हो, सज्जनों के पालक हो, पञ्चजन मनुष्यों के हित के लिए उत्पन्न हुए हो और यशोयुक्त हो। दिन-रात स्तुति करनेवाली और अपनी अभिलाषाओं को कहनेवाली हमारी सन्तान स्तुतियोग्य इन्द्र को प्राप्त करे।

एवाहित्वामृतुथायातयन्तंमघाविप्रेभ्योददंतंशृणोमि ।
किंतेब्रह्माणोगृहतेसखायोयेत्वायानिदधुःकाममिन्द्र ॥१२॥२३॥

एव । हि । त्वाम् । ऋतुऽथा । यातयंन्तम् । मघा । विप्रेभ्यः ।
ददंतम् । शृणोमि । किम् । ते । ब्रह्माणः । गृहते । सखायः । ये ।
त्वाऽया । निऽदधुः । कामंम् । इन्द्र ॥ १२ ॥ २३॥

एवएवमुक्तेनप्रकारेण हि ऋतुथा कालेकालेयातयन्तं जंतून्प्रेरयन्तं हेइन्द्र त्वां विप्रेभ्यःस्तोतृभ्यः मघा मघानि धनानि ददतं यच्छन्तं शृणोमि निशामयामि एतन्मृषैवप्रतिभाति हेइन्द्र त्वाया त्वयि येस्तोतारः कामंस्वकीयाभिलाषंनिदधुः न्यक्षिपन् ब्रह्माणोबृहन्तः तेत्वदीयाःसखायःस्तोतारः किं गृहते त्वत्तःकिंगृह्णन्ते ऋषिःस्वकीयाभिलाषप्राप्तिविलंबनादेवमुक्तवानित्यर्थः ॥ १२ ॥

१२. हे इन्द्र, हमने सुना है कि तुम समय-समय पर जन्तुओं को प्रेरित करते हो और स्तोताओं को धन प्रदान करते हो, यह झूठ ही मालूम पड़ता है। हे इन्द्र, जो स्तोता तुममें अपनी अभिलाषा स्थापित करते हैं, तुम्हारे वे महान् सखा तुमसे क्या प्राप्त करते हैं?

॥ इतिचतुर्थस्यप्रथमेत्रयस्त्रिंशोवर्गः॥ ३३ ॥

॥ इतिपंचमेमंडलेद्वितीयोनुवाकः ॥ २ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येचतुर्थाष्टकेप्रथमोध्यायः ॥ १ ॥



## ॥ श्रीगणेशायनमः ॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् । निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥
चतुर्थेप्रथमाध्यायंव्याख्यायव्याकृतिक्षमः । सुधीःश्रीसायणाचार्योद्वितीयंव्याचिकीर्षति॥२॥
तत्रात्रेःपंचमेमंडलेतृतीयेनुवाकेद्वादशसूक्तानि तत्रमहिमहइतिदशर्चंप्रथमंसूक्तं प्रजापतिपुत्रःसंवरणऋषिः त्रिष्टुपछन्दः इन्द्रोदेवता तथाचानुक्रान्तं—महिदशप्राजापत्यःसंवरणइति । विनियोगोलैंगिकः ।

तत्रप्रथमा—

ॐम् महिमहेतवसेदीध्येनूनिन्द्रायेत्थातवसेअतव्यान् ।
योअस्मैसुमतिंवाजसातौस्तुतोजनेसमर्यश्चिकेत ॥ १ ॥

महि । महे । तवसे । दीध्ये । नॄन् । इन्द्राय । इत्था । तवसे ।
अतव्यान् । यः । अस्मै । सुऽमतिम् । वाजऽसातौ । स्तुतः ।
जने । सऽमर्यः । चिकेत ॥ १ ॥

अहंसंवरणःअतव्यान् अत्यन्तमिवदुर्बलःसन् महि महत् प्रभूतंस्तोत्रं महे महते तवसे बलवतइन्द्रायेत्था इत्थंवक्ष्यमाणप्रकारेणदीध्ये दीपयामि प्रकाशयामि किमर्थं नॄन षष्ठ्यर्थेद्वितीया मनुष्याणामस्मदीयानांतवसेबलाय यद्वा नॄनस्मद्विरोधिनामभिभवायेतिशेषः तदर्थंतवसेस्मद्बलाय इन्द्रोस्मैजने जनायसंवरणाय वाजसातौ संग्रामे वाजस्यान्नस्यवालाभेनिमित्तेसतिस्तुतःसन् सुमतिं समर्यः मर्त्यैःस्तोतृभिःसहितः यद्वा सह म्रियमाणैर्युध्यमानैर्मरुदादिभिः अथवा समरार्हः चिकेत जानाति ॥ १ ॥

१. हम सम्बरण ऋषि अत्यन्त दुर्बल हैं। हम महाबलवान् इन्द्र के लिए प्रभूत स्तोत्र करते हैं, जिससे हमारी तरह के मनुष्य बलवान् हों। संग्राम में अन्न लाभ के लिए स्तुत होने पर इन्द्र स्तोताओं के साथ हमारे (सम्बरण के) प्रति अनुग्रह प्रदर्शन करें।

अथद्वितीया—

सत्वंनइन्द्रधियसानोअर्कैर्हरीणांवृषन्योक्त्रमश्रेः ।
४ याइत्थामघवन्ननुजोषंवक्षोअभिप्रार्यःसंक्षिजनान् ॥ २ ॥

सः। त्वम्। नः। इन्द्र। धियसानः। अर्कैः। हरीणाम्। वृषन्।
योक्त्रम्। अश्रेः। याः। इत्था। मघऽवन्। अनु। जोषम्।
वक्षः। अभि। प्र। अर्यः। सक्षि। जनान्॥ २॥

हेवृषन् वर्षकेन्द्र समसिद्धस्त्वंनोस्मान्धियसानोध्यायन् अर्कैरर्चनसाधनैःस्तोत्रैर्निमित्तभूतैः हरीणांरथेनियोज्यानामश्वानांयोक्त्रंनियोजनरज्जुमश्रेः आश्रयसि याः लिंगव्यत्ययः यानर्कान् हेमघवन् इत्थाइत्थं जोषं प्रीतिं अनुवक्षोऽवहस्तैर्निमित्तैर्योक्त्रमश्रेरिति तथाकृत्वा अर्योस्मदरीन्जनान् अभि आभिमुख्येन प्र प्रकृष्टं सक्षि पराभव॥ २॥

२. हे अभिलाषाओं को पूर्ण करनेवाले इन्द्र, तुम हम लोगों का ध्यान करते हुए एवम् जो स्तोत्र तुम्हें प्रीति उत्पन्न करें, उन स्तोत्रों-द्वारा रथ में जुते हुए घोड़ों की लगाम को ग्रहण करते हो। हे मघवा, इस तरह से तुम हमारे शत्रुओं को पराभूत करो।

नतेतंइन्द्राभ्य१स्मदृष्वायुक्तासोअब्रह्मतायदसंन्।
तिष्ठारथमधितंवज्रहस्तारश्मिन्देवयमसेस्वश्वः॥ ३॥

न। ते। ते। इन्द्र। अभि। अस्मत्। ऋष्व। अयुक्तासः।
अब्रह्मता। यत्। असन्। तिष्ठ। रथम्। अधि। तम्।
वज्रऽहस्त। आ। रश्मिम्। देव। यमसे। सुऽअश्वः॥ ३॥

हेऋष्व महन् इन्द्र यत् ये अस्मदस्मत्तः त्वद्भक्तेभ्योन्ये अयुक्तासः त्वया असंयुक्ताअसन् आसन् अभवन् अब्रह्मता ब्रह्मपरिवृढंकर्मतद्रहितत्वात् तेनरास्तेत्वदीयानभवन्ति अतोस्मद्यज्ञमभ्यागन्तुं तं प्रसिद्धं रथं अधितिष्ठ हेवज्रहस्तेन्द्र देव स्वश्वः त्वंयंरथमारोढुंरश्मिंप्रग्रहं आयमसे नियमयसितमधितिष्ठ॥ ३॥

३. हे तेजोविशिष्ट इन्द्र, जो मनुष्य तुम्हारे भक्तों से भिन्न हैं और जो तुम्हारे साथ नहीं रहता है, ब्रह्मकर्म से हीन होने के कारण वह मनुष्य तुम्हारा नहीं है। हे वज्रधारी इन्द्र, इसलिए तुम हमारे यज्ञ में आने के लिए उस रथ पर आरोहण करो, जिस रथ का सञ्चालन तुम स्वयम् करते हो।

पुरूयत्तइन्द्रसन्त्युक्थागवेचकर्थोर्वरासुयुध्यंन्।
ततक्षेसूर्यायचिदोकसिस्वेवृषासमत्सुदासस्यनामचित्॥ ४॥

पुरु। यत्। ते। इन्द्र। सन्ति। उक्था। गवे। चकर्थ। उर्वरासु।

युध्य॑न् । त॒तक्षे । सूर्या॑य । चि॒त् । ओक॑सि । स्वे । वृषा॑ ।
स॒मत्ऽसु॑ । दा॒सस्य॑ । नाम॑ । चि॒त् ॥ ४ ॥

हेइन्द्र ते तव यद्यदास्वभूतानि पुरु पुरूणि बहूनि उक्था उक्थानिशस्त्राणिसन्ति तदा उर्वरासु सस्योपेतासुभूमिषु निमित्तभूतासु गवे वृष्ट्युदकाय युध्यन् जलप्रतिबन्धकान् संहरन् चकर्थ करोषि भेदनं कुनेतिसूर्याय सूर्यस्यस्वेस्वकीयेओकसिस्थाने वृषा वर्षितासन् ततक्षे भेदनं संपादयसि समत्सु संग्रामेषु दासस्य वृष्टिप्रतिबन्धकर्तुरेतन्नामकस्यासुरस्य नामचित् नामापि ततक्षे नाशयसीत्यर्थः ॥ ४ ॥

४. हे इन्द्र, तुम्हारे स्वविषयक अनेक स्तोत्र हैं; इसी लिए तुम उर्वरा भूमि के ऊपर जल वर्षण करने के लिए वृष्टि-निरोधकारकों का संहार करते हो। तुम कामनाओं के पूरक हो। तुम सूर्य के अपने स्थान में वृष्टि प्रतिबन्धकारक दासों के साथ युद्ध करके, उनके नाम तक को नष्ट कर देते हो।

व॒यंतेत॑इन्द्र॒येच॒नर॒ःशर्धो॑जज्ञा॒नाया॒ताश्च॒रथा॑ः ।
आस्माञ्ज॑गम्यादहिशुष्म॒सत्वा॒भगो॒नहव्य॑ःप्रभृ॒थेषु॒चारु॑ः ॥५॥१॥

व॒यम् । ते । ते॒ । इ॒न्द्र॒ । ये । च॒ । नर॑ः । शर्ध॑ः । ज॒ज्ञा॒नाः ।
या॒ताः । च॒ । रथा॑ः । आ । अ॒स्मान् । ज॒ग॒म्या॒त् । अ॒हि॒ऽशु॒ष्म॒ ।
सत्वा॑ । भग॑ः । न । हव्य॑ः । प्र॒ऽभृ॒थेषु॑ । चारु॑ः ॥ ५ ॥ १ ॥

हेइन्द्र येचनरः कर्मणांनेतारऋत्विग्यजमानाःवयंस्मः तेवयं ते त्वदीयाः कीदृशावयं शर्धोबलंजज्ञानाः उत्पादयन्तः स्तुतिभिः याताश्चहोतुंत्वांप्राप्ताश्च रथाःरंहणशीलाश्च किंच हेअहिशुष्मअहिरयनावसर्वतोव्याप्तबलेन्द्र त्वदनुग्रहात् हव्यः स्तुत्यः प्रतिभटैराह्वातव्योवा चारुःसंगंता सत्वाभृत्यादिः प्रभृथेषुसंग्रामेषुवा अस्मानाजगम्यात् आगच्छेत् भगोन भगइव हव्यश्चारुः भगदेवोयथास्मत्सहायआगच्छति तथा भृत्यादिरागच्छेदित्यर्थः ॥ ५ ॥

५. हे इन्द्र, हम लोग जो ऋत्विक् यजमान आदि हैं, वे सब तुम्हारे हैं। यज्ञ करके हम लोग तुम्हारे बल को वर्द्धित करते हैं और होम करने के लिए तुम्हारे निकट उपस्थित होते हैं। हे इन्द्र, तुम्हारा बल सर्वव्यापी है। तुम्हारे अनुग्रह से युद्ध-क्षेत्र में भग की तरह प्रशंसनीय (चारु) विश्वस्त भृत्य आदि हमारे निकट आवें।

प॒पृ॒क्षेण्य॑मिन्द्र॒त्वेह्योजो॑नृ॒म्णानि॑चनृ॒तमा॑नो॒अम॑र्तः ।
सन॒एनीं॑वसवानोर॒यिंदा॒ःप्रार्यस्तु॑षेतुविम॒घस्य॒दान॑म् ॥ ६ ॥

पपृक्षेण्यम् । इन्द्र । त्वे इति । हि । ओजः । नृम्णानि । च ।
नृतमानः । अमर्तः । सः । नः । एनीम् । वसवानः । रयिम् । दाः ।
प्र । अर्यः । स्तुषे । तुविऽमघस्य । दानम् ॥ ६ ॥

हेइन्द्र पपृक्षेण्यं संपर्कार्हं पूज्यंवा ओजोबलंत्वेहि त्वयिखलु त्वदधीनमित्यर्थः नृतमानोनृत्यन्नमर्तोमरणधर्मा सत्वं वसवानः आच्छादयन् स्वतेजसाजगत् नृम्णानि नृमणानि द्रविणानि वक्ष्यमाणरय्यपेक्षयाचशब्दः एनीं एनवर्णां श्वेतवर्णां नोस्मभ्यंरयिंधनंदाः देहि अहंच अर्यईश्वरस्यतुविमघस्य प्रभूतधनस्यचदानंप्रस्तुषे स्तौमि ॥ ६ ॥

६. हे इन्द्र, तुम्हारा बल पूजनीय है। तुम सर्वव्यापी और अमरणशील हो। अपने तेज से तुम जगत् को आच्छादित करके श्वेतवर्ण का प्रभूत धन हम लोगों को दो। हम लोग प्रभूत धनवाले दाता के दान की स्तुति करते हैं।

एवानइन्द्रोतिभिरवपाहिगृणतःशूरकारून् ।
उतत्वचंददतोवाजसातौपिप्रीहिमध्वःसुषुतस्यचारोः ॥ ७ ॥

एव । नः । इन्द्र । ऊतिऽभिः । अव । पाहि । गृणतः । शूर ।
कारून् । उत । त्वचम् । ददतः । वाजऽसातौ । पिप्रीहि ।
मध्वः । सुऽसुतस्य । चारोः ॥ ७ ॥

हेशूरेन्द्र एव एवं नोस्मान्गृणतः स्तुवतः कारून् कर्तॄन् ऋत्विजः ऊतिभिः रक्षणैः अवपाहि अवपालय उतापिच वाजसातौ संग्रामे त्वचं आच्छादकंरूपंददतः प्रयच्छतः सुषुतस्यसुष्ठ्वभिषुतस्यचारोर्मनोहरस्यमध्वः सोमस्य पिप्रीहि प्रीणयात्मानं द्वितीयार्थेषष्ठी उक्तलक्षणंसोमंपिबेत्यर्थः अथवा तृतीयार्थेषष्ठी उक्तलक्षणेनसोमपानेनप्रीणय ॥ ७ ॥

७. हे शूर इन्द्र, हम लोग तुम्हारी स्तुति करते हैं और यजन करते हैं। रक्षा-द्वारा तुम हम लोगों का पालन करो। संग्राम में तुम अपने आच्छादक रूप को प्रदान करके हमारे अभिषुत सोमरस के द्वारा सन्तुष्ट होओ।

उतत्येमापौरुकुत्स्यस्यसूरेस्त्रसदस्योर्हिरणिनोरराणाः ।
वहन्तुमादशश्येतासोअस्यगैरिक्षितस्यक्रतुभिर्नुसश्चे ॥ ८ ॥
उत । त्ये । मा । पौरुऽकुत्स्यस्य । सूरेः । त्रसदस्योः । हिरणिनः ।
रराणाः । वहन्तु । मा । दश । श्येतासः । अस्य । गैरिऽक्षितस्य ।
क्रतुऽभिः । नु । सश्चे ॥ ८ ॥

त्रसदस्युश्चविदथोध्वन्यश्चेतित्रयोनृपाः अश्वान्धनानिगाश्चादुर्ऋषये तद्ददत्पृषिः उत अपिच त्ये ते मा चतुर्थ्यर्थेद्वितीया मह्यमित्यर्थः रराणाः रातेर्दानार्थस्यकर्मणिलिटःकानचिल्रर्थं दत्ताइत्यर्थः पौरुकुत्स्यस्य पुरुकुत्सापत्यस्य सूरेः प्रेरकस्य हिरणिनोहिरण्यवतोस्य त्रसदस्योः एतन्नामकस्यराजर्षेः गैरिक्षितस्य गिरिक्षितगोत्रोत्पन्नस्य श्वेतासः शुभ्रवर्णाः दशाश्वाः मा मां वहन्तु प्रापयन्तु अहंचक्रतुभिःकर्मभीरथनियोजनादिभिः यज्ञादिभिर्वानु क्षिप्रं सश्चे गच्छेयम् ॥ ८ ॥

८. गिरिक्षित-गोत्रोत्पन्न पुरुकुत्स के पुत्र त्रसदस्यु हिरण्यवान् और प्रेरक हैं। उन्होंने हमें जो दस अश्व प्रदान किये थे, वे शुभ्रवर्णवाले दसों अश्व हमें वहन करें। रथनियोजनादि कार्यों-द्वारा हम शीघ्र ही गमन करें।

उतत्येमामारुताश्वस्यशोणाःक्रत्वामघासोविदथस्यरातौ।
सहस्रामेच्यवतानोददानआनूकमर्योवपुषेनार्चत् ॥ ९ ॥

उत । त्ये । मा । मारुतऽअश्वस्य । शोणाः । क्रत्वाऽमघासः ।
विदथस्य । रातौ । सहस्रा । मे । च्यवतानः । ददानः ।
आनूकम् । अर्यः । वपुषे । न । आर्चत् ॥ ९ ॥

उत अपिच त्ये तेअश्वाः वक्ष्यमाणाः मारुताश्वस्य मरुतसदृशवेगाश्ववान् मरुताश्वः तदपत्यस्यविदथस्यैतन्नामकस्यराज्ञःशोणाःशोणवर्णाःक्रत्वामघासः क्रतुनाकर्मणाशीघ्रगमनादिलक्षणेनमहनीयाः अश्वाःरातौदानेविनियुक्तामांवहन्तीतिशेषः किंच सहस्रा सहस्राणि अपरिमितानिधनानिअर्यः पूज्यस्य मे चतुर्थ्यर्थेषष्ठी पूज्याय मह्यंच्यवतानः च्यावयन् ददानः प्रयच्छन् सः आनूकं आभरणंच वपुषे स्वशरीरालंकाराय आर्चत् प्रायच्छत् नेतिचार्थे ॥ ९ ॥

९. मरुताश्व के पुत्र विदथ ने हमारे लिए जिन रक्तवर्ण और श्रेष्ठ (शीघ्रगामी) अश्वों को प्रदान किया था, वे हमें वहन करें। उन्होंने हम पूज्य को सहस्र परिमित धन दिया है और अपने शरीर का अलंकार प्रदान किया है।

उतत्येमाध्वन्यस्यजुष्टालक्ष्मण्यस्यसुरुचोयतानाः।
मह्नारायःसंवरणस्यऋषेर्व्रजंनगावःप्रयताअपिग्मन् ॥ १० ॥२॥

उत । त्ये । मा । ध्वन्यस्य । जुष्टाः । लक्ष्मण्यस्य । सुऽरुचः ।
यतानाः । मह्ना । रायः । सम्ऽवरणस्य । ऋषेः । व्रजम् । न ।
गावः । प्रऽयताः । अपि । ग्मन् ॥ १० ॥ २ ॥

उतापिच त्ये ते वक्ष्यमाणारायः ध्वन्यस्य ध्वन्यनामकस्यलक्ष्मण्यस्य लक्ष्मणपुत्रस्य

राज्ञःसंबन्धिनोश्वाः जुष्टाः मांप्राप्ताः सुरुचः शोभनदीप्तयः यतानाः वहमानाययतमानाः रायःमह्नामहत्त्वेनयुक्ताराय: प्रयता: दत्ताःसत्य: संवरणस्यऋषेःअपिग्मन् अपिगताः प्राप्तामद्गृहमितिशेषः व्रजंनगावः गोष्ठंगावइव यद्वा नेतिचार्थे गावश्चममंव्रजंअपिग्मन् अत्रैन्द्रेसूक्तेमायेणैन्द्रमरुतोराज्ञांचदानस्तुतयइत्युक्तत्वाद्राज्ञांदानस्तुतिरविरुद्धा ॥ १० ॥

१०. लक्ष्मण के पुत्र ध्वन्य ने हमें जो दीप्तिमान् और कर्मक्षम अश्व प्रदान किया था, वह हमें वहन करे। गौएँ जैसे, गोचरण-स्थान (गोष्ठ) को प्राप्त करती हैं, उसी तरह से उनके (ध्वन्य) द्वारा प्रदत्त महान् धन सम्वरण ऋषि के गृह में उपस्थित हो।

अजातशत्रुमितिनवर्चंद्वितीयंसूक्तं प्राजापत्यस्यसंवरणस्यार्षमैन्द्रं नवमीत्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषयाजगत्यः अजातशत्रुंनवत्रिष्टुबन्तमित्यनुक्रमणिका। विनियोगोलैंगिकः।

अजातशत्रुमजरास्वर्वत्यनुस्वधामितादस्ममीयते।
सुनोतनपचतब्रह्मवाहसेपुरुष्टुतायप्रतरंदधातन ॥ १ ॥

अजातऽशत्रुम्। अजरा। स्वःऽवती। अनु। स्वधा। अमिता। दस्मम्। ईयते। सुनोतन। पचत। ब्रह्मऽवाहसे। पुरुऽस्तुताय। प्रऽतरम्। दधातन ॥ १ ॥

अजातशत्रुं अनुत्पन्नाःशातयितारोयस्यतं दस्मं शत्रूणामुपक्षपयितारं अजरा अक्षीणा स्वर्वतीस्वरणवतीअमिता अपरिमिता स्वधा अन्नं हविरन्वीयते अनुप्राप्नोति तदर्थं हेऋत्विजः सुनोतन अभिषुणुत पचत पुरोडाशादिकं कस्मै ब्रह्मवाहसे ब्रह्मणःपरिवृढस्यस्तोत्रस्यवाहकायपुरुष्टुतायबहुभिःस्तुतायेन्द्राय प्रतरं प्रकृष्टतरं दधातन धारयत स्वस्वोचितकर्म ॥ १ ॥

१. जिनके शत्रु उत्पन्न नहीं हुए हैं और जो शत्रुओं का विनाश करते हैं, उन्हें अक्षीण, स्वर्गप्रद और अपरिमित हव्य प्राप्त करते हैं। हे ऋत्विको, उन्हीं इन्द्र के लिए तुम लोग पुरोडाश आदि का पाक करो और अपने उचित कर्म को धारण करो। इन्द्र स्तोत्रवाहक हैं और बहुस्तुत हैं।

आयःसोमेनजठरमपिप्रतामन्दतमघवामध्वोअन्धसः।
यदींमृगायहन्तवेमहावधःसहस्रभृष्टिमुशनावधंयमत् ॥ २ ॥

आ। यः। सोमेन। जठरम्। अपिप्रत। अमन्दत। मघऽवा। मध्वः। अन्धसः। यत्। ईम्। मृगाय। हन्तवे। महाऽवधः। सहस्रऽभृष्टिम्। उशना। वधम्। यमत् ॥ २ ॥

योमघवा-सोमेनजठरंस्वकीयं आसर्वतः अपिमत अपूरयत् मध्वोमधुरसस्यान्धसःसो-मस्यपानेनामंदतातृप्यत् यद्यदा ईमयंमृगायैतन्नामकायासुरायहन्तवे तंहन्तुंमहावधः महावज्रः सहस्रभृष्टिरपरिमिततेजाः उशनाकामयमानःशत्रुं यद्वा उशनसासहवधं वज्रंयमत् उदयंच्छत् तदापिमतामंदत ॥ २ ॥

२. इन्द्र ने सोमरस-द्वारा अपने जठर को परिपूर्ण किया था और मधुर सोमपान से प्रमुदित हुए थे, जब कि मृगनामक असुर को मारने की इच्छा करके उन्होंने अपरिमित तेजवाले महान् वज्र को ऊपर उठाया था

**योअ॑स्मैघ्रं॒सउ॒तवा॒यऊध॑नि॒सोमं॑सु॒नोति॒भव॑तिद्यु॒माँअह॑ ।**
**अपा॑पश॒क्रस्त॑त॒नुष्टि॑मूहति॒तनू॑शु॒भ्रंम॒घवा॒यःक॑वास॒खः ॥ ३ ॥**

**यः । अ॒स्मै । घ्रंसे । उ॒त । वा॒ । यः । ऊध॑नि । सोम॑म् । सु॒नोति॑ । भव॑ति । द्यु॒ऽमान् । अह॑ । अप॑ऽअप । श॒क्रः । त॒त॒नुष्टि॑म् । ऊ॒ह॒ति॒ । तनू॑ऽशु॒भ्रम् । म॒घऽवा॑ । यः । क॒व॒ऽस॒खः ॥ ३ ॥**

योयजमानः अस्मैइन्द्राय घ्रंसे अहर्नामैतत् गृह्यन्तेस्मिन्रसाइतिघ्रंसः तस्मिन् उतवा अथवा योयजमानः ऊधनि उद्धततरंभवति उन्नद्धमितिवाऊधोरात्रिः स्नेहमदानरसाभ्यामूध-सि रात्रौच समत्वात् रात्रेरप्यूधउच्यते अहनिरात्रौच सोमंसुनोति सभवतिद्युमान्दीप्तिमान् अहेति विनिग्रहार्थीयः किंच शक्रः शक्तोयमिन्द्रः ततनुष्टिं ततं धर्मसन्ततिं नुदति वष्टि का-मयते कामानितिततनुष्टिः तंतनूशुभ्रं तनूःशुभ्राशोभनीयालंकारादिभिर्यस्यतंतादृशं स्वपोषकमय-ज्वानं अपोहति अपरोपशब्दःपूरणः मघवा धनवान् यःकवासखःकुत्सितपुरुषसहायःतमपो-हतीति ॥ ३ ॥ जो यजमान इन्द्र के लिए अहर्निश सोमाभिषव करते हैं, वे द्युतिमान् होते हैं। जो यजमान यज्ञ नहीं करते हैं; लेकिन धर्म-सन्तति की कामना करते हैं और शोभनीय अलंकार आदि धारण करते हैं तथा धनवान् होकर कुत्सित पुरुषों का साहाय्य करते हैं, समर्थ इन्द्र उन्हें छोड़ देते हैं।

**यस्या॒वधी॑त्पि॒तरं॒यस्य॑मा॒तरं॒यस्य॑श॒क्रोभ्रात॑रं॒नात॑ईषते ।**
**वेती॒द्व॑स्यप्र॒यंता॒यतंक॒रोनकिल्बि॑षादीषते॒वस्व॑आक॒रः ॥ ४ ॥**

**यस्य॑ । अव॑धीत् । पि॒तर॑म् । यस्य॑ । मा॒तर॑म् । यस्य॑ । श॒क्रः । भ्रात॑रम् । न । अतः॑ । ई॒ष॒ते॒ । वेति॑ । इत् । ऊँ॒ इति॑ । अ॒स्य॒ । प्रऽय॑ता । य॒तम्ऽक॒रः । न । किल्बि॑षात् । ई॒ष॒ते॒ । वस्वः॑ । आ॒ऽक॒रः ॥ ४ ॥**

शक्रःशक्तोयं यस्यापज्वनः पितरं अवधीत् हतवान् यश्यचमातरंअवधीत् यस्य चभ्रातरं अतोस्मात् अयज्वनःसकाशात् नेषते नबिभेति नगच्छतिवा किंत्वस्यप्रयता

प्रदत्तानिहवींषि वेतीदु कामयतएव अयज्वानं शिक्षयित्वानियोजयतीत्यर्थः यतंकरः य-मनकर्ता वस्वोवसुनोधनस्य आकरः आभिमुख्यकर्तायःकिल्बिषात् पित्रादिधनयुक्ताव् नेषते नचलति नबिभेतिवा इन्द्रस्यास्तोतॄणांहतिरिन्द्रोयतीन्सालावृकेभ्यःप्रायच्छत् अंत-रिक्षेपौलोमान्पृथिव्यांकालकांज्यान् अरुन्मुखान्यतीन् सालावृकेभ्यः प्रायच्छमित्यादिश्रु-तिषुप्रसिद्धा ४. समर्थ इन्द्र के जिन यष्टा ने माता-पिता और भ्राता का वध किया है, उस यष्टा के निकट से भी इन्द्र दूर नहीं जाते हैं और उसके द्वारा प्रदत्त हव्य की कामना भी करते हैं। शासक और धनाधिपति इन्द्र पाप से भी विचलित नहीं होते हैं।

नपञ्चभिर्दशभिर्वष्ट्यारभंनासुन्वतासचतेपुष्यताचन ।
जिनातिवेदमुयाहन्तिवाधुनिरादेवयुंभजतिगोमतिव्रजे ॥५॥३॥

न । पंचऽभिः । दशऽभिः । वष्टि । आऽरभम् । न । असुन्वता ।
सचते । पुष्यता । चन । जिनाति । वा । इत् । अमुया । हन्ति ।
वा । धुनिः । आ । देवऽयुम् । भजति । गोऽमति । व्रजे॥ ५ ॥ ३ ॥

अयमिन्द्रः पंचभिर्दशभिर्वासहायैरारभं आरभंशत्रुहननायालंबनंनवष्टि साहाय्यं नापेक्षतइत्यर्थः यद्वा अमुमिन्द्रं पंचभिर्दशभिर्वायज्ञादन्यैरुपायैरारभमारब्धमुद्योगंकर्तुंनवष्टि नकामयते असुन्वता अभिषवमकुर्वता सहपुष्यताच न बंध्वादीनपोषयतापि नसचते नसं-गच्छते असुन्वंतं अभिषवमकुर्वाणं अयष्टारं अपुष्णंतंचनप्राप्नोतीत्यर्थः नकेवलमप्राप्तिमा-त्रं किंतु जिनातिवा वाशब्दश्चार्थे जिनातिच बाधते इदितिपूरणः हन्तिवामुया अमुमयष्टा-रं धुनिः कंपकःशत्रूणां देवयुंदेवमिन्द्रंकामयमानं यजमानं गोमति व्रजे आभजति जयती त्यर्थः॥ ५॥ शत्रुओं को मारने के लिए इन्द्र पाँच या दस सहायकों की कामना नहीं करते हैं। जो सोमाभिषव नहीं करता है और बन्धुओं का पोषण नहीं करता है, उसके साथ इन्द्र संगति नहीं करते हैं। शत्रुओं के कम्पक इन्द्र उसे बाधा पहुंचाते हैं और उसका वध करते हैं। इन्द्र यज्ञ करनेवाले यजमानों के गोष्ठ को गोविशिष्ट करते हैं।

वित्वक्षणःसमृतौचक्रमासजोसुन्वतोविषुणःसुन्वतोवृधः ।
इन्द्रोविश्वस्यदमिताविभीषणोयथावशंनयतिदासमार्यः ॥ ६ ॥

विऽत्वक्षणः । समऽऋतौ । चक्रमऽआसजः । असुन्वतः । विषुणः ।
सुन्वतः । वृधः । इन्द्रः । विश्वस्य । दमिता । विऽभीषणः ।
यथाऽवशम् । नयति । दासम् । आर्यः ॥ ६ ॥

सम्प्रतौसंग्रामेवित्वक्षणः विशेषेणतनूकर्ताशत्रूणांतदर्थंचक्रमासजः रथचक्रस्यासंजयिता असुन्वतोयजमानस्यविषुणःपराङ्मुखःसुन्वतोयजमानस्यवृधोवर्धयिताइन्द्रोविश्वस्यदमिताशिक्षयिताविभीषणःभयजनकःआर्यःस्वामी यथावशंयथेच्छंदासंदासकर्माणंजनंनयतिस्ववशम्॥६॥

६. संग्राम में शत्रुओं को क्षीण करनेवाले इन्द्र रथचक्र को वेगवान् करते हैं। सोमाभिषव नहीं करनेवाले यजमान से वे दूर रहते हैं और सोमाभिषव करनेवाले यजमान को वर्द्धित करते हैं। विश्वशिक्षक और भयजनक स्वामी इन्द्र यथेच्छ दासकर्म करनेवाले को अपने वश में लाते हैं।

समींपणेरंजतिभोजनंमुषेविदाशुषेभजतिसूनरंवसु।
दुर्गेचनध्रियतेविश्वआपुरुजनोयोअस्यतविषीमचुक्रुधत्॥७॥

सम्। ईम्। पणेः। अजति। भोजनम्। मुषे। वि। दाशुषे।
भजति। सूनरम्। वसु। दुःऽगे। चन। ध्रियते। विश्वः। आ।
पुरु। जनः। यः। अस्य। तविषीम्। अचुक्रुधत्॥७॥

ईमयमिन्द्रः पणेर्वणिजइव लुब्धकस्यादातुर्भोजनंधनमन्नंवामुषेचोरयितुंसमजति सम्यग्गच्छति गत्वाचादायदाशुषेहविर्दात्रेयजमानायविभजति सूनरंशोभनमनुष्यंवसुधनं अयष्टुर्धनमाकृष्ययष्ट्रेप्रयच्छतीत्यर्थः नकेवलंवणिक्धनप्रदानमात्रं किंतु पुरुपुरूणिबहून्यन्यान्यपिधनानि किंच दुर्गेचनदुःखेननगन्तव्ये आपद्यपिविश्वःसर्वोपिदातृजनः आध्रियते आस्थाप्यते योजनः अस्येन्द्रस्यतविषींबलमचुक्रुधत् विहिताकरणादिनातस्यपणेरजतीतिपूर्वंशेषः यद्वा योस्यतविषीमचुक्रुधत् ससर्वोपिजनोदुर्गेचनाध्रियते इन्द्रेणचनेत्येकपदमध्येतृसंप्रदायप्राप्तम्॥७॥इन्द्र बनियों (लोभियों) की तरह धन चुराने के लिए गमन करते हैं और मनुष्यों की शोभा को बढ़ानेवाले उस धन को तथा बहुविध अन्य धन को लाकर यजन करनेवाले यजमानों को देते हैं अर्थात् यज्ञ नहीं करनेवालों का धन यज्ञ करनेवालों को देते हैं। जो व्यक्ति इन्द्र के बल को क्रुद्ध करता है अर्थात् बली इन्द्र को कोपयुक्त करता है, वह व्यक्ति महाविपद् में स्थापित होता है।

संयज्जनौसुधनौविश्वशर्धसाववेदिन्द्रोमघवागोषुशुभ्रिषु।
युजंह्य१न्यमकृतप्रवेपन्युदींगव्यंसृजतेसत्वभिर्धुनिः॥८॥

सम्। यत्। जनौ। सुऽधनौ। विश्वऽशर्धसौ। अवेत्।
इन्द्रः। मघऽवा। गोषु। शुभ्रिषु। युजम्। हि। अन्यम्। अकृत।
प्रऽवेपनी। उत्। ईम्। गव्यम्। सृजते। सत्वऽभिः। धुनिः॥८॥

समवेत् संजानाति यद्यदाजनौपरस्परमतिद्वंद्विनौ सुधनौ शोभनधनौ विश्वशर्धसौ व्याप्तबलौ बहूत्साहौवा तदा मघवाधनवानिन्द्रोगोषुशुभ्रिषुशोभनासुगोषुनिमित्तभूतासुअन्यंयष्टारंयुजं

सहायमकृतकृतवान् प्रवेपनीशत्रूणांप्रवेपनवान् ईमस्मै गव्यंगोसमूहं उत्सृजते सत्वभिर्मरुद्भिः सहधुनिःमेघानांकंपयितेन्द्रः यजमानमयजमानंवायंजानातिगोनिमित्तंज्ञात्वायज्वनेगोसमूहं प्रयच्छतीत्यर्थः ॥ ८ ॥

८. शोभन धनवाले और बृहत् साहाय्यवाले दो व्यक्ति जब शोभन गौओं के लिए परस्पर प्रतिद्वन्द्वी होते हैं, तब ऐसा जानकर इन्द्र यज्ञ करनेवाले यजमान की सहायता करते हैं। मेघों को कँपानेवाले इन्द्र उस यज्ञकारी यजमान को गोसमूह प्रदान करते हैं।

सहस्रसामाग्निवेशिंगृणीषेशत्रिमग्नउपमांकेतुमर्यः ।
तस्माआपःसंयतःपीपयन्ततस्मिन्क्षत्रममवत्त्वेषमस्तु॥ ९ ॥ ४ ॥

सहस्रऽसाम् । आग्निऽवेशिम् । गृणीषे । शत्रिम् । अग्ने । उपऽमाम् । केतुम् । अर्यः । तस्मै । आपः । सम्ऽयतः । पीपयन्त । तस्मिन् । क्षत्रम् । अमऽवत् । त्वेषम् । अस्तु ॥ ९ ॥ ४ ॥

अग्निवेशसुतंशत्रिमसंख्यातधनप्रदं ॥ आशास्तऋषिरंत्यर्चांप्रजापतिसुतःसुधीः ॥ १ ॥

अर्योहंसहस्रसां अपरिमितधनप्रदं आग्निवेशिं अग्निवेशसुतंशत्रिंएतन्नामकंराजर्षिं गृणीषे गृणे स्तौमि हेअग्ने अंगनादिगुणविशिष्टेन्द्र कीदृशंतं उपमां उपमानभूतंकेतुंप्रज्ञापकंप्रख्यातमित्यर्थः तस्मैआपःसंयतः सम्यग्गच्छन्त्यःपीपयंत प्यायन्तां तस्मिन्राज्ञिक्षत्रंधनं अमवत् बलसहितंत्वेषंदीप्तिमदस्त्विति ॥ ९ ॥

९. हे अङ्गनादि गुणविशिष्ट इन्द्र, हम अपरिमित धन के दाता, अग्निवेश के पुत्र प्रसिद्ध शत्रिनामक राजर्षि की स्तुति करते हैं। वे उपमानभूत और प्रख्यात हैं। जलराशि उन्हें अच्छी तरह से सन्तुष्ट करे। उनका धन बलवान् और दीप्तिमान् हो।

यस्तेसाधिष्ठइत्यष्टर्चंतृतीयंसूक्तं अंगिरोगोत्रःप्रभूवसुर्नामऋषिः अंत्यापंक्तिः पंक्त्यंतपरिभाषयाशिष्टाअनुष्टुभः इन्द्रोदेवता यस्तेष्टौप्रभूवसुरांगिरसःपंक्त्यंतमित्यनुक्रान्तं । सूक्तविनियोगेलैंगिकः आभिप्लविकेषूक्थेषुतृतीयसवनेआद्यस्तृचोच्छावाकस्यवैकल्पिकोनुरूपःसूत्रितंच—यस्तेसाधिष्ठोवसेपुरांभिन्दुर्युवाकविरिति । द्वितीयतृतीययोः स्वरसाम्नोश्चाद्यौतृचावनुरूपौ यस्तेसाधिष्ठोवसइतिषळनुष्टुभइतिहिसूत्रम् ।

यस्तेसाधिष्ठोवसइन्द्रक्रतुष्टमाभर ।
अस्मभ्यंचर्षणीसहंसस्निंवाजेषुदुष्टरम् ॥ १ ॥

यः । ते । साधिष्ठः । अवसे । इन्द्र । क्रतुः । तम् । आ । भर । अस्मभ्यम् । चर्षणिऽसहम् । सस्निम् । वाजेषु । दुस्तरम् ॥ १ ॥

हेइन्द्र ते तव यः साधिष्ठोतिशयेनसाधकः क्रतुरुक्तलक्षणंकर्मप्रज्ञावास्ति तंक्रतुंनोवसे-स्मद्रक्षणायास्मभ्यं आभर आहर कीदृशंतं चर्षणीसहं सर्वेषांमनुष्याणामभिभवितारंसत्रि संस्नातं शुद्धं वाजेषुसंग्रामेषुदुष्टरं अन्यैरनभिभाव्यम् ॥ १ ॥

१. हे इन्द्र, तुम्हारा जो अतिशय साधक कर्म (प्रज्ञा) है, वह हम लोगों की रक्षा के लिए हो। तुम्हारा कर्म सब मनुष्यों को अभिभव करनेवाला है, शुद्ध है और संग्राम में दूसरों के द्वारा अनभिभवनीय है।

यदि॑न्द्र॒ ते॒ चत॑स्रो॒ यच्छू॑र॒ सन्ति॑ ति॒स्रः।
यद्वा॒ पञ्च॑ क्षि॒ती॒नामव॒स्तत्सु न॒ आ भ॑र ॥ २ ॥

यत्। इ॒न्द्र॒। ते॒। चत॑स्रः। यत्। शू॒र॒। सन्ति॑। ति॒स्रः। यत्। वा॒। पञ्च॑। क्षि॒ती॒नाम्। अवः॑। तत्। सु। नः॒। आ। भ॒र॒ ॥ २ ॥

हेइन्द्र ते तव यत् याऊतयः चतस्रः चतसृषुवर्णेषुसंश्रिताःसन्ति याश्चहेशूर तिस्रःत्रिषु लोकेषुवर्तमानाः यद्वा वाशब्दश्चार्थे यत्याश्चपंचक्षितीनांपंचजनसंबन्धिन्यऊतयःसन्ति अवो-रक्षणंतत्सर्वं सुसुष्ठुनोस्मभ्यमाभर आहरेति ॥ २ ॥

२. हे इन्द्र, चार वर्णों में जो तुम्हारा रक्षाकार्य है, हे शूर, तीन लोकों में जो तुम्हारा रक्षाकार्य विद्यमान है और जो पञ्चजन-सम्बन्धी तुम्हारा रक्षाकार्य है, उस समस्त रक्षाकार्य को तुम हम लोगों के लिए भली भाँति से आहरण करो।

आ तेऽवो॒ वरे॑ण्यं॒ वृष॑न्तमस्य हूमहे।
वृष॑जूति॒र्हि ज॑ज्ञि॒ष आ॒भूभि॑रिन्द्र तु॒र्वणिः॑ ॥ ३ ॥

आ। ते॒। अवः॑। वरे॑ण्यम्। वृष॑न्ऽतमस्य। हू॒म॒हे॒। वृष॑ऽजूतिः। हि। ज॒ज्ञि॒षे। आ॒ऽभूभिः॑। इ॒न्द्र॒। तु॒र्वणिः॑ ॥ ३ ॥

हेइन्द्र वृषन्तमस्यफलानांवर्षकतमस्यतेतवावोरक्षणं गमनंवा वरेण्यं वरणीयमाहूमहे आह्वयामः हेइन्द्र वृषजूतिः वर्षणगमनः तुर्वणिस्तूर्णवनिर्हिंसकोवात्वं आभूभिः सर्वतोभवद्भिः व्याप्तैर्मरुद्भिःसहावोहि जज्ञिषे उत्पादयसिखलु तेअवआह्वयामइति यद्वा वृषगमनःसन् अ-स्ययज्ञमागत्यफलंजज्ञिषे तस्मात्तेवोहूमहइति ॥ ३ ॥

३. हे इन्द्र, तुम अभिमत फल के निरतिशय साधक, वृष्टिकर्त्ता और शीघ्र शत्रुसंहारक हो। हे इन्द्र, तुम्हारा रक्षणकार्य वरणीय है। हम उसका आह्वान करते हैं। तुम सर्वव्यापी मरुतों के साथ मिलित होकर प्रदान करो।

वृषा॒ ह्यसि॒ राध॑से जज्ञि॒षे वृष्णि॑ ते॒ शवः॑ ।
स्वक्ष॑त्रं ते धृ॒षन्मनः॑ सत्रा॒हमि॑न्द्र॒ पौंस्य॑म् ॥ ४ ॥
वृषा॑ । हि । असि॑ । राध॑से । ज॒ज्ञि॒षे । वृष्णि॑ । ते॒ । शवः॑ ।
स्वऽक्ष॑त्रम् । ते॒ । धृ॒षत् । मनः॑ । स॒त्रा॒ऽहम् । इ॒न्द्र॒ । पौंस्य॑म् ॥ ४ ॥

हेइन्द्र राधसे यजमानानांसमृद्धये वृषाह्यसि फलस्यवर्षकोसिखलु यद्वा वृषाख-
ल्वसि राधसेधनार्थंजज्ञिषे उत्पद्यसे तेशवोबलंवृष्णिवर्षितृ तेमनःस्वक्षत्रंस्वायत्तबलंधृषत्
धर्षकंविरोधिनां हेइन्द्र तेपौंस्यं पुंस्त्वं सत्राहं संघहन्तृ ॥ ४ ॥

४. हे इन्द्र, तुम अभीष्ट फलवर्षक हो। यजमानों को धन देने के लिए तुमने जन्म ग्रहण किया है। तुम्हारा बल फल वर्षण करता है। तुम्हारा मन स्वभाव से ही बलवान् है और विरोधियों का दमनकारी है। हे इन्द्र, तुम्हारा पौरुष संघविनाशक है।

त्वं तमि॑न्द्र॒ मर्त्य॑ममित्र॒यन्त॑मद्रिवः ।
स॒र्व॒र॒था श॑तक्रतो॒ नि या॑हि शवसस्पते ॥ ५ ॥ ५ ॥
त्वम् । तम् । इ॒न्द्र॒ । मर्त्य॑म् । अ॒मि॒त्र॒ऽयन्त॑म् । अ॒द्रि॒ऽवः॒ । स॒र्व॒ऽर॒था ।
श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । नि । या॒हि॒ । श॒व॒सः॒ । प॒ते॒ ॥ ५ ॥ ५ ॥

हेइन्द्र त्वं तममित्रयन्तं शत्रुत्वमाचरन्तं शत्रुंवाइच्छंतंमर्त्यं हेअद्रिवोवज्रवन्निन्द्र स-
र्वरथासर्वत्रव्याप्तेनरथेन सुपांसुलुगित्याकारः हेशतक्रतो हेशवसस्पते बलस्यपालकेन्द्र
नियाहि नितरांगच्छ अभिभवितुम् ॥ ५ ॥

५. हे इन्द्र, तुम वज्रधारी हो। तुम्हारा रथ सर्वत्र अप्रतिहतगति से गमन करता है। तुम सौ यज्ञों के अनुष्ठानकर्त्ता हो और बल के अधिपति हो। जो मनुष्य तुम्हारे प्रति शत्रुता का आचरण करता है, तुम उसके विरुद्ध यात्रा करते हो।

त्वामिद्वृ॑त्रहन्तम॒ जना॑सो वृ॒क्तब॑र्हिषः ।
उ॒ग्रं पू॒र्वीषु॑ पू॒र्व्यं हव॑न्ते॒ वाज॑सातये ॥ ६ ॥
त्वाम् । इत् । वृ॒त्र॒ह॒न्ऽत॒म॒ । जना॑सः । वृ॒क्तऽब॑र्हिषः । उ॒ग्रम् ।
पू॒र्वीषु॑ । पू॒र्व्य॑म् । हव॑न्ते । वाज॑ऽसातये ॥ ६ ॥

हेवृत्रहन्तम अतिशयेनशत्रूणांहन्तरिन्द्र त्वामित् त्वामेवजनासोजनाः वृक्तबर्हिषः
आच्छादितदर्भाः प्रवृत्तयज्ञाइत्यर्थः उग्रमुद्गूर्णबलं पूर्वीषुबह्वीषुप्रजासुमध्ये पूर्व्यं पुरातनं
सन्तं वाजसातये संग्रामाय हवन्ते आह्वयन्ते ॥ ६ ॥

६. हे शत्रुओं के हन्ता इन्द्र, यज्ञ करनेवाले मनुष्य संग्राम में तुम्हारा ही आह्वान करते हैं; क्योंकि तुम उद्यतायुध और बहुत प्रजा के मध्य में पुरातन हो।

अस्माकमिन्द्रदुष्टरंपुरोयावानमाजिषु।
सयावानंधनेधनेवाजयन्तमवारथम् ॥ ७ ॥

अस्माकम्। इन्द्र। दुस्तरम्। पुरःऽयावानम्। आजिषु।
सऽयावानम्। धनेऽधने। वाजऽयन्तम्। अव। रथम् ॥ ७ ॥

हेइन्द्रास्माकंरथं रंहणस्वभावंवा पुत्रमवरक्ष कीदृशंरथं दुष्टरं दुःखेनतरणीयं आजिषुसंग्रामेषुपुरोयावानं पुरतोमिश्रयितारं सयावानं अनुचरैःसहगन्तारं धनेधने सर्वेषुधनेषु वाजयन्तं संग्रामंधनंवाइच्छन्तम् ॥ ७ ॥

७. हे इन्द्र, तुम हमारे रथ की रक्षा करो। यह रथ संग्राम में सब प्रकार के धन की इच्छा करता है, अनुचरों के साथ गमन करता है, दुर्निवार्य है और रणसंकुल है।

अस्माकमिन्द्रेहिनोरथमवापुरंध्या।
वयंशविष्ठवार्यंदिविश्रवोदधीमहिदिविस्तोमंमनामहे ॥ ८ ॥ ६ ॥

अस्माकम्। इन्द्र। आ। इहि। नः। रथम्। अव। पुरम्ऽध्या।
वयम्। शविष्ठ। वार्यम्। दिवि। श्रवः। दधीमहि। दिवि।
स्तोमम्। मनामहे ॥ ८ ॥ ६ ॥

हेइन्द्रास्माकं अस्मदीयएवसन् एहि आगच्छ आगत्यच पुरंध्याशोभनबुद्ध्यानोस्माकं रथमव रक्ष वयंच हेशविष्ठ अतिशयेनबलवन् त्वदनुग्रहाद्वार्यं वरणीयं श्रवोन्नं कीर्तिंवा दिवि द्योतमानेत्वयि दधीमहि स्थापयामः तथा दिवित्वयिस्तोमंस्तोत्रंमनामहे करवामहेइत्यर्थः ॥ ८ ॥

८. हे इन्द्र, हमारे निकट तुम आत्मीय होकर आओ। अपनी उत्कृष्ट बुद्धि-द्वारा हमारे रथ की रक्षा करो। तुम निरतिशय बलशाली और दीप्तिमान् हो। तुम्हारे अनुग्रह से हम वरणीय धन या कीर्त्ति तुममें स्थापित करते हैं। तुम द्युतिमान् हो। हम तुम्हारी स्तुति करते हैं।

सआगमदितिषळृचंचतुर्थंसूक्तं आंगिरसःप्रभूवसुर्ऋषिः तृतीयाजगती शिष्टाअनुक्तत्वात्त्रिष्टुभः इन्द्रोदेवता अनुक्रांतंच—सआगमत्षट्तृतीयाजगतीति। विनियोगोलैंगिकः।

सआगमदिन्द्रोयोवसूनांचिकेतद्दातुंदामनोरयीणाम्।
धन्वचरोनवंसगस्तृषाणश्चकमानःपिबतुदुग्धमंशुम् ॥ १ ॥

सः । आ । गमत् । इन्द्रः । यः । वसूनाम् । चिकेतत् । दातुम् ।
दामनः । रयीणाम् । धन्वऽचरः । न । वंसगः । तृषाणः ।
चकमानः । पिबतु । दुग्धम् । अंशुम् ॥ १ ॥

सइन्द्रोस्मद्यज्ञंमत्यागमदागच्छतु योदेवोवसूनांधनानां कर्मणिषष्ठी वसूनिधनानिचिकेतत् जानातिप्रदातुं सकीदृशः दामनादातादानमनावारयीणांधनानां गमनेदृष्टान्तः—धन्वचरोन धनुषासहसंचरन्धानुष्कइव वंसगोवननीयगमनः तृषाणः अत्यंतंतृषितः चकमानः कामयमानश्चसन् दुग्धं अभिषुतमंशुंसोमंपिबतु ॥ १ ॥

१. इन्द्र हमारे यज्ञ में आगमन करें। जो देव धन के लिए जानते हैं, वे किस तरह के हैं? इन्द्र धन के दाता हैं अथवा स्वभाव से ही दानी हैं। धनुष के साथ गमन करनेवाले धानुष्क की तरह साहसपूर्ण गमन करनेवाले और अत्यन्त तृषित इन्द्र अभिषुत सोमपान करें।

आतेहनूहरिवःशूरशिप्रेरुहत्सोमोनपर्वतस्यपृष्ठे ।
अनुत्वाराजन्नर्वतोनहिन्वन्गीर्भिर्मदेमपुरुहूतविश्वे ॥ २ ॥

आ । ते । हनू इति । हरिऽवः । शूर । शिप्रे इति । रुहत् ।
सोमः । न । पर्वतस्य । पृष्ठे । अनु । त्वा । राजन् । अर्वतः । न ।
हिन्वन् । गीःऽभिः । मदेम । पुरुऽहूत । विश्वे ॥ २ ॥

हेइन्द्र हेहरिवः हरिभ्यांतद्वन् शूर ते तव हनू हननसाधने यद्यप्ययंशिप्रावचनः तथापि पुनःशिप्राभिधानाद्गौणोवगन्तव्यः उक्तरूपेसंहतेवाशिप्रे आरुहत् आरोहतु प्राप्नोतु सोमोस्मद्दत्तः पर्वतस्यपृष्ठेनरुहत् नारोहति तत्रनतिष्ठतीत्यर्थः यद्वा नशब्दःपुरस्तात्प्रयुक्तोप्यत्रोपमार्थः पर्वतस्यपृष्ठे उपरिप्रदेशे सोमोनतत्रयथाविस्रंभेणप्रसरतितद्वत् हेराजन्द्राजमानेन्द्र त्वा त्वामनु त्वयासह तृतीयार्थइत्यनोःकर्मप्रवचनीयत्वं विश्वेवयमर्वतोन अश्वानिव तृणादिभिःगीर्भिःस्तुतिभिर्हिन्वन्हिन्वन्तः त्वांप्रीणयन्तःसन्तोमदेम हृष्येम हेपुरुहूत बहुप्रकारंबहुभिर्वाहूतेन्द्र ॥ २ ॥

२. हे अश्वद्वय-सम्पन्न शूर इन्द्र, हम लोगों के द्वारा दिया गया सोमरस पर्वतशिखर की तरह तुम्हारे संहारक हनुप्रदेश में आरोहण करे। हे राजमान इन्द्र, तृण-द्वारा जैसे घोड़े तृप्त होते हैं, उसी तरह से हम तुम्हें स्तुतियों-द्वारा प्रीत करते हैं। हे इन्द्र, तुम बहुस्तुत हो।

चक्रंनवृत्तंपुरुहूतवेपतेमनोभियामेअमतेरिदद्रिवः ।
रथादधित्वाजरितासदावृधकुविन्नुस्तोषन्मघवन्पुरुवसुः ॥ ३ ॥

चक्रम् । न । वृत्तम् । पुरुऽहूत । वेपते । मनः । भिया । मे ।
अमतेः । इत् । अद्रिऽवः । रथात् । अधि । त्वा । जरिता ।
सदाऽवृध । कुवित् । नु । स्तोषत् । मघऽवन् । पुरुऽवसुः ॥ ३ ॥

हेपुरुहूत बहुभिराहूत हेअद्रिवः वज्रवन्निन्द्र मेमनःअमतेरिव दारिद्र्यादस्तोतुर्वास-काशाद् भिया भित्या वेपते कंपते वृत्तंचक्रंन भूमौवर्तमानंचक्रमिव यस्मादेवंतस्माद् रथा-दधि उपरिस्थितं त्वा त्वां हेसदावृध सर्वदावर्धमान हेमघवन् इन्द्र जरितास्तोतापुरुवसुर-हमृषिः कुविद् बहु नुक्षिप्रं स्तोषद् स्तोष्यति स्तूयाद् अत्र कुविच्छब्दयोगेपिआख्यातस्य बहुलग्रहणान्निघातः ॥ ३ ॥

३. हे बहुस्तुत, हे वज्रवान् इन्द्र, भूमि में वर्तमान चक्र की तरह हमारा हृदय दारिद्रय-भय से काँप रहा है। हे सर्वदा वर्द्धमान इन्द्र, स्तोता पुरुवसु ऋषि शीघ्र ही बहुलता से तुम्हारी स्तुति करते हैं। तुम रथा-धिरूढ़ हो।

एषग्रावेवजरितातंइन्द्रेयर्तिवाचंबृहदाशुषाणः ।
प्रसव्येनमघवन्यंसिरायःप्रदक्षिणिद्धरिवोमाविवेनः ॥ ४ ॥

एषः । ग्रावाऽइव । जरिता । ते । इन्द्र । इयर्ति । वाचम् ।
बृहत् । आशुषाणः । प्र । सव्येन । मघऽवन् । यंसि ।
रायः । प्र । दक्षिणित् । हरिऽवः । मा । वि । वेनः ॥ ४ ॥

एषजरितागरितास्तोताग्रावेव अभिषवाश्मेव सयथारसंजनयतितद्वद् हेइन्द्र तेतुभ्यंवा-चंस्तुतिं इयर्ति प्रेरयतीत्यर्थः बृहद्महद्प्रभूतंफलंआशुषाणः आशुसंभक्षासन् हेमघवन् सव्येनहस्तेन रायोधनानि प्रयंसि प्रयच्छसि हेहरिवः हर्यश्वेन्द्र दक्षिणिद् दक्षिणेनापिप्र-यंसीतिशेषः माविवेनः विगतकामंमाकार्षीः ॥ ४ ॥

४. हे इन्द्र, प्रभूत फल को भोगनेवाले स्तोता अभिषव करनेवाले पत्थर की तरह तुम्हारी स्तुति करते हैं। हे धनवान् और हरिनामक अश्ववाले इन्द्र, तुम वामहस्त से धन दान करते हो और दक्षिण हस्त से भी धन दान करते हो। तुम हमें विफलमनोरथ मत करो।

वृषात्वावृषणंवर्धतुद्यौर्वृषावृषभ्यांवहसेहरिभ्याम् ।
सनोवृषावृषरथःसुशिप्रवृषक्रतोवृषावज्रिन्भरेधाः ॥ ५ ॥

वृषा । त्वा । वृषणम् । वर्धतु । द्यौः । वृषा । वृषऽभ्याम् ।
वहसे । हरिऽभ्याम् । सः । नः । वृषा । वृषऽरथः । सुऽशिप्र ।
वृषक्रतो इति वृषऽक्रतो । वृषा । वज्रिन् । भरे । धाः ॥ ५ ॥

हेइन्द्र त्वा त्वां वृषा वर्षित्रीद्यौः द्योतयित्रीस्तुतिः द्योततेर्दीव्यतेर्वास्तुत्यर्थस्येदंरूपं वृषणं कामानांवर्षकं त्वां वर्धतु वर्धयतु वृषात्वंवृषभ्यांसेक्तृभ्यांहरिभ्यांवहसे यज्ञंप्रत्युह्यसे हेसुशिप्र शोभनहनो वृषक्रतो वर्षणकर्मन् हेवज्रिन् वज्रयुक्तेन्द्र सत्वंवृषावृषरथश्चसन् नोस्मान्भरेसंग्रामे भरणवतियज्ञेवाधाःधारय ॥ ५ ॥

५. हे इन्द्र, तुम अभिलाषाओं के पूरक हो। अभीष्टवर्षी द्यावा-पृथिवी तुम्हें संवर्द्धित करें। तुम वर्षणकारी हो। घोड़े तुम्हें यज्ञस्थल में वहन करते हैं। हे शोभन हनुवाले, हे वज्रधर इन्द्र, तुम्हारा रथ कल्याणवर्षी है। संग्राम में तुम हम लोगों की रक्षा करो।

**योरोहितौवाजिनौवाजिनीवान्त्रिभिःशतैःसचमानावदिष्ट।**
**यूनेसमस्मैक्षितयोनमन्तांश्रुतरथायमरुतोदुवोया ॥ ६ ॥ ७ ॥**

यः। रोहितौ। वाजिनौ। वाजिनीऽवान्। त्रिऽभिः। शतैः।
सचमानौ। अदिष्ट। यूने। सम्। अस्मै। क्षितयः। नमन्ताम्।
श्रुतऽरथाय। मरुतः। दुवःऽया ॥ ६ ॥ ७ ॥

इयंश्रुतरथस्यराज्ञोदानस्तुतिः योराजावाजिनीवानन्नवान्श्रुतरथोरोहितौरोहितवर्णौवाजिनौवेजनवन्तावश्वौत्रिभिःशतैःगवांधनानांवाउक्तसंख्याभिःसचमानौसंगच्छमानौअदिष्ट दातेर्दिशतेर्वालुङीदंरूपं यूनेसर्वत्रमिश्रयित्रे नित्यतरुणायवा अस्मै श्रुतरथाय क्षितयः सर्वाः प्रजाः दुवोया तृतीयैकवचनस्ययाजादेशः परिचर्ययासंनमंतां प्रणताभवन्तु सेवन्तामित्यर्थः हेमरुतइतिइन्द्रसहायभूतानांमरुतांसंबोधनम् ॥ ६ ॥

६. हे इन्द्र के सहायक मरुतो, अन्नवान् श्रुतरथ राजा ने हमें लोहित वर्णवाले दो अश्व और तीन सौ धेनुरूप धन दिया था। नित्य तरुण उस श्रुतरथ राजा के लिए सकल प्रजा परिचर्या-सम्पन्न होकर प्रणाम करती है।

संभानुनेतिपंचर्चंपंचमंसूक्तं अत्रेरार्षंत्रैष्टुभमैन्द्रं संभानुनापंचात्रिरित्यनुक्रमणिका विनियोगोलैंगिकः।

**संभानुनायततेसूर्यस्याजुह्वानोघृतपृष्ठःस्वञ्चाः।**
**तस्माअमृध्राउषसोव्युच्छान्यइन्द्रायसुनवामेत्याह ॥ १ ॥**

सम्। भानुना। यतते। सूर्यस्य। आऽजुह्वानः। घृतऽपृष्ठः।
सुऽअंचाः। तस्मै। अमृध्राः। उषसः। वि। उच्छान्। यः।
इन्द्राय। सुनवाम। इति। आह ॥ १ ॥

सूर्यस्यभानुनातेजसासह आजुह्वानः सर्वत्रहूयमानः कर्मणिकर्तृप्रत्ययः घृतपृष्ठः प्रदीप्तज्वालःघृतयुक्पृष्ठप्रदेशोवा स्वंचाः स्वंचनोग्निः संयततेसम्यक्प्रयत्नंकरोति उदयकालेह्यग्नयःप्रज्वाल्यन्ते तस्मात्कारणात्योयजमानः इन्द्राय सुनवामेत्याहब्रूतेअध्वर्युंप्रति तस्मैयजमानाय अमृधाः अहिंसिवाः उषसोव्युच्छान् व्युच्छन्तु उदयकालेग्निःप्रज्वालिवस्तस्मात्सोमयागंकुर्मइतियोब्रूतेतस्यसुदिनानिभवंतीत्यर्थः ॥ १ ॥

१. यथाविधि आहूत अग्नि में हव्य प्रदान करने से अग्नि प्रदीप्त होकर सूर्यरश्मि के साथ आहूयमान होते हैं। जो यजमान "इन्द्र के लिए होम करो" यह कहता है, उस यजमान के लिए उषा अहिंसित होती है।

समिद्धाग्निर्वनवत्स्तीर्णबर्हिर्युक्तग्रावासुतसोमोजराते।
ग्रावाणोयस्येषिरंवदन्त्ययदध्वर्युर्हविषावसिन्धुम् ॥ २ ॥

समिद्धऽअग्निः। वनवत्। स्तीर्णऽबर्हिः। युक्तऽग्रावा। सुतऽसोमः। जराते। ग्रावाणः। यस्य। इषिरम्। वदन्ति। अयत्। अध्वर्युः। हविषा। अव। सिन्धुम् ॥ २ ॥

समिद्धोग्निः प्रदीप्ताग्निः स्तीर्णबर्हिः प्रस्तृतदर्भोयंयजमानोवनवत् संभजते युक्तग्रावा नियुक्ताभिषवपाषाणः सुतसोमोभिषुतसोमोजराते जरति स्तौति यस्याध्वर्योर्ग्रावाणोभिषवसाधनाइषिरंएषणीयंगमनशीलंवाशब्दंवदन्ति सोध्वर्युर्हविषासहसिंधुं अवनेजनीरपः अवायव अवगच्छति ॥ २ ॥

२. अग्नि को प्रदीप्त करनेवाले और कुश को विस्तृत करनेवाले यजमान सम्भजन करते हैं। पाषाणोत्तोलनपूर्वक जिन्होंने सोमरस निःसृत किया है, वे स्तुति करते हैं। जिस अध्वर्यु के पाषाण से सुमधुर शब्द होता है, वह अध्वर्यु हव्य लेकर नदी में अवगाहन करते हैं।

वधूरियंपतिमिच्छन्त्येतियईंवहातेमहिषीमिषिराम्।
आस्यश्रवस्याद्रथआचघोषात्पुरूसहस्रापरिवर्तयाते ॥ ३ ॥

वधूः। इयम्। पतिम्। इच्छंती। एति। यः। ईम्। वहाते। महिषीम्। इषिराम्। आ। अस्य। श्रवस्यात्। रथः। आ। च। घोषात्। पुरु। सहस्रा। परि। वर्तयाते ॥ ३ ॥

इयंवधूरिन्द्रस्यपत्नी पतिमिच्छन्ती स्वप्रियंयज्ञगमनायप्रवृत्तमिच्छन्त्येतिअनुगच्छति
४ यइन्द्रः ईमेनांमहिषींवहाते वहति इषिरांगमनवतीं अस्येन्द्रस्यरथः आअर्वागस्मदभिमुखंभव-

स्यात् अन्नमिच्छन्ति आचघोषात् आघुष्यतिशब्दयति पुरु अत्यधिकंसहस्रा सहस्राणिधनानि परिपरितोवर्तयाते वर्तयति प्रापयति श्रवस्यादाचघुष्यादितिवा ॥ ३ ॥

३. पत्नी पति की इच्छा करती हुई यज्ञ में उसका अनुगमन करती है। इन्द्र इसी प्रकार से अनुगामिनी महिषी का आनयन करते हैं। इन्द्र का रथ हम लोगों के निकट प्रचुर धन वहन करे। वह अधिक शब्द करता है। वह चारों तरफ़ सहस्र धन निःक्षेप करे।

नसराजांव्यथतेयस्मिन्निन्द्रस्तीव्रंसोमंपिबंतिगोसंखायम् ।
आसंत्वनैरजंतिहन्तिवृत्रंक्षेतिक्षितीःसुभगोनामपुष्यंन् ॥ ४ ॥

न । सः । राजां । व्यथते । यस्मिंन् । इन्द्रंः । तीव्रम् । सोमंम् । पिबंति । गोऽसंखायम् । आ । सत्वनैः । अजंति । हन्ति । वृत्रम् । क्षेति । क्षितीः । सुऽभगंः । नामं । पुष्यंन् ॥ ४ ॥

सराजानव्यथते व्यथितोनभवति यस्मिन्राजनितदीयेयज्ञे इन्द्रस्तीव्रंमदजनकंसोमंपिबति गोसखायं विकारेप्रकृतिशब्दः क्षीरादिमिश्रणवन्तं सराजासत्वनैः सत्वभिरनुचरैः आसर्वतः अजति गच्छति हन्तिचवृत्रं पापं वैरिणंवा क्षेतिगच्छतिक्षितीः प्रजाः अथवाक्षितीः निवासान् निवसते सुभगःशोभनसुखोनामनामकंधनंइन्द्रस्यस्तोत्रंवापुष्यन्पोषयन् ॥ ४ ॥

४. जिनके यज्ञ में इन्द्र दुग्धमिश्रित मदजनक सोमरस पान करते हैं, वे राजा कभी व्यथित नहीं होते हैं। वे राजा अनुचरों के साथ सर्वत्र गमन करते हैं, शत्रुओं का संहार करते हैं, प्रजाओं की रक्षा करते हैं और सुख-सम्भोग से युक्त होकर इन्द्र की स्तुति का पोषण करते हैं।

पुष्यात्क्षेमेअभियोगेभवात्युभेवृतौसंयतीसंजयाति ।
प्रियःसूर्येप्रियोअग्नाभवातियइन्द्रायसुतसोमोददाशत् ॥ ५॥८॥

पुष्यात् । क्षेमें । अभि । योगें । भवाति । उभे इति । वृतौ । संयती इति सम्ऽयती । सम् । जयाति । प्रियः । सूर्ये । प्रियः । अग्ना । भवाति । यः । इन्द्राय । सुतऽसोमः । ददाशत् ॥ ५ ॥ ८ ॥

पुष्यात् पोषयेत् बंध्वादीन् क्षेमे प्राप्तस्यधनस्यरक्षणे योगे अलब्धस्यप्राप्तौचाभिभवातिभवति अभीत्यनर्थकोधात्वर्थानुवादीवा प्रभुर्भवतीत्यर्थः तथा उभे वृतौवर्तमानेसंयतीमियते अहोरात्रे संजयाति सम्यक्जयति तेसुखकरेस्यातामित्यर्थः किंच सप्रियोभवति सूर्येतथाग्नावग्नौप्रियोभवति यइन्द्रायसुतसोमोददाशत्सोमंददाति ॥ ५ ॥

॥ इतिचतुर्थस्यद्वितीयेष्टमोवर्गः ॥ ८ ॥

५. जो इन्द्र को अभिषुत सोम प्रदान करता है, वह बन्धुबान्धवों का पोषण करता है, वह प्राप्त धन की रक्षा करने और अप्राप्त धन की प्राप्ति में समर्थ होता है। वह वर्तमान तथा नियत अहोरात्र को जीतता है। वह सूर्य और अग्नि दोनों का ही प्रियपात्र होता है।

उरोष्टइतिपंचर्चंषष्ठंसूक्तं अत्रेरार्षमानुष्टुभमैन्द्रं उरोरानुष्टुभमित्यनुक्रान्तं विनियोगोलैंगिकः।

उरोष्टंइन्द्रराधंसोविभ्वीरातिःशतक्रतो।
अधानोविश्वचर्षणेद्युम्नासुंक्षत्रमंहय ॥ १ ॥

उरोः। ते। इन्द्र। राधंसः। विऽभ्वी। रातिः।
शतक्रतो इतिं शतऽक्रतो। अधं। नः। विश्वऽचर्षणे। द्युम्ना।
सुऽक्षत्र। मंहय ॥ १ ॥

हेइन्द्र शतक्रतो बहुकर्मन् तेतव उरोः प्रभूतस्यराधसोधनस्य रातिर्दानं विभ्वीमहती अध अतःकारणात् नोस्मभ्यं हेविश्वचर्षणे सर्वस्यद्रष्टः सुक्षत्र शोभनधनेन्द्र क्षत्रमितिधननाम द्युम्ना द्युम्नानिधनानिमंहय प्रयच्छ ॥ १ ॥

१. हे इन्द्र, तुमने बहुत कर्म किया है। तुम प्रभूत धन का महान् दान करते हो। हे सर्वदर्शी, हे शोभन धनवाले, तुम हम लोगों को महान् धन प्रदान करो।

यदींमिन्द्रश्रवाय्यमिषंशविष्ठदधिषे।
पप्रथेदीर्घश्रुत्तमंहिरण्यवर्णदुष्टरंम् ॥ २ ॥

यत्। ईम्। इन्द्र। श्रवाय्यंम्। इषंम्। शविष्ठ। दधिषे। पप्रथे।
दीर्घश्रुत्ऽतमम्। हिरण्यऽवर्ण। दुस्तरंम् ॥ २ ॥

हेइन्द्र शविष्ठ अतिशयेनबलवन् यत् इषमन्नंश्रवाय्यंश्रवणीयं ईं सर्वतोदधिषे धारयसि ददासिवा इषशब्दोनपुंसकलिंगोप्यस्ति हेहिरण्यवर्णेन्द्र तदन्नं पप्रथेप्रथते कथंदीर्घश्रुत्तमं अतिदूरश्रवणीयतमं सर्वत्रकीर्त्यमित्यर्थः दुष्टरं अनभिभाव्यं उक्तलक्षणंप्रथते ॥ २ ॥

२. हे महाबलशाली हिरण्यवर्ण इन्द्र, यद्यपि तुम सुप्रसिद्ध प्रचुर अन्न के अधिपति हो; तथापि यह अत्यन्त दुर्लभ रूप से सर्वत्र कीर्तित होता है।

शुष्मासोयेतेअद्रिवोमेहनाकेतसापः।
उभादेवावभिष्टयेदिवश्चग्मश्चराजथः ॥ ३ ॥

शुष्मा॑सः । ये । ते॒ । अ॒द्रि॒ऽवः॒ । मे॒हना॑ । के॒त॒ऽसापः॑ । उ॒भा । दे॒वौ ।
अ॒भिष्ट॑ये । दि॒वः । च॒ । ग्मः । च॒ । रा॒ज॒थः॒ ॥ ३ ॥

हेअद्रिवोवज्रवन्निन्द्र तेत्वदीयाः येशुष्मासोबलभूतामरुतःसन्ति कीदृशास्ते मेहना मंहनीयाः केतसापः प्रज्ञापकंकर्मान्तरिक्षंवास्पृशन्त उभौदेवौ त्वंच मरुत्समूहश्चेत्युभौ युवांदिवश्च द्युलोकात् ग्मश्च भूमेःसकाशात् अभिष्टये अभितोगमनाय राजथः ईशाथे ॥ ३॥

३. हे वज्रधर इन्द्र, पूजनीय एवम् विख्यात कर्मवाले मरुद्गण तुम्हारे बलस्वरूप हैं। तुम और वे (इन्द्र-मरुत) दोनों ही पृथ्वी के ऊपर स्वेच्छाविहारी होकर शासन करते हो।

उ॒तोनो॑अ॒स्यक॑स्य॑चि॒द्दक्ष॑स्य॒तव॑वृत्रहन् ।
अ॒स्मभ्यं॒नृ॒म्णमाभ॑रा॒स्मभ्यं॒नृमणस्यसे ॥ ४ ॥

उ॒तो इति॑ । नः॒ । अ॒स्य । कस्य॑ । चि॒त् । दक्ष॑स्य । तव॑ । वृ॒त्र॒ऽह॒न् ।
अ॒स्मभ्य॑म् । नृ॒म्णम् । आ । भ॒र॒ । अ॒स्मभ्य॑म् । नृ॒ऽम॒न॒स्य॒से॒ ॥ ४ ॥

उतो अपिच हेवृत्रहन्निन्द्र नोस्मभ्यं कस्यचिदनिर्देश्यस्यदक्षस्यप्रवृद्धस्यादातुर्वा-स्यतवस्वभूतेभ्योस्मभ्यं पुनःश्रुतिरादरार्था नृम्णं नृमणं धनमाभरआहर हेइन्द्र यतस्त्व-मस्मभ्यंनृमणस्यसे धनमिच्छसि ॥ ४ ॥

४. हे वृत्रहन्ता इन्द्र, हम लोग तुम्हारी उपासना करते हैं। तुम हम लोगों को किसी क्षमताशाली का धन लाकर देते हो; क्योंकि तुम हम लोगों को धनाढय करने के अभिलाषी हो।

नू॒तआ॒भिर॒भिष्टि॑भि॒स्तव॒शर्म॑ञ्छतक्रतो ।
इन्द्र॒स्याम॑सु॒गो॒पाः॒शूर॒स्याम॑सु॒गो॒पाः ॥ ५ ॥ ९ ॥

नु । ते॒ । आ॒भिः॒ । अ॒भिष्टि॑ऽभिः । तव॑ । शर्म॑न् ।
श॒त॒क्र॒तो॒ इति॑ शत॒ऽक्र॒तो॒ । इन्द्र॑ । स्याम॑ । सु॒ऽगो॒पाः । शूर॑ ।
स्याम॑ । सु॒ऽगो॒पाः ॥ ५ ॥ ९ ॥

हेशतक्रतो इन्द्र ते तवाभिरभिष्टिभिः अभिगमनैर्नु शीघ्रं समृद्धाभवेमेतिशेषः हेइन्द्र त-वशर्मन् शर्मणि सुखेसति सुगोपाः स्याम भवेम हेशूर तवशर्मणिसुगोपाः शोभनरक्ष-णाःस्याम भवेम पुनरुक्तिरादरार्था ॥ ५ ॥

५. हे सौ यज्ञ करनेवाले इन्द्र, तुम्हारे अभिगमन से हम शीघ्र ही समृद्ध हों। हे इन्द्र, तुम्हारे सुख में हम अंशभागी हों। हे शूर, तुम्हारे द्वारा हम सुरक्षित हों।

यदिन्द्रचित्रेतिपंचर्चंसप्तमंसूक्तं अत्रेरार्षं ऐन्द्रं अंत्यापंक्तिः शिष्टापंक्त्यन्तपरिभाषया-नुष्टुभः यदिन्द्रपंक्त्यन्तमित्यनुक्रमणिका आभिप्लविकेषूक्थ्येषुतृतीयसवनेआद्यस्तृचोच्छा-वाकस्यवैकल्पिकस्तोत्रियः सूत्रितंच—यदिन्द्रचित्रमेहनायस्तेसाधिष्ठोवसइति ।

तत्रप्रथमा—

यदिन्द्रचित्रमेहनास्तित्वादातमद्रिवः ।
राधस्तन्नोविदद्वसउभयाहस्त्याभर ॥ १ ॥

यत् । इन्द्र । चित्र । मेहना । अस्ति । त्वाऽदातम् । अद्रिऽवः ।
राधः । तत् । नः । विदद्वसो इति विदत्ऽवसो । उभयाहस्ति ।
आ । भर ॥ १ ॥

हेइन्द्र हेचित्र चायनीय हेअद्रिवोवज्रवन् यत् मेहनामेहनीयं त्वादातं त्वयादात-व्यं राधोधनमस्ति तद्धनं हेविदद्वसो लब्धधनेन्द्र नोस्मभ्यं उभयाहस्ति उभाभ्यांह-स्ताभ्यां आभर आहर अत्र यदिन्द्रचित्रचायनीयंमंहनीयंधनमस्तीत्यादिनिरुक्तंद्र-ष्टव्यम् ॥ १ ॥

१. हे इन्द्र, हे वज्रधर, तुम्हारा रूप अत्यन्त विचित्र है। देने के लिए तुम्हारे पास जो महामूल्य धन है, हे धनवान् इन्द्र, उसे तुम हम लोगों को, दोनों हाथों से, प्रदान करो।

यन्मन्यसेवरेण्यमिन्द्रद्युक्षंतदाभर ।
विद्यामतस्यतेवयमकूपारस्यदावने ॥ २ ॥

यत् । मन्यसे । वरेण्यम् । इन्द्र । द्युक्षम् । तत् । आ । भर ।
विद्याम । तस्य । ते । वयम् । अकूपारस्य । दावने ॥ २ ॥

हेइन्द्र यत् द्युक्षमन्नं वरेण्यं वरणीयं मन्यसे तत् द्युक्षं आभरास्मभ्यं ते तवसंबन्धि-नोवयं तस्य तादृशस्योक्तलक्षणस्याकूपारस्य अकुत्सितः पारोन्तोयस्यतादृशस्यान्नस्य दाव-ने दाने विद्याम स्याम ॥ २ ॥

२. हे इन्द्र, जिस अन्न को तुम श्रेष्ठ समझते हो, वह अन्न हम लोगों को प्रदान करो। हम तुम्हारे उस श्रेष्ठ अन्न के दानपात्र हों।

वाजपेयेअतिरिक्तोक्थ्येयत्तेदित्स्वेषा सूत्रितंच—यत्तेदित्सुप्रराध्यंत्वामिच्छवसस्पतइति ।

---

१ नि० ४. ४.

सैषातृतीया—

यत्तेदित्सुप्रराध्यंमनोअस्तिश्रुतंबृहत् ।
तेनदृळ्हाचिदद्रिवआवाजंदर्षिसातये ॥ ३ ॥

यत् । ते । दित्सु । प्रऽराध्यम् । मनः । अस्ति । श्रुतम् । बृहत् ।
तेन । दृळ्हा । चित् । अद्रिऽवः । आ । वाजम् । दर्षि । सातये ॥ ३॥

हेइन्द्र ते तव यद्दित्सुदानेषु प्रराध्यं प्रकर्षेणस्तुत्यं श्रुतं विश्रुतं बृहत् महत् मनःअस्ति तेनमनसा हेअद्रिवोवज्रवन्निन्द्र दृळ्हाचित् दृढमपि वाजमन्नं आदर्षि आदरयसि सातयेस्मत्संभजनायलाभायवा ॥ ३ ॥

३. हे इन्द्र, तुम्हारा मन दान देने के लिए विश्रुत और महान् है। हे वज्रधर, तुम हम लोगों को सारवान् अन्न प्रदान करने के लिए आदर प्रदर्शित करते हो।

मंहिष्ठंवोमघोनांराजानंचर्षणीनाम् ।
इन्द्रमुपप्रशस्तयेपूर्वीभिर्जुजुषेगिरः ॥ ४ ॥

मंहिष्ठम् । वः । मघोनाम् । राजानम् । चर्षणीनाम् ।
इन्द्रम् । उप । प्रऽशस्तये । पूर्वीभिः । जुजुषे । गिरः ॥ ४ ॥

मघोनां हविर्लक्षणधनवतां वोयुष्माकं मंहिष्ठं अतिशयेनपूज्यं चर्षणीनांमनुष्याणांराजानं इन्द्रं उपउपेत्य प्रशस्तये प्रशंसितुं पूर्वीभिः पुरातनीभिः वाग्भिःगिरःस्तोतारोजुजुषे सेवन्ते ॥ ४ ॥

४. इन्द्र हविर्लक्षण धन से युक्त हैं। वे तुम लोगों के अत्यन्त पूजनीय हैं। वे मनुष्यों के अधिपति हैं। स्तोता लोग प्राचीन स्तोत्रों-द्वारा प्रशंसा करने के लिए उनकी सेवा करते हैं।

अस्माइत्काव्यंवचउक्थमिन्द्रायशंस्यम् ।
तस्माउब्रह्मवाहसेगिरोवर्धन्त्यत्रयोगिरःशुंभन्त्यत्रयः ॥५॥१०॥

अस्मै । इत् । काव्यम् । वचः । उक्थम् । इन्द्राय । शंस्यम् ।
तस्मै । ऊँ इति । ब्रह्मऽवाहसे । गिरः । वर्धन्ति । अत्रयः ।
गिरः । शुंभन्ति । अत्रयः ॥ ५ ॥ १० ॥

अस्माइव अस्माएवेन्द्राय काव्यं कवेःस्तोतुःसंबन्धि यद्वा कुशब्दे शब्दनीयंवचोवा-ग्रूपं उक्थं शस्त्रं शंस्यं शंसनीयं यस्मादेवंतस्मात् तस्मात् तस्मैइन्द्रायैव ब्रह्मवाहसे परिवृढस्यस्तोत्रस्यवाहकाय गिरःस्तुतीरत्रयोत्रिगोत्रावर्धन्तिवर्धयन्ति अत्रयोगिरःशुंभन्ति दीपयन्ति पुनरुक्तिरादरार्था ॥ ५ ॥

५. इन्द्र के लिए ही यह काव्य, वाक्य और उक्थ उच्चरित हुआ है। वे स्तोत्रवाहक हैं। अत्रिपुत्र उनके निकट में ही स्तोत्रों को उच्चस्वर से उच्चारित करते और उद्दीपित करते हैं।

॥ इतिचतुर्थस्यद्वितीयेदशमोवर्गः ॥ १० ॥

आयाह्यद्रिरितिनवर्चमष्टमंसूक्तं अत्रेयमनुक्रमणिका—आयाहिनवत्र्युष्णिगाद्यंत्यानुष्टुम्मध्येचसासौरीतदादीतिहासस्तुतिकर्मत्वादत्रिरेवदेवइति । कृत्स्नस्यऋषिश्चान्यस्मादितिपरिभाषयात्रिर्ऋषिः आद्यास्तिस्रउष्णिहः पंचमीनवम्यावनुष्टुभौ शिष्टाश्चतस्रस्त्रिष्टुभः अग्नेःस्तूयमानत्वात्षष्ठ्याद्याअग्निर्देवताका अत्र्यार्षेयाश्चपंचमीसूर्यदेवत्या शिष्टाऐन्द्र्यः । दशरात्रेतृतीयेहनिप्रउगशस्त्रेआद्यस्तृचः ऐन्द्रःपंचमः सूत्रितंच—आयाह्यद्रिभिःसुतंसजूर्विश्वेभिर्देवेभिरिति । महाव्रतेप्यौष्णिहतृचाशीतावयंतृचः ।

आयाह्यद्रिभिःसुतंसोमंसोमपतेपिब । वृषन्निन्द्रवृषभिर्वृत्रहन्तम ॥१॥

आ । याहि । अद्रिऽभिः । सुतम् । सोमम् । सोमऽपते ।
पिब । वृषन् । इन्द्र । वृषऽभिः । वृत्रहन्ऽतम ॥ १ ॥

हेइन्द्र आयाहि अस्मद्यज्ञमागच्छ आगत्यच हेसोमपते सोमस्यस्वामिन्निन्द्र अद्रिभिर्ग्रावभिःसुतमभिषुतंसोमंपिब हेवृषन् फलस्यवर्षयितः वृत्रहन्तम अतिशयेनशत्रूणांहन्तृतम वृषभिर्वर्षकैर्मरुद्भिःसहायाहि पिबच ॥ १ ॥

१. हे इन्द्र, तुम हम लोगों के यज्ञ में आओ। हे सोम के स्वामी इन्द्र, आकर पत्थरों-द्वारा अभिषुत सोम का पान करो। हे फलवर्षक, हे शत्रुओं के अतिशय हन्ता, फलवर्षी मरुतों के साथ तुम सोमपान करो।

वृषाग्रावावृषामदोवृषासोमोअयंसुतः । वृषन्निन्द्रवृषभिर्वृत्रहंतम ॥२॥

वृषा । ग्रावा । वृषा । मदः । वृषा । सोमः । अयम् । सुतः ।
वृषन् । इन्द्र । वृषऽभिः । वृत्रहन्ऽतम ॥ २ ॥

ग्रावा अभिषवसाधनःपाषाणोवृषा वर्षकः सोमरसस्य फलस्यवामदः सोमपानेनजनितः वृषा वर्षकः अयंसुतोभिषुतः सोमोवृषा वर्षकोमंत्रार्थउक्तचरः ॥ २ ॥

२. अभिषवसाधन पाषाण वर्षणकारी है। सोमपान-जनित हर्ष वर्षणकारी है। यह अभिषुत सोम वर्षणकारी है। हे फलवर्षक, हे शत्रुओं के अतिशय हन्ता, फलवर्षी मरुतों के साथ तुम सोमपान करो।

अथतृतीया—

वृषांत्वावृषणंहुवेवज्रिंञ्चित्राभिरूतिभिः ।
वृषंन्निन्द्रवृषभिर्वृत्रहंतम ॥ ३ ॥

वृषा । त्वा । वृषणम् । हुवे । वज्रिन् । चित्राभिः । ऊतिऽभिः ।
वृषन् । इन्द्र । वृषंऽभिः । वृत्रहन्ऽतम ॥ ३ ॥

हेवज्रिन् वज्रवन्निंद्र वृषासोमरसस्यसेकाहं वृषणं त्वां हुवे आह्वयामि किमर्थं चित्राभिश्चायनीयाभिः ऊतिभीरक्षाभिः निमित्तभूताभिः शिष्टंगतम् ॥ ३ ॥

३. वज्रधर इन्द्र, तुम सोमरस के सेचनकर्त्ता और अभीष्टवर्षी हो। हम विचित्र रक्षा के लिए तुम्हारा आह्वान करते हैं। हे फलवर्षक, हे शत्रुओं के अतिशय हन्ता, फलवर्षी मरुतों के साथ तुम सोमपान करो।

ऋजीषीवज्रीत्येषाब्राह्मणाच्छंसिनःशस्त्रयाज्या ऋजीषीवज्रीवृषभस्तुराषाडितियाज्येतिहिसूत्रितम् ।

ऋजीषीवज्रीवृषभस्तुराषाट्शुष्मीराजावृत्रहासोमपावा ।
युक्त्वाहरिभ्यामुपयासदर्वाङ्माध्यंन्दिनेसवनेमत्सदिन्द्रः ॥ ४ ॥

ऋजीषी । वज्री । वृषभः । तुराषाट् । शुष्मी । राजा । वृत्रऽहा ।
सोमऽपावा । युक्त्वा । हरिऽभ्याम् । उप । यासत् । अर्वाङ् ।
माध्यंन्दिने । सवने । मत्सत् । इन्द्रः ॥ ४ ॥

ऋजीषी सवनद्वयेभिषुतस्यगतसारस्यसोमरसस्यतृतीयसवने आप्यायाभिषुतोयोस्तिसऋजीषः सोमः सोस्यास्तीतिऋजीषी वज्री वज्रवान् वृषभोवर्षिता तुराषाट् तुराणांत्वरमाणानांशत्रूणांसोढा शुष्मी बलवान् राजा ईश्वरःसर्वस्य वृत्रहा वृत्रस्यहन्ता सोमपावा सोमरसस्य पाता एवंमहानुभावइन्द्रोहरिभ्यांयुक्त्वारथंयोजयित्वोपयासत् उपगच्छतु अर्वागस्मदभिमुखंआगच्छतु माध्यंदिनेसवनेमत्सत् माद्यतुसोमेनेन्द्रः ॥ ४ ॥

४. इन्द्र ऋजीषी (सोमरस की सिट्ठीवाले) और वज्रधर हैं। इन्द्र अभीष्टवर्षी, शत्रु-संहारकर्त्ता, बलवान्, सबके ईश्वर, वृत्रहन्ता और सोमपानकर्त्ता हैं। इस तरह के इन्द्र घोड़ों को रथ में युक्त करके हम लोगों के अभिमुख आवें और माध्यन्दिन सवन में सोमपान से हृष्ट हों।

यस्त्वांसूर्यस्वर्भानुस्तमसाविध्यदासुरः ।
अक्षेत्रविद्यथामुग्धोभुवनान्यदीधयुः ॥ ५ ॥ ११ ॥

यत् । त्वा । सूर्य । स्वः॒ऽभानुः । तम॑सा । अवि॑ध्यत् । आ॒सुरः ।
अक्षे॑त्रऽवित् । यथा॑ । मुग्धः । भुव॑नानि । अदी॒धयुः ॥ ५ ॥ ११ ॥

इदमादिचतुर्भिर्मंत्रैस्त्रीणांकर्मकीर्त्यते हेसूर्य प्रेरक देव त्वा त्वां यद्यदा आसुरः असुरस्यप्राणापहर्तुरसुर्यावापुत्रः स्वर्भानुः स्वर्भानुसंज्ञकस्तमसामायानिर्मितेनाविध्यत् आवृणोदित्यर्थः तदा भुवनानिसर्वाणि अदीधयुः दृश्यन्ते तथा तत्रत्यःसर्वोजनः अक्षेत्रवित् स्वस्वस्थानमजानन् मुग्धोमूढोभवति तथा ॥ ५ ॥

५. हे सूर्य (प्रेरक देव), स्वर्भानु नामक असुर ने जब तुम्हें अन्धकार से आच्छन्न कर लिया था, तब उस समय सकल भवन उसी तरह से दीख रहा था, जैसे वहाँवाले सब लोग अपने-अपने स्थान को नहीं जान रहे हैं और मूढ़ हैं।

स्वर्भानोरधयदिन्द्रमायाअवोदिवोवर्तमानाअवाहन् ।
गूळ्हंसूर्यंतमसापव्रतेनतुरीयेणब्रह्मणाविन्ददत्रिः ॥ ६ ॥

स्वः॒ऽभानोः । अध॑ । यत् । इन्द्र । मा॒याः । अवः॑ । दि॒वः ।
वर्त॑मानाः । अव॒ऽअह॑न् । गूळ्हम् । सूर्य॑म् । तम॑सा । अप॑ऽव्रतेन ।
तुरीये॑ण । ब्रह्म॑णा । अवि॑न्दत् । अत्रिः ॥ ६ ॥

अध अथ जगन्मौढ्यानन्तरं स्वर्भानोरसुरस्य यद् यामायाःसन्ति कीदृश्यस्ताः दिवोद्योतमानादादित्यात् अवः अवस्तात्वर्तमानाः तदुपरितिरोधानासामर्थ्यादितिभावः हेइन्द्र ताः सर्वाः अवाहन् अवहंसि अथात्रेरेवपरोक्षवादः तमसान्धकारेण अपव्रतेन अपगतकर्मणा गूळ्हं सूर्यं अन्धकारस्यावरणरूपत्वादपव्रतत्वं तथाविधं तुरीयेणब्रह्मणामंत्रेण ग्राव्णोब्रह्मेत्यनेनात्रिर विन्दत् लब्धवान् आवरणापगमोपायंनिवारणंशुद्धंवासूर्यमितिपूर्वमन्त्रापेक्षयास्यतुरीयत्वं एकैकंमायांशमेकैकेनमंत्रेणापनोद्य चतुर्थेनमंत्रेण निलीनंतमोप्यनुददित्यर्थः ॥ ६ ॥

६. हे इन्द्र, जब तुमने सूर्य के अधोदेश में वर्तमान, स्वर्भानु असुर की द्युतिमान् माया को दूर में ही अपसारित किया था, तब व्रतविघातक अन्धकार-द्वारा समाच्छन्न सूर्य को अत्रि ने चार ऋचाओं-द्वारा प्रकाशित किया था।

अथसप्तमी—

मामामिमंतवसन्तमत्रइरस्याद्रुग्धोभियसानिगारीत् ।
त्वंमित्रोअसिसत्यराधास्तौमेहावतंवरुणश्चराजा ॥ ७ ॥

मा । माम् । इमम् । तव॑ । सन्त॑म् । अत्रे॑ । इ॒र॒स्या । द्रु॒ग्धाः ।
भि॒यसा॑ । नि । गा॒री॒त् । त्वम् । मि॒त्रः । अ॒सि॒ । स॒त्यऽरा॑धाः ।
तौ । मा॒ । इ॒ह । अ॒व॒त॒म् । वरु॑णः । च॒ । राजा॑ ॥ ७ ॥

इदंसूर्यवाक्यं हेअत्रे मामिमं ईदृगवस्थं मां तवसन्तं तवस्वभूतमिरस्यान्नेच्छया द्रुग्धाद्रोग्धा असुरोभियसा भयजनकेनतमसा अन्धकारेण मानिगारीत् मागिरतु किंच हेमित्र त्वंमित्रोसि प्रमीतेःसकाशात्त्राताभवसि सत्यराधाः सत्यधनश्च तौ राजावरुणश्च त्वंच तौ युवां मामामिहावतं रक्षतं यद्वा अत्रिरेवमित्रउच्यते वरुणश्चयुवाम् ॥ ७ ॥

७. (सूर्यवाक्य--) हे अत्रि, ऐसी अवस्थावाले हम तुम्हारे हैं। अन्न की इच्छा से द्रोह करनेवाले असुर भयजनक अन्धकार-द्वारा हमें नहीं निगल जायँ; अतः तुम और वरुण दोनों हमारी रक्षा करो। तुम हमारे मित्र और सत्यपालक हो।

ग्राव्णो॑ब्र॒ह्मा यु॑युजा॒नः स॑प॒र्यन्की॒रिणा॑ दे॒वान्नम॑सोप॒शिक्ष॑न् ।
अत्रिः॒ सूर्य॑स्य दि॒वि चक्षु॒राधा॒त्स्व॑र्भानो॒रप॑ मा॒या अ॑घुक्षत् ॥ ८ ॥
ग्राव्णः॑ । ब्र॒ह्मा । यु॒यु॒जा॒नः । स॒प॒र्यन् । की॒रिणा॑ । दे॒वान् । नम॑सा ।
उ॒प॒ऽशिक्ष॑न् । अत्रिः॑ । सूर्य॑स्य । दि॒वि । चक्षुः॑ । आ । अ॒धा॒त् ।
स्वः॑ऽभानोः । अप॑ । मा॒याः । अ॒घु॒क्ष॒त् ॥ ८ ॥

ब्रह्मा ब्राह्मणोत्रिः ग्राव्णः अभिषवसाधनाययुयुजानः युंजन् इन्द्रार्थंसोममभिषुण्वन्नित्यर्थः तथा कीरिणा कीर्यतेविक्षिप्यतेइतिकीरि स्तोत्रं तेनदेवान्सपर्यन् पूजयन् किंच नमसान्नेनहविर्लक्षणेननमस्कारेणवा उपशिक्षन् शिक्षतिर्दानार्थोत्रमसाधनेवर्तते प्रसाधयन् एवमुक्तैःसाधनैःसूर्यस्यसर्वप्रेरकस्यचक्षुःसर्वस्यव्यापकंमंडलं दिवि अन्तरिक्षे आधात् निस्तमस्कंकृतवानित्यर्थः तदेवस्पष्टयति—स्वर्भानोरेतन्नामकस्यासुरस्यमायाः स्वाश्रयमया मोहयन्ती परान् तथाकुर्वन्ती मायेत्युच्यते तादृशीर्मायाः तुरीयेण ब्रह्मणेत्युक्तं तदेतदुक्तं यत्तुरीयंब्रह्मतेनात्रिःसहायः इन्द्रोपाघुक्षत् अपजुगोप न्यवारयदित्यर्थः अथवातृतीयपादएवंव्याख्येयः सूर्यस्यदिविपूर्वमावृतेप्रकाशेतदपनोदस्वकीयंचक्षुराधात् निवारणंतेजः संस्थापयंदृष्टवानित्यर्थः स्वर्भानुमाययासूर्यस्यावृत्तिःहारिद्रविकेसमाम्नाता— स्वर्भानुर्वासुरःसूर्यंतमसाविध्यत्तस्मैदेवाःप्रायश्चित्तिमैच्छन्तस्ययत्प्रथमंतमोपाघ्नन्साकृष्णाविरभवद्यद्द्वितीयंसाफाल्गुनीयत्तृतीयंसावलक्षीयदध्यस्थादपाकृंतन्नित्यादि ॥ ८ ॥

८. उस समय ऋत्विक् अत्रि ने सूर्य को उपदेश दिया, प्रस्तरखण्डों का घर्षण करके इन्द्र के लिए सोमाभिषव किया, स्तोत्रों-द्वारा देवों की पूजा की और मन्त्र-प्रभाव से अन्तरिक्ष में सूर्य के चक्षु को संस्थापित किया। उस समय उन्होंने स्वर्भानु की समस्त माया को दूर में अपसारित किया।

अथनवमी—

यंवैसूर्यंस्वर्भानुस्तमसाविध्यदासुरः ।
अत्रयस्तमन्वविंदन्नह्य१न्येअशक्नुवन् ॥ ९ ॥ १२ ॥

यम् । वै । सूर्यम् । स्वःऽभानुः । तमसा । अविध्यत् । आसुरः ।
अत्रयः । तम् । अनु । अविन्दन् । नहि । अन्ये । अशक्नुवन् ॥९॥१२

अत्रिकृतंसामर्थ्यमनुवदति यंवैसूर्यमिति निगतव्याख्यैषा अत्रयस्तंसूर्यंअन्वविन्दन् इन्द्रार्थंसोमयागदेवतास्तुतिनमस्कारैः अनुक्रमेणईषत्तमोविरुध्यलब्धवन्तइत्यर्थःअन्येनह्यशक्नुवन् नलब्धवन्तःखलु ॥ ९ ॥

९. असुर स्वर्भानु ने जिस सूर्य को अन्धकार-द्वारा आच्छन्न किया था, अत्रिपुत्र ने अवशेष में उन्हें मुक्त किया। दूसरे कोई समर्थ नहीं हुए।

कोनुवामितिविंशत्यृचंनवमंसूक्तं भौमस्यात्रेरार्षं षोडशीसप्तदश्यावतिजगत्यौ विंश्यैकपदाविराट् शिष्टाःसप्तदशत्रिष्टुभः विश्वेदेवादेवताः तथाचानुक्रान्तं—कोनुविंशतिर्वैश्वदेवंवैतत्षोडश्याद्यतिजगत्यावन्त्यैकपादेति । विनियोगोलैंगिकः ।

कोनुवांमित्रावरुणाऋतायन्दिवोवामहःपार्थिवस्यवादे ।
ऋतस्यवासदसित्रासीथांनोयज्ञायतेवापशुषोनवाजान् ॥ १ ॥

कः । नु । वाम् । मित्रावरुणौ । ऋतऽयन् । दिवः । वा । महः ।
पार्थिवस्य । वादे । ऋतस्य । वा । सदसि । त्रासीथाम् । नः ।
यज्ञाऽयते । वा । पशुऽसः । न । वाजान् ॥ १ ॥

हेमित्रावरुणौ देवौ वांयुवां कोनु कःखलुयजमानः ऋतायन् यज्ञमिच्छन् शक्नुयादितिशेषः तस्मात्कृतंमयैवदिवःसदसिद्युलोकसंबन्धिनिस्थाने महोमहतःपार्थिवस्यसदसि ऋतस्योत्पादकस्यांतरिक्षस्यसदसि तद्धेतुत्वात्ताच्छब्द्यं त्रिषुस्थानेषुनोस्मान्त्रासीथां रक्षतं वाशब्दश्चार्थे किंच यज्ञायते यज्ञमिच्छते हविर्दात्रेच मह्यं पशुषोनवाजान् पशुषुसीदतोवाजानन्नानिक्षीरदध्यादीनीवतानियथाप्रयच्छथः तद्वदवतमिति यद्वा नशब्दश्चार्थे पशुषःपशून्वाजांश्चदत्तमित्यर्थः ॥ १ ॥

१. हे मित्रावरुण देव, तुम दोनों के यज्ञ करने की इच्छा करनेवाला कौन यजमान समर्थ होता है? तुम दोनों स्वर्ग, पृथिवी और अन्तरिक्ष के किस स्थान में रहकर हम लोगों की रक्षा करते हो और हव्यदाता यजमान को पशु तथा धन प्रदान करते हो।

तेनोमित्रोवरुणोअर्यमायुरिन्द्रऋभुक्षामरुतोजुषन्त ।
नमोभिर्वायेदधतेसुवृक्तिंस्तोमंरुद्रायमीळ्हुषेसजोषाः ॥ २ ॥

ते । नः । मित्रः । वरुणः । अर्यमा । आयुः । इन्द्रः । ऋभुक्षाः ।
मरुतः । जुषन्त । नमःऽभिः । वा । ये । दधते । सुऽवृक्तिम् ।
स्तोमम् । रुद्राय । मीळ्हुषे । सऽजोषाः ॥ २॥

तेमित्रादयोदेवाः नोस्माकं सुवृक्तिं स्तोमं शोभनपापादिवर्जनवत्स्तोत्रं नमोभिर्वा हविर्भिश्च जुषंत सेवन्तां येदधतेधारयन्ति उक्तलक्षणंस्तोत्रं देवाःद्विविधाः स्तोत्रभाजो-हविर्भाजश्च अत्रस्तोत्रभाजउच्यन्ते आयुः सततगतिर्वायुरुच्यते अथमरुतएववियुज्यवि-शेष्यन्ते रुद्रायमीळ्हुषे तृतीयार्थेचतुर्थी रुद्रेणसहसजोषाःसजोषसःसहप्रीयमाणाः तेषांपुत्रत्वा-दितिभावः केचन रुद्रायसजोषाइत्येतन्मित्रादिसर्वदेवताविशेषणमितिकथयन्ति ॥ २ ॥

२. हे मित्र, वरुण, अर्यमा, आयु, इन्द्र, ऋभुक्षा और मरुद्गण, तुम सब देव हमारे शोभन और पापवर्जित स्तोत्र का सेवन करो। तुम सब रुद्र के साथ प्रीयमाण होकर पूजा ग्रहण करो।

आवांयेष्ठाश्विनाहुवध्यैवातस्यपत्मन्रथ्यस्यपुष्टौ ।
उतवादिवोअसुरायमन्मप्रान्धांसीवयज्यवेभरध्वम् ॥ ३ ॥

आ । वाम् । येष्ठा । अश्विना । हुवध्यै । वातस्य । पत्मन् ।
रथ्यस्य । पुष्टौ । उत । वा । दिवः । असुराय । मन्म । प्र ।
अन्धांसिऽइव । यज्यवे । भरध्वम् ॥ ३ ॥

अनयाश्विनौ रुद्रश्चोच्यन्ते हेअश्विना अश्विनौ येष्ठा कामानांयंतृतमौ वां युवां वातस्यपत्मन् धर्मसाम्याद्धर्मिग्रहणं वायुसमानगतेरश्वस्यगमनेप्राप्तौ रथ्यस्य रथस्यपुष्टौच निमित्तेसति हुवध्यै हुवे आह्वयामि आह्वातुंप्रभवामि वा अथवा वायुवद्युवयोःशीघ्रगमन-साधनरथस्यपोषेचनिमित्तेसति उतवा किंचेत्यर्थः दिवोद्योतमानाय चतुर्थ्यर्थेषष्ठी असु-रायमाणापहर्त्रेरुद्राय यद्वा द्युलोकसंबन्धिने असुरायप्राणदात्रे सूर्यायवायवेवा यज्यवे या-गसाधकाय मन्ममननीयंस्तोत्रंप्रभरध्वं संपादयत हेऋत्विजः अन्धांसीव अन्नानिहविर्ल-क्षणानिहवींषिस्तोत्रंचेत्यर्थः ॥ ३ ॥

३. हे अश्विनीकुमारो, तुम दोनों दमनकारी हो। हम तुम्हारे रथ को वायुवेग-द्वारा वेगवान् करने के लिए तुम दोनों का आह्वान करते हैं। हे ऋत्विको, तुम लोग द्युतिमान् और प्राणापहारक रुद्र के लिए स्तोत्र और हव्य का सम्पादन करो।

प्रसक्षणोदिव्यःकण्वहोतात्रितोदिवःसजोषावातोअग्निः ।
पूषाभगःप्रभृथेविश्वभोजाआजिनजग्मुराश्वश्वतमाः ॥ ४ ॥

प्र । सक्षणः । दिव्यः । कण्वऽहोता । त्रितः । दिवः । सऽजोषाः ।
वातः । अग्निः । पूषा । भगः । प्रऽभृथे । विश्वऽभोजाः । आजिम् ।
न । जग्मुः । आश्वश्वऽतमाः ॥ ४ ॥

अत्रलिंगोक्तादेवताःप्रजग्मुरितिसंबन्धः सक्षणोयज्ञंसेवमानः शत्रूणांसोढावादिव्योदिविभवः कण्वहोता कण्वाऋषयोमेधाविनोवाहोतारआह्वातारोयस्यसतथोक्तः त्रितः त्रिषुक्षित्यादिस्थानेषु तायमानोदिवःसूर्येणसहसजोषाःसमानगतिः समानप्रीतिर्वा वातः उक्तलक्षणकोवायुरग्निः पूषापोषकएतन्नामाभगश्चप्रभृथे प्रभरणवत्यस्मिन्यज्ञेउक्ताःसर्वेदेवाः विश्वभोजाविश्वरक्षकाः कृत्स्नाचारोवा आश्वश्वतमाः प्रकृष्टगमनाश्ववतांश्रेष्ठाःसन्तः आजिंन संग्राममिव प्रजग्मुः प्रगच्छन्ति ॥ ४ ॥

४. मेधावी लोग जिनका आह्वान करते हैं, जो यज्ञ का सेवन करते हैं, शत्रुओं का विनाश करते हैं और स्वर्गीय हैं, वे (वायु, अग्नि, पूषा) क्षिति आदि तीनों स्थानों में जायमान होकर सूर्य के साथ तुल्यरूप से प्रीति उत्पन्न करते हैं। ये सकल विश्वरक्षक देव यज्ञस्थल में शीघ्र आगमन करें जैसे वेगवान् अश्व संग्राम में वेग से प्रधावित होते हैं।

प्रवोरयिंयुक्ताश्वंभरध्वंरायएषेवसेदधीतधीः ।
सुशेवएवैरौशिजस्यहोतायेवएवामरुतस्तुराणाम् ॥ ५ ॥ १३ ॥

प्र । वः । रयिम् । युक्तऽअश्वम् । भरध्वम् । रायः । एषे । अवसे ।
दधीत । धीः । सुऽशेवः । एवैः । औशिजस्य । होता । ये ।
वः । एवाः । मरुतः । तुराणाम् ॥ ५ ॥ १३ ॥

हेमरुतोवोयूयं रयिं धनं युक्ताश्वं अश्वसहितं अश्वयोग्यंपुत्रंवाप्रभरध्वं संपादयत रायोधनानि गवाश्वादिलक्षणानि एषे प्राप्तुं अवसे अवइत्यन्ननाम अन्नाय प्राप्तानां धनानांरक्षणायवाधीः स्तोतादधीत धारयतिस्तुतिम् सचौशिजस्यकक्षीवतोहोतात्रिः एवैर्गन्तव्यैःकामैः गमनसाधनैरश्वैर्वा सुशेवः शेवमितिसुखनाम सुसुखोभवतु हेमरुतस्तुराणांत्वरमाणानांवोयुष्माकंयेएवाः कामाः अश्वावासंतितैरिति ॥ ५ ॥

५. हे मरुतो, तुम लोग अश्वसहित धन का सम्पादन करो। स्तोता लोग गो, अश्व आदि धन लाभ के लिए और प्राप्त धन की रक्षा के लिए तुम लोगों की स्तुति करते हैं। उशिजपुत्र कक्षीवान् के होता अत्रि गमनशील अश्वों-द्वारा सुखी हों। जो घोड़े वेगवान् और तुम्हारे हैं।

प्रवोवायुमितिषष्ठीवायव्येपशौहविषोयाज्या प्रवोवायुंरथयुजंकृणुध्वमुतत्वामदितेमहीति सूत्रितंतत्पाठस्तु ।

प्रवौ॒वा॒युंर॑थ॒युजं॑कृणुध्वं॒प्रदे॒वंविप्रं॑पनि॒तार॑म॒र्कैः ।
इ॒षु॒ध्यव॑ऋत॒सापः॑पुरं॑धी॒र्वस्वी॑र्नो॒अत्र॒पत्नी॒रा धि॒ये धुः॑ ॥ ६ ॥

प्र । वः॒ । वा॒युम् । र॒थ॒ऽयुजं॑म् । कृ॒णु॒ध्व॒म् । प्र । दे॒वम् । विप्र॑म् ।
प॒नि॒तार॑म् । अ॒र्कैः । इ॒षु॒ध्यवः॑ । ऋ॒त॒ऽसापः॑ । पुर॑म्ऽधीः । वस्वीः॑ ।
नः॒ । अत्र॑ । पत्नीः॑ । आ । धि॒ये । धु॒रिति॑धुः ॥ ६ ॥

हेमदीयाऋत्विजोवोयूयंवायुंवायुदेवंरथयुजं यज्ञगमनाय रथसंबद्धंकृणुध्वं कुरुध्वं प्रदेवं द्योतमानं विप्रं विशेषेणकामानांपूरकं विप्रवत्पूज्यंवा पनितारं कर्मणिकर्तृप्रत्ययः स्तुत्यमित्यर्थः फलप्रदातारंवा अर्कैरर्चनीयसाधनैर्मंत्रैःप्रकृणुध्वं स्तुत किंच इषुध्यवः गंत्र्यः ऋतसापः यज्ञस्पृशः पुरंधीःपुरंध्यः स्त्रीरूपाः रूपवत्योवावस्वीः प्रशंस्यापत्नीर्देवपत्न्योत्रास्मिन्यज्ञेनोस्मदीयायधियेकर्मणेतन्निष्पत्तयेआधुः आगतवत्यः ॥ ६ ॥

६. हे हमारे ऋत्विको, तुम लोग द्युतिमान्, कामनाओं के विशेष-पूरक या विप्रवत् पूज्य और स्तुतियोग्य अथवा फलप्रदाता वायुदेव को यज्ञ में जाने के लिए अर्चनीय स्तोत्रों-द्वारा रथाधिरूढ़ करो। गमनवती, यज्ञ ग्रहणकारिणी, रूपवती और प्रशंसनीय देवपत्नियाँ हमारे यज्ञ में आगमन करें।

उप॑वए॒षेवन्द्ये॑भिः॒शूषैः॒प्रय॒ह्वीदि॒वश्चि॒तय॑द्भिर॒र्कैः ।
उ॒षासा॒नक्ता॑वि॒दुषी॑व॒विश्व॒मा हा॑वहतो॒मर्त्या॑यय॒ज्ञम् ॥ ७ ॥

उप॑ । व॒ः । एषे॑ । वन्द्ये॑भिः । शू॒षैः । प्र । य॒ह्वी इति॑ । दि॒वः ।
चि॒तय॑त्ऽभिः । अ॒र्कैः । उ॒षसा॒नक्ता॑ । वि॒दुषी॑इ॒वेति॑वि॒दुषी॑ऽइव ।
विश्व॑म् । आ । ह॒ । व॒ह॒तः॒ । मर्त्या॑य । य॒ज्ञम् ॥ ७ ॥

हेउषासानक्ता अहोरात्राभिमानिदेवते यह्वी महत्यौ वन्द्येभिर्वन्दनार्हैरितरैःदेवैःसहदिवोन्तरिक्षादविशेषेणसर्वप्रदेशाद्वोयुष्मभ्यंउपप्रैषे उपप्रापयामिहविः ईषिःप्रापणकर्मास्यादुपप्राभिः समन्वितः शूषैःसुखकरैश्चितयद्भिःज्ञापयद्भिरर्कैर्मंत्रैःसहोपप्रापयामि हेउक्तेदेवते भवत्यौ विश्वं सर्वंकर्तव्यजातं विदुषीइव जानंत्याविव मर्त्याययजमानाययज्ञमावहतः अभिमुखंप्रापयतः हेति पूरणः यद्वा शूषैरित्यादीनितृतीयाबहुवचनान्तानिवन्द्येभिरित्यस्यविशेषणानीतिकेचिदाहुः॥७॥

७. हे अहोरात्राभिमानी देवो, तुम दोनों महान् हो। वन्दनीय स्वर्गस्थ देवों के साथ हम तुम दोनों को सुखदायक और ज्ञापक मन्त्रों

के साथ हव्य प्रदान करते हैं। हे देवो, तुम दोनों सब कर्मजात को जानकर यजमान के यज्ञाभिमुख आगमन करो।

अभिवोअर्चेपोष्यावतोनॄन्वास्तोष्पतिंत्वष्टारंरराणः।
धन्यासजोषाधिषणानमोभिर्वनस्पतीरोषधीरायएषे ॥ ८ ॥

अभि। वः। अर्चे। पोष्याऽवतः। नॄन्। वास्तोः। पतिम्।
त्वष्टारम्। रराणः। धन्या। सऽजोषाः। धिषणा। नमःऽभिः।
वनस्पतीन्। ओषधीः। रायः। एषे ॥ ८ ॥

अहं पोष्यावतोबहुपोष्यजनयुक्तान्नॄन्कर्मनेतॄन् वोयुष्मानभ्यर्चे अभिपूजयामि स्तौमीत्यर्थः केपुनस्तेयूयं उच्यते—वास्तोष्पतिंत्वष्टारंरराणःस्तोत्रादिभिःक्रीडन् हविर्ददद्वाहंधन्याधनकरीसजोषाः इतरदेवैःसहगच्छन्तीप्रीणयन्तीवा धिषणा वाङ्नामैतत् वाग्देवता एताद्वितीयार्थेप्रथमा उक्तलक्षणांवाणींवनस्पतीनोषधीश्च नमोभिःसहार्चेइतिसंबन्धः किमर्थं रायएषे धनानिप्राप्तुम् ॥ ८ ॥

८. तुम सब बहुत लोगों के पोषक और यज्ञ के नेता हो। स्तोत्र आदि के द्वारा अथवा हवि देकर हम तुम्हारी स्तुति, धन-लाभ के लिए करते हैं। वास्तुपति त्वष्टा की हम स्तुति करते हैं। धन देनेवाली और अन्यान्य देवों के साथ गमन करनेवाली या आनन्दित होनेवाली धिषणा (वाणी) की हम स्तुति करते हैं। वनस्पतियों और ओषधियों की हम स्तुति करते हैं।

तुजेनस्तनेपर्वताःसन्तुस्वैतवोयेवसवोनवीराः।
पनितआप्त्योयजतःसदानोवर्धान्नःशंसंनर्योअभिष्टौ ॥ ९ ॥

तुजे। नः। तने। पर्वताः। सन्तु। स्वऽएतवः। ये।
वसवः। न। वीराः। पनितः। आप्त्यः। यजतः। सदा। नः।
वर्धात्। नः। शंसम्। नर्यः। अभिष्टौ ॥ ९ ॥

पर्वताः पर्ववन्तः पुराणवन्तोमेघाः तनेविस्तृतेतुजेदाने यद्वा तनेतिपुत्रनाम षष्ठयर्थेचतुर्थी पुत्रस्यदानइत्यर्थः अथवा नस्तुजेपुत्रेतनेतत्पुनेच स्वैतवः शोभनमनाःसन्तु भवन्तु कीदृशास्ते येवसवः जगतोवासयितारः वीरान वीराइव किंच पनितः स्तुतः आप्यः आप्तव्यः सर्वैर्यजतोयजनीयआदित्यः सदासर्वदा नः शंसं अस्माकंस्तुतिं नर्योनरेभ्योहितोदेवःअभिष्टौ अभिगतएषणे अभिगमनेवासति वर्धाव वर्धयेव ॥ ९ ॥

९. वीरों की तरह जगत् के संस्थापक मेघ, विस्तृत दान के विषय में, हम लोगों के प्रति अनुकूल हों। वे स्तुतियोग्य, आप्त्य, यजनीय, मनुष्यों के हितकारी और हम लोगों की स्तुति से सदा प्रसन्न होकर हम लोगों को समृद्ध करें।

वृष्णोअस्तोषिभूम्यस्यगर्भंत्रितोनपातमपांसुवृक्ति ।
गृणीतेअग्निरेतरीनशूषैःशोचिष्केशोनिरिणातिवना ॥१०॥१४॥

वृष्णः । अस्तोषि । भूम्यस्य । गर्भम् । त्रितः । नपातम् ।
अपाम् । सुऽवृक्ति । गृणीते । अग्निः । एतरि । न । शूषैः ।
शोचिःऽकेशः । नि । रिणाति । वना ॥ १० ॥ १४ ॥

भूम्यस्य भूमिरंतरिक्षं तदर्हस्यतादृशस्य वृष्णोवर्षकस्यपर्जन्यस्य अथवाभूम्योभूमेरेवार्हः तदुचितवृष्टिप्रदानात् तादृशस्यमेघस्यगर्भंगर्भस्थानीयं अपांनपातं रक्षकं वैद्युतमग्निं सुवृक्ति स्तोत्रकर्मैतत् शोभनपापादिवर्जनवतास्तोत्रेण अस्तोषि स्तुतवानहं सत्रितस्तीर्णतमः त्रिषुस्थानेषुनित्वापन्नेषुतायमानोग्निः एतरिगन्तरिमयि शूषैः सुखकरैः रश्मिभिः नगृणीते नगरणंकुरुते नक्रुध्यतीत्यर्थः किंतु शोचिष्केशः प्रदीप्तरश्मिःसन् वना वनानि निरिणाति हिनस्ति दहतीत्यर्थः ॥ १० ॥

१०. हम वर्षणकारी, अन्तरिक्ष (मेघ) के गर्भस्थानीय जल के रक्षक वैद्युत् अग्नि की, पापवर्जित शोभन स्तोत्रों-द्वारा, स्तुति करते हैं। अग्नि तीन स्थानों में व्याप्त और त्रिविध हैं। मेरे गमनकाल में अग्नि सुखकर रश्मियों द्वारा मेरे ऊपर क्रुद्ध नहीं होते हैं; किन्तु प्रदीप्त ज्वाला धारण कर वे जंगलों को जलाते हैं।

कथामहेरुद्रियायब्रवामकद्रायेचिकितुषेभगाय ।
आपओषधीरुतनोवन्तुद्यौर्वनागिरयोवृक्षकेशाः ॥ ११ ॥

कथा । महे । रुद्रियाय । ब्रवाम । कत् । राये । चिकितुषे ।
भगाय । आपः । ओषधीः । उत । नः । अवन्तु । द्यौः । वना ।
गिरयः । वृक्षऽकेशाः ॥ ११ ॥

वयमत्रयः कथा केनप्रकारेण महे महते रुद्रियाय रुद्रपुत्राय मरुद्गणाय ब्रवाम स्तुतीः कत् किंच स्तोत्रं राये धनलाभाय चिकितुषे सर्वंजानते भगायैतन्नामकायदेवायब्रवाम उतापिच आपः अब्देवताः ओषधीरोषधयोद्यौर्द्युदेवतावनावनानि गिरयोवृक्षकेशाः वृक्षाएवकेशस्थानीयायेषांते एता उक्तदेवतानोस्मानवन्तुरक्षन्तु ॥ ११ ॥

११. हम अत्रिगोत्रोत्पन्न किस प्रकार से महान् रुद्रपुत्र मरुतों की स्तुति करें? सर्वविद् भगदेव को, धन-लाभ के लिए, कौन-सा स्तोत्र कहें। जलदेवता, ओषधियाँ, द्युदेवता, वन और वृक्ष जिनके केशस्वरूप हैं, वे पर्वत हम लोगों की रक्षा करें।

श्रृणोतुनऊर्जांपतिर्गिरःसनभस्तरीयाँइषिरःपरिज्मा ।
श्रृण्वन्त्वापःपुरोनशुभ्राःपरिस्रुचोबबृहाणस्याद्रेः ॥ १२ ॥

श्रृणोतु । नः । ऊर्जाम् । पतिः । गिरः । सः । नभः । तरीयान् ।
इषिरः । परिऽज्मा । श्रृण्वन्तु । आपः । पुरः । न । शुभ्राः ।
परि । स्रुचः । बबृहाणस्य । अद्रेः ॥ १२ ॥

नोस्माकंगिरः स्तुतीः श्रृणोतु कः उर्जांबलानांपतिर्वायुः अथवाऊर्जामन्नानांपतिःप्राणोपाधिकस्यवायोःकृत्स्नान्नपतित्वंप्रसिद्धं श्रुतिश्चभवति—प्राणस्यान्नमिदंसर्वंप्रजापतिरकल्पयदिति । सः नभोनभसिचारी तरीयान् तरितव्यः इषिरोगमनशीलः परिज्मापरितोगन्ता किंच आपः श्रृण्वन्तु गिरः कीदृश्यस्ताः पुरोन पुराणीव शुभ्राःदीप्ताः बबृहाणस्यवर्धमानस्यअद्रेर्मेघस्य वापर्वतस्यवापरिपरितःस्रुचःसरणशीलाः ॥ १२ ॥

१२. बल अथवा अन्न के अधिपति और आकाशचारी वायु हमारी स्तुतियों को सुनें। नगर की तरह उज्ज्वल, बड़े पर्वत के चतुर्दिक् सरणशील वारिधारा हमारी वाणी सुने।

विदाचिन्नुमहान्तोयेवएवाब्रवांमदस्मावार्यन्दधानाः ।
वयंश्चनसुभ्वं१आवयन्तिक्षुभामर्तमनुयतंवधस्नैः ॥ १३ ॥

विद । चित् । नु । महान्तः । ये । वः । एवाः । ब्रवाम । दस्माः ।
वार्यम् । दधानाः । वयः । चन । सुऽभ्वः । आ । अव । यन्ति ।
क्षुभा । मर्तम् । अनुऽयतम् । वधऽस्नैः ॥ १३ ॥

हेमहान्तोमरुतोनु क्षिप्रं यूयं विद जानीथस्तोत्रं हेदस्माः दर्शनीयाः वोयुष्मान्येएवाः गन्तारोयुष्मान् भजमानाःवार्यंवरणीयंहविः दधानाः ददानाधारयन्तोवावयंब्रवामस्तुतिं यद्वा येवः यूयमित्यर्थः येयूयमेवाः अस्मद्यज्ञंअभिगन्तारः तेविद चिदितिपूरणः वयश्चन आगन्तारश्चैतेमरुतःसुभ्वःसुष्ठुभवन्तः प्रवृद्धाः आ अस्मदभिमुखमवयन्ति गच्छन्ति किंकुर्वन्तः क्षुभा क्षोभकेणसहितंमर्तंमरणधर्माणंवैरिणं अनुयतं अभिगतं वधस्नैरायुधैःपरिहरन्तोवयन्ति ॥ १३॥

१३. हे महान् मरुतो, तुम लोग शीघ्र ही स्तोत्रों को जानो। हे दर्शनीयो, तुम्हारी स्तुति करनेवाले हम लोग श्रेष्ठ हव्य धारण करके तुम्हारी स्तुति करते हैं। मरुद्गण अनुकूल भाव से आगमन करके, क्षोभ-द्वारा अभिभूत मनुष्य वैरियों को अस्त्रों-द्वारा मार करके, हम लोगों के निकट उपस्थित हों।

आदैव्या॑नि॒ पार्थि॑वानि॒ जन्मा॒पश्चाच्छा॑ सु॒मखा॑य वोचम्।
वर्ध॑न्तां॒ द्यावो॒ गिर॑श्च॒न्द्राग्रा॑ उ॒दा व॑र्धन्ताम॒भिषा॑ता॒ अर्णाः॥ १४ ॥

आ। दैव्या॑नि। पार्थि॑वानि। जन्म॑। अ॒पः। च॒। अच्छ॑।
सु॒ऽमखा॑य। वो॒च॒म्। वर्ध॑न्ताम्। द्याव॑ः। गिर॑ः। च॒न्द्रऽअ॑ग्राः।
उ॒दा। व॒र्ध॒न्ता॒म्। अ॒भिऽसा॑ताः। अर्णाः॥ १४ ॥

दैव्यानि देवसंबंधीनि पार्थिवानि पृथिवीसंबंधीनिच जन्म जन्मानि अपश्च अपसाच्छाभिप्राप्तुंसुमखायशोभनयज्ञायमरुद्गणायवोचंब्रवीमिगिरः स्तुतयोवर्धंतां द्यावोद्योतमानाः स्वप्रतिपाद्यार्थप्रकाशिन्यः चन्द्राग्राः आह्लादनंहिरण्यंवा अग्रे यासां तास्तादृश्यः सत्योवर्धन्तां अर्णाःनद्यश्चअभिषाताः मरुद्भिःसंभक्ताः उदा उदकेनवर्धन्तां समृद्धाभवन्तु॥ १४ ॥

१४. हम देव-सम्बन्धी और पृथ्वी-सम्बन्धी जन्म तथा जल-लाभ करने के लिए सुन्दर यज्ञवाले मरुतों की स्तुति करते हैं। हमारी स्तुतियाँ वर्द्धमान हों। प्रीतिदायक स्वर्ग समृद्धि-सम्पन्न हों। मरुतों-द्वारा परिपुष्ट नदियाँ जलपूर्ण हों।

प॒देप॑दे मे जरि॒मा नि धा॑यि॒ वरू॑त्री वा श॒क्रा या पा॒युभि॑श्च।
सिष॑क्तु मा॒ता म॒ही र॒सा नः॒ स्मत्सू॒रिभि॑र्ऋजु॒हस्त॑ ऋजु॒वनिः॥ १५ ॥ १५ ॥

प॒देऽप॑दे। मे॒। ज॒रि॒मा। नि। धा॒यि॒। वरू॑त्री। वा॒। श॒क्रा।
या। पा॒युऽभिः। च॒। सिस॑क्तु। मा॒ता। म॒ही। र॒सा। नः॒।
स्मत्। सू॒रिऽभिः। ऋ॒जु॒ऽहस्ता॑। ऋ॒जु॒ऽवनिः॥ १५ ॥ १५ ॥

जरिमास्तुतिर्मेमदीयापदेपदे तदातदाभूमौनिधायि निधीयते स्थाप्यते क्रियतइत्यर्थः याचशक्रा शक्तासती पायुभीरक्षणैः वरूत्री अस्मदुपद्रववारयित्रीभवति वाशब्दश्चार्थे मातासर्वस्यनिर्मात्री मही महती पूज्या रसा सारभूताभूमिः सिषक्तु सेवतां नोस्माकं स्तुतिं अथवा स्तुतानोस्मान्सिषक्तु स्मच्छब्दःप्रशस्तवचनः प्रशस्तैःसूरिभिःमेधाविभिःस्तोतृभिःनिमित्तैःतेषांपरिचर्ययामीतित्यर्थः ऋजुहस्ताअस्मदनुकूलहस्ताऋजुवनिःकल्याणदानाभवतु॥ १५ ॥

१५. हम सदा स्तुति करते हैं। जो उपद्रवों का निवारण करके हम लोगों की रक्षा करने में समर्थ होती है, वह सबकी निर्मात्री, पूज्या भूमि हम लोगों की स्तुति को ग्रहण करे। प्रशस्त बचनवाले मेधावी स्तोताओं के प्रति वह प्रसन्न हो और अनुकूल हस्त होकर हम लोगों को कल्याण प्रदान करे।

कथादाशेमनमसासुदानूनेवयामरुतोअच्छोक्तौप्रश्रवसोमरुतोअच्छोक्तौ।
मानोहिर्बुध्न्योरिषेधादस्माकंभूदुपमातिवनिः ॥ १६ ॥

कथा । दाशेम । नमसा । सुऽदानून् । एवऽया । मरुतः । अच्छऽउक्तौ।
प्रऽश्रवसः । मरुतः । अच्छऽउक्तौ । मा । नः । अहिः । बुध्न्यः ।
रिषे । धात् । अस्माकम् । भूत् । उपमातिऽवनिः ॥ १६ ॥

वयं कथा केनप्रकारेण दाशेम परिचरेम नमसास्तोत्रेणान्नेनवासुदानून् शोभनदानान्मरुतःएवयाएवंक्रियमाणप्रकारेणअच्छोक्तौ आभिमुख्येनवचनेनिमित्तेसति तान्मरुतःकथंपरिचरेम तेषांदुराराध्यत्वादितिभावः कथं प्रश्रवसः प्रकृष्टान्नाभवन्ति अच्छोक्तौ अभिगंत्र्युक्तिः स्तुतिर्यस्यताद्दशेमयि यद्वा प्रश्रवसःप्रकृष्टान्नस्यममअच्छोक्तौस्तोत्रनिमित्तेसति मरुतःकथाकेनप्रकारेणदाशेम पुनरुक्तिरादरार्था अहिर्बुध्न्योदेवोस्मान् रिषे हिंसकाय माधात् मास्थापयतु सदेवोस्माकंभूत् भवतु उपमातिवनिः शत्रूणांहन्ता ॥ १६ ॥

१६. हम लोग किस प्रकार से दानशील मरुतों का समुचित स्तवन करें? किस प्रकार वर्तमान स्तोत्र-द्वारा मरुतों के योग्य उपासना करें? वर्तमान स्तोत्र-द्वारा मरुतों का स्तवन कैसे सम्भव है? अहिर्बुध्न्य देव हम लोगों का अनिष्ट नहीं करें; शत्रुओं को विनष्ट करें।

इतिचिन्नुप्रजायैपशुमत्यैदेवासोवनतेमर्त्योवआदेवासोवनतेमर्त्योवः।
अत्राशिवांतन्वोधासिमस्याजरांचिन्मेनिर्ऋतिर्जग्रसीत ॥ १७ ॥

इति । चित् । नु । प्रऽजायै पशुऽमत्यै । देवासः । वनते । मर्त्यः ।
वः । आ । देवासः । वनते । मर्त्यः । वः । अत्र । शिवाम् । तन्वः ।
धासिम् । अस्याः । जराम् । चित् । मे। निःऽऋतिः । जग्रसीत॥ १७॥

हेदेवासोदेवाः वोयुष्मान् इतिचित् इत्थमेव नु क्षिप्रं प्रजायै पशुमत्यै पशुसहितायापत्याय वनते भजते मर्त्योमनुष्योयजमानः आदेवासइतिपुनरुक्तिरादरार्था अत्रास्मिन्यज्ञे शिवांधासिं अन्नं मे मम अस्यास्तन्वोदेवैरनुगृहीतस्यपुत्रस्य करोतु निर्ऋतिर्देवता जरांचित् जरांच जग्रसीतग्रसतु ॥ १७ ॥

१७. हे देवो, मनुष्य यजमान सन्तान के लिए और पशुओं के लिए शीघ्र ही तुम लोगों की उपासना करते हैं। हे देवो, मनुष्य लोग तुम्हारी उपासना करते हैं। इस यज्ञ में निर्ऋति देवता कल्याणकर अन्न-द्वारा हमारे शरीर का पोषण करें और जरा दूर करें।

अथाष्टादशी—

तांवोदेवाःसुमतिमूर्जयन्तीमिषमश्यामवसवःशसागोः ।
सानःसुदानुर्मृळयन्तीदेवीप्रतिद्रवन्तीसुवितायगम्याः ॥ १८ ॥

ताम् । वः । देवाः । सुऽमतिम् । ऊर्जयन्तीम् । इषम् । अश्याम ।
वसवः । शसा । गोः । सा । नः । सुऽदानुः । मृळयन्ती ।
देवी । प्रति । द्रवन्ती । सुवितायं । गम्याः ॥ १८ ॥

हेदेवाः हेवसवोवासयितारोवोयुष्माकं स्वभूतांतांप्रसिद्धां सुमतिंशोभनमननसाधनां अन्नेनमतिवृद्धिरन्नमयंहिसौम्यमनइत्यादिषुप्रसिद्धा ऊर्जयन्तींबलकरीं इषंएषणसाधनमन्नं क्षीरदध्यादिलक्षणं शसास्तुत्या गोःसकाशादश्यामप्राप्नुयाम सादेवी नोस्मान् सुवितायसुखाय प्रतिगम्याःप्रतिगम्यात्अभिगच्छेत् साइट्देवताविशेष्यते सुदानुःशोभनदाना-मृळयन्तीसुखयन्ती द्रवन्तीअस्मदभिमुखंगच्छन्ती ॥ १८ ॥

१८. हे द्युतिमान् वसुओ, हम लोग तुम्हारी उस सुमति धेनु से बलकारक और हृदय-पोषक अन्न लाभ करें। वह दानशीला और सुखदायिनी देवी हम लोगों के सुख के लिए शीघ्र आगमन करे।

अथैकोनविंशी—

अभिनइळायूथस्यमातास्मन्नदीभिरुर्वशीवागृणातु ।
उर्वशीवाबृहद्दिवागृणानाभ्यूर्ण्वानाप्रभृथस्यायोः ॥ १९ ॥

अभि । नः । इळा । यूथस्य । माता । स्मत् । नदीभिः ।
उर्वशी । वा । गृणातु । उर्वशी । वा । बृहत्ऽदिवा । गृणाना ।
अभिऽऊर्ण्वाना । प्रऽभृथस्य । आयोः ॥ १९ ॥

अभिगृणातु नोस्मानिळाभूमिः यूथस्यगोसंघस्य मातानिर्मात्री यद्वा इळा गोरूपधरामनोःपुत्रीत्याहुः यद्वा यूथस्यमरुद्गणस्य निर्मात्री इळामाध्यमिकीवाक् अथवोर्वशीमाध्यमिकीवाक् नदीभिर्गङ्गादिभिःसह गृणातु स्मच्छब्दःप्रशस्तवचनइत्युक्तं प्राशस्त्यंगृणातु अथवा अन्तरिक्षस्थानादेवता नोस्माकं प्राशस्त्यंगृणातु वाअथवा उर्वशीबहूनांवशयित्री आदित्याख्याद्युस्थानदेवता नःप्राशस्त्यंगृणातु कीदृशीसा उर्वशीबृहद्दिवाप्रभूतदीप्तिः गृणानाशब्दयन्ती अस्मदीयंकर्मप्रशंसन्ती अभ्यूर्ण्वानाआच्छादयन्ती

कं आयोःआयुंमनुष्यंयजमानं केन प्रभृथस्यतेजसोवोदकस्यवादानेन प्रभृथस्यतेजसो-वोदकस्येतिनिरुक्तं । अथवा प्रभृथस्यप्रभरणवतआयोर्यज्ञमभ्यूर्णवानाआच्छादयन्ती ॥ १९ ॥

१९. गोसंघ की निर्मात्री इड़ा और उर्वशी नदियों के साथ हम लोगों के प्रति अनुकूल हों । निरतिशय दीप्तिशालिनी उर्वशी हम लोगों के यज्ञ आदि कार्य की प्रशंसा करके यजमानों को दीप्ति-द्वारा समाच्छादित करके उपस्थित हो ।

सिषंक्तुनऊर्जव्यस्यपुष्टेः ॥ २० ॥ १६ ॥

सिसंक्तु । नः । ऊर्जव्यस्य । पुष्टेः ॥ २० ॥ १६ ॥

ऊर्जव्यस्यैतन्नामकस्यराज्ञःपुष्टेःपोषकस्य संबन्धिनोनोस्मान् सिषक्तुसेवतांसामर्थ्या-द्देवसंघइतिगम्यते अथवा उर्वशीमरुद्गणोवागृह्यते प्रकृतत्वादिति ॥ २० ॥

२०. पोषक ऊर्जव्य राजा का देवसंघ हम लोगों का सेवन करे ।

प्रशंतमेत्यष्टादशर्चंदशमंसूक्तं भौमस्यात्रेरार्षंत्रैष्टुभं पूर्वसूक्तेवैतदित्युक्तत्वात् इदम-पिवैश्वदेवं तमुष्टुहीत्येकादशीरुद्रदेवत्या सप्तदश्येकपदा एतयोरुपांत्यैकपदेत्यनुक्रमिष्यमाण-त्वात् अत्रानुक्रमणिका—प्रशंतमाद्यूनैकादशीरौद्रीति । विनियोगोलैंगिकः ।

प्रशंतमावरुणंदीधितीगीर्मित्रंभगमदितिंनूनमश्याः ।
पृषंद्योनिःपञ्चहोताशृणोत्वतूर्तपन्थाअसुरोमयोभुः ॥ १ ॥

प्र । शम्ऽतमा । वरुणम् । दीधिती । गीः । मित्रम् । भगम् ।
अदितिम् । नूनम् । अश्याः । पृषत्ऽयोनिः । पंचऽहोता । शृणोतु ।
अतूर्तऽपन्थाः । असुरः । मयःऽभुः ॥ १ ॥

शंतमा अत्यन्तसुखकरी गीः स्तुतिरूपावाक् वरुणंमित्रंभगंअदितिंच दीधिती दी-धित्याकर्मणा हविःप्रक्षेपणात्मकेनसह नूनमवितथं प्राश्याःप्राप्नोतु किंच पृषद्योनिः पृष-द्वर्णान्तरिक्षस्थः पंचहोता पंचविधस्यप्राणापानादिहोमस्यसाधकोवायुः यद्वा पंचहोतेतिवा-योर्नाम वायुःपंचहोतासप्राणइतिहिश्रुतेः । सचातूर्तपन्थाः अहिंसितगतिः असुरःप्राणस्यदा-ता मयोभुःसुखस्यास्पदभूतः एवमुक्तलक्षणोवायुः शृणोतुस्तोत्रमिति ॥ १ ॥

१. प्रदत्त हव्य के साथ हम लोगों का निरतिशय सुखदायक स्तोत्र वरुण, मित्र, भग और आदित्य के निकट उपस्थित हो । जो प्राण आदि पञ्च वायु के साधक हैं, जो विविध वर्ण के अन्तरिक्ष में अवस्थान करते हैं, जिनकी गति अप्रतिहत है, जो प्राणदाता और सुखसम्पादक हैं, वे वायु हम लोगों का स्तोत्र श्रवण करें ।

प्रतिमेस्तोमुमदि॑तिर्जगृभ्यात्सूनुंनमा॒ताहृद्यंसुशेवम्।
ब्रह्मप्रियंदे॒वहि॑तंयदस्त्य॒हंमि॒त्रेवरु॑णेयन्म॑यो॒भु ॥ २ ॥

प्रति॑। मे॒। स्तोम॑म्। अदि॑तिः। जगृ॒भ्यात्। सूनुम्। न। मा॒ता। हृद्य॑म्। सु॒ऽशेव॑म्। ब्रह्म॑। प्रि॒यम्। दे॒वऽहि॑तम्। यत्। अस्ति॑। अ॒हम्। मि॒त्रे। वरु॑णे। यत्। म॒यः॒ऽभु ॥ २ ॥

मेमदीयं स्तोमंस्तोत्रं अदितिर्देवता प्रतिजगृभ्यात्प्रतिगृह्णातु सूनुंनमाता स्वतनुजंजननी-व सायथाप्रतिगृह्यआलिंग्यपरितुष्यति तद्वदित्यर्थः कीदृशंतं हृद्यंहृदयंगमं सुशेवं शोभन-सुखकरं एतद्द्वयंसाधारणं किंच ब्रह्म मंत्रजातं प्रियंप्रियकरं देवहितं देवैःप्राप्यंयदस्ति यद्ब्रह्म मयोभु सुखसाधनंतदहंमित्रेवरुणेचप्रापयामीतिशेषः यद्वा मित्रेवरुणेच अहोरात्राभिमानिदेवयोः यदुक्तलक्षणं ब्रह्म परिवृढं यज्ञादिरूपं कर्मास्तितदहंधारयामीति ॥ २ ॥

२. हमारे हृदयंगम और सुखकर स्तोत्र को अदिति देवता ग्रहण करें, जैसे जननी अपने पुत्र को ग्रहण करती है। अहोरात्राभिमानी देव मित्र और वरुण के उद्देश से हम मनोहर, आनन्ददायक और देवग्राह्य स्तोत्र (मन्त्रजात) प्रदान करते हैं।

उदीरयेत्येषा एकादशिनेसावित्रेपशौवपायाज्या सूत्रितंच—उदीरयकवितमंकवीनांभगं-धियंवाजयन्तःपुरंधिमितिद्वेइति।

उदी॑रयक॒वित॑मंक॒वीना॑मु॒नत्तै॑नम॒भिमध्वा॑घृ॒तेन॑।
सनो॒वसू॑नि॒प्रय॑ताहि॒तानि॑च॒न्द्राणि॑दे॒वः॑स॑वि॒तासु॑वाति ॥ ३ ॥

उत्। ई॒र॒य॒। क॒वि॒ऽत॑मम्। क॒वीना॑म्। उ॒नत्त॑। ए॒न॒म्। अ॒भि। मध्वा॑। घृ॒तेन॑। सः। नः॒। वसू॑नि। प्रऽय॑ता। हि॒तानि॑। च॒न्द्राणि॑। दे॒वः। स॒वि॒ता। सु॒वा॒ति॒ ॥ ३ ॥

अनया अग्निःसविताचस्तूयते हेऋत्विजः कवीनां कवितमं अतिशयेनक्रान्तदर्शिनं अ-मुं पुरोवर्तिनंअग्निंसवितारंवा उदीरय ऊर्ध्वंप्रापयत हर्षयतेत्यर्थः एनंदेवं मध्वा मधुरेणसोमर-सेनघृतेनच अभ्युनत्त अभिषिंचत तर्पयतेत्यर्थः ससवितादेवोनोस्मभ्यं वसूनि निवासयोग्या-नि गवादिधनानि प्रयता प्रयतानिहितानि चन्द्राणिआह्लादकानि हिरण्यानि सुवाति प्रय-च्छत्वित्यर्थः ॥ ३ ॥

३. हे ऋत्विको, तुम लोग अतिशय क्रान्तदर्शी और पुरोवर्ती अग्नि अथवा सविता को उद्दीप्त करो—प्रमुदित करो। मधुर सोमरस और घृत-द्वारा इन्हें अभिषिक्त करो—तृप्त करो। वे सविता देव हम लोगों को शुद्ध, हितकर तथा आह्लादक हिरण्य प्रदान करें।

अथचतुर्थी—

समिन्द्रणोमनसानेषिगोभिःसंसूरिभिर्हरिवःसंस्वस्ति।
संब्रह्मणादेवहितंयदस्तिसंदेवानांसुमत्यायज्ञियानाम् ॥ ४ ॥

सम्। इन्द्र। नः। मनसा। नेषि। गोभिः। सम्। सूरिऽभिः।
हरिऽवः। सम्। स्वस्ति। सम्। ब्रह्मणा। देवऽहितम्। यत्।
अस्ति। सम्। देवानाम्। सुऽमत्या। यज्ञियानाम् ॥ ४ ॥

हेइन्द्र नोस्मान् मनसा प्रकृष्टेनचेतसा गोभिःसह संनेषिनयसि अस्मभ्यंगाःदापयसीत्यर्थः एवंसर्वत्र हेहरिवः हरिभ्यांतद्वन्निन्द्र सूरिभिर्मेधाविभिःपुत्रैर्ऋत्विग्भिर्वा सन्नेषि तथा स्वस्तिभिःक्षेमैःसंनेषि ब्रह्मणा प्रभूतेनान्नेनसंनेषि यदन्नंदेवहितमस्ति तेन किंच यज्ञियानां यज्ञार्हाणांदेवानां सुमत्या अनुग्रहबुद्ध्यासंनेषि ॥ ४ ॥

४. हे इन्द्र, तुम हम लोगों को प्रसन्न मन से गौएँ प्रदान करते हो। हे अश्वद्वय-सम्पन्न इन्द्र, तुम हम लोगों को मेधावी पुत्र अथवा ऋत्विक्, कल्याण, देवताओं के हितकर अन्न और यज्ञीय देवों का अनुग्रह प्रदान करते हो।

देवोभगःसवितारायोअंशइन्द्रोवृत्रस्यसंजितोधनानाम्।
ऋभुक्षावाजउतवापुरंधिरवन्तुनोअमृतासस्तुरासः ॥ ५ ॥ १७ ॥

देवः। भगः। सविता। रायः। अंशः। इन्द्रः। वृत्रस्य। सम्ऽजितः।
धनानाम्। ऋभुक्षाः। वाजः। उत। वा। पुरम्ऽधिः। अवन्तु।
नः। अमृतासः। तुरासः ॥ ५ ॥ १७ ॥

अत्रलिंगोक्तादेवताः भगोदेवःसविताच रायोधनस्यस्वामी अंशस्त्वष्टा वृत्रस्यहन्ताइन्द्रश्च एतेदेवाः धनानांसंजितःसम्यक्जेतारः ऋभुक्षाः ऋभुर्वाजश्च उतवा अपिच पुरंधिर्बहुधीः विश्वोच्यते एतेच अमृतासोअमृताअमरणधर्माणः भगादिदेवाः तुरासः अस्मद्यज्ञंप्रति त्वरमाणाःसंतोनोस्मानवन्तुरक्षन्तु ॥ ५ ॥

५. भगदेव, धनस्वामी सविता, वृत्रहन्ता इन्द्र, भली भाँति से धन के विजेता ऋभुक्षा, वाज और पुरन्धि आदि समस्त अमर शीघ्र ही हम लोगों के यज्ञ में उपस्थित होकर हम लोगों की रक्षा करें।

मरुत्वंतोअप्रतीतस्यजिष्णोरजूर्यतःप्रब्रवामाकृतानि ।
नतेपूर्वेमघवन्नापरासोनवीर्यं१नूतनःकश्चनाप ॥ ६ ॥

मरुत्वंतः । अप्रतिऽइतस्य । जिष्णोः । अजूर्यतः । प्र । ब्रवाम ।
कृतानि । न । ते । पूर्वे । मघऽवन् । न । अपरासः । न । वीर्यम् ।
नूतनः । कः । चन । आप ॥ ६ ॥

वयं यजमानामरुत्वतोमरुद्भिस्तद्वतइन्द्रस्य कृतानि कर्माणि प्रब्रवाम प्रख्यापयाम कीदृशस्य तस्य अप्रतीतस्य अप्रतिगतस्य युद्धे अपलायमानस्य नकेवलंतावन्मात्रं जिष्णोर्जयनशीलस्य अजूर्यतः अजीर्यमाणस्य सर्वदायूनइत्यर्थः अथप्रत्यक्षेणोच्यते हेमघवन्निन्द्र तेतव वीर्यं पराक्रमं पूर्वेपुरातनाः पुरुषाःनापुः नापरासोअपरेपिनापुः किंवहुना नूतनःकश्चनआश्चर्यभूतोयःकोपिवीर्यंनाप नप्राप्नोति ॥ ६ ॥

६. हम यजमान मरुत्वान् इन्द्र के कार्यों का वर्णन करते हैं। वे युद्ध से कभी पलायमान नहीं होते हैं। वे जयनशील और जरारहित हैं। हे इन्द्र, तुम्हारे पराक्रम को किसी पुरातन पुरुष ने नहीं पाया है, उनके पीछे होनेवालों ने भी नहीं पाया है। और क्या, किसी नवीन ने भी तुम्हारे पराक्रम को नहीं पाया है।

उपस्तुहिप्रथमंरत्नधेयंबृहस्पतिंसनितारंधनानाम् ।
यःशंसतेस्तुवतेशंभविष्ठःपुरुवसुरागमज्जोहुवानम् ॥ ७ ॥

उप । स्तुहि । प्रथमम् । रत्नऽधेयम् । बृहस्पतिम् । सनितारम् ।
धनानाम् । यः । शंसते । स्तुवते । शम्ऽभविष्ठः । पुरुऽवसुः ।
आऽगमत् । जोहुवानम् ॥ ७ ॥

हेअन्तरात्मन् त्वं प्रथमंमुख्यंप्रकृष्टतममित्यर्थः रत्नधेयं रमणीयधनदातारं धनानां हविर्लक्षणानां सनितारं संभक्तारं अथवा रत्नशब्देनमणिमुक्तादयोगृहीताः इह धनशब्देन गवादयः गवादिदातारं बृहस्पतिं बृहतोमंत्रस्यपतिंस्वामिनंदेवं उपस्तुहि देवःशंसते स्तोत्रैः स्तुवते सामभिर्यजमानाय शंभविष्ठः सुखस्यभावयितृतमोभवति यश्च जोहुवानं आह्वयन्तं यजमानं पुरुवसुः प्रभूतधनःसन् आगमत्आगच्छति तमुपस्तुहि ॥ ७ ॥

७. हे अन्तरात्मा, तुम अतिशय श्रेष्ठ और रमणीय धनदाता बृहस्पति (मन्त्रपति) की स्तुति करो। वे हविर्लक्षण धन के विभागकर्ता हैं। वे स्तोत्रकर्त्ता यजमान को महान् सुख प्रदान करते हैं। आह्वान करनेवाले यजमान के निकट वे प्रभूत धन लेकर आगमन करते हैं।

तवोतिभिःसचमानाअरिष्टाबृहस्पतेमघवानःसुवीराः ।
येअश्वदाउतवासन्तिगोदायेवस्त्रदाःसुभगास्तेषुरायः ॥ ८ ॥

तव । ऊतिऽभिः । सचमानाः । अरिष्टाः । बृहस्पते । मघऽवानः ।
सुऽवीराः । ये । अश्वऽदाः । उत । वा । सन्ति । गोऽदाः । ये ।
वस्त्रऽदाः । सुऽभगाः । तेषु । रायः ॥ ८ ॥

हेबृहस्पते तवोतिभिः रक्षाभिः सचमानाः संगच्छमानाः अरिष्टाः अहिंसिताः मघवानो-धनवन्तः सुवीराः शोभनपुत्राश्चभवन्ति येत्वदनुगृहीताःअश्वदाः बहूनामश्वानांदातारःसन्ति उतवा अथवा गोदाःसन्ति येच वस्त्रदाः सुभगाः शोभनधनाःसन्ति तेषुसर्वेषु रायोधनानि संभवंत्वितिशेषः ॥ ८ ॥

८. हे बृहस्पति, तुम्हारे द्वारा रक्षित होने पर मनुष्य लोग अहिंसित, धनवान् और सुन्दर पुत्रों से युक्त होते हैं। तुम्हारे द्वारा अनुगृहीत होकर जो कोई धनवान् अश्व, गौ और वस्त्र दान करता है, वह धनलाभ करे।

विसर्माणंकृणुहिवित्तमेषांयेभुञ्जतेअपृणन्तोनउक्थैः ।
अपव्रतान्प्रसवेवावृधानान्ब्रह्मद्विषःसूर्याद्यावयस्व ॥ ९ ॥

विऽसर्माणम् । कृणुहि । वित्तम् । एषाम् । ये । भुंजते । अपृणन्तः ।
नः । उक्थैः । अपऽव्रतान् । प्रऽसवे । ववृधानान् । ब्रह्मऽद्विषः ।
सूर्यात् । यवयस्व ॥ ९ ॥

एषां वक्ष्यमाणानां वित्तं धनं विसर्माणं विसरणशीलं कृणुहिकुरु हेब्रह्मणस्पते एषा-मित्युक्तंकेषामित्याह येभुंजते अपृणन्तोअप्रयच्छन्तः केभ्यः उक्थैः स्तुतिप्रतिपादकैःशस्त्रै-र्विशिष्टेभ्योनोस्मभ्यं तानपव्रतान्अपगतकर्मणः प्रसवे उत्पत्तिमतिमनुष्यलोके ववृधानान् वर्धमानान् ब्रह्मद्विषोब्राह्मणद्वेष्टॄन्मन्त्रद्वेष्टॄन्वासूर्यात्यवयस्व पृथक्कुरु अन्धकारेस्थापयेत्यर्थः॥९॥

९. हे बृहस्पति, जो स्तुतिप्रतिपादक हम लोगों को नहीं दान देकर स्वयं उपभोग करता है, जो व्रत धारण नहीं करता है, जो मन्त्रविद्वेषी है, उसके धन को तुम नष्ट करो। सन्तति-सम्पन्न होकर; यद्यपि वह मनुष्य लोक में वर्द्धमान हो रहा है; तथापि तुम उसे सूर्य से पृथक् करो अर्थात् अन्धकार में रक्खो।

अथदशमी—

यओहतेरक्षसोदेववीतावचक्रेभिस्तंमरुतोनियात ।
योवःशमींशशमानस्यनिन्दात्तुच्छ्यान्कामान्करतेसिष्विदानः॥१०॥१८॥

यः । ओहते । रक्षसः । देवऽवीतौ । अचक्रेभिः । तम् । मरुतः । नि । यात । यः । वः । शमीम् । शशमानस्य । निन्दात् । तुच्छयान् । कामान् । करते । सिस्विदानः ॥ १० ॥ १८ ॥

योयजमानोरक्षसोबलिनोराक्षसाव् ओहते प्रापयति देववीतौ देवानांवीतिःप्राप्तिर्भक्षणं वायत्रसवथोक्तःतस्मिन्यज्ञे अन्यथानुष्ठानादिनाआसुरंकरोतीत्यर्थः तंयजमानमचक्रेभिःअचक्रैः रथैः हेमरुतोनियात नितरांप्रापयतअंधकारं यद्वा अचक्रेभिरितिपूर्वेत्रान्वयः चक्रशब्देनांगान्युच्यन्ते पुनःपुनःअंगरहितैःकेवलैरेवप्रधानैरोहतेप्रापयति सांगंहिकर्मदेवानभ्येति यश्चवोयुष्माकं शमींकर्मस्तुतिलक्षणं शशमानस्य शंसमानस्यममसंबन्धि निन्दात्निन्देत् वैदिकंज्योतिष्टोमादिरूपंकर्म निन्दति स्वयंच तुच्छयान्नश्वरान्कामान्कृष्यादिजनितभोगान् करते कुरुते सिस्विदानः स्विद्यन्नात्मानंक्लेशयन् अथवा युष्मासु कमनीयान्भोगानतुच्छयान्करोति ॥ १० ॥

१०. हे मरुतो, जो यजमान देव-यज्ञ में राक्षसों को बुलाता है अर्थात् अनुष्ठान को आसुरी बना देता है, अन्न, अश्व, कृषि आदि के द्वारा उत्पन्न भोग के लिए, जो अपने को क्लेश देता (घर्माक्त करता) है और जो तुम्हारी स्तुति करनेवाले की निन्दा करता है, उस यजमान को चक्रविहीन रथ-द्वारा तुम लोग अन्धकार में निमग्न कर देते हो।

तमुष्टुहियःस्विषुःसुधन्वायोविश्वस्यक्षयतिभेषजस्य ।
यक्ष्वामहेसौमनसायरुद्रंनमोभिर्देवमसुरंदुवस्य ॥ ११ ॥

तम् । ऊँ इति । स्तुहि । यः । सुऽइषुः । सुऽधन्वा । यः । विश्वस्य । क्षयति । भेषजस्य । यक्ष्व । महे । सौमनसाय । रुद्रम् । नमःऽभिः । देवम् । असुरम् । दुवस्य ॥ ११ ॥

हेआत्मन् तमु तमेवरुद्रं स्तुहि स्तुतिंकुरु यःस्विषुः शोभनबाणः सुधन्वाच विरोधिहंतृत्वावस्तुत्वं यश्च विश्वस्यभेषजस्य सर्वस्यौषधस्यक्षयति ईश्वरोभवति शारीरस्य सांसारिकस्यवारिष्टस्यशमनायेश्वरसेवातिरिक्तस्यौषधस्याभावात् भिषक्तमत्वाच्चास्यभेषजस्वामित्वं भिषक्तमंत्वाभिषजांशृणोमिइत्यादिश्रुतेः। किंच तमेवरुद्रं दुःखात्तत्साधनाद्दुरिताद्वा मोचयितारंदेवं यक्ष्व यजस्व महे महते सौमनसाय सुमनस्त्वाय ईश्वराराधनाच्चित्तशांतिः प्रसिद्धा किंच नमोभिर्हविर्भिर्नमस्कारैर्वा देवं द्योतमानं असुरम् प्रज्ञावन्तंबलवन्तंमित्यर्थः यद्वा प्राणदातारंरुद्रंदुवस्यपरिचरेति ॥ ११ ॥

११. हे आत्मा, तुम रुद्रदेव की स्तुति करो, जिनके वाण और धनुष सुन्दर हैं—विरोधियों के नाशक हैं। जो समस्त औषधों के ईश्वर हैं, उन्हीं रुद्र का यजन करो और महान् कल्याण के लिए द्युतिमान् और बलवान् या प्राणदाता रुद्र की परिचर्या करो।

दमूनसो अपसो ये सुहस्ता वृष्णः पत्नीर्नद्यो विभ्वतष्टाः ।
सरस्वती बृहद्दिवोत राका दशस्यन्तीर्वरिवस्यन्तु शुभ्राः ॥ १२ ॥

दमूनसः । अपसः । ये । सुऽहस्ताः । वृष्णः । पत्नीः । नद्यः ।
विभ्वऽतष्टाः । सरस्वती । बृहत्ऽदिवा । उत । राका । दशस्यन्तीः ।
वरिवस्यन्तु । शुभ्राः ॥ १२ ॥

अत्रलिंगोक्तदेवताः दमूनसोदानमनसोदान्तमनसोवा अपसः चमसाश्वरथगवादिशोभनकर्मवन्तः मत्वर्थोलुप्यते अतएव सुहस्ताः कुशलहस्तायेसन्ति तेऋभवः वृष्णः वर्षकस्येन्द्रस्य पत्नीः पत्न्यःपालयित्र्यः नद्योनदनशीलागंगाद्याः विभ्वतष्टाः ऋभूणांमध्यमेनकृताः सरस्वती एतन्नामिकानदीवाग्देवीवा बृहद्दिवा प्रभूतदीप्तिः उत अपिच राकादेवीच दशस्यन्तीर्दशस्यंत्यः कामान्प्रयच्छन्त्यः शुभ्रादीप्तास्ताश्चवरिवस्यन्तु अस्मभ्यंधनमिच्छन्तु ॥ १२ ॥

१२. दान्त मनवाले और चमस-अश्व-रथ-गौ आदि के निर्माण में कुशलहस्त ऋभुगण, वर्षणकारी इन्द्र की पत्नी गंगा आदि नदियां, विभु-द्वारा कृत सरस्वती नदी और दीप्तिमती राका आदि अभीष्टवर्षी तथा दीप्त हैं। ये हम लोगों को धन प्रदान करें।

प्र सू महे सुशरणाय मेधां गिरं भरे नव्यसीं जायमानाम् ।
य आहना दुहितुर्वक्षणासु रूपा मिनानो अकृणोदिदं नः ॥ १३ ॥

प्र । सु । महे । सुऽशरणाय । मेधाम् । गिरम् । भरे । नव्यसीम् ।
जायमानाम् । यः । आहनाः । दुहितुः । वक्षणासु । रूपा ।
मिनानः । अकृणोत् । इदम् । नः ॥ १३ ॥

सु सुष्ठु प्रभरे प्रकर्षेणसंपादयामि महे महते सुशरणाय शोभनरक्षकायेन्द्राय पर्जन्यायवासुसुखायवा किं मेधां मतौधीयमानां गिरं स्तुतिं कीदृशीं नव्यसीं नवतरांअतिशयेनस्तुत्यांवाजायमानां इदानींउत्पद्यमानांनूतनामित्यर्थः यइन्द्रःपर्जन्योवा आहना आहन्तासेका दुहितुर्दुहितृस्थानीयायाःपृथिव्याः हिताय वक्षणासु नदीषु रूपा रूपाणि मिनानःकुर्वाणइदमुदकंनोस्मभ्यंअकृणोत् करोतु ॥ १३ ॥

१३. महान् और शोभन रक्षक इन्द्र या पर्जन्य के लिए हम अतिशय स्तुत्य और सद्योजात स्तुति प्रदान करते हैं। इन्द्र वर्षणकारी हैं। वे कन्यारूप पृथ्वी के हित के लिए नदियों का रूप-विधान करते हैं और हम लोगों को जल प्रदान करते हैं।

प्र सुष्टुतिः स्तनयंन्तं रुवन्तमिळस्पतिं जरितर्नूनमंश्याः ।
यो अब्दिमाँ उदनिमाँ इयर्ति प्र विद्युता रोदंसी उक्षमाणः ॥ १४ ॥

प्र । सुऽस्तुतिः । स्तनयंन्तम् । रुवन्तंम् । इळः । पतिम् । जरितः ।
नूनम् । अश्याः । यः । अब्दिऽमान् । उदनिऽमान् । इयर्ति । प्र ।
विऽद्युता । रोदंसी इति । उक्षमाणः ॥ १४ ॥

अत्र पर्जन्यः स्तूयते सुष्टुतिः शोभनास्तुतिः स्तनयन्तं गर्जन्तं रुवन्तं वर्षणजनितशब्दं कुर्वाणं इळः अन्नस्योदकस्य वा पतिं स्वामिनं हे जरितः स्तोतः त्वदीया स्तुतिः नूनं प्राश्याः प्रकर्षेण व्याप्नोतु यश्च पर्जन्यः अब्दिमान् अब्दिः अपां दानवान् मेघः तद्वान् उदनिमान् उदकवान् विद्युता तडिता रोदसी द्यावापृथिव्यौ उक्षमाणः सिंचन् प्रेयर्ति गच्छति ॥ १४ ॥

१४. हे स्तोताओ, तुम्हारी शोभन स्तुति गर्जनशील और शब्दकारी उदकस्वामी पर्जन्य के पास पहुँचती है। वे मेघों को धारण करते हैं और वारि वर्षण करके द्यावा-पृथिवी को वैद्युतालोक से आलोकित करके गमन करते हैं।

एष स्तोमो मारुतं शर्धो अच्छा रुद्रस्य सूनूँर्युवन्यूँरुदंश्याः ।
कामो राये हवते मा स्वस्त्युप स्तुहि पृषदश्वाँ अयासः ॥ १५ ॥

एषः । स्तोमः । मारुतम् । शर्धः । अच्छ । रुद्रस्य । सूनून् ।
युवन्यून् । उत् । अश्याः । कामः । राये । हवते । मा ।
स्वस्ति । उप । स्तुहि । पृषत्ऽअश्वान् । अयासः ॥ १५ ॥

एष मया संपादितः स्तोमः स्तोत्रं मारुतं शर्धः मरुतां बलं अच्छ अभिमुखं अश्याः प्राप्नोतु समुदायरूपेण स्तुत्वा समुदायिरूपेणाह—रुद्रस्य सूनून् एषां रुद्रेण पुत्रत्वेन परिकॢप्तिरसकृदुक्ता युवन्यून् यूनो मिश्रणेच्छून् वा उत् उन्नतं अत्यधिकं अश्याः व्याप्नुहि हे मनः कामः संकल्पो राये धनार्थं मा मां स्वस्ति अविनश्वरं हवते आह्वयति प्रेरयतीत्यर्थः यस्मादेवं तस्मात् पृषदश्वान् पृषद्वर्णाश्वोपेतान् अयासो यज्ञं गंतॄन् उप उपेत्य स्तुहि ॥ १५ ॥

१५. हमारे द्वारा सम्पादित स्तोत्र रुद्र के तरुण पुत्र मरुतों के अभिमुख भली भाँति से उपस्थित हो। हे मन, धनेच्छा हम लोगों को निरन्तर उत्तेजित करती है। विविध (पृषत्) वर्ण के अश्व पर आरोहण करके, जो यज्ञ में गमन करते हैं, उनकी स्तुति करो।

प्रैष स्तोमः पृथिवीमन्तरिक्षं वनस्पतीँरोषधी राये अंश्याः ।
देवोदेवः सुहवो भूतु मह्यं मा नो माता पृथिवी दुर्मतौ धात् ॥ १६ ॥

प्र । एषः । स्तोमः । पृथिवीम् । अन्तरिक्षम् । वनस्पतीन् ।
ओषधीः । राये । अश्याः । देवःऽदेवः । सुऽहवः । भूतु । मह्यम् ।
मा । नः । माता । पृथिवी । दुःऽमतौ । धात् ॥ १६ ॥

एषःस्तोमःस्तुतिः पृथिव्यादिदेवताः प्राश्याःप्राप्नोतु किमर्थं राये धनार्थं देवोदेवः सर्वोपिदेवः मह्यं मदर्थं सुहवोभूतु स्वाह्वानोभवतु नोस्मान् दुर्मतौ माता सर्वस्यनिर्मात्री यद्वात्रेभौमत्वाद्विशेषेणमाता तादृशीपृथिवी माधात मास्थापयतु ॥ १६ ॥

१६. धन के लिए हमारे द्वारा विहित यह स्तोत्र पृथ्वी, स्वर्ग, वृक्ष और ओषधियों के निकट गमन करे। हमारे लिए सब देवों का सुन्दर आह्वान हो। माता पृथ्वी हम लोगों को दुर्मति में मत स्थापित करे।

उरौदेवाअनिबाधेस्याम ॥ १७ ॥

उरौ । देवाः । अनिऽबाधे । स्याम ॥ १७ ॥

हेदेवाः युष्माकंसंबन्धिन्युरौमहति अनिबाधे नितरांबाधरहिते सुखे स्याम भवेम वयंअन्वयः ॥ १७ ॥

१७. हे देवो, हम लोग निरन्तर निर्विघ्न महा सुख का भोग करें।

समश्विनोरवसानूतनेनमयोभुवासुप्रणीतीगमेम ।
आनोरयिंवहतमोतवीरानाविश्वान्यमृतासौभगानि ॥१८॥१९॥

सम् । अश्विनोः । अवसा । नूतनेन । मयःऽभुवा । सुऽप्रनीती ।
गमेम । आ । नः । रयिम् । वहतम् । आ । उत । वीरान् ।
आ । विश्वानि । अमृत । सौभगानि ॥ १८ ॥ १९ ॥

वयंअश्विनोः नूतनेनपूर्वमन्यैरननुभूतेन मयोभुवा सुखस्यभावयित्रा सुप्रणीती शोभनप्रणयनवता अवसा रक्षणेन संगमेम संगच्छेमहि हेअमृता अमरणावश्विनौ नोस्मभ्यंरयिंधनंआवहतंप्रापयतं ओतवीरान् सुवीर्यवतः पुत्रानप्यावहतं विश्वानि सौभगान्यप्यावहतम् ॥ १८ ॥

१८. हम लोग अश्विद्वय की उस रक्षा को प्राप्त करें, जिसका पहले किसी ने भी अनुभव नहीं किया है, जो आनन्ददायक तथा सुख-सम्पन्न है। हे अमरणशील अश्विनीकुमारो, तुम दोनों हम लोगों को ऐश्वर्य, वीर पुत्र और समस्त सौभाग्य प्रदान करो।

आधेनवइतिसप्तदशर्चंएकादशंसूक्तं अत्रेरार्षंत्रैष्टुभंवैश्वदेवं अत्रानुक्रमणिका—आधेनवस्त्यूनैतयोरुपांत्यैकपदेति। विनियोगोलैंगिकः अपोनप्त्रीयएकधनासु हविर्धानंमतिनीयमानासुआद्यानुमवचनीया सूत्रितंच—आधेनवःपयसातूर्ण्यर्थाःसमन्यायन्त्युपयन्त्यन्याइति ।

तत्रप्रथमा—

आधेनवःपयसातूर्ण्यर्थाअमर्धन्तीरुपनोयन्तुमध्वा ।
महोरायेबृहतीःसप्तविप्रोमयोभुवोजरितानोहवीति ॥ १ ॥

आ । धेनवः । पयसा । तूर्णिऽअर्थाः । अमर्धन्तीः । उप । नः ।
यन्तु । मध्वा । महः । राये । बृहतीः । सप्त । विप्रः । मयःऽभुवः ।
जरिता । जोहवीति ॥ १ ॥

धनेवः प्रीणयित्र्योनद्योमध्वा मधुरेण पयसारसेनसहिताः तूर्ण्यर्थाः त्वरमाणगमनाः अर्थोर्तेरिंतियास्कः । अमर्धन्तीरहिंसंत्यःसत्योनोस्मानुपायंतुउपागच्छन्तु तदर्थं महोमहते राये धनाय बृहतीर्महतीः सप्त सर्पणस्वभावाः सप्तसंख्यान्वा इमंमेगंगइतिमंत्रोक्ताः यावा तत्रहिप्राधान्येनसप्तैवोक्ताः मयोभुवः सुखस्यभावयित्र्योविप्रो विशेषेणप्रीणयिता जरिता स्तोता जोहवीति आजुह्वयति ॥ १ ॥

१. द्रुतगामिनी नदियाँ अहिंसित होकर (कोई अनिष्ट नहीं उत्पन्न करके) मधुर रस के साथ हम लोगों के निकट आगमन करें। विशेष प्रीति उत्पन्न करनेवाले स्तोता महान् धन लाभ के लिए आनन्ददायक सप्त महानदियों का आह्वान करें।

अथद्वितीया—

आसुष्टुतीनमसावर्तयध्यैद्यावावाजायपृथिवीअमृध्रे ।
पितामातामधुवचाःसुहस्ताभरेभरेनोयशसावविष्टाम् ॥ २ ॥

आ । सुऽस्तुती । नमसा । वर्तयध्यै । द्यावा । वाजाय ।
पृथिवी इति । अमृध्रे इति । पिता । माता । मधुऽवचाः ।
सुऽहस्ता । भरेऽभरे । नः । यशसौ । अविष्टाम् ॥ २ ॥

---

१ नि० २. १८. ।

अहं सुष्टुती सुष्टुत्या शोभनस्तोत्रेण नमसाहविषाच अघ्न्ये हिंसारहिते द्यावापृथिवी द्यावापृथिव्यावावर्तयध्यै आवर्तयितुमिच्छामि वाजायान्नार्थं अर्चन्वैवाजइतिहिश्रुतिः। पिता पालयित्रीद्यौर्माता निर्मात्रीपृथिवी मधुवचाः प्रियवचनाः सुहस्ता अभिमतदानेनशोभन-हस्ता एते उभयविशेषणे यशसौ यशोयुक्तौ द्यावापृथिव्यौ भरेभरे सर्वेषुसंग्रामेषुयज्ञेषुवा नोस्मानविष्टांरक्षताम् ॥ २ ॥

२. हम अन्न-लाभ के लिए शोभन स्तव और हव्य-द्वारा हिंसारहित द्यावा-पृथिवी को प्रसन्न करने की इच्छा करते हैं। प्रियवचन, शोभनहस्त और यशोयुक्त मातृ-पितृ-स्वरूप द्यावा-पृथिवी सम्पूर्ण संग्राम या यज्ञ में हम लोगों की रक्षा करें।

अध्वर्यवश्चकृवांसोमधूनिप्रवायवेभरतचारुशुक्रम्।
होतेवनःप्रथमःपाह्यस्यदेवमध्वोररिमातेमदाय ॥ ३ ॥

अध्वर्यवः। चकृऽवांसः। मधूनि। प्र। वायवे। भरत।
चारु। शुक्रम्। होताऽइव। नः। प्रथमः। पाहि। अस्य।
देव। मध्वः। ररिम। ते। मदाय ॥ ३ ॥

हे अध्वर्यवः ध्वरंयुंजानाः मधूनि मधुरसानिसोमाज्यादीनि चकृवांसः कुर्वाणायू-यं वायवे प्रथमंप्रभरत प्रकर्षेणसंपादयन्त चारु चरणीयं शुक्रं दीप्तंसोमं हेवायो त्वं चहोतेव होतायथाप्रथमंपिबतितद्वन्नोस्मदर्थं अस्य अमुंसोमंप्रथमःइतरदेवेभ्यःपूर्वंपाहिपि-ब हेदेववायो मध्वोमधुरंसोमरसं तेमदायररिमददाम वायोःपूर्वपानमसकृत्प्रपंचितं ॥ ३ ॥

३. हे अध्वर्युओ, तुम लोग मधुर आज्य आदि हव्य प्रस्तुत करो और वह रमणीय तथा दीप्त सोम सर्वप्रथम वायु को अर्पित करो। हे वायु, तुम होता की तरह इस सोम को अन्य देवों से पहले पियो। हे वायुदेव, यह मधुर सोमरस तुम्हारे हर्ष के लिए देते हैं।

अथचतुर्थी—

दशक्षिपोयुञ्जतेबाहूअद्रिंसोमस्ययाशमितारासुहस्ता।
मध्वोरसंसुगभस्तिर्गिरिष्ठांचनिश्चदद्दुहेशुक्रमंशुः ॥ ४ ॥

दश। क्षिपः। युंजते। बाहू इति। अद्रिम्। सोमस्य। या।
शमितारा। सुऽहस्ता। मध्वः। रसम्। सुऽगभस्तिः।
गिरिऽस्थाम्। चनिश्चदत्। दुदुहे। शुक्रम्। अंशुः ॥ ४ ॥

---

१ तै० ब्रा० १. ३. ६.।

अत्राभिषवस्यमतिपाद्यमानत्वात्सोमोदेवता यद्वाऐन्द्री अद्रिमभिषवग्रावाणं दशक्षिपो- दशसंख्याकाःक्षेप्त्र्योंगुल्यायोयुंजतेगृह्णन्ति यद्वा परस्परंयुक्ताभवन्ति बाहू अप्यध्वर्युसंबंधि- नावद्रिंयुंजाते या यौ सुहस्ता शोभनहननौ सोमस्यशमिताराऽभिषोतारौ तौबाहू युं- जाते मध्वोमधुरस्यसोमस्यरसं गिरिष्ठांगिरिस्थायिनं गिरिवदुन्नतप्रदेशस्थितंवा सुगभस्तिः शोभनांगुलिरध्वर्युः चनिश्चदत् आह्लादयन् चदिआह्लादनेइत्यस्मात्यङ्लुकिछान्दसंरूपं दुदुहे दोग्धि सचांशुः शुक्रं निर्मलंरसं दुदुहे दुग्धे यद्वैकंवाक्यं अंशुर्व्याप्तः सुगभ- स्तिः सुहस्तोध्वर्युर्मध्वोरसं दुदुहे दोग्धि ॥ ४ ॥

४. ऋत्विकों की सोमपेषक दसों अँगुलियाँ और सोमरस-निस्सारण पटु दोनों बाहु पाषाण ग्रहण करते हैं। कुशलाङ्गुलयुक्त ऋत्विक् आनन्दित होकर मधुर सोम से शैलज रस दोहन करते हैं एवम् सोम से निर्मल रस निःसृत होता है।

असाविते जुजुषाणायसोमःक्रत्वेदक्षायबृहतेमदाय।
हरीरथेसुधुरायोगेअर्वागिन्द्रप्रियाकृणुहिहूयमानः ॥ ५ ॥ २० ॥

असावि। ते। जुजुषाणाय। सोमः। क्रत्वे। दक्षाय। बृहते। मदाय।
हरी इति। रथे। सुऽधुरा। योगे। अर्वाक्। इन्द्र। प्रिया। कृणुहि।
हूयमानः ॥ ५ ॥ २० ॥

हेइन्द्र तेतुभ्यं जुजुषाणाय सेवमानाय सोमःअसावि अभिषुतः किमर्थं क्रत्वे क्रतवे वृत्रवधादिकर्मणे दक्षाय बलाय बृहतेमदायच यस्मादेवंतस्मात् हेइन्द्र त्वं हूय- मानःसन् सुधुरा शोभनायांधुरिनियुक्तौप्रिया प्रियौ हरीअश्वौ योगे योगार्हेयुक्तेवा र- थेयोजयित्वा तंरथंअर्वागस्मदभिमुखंकृणुहिकुरु ॥ ५ ॥

५. हे इन्द्र, तुम्हारी सेवा के लिए, वृत्रवधादि कार्य के लिए, बल के लिए और महान् हर्ष के लिए सोमरस समर्पित किया जाता है। हे इन्द्र, इसलिए हम लोग तुम्हारा आह्वान करते हैं। तुम प्रिय, सुशिक्षित और विनम्र अश्वद्वय को रथ में युक्त करके हम लोगों के निकट आगमन करो।

आनोमहीमरमतिंसजोषाग्नांदेवींनमसारातहव्याम्।
मधोर्मदायबृहतीमृतज्ञामाग्नेवहपथिभिर्देवयानैः ॥ ६ ॥

आ। नः। महीम्। अरमतिम्। सऽजोषाः। ग्नाम्। देवीम्। नमसा।
रातऽहव्याम्। मधोः। मदाय। बृहतीम्। ऋतऽज्ञाम्। आ।
अग्ने। वह। पथिऽभिः। देवऽयानैः ॥ ६ ॥

अत्राग्निंसंबोध्य ग्नादेवतायाआवाहत्वात् अस्याग्निग्नांवादेवता हेअग्ने सजोषाः अस्माभिःसहप्रीयमाणस्त्वं ग्नां देवीं सर्वैर्गन्तव्यांएतन्नामिकांदेवतां मेनाग्नाइतिस्त्रीणामितियास्कः। नोस्मदर्थं देवयानैर्देवैर्गन्तव्यैः पथिभिर्मार्गैः अभिमुखंआवह कीदृशीं महीं महतीं अरमतिं आसमन्तावरममाणां सर्वत्रगन्त्रींवा नमसा स्तोत्रेणसह रातहव्यां रातंदत्तंदानायसंकल्पितंहव्यंयस्याःतांदत्तहविष्कामित्यर्थः किमर्थं मधोर्मधुरस्यसोमस्यमदाय पुनःकीदृशीं बृहतीं प्रवृद्धां ऋतज्ञां यज्ञमभिजानतीं ॥ ६ ॥

६. हे अग्नि, तुम हम लोगों के साथ प्रीयमाण होकर मधुर सोम-पान से प्रहृष्ट होने के लिए देवगन्तव्य मार्ग-द्वारा गुना देवी को हम लोगों के निकट लाओ। वह बलशालिनी देवी सर्वत्र गमन करे और समस्त यज्ञ को जाने। स्तोत्र के साथ उस देवी को हव्य समर्पित हो।

प्रवर्ग्येमहावीरेअज्यमानेअंजन्तियमित्येषा सूत्रितंच—अंजन्तियंप्रथयन्तोनविप्राइत्यज्यमानइति।

सैषासप्तमी—

अंजन्तियंप्रथयन्तोनविप्रावपावन्तंनाग्निनातपन्तः।
पितुर्नपुत्रउपसिप्रेष्ठआघर्मोअग्निमृतयन्नसादि ॥ ७ ॥

अंजन्ति। यम्। प्रथयन्तः। न। विप्राः। वपाऽवन्तम्। न। अग्निना। तपन्तः। पितुः। न। पुत्रः। उपसि। प्रेष्ठः। आ। घर्मः। अग्निम्। ऋतयन्। असादि ॥ ७ ॥

यंघर्मं महावीरंप्रथयन्तोन नेतिसंप्रत्यर्थीयः अस्त्युपमार्थस्यसंप्रत्यर्थेप्रयोगः इदानीं प्रथयन्तोविप्रामेधाविनऋत्विजोध्वर्य्वादयः वपावन्तंन वपावन्तंप्रवृद्धपशुंयथाग्नौतपन्तितद्वदग्निनातपन्तःअंजन्ति पितुर्नपुत्रउपसिप्रेष्ठः पितुरुपस्थेप्रियतमःपुत्रइव घर्मोमहावीरः यद्भ्रइत्यतपत्तद्धर्मस्यघर्मत्वंइतिहिश्रुतिः। सऋतयन् यज्ञमिच्छन् अग्निमभ्यवसादिआसादितः अत्रपितृपुत्रदृष्टान्तःस्फोटादिराहित्येनसुखदवासप्रख्यापनार्थः ॥ ७ ॥

७. मेधावी अध्वर्युओं ने अग्नि के ऊपर हव्यपात्र स्थापित किया है, जैसे पिता की गोद में प्रियतम पुत्र हो। मालूम पड़ता है जैसे स्थूलकाय पशु को वे सब अग्नि-द्वारा दग्ध कर रहे हैं।

अथाष्टमी—

अच्छामहीबृहतीशंतमागीर्दूतोनगन्त्वश्विनाहुवध्यै।
मयोभुवासरथायातमर्वाग्गन्तंनिधिंधुरमाणिर्ननाभिम् ॥ ८ ॥

---

४ १ नि० ३. २१. २ तै० अरण
९

अच्छ॑ । म॒ही । बृ॒ह॒ती । शम्ऽत॑मा । गीः । दू॒तः । न । ग॒न्तु॒ । अ॒श्विना॑ । हु॒वध्यै॑ । म॒यः॒ऽभुवा॑ । स॒ऽरथा॑ । आ । या॒त॒म् । अ॒र्वाक् । ग॒न्त॒म् । नि॒ऽधिम् । धुर॑म् । आ॒णिः । न । नाभि॑म् ॥ ८ ॥

अच्छाभिमुखं अश्विना अश्विनौ हुवध्यै आह्वातुं गीरस्मदीयास्तुतिः दूतोन दूतइव आह्वातेव गन्तु गच्छतु गीर्विशेष्यते मही पूज्या बृहती महती शंतमा सुखतमा हेअश्विनौ मयोभुवा सुखस्यभावयितारौ सरथा एकरथौसन्तौ गन्तं गच्छन्तं द्रवीभूतं निधिं निहितंसोमं अर्वागभिमुखं आयातं आगच्छतं धुरं भारवाहिकांनाभिं आणिर्न कीलइव यथानिष्कीलानाभीरथंननिर्वहतितद्वत् युवाभ्यांवियुक्तःसोमोयागंननिर्वहतीतिज्ञापयितुमेवंदृष्टान्तितं ॥ ८ ॥

८. हम लोगों का यह पूजनीय, महान् और सुखदायक स्तोत्र अश्विद्वय को इस स्थान में आह्वान करने के लिए दूत की तरह गमन करे। हे सुखदायक अश्विद्वय, तुम दोनों एक रथ पर आरोहण करके अर्पित सोम के निकट भारवाहक कील की तरह आगमन करो। जैसे बिना कीलवाली नाभि से रथ का निर्वहण नहीं होता है, उसी तरह से बिना तुम्हारे सोमयाग का निर्वाह नहीं होता है।

प्रत॒व्य॑सो॒नम॑उक्तिं॒तु॒रस्या॒हंपू॒ष्णउ॒तवा॒योर॑दिक्षि ।
याराध॑साचोदि॒तार॑म॒ती॒नांयावाज॑स्यद्रवि॒णो॒दाउ॒तत्मन् ॥ ९ ॥

प्र । त॒व्य॑सः । नम॑ःऽउक्तिम् । तु॒रस्य॑ । अ॒हम् । पू॒ष्णः । उ॒त । वा॒योः । अ॒दि॒क्षि॒ । या । राध॑सा । चो॒दि॒तारा॑ । म॒ती॒नाम् । या । वाज॑स्य । द्र॒वि॒णः॒ऽदौ । उ॒त । त्मन् ॥ ९ ॥

अहमृषिः तव्यसः प्रकृष्टबलस्य तुरस्य त्वरमाणस्य पूष्णः पोषकस्य देवस्य उक्तगुणकायदेवाय उतापिच वायोरुक्तगुणायच नमउक्तिं नमइतिवचनंस्तोत्रं प्रादिक्षिप्रदिशामि या यौपूषवायू राधसा हविर्लक्षणेनधनिमित्तेन मतीनांचोदितारामेरयितारौ यद्वा राधसेतिषष्ठ्यर्थेतृतीया राधसोधनस्यमतीनांच चोदयितारौ यौच वाजस्यान्नस्यसंग्रामस्यवा चोदयितारौ तौदेवौ उतअपिच त्मन् आत्मनि अमन्यमेरणायैव द्रविणोदौभवतमितिशेषः ॥ ९ ॥

९. हम (ऋषि) बलवान् और वेगपूर्वक गमन करनेवाले पूषा तथा वायुदेव की स्तुति करते हैं। ये दोनों देव धन और अन्न के लिए लोगों की बुद्धि को प्रेरित करें अथवा जो देव संग्राम के प्रेरक हैं, वे धनप्रदान करें।

१ आनाम॑भिर्म॒रुतो॑वक्षि॒विश्वा॒नारू॒पेभि॑र्जातवेदोहुवा॒नः ।
य॒ज्ञंगिरो॑जरि॒तुःसु॑ष्टु॒तिंच॒विश्वे॒गन्त॑मरुतो॒विश्व॑ऊ॒ती ॥ १० ॥ २१ ॥

आ । नाम॑ऽभिः । म॒रुतः॑ । व॒क्षि॒ । विश्वा॑न् । आ । रू॒पेभि॑ः ।

जातऽवेदः । हुवानः । यज्ञम् । गिरः । जरितुः । सुऽस्तुतिम् ।
च । विश्वे । गन्त । मरुतः । विश्वे । ऊती ॥ १० ॥ २१ ॥

हेजातवेदः जातप्रज्ञाग्ने हुवानोस्माभिराहूयमानःसन् विश्वान्मरुतः सर्वानपिस्तोत्रभाजोहविर्भाजश्चदेवान् नामभिरिन्द्रवरुणेत्यादिलक्षणैरावक्षिआवहसि रूपेभिः सहस्राक्षवज्रहस्तत्वादिलक्षणैरूपैः आवक्षि वहसियज्ञम् किंच हेमरुतो विश्वेसर्वेयूयंयज्ञमस्मदीयंयज्ञसंबंधिहविर्वा जरितुः स्तोतुःसंबन्धिनीर्गिरः स्तुतिवचांसि सुष्टुतिं तत्साध्यांशोभनफलांस्तुतिंच अवयविन्यास्तुतेरेकत्वादेकवचनं अवयवानां बहुत्वाद्बहुवचनं उक्ते यज्ञस्तुती अभिलक्ष्य गन्त आगच्छत विश्वेच यूयमूती ऊत्यारक्षयाच सहगन्त ॥ १० ॥

१०. हे उत्पन्न मात्र को जाननेवाले अग्नि, हम लोगों के द्वारा आहूयमान होकर तुम विविध (इन्द्र, वरुण आदि) नामधारी और विभिन्नाकृति निखिल मरुतों का यज्ञ में वहन करते हो। हे मरुतो, तुम सब रक्षा के साथ यजमान के यज्ञ में, शोभन फलवाली स्तुति में और पूजा में उपस्थित होओ।

आनोदिवइत्येकादशी व्यूढेदशरात्रेनवमेहनिप्रउगशस्त्रेसारस्वततृचेद्वितीया सूत्रितंच--आनोदिवोबृहतःपर्वतादासरस्वत्यभिनोनेषिवस्यइतितत्पाठस्तु ।

आनोदिवोबृहतःपर्वतादासरस्वतीयजतागन्तुयज्ञम् ।
हवंदेवीजुजुषाणाघृताचीशग्मांनोवाचमुशतीशृणोतु ॥ ११ ॥

आ । नः । दिवः । बृहतः । पर्वतात् । आ । सरस्वती । यजता ।
गन्तु । यज्ञम् । हवम् । देवी । जुजुषाणा । घृताची । शग्माम् । नः ।
वाचम् । उशती । शृणोतु ॥ ११ ॥

नोस्माकंयज्ञं यजता यष्टव्या देवी सरस्वती दिवोद्योतमानाव् द्युलोकादागन्तु आगच्छतु तथा बृहतोमहतः पर्वतात् पर्ववतः पूरणवतःप्रीणनवतोवान्तरिक्षान्मेघाद्वा सरस्वती आगन्तुआगच्छतु अनेनमाध्यमिकीवागुच्यते यद्वैतद्दिवइत्यस्यविशेषणं सन्तिहिद्युलोकस्य त्रीणिपर्वाणितिस्रोदिवःपृथिवीरित्यादिश्रुतेः । अस्मिन्पक्षेद्वितीयआकारःपूरणः तदर्थं हवमस्मदीयमाह्वानं देवी सरस्वती जुजुषाणा स्तुतिंसेवमाना घृताची घृतमुदकमंचती नोस्मदीयांशग्मां सुखकरीं वाचं स्तुतिमुशतीकामयमानासतीशृणोतु ॥ ११ ॥

११. हम लोगों-द्वारा यष्टव्य सरस्वती द्युतमान द्युलोक से यज्ञस्थल में आगमन करे तथा महान् मेघ से आगमन करे। हमारी स्तुति से प्रसन्न होकर वह स्वेच्छापूर्वक हमारे सम्पूर्ण सुखकर स्तोत्रों को सुने।

आवेधसंनीलपृष्ठंबृहन्तंबृहस्पतिंसदनेसादयध्वम् ।
सादद्योनिंदमआदीदिवांसंहिरण्यवर्णमरुषंसपेम ॥ १२ ॥

---

१ ऋ० सं० ३. ८. ४.

आ। वेधसम्। नीलऽपृष्ठम्। बृहन्तम्। बृहस्पतिम्। सदने।
सादयध्वम्। सादत्ऽयोनिम्। दमे। आ। दीदिऽवांसम्।
हिरण्यऽवर्णम्। अरुषम्। सपेम॥ १२॥

एषाबार्हस्पत्या हेऋत्विजोयूयं बृहस्पतिं बृहतोमंत्रस्यस्वामिनं देवं सदनेस्मद्यागगृहे आसादयध्वं स्थापयध्वं कीदृशंदेवं वेधसं विविधकर्तारं नीलपृष्ठं स्निग्धांगं बृहन्तं महान्तं तथासन्तंवयमृत्विग्यजमानाः सपेम परिचरेम सएवविशेष्यते सादद्योनिं योनौसीदन्तं दमे यागगृहे आसर्वतोदीदिवांसंदीप्यमानं हिरण्यवर्णं हितरमणीयवर्णं अरुषमारोचमानं अथवेयमाग्नेयी बृहतः परिवृढस्यकर्मणः स्वामीतिबृहस्पतिरग्निरुच्यते तथानीलवर्णधूमपृष्ठत्वसदनसादनहिरण्यवर्णत्वादिलिंगैरप्यग्निरेवबृहस्पतिः॥ १२॥

१२. बलवान्, पुष्टिकारक और स्निग्धाङ्ग बृहस्पति को यज्ञगृह में स्थापित करो। वे गृह में मध्य के अवस्थित होकर सर्वत्र प्रभा विस्तृत करते हैं। वे हिरण्यवर्ण और दीप्तिमान् हैं। हम लोग उनकी पूजा करते हैं।

आधर्णसिर्बृहद्दिवोरराणोविश्वेभिर्गन्त्वोमभिर्हुवानः।
ग्नावसानओषधीरमृध्रस्त्रिधातुशृङ्गोवृषभोवयोधाः॥ १३॥

आ। धर्णसिः। बृहत्ऽदिवः। रराणः। विश्वेभिः। गन्तु। ओमऽभिः।
हुवानः। ग्नाः। वसानः। ओषधीः। अमृध्रः। त्रिधातुऽशृंगः।
वृषभः। वयःऽधाः॥ १३॥

इदमाद्यृक्त्र्यंआग्नेयं अग्निरागन्तु आगच्छतुअस्मद्यज्ञं धर्णसिः सर्वस्यधारकः बृहद्दिवः प्रभूतदीप्तिः रराणोरममाणः कामान्प्रयच्छन्वा आविश्वेभिः सर्वैः ओमभिः रक्षणैः सह हुवानः आहूयमानः ग्नाः गंत्रीर्ज्वालाः ओषधीश्च वसानः अमृध्रोअहिंसितः त्रिधातुशृंगः त्रिप्रकारशृंगवदुन्नतः लोहितशुक्लकृष्णवर्णज्वालः वृषभोवर्षिता वयोधाः अन्नस्यदाताहविषोवाधारकः॥ १३॥

१३. अग्नि सबको धारण करते हैं। वे अत्यन्त दीप्तिशाली, अभीष्टवर्षी तथा शिखा और ओषधि समूह-द्वारा आच्छादित हैं। वे अप्रतिहतगति और त्रिविध शृङ्गविशिष्ट (लोहित, शुक्ल और कृष्णवर्ण की ज्वालाओं से व्याप्त) हैं। वे वर्षणकारी और अन्नदाता हैं। हम लोग उनका आह्वान करते हैं। वे सम्पूर्ण रक्षा के साथ आगमन करें।

मातुष्पदेपरमेशुक्रआयोर्विपन्यवोरास्पिरासोअग्मन्।
सुशेव्यंनमसारातहव्याःशिशुंमृजन्त्यायवोनवासे॥ १४॥

मातुः । पदे । परमे । शुक्रे । आयोः । विपन्यवः । रास्पिरासः ।
अग्मन् । सुऽशेव्यम् । नमसा । रातऽहव्याः । शिशुम् । मृजन्ति ।
आयवः । न । वासे ॥ १४ ॥

आयोर्मनुष्यस्ययजमानस्य विपन्यवः स्तोतृनामैतत् स्तोतारोहोत्रादयोरास्पिरासः राधनंह-विर्लक्षणं तत्स्पृशन्तिरास्पाजुह्वादयःतद्वान् रास्पी तद्वन्तोरास्पिराः उक्तविधाऋत्विजोमातुर्निर्मातुः पृथिव्याः शुक्रे दीप्ते परमे पदेउत्तरवेद्यांस्थितमग्मन् अगमन् व्रजन्ते तदर्थं सुशेव्यं सुखायहितं शिशुं उत्पन्नमात्रं वासे वासाय नमसा स्तोत्रेण रातहव्याः दत्तहव्याः हविष्काइत्यर्थः ताद्द-शास्तेमृजन्तिसंमार्जयन्ति तत्रदृष्टान्तः—आयवोन लौकिकामनुष्याइव तेयथाशिशुंवासायमृज-न्तितद्वत् ॥ १४ ॥यजमान के होता, हव्यपात्रधारी ऋत्विग्गण जननीस्वरूप पृथिवी के उज्ज्वल और अत्युत्कृष्ट स्थान (उत्तर वेदी) पर गमन करते हैं। जीवनवृद्धि के लिए जैसे लोग शिशु के अङ्गों का घर्षण करते हैं, उसी तरह वे नवजात कोमलप्रकृति अग्नि का पोषण, स्तुतियों के साथ हव्य प्रदान करके, करते हैं।

बृहद्वयोबृहतेतुभ्यमग्नेधियाजुरोमिथुनासःसचन्त ।
देवोदेवःसुहवोभूतुमह्यंमानोमातापृथिवीदुर्मतौधात् ॥ १५ ॥

बृहत् । वयः । बृहते । तुभ्यम् । अग्ने । धियाऽजुरः । मिथुनासः ।
सचन्त । देवःऽदेवः । सुहवः । भूतु । मह्यम् । मा । नः । माता ।
पृथिवी । दुःऽमतौ । धात् ॥ १५ ॥

बृहत् प्रभूतं वयोन्नं हेअग्ने बृहते तुभ्यं धियाजुरः कर्मणाजीर्णाः मिथुनासोदंपतीभिःस-हिताः सचन्त सेवन्ते जायापतीअग्निमादधीयातामित्यादिश्रुतेः । अधिकाराध्यायेषष्ठेस्त्रि-याअप्यधिकारः सच पत्यासहेतिहिप्रतिपादितं अवशिष्टंगतम् ॥ १५ ॥

१५. हे अग्नि, तुम बृहत्स्वरूप हो। धर्म-कार्य-द्वारा जीर्ण होकर स्त्री-पुरुष (दम्पति) एक साथ ही तुम्हें प्रभूत अन्न प्रदान करते हैं। देवगण हमारे द्वारा भली भाँति से आहूत हों। जननी-स्वरूप पृथिवी हमारे प्रति विरुद्ध बुद्धि नहीं धारण करें।

उरौदेवाअनिबाधेस्याम ॥ १६ ॥

उरौ । देवाः । अनिऽबाधे । स्याम ॥ १६ ॥

---

१. तै० कल्पसूत्रम्

अथसप्तदशी—

समश्विनोरवसानूतनेनमयोभुवासुप्रणीतीगमेम ।
आनोरयिंवहतमोतवीरानाविश्वान्यमृतासौभगानि ॥१७॥२२॥

सम् । अश्विनोः । अवसा । नूतनेन । मयःऽभुवा । सुऽप्रनीती ।
गमेम । आ । नः । रयिम् । वहतम् । आ । उत । वीरान् । आ ।
विश्वानि । अमृता । सौभगानि ॥ १७ ॥ २२ ॥

व्याख्यातेद्वे ॥ १६ ॥ १७ ॥

१६. हे देवो, हम लोग निर्मर्याद और बाधा-शून्य सुख प्राप्त करें।

१७. हम लोग अश्विद्वय की उस रक्षा को प्राप्त करें, जिसका पहले किसी ने भी अनुभव नहीं किया है, जो आनन्ददायक तथा सुख-सम्पन्न है। हे अमरणशील अश्विनीकुमारो, तुम दोनों हम लोगों को ऐश्वर्य, वीर्य, पुत्र और समस्त सौभाग्य प्रदान करो।

॥ इतिचतुर्थस्यद्वितीयेद्वाविंशोवर्गः ॥ २२ ॥

तंप्रत्नथेतिपंचदशर्चंद्वादशंसूक्तं अवत्सारोनामऋषिः सचकश्यपगोत्रः यास्वृक्षुसदापृणबाहुवृकादयःश्रुताःतासुतेपिसमुच्चीयन्ते चतुर्दशीपंचदश्यौत्रिष्टुभौ शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः विश्वेदेवादेवताः अनुक्रान्तंच—तंप्रत्नथापंचोनाकाश्यपोवत्सारोन्येचऋषयोत्रदृष्टलिंगाद्विस्त्रिष्टुबन्तमिति । वाजपेयेअतिरिक्तोक्थ्ये आदितस्त्रयोदशर्चःशंसनीयाः सूत्रितंच—तंप्रत्नथेतित्रयोदशानामेकांशिष्ट्वाह्वयदूरोहणंरोहेदिति ।

तत्रप्रथमा—

तंप्रत्नथापूर्वथाविश्वथेमथाज्येष्ठतातिंबर्हिषदंस्वर्विदम् ।
प्रतीचीनंवृजनंदोहसेगिराशुंजयन्तमनुयासुवर्धसे ॥ १ ॥

तम् । प्रत्नऽथा । पूर्वऽथा । विश्वऽथा । इमऽथा । ज्येष्ठऽतातिम् ।
बर्हिऽसदम् । स्वःऽविदम् । प्रतीचीनम् । वृजनम् । दोहसे । गिरा ।
आशुम् । जयन्तम् । अनु । यासु । वर्धसे ॥ १ ॥

इयमुत्तराचद्वेऐन्द्राविल्याहुः तत्रोपपत्तिमेवमाहुः तंप्रत्नथेत्येषाशुक्रामन्थिग्रहणेविनियुक्ता एन्द्रौचशुक्रामन्थिनौ यदैन्द्रंशंसतितेनशुक्रामन्थिनाउक्थवताविति हि ब्राह्मणं । अध्वर्युसंप्रैषोपिभवति प्रातःप्रातःसवनस्यशुक्रवन्तोमधुश्चुतइन्द्रायसोमान्प्रस्थितान्प्रेष्येतिप्रशास्त्र-

---

१ ऐ० ब्रा० ३. १. ।

प्रैषश्चभवति । होतायक्षदिन्द्रंप्रातःप्रातःसावस्येत्यादि प्रस्थिताइन्द्रायसोमाइतियाज्याचैन्द्री इदंतेसोम्यंमध्विति तस्मादैन्द्र्यौ तमिन्द्रं प्रत्नथा पुरावनायजमानाइव पूर्वथा अस्मदीयाःपूर्वेयथा विश्वथा विश्वेसर्वेप्राणिनोयथा इमथा इममिदानींवर्तमानायजमानाःतेयथेन्द्रस्यस्तुत्याफलमलभन्त तद्वदयमपि हेअन्तरात्मन् त्वमपि ज्येष्ठतातिं ज्येष्ठं बर्हिषदं बर्हिषिसीदन्तं स्वर्विदं सर्वज्ञं सर्वस्यलंभयितारंवाफलंभावयितारंवा प्रतीचीनं प्रतिअस्मदभिमुखमंचंतं वृजनं बलनामैतद्बलवतिवर्ततेबलवन्तं आशुं शीघ्रगामिनं व्याप्तं वाजयन्तं सर्वमभिभवंतमिन्द्रं गिरा स्तुत्यासाधनेन दोहसे धुक्ष्व सर्वदासर्वान्कामानित्यन्तरात्मनःप्रैषः यासुस्तुतिषुवर्धसेप्रवृद्धोभवसिवर्धयसिवेन्द्रं यथास्तुत्येति यास्वितिल्यत्ययेनबहुवचनम् ॥ १. प्राचीन यजमानगण, हमारे पूर्ववर्ती लोग, समस्त प्राणी और आधुनिक लोग जिस तरह से इन्द्र की स्तुति करके पूर्णमनोरथ हुए हैं, हे अन्तरात्मा, उसी तरह से तुम भी उनकी स्तुति करके पूर्णमनोरथ होओ। वे देवों के मध्य में ज्येष्ठ, कुशासीन, सर्वज्ञ, हम लोगों के सम्मुखवर्ती, बलशाली, वेगवान् और जयशील हैं। इस तरह की स्तुति-द्वारा तुम उन्हें संवर्द्धित करो।

श्रि॒ये सु॒दृशी॒रुप॑रस्य॒ याः स्व॑र्वि॒रोच॑मानः क॒कुभा॑मचो॒दते॑ ।
सु॒गो॒पा अ॑सि॒ न दभा॑य सुक्रतो प॒रो मा॒याभि॑र्ऋ॒त आ॑स॒ नाम॑ ते ॥ २ ॥

श्रि॒ये । सु॒ऽदृशीः॑ । उप॑रस्य । याः । स्वः॑ । वि॒ऽरोच॑मानः ।
क॒कुभा॑म् । अ॒चो॒दते॑ । सु॒ऽगो॒पाः । अ॒सि॒ । न । दभा॑य ।
सु॒क्र॒तो॒ इति॑ सुऽक्रतो । प॒रः । मा॒याभिः॑ । ऋ॒ते । आ॒स॒ । नाम॑ । ते॒ ॥ २ ॥

हेइन्द्र स्वः स्वर्गे विरोचमानस्त्वं अचोदते अप्रेरयितुः षष्ठ्यर्थेचतुर्थी उपरस्य मेघस्य संबन्धिन्यः सुदृशीःसुरोचमानायाआपःसन्ति तासामपां ककुभां सर्वासांदिशांमध्ये श्रिये प्राणिनांश्रयणायप्रेरकोभवेतिशेषः हेसुक्रतो शोभनवृष्टिप्रदानादिकर्मकेन्द्र त्वं सुगोपाः प्राणिनांसुष्ठुगोपायितासि अतोनदभाय नदंभनायवधाय प्राणिनांनासि नप्रभवसि त्वंच मायाभिरासुरीभिः परोमायाभ्यःपरस्ताद्वर्तमानः यस्माचेत्वदीयंनाम नामकं [illegible] सत्यलोके आस आस्ते ॥ २ ॥

२. हे इन्द्र, तुम स्वर्ग में प्रभा विस्तारित करते हो। अवर्षणकारी मेघ के मध्य में जो सुन्दर जलराशि है, उसे मनुष्यों के हित के लिए समस्त दिशाओं में प्रेरित करते हो। वृष्टि आदि सुन्दर कर्म-द्वारा तुम मनुष्यों की रक्षा करो। प्राणियों का वध तुम मत करो। शत्रुओं की माया का तुम अतिक्रम करते हो। तुम्हारा नाम सत्यलोक में विद्यमान है।

अत्यंहविःसंचतेसच्चधातुचारिष्टगातुःसहोतासहोभरिः ।
प्रसर्स्राणोअनुबर्हिर्वृषाशिशुर्मध्येयुवाजरोविस्रुहाहितः ॥ ३ ॥

अत्यम् । हविः । सचते । सत् । च । धातु । च । अरिष्टऽगातुः ।
सः । होता । सहःऽभरिः । प्रऽसर्स्राणः । अनु । बर्हिः । वृषा ।
शिशुः । मध्ये । । युवा । अजरः । विऽस्रुहा । हितः ॥ ३ ॥

इयमाग्नेयी होतृत्वयुवत्वादिर्लिंगैः अयमग्निः अत्यं सततमतनार्हं हविराज्यादिकं सचते सेवते कीदृशंहविः सत् सत्फलसाधनत्वाद्धविरपिसत् धातुच धारकं सर्वस्यहूयमानस्यहविषः आदित्यद्वारावृष्टिसाधनत्वात् तयाचवृष्ट्या प्रजोत्पत्तेर्धारकत्वं तथाहि अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते। आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइति। कीदृशोग्निः अरिष्टगातुः अहिंसितगमनः सतितस्यगमने यज्ञनिष्पत्त्याफलसिद्धेररिष्टगमनत्वं तदेवाह सः सखलु होता होमनिष्पादकः सहोभरिः बलस्यभर्ता बर्हिरनुप्रसर्स्राणः प्रकर्षेणसरन् वृषा वर्षकःफलस्य शिशुः सइवरक्षणीयः अप्रौढोवा युवा सर्वत्रमिश्रयिता अजरोजरारहितः विस्रुहा विस्रुहाणामोषधीनांमध्ये हितोनिहितः स्थापितःएवंभूतः सचते ॥ ३ ॥

३. अग्नि नित्य, फलसाधक और विश्वधारक हव्य को सतत वहन करते हैं। अग्नि अप्रतिहतगति, होमनिर्वाहक और बल-विधायक हैं। वे विशेषतः कुश के ऊपर होकर गमन करते हैं। फलवर्षणकारी, शिशु, तरुण, जरारहित और ओषधियों के मध्य में स्थित हैं।

प्रवंएतेसुयुजोयामन्निष्टयेनीचीरमुष्मैयम्यंऋतावृधः ।
सुयन्तुभिःसर्वशासैरभीशुभिःक्रिविर्नामानिप्रवणेमुषायति ॥ ४ ॥

प्र । वः । एते । सुऽयुजः । यामन् । इष्टये । नीचीः । अमुष्मै ।
यम्यः । ऋतऽवृधः । सुयन्तुऽभिः । सर्वऽशासैः । अभीशुऽभिः ।
क्रिविः । नामानि । प्रवणे । मुषायति ॥ ४ ॥

एषसौरीवा एतेरश्मयः सुयुजः सुष्ठुपरस्परंसंयुक्तायामन्यज्ञगमने इष्टये एषणाय नीचीर्नीचंगच्छन्तीतिविशेषः अमुष्मै यजमानाय यम्योयम्याःगमनार्हाः अथवा यमोनियमितादित्यः तस्यसंबन्धिनः ऋतावृधः यज्ञस्यवर्धयितारश्च अयमादित्यः सुयन्तुभिःसुगमनैः सर्वशासैः सर्वस्यशासकैः अभीशुभीरश्मिभिः क्रिविः कर्ता नामानि नामकानिउदकानि प्रवणे निम्ने भूप्रदेशे मुषायति मुष्णातिआदत्तइत्यर्थः अथवाग्निनाआवाह्यस्याग्नेरेतेश्वाः इष्टये यज्ञगमनाय यामनि रथेसुयुजःप्रगच्छन्ति शिष्टंसमानं क्रिविः क्रिविसदृशोग्निः प्रवणे नामानिहवींष्युक्तलक्षणाभिः ज्वालाभिर्मुषायत्यादत्ते ॥ ४ ॥

४. इन यजमानों के लिए यज्ञ को बढ़ानेवाली ये सूर्य की किरणें परस्पर भली भाँति से संयुक्त होकर यज्ञभूमि में गमन करने की अभिलाषा से अवतीर्ण होती हैं। वेगपूर्वक गमन करनेवाली और सबका नियमन करनेवाली इन समस्त किरणों-द्वारा आदित्य जलराशि को निम्न-देश में प्रेरण करते हैं।

संजर्भुराणस्तरुंभिः सुतेगृभंवयाकिनंचित्तगर्भासुसुस्वरुः।
धारवाकेष्वृंजुगाथशोभसेवर्धस्वपत्नीरभिजीवोअध्वरे ॥५॥२३॥

सम्ऽजर्भुराणः। तरुंऽभिः। सुतेऽगृभम्। वयाकिनम्। चित्तऽगर्भासु सुऽस्वरुः। धारऽवाकेषु। ऋजुऽगाथ। शोभसे। वर्धस्व। पत्नीः। अभि। जीवः। अध्वरे ॥ ५ ॥ २३ ॥

हेऋजुगाथ शोभनस्तुतिकाग्ने तरुभिः तरुविकारैर्ग्रहैः सुतेगृभं अभिषुतेनरसेनगृहीतं वयाकिनं कुत्सिताःअल्पाःवयाःशाखावयाकाःलताः तद्वन्तं सोमं चित्तगर्भासु चित्तग्राहिणीषु स्तुतिभिःसह संजर्भुराणः गृभ्णन् गृह्णन् सुस्वरुः शोभनगमनःशोभनस्तुतिकोवा त्वं धारवाकेषु धारयन्तिवाकान्स्तोत्राणीतिधारवाकाऋत्विग्यजमानाः तेषुमध्येशोभसे किंच अध्वरे जीवः सर्वस्यजीवयिता पत्नीः पालयित्रीःओषधीर्ज्वालावा अभि अभिमुखंवर्धस्वअभिवर्धय॥५॥

५. हे अग्नि, तुम्हारा स्तोत्र अत्यन्त मनोहर है। जब निःसृत सोमरस काष्ठमय पात्र में गृहीत होता है एवम् तुम उस सोमरस को ग्रहण करके मनोहर स्तोत्र को सुनकर उल्लसित होते हो, तब उपासकों के मध्य में तुम्हारी विशेष शोभा होती है। हे जीवनदाता, यज्ञ में तुम रक्षण करनेवाली शिखा को सर्वत्र वर्द्धित करो।

यादृगेवददृशेतादृगुच्यतेसंछाययादधिरेसिध्रयाप्स्वा।
महीमस्मभ्यमुरुषामुरुज्रयोबृहत्सुवीरमनपच्युतंसहः ॥ ६ ॥

यादृक्। एव। ददृशे। तादृक्। उच्यते। सम्। छायया। दधिरे। सिध्रया। अप्ऽसु। आ। महीम्। अस्मभ्यम्। उरुऽसाम्। उरु। ज्रयः। बृहत्। सुऽवीरम्। अनपऽच्युतम्। सहः ॥ ६ ॥

एषावैश्वदेवी यादृगेवददृशे यादृग्रूपमेवददृशे तादृगुच्यते तादृग्रूपमेवोच्यते यथादृष्टमेवस्तूयतेनतुपरवचनप्रत्ययेन यस्माच्छायया दीप्त्या सिध्रया साधिकयासह अप्सु व्यापकासु स्तुतिषु अप्स्वेववाआसंदधिरे सम्यग्धारयन्ति स्वीयंरूपंस्तुतिंवा तेदेवामहींमहतींपूज्यामुरुषां बहुदानीं रयिं उरु प्रभूतं ज्रयोवेगं बृहन्महत् सुवीरं शोभनवीर्यमपत्यं अनपच्युतं अनुपक्षीणं सहोबलंचाभिभावुकमस्मभ्यंप्रयच्छंतिवत्यर्थः ॥ ६ ॥

६. यह वैश्वदेवी जिस प्रकार दृष्ट होती है, उसी प्रकार वर्णित भी होती है। साधक दीप्ति के साथ वह जल के मध्य में अपना रूप या स्तुति धारण करती है। वे देवता हम लोगों के द्वारा पूज्य प्रभूत धन, महावेग, असंख्य वीर्यशाली पुत्र और अक्षय्य बल प्रदान करें।

वेत्यग्रुर्जनिवान्वाअतिस्पृधःसमर्यतामनसासूर्यःकविः।
घ्रंसंरक्षन्तंपरिविश्वतोगयमस्माकंशर्मवनवत्स्वावसुः॥ ७॥

वेति। अग्रुः। जनिऽवान्। वै। अति। स्पृधः। सऽमर्यता।
मनसा। सूर्यः। कविः। घ्रंसम्। रक्षन्तम्। परि। विश्वतः।
गयम्। अस्माकम्। शर्म। वनवत्। स्वऽवसुः॥ ७॥

इयंसौरी सूर्योदेवः अग्रुरग्रगामी जनिवान्वै जन्मवान्जायावान्वा उषाह्यस्यजायावाङ्-तिमसिद्धौ कविः क्रान्तदर्शी समर्यता समरमिच्छता मनसास्पृधः संग्रामान् अतिवेति अति-गच्छति मंदेहानसुरान्योद्धुं घ्रंसं दीप्तं गयं गृहंअंतरिक्षंवा विश्वतःसर्वतोरक्षन्तंपरिचरेमेतिशेषः सदेवोस्माकं शर्म सुखं परि सम्यक् वनवत् दद्यात् स्वावसुः स्वायत्तधनःसन्॥ ७॥

७. यह सर्वदर्शी, अग्रगामी सूर्य असुरों के साथ युद्धाभिलाषी होकर पत्नी उषा के समभिव्याहार के लिए साहसपूर्वक अग्रसर होते हैं। धन इन्हीं के अधीन है। वे हम लोगों को उज्ज्वल और सर्वत्र रक्षाकारी गृह तथा पूर्ण सुख प्रदान करें।

ज्यायांसमस्ययतुनस्यकेतुनऋषिस्वरंचरतियासुनामते।
यादृश्मिन्धायितमपस्ययाविदद्यउस्वयंवहतेसोअरंकरत्॥ ८॥

ज्यायांसम्। अस्य। यतुनस्य। केतुना। ऋषिऽस्वरम्। चरति।
यासु। नाम। ते। यादृश्मिन्। धायि। तम्। अपस्यया।
विदत्। यः। ॐ इति। स्वयम्। वहते। सः। अरम्। करत्॥ ८॥

इयमाग्नेयीसौरीवा हेदेव ज्यायांसं अतिशयेनप्रवृद्धं अस्य यतुनस्य यततिर्गतिकर्मा ग-न्तुरस्य सूर्यस्य कर्मणिषष्ठ्यौ अमुं गन्तारं केतुना प्रज्ञापकेनकर्मणा उदयादिलक्षणेनविशिष्टं ऋषिस्वरं ऋषिभिःस्तुत्यं त्वांचरतिगच्छति भजते यजमानः केनसाधनेन यासुस्तुतिषु तेत्वदीयं नामनमनं नामकंवारूपंवर्ततेताभिरित्यर्थः यद्वा अस्य यतुनस्य गमनशीलस्यतव केतुना तमो-निर्हरणादिकर्मणा विशिष्टंत्वांचरति यादृश्मिन् यादृशेकामेधायि धत्ते कर्तरिचिण् साम-र्थ्यान्मनः गम्यते तंयथानिर्देशंमपति निर्दिष्टव्यत्वात्तादृशमित्यर्थोज्ञातव्यः तादृशंकामं अपस्य-या कर्मणा हविः स्तुत्यादिलक्षणेन विदत् विन्दते यउ यएव स्वयं अनन्यप्रेरितःसन्

स्वमनीषयैव वहते धारयतिफलं सः अरं अलं अत्यर्थं करत् करोतीतिशेषः अथवा यउ यएव स्वयंवहते स्वयमेवानुतिष्ठति सोत्यर्थंकुर्यात् नह्यन्येनकारितंफलवद्भवति ॥ ८ ॥

८. हे देवश्रेष्ठ सूर्य या अग्नि, यजमान तुम्हारे निकट गमन करते हैं। तुम उदयादि लक्षण-द्वारा परिज्ञात होते हो। ऋषि लोग तुम्हारा स्तवन करते हैं, जिससे तुम्हारा नाम वर्द्धित होता है। वे जिस विषय की कामना करते हैं, कार्य-द्वारा उसे प्राप्त करते हैं। एवम् जो अपनी इच्छा से पूजा करते हैं, वे प्रचुर पुरस्कार प्राप्त करते हैं।

समुद्रमासामवतस्थेअग्रिमानरिष्यतिसवनंयस्मिन्नायता।
अत्रानहार्दिक्रवणस्यरेजतेयत्रामतिर्विद्यतेपूतबन्धनी ॥ ९ ॥

समुद्रम् । आसाम् । अव । तस्थे । अग्रिमा । न । रिष्यति ।
सवनम् । यस्मिन् । आऽयता । अत्र । न । हार्दि । क्रवणस्य ।
रेजते । यत्र । मतिः । विद्यते । पूतऽबन्धनी ॥ ९ ॥

इयमपिसौरी आसांस्तुतीनां समुद्रं समुद्रवत्पर्यवसानभूतंसूर्यं अग्रिमा अत्यन्तंश्रेष्ठा अस्मदीयास्तुतिरवतस्थेअवगच्छति यद्वा आसांप्रजानांऋत्विजांस्तुतिरितिसंबन्धः सवनं सूयतेसोमोत्रेतिसवनं यज्ञगृहं नरिष्यति नहिंस्यते किंतु प्रवर्धतइत्यर्थः यस्मिन्नायताविस्तीर्णानि स्तोत्राणि तत्सदनमिति अत्रास्मिन्यजमानगृहे क्रवणस्य स्तुतिकर्तुः हार्दि हृदयसंबन्धि हृदयगतंकाम्यंफलं नरेजते नविचलति नमृषाभवति यत्र यस्मिन्स्तोतृगृहे मतिः स्तुतिः पूतबन्धनी पूतं सूर्यं अनुबध्नन्तीविद्यते अत्रनरेजतइति ॥ ९ ॥

९. हम लोगों के इन समस्त स्तोत्रों के मध्य में प्रधान स्तोत्र समुद्र-तुल्य सूर्य के निकट उपस्थित हो। यज्ञ-गृह में जो उनका स्तोत्र विस्तीर्ण होता है, वह नष्ट नहीं होता है। जिस स्थान में (स्तोताओं के गृह में) पवित्र सूर्य के प्रति चित्त समर्पित होता है, वहाँ उपासकों का हृदयगत अभिलाष विफल नहीं होता है।

सहिक्षत्रस्यमनसस्यचित्तिभिरेवावदस्ययजतस्यसध्रेः।
अवत्सारस्यस्पृणवामरण्वभिःशविष्ठंवाजंविदुषाचिदर्ध्यम् ॥ १० ॥ २४ ॥

सः । हि । क्षत्रस्य । मनसस्य । चित्तिऽभिः । एवऽवदस्य ।
यजतस्य । सध्रेः । अवऽत्सारस्य । स्पृणवाम । रण्वऽभिः । शविष्ठम् ।
वाजम् । विदुषा । चित् । अर्ध्यम् ॥ १० ॥ २४ ॥

इयमपिसौरी सहि सखलुसवितादेवः सर्वैःस्तुत्यः सर्वकामपूरकइत्यर्थः हिशब्दोलोकवेदयोःप्रसिद्धिद्योतकः तस्मात्सकाशात् अत्रान्येचऋषयोत्रदृष्टलिंगाइत्युक्तत्वात् क्षत्रादयऋषयः क्षत्रस्यमनसस्य एवावदस्ययजतस्य सध्रेः अवत्सारस्यचैषामृषीणामस्माकं रण्वभीर-

मणीयाभिश्चित्तिभिःमनोरथैः स्पृणवाम पूरयाम किंशविष्ठंवाजं अतिशयेनबलवदन्नंअन्नंवैवा-
जइतिश्रुतेः। विदुषाचित् विपश्चिता अर्ध्यं समर्धनीयंस्पृणवाम क्षत्रादयोनयमितिसंबन्धः॥१०॥

१०. वह सविता देव सबके द्वारा स्तुत्य हैं—सबकी कामनाओं के पूरक हैं। उनके निकट से हम क्षत्र, मनस, अवद, यजत, सध्रि और अवत्सार नामक ऋषि ज्ञानियों-द्वारा भोगयोग्य बलवान् अन्न को चिन्ता-द्वारा पूर्ण करते हैं।

श्येनआसामदितिःकक्ष्योऽमदोविश्ववारस्ययजतस्यमायिनः।
समन्यमंन्यमर्थयन्त्येतवेविदुर्विषाणंपरिपानमन्तिते ॥ ११ ॥

श्येनः। आसाम्। अदितिः। कक्ष्यः। मदः। विश्वऽवारस्य। यजतस्य।
मायिनः। सम्। अन्यम्ऽअन्यम्। अर्थयन्ति। एतवे। विदुः।
विऽसानम्। परिऽपानम्। अन्ति। ते ॥ ११ ॥

मददेवत्येयं विश्ववारादीनांत्रयाणामृषीणांस्वभूतः आसामपां सोमरसलक्षणानां मदः श्येनःशंसनीयगमनःशीघ्रंपातृसकाशगन्ता अदितिरदीनःअतिसमृद्धः कक्ष्यकक्ष्यपूरकश्चभवती-तिशेषःतेविश्ववारादयःसत्रेप्रवृत्ताएतवे सोमंप्राप्तुंतत्पानाय अन्यमन्यं परस्परंसमर्थयंति याचन्ते अनुज्ञां तेविषाणं विशेषेणमदस्यदातारं परिपानं अन्ति अन्तिके विदुर्जानंतिलभन्तेवा ॥११॥

११. विश्ववार, यजत और मायी ऋषि का सोमरस-जनित मद प्रशंसनीय-गमन श्येन पक्षी की तरह शीघ्रगामी है, अदिति की तरह विस्तृत और कक्षापूरक है। वे सोमपान करने के लिए परस्पर प्रार्थना करते हैं और प्रचुर पान करके अतिरिक्त मत्तता लाभ करते हैं।

अथद्वादशी—

सदापृणोयजतोविद्विषोवधीद्बाहुवृक्तःश्रुतवित्तर्योवःसचा।
उभासवराप्रत्येतिभातिचयदींगणंभजतेसुप्रयावभिः ॥ १२ ॥

सदाऽपृणः। यजतः। वि। द्विषः। वधीत्। बाहुऽवृक्तः। श्रुतऽवित्।
तर्यः। वः। सचा। उभा। सः। वरा। प्रति। एति। भाति। च।
यत्। ईम्। गणम्। भजते। सुप्रयावऽभिः ॥ १२ ॥

सदापृणः सर्वदादानशीलः एतन्नामा यजतोयष्टाच बाहुवृक्तः बाहुभ्यांवृक्तदर्भश्च श्रुतवित् श्रुतस्यवेत्ताच तर्यश्च एतेषांपंचानांपरस्परापेक्षयाप्रत्येकमेकवचनं सऋषिर्विद्विषः शत्रून् वधीर्हिंस्यात् वोयुष्माकं सचा सहितः युष्माभिःसहितइत्यर्थः सऋषिः वरा श्रेष्ठौ उभा

१ तै० ब्रा० १. ३. ६.।

उभौ इहलोकपरलोकविषयौकामौ प्रत्येति अभिगच्छति भातिच यद्यस्मादीमेनंगणं देवसंघं सुप्रयावभिः सुष्ठुप्रकर्षेणमिश्रयद्भिःस्तोत्रैः भजते तस्मादेवंभातीति ॥ १२ ॥

१२. सदापृण, यजत, बाहुवृक्त, श्रुतवित् और तर्य ऋषि तुम लोगों के साथ मिलित होकर शत्रु-संहार करें। वे ऋषि इहलोक और परलोक दोनों लोकों की सकल श्रेष्ठ कामना लाभ कर दीप्तिमान् हों; क्योंकि वे सुमिश्रित हव्य या स्तोत्र-द्वारा विश्वदेवों की उपासना करते हैं।

सुतंभरोयजमानस्यसत्पतिर्विश्वासामूधःसधियामुदञ्चनः।
भरद्धेनूरसवच्छिश्रियेपयोनुब्रुवाणोअध्येतिनस्वपन् ॥ १३ ॥

सुतम्ऽभरः। यजमानस्य। सत्ऽपतिः। विश्वासाम्। ऊधः। सः। धियाम्। उत्ऽअंचनः। भरत्। धेनुः। रसऽवत्। शिश्रिये। पयः। अनुऽब्रुवाणः। अधि। एति। न। स्वपन् ॥ १३ ॥

यजमानस्यावत्सारस्य मम सुतंभरोयागनिर्वाहकएतन्नामाऋषिः सत्पतिः सतांविद्यमानानांफलानांपालयिता होतादाताभवतीत्यर्थः सच विश्वासांधियांसर्वेषांकर्मणां ऊधः उद्धततरंफलं उदंचनः ऊर्ध्वमुद्गमयिता फलप्रापकइत्यर्थः धेनुर्गौः रसवत् सारवत्पयोभरत्अहरत् तत्र पयःशिश्रिये श्रयतिचास्यसामर्थ्यात् तत्सर्वमनुब्रुवाणःअनुक्रमेणसंकीर्तयन् नस्वपन् स्वापमकुर्वन् अनवरतमध्येति स्मरति अवत्सारः सुतंभरस्तादृशइति ॥ १३ ॥

१३. यजमान अवत्सार के यज्ञ में सुतम्भर ऋषि सुन्दर फलों के पालयिता होते हैं। समस्त यज्ञ-कार्य को ऊद्‌र्ध्व में उन्नीत करते हैं। गौयें सुन्दर रसयुक्त दुग्ध प्रदान करती हैं। यह दुग्ध वितरित होता है। इस क्रम से घोषणा करके अवत्सार निद्रा-परित्याग-पूर्वक अध्ययन करते हैं।

योजागारतमृचःकामयन्तेयोजागारतमुसामानियन्ति।
योजागारतमयंसोमआहतवाहमस्मिसख्येन्योकाः ॥ १४ ॥

यः। जागार। तम्। ऋचः। कामयन्ते। यः। जागार। तम्। ऊँ इति। सामानि। यन्ति। यः। जागार। तम्। अयम्। सोमः। आह। तव। अहम्। अस्मि। सख्ये। निऽओकाः ॥ १४ ॥

योदेवोजागार सर्वदाविनिद्रोजागरूकोगृहेवर्तते तमृचः सर्वशास्त्रात्मिकाः कामयन्ते यश्च जागार तमु तमेव सामानि स्तोत्ररूपाणि यन्ति प्राप्नुवन्ति योजागारतमयं अभिषुतः सोमआह वक्ति मांस्वीकुर्विति हेअग्ने तादृशस्य तवसख्येसमानख्याने हितकरणेन्योकाः नियतस्थानोहं अस्मि भवामि ॥ १४ ॥

१४. जो देव सर्वदा गृह में जागरित रहते हैं, ऋचायें उनकी कामना करती हैं। जो देव सदा जागरूक रहते हैं, साम (स्तोत्र आदि) उन्हें प्राप्त करता है। जो देव सर्वदा जागरित रहते हैं, उनसे यह अभिषुत सोम कहें कि "हमें स्वीकार करें। हे अग्नि, हम तुम्हारे नियत स्थान में सहवास करें।"

**अ॒ग्निर्जा॑गार॒तमृच॑ःकामयन्ते॒ग्निर्जा॑गार॒तमु॒सामा॑नियन्ति।**
**अ॒ग्निर्जा॑गार॒तम॒यंसोम॑आह॒तवा॒हम॑स्मिस॒ख्येन्यो॑काः ॥१५॥२५॥**

**अ॒ग्निः। जा॒गा॒र॒। तम्। ऋच॑ः। का॒म॒य॒न्ते॒। अ॒ग्निः।। जा॒गा॒र॒। तम्। ऊँ॒ इति॑। सामा॑नि। य॒न्ति॒। अ॒ग्निः। जा॒गा॒र॒। तम्। अ॒यम्। सोम॑ः। आ॒ह॒। तव॑। अ॒हम्। अ॒स्मि॒। स॒ख्ये। निऽओ॑काः॥१५॥२५॥**

अग्निर्जागारेतिपंचदशी पूर्वयैवनिगदितव्याख्या यइत्यस्यस्थाने अग्निरितिविशेषः॥१५॥

१५. अग्निदेव सर्वदा गृह में जागरित रहते हैं, ऋचायें उनकी कामना करती हैं। अग्निदेव सदा जागरूक रहते हैं, साम (स्तोत्र आदि) उन्हें प्राप्त करता है। अग्निदेव सर्वदा जागरित रहते हैं, उनसे यह अभिषुत सोम कहे कि "हमें स्वीकार करें। हे अग्नि, हम तुम्हारे नियत स्थान में सहवास करें।"

अथचतुर्थेनुवाकेद्वादशसूक्तानि तत्रविदादिवइत्येकादशर्चंप्रथमंसूक्तं सदापृणोनामात्रे-यऋषिः त्रिष्टुप्छन्दः वैतदित्युक्तत्वादिदमपिवैश्वदेवं विदाएकादशसदापृणइत्यनुक्रमणिका विनियोगोलैंगिकः।

**वि॒दाद्दि॒वोवि॒ष्यन्नद्रि॑मु॒क्थैरा॑य॒त्याउ॒षसो॑अ॒र्चिनो॑गुः।**
**अपा॑वृत॒व्र॒जिनी॒रुत्स्व॑र्गा॒द्वि॑दुरो॒मानु॑षीर्दे॒वआ॑वः॥ १ ॥**

**वि॒दाः। दि॒वः। वि॒ऽस्यन्। अद्रि॑म्। उ॒क्थैः। आ॒ऽय॒त्याः। उ॒षस॑ः। अ॒र्चिन॑ः। गुः॒। अप॑। अ॒वृ॒त॒। व्र॒जिनीः। उत्। स्व॑ः। गा॒त्। वि। दुर॑ः। मानु॑षीः। दे॒वः। आ॒व॒रित्या॑वः॥ १ ॥**

अत्रेन्द्रादयोलिंगोक्तदेवताः अत्रांगिरसां पणिभिरपहृत्यगिरेरधःस्थापितानांगवामिन्द्रे-णविमोकःप्रतिपाद्यते विदाः अवेदयदिन्द्रः किं गानिगूढाःइतिसंबन्धः किंकुर्वन् उक्थैरंगिर-सांस्तुतिभिः निमित्तभूताभिः आद्रिं वज्रं विष्यन् प्रक्षिपन् रक्षकाणामुपरि गिरिभेदनायच विष्यन्आयत्याः आगामिन्याउषसःसंबन्धिनोर्चिनोरश्मयोगुःअगच्छन् सर्वत्रप्रसृताअभवन् अपावृत अपावृणोत व्रजिनीः तमःपुंजवतीर्निशाः स्वः स्वरणशीलआदित्यः उद्गात् उदगात्

तथाकृत्वा मानुषीः मनुष्यसंबन्धिनीः दुरोद्वाराणि देवः सूर्योव्यावःव्यवृणोत् अन्धकारापन-यनेनमनुष्यादिव्यवहारायाकरोदित्यर्थः ॥ १ ॥

१. अङ्गिराओं की स्तुतियों से इन्द्र ने स्वर्ग से वज्र निक्षेप करके पणियों-द्वारा अपहृत निगूढ़ धेनुओं का पुनरुद्धार किया था। आगामिनी उषा की रश्मियाँ सर्वत्र व्याप्त होती हैं। पुञ्जीभूत अन्धकार (निशा) को विनष्ट करके सूर्य उदित होते हैं। मनुष्यों के गृहद्वारों को उन्होंने उन्मुक्त किया है।

विसूर्यो॑अ॒मतिं॒नश्रियं॑सा॒दोर्वाद्गवां॑मा॒ताजा॒न॒तीगा॑त् ।

धन्वं॑र्णसोन॒द्यः॒खादो॑अर्णाः॒स्थूणे॑वसु॒मिताद्दृंहत॒द्यौः ॥ २ ॥

वि । सूर्यः॑ । अ॒मतिं॑म् । न । श्रियं॑म् । सा॒त् । आ । ऊ॒र्वात् । गवां॑म् । मा॒ता । जा॒न॒ती । गा॒त् । धन्वं॑ऽअर्णसः । न॒द्यः॑ । खादः॑ऽअर्णाः । स्थूणां॑ऽइव । सुऽमि॑ता । दृं॒ह॒त । द्यौः ॥ २ ॥

सूर्योदेवः श्रियंदीप्तिं विसात् विभजते प्रकाशयतीत्यर्थः अमतिंन रूपनामैतत् रूप-मिवद्रव्यं यथा द्रव्याणि घटपटादीनिनीलपीतादिरूपंलभन्तेतद्वत् तथा गवांरश्मीनांमातोषा जानती सूर्यंउदेष्यति मयाच व्युच्छनंकर्तव्यमितिजानती ऊर्वात् महतोन्तरिक्षात् आगादा-गच्छति तथानद्यश्च धन्वर्णसः धन्वतिर्गतिकर्मा धन्वंति गच्छन्ति अर्णांसि यासु तास्तथो-क्ताः दीर्घाभावश्छान्दसः खादोअर्णाः भक्षितकूलोदकाः कूलंकषाइत्यर्थः नद्यश्चैवंरूपाभ-वन्ति किंच द्यौश्चसुमिता सुष्ठुगृहेस्थापिता स्थूणेव गृहाधारस्तंभइव दृंहत दृढाभवत् एत-त्सर्वंसूर्यस्याज्ञयेतिभावः ॥ २ ॥

२. पदार्थ (घट-पट आदि) जिस प्रकार से भिन्न-भिन्न रूप (नील-पीत आदि) प्रकाशित करते हैं, उसी प्रकार से सूर्य अपनी दीप्ति विस्तारित करते हैं। किरण-जाल की जननी उषा सूर्य के आगमन की उत्प्रेक्षा करके विस्तृत अन्तरिक्ष से अवतीर्ण होती हैं। तट को विध्वंस करनेवाली नदियाँ प्रवहमान वारिराशि के साथ प्रवाहित होती हैं। गृह में स्थापित सुघटित स्तम्भ की तरह स्वर्ग सुदृढ़ भाव से अवस्थान करता है।

अ॒स्मा उ॒क्थाय॒पर्व॑तस्य॒गर्भो॑म॒हीनां॑ज॒नुषे॑पू॒र्व्याय॑ ।

विपर्व॑तो॒जिहीं॑त॒साध॑त॒द्यौरा॒विवा॑सन्तोद॒सय॑न्त॒भूम॑ ॥ ३ ॥

अ॒स्मै । उ॒क्थाय॑ । पर्व॑तस्य । गर्भः॑ । म॒हीना॑म् । ज॒नुषे॑ । पू॒र्व्याय॑ । वि । पर्व॑तः । जिही॑त । साध॑त । द्यौः । आ॒ऽविवा॑सन्तः । द॒सय॑न्त । भूम॑ ॥ ३ ॥

अस्मै मह्यं उक्थाय स्तोत्रे पर्वतस्य पर्ववतोमेघस्य गर्भोगर्भस्थानीयमुदकं जिहीत चलति चालयतिवेन्द्रः कीदृशायास्मै महतीनां महीनांस्तुतीनां जनुषेउत्पादयित्रे पूर्व्याय प्रत्ना-य तदेवपुनरुच्यते पर्वतोमेघोविजिहीत द्यौश्च साधत साधयतिवृष्टिं आविवासन्तः सर्वतःप-रिचरन्तोंगिरसोभूमअत्यधिकंयन्त उपक्षपयन्त्यात्मानंकर्मभिः ॥ ३ ॥

३. महान् स्तोत्रों के उत्पादक प्राचीनों की तरह जब तक हम स्तुति करते हैं, तब तक मेघ के गर्भ में स्थित वारि-राशि हमारे ऊपर पतित होती है। मेघ से जल पतित होता है। आकाश अपने कार्य का साधन करता है। सर्वत्र परिचर्या करनेवाले अङ्गिरा लोग कर्मानुष्ठान-द्वारा नितान्त परिश्रान्त होते हैं।

सूक्तेभिर्वोवचोभिर्देवजुष्टैरिन्द्रान्व१ग्नीअवसेहुवध्यै ।
उक्थेभिर्हिष्माकवयःसुयज्ञाआविवासन्तोमरुतोयजन्ति ॥ ४ ॥

सुऽउक्तेभिः । वः । वचःऽभिः । देवऽजुष्टैः । इन्द्रा । नु । अग्नी इति । अवसे । हुवध्यै । उक्थेभिः । हि । स्म । कवयः । सुऽयज्ञाः । आऽविवासन्तः । मरुतः । यजन्ति ॥ ४ ॥

हेइन्द्रा हेअग्नी परस्परापेक्षयाप्रत्येकंद्विवचनं यद्यप्येकमेवपदं मध्येव्यवधानंछान्दसं हेइन्द्राग्नी वोयुवां व्यत्ययेनबहुवचनं देवजुष्टैः देवैःसेवनीयैः सूक्तेभिः सूक्तैः सुवचनैः शोभ-नगुणप्रकाशनप्रवणैः वचोभिरवसेस्मद्रक्षणाय हुवध्यै आह्वयामि नुक्षिप्रं युवामुक्थेभिः स्तो-त्रैः कवयोनूचानाः पूर्वेऋषयः सुयज्ञाः शोभनयागाः आविवासन्तः स्तुत्यादिनापरिचरन्तः मरुतोमरुत्सदृशाः कर्मसुशीघ्राः यजन्ति पूजयन्ति हिस्मेतिपूरणौ ॥ ४ ॥

४. हे इन्द्र, हे अग्नि, हम परित्राण के लिए देवों के द्वारा सेवनीय उत्कृष्ट स्तोत्रों से तुम दोनों का आह्वान करते हैं। भली भाँति से यज्ञ करनेवाले मरुतों की तरह कर्मतत्पर-परिचरण करनेवाले ज्ञानी लोग, स्तोत्र-द्वारा, तुम दोनों की उपासना करते हैं।

एतोन्व१द्यसुध्यो३भवामप्रदुच्छुनामिनवामावरीयः ।
आरेद्वेषांसिसनुतर्दधामायामप्राञ्चोयजमानमच्छ ॥ ५ ॥ २६ ॥

एतो इति । नु । अद्य । सुऽध्यः । भवाम । प्र । दुच्छुनाः । मिनवाम । वरीयः । आरे । द्वेषांसि । सनुतः । दधाम । अयाम । प्राञ्चः । यजमानम् । अच्छ ॥ ५ ॥ २६ ॥

अयमंगिरसांवादः अद्यास्मिन्यागदिने नुक्षिप्रमेतोएतगच्छत सुध्यः शोभनकर्माणो-भवाम दुच्छुनाः द्विषः प्रमिनवाम प्रकर्षेणहिंसाम वरीयोत्यन्तमित्यर्थः तदेवोच्यते सनुतः संभक्षणे द्वेषांसि यजमानस्यद्वेष्टॄन् आरे दूरे दधाम स्थापयाम यद्वा सनुतइत्यन्तर्हितनाम पूर्वं प्रकाशवैरिणांवधउक्तः इदानीं प्रच्छन्नानामितिविवेकः तदर्थं यजमानंप्रांचः सदाप्रणमवत्सारं चाच्छाभिमुखमयाम गच्छाम ॥ ५ ॥

५. इस यज्ञ-दिन में शीघ्र आगमन करो। हम लोग शोभन कर्म करनेवाले होते हैं। विशेष रूप से शत्रुओं की हिंसा करते हैं। प्रच्छन्न शत्रुओं को दूर करते हैं और यजमानों के अभिमुख शीघ्र गमन करते हैं।

एता धियं कृणवामा सखायोप या माता ऋणुत व्रजं गोः।
यया मनुर्विशिशिप्रं जिगाय यया वणिग्वङ्कुरापा पुरीषम् ॥ ६ ॥

आ। इत। धियम्। कृणवाम। सखायः। अप। या। माता। ऋणुत। व्रजम्। गोः। यया। मनुः। विशिऽशिप्रम्। जिगाय। यया। वणिक्। वंकुः। आप। पुरीषम् ॥ ६ ॥

इदमप्यंगिरसांवाक्यं एत आगच्छत आगत्यच धियं स्तुतिं कृणवाम करवाम हेसखा-यः परस्परंसखिभूताअंगिरसइत्यंगिरसांवचनं याधीः माता गवांनिर्मात्रीगोर्गवांव्रजंपणिभिर-पहृतं अपऋणुत अपावृणोत् ययाच मनुः विशिशिप्रं विगतहनुं शत्रुंजिगाय जितवान् यद्वा म-नुः सर्वस्यमन्तेन्द्रः विशिशिप्रोवृत्रः सतमस्माभिःकृतया स्तोमलक्षणयाधिया जिगाय याच वणिक् वणिगिवाल्पेनकर्मणा बहुफलाकांक्षी कक्षीवान् वंकुर्जलेच्छयावनगामी पुरीषं पूरक-मुदकमाप याभिः सुदानूऔशिजायवणिजेदीर्घश्रवसेमधुकोशेइतिहिश्रुतं ॥ ६ ॥

६. हे मित्रो, आओ। हम लोग स्तोत्रपाठ करें। जिसके द्वारा अपहृत धेनुओं का गोष्ठ उद्घाटित हुआ था। जिसके द्वारा मनु ने हनुविहीन शत्रु को जीता था। जिसके द्वारा वणिक् की तरह बहु-फलाकांक्षी कक्षीवान् ने जल की इच्छा से वन में जाकर जल-लाभ किया था।

अथसप्तमी—

अनूनोदत्र हस्तयतो अद्रिरार्चन्येन दश मासो नवग्वाः।
ऋतं यती सरमा गा अविन्दद्विश्वानि सत्याङ्गिराश्चकार ॥ ७ ॥

---

१ ऋ० सं० १. ७. ३५.।

अनूनोत् । अत्र । हस्तऽयतः । अद्रिः । आर्चन् । येन । दश ।
मासः । नवऽग्वाः । ऋतम् । यती । सरमा । गाः । अविन्दत् ।
विश्वानि । सत्या । अंगिराः । चकार ॥ ७ ॥

अत्रास्मिन्यज्ञे अद्रिरभिषवग्रावा हस्तयतोहस्तेनसंहतःसन् अनूनोत् नौतिरत्रशब्द-मात्रेवर्तते अशब्दयत् येनग्राव्णा तदभिषवेण दशमासोमासान् दशमासपर्यन्तं नवग्वाः नवमासपर्यन्तं गवार्थमनुतिष्ठन्तोंगिरसोनवग्वाःनवगोयुक्तावा आर्चन् अपूजयन्निन्द्रं यद्वा दशसंख्याकामासोपेताः दशमासानुष्ठानाः अंगिरसोपरेनवग्वाश्चैतेसर्वेपि येनार्चन्ति नवग्वासः सुतसोमासइन्द्रमितिहिनिगमः । ऋतं सत्यंयज्ञंवायतीप्राप्नुवती सरमा सरणशीलास्तुतिरूपा वाक् अंगिरसां गवार्थं इन्द्रेणप्रहितादेवशुनीवा गाअविन्दत् पणिभिरपहृताः विश्वानि सर्वाणिस्तुत्यादिलक्षणानि सत्या सत्यानि चकारांगिराः ॥ ७ ॥

७. इस यज्ञ में ऋत्विकों के हस्त-द्वारा संचालित पाषाण-खण्ड से शब्द उत्थित होता है, जिसके द्वारा नवग्वों और दशग्वों ने इन्द्र की पूजा की थी। यज्ञ में उपस्थित होकर सरमा ने गौओं को प्राप्त किया था और अङ्गिराओं के सकल स्तवादि कर्म सफल हुए थे।

विश्वेअस्याव्युषिमाहिनायाःसंयद्गोभिरङ्गिरसोनवन्त ।
उत्सआसांपरमेसधस्थऋतस्यपथासरमाविदद्गाः ॥ ८ ॥

विश्वे । अस्याः । विऽउषि । माहिनायाः । सम् । यत् । गोभिः ।
अंगिरसः । नवन्त । उत्सः । आसाम् । परमे । सधऽस्थे । ऋतस्य ।
पथा । सरमा । विदत् । गाः ॥ ८ ॥

विश्वे सर्वे अंगिरसोमाहिनायाः मंहनीयायाः अस्याउषसोव्युषि व्युच्छनेसति गवा-मावरकेन्धकारे अपवृतेसति यद्यदा गोभिःसंनवन्त संजग्मिरे तदा आसांगवां उत्सः क्षाराद्युत्सवः परमे उत्कृष्टे सधस्थे सहस्थाने यज्ञे उपयुक्तोभवदित्यर्थः ऋतस्य सत्य-स्य पथा मार्गेण सरमा वाक्देवशुनीवा गानिगूढाविदत् अलभत् यद्वा आसांगवां प-रमेसधस्थेसहस्थाने व्रजस्य निगूहनप्रदेशे उत्सः उदकस्यप्रस्रवणोवर्ततेविलमित्यर्थः ते-न ऋतस्योदकस्य पथा मार्गेण सरमा गाविदत् ॥ ८ ॥

८. इस पूजनीय उषा के उदयकाल में जब अङ्गिरा लोग प्राप्त धेनुओं के साथ मिलित हुए थे, तब उस उत्कृष्ट यज्ञशाला में उपयुक्त दुग्धस्राव होने लगा; क्योंकि सत्य मार्ग से सरमा ने गौओं को देख पाया था।

अथनवमी--

आसूर्योयातुसप्ताश्वः क्षेत्रंयदस्योर्विया दीर्घयाथे।
रघुःश्येनःपतयदन्धोअच्छायुवाकविर्दीदयद्गोषुगच्छन् ॥ ९ ॥

आ। सूर्यः। यातु। सप्तऽअश्वः। क्षेत्रम्। यत्। अस्य। उर्विया। दीर्घऽयाथे। रघुः। श्येनः। पतयत्। अन्धः। अच्छ। युवा। कविः। दीदयत्। गोषु। गच्छन् ॥ ९ ॥

सूर्यः सर्वस्यप्रेरकोदेवः सप्ताश्वः सर्पणस्वभावाश्वोपेतः सप्तसंख्याकाश्वोवा आयातु अस्मदभिमुखमागच्छतु यद्यस्मादस्यसूर्यस्य दीर्घयाथे दीर्घगमने क्षेत्रं गंतव्यप्रदेशः उर्विया उरुअतिप्रभूतायामः सएवदेवोरघुः लघुगमनः सश्येनः शंसनीयगमनः अन्धोदीयमानंहविः अच्छाभिलक्ष्यपतयत् आगच्छति युवा सर्वत्रमिश्रयिता कविः क्रान्तदर्शी सन् गोषुरश्मिषुगच्छन् मध्येवर्तयन् दीदयत् दीप्यते यद्वा श्येनः सुपर्णः अंधअच्छपतयत् द्युलोकस्थंसोमलक्षणं देवानामन्नमस्मद्यागार्थमानेतुंतदभिमुखमगात् युवेत्यादि शिष्टंसमानम् ॥ ९ ॥

९. सात अश्वों के अधिपति सूर्य हम लोगों के सम्मुख उपस्थित हों; क्योंकि उन्हें आयाससाध्य पथ-द्वारा एक सुदूरवर्ती गन्तव्य स्थान में उपस्थित होना होगा। वे श्येन पक्षी की तरह शीघ्रगामी होकर प्रदत्त हव्य के उद्देश से अवतरण करते हैं। वे स्थिर-यौवन तथा दूरदर्शी देव निज रश्मि के मध्य में अवस्थान करके प्रभा विस्तारित करते हैं।

आसूर्योअरुहच्छुक्रमर्णोयुक्तयद्धरितोवीतपृष्ठाः।
उद्नानावमनयन्तधीराआशृण्वतीरापोअर्वागतिष्ठन् ॥ १० ॥

आ। सूर्यः। अरुहत्। शुक्रम्। अर्णः। अयुक्त। यत्। हरितः। वीतऽपृष्ठाः। उद्ना। न। नावम्। अनयन्त। धीराः। आऽशृण्वतीः। आपः। अर्वाक्। अतिष्ठन् ॥ १० ॥

सूर्योदेवः शुक्रं दीप्तं अर्णउदकंप्रति आरुहत् सर्वतःप्रादुर्भवति यद्यस्मात् यदावा हरितोश्वान् वीतपृष्ठाः कान्तपृष्ठानयुक्त रथेअयोजयत् तदा तंसूर्यं धीराधीमन्तोयजमा-

नादयः उद्ना उदकेननावंन नावमिवानयन्त तदा आश्रृण्वतीः सर्वतोनुज्ञांकुर्वाणाआपो-अर्वाक्अवाङ्मुखाअतिष्ठन् अभवन् ॥ १० ॥

१०. उज्ज्वल वारिराशि के ऊपर सूर्य आरोहण करते हैं। जब वे कान्तपृष्ठवाले अश्वों को रथ में युक्त करते हैं, तब उन्हें धीमान् यजमान, जैसे जल के ऊपर नाव हो, उसी तरह से आनयन करते हैं। वारिराशि उनके आदेश को श्रवण करके अवनत होती है।

धियंवोअप्सुदधिषेस्वर्षांययातरंदशमासोनवग्वाः ।
अयाधियास्यामदेवगोपाअयाधियातुतुर्यामात्यंहः ॥११॥२७॥

धियम् । वः । अप्ऽसु । दधिषे । स्वःऽसाम् । यया । अतरन् ।
दश । मासः । नवऽग्वाः । अया । धिया । स्याम । देवऽगोपाः ।
अया । धिया । तुतुर्याम । अति । अंहः ॥ ११ ॥ २७ ॥

हेदेवाः वोयुष्माकं धियं स्तुतिं अप्सु अप्निमित्तां स्वर्षां सर्वस्यदात्रीं दधिषे धारयामि व्यत्ययेनमध्यमः ययाधिया कर्मणानवग्वाः अंगिरसः दशमासःअतरन्समनु-तिष्ठन्तः अया अनयाधिया देवगोपाः देवैर्गुप्ताःस्यामभवेम अयाधिया अंहः पापं अ-तितुतुर्याम अतितरेम ॥ ११ ॥

११. हे देवो, हम जल के लिए तुम लोगों के सर्वदायक स्तोत्र का पाठ करते हैं। नवग्वगण ने जिसके द्वारा दशमास-साध्य यज्ञ का सम्पादन किया था। जिस स्तोत्र-पाठ से हम लोग देवों के द्वारा रक्षणीय हों और पाप की सीमा का अतिक्रमण करें।

॥ इतिचतुर्थस्यद्वितीयेसप्तविंशोवर्गः॥ २७ ॥

हयोनविद्वानित्यष्टर्चंद्वितीयंसूक्तं प्रतिक्षत्रस्यार्षं अष्टमीद्वितीयाचत्रिष्टुभौ शिष्टाःषट्जगत्यः आदितःषट्वैश्वदेव्यः सप्तम्यष्टम्योर्देवपत्न्योदेवता तथाचानुक्रान्तं—हयोष्टौप्रतिक्षत्रोंत्यो-द्वचोदेवपत्नीस्त्वोंत्यात्रिष्टुप्द्वितीयाचेति । सूक्तविनियोगोलैंगिकः ।

हयोनविद्वाँअयुजिस्वयंधुरितांवहामिप्रतरणीमवस्युवम् ।
नास्यावश्मिविमुचंनावृतंपुनर्विद्वान्पथःपुरएतऋजुनेषति ॥ १ ॥

हयः । न । विद्वान् । अयुजि । स्वयम् । धुरि । ताम् । वहामि ।
प्रऽतरणीम् । अवस्युवम् । न । अस्याः । वश्मि । विऽमुचम् । न ।
आऽवृतम् । पुनः । विद्वान् । पथः । पुरःऽएता । ऋजु । नेषति ॥ १ ॥

हयोन अश्वइव विद्वान् सर्वज्ञः प्रतिक्षत्रः स्वयंअनन्यप्रेरितःसन् धुरि यज्ञात्मिकायां अयुजि युक्तोभवत् तांधुरं प्रतरणीं प्रकर्षेणतारयित्रीं अवस्युवं रक्षयित्रीं वहामि धारयाम्यहमध्वर्युर्होतावा अस्याधुरोविमुचंविमोचनंपरित्यागं नवश्मि नकामये नावृतं पुनःपुनःआवरणं धारणमपि नचवश्मि ममकोभारइति तदेवोच्यते विद्वान् मार्गाभिज्ञोन्तर्यामीदेवः पुरएता पुरतोगन्तासन् पथोयज्ञमार्गान् ऋजुअकुटिलं नेषति प्रापयति ॥ १ ॥

१. सर्वज्ञ प्रतिक्षत्र ने यज्ञभार में अपने को शकट में अश्व की तरह नियोजित किया है। हम होता अथवा अध्वर्यु उस अलौकिक रक्षाविधायक भार को वहन करते हैं। इस भारवहन से हम छुटकारा पाने की इच्छा नहीं करते हैं। यह भार बारम्बार हमारे प्रति समर्पित हो, ऐसी कामना भी हम नहीं करते हैं। मार्गाभिज्ञ, अन्तर्यामी देव पुरोगामी होकर सरल पथ-द्वारा मनुष्यों को ले जायें।

अग्नइन्द्रवरुणमित्रदेवाःशर्धःप्रयन्तमारुतोतविष्णो ।
उभानासत्यारुद्रोअधग्नाःपूषाभगःसरस्वतीजुषन्त ॥ २ ॥

अग्ने । इन्द्र । वरुण । मित्र । देवाः । शर्धः । प्र । यन्त । मारुत । उत । विष्णो इति । उभा । नासत्या । रुद्रः । अध । ग्नाः । पूषा । भगः । सरस्वती । जुषन्त ॥ २ ॥

हेअग्ने इन्द्रवरुणमित्रदेवाःयूयं शर्धोबलमस्माकं प्रयन्त प्रापयत अत्रसर्वत्रपूर्वस्याविद्यमानत्वेनोत्तरस्यपादादित्वादनिघातः प्रथमस्यतु स्वतएवपादादित्वं उतअपिच हेमारुत मारुतानि मरुतांबलानि हेविष्णो यूयंशर्धः प्रयन्त विष्णोइत्यस्यउतेत्यनेनव्यवधानान्निघातः किंच उभा उभौ नासत्या सत्यभूतौ रुद्रः अध अथ ग्नाः एतेषांदेवानांस्त्रियश्च पूषा भगः सरस्वतीच जुषन्त सेवन्तां अस्मदीयंयज्ञंस्तुतिंवा ॥ २ ॥

२. हे अग्नि, इन्द्र वरुण और मित्र आदि देवो, तुम सब हमें बल प्रदान करो। विष्णु और मरुत बल प्रदान करें। नासत्यद्वय, रुद्र, देव-पत्नियाँ, पूषा, भग और सरस्वती हम लोगों की पूजा से प्रसन्न हों।

इन्द्राग्नीमित्रावरुणादितिंस्वःपृथिवींद्यांमरुतःपर्वताँअपः ।
हुवेविष्णुंपूषणंब्रह्मणस्पतिंभगंनुशंसंसवितारमूतये ॥ ३ ॥

इन्द्राग्नी इति । मित्रावरुणा । अदितिम् । स्व१रिति स्वः । पृथिवीम् । द्याम् । मरुतः । पर्वतान् । अपः । हुवे । विष्णुम् । पूषणम् । ब्रह्मणः । पतिम् । भगम् । नु । शंसम् । सवितारम् । ऊतये ॥ ३ ॥

इन्द्रादिसवित्रन्तान्चतुर्दशदेवान् ऊतयेस्मद्रक्षणाय हुवे आह्वयामि स्तौमिवा स्वरित्यादित्यउच्यते स्वरणात् ॥ ३ ॥

३. हम रक्षा के लिए इन्द्र, अग्नि, मित्र, वरुण, अदिति, आदित्य, द्यावा-पृथिवी, मरुद्गण, पर्वत, जल, विष्णु, पूषा, ब्रह्मणस्पति और सविता का आह्वान करते हैं।

उतनोविष्णुरुतवातोंअस्रिधोंद्रविणोदाउतसोमोमयंस्करत् ।
उतऋभवंउतरायेनोंअश्विनोतत्वष्टोतविभ्वानुमंसते ॥ ४ ॥

उत । नः । । विष्णुः । उत । वातः । अस्रिधः । द्रविणःऽदाः । उत । सोमः । मयः । करत् । उत । ऋभवः । उत । राये । नः । अश्विना । उत । त्वष्टा । उत । विऽभ्वा । अनु । मंसते ॥ ४ ॥

उत अपिच नोस्माकं विष्णुर्व्यापकोदेवोमयस्करत् मयइतिसुखनाम सुखंकरोतु उतापि च वातोवायुः अस्रिधोहिंसकःसन् मयस्करत् किंच द्रविणोदाः धनस्यदातासोमोपि मयस्करत् उतापिच ऋभवोनोस्मभ्यं राये धनाय अनुमंसते अनुमन्यन्तां उताश्विनाश्विनौच उतत्वष्टादेवः उतविभ्वा ऋभूणामन्यतमोदेवः एतेसर्वेपि अनुमंसते यद्वा अनुमंस्तइतिप्रत्येकंसंबन्धनीयम् ॥४॥

४. विष्णु अथवा अहिंसाकारी वायु अथवा धनदाता सोम हम लोगों को सुख प्रदान करें। ऋभुगण, अश्विद्वय, त्वष्टा और विभु हम लोगों को ऐश्वर्य प्रदान करने के लिए अनुकूल हों।

उतत्यन्नोमारुतंशर्धआगमद्दिविक्षयंयजतंबर्हिरासदे ।
बृहस्पतिःशर्मपूषोतनोयमद्वरूथ्यं१वरुणोमित्रोअर्यमा ॥ ५ ॥

उत । त्यत् । नः । मारुतम् । शर्धः । आ । गमत् । दिविऽक्षयम् । यजतम् । बर्हिः । आऽसदे । बृहस्पतिः । शर्म । पूषा । उत । नः । यमत् । वरूथ्यम् । वरुणः । मित्रः । अर्यमा ॥ ५ ॥

उतापिच त्यत् तन्मारुतंशर्धोमरुतांबलं संघोनोस्मानागमदागच्छतु कीदृशंतच्छर्धः दिविक्षयं द्युलोकेवर्तमानं यजतं पूज्यं किमर्थमागमनमितितदुच्यते बर्हिः बर्हिष्यासदे उपवेष्टुं उपविश्यहविःस्वीकारायेत्यर्थः किंच बृहस्पतिर्देवः शर्म सुखं यमत् यच्छतु उतनोस्मभ्यं पूषापि यमत् कीदृशं शर्म वरूथ्यं वारयतिशीतवातादिकमितिवरूथंगृहं तदर्हंवरूथ्यं किंच वरुणादयस्त्रयोपिप्रत्येकंशर्मयच्छन्तु ॥ ५ ॥

५. पूजनीय तथा स्वर्गलोक में वर्त्तमान मरुद्गण कुश के ऊपर उपवेशन करने के लिए हम लोगों के निकट आगमन करें। बृहस्पति, पूषा, वरुण, मित्र और अर्यमा हम लोगों को सम्पूर्ण गृह-सम्बन्धी सुख प्रदान करें।

उतत्येनःपर्वतासःसुशस्तयःसुदीतयोनद्य१स्त्रामणेभुवन् ।
भगोविभक्ताशवसावसागमदुरुव्यचाअदितिःश्रोतुमेहवम् ॥ ६ ॥

उत । त्ये । नः । पर्वतासः । सुऽशस्तयः । सुऽदीतयः । नद्यः ।
त्रामणे । भुवन् । भगः । विऽभक्ता । शवसा । अवसा ।
आ । गमत् । उरुऽव्यचाः । अदितिः । श्रोतु । मे । हवम् ॥ ६ ॥

उतापिच त्ये ते पर्वतासः पर्ववन्तोद्रयः सुशस्तयः शोभनस्तुतयः किंच सुदीतयः सुदाना-नद्यश्च त्रामणे पालने नोस्माकं भुवनभवन्तु भगोदेवोविभक्ता धनानांविभागकर्ता दाता सन् शवसा अन्नेन अवसा रक्षणेनच सहागमदागच्छतु उरुव्यचाः प्रभूतव्याप्तिः अदितिः अदीना देवमाता मेहवं स्तुतिमाह्वानंवा श्रोतु शृणोतु ॥ ६ ॥

६. शोभन स्तुतिवाले पर्वत और दानशीला नदियाँ हम लोगों की रक्षा करें। धनदाता भगदेव अन्न और रक्षा के साथ आगमन करें। सर्वत्र व्याप्त होनेवाली देवमाता अदिति हमारे स्तोत्र या आह्वान को श्रवण करें।

पत्नीसंयाजेषुदेवपत्नीनांदेवानांपत्नीरित्यादिकेद्वेयाज्यानुवाक्ये सूत्रितंच—देवानांपत्नीरुशतीरवन्तुनइतिद्वेइति । आग्निमारुतशस्त्रेप्येतेदेवानांपत्नीरुशतीरवन्तुनइतिद्वेराकामहमितिद्वेइतितयोर्मध्येप्रथमा ।

देवानांपत्नीरुशतीरवन्तुनःप्रावन्तुनस्तुजयेवाजसातये ।
याःपार्थिवासोयाअपामपिव्रतेतानोदेवीःसुहवाःशर्मयच्छत ॥७॥

देवानाम् । पत्नीः । उशतीः । अवन्तु । नः । प्र । अवन्तु । नः ।
तुजये । वाजऽसातये । याः । पार्थिवासः । याः । अपाम् । अपि ।
व्रते । ताः । नः । देवीः । सुऽहवाः । शर्म । यच्छत ॥ ७ ॥

देवानांइन्द्रादीनां पत्नीः पत्न्यः उशतीः उशत्यः अस्मदीयांस्तुतिंकर्मवा कामयमानाः नोस्मानवन्तुरक्षन्तु तथा नोस्माकं तुजये बलवते पुत्राय वाजसातये अन्नलाभाय संग्रामाय वा प्रावन्तु प्रकर्षेणरक्षन्तु गच्छन्तुवा याः पार्थिवासः पृथिवीसंबन्धिन्यः याश्चापांउदकानां व्रतेकर्मण्यन्तरिक्षेवर्तन्ते ताहेदेवीर्देव्यः हेसुहवाः शोभनाह्वानाः यूयं नोस्मभ्यंशर्मयच्छत ॥७॥

७. इन्द्र आदि देवों की पत्नियाँ हम लोगों के स्तोत्र की कामना करके हम लोगों की रक्षा करें। वे हम लोगों की इस तरह से रक्षा करें, जिससे हम लोग बलवान् पुत्र तथा प्रभूत अन्न लाभ करें। देवियो, तुम

सब पृथिवी पर रहो या अन्तरिक्ष में उदकव्रत (कर्म) में निरत रहो; परन्तु हम लोग तुम्हारा सुन्दर आह्वान करते हैं। तुम सब हम लोगों को सुख प्रदान करो।

उतग्नाव्यन्तुदेवपत्नीरिन्द्राण्य१ग्नाय्यश्विनीराट्।
आरोदसीवरुणानीशृणोतुव्यन्तुदेवीर्यऋतुर्जनीनाम् ॥ ८ ॥२८॥

उत। ग्नाः। व्यन्तु। देवऽपत्नीः। इन्द्राणी। अग्नायी। अश्विनी। राट्। आ। रोदसी इति। वरुणानी। शृणोतु। व्यन्तु। देवीः। यः। ऋतुः। जनीनाम् ॥ ८ ॥ २८ ॥

उतअपिच ग्नाः स्त्रियोदेवपत्नीर्देवपत्न्यः देवाःपतयोयासांताः तादृश्योव्यन्तु हविर्भक्षयन्तु ताविविच्योच्यन्ते इन्द्रस्यपत्नी अग्नाय्यग्नेःपत्नी अश्विनी अश्विनोःपत्नी राट् राजमाना किंच रोदसी रुद्रस्यपत्नीतियास्केनोक्तं एवंसति विषितस्तुकारोदसीत्यत्र यथाआद्युदात्तप्रगृह्यतेनस्त-स्तद्वदत्रापिभाव्यं तथापि शाकल्येनमहर्षिणैवमुक्तत्वात्तथैवद्रष्टव्यं वरुणानी वरुणस्यपत्नी आस्मद्वैतः प्रत्येकंशृणोतु किंच देवीः पत्नीसंयाजदेव्योव्यन्तुखादन्तुहविः योजनीनां देवजायानां ऋतुः कालः तदभिमानादेव्योपि शृण्वन्तु व्यन्तुच अत्रापिच ग्नाव्यन्तुदेवपत्न्यइत्यादिनिरुक्तंद्रष्टव्यम् ॥ ८ ॥

८. देवियाँ, देवपत्नियाँ हव्य भक्षण करें। इन्द्राणी, अग्नायी, दीप्तिमती अश्विनी, रोदसी, वरुणानी आदि प्रत्येक हम लोगों की स्तुति को श्रवण करें। देवियाँ हव्य भक्षण करें। देवपत्नियों के मध्य में जो ऋतुओं की अधिष्ठात्री देवी हैं, वे स्तोत्र श्रवण करें और हव्य भक्षण करें।

॥ इतिचतुर्थस्यद्वितीयेष्टाविंशोवर्गः ॥ २८ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् ॥पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येचतुर्थाष्टकेद्वितीयोध्यायः॥२॥

---

१ नि० १२. ४६.।

## ॥ श्रीगणेशायनमः ॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् ॥ निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥

अथतृतीयोध्यायआरभ्यते तत्रप्रयुंजतीतिसप्तर्चंतृतीयंसूक्तं प्रतिरथस्यार्षंत्रैष्टुभं पूर्ववत्वैश्वदेवं वैतदित्युक्त्वादिदमपिवैश्वदेवं प्रयुंजतीसप्तप्रतिरथइत्यनुक्रमणिका । विनियोगोलैंगिकः ।

तत्रप्रथमा—

ॐम् प्रयुञ्जतीदिवएतिब्रुवाणामहीमातादुहितुर्बोधयन्ती ।
आविवासन्तीयुवतिर्मनीषापितृभ्यआसदनेजोहुवाना ॥ १ ॥

प्रऽयुञ्जती । दिवः । एति । ब्रुवाणा । मही । माता । दुहितुः ।
बोधयन्ती । आऽविवासन्ती । युवतिः । मनीषा । पितृऽभ्यः ।
आ । सदने । जोहुवाना ॥ १ ॥

एषोषस्या प्रयुंजती प्राणिनःप्रस्तुतेषुकर्मसु दिवोद्युलोकादेतिआगच्छति ब्रुवाणा स्तूयमाना कर्मणिकर्तृप्रत्ययः मही महती माता प्रकाशस्यदेवानांवानिर्मात्री दुहितुः भूम्याबोधयन्तीबोधंकुर्वाणा तदुपजीव्यत्वाद्दुहितृत्वमुपचर्यते यद्वा दुहितुर्दिवइतिसंबन्धः उषसोदिवोदुहितृत्वंव्युच्छादुहितर्दिवइत्यादिषुप्रसिद्धं । अन्यत्रच दिवोदुहिताभुवनस्यपत्नीत्युषसोदुहितृत्वमाम्नातं । अतइदमधिगम्यते कदाचिद्द्यौरुषसोजायते उषाश्चदिवइति प्रजापतिर्वैस्वांदुहितरमभ्यध्यायद्दिवमित्यन्यआहुरुषसमित्यन्यइतिहिश्रूयते । लिंगंचदृश्यते कार्यकारणभावव्यत्यये अदितेर्दक्षोजायतदक्षाद्वदितिरिति । किंच आविवासन्ती परिचरन्ती युवतिः मिश्रयन्ती सर्वत्रनित्यतरुणीवा मनीषा स्तुतिमती पितृभ्यः तृतीयार्थेपंचमी पितृभिः पालकैर्देवैःसह सदने यागगृहे आसर्वतोजोहुवाना हूयमाना यद्वा पितृभ्यःकर्मणांपालकेभ्योयजमानेभ्यः इष्टप्रापणेनपालकेभ्योवा तेषामर्थायजोहुवाना ॥ १ ॥

१. परिचर्याकारिणी, नित्य तरुणी, पूजनीया और पूजिता उषा आहूत होकर शक्तिमती जननी की तरह कन्या-स्वरूप पृथिवी का चैतन्य विधान करती हैं, मानवों के कार्य को प्रवर्तित करती हैं और द्युलोक से रक्षाकारी देवों के साथ यज्ञगृह में आगमन करती हैं।

अजिरासस्तदपईयमानाआतस्थिवाँसोअमृतस्यनाभिम् ।
अनन्तासउरवोविश्वतःसींपरिद्यावापृथिवीयन्तिपन्थाः ॥ २ ॥

अजिरासः । तत्ऽअपः । ईयमानाः । आतस्थिऽवांसः ।
अमृतस्य । नाभिम् । अनन्तासः । उरवः । विश्वतः । सीम् ।
परि । द्यावापृथिवी इति । यन्ति । पन्थाः ॥ २ ॥

अजिरासोगमनशीलाः अजिरिरच्प्रत्ययान्तोजिरशिशिरेत्यादिनानिपातितः तदपः तदेवप्रकाशनरूपंकर्मयस्यतत्ताद्दशमहरीयमानागच्छन्तः अमृतस्य सूर्यस्य नाभिं सन्नाहकं मंडलं अमृतस्योदकस्यवानाभिमन्तरिक्षं आतस्थिवांसः आतिष्ठन्तः अनन्तासःअपरिमिताः उरवोव्याप्ताः पन्थाः पतनशीलाः रश्मयोद्यावापृथिवी परिदिवंच पृथिवींचान्तरिक्षंच विश्वतः परितोयन्ति गच्छन्ति सीमितिपूरणः ॥ २ ॥

२. असीम और सर्वव्यापिनी रश्मियाँ प्रकाशनरूप अपने कर्त्तव्य का सम्पादन करके, अमर सूर्यमण्डल के साथ एकत्र उपवेशन करके द्यावा-पृथिवी और अन्तरिक्ष में परितः गमन करती हैं।

उक्षासमुद्रोअरुषःसुपर्णःपूर्वस्ययोनिंपितुराविवेश ।
मध्येदिवोनिहितःपृश्निरश्माविचक्रमेरजसस्पात्यन्तौ ॥ ३ ॥

उक्षा । समुद्रः । अरुषः । सुऽपर्णः । पूर्वस्य । योनिम् । पितुः ।
आ । विवेश । मध्ये । दिवः । निऽहितः । पृश्निः । अश्मा ।
वि । चक्रमे । रजसः । पाति । अन्तौ ॥ ३ ॥

सौर्योयंतृचः उक्षा उदकस्यकामानांवासेक्ता समुद्रः समुन्दनः यद्वा संमोदन्तेतस्मिन्देवाइतिसमुद्रः अरुषः आरोचमानः सुपर्णः सुगमनः पूर्वस्य पूर्वावयवलक्षणेयंपूर्वदिगवयवस्य पितुः पालकस्यान्तरिक्षस्य योनिमुत्पादकमवयवमाविवेश आविष्टवान् पश्चाद्दिवोमध्येनिहितः पृश्निः प्राश्नुत एनंवर्णइति पृश्निरादित्यः अश्मा सर्वत्रव्याप्तः लुप्तोपमावा अश्मसद्दशः रजसोन्तरिक्षस्यान्तौ पूर्वापरभागौ विचक्रमे विक्रमते पातिचजगत् जगद्रक्षार्थंक्रमतइत्यर्थः ॥ ३ ॥

३. उदक अथवा कामनाओं के सेचक, देवों के आनन्द-विधायक, दीप्तिमान् और द्रुतगामी रथ ने जनक-स्वरूप पूर्व दिशा में प्रवेश किया था। पश्चात् स्वर्ग के मध्य में निहित विभिन्नवर्ण और सर्वव्यापी सूर्य अन्तरिक्ष के उभय प्रान्त में अग्रसर हुए थे और जगत् की रक्षा की थी।

अथचतुर्थी—

चत्वारईबिभ्रतिक्षेमयन्तोदशगर्भंचरसेधापयन्ते ।
त्रिधातवःपरमाअस्यगावोदिवश्चरन्तिपरिसद्योअन्तान् ॥ ४ ॥

चत्वारः । ईम् । बिभ्रति । क्षेम॒ऽयन्तः । दर्श । गर्भम् । चरसे ।
धापयन्ते । त्रिऽधातवः । परमाः । अस्य । गावः । दिवः ।
चरन्ति । परि । सद्यः । अन्तान् ॥ ४ ॥

चत्वारऋत्विजः ईमेनमादित्यं क्षेमयन्त क्षेममात्मनइच्छन्तोबिभ्रतिधारयन्ति हविर्भिः स्तुतिभिश्च किंच दशदिशोगर्भं गर्भवन्मध्येउत्पन्नमेनं चरसेचरणाय उदयास्तमयव्यवहाराय धापयन्ते गमयन्ति त्रिधातवः त्रिप्रकाराःशीतोष्णवर्षभेदेनत्रिविधाः अस्यादित्यस्य परमाः उत्कृष्टागावोरश्मयोदिवोन्तरिक्षस्यान्तान् परि परितः सद्यः उदयानन्तरमेवचरन्तिगच्छन्ति ॥ ४ ॥

४. अपनी कल्याण-कामना करके चार ऋत्विक् सूर्य को हवि-द्वारा धारण करते हैं। दसों दिशायें निज गर्भजात आदित्य को दैनिक गति के लिए प्रेरित करती हैं। आदित्य की, शीत, ग्रीष्म और वर्षा के भेद से, त्रिविध रश्मियाँ अन्तरिक्ष की सीमा में द्रुतवेग से परिभ्रमण करती हैं।

इदंवपुर्निवचनंजनासश्चरन्तियन्नद्यस्तस्थुरापः ।
द्वेयदींबिभृतोमातुरन्येइहेहजातेयम्याऽसबन्धू ॥ ५ ॥

इदम् । वपुः । निःऽवचनम् । जनासः । चरन्ति । यत् । नद्यः ।
तस्थुः । आपः । द्वे इति । यत् । ईम् । बिभृतः । मातुः । अन्ये इति ।
इहऽइह । जाते इति । यम्या । सबन्धूइतिसऽबन्धू ॥ ५ ॥

जनासोहेजनाऋत्विजः इदंपुरतोदृश्यमानंवपुः शरीरमंडलं निवचनं स्तुत्यंभवतीतिशेषः यन्मंडलंउपजीव्य नद्यश्चरन्ति प्रवहन्ति आपश्च यन्मंडलमधितस्थुः मंडलाधीनत्वाच्चासां ईमेतदुक्तलक्षणं यन्मंडलं द्वे अहोरात्रे मातुर्निर्मातुः मातृस्थानीयादन्तरिक्षादन्ये इहेहजाते इहचेहचसूर्येजाते निष्पन्ने यम्या यम्ये नियमनीयेयुग्मभूतेवा सबन्धू समानबले समानबन्धने उभयोरप्येकएवसूर्योबन्धकोक्षोययोस्तादृश्यौबिभृतोधारयतः ॥ ५ ॥

५. हे ऋत्विको, यह पुरोभाग में दृश्यमान शरीर-मण्डल अतिशय स्तवनीय है। इसी मण्डल से नदियाँ प्रवाहित होती हैं। जलराशि इसमें अवस्थान करती है। अन्तरिक्ष से अन्य युग्मभूत समान बल अहोरात्र इसी से उत्पन्न हुए हैं। वे इसे धारण करते हैं।

वितन्वतेधियोअस्माअपांसिवस्त्रापुत्रायमातरोवयन्ति ।
उपप्रक्षेवृषणोमोदमानादिवस्पथावध्वोयन्त्यच्छ ॥ ६ ॥

वि । तन्वते । धियः । अस्मै । अपांसि । वस्त्रा । पुत्राय ।
मातरः । वयन्ति । उपऽप्रक्षे । वृषणः । मोदमानाः । दिवः ।
पथा । वध्वः । यन्ति । अच्छ ॥ ६ ॥

अस्मैसूर्याय धियः स्तुतीः अपांसि कर्माणिचवितन्वते विस्तारयन्ति यजमानाः पुत्राय पुत्रस्थानीयाय मातरोनिर्मात्र्यः उषसोदिशोवा वस्त्रा वस्त्राणि वयन्ति निष्पादयन्ति वस्त्रसदृशानितेजांसिनिबिडानिसंपादयन्तीत्यर्थः वृषणः सेक्तुःसूर्यस्य उपमक्षे उपपर्चनेसंपर्केसति मोदमानाहृष्यन्तोवध्वोवधूस्थानीयाःरश्मयोदिवस्पथा सूर्यसंबन्धिनामार्गेणाच्छास्मदभिमुखं यन्ति गच्छन्तिप्रसरन्ति ॥ ६ ॥

६. इसी सूर्य के लिए यजमान स्तोत्र और यज्ञ का विस्तार करते हैं। इसी पुत्रस्वरूप सूर्य के लिए मातायें (उषा या दिशायें) तेजोरूप वस्त्र बुनती हैं। वर्षणकारी सूर्य के सम्पर्क से हृष्ट होकर पत्नीस्वरूप रश्मियाँ आकाश-मार्ग होकर हम लोगों के निकट उपस्थित हों।

**तदस्तुमित्रावरुणातदग्नेशंयोरस्मभ्यमिदमस्तुशस्तम् ।**
**अशीमहिगाधमुतप्रतिष्ठांनमोदिवेबृहतेसादनाय ॥ ७॥ १ ॥**

**तत् । अस्तु । मित्रावरुणा । तत् । अग्ने । शम् । योः ।**
**अस्मभ्यम् । इदम् । अस्तु । शस्तम् । अशीमहि । गाधम् । उत ।**
**प्रतिऽस्थाम् । नमः । दिवे । बृहते । सदनाय ॥ ७॥ १ ॥**

अत्रलिंगसिद्धादेवताः हेमित्रावरुणा मित्रावरुणौ तव् इदंसूक्तंशस्तम् स्तुतमस्तु भवतु हेअग्ने तत्सूक्तंशस्तमस्तु अस्मभ्यं शं सुखाय योर्दुःखानाममिश्रणायेदं शस्तमस्तु वयंचाशीमहि प्राप्नुयाम गाधं स्थितिं उतापिच प्रतिष्ठां स्थितेरविच्छित्तिंचाशीमहि नमोनमस्करोमि दिवे द्योतमानाय सूर्याय बृहते महते सादनायाश्रयायविश्वस्य ॥ ७ ॥

७. हे मित्र और वरुण, इस स्तोत्र को ग्रहण करो। हे अग्नि, हम लोगों के मिश्र (विशुद्ध) सुख के लिए इस स्तोत्र को ग्रहण करो। हम लोग स्थिति और प्रतिष्ठा लाभ करें। हम दीप्तिमान्, शक्तिमान् और सबके आश्रयभूत सूर्य को नमस्कार करते हैं।

कदुप्रियायेतिपंचर्चंचतुर्थंसूक्तं प्रतिभानुर्नामात्रेयऋषिः जगतीछन्दः विश्वेदेवादेवताः अत्रानुक्रमणिका—कदुपंचप्रतिभानुर्जागतमिति। आभिप्लविकेपंचमेहनिवैश्वदेवशस्त्रेइदंसूक्तंनिविद्धानं सूत्रितंच—कदुप्रियायेतिवैश्वदेवमिति ।

**कदुप्रियायधाम्नेमनामहेस्वक्षत्रायस्वयशसेमहेवयम् ।**
**आमेन्यस्यरजसोयदभ्रआँअपोवृणानावितनोतिमायिनी ॥१॥**

**कत् । ऊँ इति । प्रियाय । धाम्ने । मनामहे । स्वऽक्षत्राय ।**
**स्वऽयशसे । महे । वयम् । आऽमेन्यस्य । रजसः । यत् । अभ्रे ।**
**आ । अपः । वृणाना । विऽतनोति । मायिनी ॥ १ ॥**

अत्रवैद्युताग्निसंस्तवः कदु कदा उइतिपूरणः प्रियाय सर्वेषांप्रियभूताय वृष्टिद्वारा हविरादिप्रयोजकत्वात्सर्वप्रियत्वमस्यप्रसिद्धं तादृशाय धाम्ने तेजसे वैद्युताय उत्तरवाक्ये अग्नेरपोवितनोतीतिवक्ष्यमाणत्वादिदंलक्ष्यते कीदृशाय स्वक्षत्राय स्वभूतबलाय किंच स्वयशसे स्वभूतान्नाय सर्वमप्यन्नंह्यस्यस्वं महे महते पूज्याय वयं कदा मनामहे स्तवाम यद् उत्तरत्रस्त्रीलिंगनिर्देशाद् येतिविपरिणामयितव्यम् या आग्नेयीशक्तिः आमेन्यस्य समन्तान्मातव्यस्य रजसोन्तरिक्षस्य अपरिमितमपिनभइयदितिसर्वैर्मीयते संबन्धिनि अग्ने मेघे आअधि मेघस्योपरि अपउदकानि वृष्टिलक्षणानि वितनोति विस्तारयति वृणाना आच्छादयन्तीसेव्यमानावा मायिनी मायेतिप्रज्ञानाम प्रज्ञावतीसती यद् यस्यसंबन्धिनीमाध्यमिकीवागितिवायोज्यम् ॥ १ ॥

१. सबके प्रिय और पूजनीय उस वैद्युत तेज की कब हम पूजा करेंगे? जो स्वाधीन बल है और जिसके सब अन्न अपने हैं। जब आच्छादनकारिणी या सेव्यमाना आग्नेय शक्ति प्रज्ञावती होकर परिमेय अन्तरिक्ष में मेघ के ऊपर वृष्टिजल को विस्तारित करती है।

**ताअ॑त्नतव॒युनं॒वी॒रव॑क्षणंसमा॒न्याव्रु॒तयाविश्व॒मारजः॑ ।**
**अपो॒अपा॑ची॒रप॑रा॒अपे॑जते॒प्रपूर्वा॑भिस्तिरतेदे॒वयुर्जनः॑ ॥ २ ॥**

**ताः । अ॒त्न॒त । व॒युन॑म् । वी॒रऽव॑क्षणम् । स॒मा॒न्या । व्रु॒तया॑ ।**
**विश्व॑म् । आ । रजः॑ । अपो॒ इति॑ । अपा॑चीः । अप॑राः ।**
**अप॑ । ई॒ज॒ते । प्र । पूर्वा॑भिः । ति॒र॒ते । दे॒व॒ऽयुः । जनः॑ ॥ २ ॥**

इयमुषस्या ताउषसः अत्नत वितन्वन्ति किं वयुनं प्रज्ञानं कीदृशं वीरवक्षणं वीरैर्ऋत्विग्भिर्वहनीयं यद्वा वक्षणाः कार्यवोढारोयेनप्रेर्यन्तेतत्तादृशं किंच समान्या एकरूपया वृतया आवरकयादीप्त्या विश्वमासर्वमपिरजःजगदत्नत एवंसति देवयुः देवकामोजनः अपाचीः अपांचनाः प्रतिनिवृत्तमुखीः अपरा अन्याआगामिनीरुषसःअपोएजते अपचालयति अपरोपशब्दःपूरणः सर्वाभिस्ताभिःप्रतिरते प्रपूर्वस्तिरतिर्वर्धनार्थः वर्धयतिस्वमनीषां वर्धतेवास्वयम् ॥ २ ॥

२. ऋत्विकों-द्वारा प्राप्त करने योग्य ज्ञान को ये उषायें विस्तारित करती हैं क्या? एक प्रकार की आवरक दीप्ति-द्वारा सम्पूर्ण जगत् को व्याप्त करती हैं। देवाभिलाषी लोग निवृत्त (व्यतीत) और आगामिनी उषाओं को त्यागकर वर्तमान उषा के द्वारा अपनी बुद्धि को वर्द्धित करते हैं।

**आग्रावभिरह॒न्येभिर॒क्तुभि॒र्वरि॑ष्ठं॒वज्र॒माजि॑घर्तिमा॒यिनि॑ ।**
**श॒तंवा॒यस्य॑प्र॒चर॒न्स्वेदमे॑सं॒वर्तय॑न्तो॒विचवर्तय॒न्नहा॑ ॥ ३ ॥**

आ। ग्रावंऽभिः। अहन्येभिः। अक्तुऽभिः। वरिष्ठम्। वज्रंम्।
आ। जिघर्ति। मायिनि। शतम्। वा। यस्यं। प्रऽचरंन्। स्वे।
दमें। सम्ऽवर्तयन्तः। वि। च। वर्तयन्। अहां॥ ३॥

अत्रपूर्वार्धेइन्द्रउच्यते उत्तरार्धेइन्द्रात्मासूर्यः आहूयतइतिशेषः कैः अहन्येभिः अहनि संपादितैः अक्तुभीरात्रिभिः तत्रनिष्पन्नैरित्यर्थः तथाविधैर्ग्रावभिः साध्ये साधनशब्दः ग्रावसाध्यैरभिषवैर्निमित्तभूतैः आगत्यात्र सोमीसन् मायिनि वृत्रेनिमित्तेसति वरिष्ठमुरुतरंवज्रं आसर्वतोजिघर्ति चालयतिदीपयतिवा किंच वाशब्दश्चार्थे यस्येन्द्रात्मकस्यादित्यस्य शतं शतसंख्याकारश्मयः स्वेदमे स्वकीयेगृहे आकाशे प्रचरन् प्रचरन्ति किंकुर्वन्तः प्राणिनोनाशयन्तः यद्वा अहा अहानिदिवसान्संवर्तयन्तः सम्यक्प्रवर्तयन्तःविचवर्तयन् अहानिनिवर्तयन्तिगतान्येवपुनःप्रापयन्तिच तपपरिस्पंदाधीनत्वात्प्राणिनामायःक्षयस्याहोरात्रादिव्यवहारस्यच॥ ३॥

३. अहोरात्र में निष्पन्न सोम-द्वारा हृष्ट होकर इन्द्र मायावी वृत्र के लिए दीर्घ वज्र को दीप्त करते हैं। इन्द्रात्मक आदित्य की शतसंख्यक रश्मियाँ दिवसों को भली भाँति से निर्वातित और प्रवर्तित करके अपने गृह आकाश में विचरण करती हैं।

तामस्यरीतिंपरशोरिवप्रत्यनीकमख्यंभुजेअस्यवर्पसः।
सचायदिपितुमन्तमिवक्षयंरत्नंदधातिभरहूतयेविशे॥ ४॥

ताम्। अस्य। रीतिम्। परशोःऽइव। प्रति। अनीकम्।
अख्यम्। भुजे। अस्य। वर्पसः। सचा। यदि। पितुमन्तम्ऽइव।
क्षयम्। रत्नम्। दधाति। भरंऽहूतये। विशे॥ ४

इयमाग्नेयी तां प्रसिद्धामस्याग्नेःरीतिंस्वभावगतिंवा परशोरिवप्रतिपरशोः प्रतिनिधिमिव पश्यामि परशुर्यथास्वस्वामिन्यभिमतंसाधयतितद्वदित्यर्थः अस्य वर्पसोरूपवतोस्यादित्यस्यानीकंरश्मिसमूहं भुजे भोगाय अख्यं कथयाम्यहं यदि यस्मात् सचदेवः सचात्मत्सहायः सन् पितुमंतं अन्नवन्तं क्षयमिव निवासमिव भरहूतये संग्रामेयज्ञेवा आह्वानयुक्ताय विशे यजमानाय रत्नं रमणीयंधनं दधाति धारयति उभयमपिददातीत्यर्थः॥ ४॥

४. परशु की तरह अग्नि की उस स्वाभाविक जाति को हम देखते हैं। रूपवान् आदित्य के रश्मिसमूह का कीर्त्तन हम भोग के लिए करते हैं। वह देव (आदित्य) सहायक होकर यज्ञस्थल में आह्वानकारी यजमान को अन्नपूर्ण गृह तथा रत्न प्रदान करते हैं।

सजिह्वयाचतुरनीकऋञ्जतेचारुवसानोवरुणोयतन्नरिम्।
ननस्यंविद्मपुरुषत्वतावयंयतोभगःसविताददातिवार्यम्॥ ५॥२॥

सः । जिह्वया । चतुःऽअनीकः । ऋञ्जते । चारु । वसानः । वरुणः । यतन् । अरिम् । न । तस्य । विद्म । पुरुषत्वता । वयम् । यतः । भगः । सविता । दाति । वार्यम् ॥ ५ ॥ २ ॥

सोग्निश्चतुरनीकः चतुर्दिक्षुप्रसृतज्वालःसन् जिह्वया ऋंजते गच्छति घृतादिकं यद्वा जिह्वयाचतुरनीकःसन् ऋंजते अलंकरोतिस्वात्मानं किंकुर्वन् चारु चरणीयं तेजोवसानआच्छादयन् वरुणस्तमोवारकःसन् अरिममित्रं यतन् उद्धरन् तस्यतमित्यर्थः तंनविद्म नजानीमः वयं पुरुषत्वता पुरुषत्वेन कामानांपूरकत्वेनवायुक्तं अपरोभावप्रत्ययःपूरणः यतोयं भगोमहान्भजनीयः सविता प्रेरकोदेवोदाति यच्छति वार्यं वरणीयंधनं ॥ ५ ॥

५. रमणीय तेज से आच्छादित होकर अग्नि अन्धकार और शत्रुओं को विनष्ट करते हैं तथा चारों तरफ़ ज्वाला को विस्तारित करके जिह्वा-द्वारा घृतादि को प्राप्त करते हैं। पुरुषत्व-द्वारा कामनाओं के पूरक अग्नि को हम नहीं जानते हैं; क्योंकि ये महान् भजनीय सविता देव वरणीय धन प्रदान करते हैं।

देवंवइतिपंचर्चंपंचमंसूक्तं आत्रेयस्यप्रतिप्रभस्यार्षं त्रैष्टुभं वैश्वदेवम् देवंवःप्रतिप्रभोत्या-वृणपाणिरित्यनुक्रमणिका । विनियोगोलैंगिकः ।

देवंवोअद्यसंवितारमेषेभगंचरत्नंविभजन्तमायोः ।
आवांनरापुरुभुजावव्रत्यांदिवेदिवेचिदश्विनासखीयन् ॥ १ ॥

देवम् । वः । अद्य । सवितारम् । आ । ईषे । भगम् । च । रत्नम् । विऽभजन्तम् । आयोः । आ । वाम् । नरा । पुरुऽभुजा । ववृत्याम् । दिवेऽदिवे । चित् । अश्विना । सखिऽयन् ॥ १ ॥

देवं द्योतमानं सवितारं सर्वस्याभ्यनुज्ञातारं वः त्वामित्यर्थः यद्वा होतुरिदंवाक्यं वोयज-मानेभ्योयुष्मभ्यमर्थाय अद्य इदानीं आईषेउपगच्छामि भगंच भजनीयंदेवं आयोर्मनुष्यस्य यजमानस्य रत्नं रमणीयं हविर्विभजन्तम् भगोवांविभजतीतिहिभगस्यविभजनंप्रसिद्धं रा-योविभक्तासंभरश्चवस्वः । भगोविभक्ताशवसेतिचश्रुतिः । यद्वा चतुर्थ्यर्थेषष्ठी यजमानार्थं रत्नं रमणीयंधनं विभजन्तं हेनरा नेतारौ हेपुरुभुजा पुरुभुंजातेइतिपुरुभुजौ अश्विना अश्विनौ वां युवां दिवेदिवे प्रतिदिनं आववृत्यां आवर्तयामिअस्मदभिमुखं सखीयन् युवयोःसखित्व-मिच्छन् चिदितिपूरणः ॥ १ ॥

१. अभी हम तुम यजमानों के लिए सविता और भगदेव के समीप उपस्थित होते हैं। वे मनुष्य यजमानों को धन प्रदान करते हैं। हे नेतृस्वरूप बहुभोगकर्त्ता अश्विद्वय, तुम दोनों से मैत्री की कामना करके हम प्रतिदिन तुम दोनों की उपस्थिति प्रार्थना करते हैं।

प्रतिप्रयाणमसुरस्यविद्वान्त्सूक्तैर्देवंसवितारंदुवस्य ।
उपब्रुवीतनमसाविजानञ्ज्येष्ठंचरत्नंविभजन्तमायोः ॥ २ ॥

प्रति । प्रऽयानम् । असुरस्य । विद्वान् । सुऽउक्तैः । देवम् ।
सवितारम् । दुवस्य । उप । ब्रुवीत । नमसा । विऽजानन् ।
ज्येष्ठम् । च । रत्नम् । विऽभजन्तम् । आयोः ॥ २ ॥

असुरस्य शत्रूणांनिरसितुः सवितुः प्रतिप्रयाणं प्रत्यागतिं विद्वान् जानन् सूक्तैः सवितारंदेवं दुवस्य परिचर हेअन्तरात्मन् किंच आयोर्मनुष्याय ज्येष्ठं रत्नंधनंच विभजंतं ददतमित्यर्थः नमसा नमस्कारेण हविषावा विजानन् विशेषेणभावयन्नित्यर्थः यद्वान्तर्णीतण्यर्थोयं ज्ञापयन् उपब्रुवीत स्तौतुभवान् ॥ २ ॥

२. हे अन्तरात्मा, शत्रुओं के निवारक सविता का प्रत्यागमन जानकर सूक्तों-द्वारा उनकी परिचर्या करो। वे मनुष्यों को श्रेष्ठ धन दान करते हैं। नमस्कार अथवा हविर्विशेष से उनका स्तवन करो।

अदत्रयादयतेवार्याणिपूषाभगोअदितिर्वस्तउस्रः ।
इन्द्रोविष्णुर्वरुणोमित्रोअग्निरहानिभद्राजनयन्तदस्माः ॥ ३ ॥

अदत्रऽया । दयते । वार्याणि । पूषा । भगः । अदितिः ।
वस्ते । उस्रः । इन्द्रः । विष्णुः । वरुणः । मित्रः । अग्निः ।
अहानि । भद्रा । जनयन्त । दस्माः ॥ ३ ॥

अयमग्निरदत्रया अदनीयानि अदेरौणादिकोऽत्रप्रत्ययः सुपांसुलुगितियाजादेशः अथवा अत्तीत्यदत्राजिह्वातयावार्याणि वरणीयानि काष्ठानि दयते दयतिरनेककर्मा अत्रदहने वर्तते दहतीत्यर्थः सामर्थ्यादग्निरितिगम्यते यद्वा अदनीयानि वरणीयानि अन्नानि दयते ददातियजमानाय दयदानगतिहिंसादानेषु कीदृशोग्निः पूषा पोषकः भगोभजनीयः अदितिरखंडनीयः यद्वा पूषादयस्त्रयोपिप्रत्येकं अदनीयानि वार्याणिचान्नानिदयते उस्रःसूर्योवस्तेआच्छादयति सामर्थ्यात्तेजांसि इन्द्रादयःपंचापिदेवाः दस्माः दर्शनीयाः अहानि सर्वाण्यागन्तूणि भद्रा शोभनीयानि जनयन्त जनयन्ति दिवसानां यागदानादिविशिष्टत्वमेवभद्रत्वम् ॥ ३ ॥

३. पोषक, भजनीय तथा अखण्डनीय अग्नि जिह्वा-द्वारा वरणीय काष्ठ को वहन करते हैं अथवा वरणीय अन्न यजमान को प्रदान करते हैं। सूर्य तेज को आच्छादित करते हैं। इन्द्र, विष्णु, वरुण, मित्र और अग्नि आदि दर्शनीय देव शोभन (याग-दानादिविशिष्ट) दिवस को उत्पन्न करते हैं।

तन्नोअनर्वासवितावरूथंतत्सिन्धवइषयन्तोअनुग्मन् ।
उपयद्वोचेअध्वरस्यहोताराय:स्यामपतयोवाजरत्नाः ॥ ४ ॥

तत् । नः । अनर्वा । सविता । वरूथम् । तत् । सिन्धवः ।
इषयन्तः । अनु । ग्मन् । उप । यत् । वोचे । अध्वरस्य ।
होता । रायः । स्याम । पतयः । वाजऽरत्नाः ॥ ४ ॥

तत्प्रसिद्धं वरूथं वरणीयमस्मदभिमतंधनं नोस्मभ्यं अनर्वा अमत्यृतः केनाप्यतिरस्कृतः सवितादेवः प्रयच्छत्वितिशेषः तद्धनं सिन्धवः स्यन्दनशीलाइषयन्तोगच्छन्त्योनद्यः अनु अनुसृत्य ग्मन् गच्छन्तु धनंदातुंगच्छन्त्वित्यर्थः यद्यस्मात् अध्वरस्य यागस्य होता होमनिष्पादकोहं उपवोचे उपेत्य ब्रवीमि तस्मात्तत्प्रयच्छन्त्वितिशेषः वयंचान्नयोरायोधनस्य बहुविधस्य पतयः स्वामिनः स्याम भवेम वाजरत्नाः अन्नेनबलेनवारमणीयाः अथवा यद्यस्माद्वोचेस्तौमि तस्मात्सविता नोवरूथमागच्छतु तस्मान्नद्यश्चनोवरूथं यज्ञमनुग्मन् अनुगच्छंत्विति वायोज्यम् ॥ ४ ॥

४. किसी के द्वारा भी अतिरस्कृत सविता देव हम लोगों को अभिमत धन प्रदान करें। उस धन को देने के लिए स्पन्दनशील नदियाँ गमन करें। इसी लिए हम यज्ञ के होता स्तोत्र-पाठ करते हैं। हम बहुविध धन के स्वामी हों, अन्न और बल से रमणीय हों।

प्रयेवसुभ्यईवदानमोदुर्येमित्रेवरुणेसूक्तवाचः ।
अवैत्वभ्वंकृणुतावरीयोदिवस्पृथिव्योरवसामदेम ॥ ५ ॥ ३ ॥

प्र । ये । वसुऽभ्यः । ईवत् । आ । नमः । दुः । ये । मित्रे ।
वरुणे । सूक्तऽवाचः । अव । एतु । अभ्वम् । कृणुत । वरीयः ।
दिवःपृथिव्योः । अवसा । मदेम ॥ ५ ॥ ३ ॥

येयंजमानाः वसुभ्योयज्ञनिवासेभ्योदेवेभ्यः ईवत् गमनवत् नमोन्नंप्रश्वात्मकं प्रदुः प्रादुः येचमित्रेदेवेवरुणेच सूक्तवाचः सूक्तवचसोभवन्ति तानस्मानभ्वं महद्धनं तेजोवा अवैतु अवगच्छतु हेदेवाः कृणुत कुरुतच एतेभ्योवरीयउरुतरं सुखं दिवस्पृथिव्यो-र्द्यावापृथिव्योरवसारक्षणेन मदेम हृष्येम ॥ ५ ॥

५. जिन यजमानों ने वसुओं को (यज्ञ में निवास करनेवाले देवों को) गमनशील अन्न दिया है और जिन्होंने मित्र तथा वरुण के लिए स्तोत्र-पाठ किया है, उन्हें महान् तेज प्राप्त हो। हे देवो, उन्हें दीर्घतर सुख प्रदान करो। हम द्यावा-पृथिवी की रक्षा प्राप्त कर हृष्ट हों।

विश्वोदेवस्येतिपंचर्चंषष्ठंसूक्तं स्वस्त्यात्रेयमुनेरार्षंवैश्वदेवं पंचमीपंक्तिः आद्याश्चतस्रोनुष्टुभः तदुक्तमनुक्रमण्यां—विश्वःस्वस्त्यात्रेयःपंक्त्यन्तमिति । पृष्ठ्याभिप्लवषडहयोःप्रथमेहनि वैश्वदेवशस्त्रे विश्वोदेवस्येतिप्रतिपत्तृचस्याद्यः सूत्रितंच—विश्वोदेवस्यनेतुरित्येकेति । आभिप्लविकेषुद्वितीयचतुर्थषष्ठेष्वहःसुएषैववैश्वदेवस्यशस्त्रस्यप्रतिपद्युग्मेष्वेवमभिप्लवइतिसूत्रितत्वात् ।

तत्रप्रथमा—

विश्वो॑दे॒वस्य॑ने॒तुर्मर्तो॑वुरीतस॒ख्यम् ।
विश्वो॑रा॒यइ॑षुध्यतिद्यु॒म्नंवृ॑णीतपु॒ष्यसे॑ ॥ १ ॥

विश्वः॑ । दे॒वस्य॑ । ने॒तुः । मर्तः॑ । वु॒री॒त । स॒ख्यम् । विश्वः॑ ।
रा॒ये । इ॒षु॒ध्य॒ति॒ । द्यु॒म्नम् । वृ॒णी॒त॒ । पु॒ष्यसे॑ ॥ १ ॥

विश्वः सर्वोमर्तोनेतुः देवस्यसवितुरित्यर्थः तस्यसख्यं वुरीत वृणीत विश्वोजनो रायेधनस्य इषुध्यति पंचमलकारः ईशीत तस्यानुग्रहात् सर्वोजनोद्युम्नंधनं वृणीत सवितारं पुष्यसे पुष्ट्यै पर्याप्तंधनम् ॥ १ ॥

१. सम्पूर्ण मनुष्य सविता देव से सखित्ता की प्रार्थना करते हैं। सम्पूर्ण मनुष्य उनसे धन चाहते हैं। उनके अनुग्रह से सब लोग, पुष्टि के लिए, पर्याप्त धन प्राप्त करते हैं।

तेते॑देवनेत॒र्येचे॒माँअ॑नु॒शसे॑ । तेरा॒यातेह्या॒३॑पृचे॒सचे॑महिसच॒थ्यैः॑ ॥२॥

ते । ते॒ । दे॒व॒ । ने॒तः॒ । ये । च॒ । इ॒मान् । अ॒नु॒ऽशसे॑ । ते ।
रा॒या । ते । हि । आ॒ऽपृचे॑ । सचे॑महि । स॒च॒थ्यैः॑ ॥ २ ॥

हेनेतर्देव ते तव स्वभूतास्तेवयंयजमानाः येचान्ये इमान् विभक्तिव्यत्ययः इमे होत्रादयः अनुशसे शंसितुंप्रभवन्ति तेपित्वदीयाः यद्वा इमानन्यानिन्द्रादीननुशसे क्रमेणशंसितुंप्रभवन्ति एकैववामहानात्मादेववासस्सूर्यः सहिसर्वभूतात्मेत्युक्तत्वादितरासांदेवतानां तदन्तर्भावादितिभावः नकेवलं त्वच्छंसकाएवेत्यर्थः ते उभे वयं रायाधनेन सचेमहीतिसंबन्धः तेहि तेखलु आपृचे आपर्चनीयाः कृत्यार्थेकेन्प्रत्ययः कृन्मेजन्तइत्यव्ययत्वाद्विभक्तेरदर्शनं सचथ्यैः सर्वैःकामैः सचेमहि संगच्छेमहि ॥ २ ॥

२. हे नेता, हे देव, तुम्हारे उपासक हम यजमान तथा इन्द्रादि के उपासक होता प्रभृति तुम्हारे ही हैं। हम और वे दोनों ही धनयुक्त हों। हम लोगों की कामना सिद्ध हो।

अथतृतीया—

अतोनआनॄनतिथीनतःपत्नीर्दशस्यत ।
आरेविश्वंपथेष्ठांद्विषोयुयोतुयूयुविः ॥ ३ ॥

अतः । नः । आ । नॄन् । अतिथीन् । अतः । पत्नीः । दशस्यत ।
आरे । विश्वम् । पथेऽस्थाम् । द्विषः । युयोतु । युयुविः ॥ ३ ॥

अतः अस्मिन्यज्ञेसार्वविभक्तिकस्तसिः नोस्माकमृत्विजां नॄन् नेतॄन् अतिथीन् त-द्वत्पूज्यान्देवान् आदशस्यत सर्वतःपरिचरत अतोस्मिन्यज्ञे पत्नीर्देवानांपत्नीरपि आदश-स्यतहविःप्रदानादिना यद्वा नोस्मभ्यं नॄन् पुत्रभृत्यादीन् अतिथीन्पत्नीश्च एतत्त्रयमत्रदशस्यत हेदेवाः प्रयच्छत आरे दूरे विश्वं सर्वं पथेष्ठां मार्गेवर्तमानं वैरिणं द्विषः अन्यानपि द्विषोद्वेष्टॄन् युयोतु पृथक्करोतुदेवसंघःसवितावा युयुविः सर्वस्यामिश्रयिता पृथक्कर्ता ॥ ३ ॥

३. इसलिए इस यज्ञ में हम ऋत्विजों के, अतिथि की तरह, पूज्य देवों की परिचर्या करो। इसलिए इस यज्ञ में हविः प्रदान करके देव-पत्नियों की परिचर्या करो। हे देवो, पृथक्कर्त्ता देवसमूह या सविता दूर मार्ग में वर्तमान समस्त वैरियों को या अन्य शत्रुओं को दूर करें।

यत्रवह्निरभिहितोदुद्रवद्द्रोण्यःपशुः ।
नृमणावीरपस्त्योर्णाधीरेवसनिता ॥ ४ ॥

यत्र । वह्निः । अभिऽहितः । दुद्रवत् । द्रोण्यः । पशुः । नृऽमनाः ।
वीरऽपस्त्यः । अर्णा । धीराऽइव । सनिता ॥ ४ ॥

यत्र यस्मिन्यज्ञे वह्निर्यज्ञस्यवोढा अभिहितोयूयंमापितोद्रोण्योयूपार्हःपशुः दुद्र-वत् गच्छतियूपंप्रति तत्र नृमणाः यजमानमनाः सविता वीरपस्त्यः वीराऋत्विग्यज-मानाःपुत्रभृत्यादयोवा तद्वत्पस्त्यंगृहंयस्यसताद्दशः प्रेरितगृहोवा पुत्राद्युपेतगृहप्रदइत्यर्थः सनिता संभक्ताभवति अर्णा अरणकुशलाधीरेव योषिदिव यद्वार्णांनि हवींषि अभिल-क्ष्यसनिताभवति ॥ ४ ॥

४. जिस यज्ञ में यज्ञ को वहन करनेवाला, यूपयोग्य पशु यूप के निकट उपस्थित होता है, उस यज्ञ में सविता यजमान को कुशल तथा धीर स्त्री की तरह गृह, पुत्र, भृत्यादि और धन प्रदान करते हैं।

एषतेदेवनेतारथस्पतिःशंरयिः ।
शंरायेशंस्वस्तयइषःस्तुतोमनामहेदेवस्तुतोमनामहे ॥ ५ ॥ ४ ॥

एषः । ते । देव । नेतरिति । रथःपतिः । शम् । रयिः । शम् ।
राये । शम् । स्वस्तये । इषःऽस्तुतः । मनामहे । देवऽस्तुतः ।
मनामहे ॥ ५ ॥ ४ ॥

हेनेतर्देव सवितः ते तव एषरथः पतिः सर्वस्यपालकः रयिः दातव्यधनवान् मत्वर्थोलुप्यते शंकरोत्वितिशेषः वयंच रायेधनस्य शं सुखाय यद्वा रायेधनाय शंसुखायच स्वस्तये अविनाशाय इषस्तुतः एषणीयस्यसवितुः स्तोतारोवयं मनामहे स्तुमः देवस्तुतः देवानां देवस्यवा सवितुःस्तोतारोमनामहे स्तुमः ॥ ५ ॥

५. हे नेता, हे सविता देव, तुम्हारा यह धनवान् और सबको पालन करनेवाला रथ हम लोगों का कल्याण करे। हम सब स्तुतियोग्य सविता के स्तोता हैं। हम धन के लिए, सुख के लिए तथा अविनष्ट होने के लिए उनकी स्तुति करते हैं एवम् हम सविता देव के स्तोता उनकी स्तुति करते हैं।

॥ इतिचतुर्थस्यतृतीयेचतुर्थोवर्गः ॥ ४ ॥

अग्नेसुतस्येतिपंचदशर्चंसप्तमंसूक्तं अत्रेयमनुक्रमणिका—अग्नेपंचोनाचतस्रोगायत्र्यःषळुष्णिहस्तिस्रोजगत्यस्त्रिष्टुभोवान्त्येअनुष्टुभाविति । ऋषिश्चान्यस्मादितिपरिभाषयास्वस्त्यात्रेयऋषिः आदितश्चतस्रोगायत्र्यः पंचम्याद्याःषळुष्णिहः एकादश्याद्यास्तिस्रोजगत्यस्त्रिष्टुभोवा चतुर्दशीपंचदश्यावनुष्टुभौविश्वेदेवादेवता ।

तत्रप्रथमा—

अग्नेसुतस्यपीतयेविश्वैरूमेभिरागहि । देवेभिर्हव्यदातये ॥ १ ॥

अग्ने । सुतस्य । पीतये । विश्वैः । ऊमेभिः । आ । गहि ।
देवेभिः । हव्यऽदातये ॥ १ ॥

हेअग्ने त्वं सुतस्यपीतये सोमपानाय विश्वैरूमेभिः ऊमैः सर्वैरपिरक्षकैः देवेभिःर्देवैरिन्द्रादिभिःसह हव्यदातये अस्माकंहविर्दानाय तद्दात्रेयजमानायवा आगहि आगच्छ ॥१॥

१. हे अग्नि, तुम सोमपान के लिए इन्द्र आदि सम्पूर्ण रक्षक देवों के साथ हव्य देनेवाले हम यजमानों के समीप आओ।

ऋतधीतयआगतसत्यधर्माणोअध्वरम् । अग्नेःपिबतजिह्वया ॥ २ ॥

ऋतऽधीतयः । आ । गत । सत्यऽधर्माणः । अध्वरम् । अग्नेः ।
पिबत । जिह्वया ॥ २ ॥

हेऋतधीतयः सत्यस्तुतयः अबाध्यकर्मणोवादेवाः अध्वरमस्मद्यज्ञं आगत आगच्छत आगत्यच हेसत्यधर्माणः सत्यस्यधारयितारोयूयं अग्नेर्जिह्वया पिबत आज्यसोमादिकम्॥२॥

२. हे सत्यस्तुतिवाले अथवा अबाध्य कर्म करनेवाले देवो, हे सत्य को धारण करनेवालो, तुम सब हमारे यज्ञ में आगमन करो और अग्नि की जिह्वा-द्वारा आज्य अथवा सोमरस आदि का पान करो।

**विप्रेभिर्विप्रसन्त्यप्रातर्यावभिरागहि। देवेभिःसोमपीतये ॥ ३ ॥**

**विप्रेभिः। विप्र। सन्त्य। प्रातर्यावऽभिः। आ। गहि। देवेभिः। सोमऽपीतये ॥ ३ ॥**

हेविप्र मेधाविन् विविधकामानांवापूरक हेसन्त्य संभजनीयाग्ने विप्रेभिःउक्तलक्षणैः प्रातर्यावभिः प्रातःकालेआगन्तृभिः देवेभिःदेवैःसार्धं आगह्यागच्छ किमर्थं सोमपीतये सोमपानाय ॥ ३ ॥

३. हे मेधाविन् अथवा विविध कामनाओं के पूरक सम्भजनीय अग्नि, प्रातःकाल में आनेवाले मेधावी देवों के साथ तुम सोमपान के लिए आगमन करो।

**अयंसोमश्चमूसुतोमत्रेपरिषिच्यते। प्रियइन्द्रायवायवे ॥ ४ ॥**

**अयम्। सोमः। चमू इति। सुतः। अमत्रे। परि। सिच्यते। प्रियः। इन्द्राय। वायवे ॥ ४ ॥**

अयंपुरतोवर्तमानःसोमः चमू चम्वोः अत्र्योः अभिषवणफलकयोः सुतः अभिषुतः सन् अमत्रे पात्रे परिषिच्यते पूर्यते सच इन्द्रायवायवेच प्रियः तं पातुं हेइन्द्रवायू आगच्छतमितिशेषः ॥ ४ ॥

४. यह पुरोभाग में वर्तमान सोम अभिषवण फलक-द्वारा अभिषुत हुआ है और पात्र में पूर्ण किया गया है। यह इन्द्र और वायु के लिए प्रिय है। हे इन्द्र और वायु, इस सोमरस को पीने के लिए आगमन करो।

वायवायाहीत्येषापृष्ठ्यस्यतृतीयेहनिप्रउगशस्त्रवायव्येतृचस्याद्या सूत्रितंच—वायवायाहिवीतयइत्येकावायोयाहिशिवादिवइतिद्वेइति।

**वायवायाहिवीतयेजुषाणोहव्यदातये।**
**पिबासुतस्यान्धसोअभिप्रयः ॥ ५ ॥ ५ ॥**

**वायो इति। आ। याहि। वीतये। जुषाणः। हव्यऽदातये। पिब। सुतस्य। अन्धसः। अभि। प्रयः ॥ ५ ॥ ५ ॥**

हेवायो प्रयोन्नं सोमाख्यं अभि अभिलक्ष्य आयाहि वीतये भक्षणाय जुषाणः प्रीयमाणः हव्यदातये हविर्दात्रेयजमानाय तदर्थं आगत्यच सुतस्यान्धसः अभिषुतमन्धोन्नं सोमलक्षणं पिब ॥ ५ ॥

५. हे वायु, हवि देनेवाले यजमान के लिए प्रीयमाण होकर तुम सोम-पान करने के लिए आगमन करो। आकर के अभिषुत सोमरूप अन्न का भक्षण करो। ॥ इतिचतुर्थस्यतृतीयेपंचमोवर्गः ॥ ५ ॥

पृष्ठ्यस्यतृतीयेहनिप्रउगशस्त्रेऐन्द्रवायवस्तृचः इन्द्रश्चेत्यादिकेद्वेऋचौशंसेत् तयोःप्रथमांद्वितीयांवा आवर्त्य तृचंसंपादयेत् तथाचसूत्रितं—इन्द्रश्चवायवेषांसुतानामितिद्वयोरन्यतरांद्विरिति ।

इन्द्रश्चवायवेषांसुतानांपीतिमर्हथः ।
ताञ्जुषेथामरेपसावभिप्रयः ॥ ६ ॥

इन्द्रः । च । वायो इति । एषाम् । सुतानाम् । पीतिम् । अर्हथः ।
तान् । जुषेथाम् । अरेपसौ । अभि । प्रयः ॥ ६ ॥

हेवायो त्वंचेन्द्रश्चैषां पुरतोगृहीतानां सुतानां अभिषुतानां सोमानां पीतिं पानमर्हथः यस्मादेवं तस्मात् तान् सोमरसान् जुषेथां सेवेथां अरेपसौ अहिंसकौ तदर्थं प्रयः सोमाख्यमन्नमभिलक्ष्यागच्छतमितिशेषः यद्वा प्रयोन्नरूपान् ॥ ६ ॥

६. हे वायु, तुम और इन्द्र इस अभिषुत सोम को पान करने के योग्य हो; इसी लिए अहिंसक होकर तुम दोनों इस सोमरस का सेवन करो और सोमात्मक अन्न के उद्देश से आगमन करो।

सुताइन्द्रायवायवेसोमासोदध्याशिरः ।
निम्नंनयन्तिसिन्धवोभिप्रयः ॥ ७ ॥

सुताः । इन्द्राय । वायवे । सोमासः । दधिऽआशिरः । निम्नम् ।
न । यन्ति । सिन्धवः । अभि । प्रयः ॥ ७ ॥

इन्द्रायवायवेच सोमासः सोमाः दध्याशिरः दध्याश्रयणाः सुताः अभिषुताः संपादिताः तेच निम्नंगर्तं सिन्धवोन नद्यइव हेइन्द्रवायू युवामभियन्ति प्रयोन्नरूपाः ॥ ७ ॥

७. इन्द्र तथा वायु के लिए दधिमिश्रित सोम अभिषुत हुआ है—सम्पादित हुआ है। हे इन्द्र और वायु, निम्नगामिनी नदियों की तरह वह सोम तुम दोनों के अभिमुख गमन करता है।

तृतीयेहनिप्रउगशस्त्रेसजूर्विश्वेभिरितिवैश्वदेवस्तृचः सूत्रितंच—सजूर्विश्वेभिर्देवेभिरुतनःप्रियाप्रियास्वितिति ।

सजूर्विश्वेभिर्देवेभिरश्विभ्यामुषसासजूः ।
आयांह्यग्नेअत्रिवत्सुतेरण ॥ ८ ॥

सऽजूः । विश्वेभिः । देवेभिः । अश्विऽभ्याम् । उषसा । सऽजूः ।
आ । याहि । अग्ने । अत्रिऽवत् । सुते । रण ॥ ८ ॥

हेअग्ने विश्वेभिः सर्वैःदेवेभिःदेवैः सजूः संगतःसन् अश्विभ्यांउषसाच सजूःसमानप्रीतिः सन् आयाहि आगहि अत्रिवत् अत्रिरिव अत्रेर्यज्ञेयथातथेत्यर्थः यद्वा अत्रिर्यथायज्ञेरमतेतद्वत् सुवे अभिषुतेसोमे रण रमस्व ॥ ८ ॥

८. हे अग्नि, तुम सम्पूर्ण देवों के साथ मिलकर तथा अश्विद्वय और उषा के साथ समान प्रीति स्थापित करके आगमन करो। यज्ञ में जैसे अत्रि रमण करते हैं, वैसे ही तुम भी अभिषुत सोम में रमण करो।

सजूर्मित्रावरुणाभ्यांसजूःसोमेनविष्णुना ।
आयांह्यग्नेअत्रिवत्सुतेरण ॥ ९ ॥

सऽजूः । मित्रावरुणाभ्याम् । सऽजूः । सोमेन । विष्णुना । आ ।
याहि । अग्ने । अत्रिऽवत् । सुते । रण ॥ ९ ॥

सजूरादित्यैर्वसुभिःसजूरिन्द्रेणवायुना ।
आयांह्यग्नेअत्रिवत्सुतेरण ॥ १० ॥ ६ ॥

सऽजूः । आदित्यैः । वसुऽभिः । सऽजूः । इन्द्रेण । वायुना । आ ।
याहि । अग्ने । अत्रिऽवत् । सुते । रण ॥ १० ॥ ६ ॥

उत्तरेद्वेनव्याख्येस्पष्टे ॥ ९ ॥ १० ॥

९. हे अग्नि, तुम मित्र, वरुण, सोम तथा विष्णु के साथ मिलकर आगमन करो। यज्ञ में जैसे अत्रि रमण करते हैं, वैसे ही तुम भी अभिषुत सोम में रमण करो।

१०. हे अग्नि, तुम आदित्य, वसुगण, इन्द्र और वायु के साथ मिलकर आगमन करो। यज्ञ में जैसे अत्रि रमण करते हैं, वैसे ही तुम भी अभिषुत सोम में रमण करो।

॥ इतिचतुर्थस्यतृतीयेषष्ठोवर्गः ॥ ६ ॥

पृष्ठ्यस्यषष्ठेहनिवैश्वदेवशस्त्रेस्वस्तिनइतितृचः सूत्रितंच—स्वस्तिनोमिमीतामश्विनाभगइतितृचइतिवैश्वदेवमिति। तथाबृहस्पतिसवेवैश्वदेवनिविद्धानार्थोयंतृचः स्वस्तिनोमिमीतामश्विनाभगइतिवैश्वदेवमितिसूत्रितत्वात्।

स्वस्तिनोमिमीतामश्विनाभगःस्वस्तिदेव्यदितिरनर्वणः ।
स्वस्तिपूषाअसुरोदधातुनःस्वस्तिद्यावापृथिवीसुचेतुना ॥ ११॥

स्वस्ति । नः । मिमीताम् । अश्विना । भगः । स्वस्ति । देवी ।
अदितिः अनर्वणः । स्वस्ति । पूषा । असुरः । दधातु । नः ।
स्वस्ति । द्यावापृथिवी इति । सुऽचेतुना ॥ ११ ॥

नोस्मभ्यं अश्विना अश्विनौ स्वस्ति अविनाशं क्षेममिमीतांकुरुतां भगश्चस्वस्तिक्षेमं मिमीतां तथा देव्यदितिश्च स्वस्तिमिमीतां अनर्वणः अप्रत्यृतः पूषा असुरः शत्रूणां निरसिता प्राणानां बलानांदातावा नःस्वस्तिदधातु नोस्मभ्यं द्यावापृथिवीद्यावापृथिव्यावपि सुचेतुना शोभनेनप्रज्ञानेन विशिष्टे स्वस्तिमिमीतां ॥ ११ ॥

११. हम लोगों के लिए अश्विद्वय अविनश्वर कल्याण करें, भग कल्याण करें तथा देवी अदिति कल्याण करें। बलवान् अथवा सत्यशील और शत्रु-संहारक अथवा बलदाता पूषा हम लोगों का मङ्गल करें। शोभन ज्ञानविशिष्ट द्यावा-पृथिवी हम लोगों का मङ्गल करें।

स्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुवनस्ययस्पतिः ।
बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयआदित्यासोभवन्तुनः ॥ १२ ॥

स्वस्तये । वायुम् । उप । ब्रवामहै । सोमम् । स्वस्ति । भुवनस्य ।
यः । पतिः । बृहस्पतिम् । सर्वऽगणम् । स्वस्तये । स्वस्तये ।
आदित्यासः । भवन्तु । नः ॥ १२ ॥

स्वस्तये क्षेमाय वायुमुपब्रवामहै स्तुमइत्यर्थः सोमंचोपब्रवामहै यश्चसोमोभुवनस्य पतिः पालकः सर्वलोकजीवनस्यसोमायत्तत्वात् तथा सर्वगणं सर्वदेवगणोपेतं बृहस्पतिं बृहतःकर्मणोमंत्रस्यवापालयितारं स्वस्तयेस्तुमः आदित्यासः आदित्याअदितेःपुत्राःसर्वेदेवाः अरुणादयोद्वादशवा नोस्माकं स्वस्तयेभवंतु ॥ १२ ॥

१२. कल्याण के लिए हम लोग वायु का स्तवन करते हैं और सोम का भी स्तवन करते हैं। सोम निखिल लोक के पालक हैं। सब देवों के साथ मन्त्रपालक बृहस्पति की स्तुति कल्याण के लिए करते हैं। अदिति के पुत्र देवगण अथवा अरुणादि द्वादश देव हम लोगों के लिए कल्याणकर हों।

सत्रमध्येदीक्षितेव्याधितेसति तस्मिन्नहनि वैश्वदेवशस्त्रेयंतृचोनिविद्धानार्थः सूत्रितं-च-स्वस्त्यात्रेयंनिविदंदध्यादिति। स्वस्त्यात्रेयशब्देनायंतृचोविवक्षितइतितत्र्व्याख्यातं तथा-रूपादिकेसत्ययंतृचोजप्यः।

अथत्रयोदशी—

विश्वेंदेवानोंअद्यास्वस्तयेंवैश्वानरोवसुरग्निःस्वस्तयें।
देवाअंवन्त्वृभवःस्वस्तयेंस्वस्तिनोंरुद्रःपात्वंहंसः ॥ १३ ॥

विश्वें। देवाः। नः। अद्य। स्वस्तयें। वैश्वानरः। वसुः।
अग्निः। स्वस्तयें। देवाः। अवन्तु। ऋभवः। स्वस्तयें।
स्वस्ति। नः। रुद्रः। पातु। अंहंसः ॥ १३ ॥

विश्वे सर्वेपिदेवानोस्मान् अद्यास्मिन्यागदिने स्वस्तये क्षेमायावन्तु वैश्वानरोविश्वएनंनरानयन्तीतिवैश्वानरः वसुः सर्वस्यवासयिता अग्निर्देवः अयमेवाग्निर्वैश्वानरइतिशाकपूणिरितियास्कः। सोपिस्वस्तयेवतु देवाःऋभवोपिस्वस्तयेवन्तु रुद्रोदुःखाद्रावयिता देवोपि अंहसः पापात् स्वस्तिपातुनोस्मान् ॥ १३ ॥

१३. इस यज्ञ दिन में सम्पूर्ण देव हम लोगों के लिए कल्याण करें और रक्षा करें। मनुष्यों के नेता और गृहदाता अग्नि हम लोगों के लिए कल्याण करें और रक्षा करें। दीप्तिमान् ऋभुगण भी हम लोगों के कल्याण की रक्षा करें। रुद्रदेव हम लोगों के कल्याण की, पाप से, रक्षा करें।

स्वस्तिमित्रावरुणास्वस्तिपथ्येरेवति।
स्वस्तिनइन्द्रंश्चाग्निश्चस्वस्तिनोंअदितेकृधि ॥ १४ ॥

स्वस्ति। मित्रावरुणा। स्वस्ति। पथ्ये। रेवति। स्वस्ति। नः।
इन्द्रः। च। अग्निः। च। स्वस्ति। नः। अदिते। कृधि ॥ १४ ॥

हेमित्रावरुणा अहोरात्राभिमानिदेवौ स्वस्तिकुरुतं हेपथ्ये पथ्यास्वस्तिदेवि पन्थाअन्तरिक्षमार्गः तत्रहितामार्गः तत्रहितामार्गाभिमानिनोदेवी हेतादृशि रेवति धनवति देविस्वस्ति कृधि इन्द्रश्चाग्निश्चप्रत्येकंनोस्मभ्यं स्वस्तिकृधि हेअदितेदेवि नः स्वस्तिकृधिकुरु ॥ १४ ॥

१४. हे अहोरात्राभिमानी मित्र और वरुण देव, तुम दोनों मंगल करो। हे हितमार्गाभिमानिनी धनवती देवी, कल्याण करो। इन्द्र और अग्नि दोनों ही हम लोगों का कल्याण करें। हे अदिति देवी; तुम हम लोगों का कल्याण करो।

अथपंचदशी—

स्वस्तिपन्थामनुंचरेमसूर्याचन्द्रमसांविव।
पुनर्ददताघ्नंताजानतासंगंमेमहि ॥ १५ ॥ ७ ॥

१ नि० ७.२३.।

स्वस्ति । पन्थाम् । अनु । चरेम । सूर्याचन्द्रमसौऽइव । पुनः ।
ददता । अघ्नता । जानता । सम् । गमेमहि ॥ १५ ॥ ७ ॥

पन्थां पन्थानं स्वस्ति क्षेमेणानुचरेम सूर्याचन्द्रमसाविवतौ यथानिरालंबेमार्गे राक्षसादिभिरनुपद्रुतौसंचरतस्तद्वत् किंच वयं प्रवसन्तः पुनर्ददताभिमतं अघ्नता चिरकाल-विलंबकोपेनाहिंसता जानताअविस्मरतामदीयश्चिरकालंगतः कोयमितिसन्देहमकुर्वतामदीयो-यमितिबुध्यमानेनेत्यर्थः उक्तलक्षणेन बन्धुजनेन संगमेहि यद्वा पूर्वार्धं प्रवसतांवाक्यं उत्तरार्धं बन्धूनां वयंबन्धवः ददताअभिमतमुपार्जितं यच्छता अघ्नता प्रयासकोपेन अहिंसताजानता सस्नेहमधिगच्छता प्रवसता संगमेमहि ॥ १५ ॥

१५. सूर्य और चन्द्र जिस तरह से निरालम्ब मार्ग में राक्षसादि के उपद्रव के बिना सञ्चरण करते हैं, उसी तरह से हम लोग भी मार्ग में सुखपूर्वक विचरण करें। प्रवास में चिरकाल हो जाने से भी अक्रुद्ध और स्मरण करनेवाले बन्धुओं से हम मिलित हों।

॥ इतिचतुर्थस्यतृतीयेसप्तमोवर्गः ॥ ७ ॥

प्रश्यावाश्वेतिसप्तदशर्चमष्टमंसूक्तं अत्रेयमनुक्रमणिका—प्रश्यावाश्वत्र्यूनाश्यावाश्वोमा-रुतंहतपंक्तिःषष्ठयन्त्याचेति । आत्रेयःश्यावाश्वऋषिः हतदितिप्रयोगादिदमादीनिदशसूक्तानि मरुद्देवत्यानि षष्ठीसप्तदशीचपंक्त्यौ शिष्टाःपंक्त्यंतपरिभाषयानुष्टुभः गतोविनियोगः ।

प्रश्यावाश्वधृष्णुयार्चामरुद्भिर्ऋक्वभिः ।
येअद्रोघमनुष्वधंश्रवोमदन्तियज्ञियाः ॥ १ ॥

प्र । श्यावऽअश्व । धृष्णुऽया । अर्च । मरुत्ऽभिः । ऋक्वऽभिः ।
ये । अद्रोघम् । अनुऽस्वधम् । श्रवः । मदन्ति । यज्ञियाः ॥ १ ॥

हेश्यावाश्व एतन्नामकऋषे धृष्णुया धृष्णुत्वं ऋक्वभिः मरुद्भिः स्तुत्यान् मरुतः प्रार्च द्वितीयार्थेतृतीया एवं स्वयमेवसंप्रेष्यति यद्वा यजमानोहोतारंश्यावाश्वंब्रूते यद्वा मरुद्भि-र्मरुत्सदृशैर्ऋक्वभिःस्तोतृभिःसहस्तोत्रैर्वार्च स्तुहीत्यर्थः येमरुतोयज्ञियायज्ञार्हाअनुष्वधं प्रत्य-हंहविर्लक्षणामन्नदानं स्वधानुपश्चाद्वा अद्रोघमहिंसकं श्रवोन्नंलब्ध्वा मदन्तिहृष्यन्ति ॥ १

१. हे श्यावाश्व ऋषि, तुम धीरता से स्तुति-योग्य मरुतों की अर्चना करो। यागयोग्य मरुद्गण प्रतिदिन हविर्लक्षण अहिंसक अन्न को प्राप्त करके प्रमुदित होते हैं।

तेहिस्थिरस्यशवसःसखायःसन्तिधृष्णुया ।
तेयामन्नाधृषद्विनस्त्मनापान्तिशश्वतः ॥ २ ॥

ते । हि । स्थिरस्य । शवसः । सखायः । सन्ति । धृष्णुऽया ।
ते । यामन् । आ । धृषत्ऽविनः । त्मना । पान्ति । शश्वतः ॥ २ ॥

तेहि तेखलु स्थिरस्याविचलितस्य शवसोबलस्य सखायःसन्ति भवन्ति महंधृष्णुया धृष्णवः तेचयामन्ना आइतिचार्थे गमनेपि धृषद्विनोधर्षणवन्तः त्मना आत्मना अनुग्रहेणैव अस्मदुपकारमनपेक्ष्यैव शश्वतोबहूनस्मान्पुत्रभृत्यादीन् पान्तिरक्षन्ति ॥ २ ॥

२. वे अविचलित बल के सखा हैं, वे धीर हैं, वे मार्ग में परिभ्रमण करते हैं और स्वेच्छापूर्वक हमारे पुत्र-भृत्यादि की रक्षा करते हैं।

तेस्पन्द्रासोनोक्षणोतिष्कन्दन्तिशर्वरीः ।
मरुतामधामहोदिविक्षमाचमन्महे ॥ ३ ॥

ते । स्पन्द्रासः । न । उक्षणः । अति । स्कन्दन्ति । शर्वरीः ।
मरुताम् । अध । महः । दिवि । क्षमा । च । मन्महे ॥ ३ ॥

हेमरुतः स्पंद्रासः स्पन्दनशीलाः उक्षणोजलस्यसेकारश्च नेतिचार्थे यस्मात्स्पन्द्राः अन्येषांतस्मात्शर्वरीः शर्वर्योरात्रयः कालावयवानित्यर्थः तानतिस्कन्दन्ति अतिक्रम्यगच्छन्ति नित्याइत्यर्थः यस्मादेतेएवंविधाः तस्मात् मरुतां अध अधुना महस्तेजोदिविद्युलोके क्षमा क्षमायांभूमौचवर्तमानं मन्महे स्तुमः ॥ ३ ॥

३. स्पन्दनशील और जलवर्षक मरुद्गण रात्रि को अतिक्रम करके गमन करते हैं। जिस लिए वे इस प्रकार के हैं; इसी लिए हम अभी मरुतों के द्युलोक और भूमि में वर्तमान तेज की स्तुति करते हैं।

मरुत्सुवोदधीमहिस्तोमंयज्ञंचधृष्णुया ।
विश्वेयेमानुषायुगापान्तिमर्त्यंरिषः ॥ ४ ॥

मरुत्ऽसु । वः । दधीमहि । स्तोमम् । यज्ञम् । च । धृष्णुऽया ।
विश्वे । ये । मानुषा । युगा । पान्ति । मर्त्यम् । रिषः ॥ ४ ॥

हेअध्वर्युहोत्रादयोवोयूयंमरुत्सु धृष्णुया धर्षकेषु दधीमहि व्यत्ययेनोत्तमः धत्त किं स्तोमं स्तोत्रं यज्ञंच इज्यते अनेनेतियज्ञंहविः तदुभयंकिमर्थंदीयतइति येमरुतोविश्वेसर्वेपि मानुषा मानुषाणि युगा युगानि सर्वेषुकालेष्वित्यर्थः मर्त्यं मरणधर्माणं यजमानं रिषोहिंसकात् सकाशात्पान्ति रक्षन्ति ॥ ४ ॥

४. हे होताओ, तुम लोग धीरतापूर्वक मरुतों को किस लिए स्तवन और हव्य प्रदान करते हो ? इसी लिए कि वे सम्पूर्ण मरणशील मनुष्यों को सब काल में हिंसकों से बचाते हैं।

अथपंचमी—

अर्हन्तोयेसुदानवोनरोअसामिशवसः ।
प्रयज्ञंयज्ञियेभ्योदिवोअर्चामरुद्भ्यः ॥ ५ ॥ ८ ॥

अर्हन्तः । ये । सुऽदानवः । नरः । असामिऽशवसः । प्र ।
यज्ञम् । यज्ञियेभ्यः । दिवः । अर्च । मरुत्ऽभ्यः ॥ ५ ॥ ८ ॥

हेहोतः हेआत्मन्वा येअर्हन्तः पूज्याः सुदानवः शोभनदानाः नरोनेतारः कर्मणां असामिशवसोऽनल्पबलाःसन्ति तेभ्योयज्ञियेभ्योयज्ञार्हेभ्योदिवोद्योतमानेभ्योमरुद्भ्यः विभक्तिवचनयोर्व्यत्ययः यद्वा कर्मणिषष्ठी दीप्तं यज्ञं यज्ञसाधनंहविः प्रार्च पूजय प्रयच्छेत्यर्थः अथवा दिवोन्तरिक्षादागतेभ्यइतिसंबन्धः ॥ ५ ॥

५. हे होताओ, जो पूजनीय, सुन्दर दानविशिष्ट, कर्म के नेता और अधिक बलवाले हैं, ऐसे यागयोग्य द्युतिमान् मरुतों को यज्ञसाधन हव्य प्रदान करो।

आरुक्मैरायुधानरऋष्वाऋष्टीरसृक्षत ।
अन्वेनाँअहविद्युतोमरुतोजज्झतीरिवभानुरर्तत्मनादिवः ॥ ६ ॥

आ । रुक्मैः । आ । युधा । नरः । ऋष्वाः । ऋष्टीः । असृक्षत ।
अनु । एनान् । अह । विऽद्युतः । मरुतः । जज्झतीःऽइव ।
भानुः । अर्त । त्मना । दिवः ॥ ६ ॥

नरोवृष्टेर्नेतारः ऋष्वाः महान्तोमरुतोरुक्मैः रोचमानैराभरणविशेषैरारोचन्तइतिशेषः उपसर्गश्रुतेःसंगतक्रियाध्याहारः तथायुधाप्रहरणसाधनेनायुधेन आरोचन्ते एते मरुतः ऋष्टीः आयुधविशेषान् असृक्षत प्रक्षिपन्ति मेघभेदार्थं एनान्मरुतोविद्युतोपि जज्झतीरिव शब्दकारिण्यआपइव जज्झतीरापोभवन्तिशब्दकारिण्यइतिनिरुक्तं । अन्वहअनुगच्छन्त्येव दिवोद्योतमानस्य मरुद्गणस्य भानुर्दीप्तिः त्मना स्वयमेव अर्त निरगात् ॥ ६ ॥

६. वृष्टि के नेता महान् मरुद्गण रोचमान आभरण-विशेष से तथा आयुध-विशेष से शोभित होते हैं। मेघभेदन के लिए वे आयुध-विशेष को प्रक्षिप्त करते हैं। विद्युत् शब्द करनेवाली जलराशि की तरह मरुतों का अनुगमन करती है। द्युतिमान् मरुतों की दीप्ति स्वयम् निःसृत होती है।

अथसप्तमी—

येवावृधन्तपार्थिवायउरावन्तरिक्षआ ।
वृजनेवानदीनांसधस्थेवामहोदिवः ॥ ७ ॥

ये । ववृधन्त । पार्थिवाः । ये । उरौ । अन्तरिक्षे । आ । वृजने ।
वा । नदीनाम् । सधऽस्थे । वा । महः । दिवः ॥ ७ ॥

येमरुतः पार्थिवाः पृथिवीसंबद्धाःसन्तोववृधन्तवर्धन्ते येचोरौ महत्यन्तरिक्षेच ववृधन्त आइतिचार्थे नदीनां नदनवतीनां वृजनेवाबलेववृधन्त महोमहतः दिवोद्युलोकस्य सधस्थेवा सहस्थानेच ववृधन्त उभयत्रवाशब्दश्चार्थे एवंसर्वत्रवर्धमानामरुतोवृष्ट्यर्थंऋष्टीरसृक्षतेतिपूर्वत्रसंबन्धः ॥ ७ ॥

७. जो पृथ्वी-सम्बन्धी मरुद्गण हैं, और वर्द्धमान होते हैं, जो महान् अन्तरिक्ष में वर्द्धमान होते हैं, वे नदियों के बल (धारा) में तथा महान् द्युलोक के मध्य में वृद्धि प्राप्त करें। इस प्रकार वृष्टि के लिए सर्वत्र वर्द्धमान मरुत् मेघभेदन के लिए आयुध-विशेष को प्रक्षिप्त करते हैं।

शर्धोमारुतमुच्छंससत्यशवसमृभ्वसम् ।
उतस्मतेशुभेनरःप्रस्पन्द्रायुजतत्मना ॥ ८ ॥

शर्धः । मारुतम् । उत् । शंस । सत्यऽशवसम् । ऋभ्वसम् । उत ।
स्म । ते । शुभे । नरः । प्र । स्पन्द्राः । युजत । त्मना ॥ ८ ॥

हेस्तोतः मारुतं शर्धोबलं उदुत्कृष्टं शंस स्तुहि कीदृशं शर्धः सत्यशवसं सत्यवेगं ऋभ्वसं महदतिप्रवृद्धं उतस्मापिच नरोवृष्टेर्नेतारस्तेमरुतः शुभे उदकार्थं प्रयुजत प्रयुंजत समयोजयन् त्मना आत्मनैव जगद्रक्षाबुध्यैव स्पन्द्राः चलनस्वभावाः पृषतीरित्यर्थः ॥ ८ ॥

८. हे स्तोताओ, मरुतों के उत्कृष्ट बल की स्तुति करो। वह बल अत्यन्त प्रवृद्ध तथा सत्यमूल है। वृष्टि के नेता मरुद्गण, गमनशील होकर सबकी रक्षा-बुद्धि से, जल के लिए, स्वयं परिश्रान्त होते हैं।

उतस्मतेपरुष्ण्यामूर्णावसतशुन्ध्यवः ।
उतपव्यारथानामद्रिंभिन्दन्त्योजसा ॥ ९ ॥

उत । स्म । ते । परुष्ण्याम् । ऊर्णाः । वसत । शुन्ध्यवः ।
उत । पव्या । रथानाम् । अद्रिम् । भिन्दन्ति । ओजसा ॥ ९ ॥

उतस्म अपिच तेमरुतः परुष्ण्यां एतन्नामिकायांनद्यां वर्तन्ते यऊर्णाः दीप्तीः शुन्ध्यवः शोधिकाः अपः वसत आच्छादयन्ति तेउतापिच पव्या नेम्या रथानां स्वकीयानां रथचक्रेणौजसा बलेनचाद्रिंभिन्दन्ति मेघंगिरिंवाविदारयन्ति ॥ ९ ॥

९. मरुद्गण परुष्णी नामक नदी में वर्तमान रहते हैं और सबको शुद्ध करनेवाली दीप्ति-द्वारा अपने को आच्छादित करते हैं। वे अपने रथचक्र के द्वारा या बल के द्वारा मेघ अथवा पर्वत को विदीर्ण करते हैं।

**आपंथयोविपंथयोन्तस्पथाअनुपथाः ।**
**एतेभिर्मह्यंनामभिर्यज्ञंविष्टारओहते ॥ १० ॥ ९ ॥**

**आऽपंथयः । विऽपंथयः अन्तःऽपथाः अनुऽपथाः । एतेभिः । मह्यम् । नामऽभिः । यज्ञम् । विऽस्तारः । ओहते ॥ १० ॥ ९ ॥**

आपथयः अस्मदभिमुखामार्गायेषांतेतादृशाः विपथयोविष्वङ्मार्गाः अन्तस्पथाः दरीसुषिरादिमार्गाः अनुपथाः अनुकूलमार्गाश्च येमरुतःसन्ति ते एतेभिः एतैश्चतुर्विधैर्नामभिर्नामकैः स्वरूपैर्मह्यं मदर्थं यज्ञं विस्तारः विस्तृताःसन्तः ओहते वहन्ति यद्वा एतैर्नामभिरुदकैः सार्धंयज्ञमोहते ॥ १० ॥

१०. जो मरुद्गण हम लोगों के अभिमुख मार्ग से गमन करते हैं, जो सर्वत्र गमन करते हैं, जो गिरि-कन्दराओं में गमन करते हैं और जो अनुकूल मार्गगामी हैं, वे उपर्युक्त चारों नामवाले मरुद्गण विस्तृत होकर हमारे लिए यज्ञ वहन करते हैं।

**अधानरोन्योहतेधानियुतओहते ।**
**अधापारावताइतिचित्रारूपाणिदश्या ॥ ११ ॥**

**अध । नरः । नि । ओहते । अध । निऽयुतः । ओहते । अध । पारावताः । इति । चित्रा । रूपाणि । दश्या ॥ ११ ॥**

अध अथ नरोभिमतवृष्ट्यादिनेतारोन्योहते नितरांवहन्तिजगत् अध नियुतः स्वयमेव मिश्रयितारः सन्तः ओहते अधाथ पारावताः परवद्दूरदेशःतत्संबन्धिनश्च अन्तरिक्षादिदूरदेशे ग्रहतारामेघादिधारकाःसन्तः ओहतइत्यर्थः इतिउक्तप्रकारेण तेषांरूपाणि चित्रा नानाविधानि चायनीयानिवा दश्यास्वव्यापारैर्दर्शनीयानिभवंत्वितिशेषः ॥ ११ ॥

११. अभिमत वृष्ट्यादि के नेता जगत् का अतिशय वहन करते हैं। स्वयं सम्मिलित करनेवाले जगत् का अतिशय वहन करते हैं। दूर देश अन्तरिक्ष में वे ग्रह, तारा, मेघ आदि को धारण करते हैं। इस प्रकार से उनके रूप नानाविध और दर्शनीय होते हैं।

अथद्वादशी—

छन्दःस्तुभःकुभन्यवउत्समाकीरिणोनृतुः ।
तेमेकेचिन्नतायवऊमाआसन्दृशित्विषे ॥ १२ ॥

छन्दःऽस्तुभः । कुभन्यवः । उत्सम् । आ । कीरिणः । नृतुः । ते । मे ।
के । चित् । न । तायवः । ऊमाः । आसन् । दृशि । त्विषे ॥ १२ ॥

छन्दःस्तुभः छन्दोभिःस्तोतारः कुभन्यवः उदकेच्छवः कीरिणः स्तोतारः उत्सं कूपमपेक्ष्य तृषिताय गोतमाय यान्मरुतः आनृतुः सर्वतोऽकुर्वन् अनयन्वास्तोत्रं यद्वा येछन्दस्तुभः छन्दोभिःस्तुत्याः स्तोभतिःस्तुतिकर्मा कुभन्यवः सेक्कारोवृष्ट्युदकस्य कुभिरुन्दनकर्मा कीरिणः स्तोतुः गोतमस्यपानार्थं उत्सं कूपं आनृतुः आनीतवन्तः असिंचन्नुत्संगोतमायतृष्णजइतिह्युक्तं । नूनयेइत्यस्यवानतेतेर्वाविक्षेपमात्रार्थस्येदंरूपं तेमरुतः केचित् मे मह्यं तायवोन कदाचिदप्यदृश्यास्तस्कराइवस्थिताः ऊमारक्षकाः दृशिदर्शने आसन् विषयभूताअभवन् केचित् त्विषे शरीरदीप्त्यै बलायवासन् प्राणरूपेणेतिभावः ॥ १२ ॥

१२. छन्द-द्वारा स्तुति करनेवाले और जल की इच्छा करनेवाले स्तोता लोगों ने मरुतों की स्तुति की थी तथा तृषित गोतम के पानार्थ कूप का आनयन किया था । उनमें कुछ मरुतों ने अदृश्य तस्कर की तरह स्थित होकर हमारी रक्षा की थी तथा कितने ही प्राण रूप से दृश्यमान होकर शरीर का बल साधन किया था ।

यऋष्वाऋष्टिविद्युतःकवयःसन्तिवेधसः ।
तमृषेमारुतंगणंनमस्यारमयागिरा ॥ १३ ॥

ये । ऋष्वाः । ऋष्टिऽविद्युतः । कवयः । सन्ति । वेधसः । तम् ।
ऋषे । मारुतम् । गणम् । नमस्य । रमय । गिरा ॥ १३ ।

येमरुतः ऋष्वाः दर्शनीयाः ऋष्टिविद्युतः आयुधैर्विद्योतमानाः कवयोमेधाविनोवेधसः सर्वत्रविधातारः सन्ति तं तेषांमारुतंगणं रमया रमणीययागिरास्तुत्या हेऋषे श्यावाश्व नमस्य परिचर स्तुहि ॥ १३ ॥

१३. हे श्यावाश्व ऋषि, जो मरुद्गण दर्शनीय विद्युद्रूपी आयुध से विद्योतमान, मेघावी और सबके विधाता हैं, उन मरुद्गण की, रमणीय स्तुति से, तुम परिचर्या करो ।

अच्छऋषेमारुतंगणंदानामित्रंनयोषणा ।
दिवोवाधृष्णवओजसास्तुताधीभिरिषण्यत ॥ १४ ॥

---

१ ऋ० सं० १.५.१०.।

अच्छ॑ । ऋ॒षे॒ । मारु॑तम् । ग॒णम् । दा॒ना । मि॒त्रम् । न ।
यो॒षणा॑ । दि॒वः । वा॒ । धृ॒ष्ण॒वः॒ । ओज॑सा । स्तु॒ताः ।
धी॒भिः । इ॒ष॒ण्य॒त॒ ॥ १४ ॥

हेऋषे मारुतंगणं मरुत्संघं मित्रंन आदित्यमिव दाना हविर्दानेन योषणा यौते-रिदंरूपं यौतीतियोषास्तुतिः तयाचाच्छ आगच्छेतिशेषः ऋषेः उत्तरार्धःप्रत्यक्षवादः ओ-जसा बलेन हेधृष्णवोधर्षकामरुतः दिवोवा द्युलोकाद्वा वाशब्दश्रुतेरितरलोकद्वयाद्वा धी-भिरस्मदीयाभिःस्तुतिभिः स्तुताइषण्यत गच्छतयज्ञं ॥ १४ ॥

१४. हे ऋषि, तुम हविर्दान तथा स्तुति के साथ मरुतों के निकट आदित्य की तरह उपस्थित होओ । हे बल-द्वारा पराभूत करनेवाले मरुतो, तुम लोग द्युलोक से अथवा अन्य दोनों लोकों से हमारे यज्ञ में आगमन करो । हम सब तुम्हारी स्तुति करते हैं ।

नू॒मन्वा॒नए॑षां॒दे॒वाँअच्छा॒नव॒क्षणा॑ ।
दा॒नास॑चेतसू॒रिभि॒र्याम॑श्रुतेभिर॒ञ्जिभिः॑ ॥ १५ ॥

नु । म॒न्वा॒नः । ए॒षा॒म् । दे॒वान् । अच्छ॑ । न । व॒क्षणा॑ । दा॒ना ।
स॒चे॒त॒ । सू॒रिऽभिः॑ । याम॑ऽश्रुतेभिः । अ॒ञ्जिऽभिः॑ ॥ १५ ॥

नुक्षिप्रं एषां मरुतां एतान्मरुतइत्यर्थः मन्वानः स्तुवन् देवान्मरुद्व्यतिरिक्तान् वक्षणा वहनेननिमित्तेन अच्छ अभिप्राप्तुंनमनुते सस्तोता सूरिभिर्मेधाविभिः प्रेरयितृभिः यामश्रुतेभिः शीघ्रगमनेनविश्रुतैः अंजिभिः फलस्यव्यंजकैर्मरुद्भिः सर्वाःपंचम्यर्थेतृतीयाः उक्तलक्षणेभ्योम-रुद्भ्योदानाअभिमतदानानि सचेतसंगच्छते ॥ १५ ॥

१५. स्तोता शीघ्रता से मरुतों की स्तुति करके अन्य देवों की अभि-प्राप्ति-कामना नहीं करते हैं । स्तोता ज्ञानसम्पन्न, शीघ्र गमन से प्रसिद्ध तथा फलदाता मरुतों से अभिमत दान प्राप्त करते हैं ।

अथषोडशी—

प्रयेमे॑बन्ध्वे॒षेगांवोच॑न्तसू॒रयः॒पृश्निं॑वोचन्त॒मा॒तर॑म् ।
अधा॑पि॒तर॑मि॒ष्मिणं॑रु॒द्रंवो॑चन्त॒शिक॑सः ॥ १६ ॥

प्र । ये । मे॒ । ब॒न्धु॒ऽए॒षे । गाम् । वोच॑न्त । सू॒रयः॑ । पृश्नि॑म् ।
वो॒च॒न्त॒ । मा॒तर॑म् । अध॑ । पि॒तर॑म् । इ॒ष्मिण॑म् । रु॒द्रम् ।
वो॒च॒न्त॒ । शिक॑सः ॥ १६ ॥

येमरुतोमेमह्यं बन्ध्वेषे स्वेषांवन्धूनामन्वेषणेसति सूरयः प्रेरकाः गां माध्यमिकांवाचं गोदेवतांवा प्रवोचन्त प्रावोचन् अवशिष्टमृषेर्वाक्यं मेऋषिर्मरुद्वाक्यमनुवदति तस्मादुत्तरयोर्निघातयोर्यच्छब्दानन्वयान्निघातः तेपृश्निं द्युदेवतां पृश्निवर्णांगांवा मातरंवोचन्तअब्रुवन् पृश्न्यैवैपयसोमरुतोजाताइतिश्रुतेः। अधाथ पितरं स्वकीयं इष्मिणं गमनवन्तमन्नवन्तंवा रुद्रं वोचन्त शिक्वसः शक्तास्ते मरुतां रुद्रेणपुत्रत्वपरिग्रहोबहुकृत्वउपपादितः॥ १६॥

१६. जिन प्रेरक मरुतों ने हमें अपने वन्धुओं के अन्वेषण में यह वचन कहा था। उन्होंने द्युदेवता अथवा पृश्निवर्ण गौ को माता बताया था और अन्नवान् अथवा गमनवान् रुद्र को अपना पिता बताया था, वे समर्थ हैं।

सप्तमेंसप्तशाकिनएकंमेकाशतादंदुः।
यमुनायामधिश्रुतमुद्राधोगव्यंमृजेनिराधोअश्व्यंमृजे॥१७॥१०॥

सप्त। मे। सप्त। शाकिनः। एकम्ऽएका। शता। दुदुः। यमुनायाम्। अधि। श्रुतम्। उत्। राधः। गव्यम्। मृजे। नि। राधः। अश्व्यम्। मृजे॥ १७॥ १०॥

सप्त सप्तसंख्याकाः संघाः सप्तगणावैमरुतइतिश्रुतेः। दितिगर्भेवर्तमानंवायुमिन्द्रःप्रविश्य सप्तधाविदार्य पुनरकैकं सप्तधाव्यदारयत् तेएकोनपंचाशन्मरुद्गणाअभवन्नितिपुराणेषुप्रसिद्धं तेच सप्तसप्तसंख्याकाः शाकिनः सर्वमपिकर्तुंशक्ताः तेंचैकमेका एकैकोगणोमह्यंशतम् शतसंख्यानि गवाश्वयूथानिददुः दत्तवन्तः प्रयच्छन्त्वितिवाआशीः तैर्दत्तं यमुनायांनद्यां अधि अयंसप्तम्यर्थानुवादी तत्रश्रुतं प्रसिद्धं गव्यं गोसमूहात्मकं गोसंबन्धिवा राधोधनं उन्मृजे उन्मार्जयामि तथातैर्दत्तं अश्व्यं अश्वसमूहात्मकं तत्संबन्धिवा राधोनिमृजे निमार्ज्मि॥ १७॥

१७. सप्त-सप्त-सङ्ख्यक सर्वसमर्थ मरुद्गण एक-एक होकर हमें शतसंख्यक गो-अश्व आदि दें। इनके द्वारा प्रदत्त गोसमूहात्मक प्रसिद्ध धन को हम यमुनातीर में प्राप्त करें। उनके द्वारा प्रदत्तअश्वसमूहात्मक धन को प्राप्त करें।

॥ इतिचतुर्थस्यतृतीयेदशमोवर्गः॥ १०॥

कोवेदजानमितिषोडशर्चंनवमंसूक्तं श्यावाश्वऋषिः आद्यापंचमीदशम्येकादशीपंचदश्यः ककुभः षष्ठीसप्तमीनवमीत्रयोदशीचतुर्दशीषोळश्यःसतोबृहत्यः अष्टमीद्वादशीचगायत्र्यौ द्वितीयाबृहती तृतीयाअनुष्टुप् चतुर्थीपुरउष्णिक् मरुतोदेवता तथाचानुक्रान्तं—कोवेदषोळशककुब्बृहत्यनुष्टुप्पुरउष्णिक्ककुप्सतोबृहत्यौगायत्रीसतोबृहतीककुभौगायत्रीसतोबृहत्यौककुप्सतोबृहतीति। विनियोगोलैंगिकः।

---

१ तै० सं० २. २. ११.।   २. तै० सं० २. २. ५.।

तत्रप्रथमा—

कोवेदजानमेषांकोवापुरासुम्नेष्वासमरुताम् । यद्युयुज्रेकिलास्यः ॥१॥

कः । वेद । जानम् । एषाम् । कः । वा । पुरा । सुम्नेषु । आस । मरुताम् । यत् । युयुज्रे । किलास्यः । १ ॥

एषां मरुतां पूर्वसूक्ते प्रस्तुतत्वादत्रान्वादेशविषयत्वादेषामित्यस्यनिघातता जानमुत्पत्तिं कोवेद जानातिकःपुमान् कोवापुरापूर्वं अप्येषांमरुतां सुम्नेषु सुखेषु आस भवति यद्यदा एते किलास्यः किलासीः पृषतीरित्यर्थः तायुयुज्रे रथेयोजितवन्तः तदैषां स्थितिं बलल-क्षणानिसुखानिच कोजानातीत्यर्थः वेगविषये सर्वत्रवायोरुपमास्पदत्वादितिभावः ॥ १ ॥

१. कौन पुरुष मरुतों की उत्पत्ति को जानता है ? कौन पहले मरुतों के सुख में वर्तमान था ? जब उन्होंने पृथ्वी को रथ में युक्त किया था, तब इनके बल-रक्षक सुख को कौन जानता था ?

ऐतान्रथेषुतस्थुषःकःशुश्राववकथायंयुः ।
कस्मैसस्रुःसुदासेअन्वापयइळाभिर्वृष्टयःसह ॥ २ ॥

आ । एतान् । रथेषु । तस्थुषः । कः । शुश्राव । कथा । ययुः । कस्मै । सस्रुः । सुऽदासे । अनु । आपयः । इळाभिः । वृष्टयः । सह ॥ २ ॥

एतान्मरुतोरथेषु तस्थुषः स्थितवतः कआशुश्राव श्रावयेदित्यर्थः यद्वैतेषां क्रोशध्वनिं रथध्वनिंच कःश्रृणुयात् कथा कथं ययुर्गच्छन्ति तदपिकोजानाति यद्वा तान् कथमन्येदेवा-दयोअनुगच्छेयुः कस्मै सुदासे सुदानाय आपयोबन्धुभूताव्यासाः वृष्टयोवर्षकाः अयंकर्त-रिक्तिच् इळाभिर्बहुविधैरन्नैःसह सहिताः अनुसस्रुः अनुक्रमेणावतरेयुः ॥ २ ॥

२. ये मरुद्गण रथ पर उपविष्ट हुए हैं, यह किसने सुना है अथवा इनकी रथध्वनि को किसने सुना है ? यह किस प्रकार गमन करते हैं, यह कौन जानता है ? अथवा देव आदि किस प्रकार इनका अनुगमन करें ? किस दानशील के लिए बन्धुभूत वर्षक मरुद्गण, बहुत अन्न के साथ, अवतीर्ण होंगे ?

तेमआहुर्यआययुरुपद्युभिर्विभिर्मदे ।
नरोमर्याअरेपसइमान्पश्यन्नितिष्टुहि ॥ ३ ॥

ते । मे । आहुः । ये । आऽययुः । उप । द्युऽभिः । विऽभिः । मदे । नरः । मर्याः । अरेपसः । इमान् । पश्यन् । इति । स्तुहि ॥ ३ ॥

ऋषिर्कंग्द्वयाभ्यांमरुत्प्रादुर्भावमाख्यास्यन् अनया प्रादुर्भूतान्पश्यन्नाह—तेमरुतः इत्थंलप- ते मे मह्यमाहुः येउपाययुः येमरुतोमांप्राप्ताः कैःसाधनैः द्युभिर्द्योतमानैः विभिर्गन्तृभिरश्वैः किमर्थं मदे मदाय सोमपानजनिताय किमाहुरिति तदनुब्रूते नरोनेतारोमर्याःमनुष्येभ्योहि- ताः अरेपसोऽलेपास्ते हेऋषे इमानस्मान् पश्यन् तथास्थितान् चक्षुषावलोकयन् स्तुहीत्याहुः यद्वा इतिइत्थंपश्यन्स्तुहीति ॥ ३ ॥

३. सोमपान-जनित हर्ष के लिए द्युतिमान् अश्वों पर आरोहण करके जो मरुत् हमारे निकट आये थे, उन्होंने कहा था——वे नेता, मनुष्यों के हितकर्त्ता और मूर्त्ति-हीन हैं। उस प्रकार हम लोगों को स्थित देखकर उन्होंने कहा कि हे ऋषि, स्तवन करो।

येअ॒ञ्जिषु॒येवाशी॑षु॒स्वभा॑नवः॒स्र॒क्षु॒रु॒क्मेषु॑खा॒दिषु॑।
आ॒यारथे॑षु॒धन्व॑सु॒ ॥ ४ ॥

ये। अ॒ञ्जिषु॑। ये। वाशी॑षु। स्वऽभा॑नवः। स्र॒क्षु। रु॒क्मेषु॑। खा॒दिषु॑। आ॒याः। रथे॑षु। धन्व॑ऽसु॒ ॥ ४ ॥

अनया मरुतांस्वरूपंनिरूपयति हेमरुतोयुष्माकं येप्रसिद्धाः स्वभानवः स्वदीप्तयोंजि- षुआभरणेषु आयाःआश्रयभूताःसन्ति येच वाशीष्वायुधेषु येच स्रक्षु माल्येषु येरुक्मेषु उरोभूष- णेषु येचखादिषु हस्तपादस्थितकटकेषु हस्तेषुखादिश्चक्रतिर्श्चपत्सुखादयइतिहश्रुतीभवतः।रथेषु धन्वसुच येचस्वभानवः आयाःसन्ति सुधन्वानइषुमन्तः सुरथाः पृश्निमातरइतिचनिगमः। ता- न्सर्वान्स्तुमइतिशेषः यद्वा येस्वभानवः स्वायत्तदीप्तयोमरुतोंजिषु आभरणेषु निमित्तेषु आयाआश्रयाभविष्यामः येचवाशीषुनिमित्तेषु एवंसर्वत्रयोज्यं तादृग्विधानिमान् पश्यन् स्तु- हीतिपूर्वत्रसंबन्धः तेषामेवेदंवाक्यं ॥ ४ ॥

४. हे मरुतो, जो दीप्ति तुम लोगों के आभरण के आश्रयभूत है, जो आयुधों में है जो माला-विशेष में है, जो उरोभूषण में है और जो हस्त-पादस्थित कटक में है एवम् जो दीप्ति रथ तथा धनुष में विद्यमान है उन समस्त दीप्तियों की हम वंदना करते हैं।

अथपंचमी—

यु॒ष्माकं॑स्मा॒रथाँ॒अनु॑मु॒दे द॑धेमरुतोजीरदानवः।
वृ॒ष्टीद्यावो॑य॒तीरि॑व ॥ ५ ॥ ११ ॥

यु॒ष्माक॑म्। स्म॒। रथा॑न्। अनु॑। मु॒दे। द॒धे। म॒रु॒तः॒। जीर॑ऽदा॒न॒वः। वृ॒ष्टी। द्याव॑ः। य॒तीः॑ऽइव ॥ ५ ॥ ११ ॥

---

१ ऋ० सं० २, ४. ६. । २ ऋ० सं० ४, ३. १६. । ३ ऋ० सं० ४. ३, २१. ।

हेजीरदानवः शीघ्रदानाः हेमरुतः युष्माकंरथान् अनुउद्दिश्य मुदे मोदाय दधे धारयामि करोमीत्यर्थः सामर्थ्यात्स्तुतीरितिलभ्यते स्मेतिपूरणः वृष्टीवृष्ट्यायतीःसर्वत्रगच्छन्तीः द्यावोदीप्तिरिवदृश्यमानान्रथानितिसंबंधः ॥ ५ ॥

५. हे शीघ्र दान देनेवाले मरुतो, वृष्टि की सर्वत्र गमनशील दीप्ति की तरह तुम लोगों के दृश्यमान रथ को देखकर हम प्रमुदित होते हैं और स्तुति करते हैं।

॥ इतिचतुर्थस्यतृतीयेएकादशोवर्गः ॥ ११ ॥

कारीयंतिस्रःपिंड्योहोतव्याः तत्रद्वितीयायाआयंनरइत्यनुवाक्या सूत्रितंच—आयंनरःसुदानवोददाशुषेविद्युन्महसोनरोअश्मदिद्यवइति।

सैषाषष्ठी—

आयंनरःसुदानवोददाशुषेदिवःकोशमचुच्यवुः।
विपर्जन्यंसृजन्तिरोदसीअनुधन्वनायन्तिवृष्टयः ॥ ६ ॥

आ। यम्। नरः। सुऽदानवः। ददाशुषे। दिवः। कोशम्।
अचुच्यवुः। वि। पर्जन्यम्। सृजन्ति। रोदसी इति। अनु।
धन्वना। यन्ति। वृष्टयः ॥ ६ ॥

नरोनेतारः सुदानवः शोभनदानाः मरुतोयंकोशं मेघनामैतत् अपांकोशवद्धारकं मेघं ददाशुषे हविर्दत्तवतेयजमानाय दिवोन्तरिक्षात् आअचुच्यवुः आच्यावयन्ति पर्जन्यं मेघं रोदसीअनु द्यावापृथिव्यावनुसृत्य विसृजन्ति विमोचयन्ति पश्चात् धन्वना सर्वत्र गच्छतोदकेनसह वृष्टयोवृष्टिप्रदामरुतोयन्ति सर्वत्रव्याप्नुवन्ति ॥ ६ ॥

६. नेता तथा शोभन दानवाले मरुद्गण हवि देनेवाले यजमान के लिए अन्तरिक्ष से जलधारक मेघ को बरसाते हैं। वे द्यावा-पृथिवी के लिए मेघ को विमुक्त करते हैं। इसके अनन्तर वृष्टिप्रद मरुत् सर्वत्र गमनशील उदक के साथ व्याप्त होते हैं।

ततृदानाःसिन्धवःक्षोदसारजःप्रसस्रुर्धेनवोयथा।
स्यन्नाअश्वाइवाध्वनोविमोचनेवियद्वर्तन्तएन्यः ॥ ७ ॥

ततृदानाः। सिन्धवः। क्षोदसा। रजः। प्र। सस्रुः। धेनवः।
यथा। स्यन्नाः। अश्वाःऽइव। अध्वनः। विऽमोचने। वि।
यत्। वर्तन्ते। एन्यः ॥ ७ ॥

सिन्धवः स्यन्दमानाअपः ततृदानाः निर्भिदन्तोमेघावमरुतः क्षोदसा उदकेनसह रजोन्तरिक्षं प्रसस्रुः प्रसरन्ति धेनवोयथापयःसिंचन्त्योनवप्रसूतिकागावइव किंचदृष्टान्तान्तरं स्यन्नाआशुगतयोश्वाइव यथाध्वनोविमोचने मनुष्याणामध्वविमोकायसंचरन्तितथेत्यर्थः यद्यदाएन्यः नदीनामैतत् नद्योविवर्तन्ते विविधंसंचरन्ति अथवा प्रतिनिवृत्य वर्तन्ते प्रवर्धन्तेइत्यर्थः तदेवंकुर्वन्तीतिपूर्वत्रान्वयः ॥ ७ ॥

७. निर्भिद्यमान मेघ से निःसृत जलराशि उदक के साथ अन्तरिक्ष में प्रसारित होती हैं, जैसे दुग्ध सिञ्चन करनेवाली नवप्रसूता गौ हो। मार्ग में जाने के लिए विमुक्त शीघ्रगामी अश्व की तरह नदियाँ महावेग से प्रधावित होती हैं।

आ यात मरुतो दिव आन्तरिक्षादमादुत । माव स्थात परावतः ॥८॥

आ । यात । मरुतः । दिवः । आ । अन्तरिक्षात् । अमात् । उत । मा । अव । स्थात । पराऽवतः ॥ ८ ॥

हेमरुतः परावतः अत्यन्तदूरदेशात् दिवोद्युलोकादायात तथाअन्तरिक्षादायात उतअपिच अमात् अस्माल्लोकादायात परावतइत्यत्रवायोज्यम् परावतोदूरदेशेतत्रतत्रद्युलोकादौ मावस्थात अवस्थितिंमाकुरुत ॥ ८ ॥

८. हे मरुतो, तुम लोग द्युलोक से, अन्तरिक्ष से अथवा इसी लोक से आगमन करो। दूर देश द्युलोक इत्यादि में अवस्थान नहीं करो।

मा वो रसानितभा कुभा क्रुमुर्मा वः सिन्धुर्नि रीरमत् ।
मा वः परि ष्ठात्सरयुः पुरीषिण्यस्मे इत्सुम्नमस्तु वः ॥ ९ ॥

मा । वः । रसा । अनितभा । कुभा । क्रुमुः । मा । वः । सिन्धुः । नि । रीरमत् । मा । वः । परि । स्थात् । सरयुः । पुरीषिणी । अस्मे इति । इत् । सुम्नम् । अस्तु । वः ॥ ९ ॥

हेमरुतोवोयुष्मान् रसा नदीनामैतत् रसानदीभवतीतिनिरुक्तं। रसनवती शब्दवती अनितभा इतामाप्ताभायस्याःसाइतभा नतादृशीअनितभा कुभा कुत्सितदीप्तिश्च मानिरीरमत् मा निरुद्धंरमतु क्रुमुः सर्वत्रक्रमणः सिन्धुः समुद्रश्च मानिरीरमत् तथापुरीषिणीपुरीषमुदकं तद्वतीसरयुरपि मापरिष्ठात् परितस्तिष्ठतु मानिरुणद्धु अस्मेइत् अस्मास्वेवअस्तु सुम्नं त्वदागमनजनितंसुखं वोयुष्माकंसंबन्धि युष्मत्स्वभूतम् ॥ ९ ॥

९. हे मरुतो, रसा, अनितभा और कुभा नाम की नदियाँ एवम् सर्वत्र गमनशील सिन्धु (समुद्र) तुम लोगों को नहीं रोकें। जलमयी सरयू तुम लोगों को निरुद्ध नहीं करें। हम सब तुम्हारे आगमन-जनित सुख प्राप्त करें।

अथदशमी—

तंवःशर्धंरथानांत्वेषंगणंमारुतंनव्यसीनाम्।अनुप्रयन्तिवृष्टयः॥१०॥१२॥

तम्। वः। शर्धम्। रथानाम्। त्वेषम्। गणम्। मारुतम्।
नव्यसीनाम्। अनु। प्र। यन्ति। वृष्टयः॥ १०॥ १२॥

तंमारुतमित्यनेनसंबध्यते वोयुष्माकं प्रेरकं नव्यसीनांनूतनानां रथानां शर्धं बलं त्वेषं दीप्तं तंमारुतंगणंच स्तौमीत्यर्थः यद्वा रथानां रंहणशीलानां वोयुष्माकं शर्धं परेषामभिभावुकं गणंस्तौमीत्येकमेववाक्यं अथपरोक्षकृतः वृष्टयोयुष्माननुप्रयन्ति प्रकर्षेणगच्छन्ति यद्वा वर्षकामरुतःअनुअनुकूलंप्रकृष्टं यन्तिगच्छन्ति॥ १०॥

१०. तुम लोगों के प्रेरक नूतन रथ के बल पर और दीप्त मरुद्गण का हम स्तवन करते हैं। वृष्टि मरुतों का अनुगमन करती है अथवा वृष्टि-प्रद मरुद्गण सर्वत्र गमन करते हैं।

शर्धंशर्धंवएषांव्रातंव्रातंगणंगणंसुशस्तिभिः।अनुक्रामेमधीतिभिः॥ ११॥

शर्धम्ऽशर्धम्। वः। एषाम्। व्रातम्ऽव्रातम्। गणम्ऽगणम्।
सुशस्तिऽभिः। अनु। क्रामेम। धीतिऽभिः॥ ११॥

हेमरुतः एषांवोयुष्माकं शर्धंशर्धं तत्तद्बलं व्रातंव्रातं अविवक्षितगणोव्रातः तंतंव्रातं वोगणंगणं तंतंसप्तसप्तसमुदायात्मकंगणंगणंच सुशस्तिभिः शोभनस्तुतिभिः धीतिभिः कर्मभिः हविःप्रदानादिलक्षणैरनुक्रामेम अनुगच्छेम॥ ११॥

११. हे मरुतो, हम शोभन स्तुति और हविः प्रदानादि लक्षण कार्य-द्वारा तुम्हारे बल को, अविवक्षित गण का और सप्त-सप्त समुदायात्मक गण का अनुसरण करते हैं।

अथद्वादशी—

कस्माअद्यसुजातायरातहव्यायप्रययुः।एनायामेनमरुतः॥१२॥

कस्मै। अद्य। सुऽजाताय। रातऽहव्याय। प्र। ययुः। एना।
यामेन। मरुतः॥ १२॥

अद्यास्मिन्दिने कस्मै सुजाताय रातहव्याय दत्तहविष्काय प्रययुः प्रकर्षेणगच्छेयुः एना अनेन यामेन रथेनमरुतः॥ १२॥

१२. आज के दिन किस हव्य देनेवाले यजमान के निकट, प्रकृष्ट रथ-द्वारा, मरुद्गण गमन करेंगे?

अथत्रयोदशी—

येनं तोकाय तनयाय धान्यं १ बीजं वहंध्वे अक्षितम् ।
अस्मभ्यं तद्धत्तन यद्व ईमहे राधो विश्वायु सौभंगम् ॥ १३ ॥

येनं । तोकार्य । तनयाय । धान्यम् । बीजम् । वहंध्वे ।
अक्षितम् । अस्मभ्यम् । तत् । धत्तन । यत् । वः । ईमहे । राधः ।
विश्वऽआयु । सौभंगम् ॥ १३ ॥

हेमरुतोयेनसदयेनमनसा तोकाय पुत्राय तनयाय तत्पुत्राय धनायवा धान्यं बीजं अक्षितं अक्षीणं वहध्वे धारयध्वे तेनचित्तेनास्मभ्यं तद्धान्यंबीजं धत्तन यच्चवोयुष्मानीमहे याचामहे राधोधनं विश्वायु सर्वान्नोपेतं कृत्स्नायुष्योपेतंवा सौभगं सौभाग्यंच तद्धत्तनेतिसमन्वयः ॥ १३ ॥

१३. जिस दयायुक्त हृदय से तुम लोग पुत्र और पौत्र को अक्षीण धान्यबीज बहु बार प्रदान करते हो, उसी चित्त से हम लोगों को भी वह धान्यबीज प्रदान करो। क्योंकि हम लोग तुम्हारे निकट सर्वान्नोपेत अथवा आयुर्युक्त तथा सौभाग्यात्मक धन की याचना करते हैं।

अतीयाम निदस्तिरः स्वस्तिभिर्हित्वावद्यमरातीः ।
वृष्ट्वी शं योराप उस्रि भेषजं स्याम मरुतः सह ॥ १४ ॥

अति । इयाम । निदः । तिरः । स्वस्तिऽभिः । हित्वा । अवद्यम् ।
अरातीः । वृष्ट्वी । शम् । योः । आपः । उस्रि । भेषजम् ।
स्याम । मरुतः । सह ॥ १४ ॥

हेमरुतोवयं स्वस्तिभिः क्षेमैरवद्यंपापं हित्वा परित्यज्य निदोनिन्दकानरातीःशत्रून् तिरःप्राप्तान् यद्वा तिरःअन्तर्हितान् अतीयाम अतिक्रम्यगच्छेम तिरस्कुर्मइत्यर्थः अनेनानिष्टपरिहारःप्रार्थितः उत्तरेणेष्टप्राप्तिरुच्यते वृष्ट्वी वृष्टिषुयुष्मत्प्रेरितासु सतीषु शं सुखं योः पापानांयावनंच आपउदकानि शसःस्थानेजस् उस्रि गोयुक्तंभेषजं यद्यप्येतदुदकनाम तथापिपृथगपामभिधानादत्रतद्धेतुकार्यमन्नमुच्यते तत्सर्वंसहस्याम लभेमहि हेमरुतोवयं यद्वा अपोयुष्मत्प्रेरिताः उदकंसर्वंकुर्वन्तु वयंसर्वेसहैवस्याम भवेमयुष्मत्स्वभूताः ॥ १४ ॥

१४. हे मरुतो, हम लोग कल्याण-द्वारा पाप को परित्याग करके निन्दक शत्रुओं को जीतें। तुम्हारे द्वारा वृष्टि के प्रेरित होने पर हम सुख, पाप-निवारक उदक और गोयुक्त औषध प्राप्त करें।

अथपंचदशी—

सुदेवःसमहासतिसुवीरोनरोमरुतःसमर्त्यः । यंत्रायध्वेस्यामते ॥१५॥

सुऽदेवः । समह । असति । सुऽवीरः । नरः । मरुतः । सः ।
मर्त्यः । यम् । त्रायध्वे । स्याम । ते ॥ १५ ॥

हेसमह प्रशस्तवचनःसमहशब्दः हेपूजित मरुतांगण सुदेवः कल्याणमरुत्संज्ञकदेवोपेतः असति भवति हेनरोनेतारः हेमरुतः समर्त्यः सुवीरः शोभनपुत्राद्युपेतश्च असति भवति यंमर्त्यं त्रायध्वे पालयध्वे सएवंभवति तेचयंस्यामयुष्मदीयाः ॥ १५ ॥

१५. हे पूजित और नेता मरुतो, तुम लोग जिसकी रक्षा करते हो, यह देवों-द्वारा अनुगृहीत और शोभन पुत्र-पौत्रादि से युक्त होता है । हम लोग उसी व्यक्ति की तरह हों; क्योंकि हम लोग तुम्हारे ही हैं ।

स्तुहिभोजान्स्तुवतोअस्ययामनिरणन्गावोनयवसे ।
यतःपूर्वाँइवसखीँरनुह्वयगिरागृणीहिकामिनः ॥ १६ ॥ १३ ॥

स्तुहि । भोजान् । स्तुवतः । अस्य । यामनि । रणन् । गावः ।
न । यवसे । यतः । पूर्वान्ऽइव । सखीन् । अनु । ह्वय । गिरा ।
गृणीहि । कामिनः ॥ १६ ॥ १३ ॥

हेऋषे स्तुवतः स्तुतिंकुर्वतोऽस्ययजमानस्य यामनि यज्ञे भोजान् दातॄन्मरुतःस्तुहि गावोनयवसे तृणादिभक्षणायगच्छन्त्योगावोयथारमन्ते तद्वन्मरुतोपि रणन् रमन्तां यतोगच्छतोमरुतः पूर्वान् पुरातनान् सखीनिवानुह्वय आह्वय कामिनस्तुतीच्छावतोमरुतोगिरास्तुत्या गृणीहिस्तुहि ॥ १६ ॥

१६. हे ऋषि, स्तुति करनेवाले इस यजमान के यज्ञ में तुम दाता मरुद्गण की स्तुति करो । तृणादि भक्षण करने के लिए गमन करनेवाली गौओं की तरह मरुद्गण आनन्दित होते हैं । पुरातन बन्धु की तरह गमनशील मरुतों का आह्वान करो । स्तवन की इच्छा करनेवाले मरुतों की, वचन-द्वारा, स्तुति करो ।

प्रशर्धायेतिपंचदशर्चंदशमंसूक्तं श्यावाश्वस्यार्षं मरुद्देवताकं चतुर्दशीत्रिष्टुप् शिष्टाजगत्यः प्रशर्धायपंचोनात्रागतमुपान्त्यात्रिष्टुबित्यनुक्रान्तं सूक्तविनियोगोलैंगिकः आग्नेन्द्रामारुतयामप्रभृतस्ययाज्या सूत्रितंच—प्रशर्धायमारुतायस्वभानवइत्यैन्द्रीमनूच्यमारुत्यायजेदिति ।

प्रशर्धायमारुतायस्वभानवइमांवाचमनजापर्वतच्युते ।
घर्मस्तुभेदिवआपृष्ठयज्वनेद्युम्नश्रवसेमहिनृम्णमर्चत ॥ १ ॥

प्र । शर्धाय । मारुताय । स्वऽभानवे । इमाम् । वाचम् ।
अनज । पर्वतऽच्युते । घर्मऽस्तुभे । दिवः । आ । पृष्ठऽयज्वने ।
द्युम्नऽश्रवसे । महि । नृम्णम् । अर्चत ॥ १ ॥

प्रअनजेतिसंबन्धः मारुताय मरुत्संबन्धिने शर्धायबलाय इमां क्रियमाणां वाचं स्तुतिं प्रानज प्रापय कीदृशाय स्वभानवे स्वायत्ततेजसे पर्वतच्युते पर्वतस्यच्यावयित्रे घर्मस्तुभे घर्मस्यस्तोभयित्रे दिवआद्युलोकादागच्छते पृष्ठयज्वने षट्पृष्ठैरथंतरबृहदादिभिरीजानाय द्युम्नश्रवसे द्योतमानान्नाय महि महत् प्रभूतं नृम्णं धनं हविर्लक्षणंअर्चत ददतेत्यर्थः ॥ १ ॥

१. मरुत्सम्बन्धी बल के लिए इस क्रियमाण स्तुति को प्रेषित करो अर्थात् मरुतों के बल की प्रशंसा करो। वे स्वयं तेजोविशिष्ट पर्वतों को विदीर्ण करनेवाले, घर्मशोषक, द्युलोक से आगत और द्युतिमान् अन्नवाले हैं। इन्हें प्रचुर अन्न प्रदान करो।

कारीर्यांप्रथमस्याःपिंड्याःप्रवोमरुतइतियाज्या सूत्रितंच—प्रवोमरुतस्तविषाउदन्यवआयंनरइति ।

प्रवोमरुतस्तविषाउदन्यवोवयोवृधोअश्वयुजःपरिज्रयः ।
संविद्युतादधतिवाशतित्रितःस्वरन्त्यापोवनापरिज्रयः ॥ २ ॥

प्र । वः । मरुतः । तविषाः । उदन्यवः । वयःऽवृधः । अश्वऽयुजः ।
परिऽज्रयः । सम् । विऽद्युता । दधति । वाशति । त्रितः ।
स्वरन्ति । आपः । अवना । परिऽज्रयः ॥ २ ॥

हेमरुतोवोयुष्माकं गणाः प्रप्रादुर्भवंति कीदृशागणाः तविषाः दीप्तामहान्तोवा उदन्यवः उदकेच्छवोजगद्रक्षार्थं वयोवृधोन्नस्यवर्धयितारः अश्वयुजः गमनायरथेश्वानांयोक्तारः परिज्रयः परितोगन्तारः यदा विद्युतासंदधतिसंगच्छन्ते तदानीं त्रितः त्रिषुस्थानेषु तायमानोमेघोमरुद्गणोवा वाशति शब्दयति अस्मिन्पक्षेसंघवादोयं तदाआपःपरिज्रयःपरितोगंत्र्यः आपोवनाअवनौभूमौस्वरंत्यधःपतंति ॥ २ ॥

२. हे मरुतो, तुम्हारे गण प्रादुर्भूत होते हैं। वे दीप्तिमान् जगद्रक्षणार्थ जलाभिलाषी, अन्न के वर्द्धयिता, गमन करने के लिए अश्वों को रथ में युक्त करनेवाले सर्वत्र गमनशील और विद्युत् के साथ सम्मिलित होनेवाले हैं। उसी समय त्रित (मेघ या मरुद्गण) शब्द करते हैं और चतुर्दिक् गमन करनेवाली जलराशि भूमि पर पतित होती है।

विद्युन्महसइतितृतीयाकारीर्यामेवद्वितीयस्याःपिंडयायाज्या सूत्रितंच—विद्युन्महसोनरोश्मदिद्यवःकृष्णंनियानंहरयःसुपर्णाइति । तत्पाठस्तु ।

विद्युन्महसोनरोअश्मदिद्यवोवातत्विषोमरुतःपर्वतच्युतः ।
अब्दयाचिन्मुहुराह्रादुनीवृतस्तनयदमारभसाउदोजसः ॥ ३ ॥

विद्युत्ऽमहसः । नरः । अश्मऽदिद्यवः । वातऽत्विषः । मरुतः ।
पर्वतऽच्युतः । अब्दऽया । चित् । मुहुः । आ । ह्रादुनिऽवृतः ।
स्तनयत्ऽअमाः । रभसाः । उत्ऽओजसः ॥ ३ ॥

विद्युन्महसोविद्योतमानतेजसोनरोवृष्ट्यादेर्नेतारः अश्मदिद्यवोव्याप्तायुधाः अश्मसारमयायुधावा वातत्विषः प्राप्तदीप्तयः पर्वतच्युतः पर्वतानांमेघानांवाच्यावयितारः अब्दयामुहुःउदकानांदातारः शसोयाजादेशः चिदितिपूरणः ह्रादुनीवृतः ह्रादुन्याः अशनेःप्रवर्तकाः स्तनयदमाः अमाशब्दःसाहित्यवाची शब्दोपेतगणाइत्यर्थः रभसा वृष्ट्यर्थमुद्युंजानाः उदोजसः उद्धतबलाः मरुतोवृष्ट्यर्थमादुर्भवन्तीत्यर्थः ॥ ३ ॥

३. द्युतिमान् तेजवाले, वृष्टि आदि के नेता, आयुध से युक्त (पत्थर रूप आयुधवाले), प्रदीप्त, पर्वत अथवा मेघ को विदीर्ण करनेवाले, बारम्बार उदक-दाता, वज्रक्षेपक, एकत्र शब्द करनेवाले, उद्धतवल, मरुद्गण वृष्टि के लिए प्रादुर्भूत होते हैं ।

व्य१क्तून्रुद्राव्यहानिशिक्कसोव्य१न्तरिक्षंविरजांसिधूतयः ।
वियदज्राँअजथनावईयथाविदुर्गाणिमरुतोनाहरिष्यथ ॥ ४ ॥

वि । अक्तून् । रुद्राः । वि । अहानि । शिक्वसः । वि । अन्तरिक्षम् ।
वि । रजांसि । धूतयः । वि । यत् । अज्रान् । अजथ । नावः ।
ईम् । यथा । वि । दुःऽगानि । मरुतः । न । अह । रिष्यथ ॥ ४ ॥

हेरुद्राः रुद्रपुत्रामरुतः अक्तून् रात्रीः विअजथेत्युत्तरार्धगतेनसंबध्यते एवंसर्वत्रेति क्षिपथेतितस्यार्थः अहा अहान्यपि व्यजथ हेशिक्वसः शक्ताः सर्वमपिकर्तुं अन्तरिक्षं व्यजथ तथा रजांसि लोकान् व्यजथ धूतयःकंपकाः यद्यदा अज्रान् मेघान् व्यजथ गमयथ नावईं नावयथासमुद्रंतद्वत् दुर्गाणिशत्रुनगराणि विव्यजथ हेमरुतोनाहरिष्यथ नैवहिंसथ ॥ ४ ॥

४. हे रुद्रपुत्र मरुतो, तुम लोग अहोरात्र को प्रवर्तित करो । हे सर्वसमर्थ, तुम लोग अन्तरिक्ष तथा लोकों को विक्षिप्त करो । हे कम्पनकारी, तुम लोग समुद्रगर्भस्थ नौका की तरह मेघों को कम्पित करो । तुम लोग शत्रुओं के नगरों को विध्वस्त करो । हे मरुतो, हिंसा मत करो ।

तद्वीर्यंवोमरुतोमहित्वनंदीर्घंततानसूर्योनयोजनम् ।
एतानयामेअगृभीतशोचिषोनश्वदांयन्ययातनागिरिम् ॥५॥१४॥

तत् । वीर्यम् । वः । मरुतः । महिऽत्वनम् । दीर्घम् । ततान । सूर्यः । न । योजनम् । एताः । न । यामे । अगृभीतऽशोचिषः । अनश्वऽदाम् । यत् । नि । अयातन । गिरिम् ॥ ५ ॥ १४ ॥

हेमरुतोवोयुष्माकं तद्वीर्यं प्रसिद्धं सामर्थ्यं महित्वनं महत्त्वं दीर्घं अत्यन्तमायतं ततान तनोति स्तोता लोके सूर्योन योजनंसूर्यस्तेजइव एतान एतवर्णादेवानामश्वाइव तेयथा यामे गमने योजनंदीर्घंतन्वंति तद्वदित्यपरोदृष्टान्तः तेचागृभीतशोचिषः अगृहीततेजस्काः यद्वै-तन्मरुतांविशेषणं हेमरुतोयूयमगृभीतशोचिषःसन्तोयद्यदा अनश्वदां व्यापकोदकादातारं पणिभिरपहृतानां अश्वानामप्रदातारंवा गिरिं मेघं पर्वतं वा न्ययातन निहतवन्तः ॥ ५ ॥

५. हे मरुतो, सूर्य जिस तरह से बहुत दूर तक अपनी दीप्ति को विस्तारित करते हैं अथवा देवों के अश्व जिस तरह से गमन में दीर्घता को विस्तारित करते हैं, उसी तरह से तुम्हारे सुप्रसिद्ध वीर्य और महिमा को स्तोता लोग दूर तक विस्तारित करते हैं।

अभ्राजिशर्धोमरुतोयदर्णसंमोषथावृक्षंकपनेववेधसः ।
अधस्मानोअरमतिंसजोषसश्चक्षुरिवयन्तमनुनेषथासुगम् ॥६॥

अभ्राजि । शर्धः । मरुतः । यत् । अर्णसम् । मोषथ । वृक्षम् । कपनाऽइव । वेधसः । अध । स्म । नः । अरमतिम् । सऽजोषसः । चक्षुःऽइव । यन्तम् । अनु । नेषथ । सुऽगम् ॥ ६ ॥

हेवेधसोवृष्टेर्विधातारः हेमरुतः शर्धोभवतांगणमभ्राजि भ्राजते यद्यस्मादर्णसमुदकवन्तं वृक्षं वृश्च्यते विदार्यतेइतिवृक्षोमेघः तंमोषथ ताडयथेत्यर्थः कपनाइव इवेत्यनर्थकः कंपनाः सन्तः यद्वा कंपनाः क्रिमयोवृक्षंघुणादयः तेयथा मुष्णंतितद्वत् अध अपिच स्मेतिपूरणः नो-स्मान्मामित्यर्थः हेसजोषसः युष्मासु परस्परंसमानप्रीतयोयूयं अरमतिं आरमणं धनादिकं प्रतियन्तं गच्छन्तं अनुनेषथ अनुक्रमेणनयथ सुगं सुगमनंमार्गं तत्रदृष्टान्तः—चक्षुरिव तद्य-थामार्गप्रदर्शनेननायकंभवतितद्वत् ॥ ६ ॥

६. हे वृष्टि के विधाता मरुतो, तुम लोग उदकवान् मेघ को ताड़ित करते हो। तुम्हारा बल शोभमान होता है। हे परस्पर समान प्रीतिवाले मरुतो, नयन जिस तरह से मार्गप्रदर्शन में नायक होता है, उसी तरह से तुम लोग हमें सुगम मार्ग-द्वारा धनादि के समीप ले जाओ।

अथसप्तमी–

नसजीयतेमरुतोनहन्यतेनस्रेधतिनव्यथतेनरिष्यति ।
नास्यरायउपदस्यन्तिनोतयऋषिंवायंराजानंवासुषूदथ ।। ७ ।।

न । सः । जीयते । मरुतः । न । हन्यते । न । स्रेधति । न । व्यथते ।
न । रिष्यति । न । अस्य । रायः । उप । दस्यन्ति । न । ऊतयः ।
ऋषिम् । वा । यम् । राजानम् । वा । सुसूदथ ।। ७ ।।

हेमरुतोयूयं यमृषिं मंत्रद्रष्टारं ब्राह्मणं राजानंवा सुषूदथ क्षारयथ प्रेरयथ सत्कर्मसुसऋषिः राजावानजीयते अन्यैर्नपराभाव्यते जिजयेज्यावयोहानावित्यस्यवारूपं हेमरुतः नहन्यते नहिंस्यते अत्यर्थं प्राणैर्नवियुज्यते नस्रेधति नक्षीयते नव्यथते नपीड्यते नरिष्यति नहिंस्यते अत्रहिंसाबाधमात्रं नास्यरायोधनानि नोपदस्यन्ति नोपक्षीयन्ते तथानोतयोरक्षाअप्युपदस्यन्ति ॥ ७ ॥

७. हे मरुतो, तुम लोग जिस मन्त्र-द्रष्टा ब्राह्मण या राजा को सत्कर्म में प्रेरित करते हो, वह दूसरों के द्वारा न पराभूत होता है और न हिंसित होता है। वह न कभी क्षीण होता है, न पीड़ित होता है और न कोई बाधा प्राप्त करता है। उसका धन और उसकी रक्षा कभी नष्ट नहीं होती है।

कारीर्यमिवतृतीयस्याःपिंडयायाज्यानियुत्वंतइत्येषा सूत्रितंच–नियुत्वंतोग्रामजितोयथानरोग्नेबाधस्वविमृधोविदुर्गहेति ।

नियुत्वन्तोग्रामजितोयथानरोर्यमणोनमरुतःकवन्धिनः ।
पिन्वन्त्युत्संयदिनासोअस्वरन्व्युन्दन्तिपृथिवींमध्वोअन्धसा ।। ८ ।।

नियुत्वन्तः । ग्रामऽजितः । यथा । नरः । अर्यमणः । न ।
मरुतः । कवन्धिनः । पिन्वन्ति । उत्सम् । यत् । इनासः ।
अस्वरन् । वि । उन्दन्ति । पृथिवीम् । मध्वः । अन्धसा ।। ८ ।।

नियुत्वंतोनियुत्संज्ञकैरश्वैस्तद्वन्तोमरुतः ग्रामजितः संघात्मकस्यपदार्थस्यविश्लेषयितारः नरोनराकारानेतारोवामरुतः यद्वा नियुत्वन्तः अयंशब्दोत्राश्वसामान्येवर्तते नितरां यवनवन्तोश्ववन्तोग्रामजितःग्रामस्यजेतारोनरइवमनुष्याइवतथाभवन्ति अर्यमणोनअर्यमप्रभृतयः आदित्याइवदीप्ताइतिशेषः तादृशामरुतःकवंधिनः उदकवन्तोभवन्ति यद्यदा इनासः

ईश्वराः उत्सं कूपादिनिम्नप्रदेशं मेघंवा पिन्वन्ति प्यायर्यत्युदकेन यदा अस्वरन् शब्दयन्ति यदा व्युन्दन्ति पृथिवीं मध्वः मधुरस्योदकस्यान्धसासारेण तदैवंभवन्ति यद्वा यदा अस्वरन् तदा पिन्वंत्युत्समिनासः तदांधसः पृथिवींव्युन्दन्तीति ॥ ८ ॥

८. नियुत्संज्ञक अश्वों से युक्त, संघात्मक पदार्थों के विश्लेषयिता (मिलित पदार्थों को पृथक् करनेवाले), नराकार अथवा नेता अथवा ग्रामजेता मनुष्य की तरह और आदित्य की तरह दीप्त मरुद्गण उदकवान् होते हैं। जब वे अधिपति होते हैं, तब कूपादि निम्न प्रदेश को अथवा मेघ को जलपूर्ण करते हैं और शब्दायमान होकर सुमधुर तथा सारभूत जल से पृथ्वी को सिंचित करते हैं।

प्रवत्वंतीयंपृथिवीमरुद्भ्यःप्रवत्वतीद्यौर्भवतिप्रयद्भ्यः।
प्रवत्वंतीःपथ्याअन्तरिक्ष्याःप्रवत्वन्तःपर्वताजीरदानवः॥ ९॥

प्रवत्वंती। इयम्। पृथिवी। मरुत्ऽभ्यः। प्रवत्वंती। द्यौः।
भवति। प्रयत्ऽभ्यः। प्रवत्वंतीः। पथ्याः। अन्तरिक्ष्याः।
प्रवत्वन्तः। पर्वताः। जीरऽदानवः॥ ९॥

इयंपृथिवी मरुद्भ्योमरुतामर्थाय प्रवत्वती प्रवन्तः प्रकर्षवन्तोविस्तीर्णाः प्रदेशायस्यां साप्रवत्वती तादृशी भवति कृत्स्नापिभूमिर्मरुत्पराभवतीत्यर्थः तां सर्वामपिव्याप्नुवन्तिइतियावत् तथा द्यौरपि प्रयद्भ्यः प्रकर्षेणगच्छद्भ्यः तेभ्यः प्रवत्वतीभवति सापिमरुतांसंचाराय तथा अन्तरिक्ष्याः अन्तरिक्षेभवाः पथ्याः सुगतयोपि प्रवत्वतीः प्रवत्वत्योमरुद्भ्योभवन्ति पर्वताः अद्रयोमेघावा प्रवत्वन्तोभवन्ति जीरदानवः क्षिप्रदानामरुद्भ्यः॥ ९॥

९. यह पृथ्वी मरुतों के लिए विस्तीर्ण प्रदेशवाली होती है अर्थात् सम्पूर्ण पृथ्वी मरुतों की है। द्युलोक भी मरुतों के संचारण के लिए विस्तीर्ण होता है। अन्तरिक्षस्थित मार्ग मरुतों के गमन के लिए विस्तीर्ण होता है। मरुतों के लिए ही मेघ या पर्वत शीघ्र वर्षक होते हैं।

यन्मरुतःसभरसःस्वर्णरःसूर्यउदितेमदथादिवोनरः।
नवोश्वाःश्रथयन्ताहसिस्रतःसद्योअस्याध्वनःपारमश्नुथ॥१०॥१५॥

यत्। मरुतः। सऽभरसः। स्वःऽनरः। सूर्ये। उत्ऽइते। मदथ।
दिवः। नरः। न। वः। अश्वाः। श्रथयन्त। अह। सिस्रतः। सद्यः।
अस्य। अध्वनः। पारम्। अश्नुथ॥ १०॥ १५॥

हेमरुतः सभरसः सहबलाः स्वर्णरः सर्वस्यनेतारोयूयं यद्यदा सूर्यउदिते उद्गते मध्याह्ने मदथ सोमेन हेदिवोद्युलोकस्य नरोनेतारः यदा सोमंपातुमिच्छथेत्यर्थः तदावोश्वाः सिस्रतः

सरन्तोनाहश्रथयन्त नैवश्लथयन्ति सद्यस्तदानीमेवास्याध्वनोदेवयजनमार्गस्य पारमश्नुथ व्या-श्नुथ यद्वा यदा सोमेनमदथ तदा त्वदीयाअश्वानशिथिलाभवन्ति यूयंच कृत्स्नस्य लोकत्रय-मार्गस्य पारमश्नुथ ॥ १० ॥

१०. हे महाबलवाले सबके नेता मरुतो तथा हे द्युलोक के नेता, तुम लोग सूर्य के उदित होने पर सोमपान के लिए हृष्ट होते हो, उस समय तुम लोगों के अश्व गमनकार्य में शिथिल नहीं होते हैं। तुम लोग भी तीनों लोकों के सम्पूर्ण मार्ग को पार करते हो।

अंसेषुवऋष्टयःपत्सुखादयोवक्षःसुरुक्मामरुतोरथेशुभः।
अग्निभ्राजसोविद्युतोगभस्त्योःशिप्राःशीर्षसुवितताहिरण्ययीः ॥११॥

अंसेषु। वः। ऋष्टयः। पत्ऽसु। खादयः। वक्षःऽसु। रुक्माः। मरुतः। रथे। शुभः। अग्निऽभ्राजसः। विऽद्युतः। गभस्त्योः। शिप्राः। शीर्षऽसु। विऽतताः। हिरण्ययीः ॥ ११ ॥

हेमरुतोवोयुष्माकमंसेषु ऋष्टयआयुधानिभासन्तइतिशेषः पत्सुखादयः कटकाः वक्षःसु-रुक्माःहाराः रथेशुभः मधुरामुषाआपः अग्निभ्राजसोग्निदीप्ताः विद्युतोगभस्त्योः हस्तयोर्भास-न्तइत्यर्थः शीर्षसुशिरःसुहिरण्ययीः हिरण्यमय्यः शिप्राः उष्णीषमय्यः वितताविस्तृताः प्रति-वाक्यंवितताइतिवासंबन्धनीयं ॥ ११ ॥

११. हे मरुतो, तुम लोगों के स्कन्धप्रदेश में आयुध शोभमान होते हैं। पैरों में कटक, वक्षःस्थल में हार और रथ के ऊपर शोभमान दीप्ति है। तुम लोगों के हस्तद्वय में अग्निदीप्त रश्मियाँ हैं और मस्तक पर विस्तीर्ण हिरणमयी पगड़ी है अथद्वादशी—

तंनाकमर्योअगृभीतशोचिषंरुशत्पिप्पलंमरुतोविधूनुथ।
समच्यन्तवृजनातित्विषन्तयत्स्वरन्तिघोषंविततमृतायवः ॥१२॥

तम्। नाकम्। अर्यः। अगृभीतऽशोचिषम्। रुशत्। पिप्पलम्। मरुतः। वि। धूनुथ। सम्। अच्यन्त। वृजना। अतित्विषन्त। यत्। स्वरन्ति। घोषम्। विऽततम्। ऋतऽयवः ॥ १२ ॥

हेमरुतोअर्योगंतारोयूयं तं प्रसिद्धंनाकमादित्यं नास्मिन्नकमस्तीतिनाकः तं अगृभी-तशोचिषं असुरैरनपहृततेजस्कं तं रुशच्छुभ्रवर्णं पिप्पलमुदकं विधूनुथ विविधंचालयथ अ-यंद्विकर्मकः यद्यदा वृजना बलानि समच्यन्त संगताबलिनोभवथ हविर्भिरस्मद्वैरिविनाकृ

पश्चादतित्विषन्त दीप्ताभवथ उभयत्रपुरुषव्यत्ययः यद्वा यदा असुरावृजनाबलैः समच्यन्त अतित्विषन्त तदा घोषं भयजनकं शब्दं विततं विस्तृतं स्वरन्ति कुरुतेत्यर्थः ऋताय-वउदकमिच्छन्तोयूयं यद्वोत्तरार्धऋत्विग्यजमानपरतयाव्याख्येयः यद्यदा ऋतायवोयज्ञकामाः यजमानादयः यदा समच्यन्त संगताः वृजना बलानि अतित्विषन्त च स्वरन्ति घोषं स्तोत्रं विततं तदानीं पिप्पलं विधूनुथेतिसंबन्धः ॥ १२ ॥

१२. हे मरुतो, जब तुम लोग गमन करते हो, तब अप्रतिहत दीप्ति-शाली स्वर्ग और समुज्ज्वल वारिराशि विचलित हो जाती है। जब तुम लोग हमारे द्वारा प्रदत्त हव्य को खाकर बलशाली होते हो और उज्ज्वल भाव से दीप्ति प्रकाशित करते हो एवम् जब तुम लोग उदकवर्षण की अभिलाषा प्रकट करते हो, तब तुम लोग भीषण रूप से गर्जना करते हो।

युष्मादत्तस्यमरुतोविचेतसोरायःस्यामरथ्योवयस्वतः।
नयोयुच्छतितिष्योयथादिवो३स्मेरारन्तमरुतःसहस्रिणम् ॥ १३ ॥

युष्माऽदत्तस्य। मरुतः। विऽचेतसः। रायः। स्याम। रथ्यः। वयस्वतः। न। यः। युच्छति। तिष्यः। यथा। दिवः। अस्मे इति। ररन्त। मरुतः। सहस्रिणम् ॥ १३ ॥

हेविचेतसोविविधप्रज्ञाहेमरुतोयुष्मादत्तस्य युष्माभिर्दत्तस्य वयस्वतोन्नवतोरायो-धनस्य स्याम भवेम स्वामिनः के रथ्योरथस्वामिनोवयं योयुष्माभिर्दत्तोराः नयुच्छति नच्यवते यथा दिवःसकाशात्तिष्यआदित्योनयुच्छति तथा अस्मे अस्मासु सहस्रिणं अपरि-मितं तंरायं ररन्त रमयत हेमरुतः ॥ १३ ॥

१३. हे विविध बुद्धिवाले मरुतो, हम लोग रथाधिपति हैं। हम लोग तुम्हारे द्वारा प्रदत्त अन्नवान् धन के स्वामी हों। तुम्हारे द्वारा प्रदत्त धन कभी नष्ट नहीं होता है, जैसे आकाश से सूर्य कभी नहीं बिलग होते हैं। हे मरुतो, हम लोगों को अपरिमित धन-द्वारा आनन्दित करो।

यूयंरयिंमरुतःस्पार्हवीरंयूयमृषिमवथसामविप्रम्।
यूयमर्वन्तंभरतायवाजंयूयंधत्थराजानंश्रुष्टिमन्तम् ॥ १४ ॥

यूयम्। रयिम्। मरुतः। स्पार्हऽवीरम्। यूयम्। ऋषिम्। अवथ। सामऽविप्रम्। यूयम्। अर्वन्तम्। भरताय। वाजम्। यूयम्। धत्थ। राजानम्। श्रुष्टिऽमन्तम् ॥ १४ ॥

हेमरुतोयूयं रयिं धनं स्पार्हवीरं स्पृहणीयैःवीरैःपुत्रभृत्यादिभिरुपेतं धत्थ दत्थ हेमरुतो-यूयं सामविप्रं साम्नांविविधंप्रेरयितारं यद्वा सामसहितविप्रायस्यतादृशं ऋषिमवथ रक्षथ हे-

यूयं अर्वन्तं अश्वं वाजमन्नंचभरताय देवान् बिभ्रते श्यावाश्वाय धत्थ हेमरुतोयूयं राजानं दीप्तंस्वामिनंवा श्रुष्टिमन्तं सुखवन्तं पुत्रमित्यर्थः धत्थ ॥ १४ ॥

१४. हे मरुतो, तुम लोग धन और स्पृहणीय पुत्र-भृत्यादि प्रदान करो। हे मरुतो, तुम लोग सोमसहित विप्र की रक्षा करो। हे मरुतो, तुम लोग श्यावाश्व को धन और अन्न प्रदान करो। वे देवों का यजन करते हैं। हे मरुतो, तुम लोग राजा को सुखयुक्त करो।

तद्वोयामिद्रविणंसद्यऊतयोयेनास्व१र्णततनामनॄँरभि ।
इदंसुमेमरुतोहर्यतावचोयस्यतरेमतरसाशतंहिमाः ॥१५॥१६॥

तत् । वः । यामि । द्रविणम् । सद्यःऽऊतयः । येन । स्वः । न । ततनाम । नॄन् । अभि । इदम् । सु । मे । मरुतः । हर्यत । वचः । यस्य । तरेम । तरसा । शतम् । हिमाः ॥ १५ ॥ १६ ॥

हेसद्यऊतयः तदानीमेवरक्षायेषांतेतादृशाः सद्योगमनावा वोयुष्मान्तद्द्रविणं धनं यामि याचामहे येनधनेन नॄनस्मत्पुत्रभृत्यादीन् अभिततनाम स्वर्णआदित्यइवरश्मीन् हेमरुतोमेमम स्वभूतमिदं इदानींक्रियमाणं वचः स्तोत्रं सु सुष्ठु हर्यत कामयध्वं यस्यस्तोत्रवचसः तरसा बलेनशतं शतसंख्याकान् हिमाः हेमन्तान् तरेम शतसंवत्सरंजीवेमेत्यर्थः ॥ १५ ॥

१५. हे सद्यः रक्षणशील मरुतो, तुम लोगों से हम धन की याचना करते हैं। सूर्य जिस तरह से अपनी रश्मि को दूर तक विस्तारित करते हैं, उसी तरह से हम भी अपने पुत्र-भृत्यादि को उसी धन से विस्तारित करें। हे मरुतो, तुम लोग हमारे इस स्तोत्र की कामना करो, जिससे हम सौ हेमन्त अतिक्रमण करें अर्थात् सौ वर्ष जीवित रहें।

प्रयज्यवइतिदशर्चंएकादशंसूक्तं श्यावाश्वस्यार्षंमारुतं दशमीत्रिष्टुप् शिष्टाजगत्यः प्रयज्यवोदशान्त्यात्रिष्टुबित्यनुक्रमणिका। आभिप्लविकेषष्ठेहनिआग्निमारुतइदंसूक्तंमारुतनिविद्धानीयं सूत्रितंच—प्रयज्यवइमंस्तोममित्याग्निमारुतमिति।

प्रयज्यवोमरुतोभ्राजदृष्टयोबृहद्वयोदधिरेरुक्मवक्षसः ।
ईयन्तेअश्वैःसुयमेभिराशुभिःशुभंयातामनुरथाअवृत्सत ॥ १ ॥

प्रऽयज्यवः । मरुतः । भ्राजत्ऽऋष्टयः । बृहत् । वयः । दधिरे । रुक्मऽवक्षसः । ईयन्ते । अश्वैः । सुऽयमेभिः । आशुऽभिः । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥ १ ॥

प्रयज्यवः प्रकर्षेणयष्टारोभ्राजदृष्टयोदीप्तायुधाः मरुतः बृहत् प्रभूतम् वयोयौवनलक्षणं प्रभूतमन्नंवा दधिरे धारयन्ति रुक्मवक्षसोहारायतवक्षस्काः तेमरुतः सुयमेभिः सुखेननियमितुंशक्यैः आशुभिः शीघ्रगैरश्वैरीयन्तेप्राप्यन्ते शुभं शोभनंयथाभवतितथा यद्वोदकमभिलक्ष्य यातां गच्छतां मरुतांरथाअप्यन्ववृत्सत अनुवर्तन्ते ॥ १ ॥

१. अतिशय यष्टव्य और दीप्त आयुधवाले मरुद्गण यौवन रूप प्रभूत अन्न धारण करते हैं। वे वक्षःस्थल पर हार धारण करते हैं। सुख-पूर्वक नियमन योग्य (विनीत) तथा शीघ्रगामी अश्व उन्हें वहन करते हैं। शोभन भाव से अथवा उदक के प्रति गमन करनेवाले मरुतों के रथ सबके पश्चात् गमन करते हैं।

स्वयंदधिध्वेतविषींयथाविदबृहन्महान्तउर्वियाविराजथ।
उतान्तरिक्षंममिरेव्योजसाशुभंयातामनुरथाअवृत्सत ॥ २ ॥

स्वयम्। दधिध्वे। तविषीम्। यथा। विद। बृहत्। महान्तः। उर्विया। वि। राजथ। उत। अन्तरिक्षम्। ममिरे। वि। ओजसा। शुभम्। याताम्। अनु। रथाः। अवृत्सत ॥ २ ॥

हेमरुतोयूयं स्वयंअसहायेनैव दधिध्वे धारयध्वे कुरुध्वइत्यर्थः किं तविषीं बलं सामर्थ्यं यथाविद जानीथ अप्रतिबद्धसामर्थ्याइत्यर्थः हेमहान्तोयूयं उर्वियाउरवः सन्तोविराजथ उतापिचान्तरिक्षं ओजसा बलेन विममिरे व्याप्नुथ शुभमित्यादिगतं ॥ २ ॥

२. हे मरुतो, तुम लोग जैसा जानते हो अर्थात् जो उचित समझते हो, वैसी सामर्थ्य स्वयम् धारण करते हो--तुम्हारी सामर्थ्य अप्रतिबद्ध है। हे मरुतो, तुम लोग महान् और दीर्घ होकर शोभमान होओ; अन्तरिक्ष को बल-द्वारा व्याप्त करो। शोभमान भाव से अथवा उदक के प्रति गमन करनेवाले मरुतों के रथ सबके पश्चात् गमन करते हैं।

साकंजाताःसुभ्वःसाकमुक्षिताःश्रियेचिदाप्रतरंवावृधुर्नरः।
विरोकिणःसूर्यस्येवरश्मयःशुभंयातामनुरथाअवृत्सत ॥ ३ ॥

साकम्। जाताः। सुऽभ्वः। साकम्। उक्षिताः। श्रिये। चित्। आ। प्रऽतरम्। ववृधुः। नरः। विऽरोकिणः। सूर्यस्यऽइव। रश्मयः। शुभम्। याताम्। अनु। रथाः। अवृत्सत ॥ ३ ॥

साकं सहैवजाताउत्पन्नाः सुभ्वः सुष्ठुभवन्तः महान्तइत्यर्थः तथैवसाकंसहैवउक्षिताः सेक्तारोवर्षकाः श्रियेचित् शोभायैएव प्रतरं प्रकृष्टतरं आसर्वतोववृधुरवर्धयन् नरः कर्म-
४ णांनेतारः विरोकिणः विरोचमानाः सूर्यस्येवरश्मयः सूर्यरश्मयइवशुभमित्यादिगतं ॥ ३ ॥

३. महान् मरुद्गण एक साथ ही उत्पन्न हुए हैं और एक साथ ही वर्धक होते हैं। वे अतिशय शोभा के लिए सर्वत्र वर्द्धमान हुए हैं। सूर्य-रश्मि की तरह वे यागादि कार्य के नेता तथा शोभासम्पन्न हैं। शोभमानभाव से अथवा उदक के प्रति गमन करनेवाले मरुतों के रथ सबके पश्चात् गमन करते हैं।

आभूषेण्यंवोमरुतोमहित्वनंदिदृक्षेण्यंसूर्यस्येवचक्षणम्।
उतोअस्माँअमृतत्वेदधातनशुभंयातामनुरथाअवृत्सत ॥ ४ ॥

आऽभूषेण्यम्। वः। मरुतः। महिऽत्वनम्। दिदृक्षेण्यम्।
सूर्यस्यऽइव। चक्षणम्। उतो इति। अस्मान्। अमृतऽत्वे।
दधातन। शुभम्। याताम्। अनु। रथाः। अवृत्सत ॥ ४ ॥

हेमरुतः वोयुष्माकं महित्वनं महत्त्वं आभूषेण्यं स्तुत्यं किंच सूर्यस्येवचक्षणंरूपमिव दिदृक्षेण्यं दर्शनीयं उतोअपिचास्मान् अमृतत्वे मोक्षेस्वर्गइत्यर्थः तत्रदधातन धारयत शिष्टंगतं ॥४॥

४. हे मरुतो, तुम लोगों की महत्ता स्तवनीय है। तुम लोगों का रूप सूर्य की तरह दर्शनीय है। हमारे मोक्ष में अर्थात् स्वर्ग-प्राप्ति के विषय में तुम लोग हमारे सहायक होओ। शोभमानभाव से अथवा उदक के प्रति गमन करनेवाले मरुतों के रथ सबके पश्चात् गमन करते हैं।

कारीर्यांप्रथमस्याःपिंड्याउदीरयथेत्यनुवाक्या सूत्रितंच—उदीरयथामरुतःसमुद्रतःप्रवोमहत्तस्तविषाउदन्यवइति ।

उदीरयथामरुतःसमुद्रतोयूयंवृष्टिंवर्षयथापुरीषिणः।
नवोदस्राउपदस्यन्तिधेनवःशुभंयातामनुरथाअवृत्सत ॥५॥१७॥

उत्। ईरयथ। मरुतः। समुद्रतः। यूयम्। वृष्टिम्। वर्षयथ।
पुरीषिणः। न। वः। दस्राः। उप। दस्यन्ति। धेनवः। शुभम्।
याताम्। अनु। रथाः। अवृत्सत ॥ ५ ॥ १७ ॥

हेमरुतोयूयंसमुद्रतः समुद्रवणसाधनादन्तरिक्षात् उदीरयथ प्रेरयथवृष्टिं अयमेवार्थः पुनरुच्यते हेपुरीषिणः पृणतेः प्रीणातेर्वापुरीषमुदकं हेतद्वन्तोयूयं वृष्टिंवर्षयथ हेदस्राः दर्शनीयाः शत्रूणामुपक्षपयितारोवा वोयुष्माकं धेनवः प्रीणयितारोमेघाः नोपदस्यन्ति नशुष्यन्ति ॥ ५ ॥

५. हे मरुतो, तुम लोग अन्तरिक्ष से वृष्टि को प्रेरित करो। हे जलसम्पन्न, तुम लोग वर्षण करो। हे दर्शनीयो अथवा शत्रुसंहारको, तुम्हारे प्रीणयिता (सन्तुष्ट करनेवाले) मेघ कभी भी शुष्क नहीं होते हैं। शोभमानभाव से अथवा उदक के प्रति गमन करनेवाले मरुतों के रथ सबके पश्चात् गमन करते हैं।

यदश्वान्धूर्षुपृषतीरयुग्ध्वंहिरण्ययान्प्रत्यत्काँअमुग्ध्वम् ।
विश्वाइत्स्पृधोमरुतोव्यस्यथशुभंयातामनुरथाअवृत्सत ॥ ६ ॥
यत् । अश्वान् । धूःऽसु । पृषतीः । अयुग्ध्वम् । हिरण्ययान् ।
प्रति । अत्कान् । अमुग्ध्वम् । विश्वाः । इत् । स्पृधः । मरुतः ।
वि । अस्यथ । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥ ६ ॥

हेमरुतः यूयं यद्यदाश्वान् धूर्षु रथसंबन्धिनीष्वयुग्ध्वं योजितवन्तःस्थ कीदृशान-श्वान् पृषतीः पृषत्योमरुतामित्युक्तत्वात् पृषद्वर्णावडवाः सारंगीर्वोत्राश्वशब्दवाच्या हिर-ण्ययान् हिरण्यवर्णान् अत्कान् कवचान् प्रत्यमुग्ध्वं प्रत्यमुंचत एवंकृत्वा विश्वाइत्स्पृ-धः सर्वानपिसंग्रामान् हेमरुतः व्यस्यथ विक्षिपथ शुभमित्यादिगतं ॥ ६ ॥

६. हे मरुतो, जब तुम लोग रथ के अग्र भाग में पृषती (मरुतों के घोड़े का नाम अथवा पृषद्वर्णवाली घोड़ी) अश्व को युक्त करते हो, तब हिरण्य वर्णवाले कवच को उतार देते हो। तुम लोग सब संग्रामों में विजय प्राप्त करते हो। शोभमानभाव से अथवा उदक के प्रति गमन करने-वाले मरुतों के रथ सबके पश्चात् गमन करते हैं।

नपर्वतानद्योवरन्तवोयत्राचिध्वंमरुतोगच्छथेदुतत् ।
उतद्यावापृथिवीयाथनापरिशुभंयातामनुरथाअवृत्सत ॥ ७ ॥

न । पर्वताः । न । नद्यः । वरन्त । वः । यत्र । अचिध्वम् ।
मरुतः । गच्छथ । इत् । ऊँ इति । तत् । उत । द्यावापृथिवी इति ।
याथन । परि । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥ ७ ॥

हेमरुतःवोयुष्मान् पर्वताः शिलोच्चयानवरन्त नवारयन्तु तथा नद्यश्च नवारयन्तु किन्तु यत्र यस्मिन् यज्ञादिस्थाने अचिध्वं जानीथसंकल्पयथ तत्स्थानं गच्छथेदु गच्छथैव उतापिच द्यावापृथिवीच परि परितोयाथनयाथ वृष्ट्यर्थमिति ॥ ७ ॥

७. हे मरुतो, पर्वत तथा नदियाँ तुम लोगों के लिए प्रतिरोधक नहीं हों। तुम लोग जिस किसी यज्ञादि स्थान में जाने के लिए संकल्प करते हो, वहाँ जाते ही हो। वृष्टि के लिए तुम लोग द्यावा-पृथिवी में व्याप्त होते हो। शोभमानभाव से अथवा उदक के प्रति गमन करनेवाले मरुतों के रथ सबके पश्चात् गमन करते हैं।

यत्पूर्व्यंमरुतोयच्चनूतनंयदुद्यतेवसवोयच्चशस्यते ।
विश्वस्यतस्यभवथानवेदसःशुभंयातामनुरथाअवृत्सत ॥ ८ ॥

यत्। पूर्व्यम्। मरुतः। यत्। च। नूतनम्। यत्। उद्यते। वसवः।
यत्। च। शस्यते। विश्वस्य। तस्य। भवथ। न। वेदसः।
शुभम्। याताम्। अनु। रथाः। अवृत्सत॥ ८॥

हेमरुतोयूयं यत्पूर्व्यं पूर्वतनं पूर्वमनुष्ठितंयत्कर्मास्तितदित्यर्थः यच्चनूतनं कर्मास्ति यच्चोद्यते ऊर्ध्वंमाप्यते स्तूयतेइत्यर्थः हेवसवोवासकाः यच्च शस्यते शंसनंक्रियते तस्य विश्वस्योत्कृष्टस्य नवेदसः जानन्तोभवथ ॥ ८ ॥

८. हे मरुतो, जो यागादि कार्य पूर्व में अनुष्ठित हुआ है और जो अभी हो रहा है, हे वसुओ, जो कुछ मन्त्रगीत होता है तथा जो कुछ स्तोत्रपाठ होता है, तुम लोग वह सब जानो। शोभनभाव से अथवा उदक के प्रति गमन करनेवाले मरुतों के रथ सबके पश्चात् गमन करते हैं।

मृळतनोमरुतोमावधिष्टनास्मभ्यंशर्मबहुलंवियन्तन।
अधिस्तोत्रस्यसख्यस्यगातनशुभंयातामनुरथाअवृत्सत ॥९॥

मृळत। नः। मरुतः। मा। वधिष्टन। अस्मभ्यम्। शर्म।
बहुलम्। वि। यन्तन। अधि। स्तोत्रस्य। सख्यस्य। गातन।
शुभम्। याताम्। अनु। रथाः। अवृत्सत॥ ९॥

हेमरुतःनोस्मान्मृळत सुखयत मावधिष्टन असम्यक्करणादिजनितेनकोपेन मावधिध्वं किंतु अस्मभ्यं शर्म सुखं बहुलं अत्यधिकं वियन्तन कुरुत किंच स्तोत्रस्यस्तोत्रं सख्यस्य सख्यं अधिगातन अधिगच्छत स्तुतिमनुभूयास्मासुसख्यंकुरुतेत्यर्थः ॥ ९ ॥

९. हे मरुतो, तुम लोग हमें सुखी करो। हम लोगों के द्वारा किसी अनिष्ट कार्य के हो जाने से, जो तुम्हें कोप उत्पन्न हुआ है, उससे हम लोगों को बाधा मत पहुँचाओ। हम लोगों को अत्यन्त सुख प्रदान करो। स्तुति को अवगत करके हम लोगों के साथ मैत्री करो। शोभनभाव से अथवा उदक के प्रति गमन करनेवाले मरुतों के रथ सबके पश्चात् गमन करते हैं।

यूयमस्मान्नयतवस्योअच्छानिरंहतिभ्योमरुतोगृणानाः।
जुषध्वंनोहव्यदातिंयजत्रावयंस्यामपतयोरयीणाम् ॥१०॥ १९॥

यूयम्। अस्मान्। नयत। वस्यः। अच्छ। निः। अंहतिऽभ्यः।
मरुतः। गृणानाः। जुषध्वम्। नः। हव्यऽदातिम्। यजत्राः।
वयम्। स्याम। पतयः। रयीणाम्॥ १०॥ १९॥

हेमरुतोयूयमस्मान् वस्योवसीयोधनं स्वर्गादिलक्षणंस्थानंवा अछ अभिलक्ष्य नयत मापयत किंच अंहतिभ्यः पापेभ्योनिर्णयत निर्गमयत गृणानाः स्तूयमानाः कर्मणिकर्तृप्रत्ययः जुषध्वं सेवध्वं नोस्माकं हव्यदातिं हविर्दानवन्तंयज्ञं हेयजत्राः यष्टव्यायूयंवयंच रयीणां बहुविधानांधनानां पतयः स्याम भवेम ॥ १० ॥

१०. हे मरुतो, तुम लोग हमें ऐश्वर्य के अभिमुख ले जाओ। हम लोगों के स्तोत्र से प्रसन्न होकर हम लोगों को पाप से उन्मुक्त करो। हे यजनीय मरुतो, तुम लोग हम लोगों के द्वारा प्रदत्त हव्य ग्रहण करो, जिससे हम लोग बहुविध धन के अधिपति हों।

अग्नेशर्धन्तमागणंपिष्टंरुक्मेभिरञ्जिभिः।
विशोअद्यमरुतामवह्वयेदिवश्चिद्रोचनादधि ॥ १ ॥

अग्ने। शर्धन्तम्। आ। गणम्। पिष्टम्। रुक्मेभिः। अञ्जिऽभिः। विशः।
अद्य। मरुताम्। अव। ह्वये। दिवः। चित्। रोचनात्। अधि ॥१॥

हेअग्ने शर्धन्तं शत्रूनभिभवन्तं यज्ञायोत्सहमानंवा गणं मरुतांगणं आह्वयेइतिशेषः कीदृशंगणं रुक्मेभिः रुक्मैः रोचमानैरंजिभिः आभरणैश्च पिष्टं अवयवितं युक्तमित्यर्थः अद्यास्मिन्यागदिनेमरुतांविशः प्रजाः गणानित्यर्थः तान्रोचनाद्रोचमानाद्दिवोद्युलोकादधीतिपंचम्यर्थानुवादी चित्पूरणः अव अवस्तात् अस्मदभिमुखं ह्वये आह्वयामि ॥ १ ॥

१. हे अग्नि, रोचमान आभरणों से युक्त और शत्रुओं को पराभूत करनेवाले अथवा यज्ञ के प्रति उत्साहित होनेवाले मरुतों का आह्वान करो। आज यज्ञदिन में दीप्तिमान् स्वर्ग से हम लोगों के अभिमुख आने के लिए मरुतों का आह्वान करते हैं।

यथाचिन्मन्यसेहृदातदिन्मेजग्मुराशसः।
येतेनेदिष्ठंहवनान्यागमंतान्वर्धभीमसंदृशः ॥ २ ॥

यथा। चित्। मन्यसे।। हृदा। तत्। इत्। मे। जग्मुः।
आऽशसः। ये। ते। नेदिष्ठम्। हवनानि। आऽगमन्। तान्।
वर्ध। भीमऽसन्दृशः ॥ २ ॥

हेअग्ने त्वं हृदा हृदयेन मरुतोयथाचिन्मन्यसे चिदितिपूजायां येनप्रकारेण अतिपूजितं जानासि तेष्वादरंकरोषीत्यर्थः तदिव तथैव मेमदर्थं जग्मुर्गच्छन्तु आशसः आशंसितारः इच्छन्तः शत्रुन्हिंसन्तोवा अनन्तरं येमरुतोनेदिष्ठं अत्यंतांतिकंसन्निधावेव ते तव हवनान्याह्वानानिश्रुत्वा आगमन् आगच्छन्ति तान् भीमसंदृशः कालविलंबासहनेनभयंकरदर्शनान् वर्ध वर्धय हविःप्रापणेन ॥ २ ॥

२. हे अग्नि, जिस प्रकार से तुम मरुतों को अत्यन्त पूजित जानते हो—उनका आदर करते हो, उसी प्रकार से वे हम लोगों के निकट उपकारक-भाव से आगमन करें। जो तुम्हारे आह्वान-श्रवण मात्र से ही आगमन करते हैं, उन भयंकर दर्शनवाले मरुतों को हव्य प्रदान-द्वारा वर्द्धित करो।

मीळ्हुष्मतीवपृथिवीपराहतामदन्त्येत्यस्मदा।
ऋक्षोनवोमरुतःशिमीवाँअमोदुध्रोगौरिवभीमयुः॥ ३ ॥

मीळ्हुष्मतीऽइव। पृथिवी। पराऽहता। मदन्ती। एति।
अस्मत्। आ। ऋक्षः। न। वः। मरुतः। शिमीऽवान्।
अमः। दुध्रः। गौःऽइव। भीमऽयुः॥ ३ ॥

मीळ्हुष्मतीप्रबलस्वामिका पराहता अन्यैरभिभूतापृथिवीव अत्रपृथिवीशब्दस्तदधिष्ठितांप्रजांलक्षयति सायथा स्वस्वामिनमुपद्रुताभिगच्छतितद्वदिति मरुतांसाकल्येनसर्वथामाप्तेर्दृष्टान्तः एवंमदन्तीहृष्यन्ती मरुत्सेना अस्मत् अस्मानित्यर्थः आएति आगच्छति हेमरुतोवोयुष्माकं अमोबलं गणः ऋक्षोन अग्निरिव शिमीवान् कर्मवान् दुध्रोदुर्धरः गौरिवभीमयुः भीमैर्वृषभैर्युक्तागौरिव सयथा शिमीवान् कर्मवान्॥ ३ ॥

३. पृथ्वी पर अधिष्ठित मनुष्य दूसरे व्यक्ति-द्वारा अभिभूत होने पर जैसे अपने प्रबल स्वामी के निकट गमन करता है, उसी प्रकार मरुत्सेना उल्लासित होकर हम लोगों के निकट आगमन करती है। हे मरुतो, तुम लोग अग्नि की तरह कर्मक्षम और भीषण की तरह दुर्द्धर्ष हो।

नियेरिणन्त्योजसावृथागावोनदुर्धुरः।
अश्मानंचित्स्वर्यंपर्वतंगिरिंप्रच्यावयन्तियामभिः॥४॥

नि। ये। रिणन्ति। ओजसा। वृथा। गावः। न। दुःऽधुरः।
अश्मानम्। चित्। स्वर्यम्। पर्वतम्। गिरिम्। प्र। च्यवयन्ति।
यामऽभिः॥ ४ ॥

येमरुतोओजसा स्वीयेनबलेन निरिणन्ति हिंसन्ति शत्रून् वृथा अनायासेन स्वसंचारमात्रेण गावोन दुर्धुरः दुःखेनहिंस्याअश्वाइव तेमरुतः स्वर्यं शब्दयन्तं अश्मानं व्याप्तंपर्वतं जगत्पूरकोदकवन्तं पर्ववान्पर्वतः पर्वपुनःपृणातेःप्रीणातेर्वाइतिनिरुक्तं। तादृशं गिरिं मेघं यद्वा पर्वतमितिविशेष्यंगिरिमितिविशेषणं निगिरत्युदकमितिगिरिः संयामभिर्गमनैः प्रच्यावयन्ति उदकनिर्गमनार्थं॥ ४ ॥

---

नि० १, २०।

४. दुर्द्धर्ष (कठिनता से हिंसनीय) अश्व की तरह जो मरुद्गण अपने बल से बिना आयास के ही शत्रुओं को विनष्ट करते हैं, वे गमन-द्वारा शब्दायमान, व्याप्त और संसार को पूर्ण करनेवाले जल से युक्त मेघ को जल के लिए प्रेरित करते हैं।

उत्तिष्ठनूनमेषांस्तोमैःसमुंक्षितानाम्।
मरुतांपुरुतममपूर्व्यंगवांसर्गमिवह्वये ॥ ५ ॥ १९ ॥

उत्। तिष्ठ। नूनम्। एषाम्। स्तोमैः। । सम्ऽउंक्षितानाम्।
मरुताम्। पुरुऽतमम्। अपूर्व्यम्। गवाम्। सर्गम्ऽइव। ह्वये ॥ ५ ॥

हेमरुतोयूयं उत्तिष्ठ उत्तिष्ठत व्यत्ययेनैकवचनं नूनं निश्चयं एषांस्तोमैःस्तोत्रैः समुक्षितानां वर्धितानांमरुतां यद्वा स्तोमैरुपह्वयइतिसंबन्धः तादृशां मरुतां पुरुतमं प्रभूततमं अपूर्व्यं नविद्यतेपूर्वोयेभ्यस्तंअपूर्व्यं सर्गं संघं गवामुदकानां प्रसिद्धानांगवांवा सर्गं संघमिवह्वये आह्वये ॥ ५ ॥

५. हे मरुतो, तुम लोग उत्थित होओ। हम लोग स्तोत्र-द्वारा वर्द्धित, वारिराशि की तरह समृद्धिशाली, बलसम्पन्न और अपूर्व मरुतों का (स्तोत्र-द्वारा) आह्वान करते हैं।

युङ्ध्वंह्यरुषीरथेयुङ्ध्वंरथेषुरोहितः।
युङ्ध्वंहरीअजिराधुरिवोळ्हवेवहिष्ठाधुरिवोळ्हवे ॥ ६ ॥

युङ्ध्वम्। हि। अरुषीः। रथे। युङ्ध्वम्। रथेषु। रोहितः।
युङ्ध्वम्। हरी इति। अजिरा। धुरि। वोळ्हवे। वहिष्ठा।
धुरि। वोळ्हवे ॥ ६ ॥

हेमरुतोयूयं रथे युष्मदीये सर्वेषांसाधारणभूते अरुषीरारोचमानावडवाः युङ्ध्वं योजयध्वं तथा रथेषु युष्मदीयेषु रोहितोरोहितवर्णायुङ्ध्वं हरी अश्वौ अजिरा अजिरौ आशुगमनौ धुरिवोळ्हवे वहनाययुङ्ध्वं आदरार्थंपुनरुच्यते वहिष्ठा वोढृतमावश्वौधुरिवोळ्हवे ॥ ६ ॥

६. हे मरुतो, तुम लोग रथ में अरुषी (रोचमान वड़वा) को युक्त करो। रथसमूह में रोहित वर्ण अश्व को युक्त करो। भारवहन के लिए शीघ्र गमनवाले हरिद्वय को युक्त करो। जो वहनकार्य में सुदृढ़ हैं, उन्हें भारवहन के लिए युक्त करो।

उतस्यवाज्यरुषस्तुविष्वणिरिहस्मधायिदर्शतः।
मावोयामेषुमरुतश्चिरंकरत्प्रतंरथेषुचोदत ॥ ७ ॥

उत । स्यः । वाजी । अरुषः । तुविऽस्वनिः । इह । स्म । धायि । दर्शतः । मा । वः । यामेषु । मरुतः । चिरम् । करत् । प्र । तम् । रथेषु । चोदत ॥ ७ ॥

उतापिच स्यः सवाजी वेजनवानरुषआरोचनः तुविष्वणिः प्रभूतध्वनिरश्वः अरुष-इत्यनेनरोहितइत्युक्तंभवति प्रष्टिर्वहतिरोहितइतियुक्तं । इहेदानीं दर्शतोदर्शनीयःसन् धायि रथेनियोजितः स्मेतिपूरणः हेमरुतोवोयामेषु गमनेषु सोश्वश्चिरंविलंबंमाकरत् माकरोतु तं रथेषु रथेयुक्तमितिशेषः प्रचोदत प्रेरयत यथाविलंबंनकुर्यात्तथाप्रेरयत ॥ ७ ॥

७. हे मरुतो, रथ में नियोजित, दीप्तिमान् प्रभूत ध्वनिकारी और दर्शनीय वह अश्व तुम लोगों की यात्रा के सम्बन्ध में विलम्बोत्पादन नहीं करे। रथ में नियुक्त उस अश्व को तुम लोग इस प्रकार से प्रेरित करो, जिससे वह विलम्बोत्पादन नहीं करे।

रथंनुमारुतंवयंश्रवस्युमाहुवामहे ।
आयस्मिन्तस्थौसुरणानिबिभ्रतीसचामरुत्सुरोदसी ॥ ८ ॥

रथम् । नु । मारुतम् । वयम् । श्रवस्युम् । आ । हुवामहे । आ । यस्मिन् । तस्थौ । सुऽरणानि । बिभ्रती । सचा । मरुत्ऽसु । रोदसी ॥ ८ ॥

वयमात्रेयाः रथं रंहणस्वभावं मारुतं मरुतांसंबन्धिनंरथं श्रवस्युं अन्नेच्छुं नुअद्य आहुवामहे आह्वयामः यस्मिन्रथे सुरणानि सुरमणानि जलानि बिभ्रती धारयन्ती रोदसी रुद्रस्यपत्नी मरुतांमाता यद्वा रुद्रोवायुः तत्पत्नी माध्यमिकादेवीमरुत्सु सचा सहिता आतस्थौ आस्थितवती तंरथमाहुवे ॥ ८ ॥

८. हम लोग मरुद्गण के उस अन्नपूर्ण रथ का आह्वान करते हैं, जिस रथ के ऊपर सुरमणीय जल को धारण करके मरुतों के साथ रोदसी (रुद्र की पत्नी अथवा मरुतों की माता या वायुपत्नी, माध्यमिका देवी) अवस्थित हैं।

तंवःशर्धंरथेशुभंत्वेषंपनस्युमाहुवे ।
यस्मिन्त्सुजातासुभगामहीयतेसचामरुत्सुमीळ्हुषी ॥ ९ ॥ २० ॥

तम् । वः । शर्धम् । रथेऽशुभम् । त्वेषम् । पनस्युम् । आ । हुवे । यस्मिन् । सुऽजाता । सुऽभगा । महीयते । सचा । मरुत्ऽसु । मीळ्हुषी ॥ ९ ॥ २० ॥

---

1 ऋ० सं० ५. ८. ३.

हेमरुतः वः शर्धं युष्मदीयं बलं गणं रथेशुभं रथेशोभमानं त्वेषं दीप्तं पनस्युं स्तुत्यमाहुवे आह्वये यस्मिन्शर्धे सुजाता सुष्ठुप्रवृद्धा सुभगा शोभनभाग्या अतिमहती मीळ्हुषी मीळ्हुष्टमशिवतमेत्यादौदर्शनान्मीढ्वान्रुद्रः तत्पत्नीमीळ्हुषी मरुत्सु सचा सह महीयते पूज्यते तंशर्धमाहुवे आपस्तंबोपिरुद्रपत्नीमीळ्हुषीसंज्ञयाव्यवजहार उत्तरया दक्षिणस्यामीशानमावाहयति लौकिक्यावाचोत्तरस्यां मीळ्हुषीं मध्येजयन्तमिति ॥ ९ ॥

९. हे मरुतो, हम तुम लोगों के उस रथ का आह्वान करते हैं, जो शोभाकारी, दीप्तिमान् और स्तुति-योग्य हैं। जिसके मध्य में सुजाता, सौभाग्यशालिनी मीढ्लुषी मरुतों के साथ पूजित होती है।

पंचमेनुवाकेषोडशसूक्तानि तत्रारुद्रासइत्यष्टर्चंप्रथमंसूक्तं श्यावाश्वस्यार्षंमारुतं सप्तम्यष्टम्यौत्रिष्टुभौ शिष्टाषड्जगत्यः आरुद्रासोष्टौद्वित्रिष्टुबन्तमित्यनुक्रमणिका। विनियोगोलैंगिकः ।

तत्रप्रथमा—

आरुद्रासइन्द्रवन्तःसजोषसोहिरण्यरथाःसुवितायगन्तन ।
इयंवोअस्मत्प्रतिहर्यतेमतिस्तृष्णजेनदिवउत्सांउदन्यवे ॥ १ ॥

आ । रुद्रासः । इन्द्रऽवन्तः । सऽजोषसः । हिरण्यऽरथाः ।
सुविताय । गन्तन । इयम् । वः । अस्मत् । प्रति । हर्यते । मतिः ।
तृष्णऽजे । न । दिवः । उत्साः । उदन्यवे ॥ १ ॥

हेरुद्रासोरुद्रपुत्राः इन्द्रवन्तः इन्द्रेणयुष्मत्स्वामिनातद्वन्तः सजोषसः परस्परंसमानप्रीतयोहिरण्यरथाः हिरण्मयरथाःसन्तः सुविताय सुगमनाय तत्साधनाय सुष्ठु सर्वैर्गन्तव्याय यज्ञाय तदर्थं आगन्तन आगच्छत किमत्रविद्यतइतितदुच्यते इयं अस्मदस्मदीया मतिः स्तुतिर्वोयुष्मान्प्रतिहर्यते कामयते तस्मादागच्छत उदन्यवे उदकेच्छवे तृष्णजे गोतमाय दिवः द्युलोकसकाशात् उत्साः उदकनिष्पन्दायथायुष्माभिः प्रेरितास्तद्वदस्मदर्थमभ्यागत्याभिमतंददतेत्यर्थः ॥ १ ॥

१. हे परस्पर सदयचित्त, सुवर्णमय रथारूढ़, इन्द्र के अनुचर रुद्रपुत्रो, तुम लोग सुगम्य यज्ञ में आगमन करो। हम तुम लोगों के उद्देश्य से यह स्तोत्रपाठ करते हैं। तुम लोग तृषार्त और जलाभिलाषी गोतम के निकट जिस प्रकार स्वर्ग से जल लाये थे, उसी प्रकार हम लोगों के निकट भी आगमन करो।

वाशीमन्तऋष्टिमन्तोमनीषिणःसुधन्वानइषुमन्तोनिषङ्गिणः ।
स्वश्वास्थसुरथाःपृश्निमातरःस्वायुधामरुतोयाथनाशुभम् ॥ २ ॥

वाशीऽमन्तः । ऋष्टिऽमन्तः । मनीषिणः । सुऽधन्वानः । इषुऽमन्तः ।
निषङ्गिणः । सुऽअश्वाः । स्थ । सुऽरथाः । पृश्निऽमातरः ।
सुऽआयुधाः । मरुतः । याथन । शुभम् ॥ २ ॥

हेमरुतः यूयंवाशीमन्तः वाशीतितक्षणसाधनमायुधं तद्वन्तःस्थ ऋष्टिमन्तः ऋष्टिर्नाम छुरिका तद्वन्तःस्थ एवंसर्वत्रयोज्यं मनीषिणः मनसईश्वराः मनस्विनः सुधन्वानः शोभनधनुष्काः इषुमन्तोबाणवन्तः निषंगिणोनिषंगवन्तः स्वश्वाःस्थ शोभनाश्वाभवथ सुरथाः शोभनरथाः पृश्निमातरः पृश्नेःपुत्राः स्वायुधाः खड्गपरश्वादिसकलायुधोपेताः एवंमहात्मानःसन्तः शुभंशोभनंयथाभवतितथाशुभं उदकायवा रथेनयाथन गच्छथ ॥ २ ॥

२. हे सुबुद्धि मरुतो, तुम लोगों को भक्षणसाधन आयुध, छुरिका, उत्कृष्ट धनुर्बाण, तूणीर और श्रेष्ठ अश्व तथा रथ है। तुम लोग अस्त्रद्वारा सुसज्जित होओ। हे पृश्निपुत्रो, हम लोगों के कल्याण-विधानार्थ आगमन करो।

धूनुथद्यांपर्वतान्दाशुषेवसुनिवोवनाजिहतेयामनोभिया ।
कोपयथपृथिवींपृश्निमातरःशुभेयदुग्राःपृषतीरयुग्ध्वम् ॥ ३ ॥

धूनुथ । द्याम् । पर्वतान् । दाशुषे । वसु । नि । वः । वना । जिहते ।
यामनः । भिया । कोपयथ । पृथिवीम् । पृश्निऽमातरः । शुभे ।
यत् । उग्राः । पृषतीः । अयुग्ध्वम् ॥ ३ ॥

हेमरुतः द्यांदिवीत्यर्थः पर्वतान् मेघान् दाशुषे हविर्दात्रेयजमानाय वसु धनानिच धूनुथ प्रापयथ वोयुष्माकं यामनः गमनस्यभियाभीत्या वना वनानि वृक्षादिसमूहानि निजिहते नितरांकंपते अवनताभृशंभवंतीत्यर्थः हेपृश्निमातरः पृश्नेःपुत्राः पृश्नियैवैपयसोमरुतोजाताइतिहिश्रुतिः । हेमरुतः पृथिवीं कोपयथ अभिवृष्ट्या क्षोभयथ हेउग्राउद्गूर्णबलाः यूयं यद्यदा शुभे उदकार्थं पृषतीर्युष्मदीयाअश्वाःअयुग्ध्वं योजयथ तदा कोपयथपृथिवीं ॥ ३ ॥

३. हे मरुतो, तुम लोग अन्तरिक्ष में मेघों को विक्षिप्त करो, हव्यदाता को धन प्रदान करो। तुम लोगों के आगमन-भय से वन विकम्पित होते हैं। हे पृश्निपुत्रो, हे कोपनशील बलवालो, जब तुम लोग जल के लिए अपने पृषती अश्व को रथ में युक्त करते हो, तब पृथ्वी के ऊपर कोप प्रकाशित करते हो।

वातत्विषोमरुतोवर्षनिर्णिजोयमाइवसुसदृशःसुपेशसः ।
पिशङ्गाश्वाअरुणाश्वाअरेपसःप्रत्वक्षसोमहिनाद्यौरिवोरवः ॥ ४ ॥

---

१. तै० सं० २. २. ११।

वातं॑ऽत्विषः । म॒रुतः॑ । व॒र्षऽनि॑र्निजः । य॒माःऽइ॑व । सु॒ऽसंदृ॑शः ।
सु॒ऽपेश॑सः । पि॒शङ्ग॑ऽअश्वाः । अ॒रु॒णऽअ॑श्वाः । अ॒रे॒पसः॑ ।
प्रऽत्व॑क्षसः । म॒हि॒ना । द्यौः॑ऽइ॑व । उ॒रवः॑ ॥ ४ ॥

वातत्विषः सर्वदासंप्राप्तदीप्तयः वर्षनिर्णिजः वृष्टेःशोधयितारः अथवा निर्निगिति रूपनाम वर्षमेवरूपंयेषांतेतादृशाः वृष्टिप्रदाइत्यर्थः यमाइव युगलोत्पन्नाइव सुसदृशः परस्परंबलरूपादिभिरत्यन्तंसरूपाः सुपेशसःशोभनरूपाः पिशंगाश्वाः पिशंगवर्णाश्वोपेताः तथा अरुणाश्वाःअरेपसोअपापाः प्रत्वक्षसः प्रकृष्टंतनूकर्तारोद्वेष्टॄणां महिना महत्त्वेन द्यौरिवान्तरिक्षमिव उरवःविस्तीर्णाउक्तलक्षणाः नामभेजिरेइत्युत्तरेणसंबन्धः ॥ ४ ॥

४. मरुद्गण दीप्तिमान्, वृष्टिशोधक, यमज की तरह तुल्यरूप, दर्शनीय-मूर्ति, श्यामवर्ण और अरुणवर्ण, अश्वों के अधिपति, निष्पाप और शत्रुक्षयकारी हैं। वे विस्तृत आकाश की तरह विस्तीर्ण हैं।

पु॒रु॒द्र॒प्सा अ॑ञ्जि॒मन्तः॑ सु॒दान॑वस्त्वे॒षसं॑दृशो अनव॒भ्रराध॑सः ।
सु॒जा॒तासो॑ ज॒नुषा॑ रु॒क्मव॑क्षसो दि॒वो अ॒र्का अ॒मृतं॒ नाम॑ भेजिरे ॥५॥२१॥

पु॒रु॒ऽद्र॒प्साः । अ॒ञ्जि॒ऽमन्तः॑ । सु॒ऽदान॑वः । त्वे॒षऽसं॑दृशः ।
अ॒न॒व॒भ्रऽरा॑धसः । सु॒ऽजा॒तासः॑ । ज॒नुषा॑ । रु॒क्मऽव॑क्षसः ।
दि॒वः । अ॒र्काः । अ॒मृत॑म् । नाम॑ । भे॒जि॒रे ॥ ५ ॥ २१ ॥

पुरुद्रप्साः प्रभूतोदकाः अंजिमन्तः आभरणवन्तः सुदानवः शोभनदानाः त्वेषसंदृशोदीप्तरूपाः अनवभ्रराधसोनवभ्रष्टधनाः सुजातासः शोभनजननाः जनुषा जन्मनैव उक्तरूपाः रुक्मवक्षसोहारवक्षस्काः अर्काः पूज्याः मरुतोदिवोद्युलोकादागत्य अमृतममरणसाधनंनाम उदकं नमनहेतुकमुक्तलक्षणंहविर्वा भेजिरे लब्धवन्तः ॥ ५ ॥

५. प्रभूत वारि वर्षणकारी, आभरणधारी, दानशील, उज्ज्वलमूर्ति, अक्षय धनसम्पन्न, सुजन्मा, वक्षःस्थल पर हार धारण करनेवाले और पूजनीय मरुद्गण द्युलोक से आगमन करके अमरण-साधक उदक (अमृत) प्राप्त करते हैं।

॥ इतिचतुर्थस्यतृतीयेएकविंशोवर्गः ॥ २१ ॥

अथषष्ठी—

ऋ॒ष्टयो॑ वो मरुतो॒ अंस॑यो॒रधि॒ सह॒ ओजो॑ बा॒ह्वोर्वो॒ बलं॑ हि॒तम् ।
नृ॒म्णा शी॒र्षस्वायु॑धा॒ रथे॑षु वो॒ विश्वा॑ वः॒ श्रीरधि॑ त॒नूषु॑ पिपिशे ॥ ६ ॥

ऋष्टयः । वः । मरुतः । अंसयोः । अधि । सहः । ओजः ।
बाह्वोः । वः । बलम् । हितम् । नृम्णा । शीर्षऽसु । आयुधा । रथेषु ।
वः । विश्वा । वः । श्रीः । अधि । तनूषु । पिपिशे ॥ ६ ॥

हेमरुतः वोयुष्माकमंसयोरधि ऋष्टयआयुधविशेषाः हिताः आश्रिताः वक्ष्यमाणहितशब्दोविपरिणेतव्यः अधीतिसप्तम्यर्थानुवादी तथा वोबाह्वोरधिसहः शत्रूणामभिभावुकं ओजः ओजोनामाष्टमोधातुः तद्रूपंबलं हितं निहितं शीर्षसु शिरःसु नृम्णा नृम्णानि हिरण्यमयानि पट्टोष्णीषादीनि निहितानि रथेष्वायुधा आयुधानि युद्धसाधनानि निहितानि विश्वा सर्वा वःश्रीः युष्माकंकान्तिः तनूषु तदीयेषु अधिपिपिशे अधिष्ठिताआश्रिता ॥ ६ ॥

६. हे मरुतो, तुम लोगों के स्कन्ध देश में आयुध-विशेष, बाहुद्वय में शत्रुनाशक बल, शिरोदेश में सुवर्णमय पगड़ी, रथ के ऊपर आयुध प्रभृति और अंगों में शोभा अवस्थित है।

गोमदश्वावद्रथवत्सुवीरंचन्द्रवद्राधोमरुतोददानः ।
प्रशस्तिंनःकृणुतरुद्रियासोभक्षीयवोवसोदैव्यस्य ॥ ७ ॥

गोऽमत् । अश्वऽवत् । रथऽवत् । सुऽवीरम् । चन्द्रऽवत् ।
राधः । मरुतः । दद । नः । प्रऽशंस्तिम् । नः । कृणुत । रुद्रियासः ।
भक्षीय । वः । अवसः । दैव्यस्य ॥ ७ ॥

हेमरुतः नोस्मभ्यं गोमत् बहुभिर्गोभिरुपेतं अश्वावत् बहुभिरश्वैरुपेतं रथवत् रथोपेतं सुवीरं सुष्ठु पुत्रोपेतं चंद्रवत् हिरण्योपेतं राधोन्नं दद ददत व्यत्ययेनैकवचनं अथवालोडर्थस्य लिटोमध्यमबहुवचनं हेरुद्रियासोरुद्रपुत्रामरुतःनोस्मदीयां प्रशस्तिंसमृद्धिमित्यर्थः तांकृणुत कुरुत वोयुष्माकंस्वभूतं अवसोवोरक्षणं दैव्यस्य दैव्यं देवार्हंभक्षीय भजेय ॥ ७ ॥

७. हे मरुतो, तुम लोग हम लोगों को बहुत गौ, अश्व, रथ, प्रशस्त पुत्र और हिरण्य के साथ अन्न प्रदान करो। हे रुद्रपुत्रो, तुम लोग हम लोगों की समृद्धि को वर्द्धित करो। हम तुम लोगों की स्वर्गीय रक्षा का भोग करें।

हयेनरोमरुतोमृळतानस्तुवीमघासोअमृताऋतज्ञाः ।
सत्यश्रुतःकवयोयुवानोबृहद्गिरयोबृहदुक्षमाणाः ॥ ८ ॥ २२ ॥

हये । नरः । मरुतः । मृळत । नः । तुविऽमघासः । अमृताः ।
ऋतऽज्ञाः । सत्यऽश्रुतः । कवयः । युवानः ।
बृहत्ऽगिरयः । बृहत् । उक्षमाणाः ॥ ८ ॥ २२ ॥

हये हेनरोनेतारः नभरुतोस्मान् मृळत सुखयत अस्मभ्यंहितायवा सुखिनोभवत हेतुवीमघासः प्रभूतधनाः अमृताः अमरणस्वभावाः ऋतज्ञाः उदकस्ययज्ञस्यवा ज्ञातारः कर्तारइत्यर्थः सत्यश्रुतः सत्येनसत्यफलत्वेनप्रसिद्धाः कवयोमेधाविनः युवानोनित्यतरुणाः बृहद्गिरयः प्रभूतस्तुतयः बृहदत्यधिकं उक्षमाणाः हविर्भिःसेविताः उदकं वासिंचन्तोयूयंमृळत ॥ ८ ॥

८. हे मरुतो, तुम लोग हम लोगों के प्रति अनुकूल होओ। तुम लोग नेता, अतुल ऐश्वर्यशाली, अविनश्वर, वारिवर्षक, सत्य फल से प्रसिद्ध, ज्ञानसम्पन्न तरुण, प्रचुर स्तुतियुक्त और प्रभूत वर्षणकारी हो।

॥ इतिचतुर्थस्यतृतीयेद्वाविंशोवर्गः ॥ २२ ॥

तमुनूनमित्यष्टर्चंद्वितीयंसूक्तं श्यावाश्वस्यार्षंत्रैष्टुभंमारुतं तम्वित्यनुक्रमणिका विनियोगोलैंगिकः।

तमुनूनंतविषीमन्तमेषांस्तुषेगणंमारुतंनव्यंसीनाम्।
यआश्वंश्वाअमंवद्वहन्तउतेशिरेअमृतस्यस्वराजः ॥ १ ॥

तम्। ऊँ इति। नूनम्। तविषीऽमन्तम्। एषाम्। स्तुषे।
गणम्। मारुतम्। नव्यंसीनाम्। ये। आशुऽअश्वाः। अमंऽवत्।
वहन्ते। उत। ईशिरे। अमृतस्य। स्वऽराजः ॥ १ ॥

तमु तमेव पूर्वस्तुतमेव मारुतं मरुतांसंबन्धिनं तंगणं तविषीमन्तं दीप्तिमन्तं नूनं अद्य स्तुषे कीदृशांमरुतां नव्यसीनां लिंगव्यत्ययः नवतराणांस्तुत्यानांवा एषांमारुतंगणं गणावयवभूतामरुतः कीदृशाइतिउच्यते येमरुतः आश्वश्वाः शीघ्रगाम्यश्वोपेताः अमवत् बलवत् बलवन्तोयथाभवन्तितथावहन्तोगच्छन्तः उतापिच ईशिरे ईश्वराभवन्ति अमृतस्योदकस्य स्वराजः स्वायत्तदीप्तयः स्वयमेवराजमानाः तेषांगणंस्तुषे ॥ १ ॥

१. आज यज्ञ दिन में हम दीप्तिमान् और स्तुतियोग्य मरुतों का स्तवन करते हैं। मरुद्गण शीघ्रगामी अश्वों के अधिपति, बलपूर्वक सर्वत्र गतिशील, जल के अधिपति और निज प्रभा-द्वारा प्रभान्वित हैं।

त्वेषंगणंतवसंखादिहस्तंधुनिव्रतंमायिनंदातिवारम्।
मयोभुवोयेअमितामहित्वावन्दस्वविप्रतुविराधसोनॄन् ॥ २ ॥

त्वेषम्। गणम्। तवसंम्। खादिंऽहस्तम्। धुनिंऽव्रतम्। मायिनंम्।
दातिंऽवारम्। मयःऽभुवंः। ये। अमिताः। महिऽत्वा। वन्दस्व।
विप्र। तुविऽराधसः। नॄन् ॥ २ ॥

त्वेषं दीप्तगणं मारुतं तवसं बलवन्तं खादिहस्तं कटकहस्तं धुनिव्रतं कंपयितृकर्माणं मायिनं प्रज्ञावन्तं दातिवारं दत्तधनं हेविप्र होतः वंदस्व स्तुहीतिसंबन्धः येमरुतोमयोभुवः सुखस्यभावयितारः महित्वा महत्त्वेन अमिताः अपरिच्छिन्नाः तान् तुविराधसः प्रभूतधनान् नॄन् नेतॄन् वन्दस्व ॥ २ ॥

२. हे होता, तुम दीप्तिमान् बलशाली बलय-मण्डित-हस्त, कम्पन-विधायक, ज्ञानसम्पन्न और धनदाता मरुतों की पूजा करो। जो सुखदाता हैं, जिनका महत्त्व अपरिमित है, जो अतुल ऐश्वर्य-सम्पन्न नेता हैं, उन मरुतों की वन्दना करो।

आवोयन्तूदवाहासोअद्यवृष्टिंयेविश्वेमरुतोजुनन्ति ।
अयंयोअग्निर्मरुतःसमिद्धएतंजुषध्वंकवयोयुवानः ॥ ३ ॥

आ । वः । यन्तु । उदऽवाहासः । अद्य । वृष्टिम् । ये । विश्वे । मरुतः । जुनन्ति । अयम् । यः । अग्निः । मरुतः । सम्ऽइद्धः । एतम् । जुषध्वम् । कवयः । युवानः ॥ ३ ॥

येविश्वेव्याप्ताः मरुतोवृष्टिंजुनन्ति प्रेरयन्ति तेउदवाहासः उदकस्यवोढारोमरुतः अद्येदानीं वोयुष्मान् आयन्तु आगच्छन्तु ऋत्विग्यजमानाः अथप्रत्यक्षवादः हेमरुतः यःप्रसिद्धोयमग्निः समिद्धः सम्यग्दीपितः एतमग्निं जुषध्वं सेवध्वं हेकवयोमेधाविनोहेयुवानः नित्यतरुणाः सर्वत्रव्याप्तावा ॥ ३ ॥

३. जो विश्वव्यापी मरुद्गण वृष्टि प्रेरित करते हैं, वे जलवाहक मरुद्गण अभी तुम लोगों के निकट उपस्थित हों। हे तरुण और ज्ञान-सम्पन्न मरुतो, तुम लोगों के लिए जो अग्नि प्रज्वलित हुआ है, उसी के द्वारा तुम लोग प्रीति लाभ करो।

यूयंराजानमिर्यंजनायविभ्वतष्टंजनयथायजत्राः ।
युष्मदेतिमुष्टिहाबाहुजूतोयुष्मत्सदश्वोमरुतःसुवीरः ॥ ४ ॥

यूयम् । राजानम् । इर्यम् । जनाय । विभ्वऽतष्टम् । जनयथ । यजत्राः । युष्मत् । एति । मुष्टिऽहा । बाहुऽजूतः । युष्मत् । सत्ऽअश्वः । मरुतः । सुऽवीरः ॥ ४ ॥

हेमरुतः यूयं जनाय यजमानाय राजानं स्वामिनं राजमानंवा इर्यं शत्रूणांप्रेरकं व्यापयितारं विभ्वतष्टं विभ्वानामऋभूणांमध्यमः सकुशली तेननिर्मितं अत्यन्तरूपवन्तमित्यर्थः तादृशंपुत्रं जनयथ उत्पादयथ हेयजत्राः यष्टव्याः हेमरुतोयुष्मद्युष्मत्तःएति गच्छति पुत्रःकीदृशः मुष्टिशब्दोबाहूपलक्षकः स्वभुजबलेनैवहन्ताशत्रूणां तदेवोच्यते बाहुजूतः बाहुप्रेरकः

शत्रूणां यस्यतादृशःपुत्रएति तथायुष्मत्युष्मत्तः सदश्वोविद्यमानाश्वः बह्वश्वइत्यर्थः सुवीरः शोभनवीर्यःपुत्रएति जायतइत्यर्थः ॥ ४ ॥

४. हे पूजनीय मरुतो, तुम लोग यजमान को अथवा राजा को एक पुत्र प्रदान करो, जो दीप्तिमान्, शत्रुसंहारक और विभ्व-द्वारा निर्मित हो। हे मरुतो, तुम लोगों से ही अपने भुजबल-द्वारा शत्रुहन्ता, शत्रुओं के प्रति बाहुप्रेरक और असंख्य अश्वों के अधिपति पुत्र उत्पन्न होते हैं।

वरुणप्रघासेमारुत्याआमिक्षायाअराइवेतियाज्या सूत्रितंच—अराइवेदचरमाअहेवेमं मेवरुणश्रुधीति । एकादशिनेमारुतेपशावेषैवपशुपुरोडाशस्ययाज्या सूत्रितंच—अराइवेदचरमा-अहेवयावःशर्मंशशमानायसन्तीति ।

अराइवेदचरमाअहेवप्रप्रजायन्तेअकवामहोभिः ।
पृश्नेःपुत्राउपमासोरभिष्ठाःस्वयामत्यामरुतःसंमिमिक्षुः ॥ ५ ॥

अराःऽइव । इत् । अचरमाः । अहाऽइव । प्रऽप्र । जायन्ते ।
अकवाः । महःऽभिः । पृश्नेः । पुत्राः । उपऽमासः । रभिष्ठाः ।
स्वया । मत्या । मरुतः । सम् । मिमिक्षुः ॥ ५ ॥

अराइवेत् रथशंकवइव अचरमाः अनिकृष्टाः सर्वसमाः सहैवोत्पन्नाश्चेत्यर्थः अहेव अहानीव दिवसायथासर्वेपिषष्टिघटिकात्मकाःतद्वत्सप्तसंख्योपेतसप्तगणरूपेणसमाइत्यर्थः अनेनदृष्टान्तद्वयेनवैसादृश्याभावःप्रतिपादितः एवमुक्तलक्षणाः महोभिस्तेजोभिः प्रप्रजायन्ते प्रकर्षेणप्रादुर्भवन्ति एकः प्रसमुपोदःपादपूरणइत्युपसर्गाभ्यासः सचपूरणः तेचाकवाः अनल्पाः यद्वा महोभिरित्यस्यविशेषणं पृश्नेर्माध्यमिकायावाचोगोरूपायाअन्तरिक्षस्यवा पुत्रस्थानीयाः उपमासः प्रत्येकंसमानाः रभिष्ठाः प्रकृष्टवेगाः एवंमहानुभावामरुतः स्वयामत्या स्वकीययैवानुग्रहबुद्ध्या संमिमिक्षुः वृष्ट्यासम्यक्सिंचन्ति ॥ ५ ॥

५. रथ के शङ्कु (कील) की तरह तुम लोग एक साथ ही उत्पन्न हुए हो। दिवसों की तरह परस्पर समान हो। पृश्नि के पुत्र समान रूप से ही उत्पन्न हुए हैं, कोई भी दीप्ति के विषय में निकृष्ट नहीं हैं। वेगगामी मरुद्गण स्वतः प्रवृत्त होकर भली भाँति से वारिवर्षण करते हैं।

यत्प्रायासिष्टपृषतीभिरश्वैर्वीळुपविभिर्मरुतोरथेभिः ।
क्षोदन्तआपोरिणतेवनान्यवोस्रियोवृषभःक्रन्दतुद्यौः ॥ ६ ॥

यत् । प्र । अयासिष्ट । पृषतीभिः । अश्वैः । वीळुपविऽभिः ।
मरुतः । रथेभिः । क्षोदन्ते । आपः । रिणते । वनानि । अव ।
उस्रियः । वृषभः । क्रन्दतु । द्यौः ॥ ६ ॥

हेमरुतः यद्यदा प्रायासिष्ट प्रगच्छथ पृषतीभिः पृषत्संज्ञकैरश्वैः वाहनसाधनैरश्वैः अश्वशब्दोत्रवाहनसामान्यवचनः अतःपुंल्लिंगता तथान्यत्र यदश्वान्धूर्षुपृषतीरयुंग्ध्वं । रोहिदश्वोजाश्वइतिसामानाधिकरण्यप्रयोगः एवंभूताश्वयुक्तैः वीळुपविभिः दृढरथनेमिभिः रथेभिः प्रायासिष्ट यद्वाश्वैरथैश्चसह मरुतोयदाप्रायासिष्ट तदा आपः क्षोदन्ते क्षरन्ति वनानि वृक्षसमूहाः रिणते हिंस्यन्ते वेगेनभज्यन्ते उस्रियः उस्राः सूर्यरश्मयः तत्संबन्धीपर्जन्यः वृषभोपांवर्षिता द्यौर्द्योतमानः अवक्रन्दतु अवाङ्मुखंशब्दयतुवृष्ट्यर्थम् ॥ ६ ॥

६. हे मरुतो, जब तुम लोग पृषती अश्व-द्वारा आकृष्ट दृढ़चक्र रथ पर आरोहण करके आगमन करते हो, तब वारिराशि पतित होती है, वन भग्न होते हैं और सूर्य-किरण से सम्पृक्त वारिवर्षणकारी पर्जन्य अधोमुख होकर वृष्टि के लिए शब्द करते हैं।

प्रथिष्टयामन्पृथिवीचिदेषांभर्तेवगर्भंस्वमिच्छवोधुः ।
वातान्ह्यश्वान्धुर्यायुयुज्रेवर्षंस्वेदंचक्रिरेरुद्रियासः ॥ ७ ॥

प्रथिष्ट । यामन् । पृथिवी । चित् । एषाम् । भर्ताऽइव ।
गर्भम् । स्वम् । इत् । शवः । धुः । वातान् । हि । अश्वान् । धुरि ।
आऽयुयुज्रे । वर्षम् । स्वेदम् । चक्रिरे । रुद्रियासः ॥ ७ ॥

एषांमरुतां यामन् यामनि गमनेपृथिवी भूमिः चिदितिपूरणः प्रथिष्ट प्रख्याताभवत् गर्भयोग्याभवदित्यर्थः तेचमरुतोभर्ता लौकिकःपतिः गर्भमिव भार्यायाः तथाभूम्याः स्वमित् स्वभूतंगर्भं गर्भस्थानीयं शवः उदकं धुः स्थापितवन्तः हियस्मात् वातान् गन्तॄनश्वान् धुरि रथसबन्धिन्यां आयुयुज्रे आयोजितवन्तः तस्माद्वर्षं स्वेदं स्वेदस्थानीयं वृष्टिसंस्त्यायं चक्रिरे कुर्वन्ति रुद्रियासोरुद्रपुत्राः ॥ ७ ॥

७. मरुतों के आगमन से पृथ्वी उर्बरता प्राप्त करती है। पति जिस तरह से भार्या का गर्भ उत्पादन करते हैं, उसी तरह मरुद्गण पृथ्वी के ऊपर गर्भस्थानीय सलिल स्थापित करते हैं। रुद्र के पुत्र शीघ्रगामी अश्वों को रथ के अग्रभाग में युक्त करके वृष्टि उत्पन्न करते हैं।

हयेनरोमरुतोमृळतानस्तुवीमघासोअमृताऋतज्ञाः ।
सत्यश्रुतःकवयोयुवानोबृहद्गिरयोबृहदुक्षमाणाः ॥ ८ ॥ २३ ॥

हये । नरः । मरुतः । मृळत । नः । तुविऽमघासः । अमृताः ।
ऋतऽज्ञाः । सत्यऽश्रुतः । कवयः । युवानः । बृहत्ऽगिरयः ।
बृहत् । उक्षमाणाः ॥ ८ ॥ २३ ॥

हयेनरइत्यष्टमीगता ॥ ८ ॥

॥ इतिचतुर्थस्यतृतीयेत्रयोविंशोवर्गः ॥ २३ ॥

---

१ ऋ० सं० ५. ३. १८.।

८. हे मरुतो, तुम लोग हमारे प्रति अनुकूल होओ। तुम लोग नेता, विपुल ऐश्वर्यशाली, अविनश्वर, वारिवर्षक, सत्य फल से प्रसिद्ध, ज्ञान-सम्पन्न, तरुण, प्रचुर स्तुतियुक्त और प्रभूत वर्षणकारी हो।

प्रवःस्पडितिअष्टर्चंतृतीयंसूक्तं श्यावाश्वस्यार्षंमारुतम् अष्टमीत्रिष्टुप् शिष्टाःसप्तजगत्यः प्रवस्त्रिष्टुबंतमित्यनुक्रमणिका। विनियोगोलैंगिकः।

प्रवः॒स्पळक्र॑न्त्सुवि॒ताय॑दा॒वनेर्चा॑दि॒वेप्रपृ॑थि॒व्याऋ॒तंभ॑रे।
उ॒क्षन्ते॒अश्वा॒न्तरु॑षन्त॒आरजोनु॒स्वंभा॒नुंश्र॑थयन्तेअर्ण॒वैः॥ १॥

प्र। वः॒। स्पट्। अक्र॑न्। सु॒वि॒ताय॑। दा॒वने॑। अर्च॑। दि॒वे।
प्र। पृ॒थि॒व्यै। ऋ॒तम्। भ॒रे॒। उ॒क्षन्ते॑। अश्वा॑न्। तरु॑षन्ते। आ।
रजः॑। अनु॑। स्वम्। भा॒नुम्। श्र॒थ॒य॒न्ते॒। अ॒र्ण॒वैः॥ १॥

हेमरुतःवोयुष्मभ्यं सुविताय सुष्टुप्राप्तव्याय दावने हविःप्रदानाय स्पट् स्पष्टा होता प्र प्रकर्षेण अक्रन् क्रन्दति स्तौति वोयुष्मान्वा सुष्टुप्राप्तव्यायदानायाक्रन् क्रन्दतेःशब्दकर्मणोलङर्थेलुङितिपिरूपं हेहोतः दिवोद्योतमानाय द्युदेवाय प्रार्च प्रकर्षेणस्तुहि हेआत्मन् तथा पृथिव्यै पृथिव्याश्च ऋतं स्तोत्रं भरे संपादयामि द्यावापृथिव्यावपिमरुतामाधारत्वात् अत्रनिपातभाजोभवतः किंच तेमरुतोश्वान् व्यापकानुदकसंघान् उक्षन्तेसिंचन्ति रजआअन्तरिक्षं आसर्वतस्तरुषन्तेतरन्ति संचरन्ति स्वंभानुं स्वकीयंतेजः अर्णवैःमेघैःसह अनुश्रथयन्ते अनुश्लेषयन्ति अनुकूलंप्रापयन्तीत्यर्थः॥ १॥

१. हे मरुतो, कल्याण के लिए हव्यदाता होता तुम लोगों का स्तवन भली भाँति से करते हैं। हे होता, तुम द्युतिमान् द्युदेव का स्तवन करो। हे आत्मा, हम पृथ्वी का स्तवन करते हैं। मरुद्गण सर्वव्यापिनी वृष्टि को पातित करते हैं। वे अन्तरिक्ष में सर्वत्र सञ्चरण करते हैं और मेघों के साथ अपने तेज को प्रकाशित करते हैं।

अमा॑दे॒षांभि॒यसा॒भूमि॑रेजति॒नौर्नपू॒र्णाक्ष॑रति॒व्यथि॒र्यती।
दू॒रे॒दृशो॒येचि॒तय॑न्त॒एम॑भिर॒न्तर्म॒हेवि॒दथे॑येतिरे॒नरः॥ २॥

अमा॑त्। ए॒षाम्। भि॒यसा॑। भूमिः॑। ए॒ज॒ति॒। नौः। न।
पू॒र्णा। क्ष॒र॒ति॒। व्यथिः॑। य॒ती। दू॒रे॒ऽदृशः॑। ये। चि॒तय॑न्ते।
एम॑ऽभिः। अ॒न्तः। म॒हे। वि॒दथे॑। ये॒ति॒रे॒। नरः॑॥ २॥

एषां अन्वादेशविषयत्वादनुदात्तः एषांमरुतां भियसा भयेन भूमिरेजति कंपते नौर्न पूर्णा प्राणिभिः सायथोदकमध्ये क्षरति चलति व्यथिः व्यथितायती गच्छन्ती एतदुभयंमैषि-

शेषणं दूरेदृशोदूरेदृश्यमानाअपि येमरुतः एमभिर्गमनैः चितयन्ते ज्ञायन्ते तेमहान्तोमरुतोविदथे यज्ञे महे महते हविषे हविर्भक्षणाय अमाव् स्वस्थानाव् अन्तर्द्यावापृथिव्योर्मध्ये येतिरे यतन्ते नरोनेतारोमरुतः ॥ २ ॥

२. प्राणियों से पूर्ण नौका जैसे जल मध्य में कम्पित होकर गमन करती है, वैसे ही मरुतों के भय से पृथिवी कम्पित होती है। वे दूर से ही दृश्यमान होने पर भी गति-द्वारा परिज्ञात होते हैं। नेता मरुद्गण द्यावा-पृथिवी के मध्य में अधिक हव्य भक्षण के लिए चेष्टा करते हैं।

गवामिवश्रियसेशृङ्गमुत्तमंसूर्योनचक्षूरजसोविसर्जने ।
अत्याइवसुभ्वश्चारवस्थनमर्याइवश्रियसेचेतथानरः ॥ ३ ॥

गवाम्ऽइव । श्रियसे । शृङ्गम् । उत्ऽतमम् । सूर्यः । न । चक्षुः ।
रजसः । विऽसर्जने । अत्याःऽइव । सुऽभ्वः । चारवः । स्थन ।
मर्याःऽइव । श्रियसे । चेतथ । नरः ॥ ३ ॥

हेमरुतः यूयं गवांशृंगमिव उत्तममुत्कृष्टं उष्णीषपट्टादिकं श्रियसे श्रिये धारयथ इतिशेषः सूर्योन सूर्यइव सयथा रजसः तेजसोविसर्जने चक्षुः दर्शनसाधनं मंडलं धत्ते तद्वद्रजसोवृष्टेर्विसर्जने विसर्जनाय चक्षुः सर्वस्यप्रकाशकंतेजोधारयथ अत्याइवाश्वाइव सुभ्वः सुष्ठुसर्वत्रभवन्तः वेगवन्तः चारवोदर्शनीयाः स्थन भवथ मर्यामर्त्यायजमानाइव तेयथा श्रियसे जानन्ति यज्ञादिकंतद्वच्छ्रियेचेतथ जानथ हेनरोनेतारोमरुतः ॥ ३ ॥

३. हे मरुतो, तुम लोग शोभा के लिए गोशृङ्ग की तरह उत्कृष्ट शिरोभूषण धारण करते हो। दिवस के नेता सूर्य जिस प्रकार से निज रश्मि विकीर्ण करते हैं, उसी तरह तुम लोग वृष्टि के लिए सर्वप्रकाशक तेज धारण करते हो। तुम लोग अश्वों की तरह वेगवान् और मनोहर हो। हे नेता मरुतो, यजमान आदि जैसे यज्ञादि कार्य को जानते हैं, वैसे ही तुम लोग भी जानते हो।

कोवोमहान्तिमहतामुदश्नवत्कस्काव्यामरुतःकोहपौंस्या ।
यूयंहभूमिंकिरणंनरेजथप्रयद्भरध्वेसुवितायदावने ॥ ४ ॥

कः । वः । महान्ति । महताम् । उत् । अश्नवत् । कः । काव्या ।
मरुतः । कः । ह । पौंस्या । यूयम् । ह । भूमिम् । किरणम् ।
न । रेजथ । प्र । यत् । भरध्वे । सुविताय । दावने ॥ ४ ॥

हेमरुतः वोयुष्माकं महतां पूज्यानां कोयजमानोमहान्तिश्रेयांसि उदश्नवत् उत्कर्षं प्राप्नुयात् कश्चतदर्थं काव्या काव्यानि कवीनां युष्माकंसंबन्धीनि स्तोत्राणि उदश्नवत् कोहकश्च पौंस्या पौंस्यानि पराक्रमान् उदश्नवत् आदरार्थंपुनर्वचनं यूयंह यूयंखलु

भूमिं किरणंन किरणमिव रेजथ किरणंयथावृष्ट्यर्थंचालयथ तद्वद् भूमिंरेजथ यद्यस्मा-त्सुविताय सुष्ठुप्राप्तव्याय प्राप्तव्यस्येत्यर्थः तादृशस्य धनस्य वृष्ट्युदकस्यवा दावने दा-नाय प्रभरध्वे प्रकर्षेणसंपादयथवृष्टिं यस्माद्यूयं एवंकुरुथ तस्मात्कएवंकरोतीत्यर्थः॥ ४ ॥

४. हे मरुतो, तुम सब पूजनीय हो। तुम लोगों की पूजा कौन कर सकता है ? कौन तुम लोगों के स्तोत्र-पाठ में समर्थ हो सकता है ? कौन तुम लोगों के वीरत्व की घोषणा कर सकता है ? क्योंकि तुम लोगों के द्वारा वृष्टिपात होने से भूमि किरण की तरह कम्पित होने लगती है।

अश्वाइवेदरुषासःसबन्धवःशूराइवप्रयुधःप्रोतयुयुधुः।
मर्याइवसुवृधोवावृधुर्नरःसूर्यस्यचक्षुःप्रमिनन्तिवृष्टिभिः॥ ५॥

अश्वाःऽइव। इत्। अरुषासः। सऽबन्धवः। शूराःऽइव। प्रऽयुधः।
प्र। उत। युयुधुः। मर्याःऽइव। सुऽवृधः। ववृधुः। नरः। सूर्यस्य।
चक्षुः। प्र। मिनन्ति। वृष्टिऽभिः॥ ५॥

मरुतएतेअश्वाइव शीघ्रगन्तारः अरुषासः आरोचमानाः सबन्धवः समानएकएवबन्धु-र्बन्धकोरुद्रोयेषांतेतादृशाः परस्परंबंधवः स्नेहयुक्तावा शूराभटाइव प्रयुधः प्रयोद्धारोवैरि-भिःसह तादृशाः उतापिच प्रयुयुधुः प्रकर्षेण युध्यन्ते मर्याइव मनुष्यायथावर्धन्ते तथा सुवृ-धः सुष्ठुवर्धयितारोवर्धमानावा नरोनेतारोववृधुः वर्धन्ते एवं महात्मानः सूर्यस्यचक्षुस्तेजःसमूहं मंडलंवा वृष्टिभिः प्रमिनन्ति प्रकर्षेणहिंसन्ति आवृण्वन्तीत्यर्थः॥ ५॥

५. अश्वों की तरह वेगगामी, दीप्तिमान् समान बन्धुवाले मरुद्गण वीरों की तरह युद्ध-कार्य में व्याप्त हैं। समृद्धि-सम्पन्न मनुष्यों की तरह नेता मरुद्गण अत्यन्त शक्तिशाली होकर, वृष्टि-द्वारा, सूर्य के चक्षु को आवृत करते हैं।

तेअज्येष्ठाअकनिष्ठासउद्भिदोमध्यमासोमहसाविवावृधुः।
सुजातासोजनुषापृश्निमातरोदिवोमर्याआनोअच्छाजिगातन॥६॥

ते। अज्येष्ठाः। अकनिष्ठासः। उत्ऽभिदः। अमध्यमासः।
महसा। वि। ववृधुः। सुऽजातासः। जनुषा। पृश्निऽमातरः।
दिवः। मर्याः। आ। नः। अच्छ। जिगातन॥ ६॥

तेमरुतः अज्येष्ठाः अकनिष्ठासः अकनिष्ठाः उद्भिदउद्भेदयितारः शत्रूणां अमध्यमासः अमध्यमाः सर्वप्रकारैःसमः महसा तेजसा विववृधुः विवर्धन्ते सुजातासः सुष्ठुसंभूताः जनुषा जन्मना पृश्निमातरः पृश्नेःपुत्राः मर्यामनुष्येभ्योहितायूयं दिवःसकाशात् नोस्मानच्छाभिमुखं आजिगातन सर्वतःप्रशंसत साध्वनुष्ठितमिति उत्तरार्धःप्रत्यक्षकृतः यद्वा येसुष्ठुजाताजनुषापृ-

श्निमातरश्चतान् दिवआगतान् हेऋत्विजोमर्यांयूयमाजिगातन आगच्छत अथवा तेनोच्छागच्छन्त्वस्मदभिमुखं ॥ ६ ॥

६. मरुतों के मध्य में कोई भी किसी की अपेक्षा, ज्येष्ठ या कनिष्ठ नहीं हैं। शत्रुसंहारक मरुतों के मध्य में कोई भी मध्यम नहीं हैं। सब तेजोविशेष से वर्द्धमान हैं। हे सुजन्मा, मानवों के हितकारी, पृश्निपुत्र मरुतो, तुम लोग द्युलोक से हम लोगों के अभिमुख आगमन करो।

वयोनयेश्रेणीःपप्तुरोजसान्तान्दिवोबृहतःसानुनस्परि ।
अश्वासएषामुभयेयथाविदुःप्रपर्वतस्यनभनूँरचुच्यवुः ॥ ७ ॥

वयः । न । ये । श्रेणीः । पप्तुः । ओजसा । अन्तान् । दिवः । बृहतः ।
सानुनः । परि । अश्वासः । एषाम् । उभये । यथा । विदुः ।
प्र । पर्वतस्य । नभनून् । अचुच्यवुः ॥ ७ ॥

येमरुतोवयोन पक्षिणइव श्रेणीः पंक्तयःसन्तः ओजसा बलेन दिवोन्तरिक्षस्यआदित्यस्यवा अन्तान् पर्यन्तान् बृहतोमहतः सानुनः समुन्नतस्याकाशवलयस्य परि परितः पप्तुः पतन्ति एषामश्वासःअश्वाः पर्वतस्य मेघस्य नभनून् नभतेःशब्दकर्मणोनभ्राट्इतिवत् नभनवः उदकानि प्राचुच्यवुः च्यावयन्ति उभयेदेवामनुष्याश्च यथाविदुर्जानन्ति तथामनुष्याणांज्ञानंप्रसिद्धं देवाश्चवृष्टौसत्यां आग्रयणादौ हविःप्रदानेनजानन्ति देवानांवृष्टिसंपूर्तिपरज्ञानमाश्वलायनेनउक्तं यदावर्षस्यतृप्तःस्यादथाग्रयणेनयजेतेत्युपक्रम्यापिदेवाआहुस्तृप्तोनूनंवर्षस्याग्रयणेनहियजतइति ॥ ७ ॥

७. हे मरुतो, तुम लोग पंक्तिबद्ध होकर उड़नेवाले पक्षी की तरह बलपूर्वक विस्तीर्ण और समुन्नत नभोमंडल के उपरि भाग में होकर अन्तरिक्ष पर्यन्त गमन करते हो। तुम्हारे अश्व मेघ से वृष्टि पातित करते हैं—यह देव और मनुष्य दोनों ही जानते हैं।

मिमातुद्यौरदितिर्वीतयेनःसंदानुचित्राउषसोयतन्ताम् ।
आचुच्यवुर्दिव्यंकोशमेतऋषेरुद्रस्यमरुतोगृणानाः ॥ ८ ॥२४॥

मिमातु । द्यौः । अदितिः । वीतये । नः । सम् । दानुऽचित्राः ।
उषसः । यतन्ताम् । आ । अचुच्यवुः । दिव्यम् । कोशम् ।
एते । ऋषे । रुद्रस्य । मरुतः । गृणानाः ॥ ८ ॥ २४ ॥

नोस्मदर्थं द्यौरंतरिक्षं मिमातुनिर्मिमातुवृष्टिं अस्मदनुकूलांकरोत्वित्यर्थः कीदृशी अदितिरदीना यद्वा द्यौर्मिमातु अदितिर्भूमिश्च मिमातु सुखं किमर्थं वीतये उत्पत्तये प्रजननायवा दानुचित्राः विचित्रप्रकाशादिदानाः उषसः संयतंतां हेऋषे त्वया

गृणानाः स्तूयमानामरुतः रुद्रस्यपुत्राइत्यर्थः एते दिव्यंकोशं मेघमुदकमाचुच्यवुः आच्यावय-न्ति द्विकर्मकोयं ॥ ८ ॥

८. द्यावा-पृथिवी हम लोगों की पुष्टि के लिए वृष्टि उत्पादन करें। निरतिशय दानशीला उषा हम लोगों के कल्याण के लिए यत्न करे। हे ऋषि, ये रुद्रपुत्र तुम्हारे स्तवन से प्रसन्न होकर स्वर्गीय वृष्टि-वर्षण करें।

॥ इतिचतुर्थस्यतृतीयेचतुर्विंशोवर्गः॥२४॥

ईळेअग्निंस्ववसमित्यष्टर्चंचतुर्थंसूक्तं श्यावाश्वस्यार्षं सप्तम्यष्टम्यौजगत्यौ शिष्टाःषट्त्रिष्टुभः मरुद्देवताकं अग्निमरुद्देवताकंवा अनुक्रान्तंच—ईळेद्विजगत्यन्तमाग्नेयंचवेति। सूक्तविनियोगोलैंगिकः आद्याकारीर्यांसामिधेनीषुधाय्या सूत्रितंच—ईळेअग्निंस्ववसंनमोभिरितिधाय्येइति।

ईळेअ॒ग्निंस्ववसं॒नमो॑भिरि॒हप्र॑स॒त्तोविचयत्कृ॒तंनः॑।
रथैरिव॒प्रभ॑रेवाज॒यद्भिः॑प्रदक्षि॒णिन्म॒रुतां॒स्तोम॑मृध्याम्॥ १ ॥

ईळे॑। अ॒ग्निम्। सु॒ऽअव॑सम्। नमः॑ऽभिः। इ॒ह। प्र॒ऽस॒त्तः। वि। च॒य॒त्। कृ॒तम्। नः॒। रथैः॑ऽइव। प्र। भ॒रे॒। वा॒ज॒यत्ऽभिः॑। प्र॒ऽद॒क्षि॒णित्। म॒रुता॑म्। स्तोम॑म्। ऋ॒ध्या॒म्॥ १ ॥

अहंश्यावाश्वोऽग्निं स्ववसं स्वायत्तरक्षणं नमोभिःस्तोत्रैः ईळे स्तौमि तत्स्तोत्रंकृतमिहेदानीं प्रसत्तः प्रसन्नः प्रकर्षेणयज्ञंप्राप्तोवासन् नोस्मदर्थं विचयत् विजानातु वाजयद्भिरन्नमिच्छद्भिः स्तोत्रैः रथैरिव रथैर्यथाभिमतंप्राप्नुवन्ति तद्वत् रंहणसाधनैः प्रभरे प्रकर्षेण संपादयामि अभिमतं प्रदक्षिणित् प्रादक्षिण्येनगच्छन् मरुतांस्तोमं स्तोत्रमृध्यांवर्धयेयम्॥ १ ॥

१. हम श्यावाश्व ऋषि स्तोत्र द्वारा रक्षाकारी अग्नि की स्तुति करते हैं। वे अभी यज्ञ में उपस्थित होकर प्रसन्नतापूर्वक उस स्तोत्र को जानें। जैसे रथ अभिमत स्थान को प्राप्त करता है, उसी तरह से हम अन्नाभिलाषी स्तोत्रों-द्वारा अपने अभीष्ट का सम्पादन करते हैं। प्रदक्षिणा करके हम मरुतों के स्तोत्र को वर्द्धित करें।

आयेत॒स्थुःपृष॑तीषुश्रु॒तासु॑सु॒खेषु॑रु॒द्रामरु॒तोरथे॑षु।
वना॑चिदुग्राजिह॒तेनिवो॑भि॒यापृ॑थि॒वीचि॑द्रेजते॒पर्व॑तश्चित्॥ २ ॥

आ। ये। त॒स्थुः। पृष॑तीषु। श्रु॒तासु॑। सु॒ऽखेषु॑। रु॒द्राः। म॒रुतः॑। रथे॑षु। वना॑। चि॒त्। उ॒ग्राः॒। जि॒ह॒ते॒। नि। वः॒। भि॒या। पृ॒थि॒वी। चि॒त्। रे॒ज॒ते॒। पर्व॑तः। चि॒त्॥ २ ॥

येमरुतोरुद्रारुद्रपुत्राः आतस्थुः आतिष्ठन्ति पृषतीषु मरुतांवाहनेषु श्रुतासु श्रान्तासु प्रसिद्धासुवा सुखेषु खमाकाशंछिद्रं शोभनरथाक्षद्वारेषु रथेषु रथानातस्थुरातिष्ठन्ति हेउग्राः उद्गूर्णबलामरुतोयूयं यदा रथमारूढाःस्थ तदानींवनाचिव् वनान्यपिनिजिहतेन्यग्गछन्ति वो-युष्माकं भिया भीत्या पृथिवीचिव् पृथिव्यपिरेजते पर्वतश्चिव् पर्वतोपिरेजते कंपते उत्तरार्धः प्रत्यक्षकृतः पूर्वार्धेयएवमकुर्वन् तेषांस्तोमम्प्रध्यामितिपूर्वत्रान्वयः ॥ २ ॥

२. हे उद्यतायुध रुद्रपुत्र मरुतो, तुम लोग प्रसिद्ध अश्वों-द्वारा आकृष्ट, शोभन तथा अक्षसमन्वित रथ पर आरूढ़ होकर गमन करो। जब तुम लोग रथाधिरूढ़ होते हो, तब वन तुम्हारे भय से कम्पित होते हैं।

कारीर्यांमारुतस्यसप्तकपालस्यपर्वतश्चिदित्येषायाज्या सूत्रितंच—पर्वतश्चिन्महिवृद्धोबिभायस्तृजन्तिरश्मिमोजसेति।

पर्वतश्चिन्महिवृद्धोबिभायदिवश्चित्सानुरेजतस्वनेवः।
यत्क्रीळथमरुतऋष्टिमन्तआपइवसध्र्यञ्चोधवध्वे ॥ ३ ॥

पर्वतः। चित्। महि। वृद्धः। बिभाय। दिवः। चित्।
सानु। रेजत। स्वने। वः। यत्। क्रीळथ। मरुतः।
ऋष्टिऽमन्तः। आपःऽइव। सध्र्यञ्चः। धवध्वे ॥ ३ ॥

हेमरुतः वोयुष्माकं स्वनेभयंकरशब्देसति पर्वतश्चिव् पर्वतोपि महि महान्वृद्धःसन्नपि बिभाय बिभेति दिवश्चिव् अन्तरिक्षस्यापि सानुसमुच्छ्रितःप्रदेशोरेजत कंपते यद्यदा क्रीडथ हेमरुतोयूयं ऋष्टिमन्तआयुधवन्तःसन्तः तदा आपइव उदकानीव सध्र्यंचः सहांचनाः धवध्वे धावध्वे गच्छथ ॥ ३ ॥

३. हे मरुतो तुम लोगों के द्वारा भयंकर शब्द किये जाने पर अत्यन्त वर्द्धमान पर्वत भी भीत हो जाते हैं और अन्तरिक्ष के उन्नत या विस्तृत प्रदेश भी कम्पित हो जाते हैं। हे मरुतो, तुम सब आयुधवान् हो। जब तुम लोग क्रीड़ा करते हो, तब उदक की तरह प्रधावित होते हो।

वराइवेद्रैवतासोहिरण्यैरभिस्वधाभिस्तन्वःपिपिश्रे।
श्रियेश्रेयांसस्तवसोरथेषुसत्रामहांसिचक्रिरेतनूषु ॥ ४ ॥

वराःऽइव। इत्। रैवतासः। हिरण्यैः। अभि। स्वधाभिः।
तन्वः। पिपिश्रे। श्रिये। श्रेयांसः। तवसः। रथेषु। सत्रा।
महांसि। चक्रिरे। तनूषु ॥ ४ ॥

वराइव विवाहयोग्यायुवानइव तेयथा रैवतासोधनवन्तोहिरण्यैःहिरण्यमयैराभरणविशेषैः स्वधाभिरुदकैश्च तन्वः स्वीयानिशरीराणि अभिपिपिश्रे संयोजयन्ति अलंकुर्वन्ति तद्वदेतेमरुतोपि रैवतासः धनवन्तः हिरण्यैर्हिरण्यस्थानीयैः विद्युदाख्यैराभरणैः स्वधाभिश्च तन्वः स्वीयानिशरीराणि पिपिश्रे श्रिये शोभायै श्रेयांसः श्रेष्ठाः तवसोबलवन्तोमरुतोरथेषु सत्रा सत्यं सहवा तनूषु महांसि चक्रिरे कृतवन्तः सर्वाभरणैरुदकैश्चोपेताःरथानधिष्ठाय शरीरेषु तेजांस्यधारयन्नित्यर्थः ॥ ४ ॥

४. विवाह के योग्य धनवान् युवा जिस प्रकार सुवर्णमय-अलंकार तथा उदक के द्वारा अपने शरीर को भूषित करता है, उसी प्रकार सर्वश्रेष्ठ, बलशाली मरुद्गण रथ के ऊपर समवेत होकर अपने शरीर की शोभा के लिए तेज धारण करते हैं।

अज्येष्ठासोअकनिष्ठासएतेसंभ्रातरोवावृधुःसौभगाय ।
युवापितास्वपारुद्रएषांसुदुघापृश्निःसुदिनामरुद्भ्यः ॥ ५ ॥

अज्येष्ठासः । अकनिष्ठासः । एते । सम् । भ्रातरः । ववृधुः । सौभगाय । युवा । पिता । सुऽअपाः । रुद्रः । एषाम् । सुऽदुघा । पृश्निः । सुऽदिना । मरुत्ऽभ्यः ॥ ५ ॥

अज्येष्ठासःअकनिष्ठासः परस्परंज्येष्ठकनिष्ठभावरहिताः सहैवोत्पन्नाः समानबलाएतेमरुतः भ्रातरः परस्परंभ्रातृभूताःसन्तः सौभगाय सुभगत्वाय संववृधुर्वर्धन्ते युवा नित्यतरुणः स्वपाः शोभनकर्मैषांमरुतां रुद्रःपिता सुदुघा सुष्ठुदोग्ध्री पृश्निर्गोदेवता मातृभूता मरुद्भ्योमरुदर्थं सुदिना शोभनदिनानि अकुरुतामितिशेषः ॥ ५ ॥

५. ये मरुद्गण एक साथ ही उत्पन्न हुए हैं अथवा समान बलवाले हैं। परस्पर ज्येष्ठ और कनिष्ठ भाव से वर्जित हैं। ये मरुद्गण परस्पर भ्रातृभाव से सौभाग्य के लिए वर्द्धमान होते हैं। नित्य तरुण तथा सत्कर्म के अनुष्ठानकारी मरुतों के पिता रुद्र और जननी-स्वरूपा दोहनयोग्या पृश्नि (गो-देवता) मरुतों के लिए शोभन दिन उत्पन्न करें।

यदुत्तमेमरुतोमध्यमेवायद्वावमेसुभगासोदिविष्ठ ।
अतोनोरुद्राउतवान्व१स्याग्नेवित्ताद्धविषोयद्यजाम ॥ ६ ॥

यत् । उत्ऽतमे । मरुतः । मध्यमे । वा । यत् । वा । अवमे । सुऽभगासः । दिवि । स्थ । अतः । नः । रुद्राः । उत । वा । नु । अस्य । अग्ने । वित्तात् । हविषः । यत् । यजाम ॥ ६ ॥

हेमरुतःयद्यूयं उत् उत्कृष्टे उत्तमेचरमेवा दिवि द्युलोके मध्यमेवादिवि यद्वा अवमेदिवि हेसुभगासः स्थ भवथ त्रयोवाइमेत्रिवृतोलोकास्तिस्रोदिवःपृथिवीरित्यादिश्रुतेः। द्युलोकस्य त्रैविध्यं अतः अस्मात् स्थानत्रयात्नोस्मदर्थं हेरुद्राआगच्छतेतिशेषः उतवा अथवा नु अद्य यद्यजाम यद्धविःप्रक्षिपामः हेअग्ने त्वं अस्यहविषः एतद्धविर्वित्तात् विद्धि ॥ ६ ॥

६. हे सौभाग्यशाली मरुतो, तुम लोग उत्तम (उत्कृष्ट) द्युलोक में, मध्यम द्युलोक में अथवा अधोद्युलोक में वर्तमान होते हो। हे रुद्रो, उन स्थानों (तीनों द्युलोकों) से हम लोगों के लिए आगमन करो। हे अग्नि, हम आज जो हवि प्रदान करते हैं, उसे तुम जानो।

अग्निश्चयन्मरुतोविश्ववेदसोदिवोवहध्वउत्तरादधिष्णुभिः।
तेमन्दसानाधुनयोरिशादसोवामंधत्तयजमानायसुन्वते ॥ ७ ॥

अग्निः। च। यत्। मरुतः। विश्वऽवेदसः। दिवः। वहध्वे।
उत्ऽतरात्। अधि। स्नुऽभिः। ते। मन्दसानाः। धुनयः।
रिशादसः। वामम्। धत्त। यजमानाय। सुन्वते ॥ ७ ॥

हेविश्ववेदसः सर्वस्यज्ञातारोविश्वधनावा हेमरुतोयद्यूयमग्निश्च दिवोद्युलोकादुत्तरादुत्कृष्टतरात् अधि उपरि स्नुभिः सानुभिः उपरिप्रदेशे वहध्वे उह्यध्वे तत्रनिवसथेत्यर्थः यद्वा स्नुशब्देन तत्सदृशाअश्वाउच्यन्ते तैर्वाउह्यध्वे तेयूयं मन्दसाना मोदमानाअस्मदीयैः स्तोत्रैर्हविर्भिश्च धुनयः शत्रूणांकंपयितारः रिशादसः अस्मद्धिंसकानामत्तारःसन्तोवामं वमनीयंधनं धत्तदत्त यजमानाय सुन्वतेअभिषवंकुर्वते ॥ ७ ॥

७. हे सर्वज्ञ मरुतो, तुम लोग और अग्नि द्युलोक के उत्कृष्टतर उपरि प्रदेश में अवस्थान करते हो। तुम लोग हमारे स्तवन और हव्य से प्रसन्न होकर शत्रुओं को कम्पित तथा विनष्ट करो और अभिषव करनेवाले यजमानों को अभिलषित धन प्रदान करो।

अग्नेमरुद्भिरित्यष्टमीआग्निमारुतस्ययाज्या अग्नेमरुद्भिःशुभयद्भिर्ऋक्वभिरितिसूत्रितत्वात् तत्पाठस्तु।

अग्नेमरुद्भिःशुभयद्भिर्ऋक्वभिःसोमंपिबमन्दसानोगणश्रिभिः।
पावकेभिर्विश्वमिन्वेभिरायुभिर्वैश्वानरप्रदिवाकेतुनासजूः ॥८॥२५॥

अग्ने। मरुत्ऽभिः। शुभयत्ऽभिः। ऋक्वऽभिः। सोमम्। पिब।
मन्दसानः। गणश्रिऽभिः। पावकेभिः। विश्वम्ऽइन्वेभिः।
आयुऽभिः। वैश्वानर। प्रऽदिवा। केतुना। सऽजूः ॥ ८ ॥ २५ ॥

१ ऐ० ब्रा० २. १७. । २ ऋ० सं० ३. ८. ४. ।

हेअग्ने मरुद्भिःसह मन्दसानःसन् सोमंपिब कीदृशैर्मरुद्भिः शुभयद्भिः शोभमानैः अन्यान् शोभयद्भिर्वा ऋक्वभिः स्तुत्यैः गणश्रिभिः गणभावमाश्रयद्भिः पावकेभिः शोधकैः विश्वमिन्वेभिः विश्वंवृष्टयाप्रीणयद्भिः आयुभिः आयुष्मद्भिः हेवैश्वानर विश्वनरहिताग्ने प्रदिवा पुराणेन केतुना ज्वालापुंजेन सजूः सहितः ॥ ८ ॥

८. हे वैश्वानर अग्नि, पुरातन ज्वाल-पुञ्ज से युक्त होकर तुम शोभमान, पूजनीय, गणभाव का आश्रय (समवेत) करनेवाले, पवित्रता-विधायक, प्रीतिदायक और दीर्घजीवी मरुतों के साथ सोमपान करो।

॥ इतिचतुर्थस्यतृतीयेपंचविंशोवर्गः ॥२५॥

केष्ठानरइत्येकोनविंशत्यृचंपंचमंसूक्तं अत्रानुक्रमणिका—केष्ठैकोनागायत्रंश्यावाश्वोत्रवैददश्वीतरंतपुरुमीह्ळौदाल्भ्यंरथवीतिंमरुतश्चदानतुष्टःप्रशशंसबुध्वाचतरन्तमहिषींशशीयसींपंचम्यनुष्टुम्नवमीसतोबृहतीति । श्यावाश्वऋषिः पंचम्यनुष्टुप् नवमीसतोबृहती शिष्टागायत्र्यः आद्याश्चतस्रोमरुद्देवताकाः सनतसेत्यादीनांचतसृणांशशीयसीनामतरन्तस्यराज्ञोभार्यादेवता उतमेरपदित्यस्यावैददश्विःपुरुमीह्ळोदेवता योमेधेनूनामित्यस्यावैददश्विस्तरन्तोराजादेवता यईवहन्तइत्याद्याःषण्मारुत्यः एतंमइत्यस्यतृचस्यदाल्भ्योरथवीतिर्नामराजादेवता विनियोगोलैंगिकः। अत्राश्चर्यंपुरावृत्तमाहुरागमपारगाः ॥ अर्चनानाःपुरात्रेयोदाल्भ्येनरथवीतिना ॥ १ ॥ आर्त्विज्यायवृतोयज्ञेवितते हौत्रआस्थितः ॥ रथवीतिसुतांकन्यांददर्शपितुरंतिके ॥ २ ॥ ययाचेस्वकुमारायश्यावाश्वायचतांसुतां ॥ सप्रदानमनाभार्यामपृच्छत्किंमयच्छसि ॥ ३ ॥ इतिपृष्टापुनःप्राहकथमस्मैप्रदास्यसि ॥ इतःपूर्वंसुतादत्तानासीदनृषयेक्वचित् ॥ ४ ॥ तत्तथैवेतिनिश्चित्यप्रत्याचष्टार्चनानसं ॥ श्यावाश्वःसंस्थितेयज्ञेतेनराज्ञानिराकृतः ॥ ५ ॥ तत्प्रत्याशान्वितोविप्रस्तपस्तेपेसुदारुणं ॥ ब्रह्मचर्यरतःशान्तोभिक्षार्थंपर्यटन्द्विजः ॥ ६ ॥ तरन्तमहिषींसाध्वींबिभिक्षेसौशशीयसीं ॥ सासंप्राप्यान्तिकंपत्युःप्रोवाचागतवानृषिः ॥ ७ ॥ इत्युक्तोनृपतिर्भार्यांप्रत्याहैनंप्रपूजय ॥ सानुज्ञातागवांयूथंप्रादादाभरणानिच ॥ ८ ॥ तरन्तोपिपुनस्तस्मैप्रादाद्धनमपेक्षितं ॥ दत्त्वाचपुरुमीह्ळस्यस्वानुजस्यान्तिकंप्रति ॥ ९ ॥ प्रेरयामासतम्नृषिंसोपित्वांमानयिष्यति ॥ १० ॥ तथेतिराज्ञोवचनंनिशम्यतद्भार्ययादर्शितसर्वमार्गः ॥ गच्छन्शनैरर्धपथेमरुद्गणान्समानरूपान्सदिदृक्षयागतान् ॥ ११ ॥ विलोक्यविप्रःसभयःप्रणम्यकृतांजलिःकंटकितांगसंघः ॥ तुष्टावदृष्टान्मरुतोविशिष्टैरर्थैर्वचोभिःपरितुष्टचित्तः ॥ १२ ॥ संप्राप्यसर्वंस्वमनीषितंतदामरुद्गणेभ्योमुदितात्मवद्भ्यः ॥ १३ ॥ तदाभवदृषिःसूक्तद्रष्टाश्यावाश्वनामकः ॥ पश्चात्पुनर्गृहंगत्वाभूयोलब्ध्वागवांशतं ॥ १४ ॥ दाल्भ्योमंत्रदृशेराज्ञाचोदितःस्वसुतांददौ ॥ पुरुमीह्ळस्तरन्तश्चतद्भार्याचशशीयसी ॥ १५ ॥ दाल्भ्योयोरथवीत्याख्यःसप्तयेमरुतांगणाः ॥ तेतस्मैयद्ददुस्तुष्टास्तत्केष्ठेत्यत्रवर्ण्यते ॥ १६ ॥

**केष्ठानरःश्रेष्ठतमायएकएकआयय । परमस्याःपरावतः ॥ १ ॥**

**के । स्थ । नरः । श्रेष्ठंऽतमाः । यः । एकंःऽएकः । आऽयय । परमस्याः । पराऽवतः ॥ १ ॥**

हेनरोनेतारोमरुतः श्रेष्ठतमाः अत्यन्तंश्रेष्ठाः यूयं केष्ठ केस्थ केभवथ एवंस्वरूपानिश्चयाव संदिह्यन्नवीति येयूयं एकएकः प्रत्येकं आयय आगच्छथ कस्मादितिउच्यते परमस्याःपरावतः अत्यन्तदूरदेशाव अन्तरिक्षादित्यर्थः ॥ १ ॥

१. हे श्रेष्ठतम नेताओ, तुम लोग कौन हो ? दूर देश अर्थात् अन्तरिक्ष से तुम लोग एक-एक करके उपस्थित होओ।

**क्व१वोश्वाःक्वा३भीशवःकथंशेककथायय । पृष्ठेसदोनसोर्यमः ॥ २ ॥**

**क्वं । वः । अश्वाः । क्वं । अभीशवः । कथम् । शेक । कथा । यय । पृष्ठे । सदः । नसोः । यमः ॥ २ ॥**

हेमरुतोवोयुष्माकंअश्वाः क्व कुत्रत्याः क्वचाभीशवोबन्धनरज्जवः कथंच शेक शीघ्रंगन्तुंशक्ताभवथ कथा कथं यय याताःस्थ पृष्ठे अश्वानांपृष्ठदेशेसदः सीदति तिष्ठत्यनेतिसदः पर्याणं तत्रदृश्यते तथा नसोर्नासिकयोर्यमोनियमिता पलायनप्रतिबन्धकारीपशोर्नासिकयोर्दृश्यते तस्मादश्वादिलिंगैः कुत्रापित्वरितगमनाइव प्रतिभान्ति केयूयमितिदेवत्वमनवधार्याह॥२॥

२. हे मरुतो, तुम लोगों के अश्व कहाँ हैं ? लगाम कहाँ है ? शीघ्र गमन में समर्थ होते हो ? किस प्रकार का गमन है ? अश्वों के पृष्ठ देश पर आस्तरण और नासिकाद्वय में बन्धनरज्जु लक्षित होते हैं।

**जघनेचोदएषांविसक्थानिनरोयमुः । पुत्रकृथेनजनयः ॥ ३ ॥**

**जघने । चोदः । एषाम् । वि । सक्थानि । नरः । यमुः । पुत्रऽकृथे । न । जनयः ॥ ३ ॥**

एषामश्वानांजघने हन्तव्यप्रदेशे चोदःप्रेरिका कशा अराग्रकाष्ठविशेषोवा वर्तते शीघ्रगमनायताडयन्वर्ततइत्यर्थः सक्थानि ऊरुप्रदेशान् नरोनेतारोमरुतोवि विविच्ययमुः नियच्छन्ति आशुधावनेन विवृताभवन्तीत्यर्थः विवृतौदृष्टान्तः—पुत्रकृथे पुत्रकरणे उत्पादने जनयः अपत्योत्पादयित्र्योयोषितइव तायथापुत्रोत्पादनकाले संगमसमये ऊरू विवृतौकुर्वन्तितद्वदित्यर्थः ॥३॥

३. अश्वों के जघन देश में शीघ्र गमन के लिए कशा (कोड़ा) घात होता है। पुत्रोत्पादन (संगम) काल में जैसे रमणियाँ उरुद्वय को विवृत करती हैं, उसी प्रकार नेता मरुद्गण अश्वों को, उरुद्वय विवृत करने के लिए बाध्य करते हैं।

अथचतुर्थी—

परावीरासएतनमर्यासोभद्रजानयः। अग्नितपोयथासथ ॥ ४ ॥

परा। वीरासः। इतन। मर्यासः। भद्रऽजानयः। अग्निऽतपः।
यथा। असथ ॥ ४ ॥

कशाताडनादिलिंगेन जिगमिषून्सत्वाब्रूते—हेवीरासोवीराः अमित्राणामीरयितारः हेमर्यासोमर्त्येभ्योहिताः हेभद्रजानयः भद्रःस्तुत्योजानिर्जन्मयेषांतेतथोक्ताः रुद्रपुत्राइत्यर्थः अग्नितपोऽग्निनातप्ताः ताम्रादयोयथादीप्ताः तद्वत्प्रदीप्ताः असथ भवथ अथवाग्नितप्तादग्धदेहायथापलायन्तेतथाभवथेति ॥ ४ ॥

४. हे वीरो, शत्रुसंहारको, हे मनुष्यों के लिए कल्याण करनेवालो हे शोभन जन्मवालो, मरुत्पुत्रो, तुम लोग अग्नितप्त ताम्र की तरह प्रदीप्त दृष्ट होते हो।

सनत्साश्व्यंपशुमुतगव्यंशतावयम्।
श्यावाश्वस्तुताययादोर्वीरायोपबर्बृहत् ॥ ५ ॥ २६ ॥

सनत्। सा। अश्व्यम्। पशुम्। उत। गव्यम्। शतऽअवयम्।
श्यावाश्वऽस्तुताय। या। दोः। वीराय। उपऽबर्बृहत् ॥ ५ ॥ २६ ॥

सातरन्तमहिषी मत्थंसनत् प्रादात् किं अश्व्यं अश्वात्मकं तत्समूहात्मकंवा पशुं जातावेकवचनं उतापिच गव्यं गोसमूहात्मकं पशुं शतावयं अनेकैरविभिर्युक्तं सनदिति सेत्युक्तं केत्याह याश्यावाश्वस्तुताय श्यावाश्वेनमयास्तुतायवीराय तरन्ताय दोः स्वकीयंभुजं उपबर्बृहत् उपोदयच्छदालिंगनाय माम्सनदिति यतोभर्तृप्रेमास्पदा तस्मादेव बहुधनंदातुंशक्तेत्यर्थः ॥ ५ ॥

५. श्यावाश्व (हम) ने जिसकी स्तुति की है, जिसने वीर तरन्त को भुजपाश में बद्ध किया है, वही तरन्त महिषी शशीयसी हमें अश्व, गौ और शतमेषात्मक पशुयूथ प्रदान करती हैं।

॥ इतिचतुर्थस्यतृतीयेषड्विंशोवर्गः॥२६॥

अथषष्ठी—

उतत्वास्त्रीशशीयसीपुंसोभवतिवस्यसी। अदेवत्रादराधसः ॥ ६ ॥

उत। त्वा। स्त्री। शशीयसी। पुंसः। भवति। वस्यसी।
अदेवऽत्रात्। अराधसः ॥ ६ ॥

उतापिच त्वा एका शशीयसी शशीयसीतिएतन्महिष्यानाम सैवस्त्री यद्वा उतेत्ययमेव-कारार्थे स्त्रीषुसैवप्रशस्येत्यर्थः त्वसमसिमनेमेत्यनुच्चानीतिवचनात् त्वेतिनिघातः सैवपुंसःपुरुषाद्वस्यसी वसीयसी भवति कस्मात्पुंसइत्युच्यते अदेवत्राव् देवान येनत्रायन्तेस्तुत्यादिनासः अदेवत्रः तस्मादराधसः राधोधनं दानार्हधनरहिताल्लुब्धकादित्यर्थः ॥ ६ ॥

६. जो पुरुष देवों की आराधना और धनदान नहीं करता है, उस पुरुष की अपेक्षा स्त्री शशीयसी सर्वांश में श्रेष्ठ है।

**वियाजानातिजसुरिंवितृष्यंतंविकामिनंम् । देवत्राकृणुतेमनः ॥ ७ ॥**

वि । या । जानाति । जसुरिम् । वि । तृष्यन्तम् । वि ।
कामिनम् । देवऽत्रा । कृणुते । मनः ॥ ७ ॥

याशशीयसी जसुरिं व्यथितं जसिस्ताडनकर्मा उपक्षेपणकर्मावा तंविजानाति तथातृष्यन्तं विजानाति कामिनं धनाद्यभिलाषवन्तं विजानाति अनुकंपयाभिमतं दत्तवतीत्यर्थः देवत्रा देवेषु मनः कृणुते कुरुते देवप्रीत्यर्थंप्रदानबुद्धिंकरोतियासैवस्त्रीतिपूर्वेणसंबन्धः ॥ ७ ॥

७. वह शशीयसी व्यथित (ताडित-उपेक्षित) को जानती है, तृष्णार्त को जानती है और धनाभिलाषी को जानती है अर्थात् कृपावश हो अभिमत धन प्रदान करती है। वह देवों के प्रीत्यर्थ प्रदान-बुद्धि करती है अर्थात् देवों के प्रति अपने चित्त को समर्पित करती है।

**उतघानेमोअस्तुतःपुमाँइतिब्रुवेपणिः । सवैरदेयइत्समः ॥ ८ ॥**

उत । घ । नेमः । अस्तुतः । पुमान् । इति । ब्रुवे । पणिः ।
सः । वैरऽदेये । इत् । समः ॥ ८ ॥

उतघापिच घेतिपूरणः नेमः त्वोनेमइत्यर्धस्येतिनिरुक्तं । नेमःअर्धःजायापत्योर्मिलित्वैककार्यकर्तृत्वादेकएवपदार्थः अर्धशरीरस्यभार्येत्यादिस्मृतेः शशीयस्याअर्धभूतस्तरन्तः पुमान् अस्तुतइतिब्रुवे बहुधा स्तुतोपिगुणस्यातिबाहुल्यादस्तुतएवेतिब्रुवे पणिः स्तोताहं सच तरन्तोवैरदेये वीराधनानांमेरयितारोदानशीलाः तैर्दातव्यंधनंदेयं तस्मिन्धने समः सर्वेभ्योदातेत्यर्थः इदितिपूरणः ॥ ८ ॥

८. शशीयसी के अर्द्धाङ्गभूत पुरुष तरन्त की स्तुति करके भी हम बोलते हैं कि उनका समुचित स्तव नहीं हुआ है; क्योंकि वे दान के विषय में सब समय में एक रूप हैं।

अथनवमी—

उतमेरपद्युवतिर्ममन्दुषीप्रतिश्यावायवर्तनिम् ।
विरोहितापुरुमीळ्हायेयेमतुर्विप्रायदीर्घयशसे ॥ ९ ॥

उत । मे । अरपत् । युवतिः । ममन्दुषी । प्रति । श्यावाय । वर्तनिम् ।
वि । रोहिता । पुरुऽमीळ्हाय । येमतुः । विप्राय । दीर्घऽयशसे ॥९॥

उतापिच श्यावाय श्यावाश्वाय मह्यं अरपत् अलपत् स्पष्टमाचष्ट किं वर्तनिंमार्गं कीदृशीसायुवतिः प्रवृत्तयौवना प्रतिममन्दुषीप्रतिमोदमाना कस्मै दीर्घयशसे प्रभूतान्नाय प्रभूतकीर्तयेवा पुरुमीळ्हायैतन्नामकाय प्रभूतगृहाय क्रियार्थोपपदस्यचकर्मणिस्थानिनइति-चतुर्थी पुरुमीळ्हंप्राप्तुमित्यर्थः तदर्थंरोहितारोहितवर्णावश्वौशशीयस्यादत्तौ वियेमतुः वि-शेषेणयमयतुः धृतवन्तावित्यर्थः यःअश्वाभ्यांयुक्तेरथे स्थापयित्वा पुरुमीळ्हगृहस्यमार्गं प्रदर्शयन्ती पुरतोगता सैवपुंसोभवति वस्यसीतिपूर्वत्रसंबन्धः ॥ ९ ॥

९. यौवनवती शशीयसी ने मुदित मन से श्यावाश्व को (हमें) पथ प्रदर्शित किया था। उसके द्वारा प्रदत्त लोहित वर्णवाले दोनों अश्व हमें यशस्वी, विज्ञ, पुरुमीळ्ह के निकट वहन करते हैं अर्थात् सज्जित रथ पर बैठाकर उसने ही हमें पुरुमीळ्ह के घर तक पहुँचा दिया था।

योमेधेनूनांशतंवैददश्विर्यथाददत् । तरन्तइवमंहना ॥ १० ॥ २७ ॥

यः । मे । धेनूनाम् । शतम् । वैदत्ऽअश्विः । यथा । ददत् ।
तरन्तःऽइव । मंहना ॥ १० ॥ २७ ॥

इयंपुरुमीळ्हस्तुतिः वैददश्विः पुरुमीळ्होपियः मे मह्यं धेनूनांशतं यथा येनप्रका-रेण ददत् दत्तवान् तथा मंहना मंहनीयानिधनान्यपि ददत् तरन्तइव सयथा धेनु-शतंबहुविधंधनंचदत्तवान् तद्वद्वैददश्विःपुरुमीळ्होपिददत् तंस्तुवइतिशेषः ॥ १० ॥

१०. विददश्व के पुत्र पुरुमीळ्ह ने भी हमें तरन्त की ही तरह शत धनु और महामूल्यवान् धन आदि प्रदान किया था।

॥ इतिचतुर्थस्यतृतीयेसप्तविंशोवर्गः ॥ २७ ॥

अथैकादशी—

यईंवहन्तआशुभिःपिबन्तोमदिरंमधु । अत्रश्रवांसिदधिरे ॥ ११ ॥

ये । ईम् । वहन्ते । आशुऽभिः । पिबन्तः । मदिरम् । मधु ।
अत्र । श्रवांसि । दधिरे ॥ ११ ॥

इदानींमरुतएवैतइतिनिश्चित्य जनप्रसिद्धैर्माहात्म्यैःस्तौति—येमरुतई इदानीं आशुभिः शीघ्रगामिभिरश्वैः वहन्ते उह्यन्ते किंकुर्वन्तः मदिरं मदकरं मधु सोमरसंपिबन्तः पाथेयत्वेन धृतंसोममित्यर्थः तेमरुतोत्रास्मिन्देशे श्रवांसि स्तुतिजनितानियशांसि दधिरे धारयन्ति॥११॥

११. जो मरुद्गण शीघ्रगामी अश्वों पर आरूढ़ होकर हर्षविधायक सोमरस को दान करते हुए इस स्थान में आगत हुए थे, वे मरुद्गण इस स्थान पर विविध स्तव धारण करते हैं।

**येषांश्रियाधिरोदसीविभ्राजन्तेरथेष्वा। दिविरुक्मइवोपरि ॥ १२ ॥**

**येषाम्। श्रिया। अधि। रोदसी इति। विऽभ्राजन्ते। रथेषु। आ। दिवि। रुक्मःऽइव। उपरि॥ १२ ॥**

येषांमरुतां श्रिया कांत्या रोदसी द्यावापृथिव्यावधि अधिष्ठिते भवतइतिशेषः यस्मादेतेमरुतोरथेषु विभ्राजन्ते विशेषेणदीप्यन्ते आइतिचार्थे तत्रदृष्टान्तः—उपरि उपरिभूतेदिविद्युलोके रुक्मोरोचमानआदित्यइव यद्वा उपरि रथस्योपरीतिवायोज्यम्॥ १२ ॥

१२. जिन मरुतों की कान्ति से द्यावा-पृथिवी व्याप्त होती है। ऊपर द्युलोक में रोचमान आदित्य की तरह ये मरुद्गण रथ के ऊपर विशेष दीप्त होते हैं।

**युवासमारुतोगणस्त्वेषरथोअनेद्यः। शुभंयावाप्रतिष्कुतः ॥ १३ ॥**

**युवा। सः। मारुतः। गणः। त्वेषऽरथः। अनेद्यः। शुभम्ऽयावा। अप्रतिऽस्कुतः॥ १३ ॥**

समारुतोगणोयुवा सर्वत्रमिश्रयिता नित्यतरुणोवा त्वेषरथोदीप्तरथः अनेद्यः अनिन्द्यः शुभंयावा शोभनंगन्ता अप्रतिष्कुतः अप्रतिगतः अप्रतिशब्दितोवा एवंमहानुभावोगणोदीप्यतइति ॥ १३ ॥

१३. वे मरुद्गण नित्य तरुण, दीप्त रथ विशिष्ट, अनिन्द्य, शोभन रूप से गमन करनेवाले और अप्रतिहतगति हैं।

**कोवेदनूनमेषांयत्रामदन्तिधूतयः। ऋतजाताअरेपसः ॥ १४ ॥**

**कः। वेद। नूनम्। एषाम्। यत्र। मदन्ति। धूतयः। ऋतऽजाताः। अरेपसः॥ १४ ॥**

एषांमरुतांस्थानं कोवेद कोजानाति नूनं इदानीं यत्रस्थाने धूतयः शत्रूणांकंपकाः मदन्ति हृष्यन्ति ऋतजाताः जलार्थमुत्पन्नाः यज्ञेवाप्रादुर्भूताः अरेपसःअपापाः ॥ १४ ॥

१४. जलवर्षणार्थ उत्पन्न अथवा यज्ञ में प्रादुर्भूत, शत्रुओं के कम्पक और निष्पाप मरुद्गण जिस स्थान पर हृष्ट हुए थे, मरुतों के उस स्थान को कौन व्यक्ति जानता है ?

अथपंचदशी–

यूयंमर्तंविपन्यवःप्रणेतारइत्थाधिया। श्रोतारोयामहूतिषु ॥१५॥२८॥

यूयम्। मर्तम्। विपन्यवः। प्रऽनेतारः। इत्था। धिया।
श्रोतारः। यामऽहूतिषु ॥ १५॥ २८ ॥

हेविपन्यवः स्तुतिकामामरुतोयूयं मर्तं मरणस्वभावं यजमानं इत्था अनयाधिया इदानींकृतप्रकारया अनुग्रहबुद्ध्या ईदृशेनस्तुतिकर्मणावा निमित्तेनप्रणेतारः प्रकर्षेणप्रापयितारोभिमतंस्वर्गादिकं यामहूतिषु यामोगमनं तदर्थाहूतयोयस्मिन्नितियामहूतयोयज्ञाः तेषु श्रोतारःआह्वानानां ॥ १५ ॥

१५. हे स्तवाभिलाषी मरुतो, जो मनुष्य यजमान इस प्रकार स्तुति-कर्म-द्वारा तुम लोगों को प्रसन्न करता है, उसे तुम लोग अभिमत स्वर्गादि स्थान प्रदर्शित करते हो। यज्ञ में आहूत होने पर तुम लोग उस आह्वान को श्रवण करते हो।

तेनोवसूनिकाम्यापुरुश्चन्द्रारिशादसः। आयज्ञियासोववृत्तन ॥१६॥

ते। नः। वसूनि। काम्या। पुरुऽचन्द्राः। रिशादसः।
आ। यज्ञियासः। ववृत्तन ॥ १६ ॥

हेरिशादसः हिंसकानांशत्रूणामत्तारः हेयज्ञियासोयज्ञार्हाः पुरुश्चन्द्राः प्रभूताह्लादकधनाः तेयूयं नोस्मभ्यं वसूनि निवासयोग्यानिधनानि काम्या स्पृहणीयानि आववृत्तन आवर्तयथेत्यर्थः मरुतांदानप्रशंसायाअपेक्षितत्वात्प्रार्थनोचिता ॥ १६ ॥

१६. हे शत्रुसंहारक, पूजनीय, विविध धनशाली मरुतो, तुम लोग हम लोगों को अभिवाञ्छित धन प्रदान करो।

अथसप्तदशी–

एतंमेस्तोमंमूर्म्येदार्भ्यायपरावह। गिरोदेविरथीरिव ॥ १७ ॥

एतम्। मे। स्तोमम्। ऊर्म्ये। दार्भ्याय। परा। वह।
गिरः। देवि। रथीःऽइव ॥ १७ ॥

संपन्नऋषिभावस्यश्यावाश्वस्यार्चनानसः ॥ रथवीतिसुतायाश्चविवाहंशौनकोब्रवीत् ॥१॥
कथं——मरुत्स्तुतुंप्रयातेषुश्यावाश्वःसुमहायशाः ॥ प्रादुर्भूतार्षमात्मानंज्ञात्वात्रिकुलनंदनः ॥ २ ॥
रथवीतेर्दुहितरमगच्छन्मनसातदा ॥ ससत्यमृषिमात्मानंप्रवक्ष्यन्रथवीतये ॥ ३ ॥

एतंमेस्तोममित्याभ्यांदौत्येरात्रिंन्यवेदयत् ॥ ऋषेर्नियोगमाज्ञायदेव्यारात्र्याप्रचोदितः ॥ ४ ॥
आदायकन्यकांदातुमुपेयायार्चनानसं ॥ पादौतस्योपसंगृह्यस्थित्वाप्रह्वःकृतांजलिः ॥ ५ ॥
रथवीतिरहंदार्भ्यइतिनामशशंससः ॥ मयासंयोगमिच्छन्तंत्वांप्रत्याचक्षियत्पुरा ॥ ६ ॥
तत्क्षमस्वनमस्तेस्तुमेमास्मभगवन्क्रुधीः ॥ ऋषेःपुत्रःस्वयमृषिःपितासिभगवानृषेः ॥ ७ ॥
हंतप्रतिगृहाणेमांस्नुषामित्येनमब्रवीत् ॥ तस्मैददावश्वशतंसराजास्वलंकृतांचापिसुतांस्नुषार्थं ॥
विवाहकालेपिददौनरेन्द्रःशतंहयानांदुहितुःसहस्रं ॥ गवांसहस्रंवसुचप्रभूतंतमृतंपोन्तेथवनंजगा-
मेति ॥ हेऊर्म्ये रात्रिदेवि ऊर्म्येतिरात्रिनाम मेमदीयं एतं स्तोमं मरुद्भ्यःकृतंस्तोत्रं अहमं-
त्रदृक्भूत्वा मरुतःस्तुतवानित्येवं दार्भ्याय श्यावाश्वाय परा पराङ्मुखी दार्भ्याभिमुखीस-
तीवह प्रापयेत्यर्थः तदेवादरार्थमुच्यते हेरात्रिदेवि गिरः स्तुतीः मरुद्विषयाः परावह रथी-
रिव रथीयथारथेभिप्रेतं वसु स्थापयित्वाभिमतप्रदेशंप्रापयतितद्वत् ॥ १७ ॥

१७. हे रात्रिदेवी, तुम हमारे निकट से रथवीति के निकट इस मरुत्स्तुति को प्रापित करो। यह स्तुति मरुतों के लिए की गई है। हे देवी, रथी जिस प्रकार से रथ के ऊपर विविध वस्तु रख करके गन्तव्य स्थान पर उसे ले जाता है, उसी प्रकार तुम हमारे इस सकल स्तव का वहन करो।

उतमेवोचतादितिसुतसोमेरथवीतौ । नकामोअपवेतिमे ॥ १८ ॥

उत । मे । वोचतात् । इति । सुतऽसोमे । रथऽवीतौ । न ।
कामः । अप । वेति । मे ॥ १८ ॥

हेऊर्म्ये उतापिच मे मां वोचतात् ब्रूहि किमिति उच्यते इति इत्थं कथमिति सुतसोमे कृतसोमयागे रथवीतौ राज्ञि मेकामः तत्पुत्रीविषयोनापवेति नापगच्छति नविरमत इतीत्थं वोचतात् ॥ १८ ॥

१८. हे रात्रि देवी, सोम यज्ञ सम्पन्न होने पर रथवीति को तुम यह कहना कि तुम्हारी पुत्री के प्रति हमारी कामना कम नहीं हुई है।

एषक्षेतिरथवीतिर्मघवागोमतीरनु । पर्वतेष्वपश्रितः ॥ १९ ॥ २९ ॥

एषः । क्षेति । रथऽवीतिः । मघऽवा । गोऽमतीः । अनु ।
पर्वतेषु । अपऽश्रितः ॥ १९ ॥ २९ ॥

कन्यांदत्वाकृतार्थंतंश्यावाश्वोथवनंगतं ॥ रथवीतिंतपस्यन्तंसंप्रेक्ष्यार्षेणचक्षुषा ॥ रम्ये-
हिमवतःपृष्ठेएषक्षेतीतिसोब्रवीत् ॥ एषरथवीतिर्मघवा धनवान् गोमतीरनु उदकवतीर्नदीरनु
अनुसृत्य नदीनांतीरे क्षेति निवसति पर्वतेषु हिमवत्पर्वतप्रान्तेषु अपश्रितः आश्रितः ॥ १९ ॥

१९. वे धनवान् रथवीति गोमती के तीर में निवास करते हैं और हिमवान् पर्वत के प्रान्त में उनका गृह अवस्थित है।

ऋतेनऋतमितिनवर्चंषष्ठंसूक्तं आत्रेयस्यश्रुतविदआर्षं त्रैष्टुभं मैत्रावरुणं तथाचानुक्रम्यते—ऋतेननवश्रुतविन्मैत्रावरुणंवैतदिति । वैतदित्युभयोःप्रयोगात् तुह्यादिपरिभाषया एतदादीन्येकादशसूक्तानिमित्रावरुणदेवत्यानि विनियोगोलैंगिकः ।

तत्रप्रथमा—

ऋतेनऋतमपिहितंध्रुवंवांसूर्यस्ययत्रविमुचन्त्यश्वान् ।
दशशतासहतस्थुस्तदेकंदेवानांश्रेष्ठंवपुषामपश्यम् ॥ १ ॥

ऋतेन । ऋतम् । अपिऽहितम् । ध्रुवम् । वाम् । सूर्यस्य ।
यत्र । विऽमुचन्ति । अश्वान् । दश । शता । सह । तस्थुः ।
तत् । एकम् । देवानाम् । श्रेष्ठम् । वपुषाम् । अपश्यम् ॥ १ ॥

सूर्यस्य ऋतंसत्यभूतं मंडलं ऋतेनोदकेनापिहितमाच्छादितं ध्रुवं शाश्वतं अपश्यमिति संबन्धः यत्र वां युवाभ्यांस्थितं तदित्यर्थः सूर्यमंडलेमित्रावरुणयोःस्थितिः चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः उद्वांचक्षुर्वरुणसुप्रतीकंदेवयोरेतिचक्षुर्मित्रस्यवरुणस्येत्यादिषुप्रसिद्धा यत्र यस्मिन्मंडले स्थितानश्वान् विमुचन्ति विमोचयन्तिस्तोतारः मंदेहादिभिः निरुद्धानित्यर्थः अथवा शीघ्रधावनाय स्तुत्याप्रेरयन्ति तस्मिंश्चमंडले दश शता शतानि सहस्रसंख्याकारश्मयः तस्थुस्तिष्ठन्ति तादृशं देवानांवपुषां वपुष्मतां तेजोवतामग्न्यादीनां श्रेष्ठं प्रशस्यं मत्वर्थलक्षणा अथवा व्यधिकरणषष्ठी देवानांवपुषांशरीराणां श्रेष्ठंमंडलंहिसूर्यस्य वपुस्थानीयं तन्मंडलमपश्यं अथवा वां युवयोर्मध्ये सूर्यस्यमंडलं अपश्यमितिव्याख्येयं मैत्रंवाअहेरितिश्रुतेर्मित्रस्यैवसूर्यत्वादित्याशयेन ॥ १ ॥

१. हम तुम लोगों के आधारभूत, उदक-द्वारा आच्छादित, शाश्वत और सत्यभूत सूर्यमण्डल का दर्शन करते हैं। उस स्थान में अवस्थित अश्वों को स्तोता लोग मुक्त करते हैं। उस मण्डल में सहस्र-संख्यक रश्मियाँ अवस्थिति करती हैं। तेजोवान् अग्नि आदि शरीरवान् देवों के मध्य में हमने सूर्य के उस श्रेष्ठ मण्डल को देखा है।

अथद्वितीया—

तत्सुवांमित्रावरुणामहित्वमीर्मातस्थुषीरहभिर्दुदुह्रे ।
विश्वाःपिन्वथःस्वसरस्यधेनाअनुवामेकःपविरावंवर्त ॥ २ ॥

---

१ ऋ० सं० १.८.७. । २ ऋ० सं० ५.५.६. ।
३ तै० ब्रा० १.७.९. ।

तत् । सु । वाम् । मित्रावरुणा । महिऽत्वम् । ईर्मा । तस्थुषीः ।
अहःऽभिः । दुदुह्रे । विश्वाः । पिन्वथः । स्वसरस्य । धेनाः । अनु ।
वाम् । एकः । पविः । आ । ववर्त ॥ २ ॥

हेमित्रावरुणा वांयुवयोस्तन्महित्वं महत्त्वं सु सुष्ठु अतिप्रशस्तमित्यर्थः किंतदित्युच्यते ईर्मा सततगन्ता सर्वस्यप्रेरकोवा आदित्यः अहभिरहोभिर्वर्षर्तुसंबन्धिभिः तस्थुषीः स्थावरभूताःअपोदुदुह्रे दुग्धे किंच स्वसरस्य स्वयंसर्तुरादित्यस्य विश्वाः सर्वाधेनाः लोकानां प्रीणयित्रीर्द्युतीः पिन्वथः वर्धयथः वांयुवयोरेकः अप्रतियोगीपविः पविरितिरथस्यनेमिः पवीरथनेमिर्भवतीतियास्कवचनात् । तथाप्यत्रलक्षितलक्षणयारथेवर्तते केवलचक्रस्यावर्तनायोगात् युवयोरेकोरथअन्वाववर्त अनुक्रमेणपरिभ्रमते ॥ २ ॥

२. हे मित्र और वरुण, तुम दोनों का यह माहात्म्य अत्यन्त प्रशस्त है, जिसके द्वारा निरन्तर परिभ्रमणकारी सूर्य दैनिक गति से सम्बद्ध स्थावर जलराशि को दुहते हैं। तुम लोग स्वयं भ्रमणकारी सूर्य की प्रीतिदायक दीप्ति को वर्द्धित करते हो। तुम दोनों का एक मात्र रथ अनुक्रम से परिभ्रमण करता है।

अधारयतंपृथिवीमुतद्यांमित्रराजानावरुणामहोभिः ।
वर्धयतमोषधीःपिन्वतंगाअववृष्टिंसृजतंजीरदानू ॥ ३ ॥
अधारयतम् । पृथिवीम् । उत । द्याम् । मित्रऽराजाना । वरुणा ।
महःऽभिः । वर्धयतम् । ओषधीः । पिन्वतम् । गाः । अव ।
वृष्टिम् । सृजतम् । जीरदानू इति जीरऽदानू ॥ ३ ॥

हेमित्रराजाना मित्रभूताःस्तोतारोराजानःस्वामिनईश्वराभवन्ति ययोःसकाशात् तौ मित्रराजानौ हेवरुणा प्रतियोग्यपेक्षयाद्विवचनं अत्रपादादित्वादाद्यंपदंननिहन्यते वरुणेत्येतस्यतु आमन्त्रितंपूर्वमविद्यमानवदितिपूर्वस्याविद्यमानवत्त्वेनास्यैवपादादित्वादनिघातत्वंयुक्तं नैवंभवति नामंत्रितेसमानाधिकरणेसामान्यवचनमिति वरुणेत्येतस्यामंत्रितसमानाधिकरणत्वादस्यचसामान्यवचनत्वादविद्यमानवत्त्वाभावेन पादादित्वाभावादुत्तरस्यनिघातत्वंयुक्तं हे देवौ महोभिस्तेजोभिः स्वसामर्थ्यैः पृथिवीं उतापिच द्यां अधारयतं हेदेवौ युवामोषधीर्वर्धयतं वृष्टिप्रेरणेन गाःपिन्वतं गवाश्वादीन्वर्धयतं तदर्थं वृष्टिमवसृजतं अवाङ्मुखंप्रेरयतं हेजीरदानूक्षिप्रदानौ ॥ ३ ॥

३. हे मित्र और वरुण, स्तोता लोग तुम्हारे अनुग्रह से राजपद प्राप्त करते हैं। तुम दोनों अपनी सामर्थ्य से द्यावा-पृथिवी को धारण करके अवस्थित हो। हे शीघ्र दानकर्त्ताओ, तुम लोग ओषधियों और धेनुओं को वर्द्धित करो एवम् वृष्टिवर्षण करो।

अथचतुर्थी—

आवामश्वासःसुयुजोवहन्तुयतरश्मयउपयन्त्वर्वाक् ।
घृतस्यनिर्णिगनुवर्ततेवामुपसिन्धवःप्रदिविक्षरन्ति ॥ ४ ॥

आ । वाम् । अश्वासः । सुऽयुजः । वहन्तु । यतऽरश्मयः ।
उप । यन्तु । अर्वाक् । घृतस्य । निःऽनिक् । अनु । वर्तते ।
वाम् । उप । सिन्धवः । प्रऽदिवि । क्षरन्ति ॥ ४ ॥

हेमित्रावरुणौ वां युवां अश्वासोश्वाः सुयुजः सुष्ठुरथेयुक्ताः सन्तःआवहन्तु यतरश्मयः सारथिनियतप्रग्रहाः ते अर्वागुपयन्तु घृतस्योदकस्य निर्निग्रूपं वामनुवर्तते अनुगच्छति किंच प्रदिवि पुराणनामैतत् पुराणाः सिन्धवः उपक्षरन्ति उपगच्छन्ति युवयोरनुग्रहात् ॥ ४ ॥

४. हे मित्र और वरुण, तुम दोनों के अश्व रथ में भली भाँति से युक्त होकर तुम दोनों को वहन करें। सारथि के द्वारा नियन्त्रित होकर अनुवर्तन करें। जल का रूप (मूर्तिमान् जल) तुम दोनों का अनुसरण करता है। तुम दोनों के अनुग्रह से पुरातन नदियाँ प्रवाहित होती हैं।

अनुश्रुतामुमतिंवर्धदुर्वीबर्हिरिवयजुषारक्षमाणा ।
नमस्वन्ताधृतदक्षाधिगर्तेमित्रासाथेवरुणेळास्वन्तः ॥ ५ ॥ ३० ॥

अनु । श्रुताम् । अमतिम् । वर्धत् । उर्वीम् । बर्हिःऽइव । यजुषा ।
रक्षमाणा । नमस्वन्ता । धृतऽदक्षा । अधि । गर्ते । मित्र ।
आसाथे इति । वरुण । इळासु । अन्तरिति ॥ ५ ॥ ३० ।

श्रुतां विश्रुतां अमतिं रूपनामैतत् शरीरदीप्तिमित्यर्थः तामनुवर्धत् अनुवर्धयन्तौ बर्हिर्यज्ञः सइव सयथा यजुषामंत्रेणरक्ष्यते तद्वदुर्वीरक्षमाणा पालयन्तौ नमस्वन्ता अन्नवन्तौ हेधृतदक्षा आत्तबलौ हेमित्र हेवरुण हेमित्रावरुणौ युवामुक्तलक्षणौसन्तौ इळासु यागभूमिषु अंतर्मध्ये गर्तेधिरथे आसाथे उपविशथः रथोपिगर्तउच्यतइतियास्कः । आरोहथोवरुणमित्रगर्तमिति ॥ ५ ॥

५. हे अन्नवान् तथा बलसम्पन्न मित्र और वरुण, तुम दोनों विश्रुत शरीर-दीप्ति को वर्द्धित करते हो। यज्ञ जैसे मन्त्र-द्वारा रक्षित होता है, उसी प्रकार तुम दोनों भी पृथ्वी का पालन करो। तुम दोनों यज्ञ-भूमि के मध्यस्थित रथ पर आरोहण करो।

अथषष्ठी—

अक्रविहस्तासुकृतेपरस्पायत्रासाथेवरुणेळास्वन्तः ।
राजानाक्षत्रमहृणीयमानासहस्रस्थूणंबिभृथःसहद्वौ ॥ ६ ॥

अक्रविऽहस्ता । सुऽकृते । परःऽपा । यम् । त्रासाथे इति ।
वरुणा । इळासु । अन्तरिति । राजाना । क्षत्रम् । अहृणीयमाना ।
सहस्रऽस्थूणम् । बिभृथः । सह । द्वौ ॥ ६ ॥

अक्रविहस्ता अकृपणहस्तौ दानशूरावित्यर्थः कस्मै सुकृते शोभनस्तुतिकर्त्रे परस्पा परस्तात्पातारौ रक्षितारौ हेवरुणा मित्रावरुणौ युवां यंयजमानं इळासु यागभूमिषु अन्तर्मध्ये त्रासाथे रक्षथः तस्मै सुकृते अक्रविहस्ता परस्पाचभवथेतिसंबन्धः किंच युवांराजाना राजमानौ अहृणीयमाना अक्रुध्यन्तौ द्वौ परस्परंसहसाहित्येन क्षत्रं धनं सहस्रस्थूणं अनेकावष्टंभकस्तंभोपेतं सौधादिरूपंगृहंच बिभृथोधारयथः सुकृते यजमानाय अथवा क्षत्रं बलं अपरिमिताभिःस्थूणाभिरुपेतंरथंचागमनार्थं सहधारयथः ॥ ६ ॥

६. हे मित्र और वरुण, तुम दोनों यज्ञ-भूमि में जिस यजमान की रक्षा करते हो, शोभन स्तुति करनेवाले उस यजमान के प्रति तुम दोनों दानशील होओ और उसकी रक्षा करो। तुम दोनों राजा और क्रोधविहीन होकर धन एवम् सहस्र स्तम्भसमन्वित सौध (मंजिलवाला मकान) धारण करते हो।

अथसप्तमी—

हिरण्यनिर्णिगयोअस्यस्थूणाविभ्राजतेदिव्य१श्वाजनीव ।
भद्रेक्षेत्रेनिमितातिल्विलेवासनेममध्वोअधिगर्त्यस्य ॥ ७ ॥

हिरण्यऽनिर्निक् । अयः । अस्य । स्थूणा । वि । भ्राजते ।
दिवि । अश्वाजनीऽइव । भद्रे । क्षेत्रे । निऽमिता । तिल्विले ।
वा । सनेम । मध्वः । अधिऽगर्त्यस्य ॥ ७ ॥

अनयोरथः हिरण्यनिर्निक् हिरण्यरूपं निर्निगितिरूपनाम अस्यरथस्य स्थूणाः कीलकादयः अयः हिरण्यनामैतत् अयोविकाराइत्यर्थः अयोमयावा तादृशोरथोदिवि अन्तरिक्षे विभ्राजते किमिव अश्वाजनीव अश्वाव्यापनशीलामेघाः तानजतिगच्छतीत्यश्वाजनीविद्युत् सेव दिविभ्राजते किंच भद्रे कल्याणे स्तुत्येवा क्षेत्रे देवयजने तिल्विलेवा तिलस्नेहने विलः स्निग्धा इला भूमिर्यस्यतत्क्षेत्रंतिल्विलं देवयजनं घृतसोमादिना

स्निग्धे भद्रेच क्षेत्रे निमिता स्थूणा यूपयष्टिरवस्थितः मध्वोमधुपूर्णं गर्तस्य गर्तरथं सनेम संभजेम कर्मणिषष्ठचौ अधीतिपूरणः अथवा गर्तस्याधि रथस्योपरि मध्वोमधुसोमरसं सनेम स्थापयेमेत्यर्थः गर्त्यस्येतितुपाठे मधुनोविशेषणं दिगादित्वाद्यत् ॥ ७ ॥

७. इनका रथ हिरण्मय है और कीलकादि भी हिरण्मय ही है। वह रथ विद्युत् की तरह अन्तरिक्ष में शोभा पाता है। हम लोग कल्याणकर स्थान में अथवा यूपयष्टि-समन्वित यज्ञ-भूमि में रथ के ऊपर, सोमरस स्थापन करें।

हिरण्यरूपमुषसोव्युष्टावयःस्थूणमुदितासूर्यस्य ।
आरोहथोवरुणमित्रगर्तमतश्चक्षाथेअदितिंदितिंच ॥ ८ ॥

हिरण्यऽरूपम् । उषसः । विऽउष्टौ । अयःऽस्थूणम् । उत्ऽइता । सूर्यस्य । आ । रोहथः । वरुण । मित्र । गर्तम् । अतः । चक्षाथे इति । अदितिम् । दितिम् । च ॥ ८ ॥

उषसोव्युष्टौ प्रातःकालेइत्यर्थः सूर्यस्य उदिता उदितौ उदये सएवकालः प्रकारान्तरेणोक्तः तस्मिन्काले हिरण्यरूपं अयःस्थूणं अयोमयशंकुं गर्तं रथं हेवरुण हेमित्र युवां गर्तमारोहथः यज्ञमाप्तुं अतः अस्माद्धेतोः अदितिमखंडनीयांभूमिं दितिंखंडितां प्रजादिकांच चक्षाथे पश्यथः ॥ ८ ॥

८. हे मित्र और वरुण, तुम लोग उषाकाल में सूर्य के उदित होने पर लौहकील-समन्वित सुवर्णमय रथ पर यज्ञ में जाने के लिए आरोहण करो एवम् अदिति अर्थात् अखण्डनीय भूमि और दिति अर्थात् खण्डित प्रजा का अवलोकन करो।

दाक्षायणयज्ञेयद्वंहिष्ठमितिनवमी द्वितीयस्याममावास्यायां मैत्रावरुणस्यहविषोयाज्या सूत्रितंच—आनोमित्रावरुणायद्वंहिष्ठंनातिविधेसुदानूइति । मैत्रावरुणेपशौहविषएषैवयाज्या सूत्रितंच—यद्वंहिष्ठंनातिविधेसुदानूहिरण्यगर्भःसमवर्तताग्रइति । तत्पाठस्तु ।

अथनवमी—

यद्बंहिष्ठंनातिविधेसुदानूअच्छिद्रंशर्मभुवनस्यगोपा ।
तेननोमित्रावरुणावविष्टंसिषासन्तोजिगीवांसःस्याम ॥ ९ ॥ ३१ ॥

यत् । बंहिष्ठम् । न । अतिऽविधे । सुदानू इति सुऽदानू । अच्छिद्रम् । शर्म । भुवनस्य । गोपा । तेन । नः । मित्रावरुणौ । अविष्टम् । सिसासन्तः । जिगीवांसः । स्याम ॥ ९ ॥ ३१ ॥

हेसुदानू शोभनदानौ हेभुवनस्यगोपा गोपौयुवां बंहिष्ठं बहुतमं यदच्छिद्रं अनवच्छिन्नं शर्म सुखंगृहंवा नातिविधे अतिवेद्धुमशक्यं शर्मेतिशर्मविशेषणं व्यधताडनइत्यस्मादत्युपपदे-कृत्यार्थेकेन् संप्रसारणंच तादृशंशर्म धारयतः तेनशर्मणा नोस्मानविष्टं रक्षतं हेमित्रावरुणौ सिषासन्तोधनानिसंभक्तुमिच्छन्तोवयं जिगीवांसः शत्रूणांधनानिजेतुमिच्छन्तः स्याम भवेम ॥ ९ ॥

९. हे दानशील तथा विश्वरक्षक मित्र और वरुण, जो सुख व्याघात-रहित, अछिन्न और बहुतम है, उस सुख को तुम दोनों धारण करते हो। उसी सुख से हम लोगों की रक्षा करो। हम लोग अभिलक्षित धन लाभ करें और शत्रु विजयी हों।

॥ इतिचतुर्थस्यतृतीयेएकत्रिंशोवर्गः ॥ ३१ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् ॥ पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणामात्येनविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येचतुर्थाष्टकेतृतीयोध्यायःसमाप्तः ॥ ३ ॥

---

## ॥श्रीगणेशायनमः॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् ॥ निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरं ॥ १ ॥
अष्टकस्यचतुर्थस्यतृतीयोव्याकृतःस्फुटं ॥ अध्यायःसायणार्येणचतुर्थोव्याकरिष्यते ॥२॥
ऋतस्यगोपाविति सप्तर्चं सप्तमंसूक्तं अत्रेयमनुक्रमणिका—ऋतस्यसप्तार्चनानाजागतमिति ।
आत्रेयोर्चनानानामऋषिः जगतीछन्दः तुह्यादिपरिभाषयामित्रावरुणौदेवता विनियोगोलैंगिकः ।

तत्रप्रथमा—

ॐम् ऋतस्यगोपावधितिष्ठथोरथंसत्यधर्माणापरमेव्योमनि ।
यमत्रमित्रावरुणावथोयुवंतस्मैवृष्टिर्मधुमत्पिन्वतेदिवः ॥ १ ॥

ऋतस्य । गोपौ । अधि । तिष्ठथः । रथम् । सत्यऽधर्माणा ।
परमे । विऽओमनि । यम् । अत्र । मित्रावरुणा । अवथः ।
युवम् । तस्मै । वृष्टिः । मधुऽमत् । पिन्वते । दिवः ॥ १ ॥

हेऋतस्योदकस्यगोपौरक्षितारौ सत्यधर्माणा सत्यधर्माणौ युवां रथमधितिष्ठथः आरोहथः अस्मद्यज्ञमागमनार्थं कुत्र परमेव्योमनि निरतिशयेआकाशे हेमित्रावरुणौ युवं युवां अत्रास्मिन्यज्ञे यं यजमानं अवथोरक्षथः तस्मैयजमानाय वृष्टिः पर्जन्योमधुमदुदकं दिवोद्युलोकात्पिन्वते सिंचतिवर्धयति ॥ १ ॥

१. हे उदक के रक्षक सत्य धर्मवाले मित्र और वरुण, तुम दोनों हमारे यज्ञ में आने के लिए निरतिशय आकाश में रथ के ऊपर अधिरोहण करते हो। हे मित्र और वरुण, इस यज्ञ में तुम दोनों जिस यजमान की रक्षा करते हो, उस यजमान के लिए मेघ द्युलोक से सुमधुर वारिवर्षण करता है।

अथद्वितीया—

सम्राजावस्यभुवनस्यराजथोमित्रावरुणाविदथेस्वर्दृशा ।
वृष्टिंवांराधोअमृतत्वमीमहेद्यावापृथिवीविचरन्तितन्यवः ॥ २ ॥

सम्ऽराजौ । अस्य । भुवनस्य । राजथः । मित्रावरुणा । विदथे ।
स्वःऽदृशा । वृष्टिम् । वाम् । राधः । अमृतऽत्वम् । ईमहे ।
द्यावापृथिवी इति । वि । चरन्ति । तन्यवः ॥ २ ॥

हेमित्रावरुणौ सम्राजौ सम्यक्राजमानौ युवामस्य भुवनस्य राजथः ईशाथे स्वर्दृशा स्वर्गस्य द्रष्टारौ युवां विदथेस्मद्यज्ञे सम्राजाविति संबन्धः वां युवां वृष्टिं राधोधनं वृष्ट्याख्यंधनं अमृतत्वंस्वर्गंच ईमहे प्रार्थयामहे युवयोस्तन्यवोविस्तृताःरश्मयोद्यावापृथिवी विचरन्ति विविधंप्राप्नुवन्ति अथवा वृष्टिंधनममृतत्वंचईमहे ॥ २ ॥

२. हे स्वर्ग के द्रष्टा मित्र और वरुण, इस यज्ञ में राजमान होकर तुम दोनों भुवन का शासन करते हो। हम लोग तुम दोनों के निकट वृष्टिरूप धन तथा स्वर्ग की प्रार्थना करते हैं। तुम दोनों की विस्तृत रश्मियाँ द्यावा-पृथिवी के मध्य में विचरण करती हैं।

सम्राजाउग्रावृषभादिवस्पतीपृथिव्यामित्रावरुणाविचर्षणी।
चित्रेभिरभ्रैरुपतिष्ठथोरवंद्यांवर्षयथोअसुरस्यमायया ॥ ३ ॥

सम्ऽराजौ। उग्रा। वृषभा। दिवः। पती इति। पृथिव्याः। मित्रावरुणा। विचर्षणीइतिविऽचर्षणी। चित्रेभिः। अभ्रैः। उप। तिष्ठथः। रवम्। द्याम्। वर्षयथः। असुरस्य। मायया ॥ ३ ॥

सम्राजौ सम्यक्राजमानौ उग्रा उद्गूर्णबलौ वृषभा वर्षितारौ दिवोद्युलोकस्यपती स्वामिनौ पृथिव्याश्चपती विश्वचर्षणी सर्वस्यद्रष्टारौ मित्रावरुणौ एवंमहानुभावौ चित्रेभिश्चायनीयैरभ्रैर्मेघैःसह रवं स्तोत्रं उपतिष्ठथः पश्चात् द्यांच वर्षयथः असुरस्योदकनिरसितुः पर्जन्यस्य मायया प्रज्ञया सामर्थ्येन ॥ ३ ॥

३. हे मित्र और वरुण, तुम दोनों अत्यन्त राजमान, उद्यतबल, वारिवर्षक, द्यावा-पृथिवी के पति और सर्वद्रष्टा हो। तुम दोनों महानुभाव विचित्र मेघों के साथ स्तुति श्रवण करने के लिए आगमन करो। पश्चात् वृष्टिविधायक पर्जन्य की सामर्थ्य-द्वारा द्युलोक से वृष्टि पातित करो।

मायावांमित्रावरुणादिविश्रितासूर्योज्योतिश्चरतिचित्रमायुधम्।
तमभ्रेणवृष्ट्यागूहथोदिविपर्जन्यद्रप्सामधुमन्तईरते ॥ ४ ॥

माया। वाम्। मित्रावरुणा। दिवि। श्रिता। सूर्यः। ज्योतिः। चरति। चित्रम्। आयुधम्। तम्। अभ्रेण। वृष्ट्या। गूहथः। दिवि। पर्जन्य। द्रप्साः। मधुऽमन्तः। ईरते ॥ ४ ॥

हेमित्रावरुणा वां युवयोर्माया दिविश्रिता आश्रिता कैषा युवयोर्मायाउच्यते सूर्यः सर्वस्यप्रेरकोज्योतिर्दीप्यमानः चित्रं चायनीयमायुधं उक्तलक्षणायुधरूपश्चरति परिभ्रमत्यंतरिक्षे शत्रुमारकत्वादायुधमुच्यते तंसूर्यं अभ्रेण मेघेन वृष्ट्या दिवि गूहथोगोपायथः हेपर्जन्य देव त्वया मित्रावरुणाभ्यां प्रेरितेन मधुमन्तोद्रप्साआपः ईरतेईर्यन्ते त्वत्सृष्टावागच्छन्ति ॥ ४ ॥

४. हे मित्र और वरुण, जब तुम दोनों के अस्त्रभूत ज्योतिर्मय सूर्य अन्तरिक्ष में परिभ्रमण करते हैं, तब तुम दोनों की माया (सामर्थ्य) स्वर्ग में आश्रित (प्रकटित) होती है। तुम दोनों द्युलोक में मेघ और वृष्टि-द्वारा सूर्य की रक्षा करते हो। हे पर्जन्य देव, मित्र और वरुण-द्वारा प्रेरित होने पर तुम्हारे द्वारा सुमधुर वारिबिन्दु पतित होता है।

रथंयुञ्जतेमरुतःशुभेसुखंशूरोनामित्रावरुणागविष्टिषु।
रजांसिचित्राविचरन्तितन्यवोदिवःसम्राजापयसानउक्षतम् ॥५॥

रथम्। युञ्जते। मरुतः। शुभे। सुऽखम्। शूरः। न। मित्रावरुणा। गोऽइष्टिषु। रजांसि। चित्रा। वि। चरन्ति। तन्यवः। दिवः। सम्ऽराजा। पयसा। नः। उक्षतम् ॥ ५ ॥

हेमित्रावरुणौ युवयोरनुग्रहात् मरुतः शुभे उदकार्थं सुखं शोभनाक्षद्वारं रथंयुंजते अश्वैर्योजयन्ति शूरोन शूरइव सयथायुद्धार्थंरथंयुनक्तितद्वत् गविष्टिषु गवामुदकानामेषणेषुनिमित्तेषु चित्रा चायनीयानि रजांसि लोकान् तन्यवः ततास्तेमरुतोविचरन्ति विविधंचरन्ति तस्मात्तैःसहितौ हेसम्राजा युवां दिवोद्युलोकात् पयसोदकेन नोस्मानुक्षतं सिंचतं ॥ ५ ॥

५. हे मित्र और वरुण, वीर जिस प्रकार से युद्ध के लिए अपने रथ को सज्जित करता है, उसी प्रकार मरुद्गण तुम दोनों के अनुग्रह से वृष्टि के लिए सुखकर रथ को सज्जित करते हैं। वारिवर्षण करने के लिए मरुद्गण विभिन्न लोक में सञ्चरण करते हैं। हे राजमान देवो, तुम दोनों मरुतों के साथ द्युलोक से हम लोगों के ऊपर वारिवर्षण करो।

वाचंसुमित्रावरुणाविरावतींपर्जन्यश्चित्रांवदतित्विषीमतीम्।
अभ्रावसतमरुतःसुमाययाद्यांवर्षयतमरुणामरेपसम् ॥ ६ ॥

वाचम्। सु। मित्रावरुणौ। इराऽवतीम्। पर्जन्यः। चित्राम्। वदति। त्विषिऽमतीम्। अभ्रा। वसत। मरुतः। सु। मायया। द्याम्। वर्षयतम्। अरुणाम्। अरेपसम् ॥ ६ ॥

हेमित्रावरुणौ युवयोरनुग्रहात् पर्जन्योमेघः सु सुष्ठु इरावतीं अन्नवतीमन्नसाधिकां चित्रां चायनीयां त्विषीमतीं दीप्तिमतीं वाचं गर्जनशब्दं वदति शब्दयति वृष्ट्यर्थं मरुतश्चाभ्राअभ्राणि मेघान् सु सुष्ठु वसत आच्छादयन्ति मायया स्वप्रज्ञया युवांच पर्जन्येनमरुद्भिश्च सहारुणामरुणवर्णां अरेपसं अपापां वृष्ट्याविघातिनीं द्यां वर्षयतम् ॥ ६ ॥

६. हे मित्र और वरुण, तुम दोनों के अनुग्रह से ही मेघ अन्नसावक, प्रभाव्यञ्जक और विचित्र गर्जन शब्द करता है। मरुद्गण अपनी प्रज्ञा के बल से मेघों की रक्षा, भली भाँति से करते हैं। उनके साथ तुम दोनों अरुणवर्ण तथा निष्पाप आकाश से वृष्टि पातित करते हो।

धर्मणामित्रावरुणाविपश्चितात्रतारक्षेथेअसुरस्यमायया।
ऋतेनविश्वंभुवनंविराजथःसूर्यमाधत्थोदिविचित्र्यंरथम् ॥ ७ ॥ १ ॥

धर्मणा। मित्रावरुणा। विपःऽचिता। व्रता। रक्षेथे इति। असुरस्य। मायया। ऋतेन। विश्वम्। भुवनम्। वि। राजथः। सूर्यम्। आ। धत्थः। दिवि। चित्र्यम्। रथम् ॥ ७ ॥ १ ॥

हेमित्रावरुणा युवां धर्मणा जगद्धारकेण विपश्चिता स्तुत्येनेत्यर्थः व्रता व्रतेन कर्मणा अथवा विपश्चितास्तोतृनामैतत् यजमानेन वृष्ट्या जगद्रक्षणस्य यजमानोपिकारणं तत्कृतयाहुत्या वृष्ट्युत्पत्तेः व्रता व्रतेन युवयोःकर्मणा यज्ञादिकर्माणि रक्षेथे पालयथः असुरस्य मेघानांनिरसितुःपर्जन्यस्य मायया प्रज्ञयाच ऋतेनोदकेन यज्ञेनवा निमित्तेन विश्वं भुवनं सर्वभूतजातं विराजथः विदीपयथइत्यर्थः सूर्यमासूर्यंच चित्र्यं पूज्यं रथं रंहणस्वभावं दिवि द्युलोके धत्थः धारयथोजगदुपकारार्थम् ॥ ७ ॥

७. हे विद्वान् मित्र और वरुण, तुम दोनों जगत् के उपकारक वृष्ट्यादि कार्य-द्वारा यज्ञ की रक्षा करते हो। जल के वर्षक पर्जन्य की प्रज्ञा-द्वारा उदक या यज्ञ से समस्त भूतजात को दीप्त करते हो। पूज्य और वेगवान् सूर्य को द्युलोक में धारण करो।

वरुणंवइतिसप्तर्चमष्टमंसूक्तं अर्चनानसआर्षं मैत्रावरुणं पंक्त्यन्तपरिभाषया आनुष्टुभं अन्त्यापंक्तिः वरुणंपंक्त्यन्तंत्वित्यनुक्रमणिका विनियोगोलैंगिकः।

वरुणंवोरिशादसमृचामित्रंहवामहे।
परिव्रजेवबाह्वोर्जगन्वांसास्वर्णरम् ॥ १ ॥

वरुणम्। वः। रिशादसम्। ऋचा। मित्रम्। हवामहे। परि। व्रजाऽइव। बाह्वोः। जगन्वांसा। स्वःऽनरम् ॥ १ ॥

वोयुवयोर्मध्ये व्यत्ययेनबहुवचनं रिशादसं रिशन्तिहिंसन्तीतिरिशाःशत्रवः तेषांप्रेरकं स्वर्णरं स्वर्गस्यनेतारं एतद्व्यवहितमप्युभयत्रसंबध्यते एवंविधंवरुणं उक्तलक्षणंमित्रं च ऋचा मंत्रेण हवामहे आह्वयामः अथावयुत्योच्यते व्रजेव गोयूथानीव बाह्वोःबलेन परिजगन्वांसा परिगच्छन्तौ ॥ १ ॥

१. हे मित्र और वरुण, हम इस मन्त्र से तुम दोनों का आह्वान करते हैं। बाहुबल से गोयूथ के सञ्चालकद्वय की तरह दोनों शत्रुओं को अपसारित करो और स्वर्ग के पथ को प्रदर्शित करो।

ताबाहवासुचेतुनाप्रयन्तमस्माअर्चते।
शेवंहिजार्यंवांविश्वासुक्षासुजोगुवे॥ २॥

ता। बाहवा। सुऽचेतुना। प्र। यन्तम्। अस्मै। अर्चते।
शेवम्। हि। जार्यम्। वाम्। विश्वासु। क्षासु। जोगुवे॥ २॥

ता तौ युवां बाहवा बाहुना सुचेतुना सुष्ठुप्रज्ञात्रा प्रयासभूयस्त्वंजानतेत्यर्थः यद्यप्यात्मेवज्ञाता नहस्तः तथापि तद्धर्ममत्रारोप्यस्तूयते यद्वैतत्तावित्यस्यविशेषणं सुज्ञानावित्यर्थः शोभनहस्तेन अस्मैअर्चतेस्तुवते मह्यं प्रयन्तं अभिमतंसुखंगमयतं अन्तर्भावितण्यर्थोद्रष्टव्यः यमिर्दानकर्मावाद्रष्टव्यः प्रयच्छतमित्यर्थः जार्यं स्तुत्यं शेवं सुखं वांयुवयोः संबन्धि युवाभ्यांकृतंवा विश्वासुसर्वासु क्षासु भूमिषु जोगुवे गच्छतिव्याप्नोति अवतेगवतइति गतिकर्मसुपाठात् अयमपिगतिकर्मा अथवा जोगुवे सर्वत्रशब्दयामीत्यर्थः॥ २॥

२. तुम दोनों प्रज्ञासम्पन्न हो। तुम दोनों हम स्तुतिकर्त्ता को अभिमत सुख प्रदान करो। हम शोभन हस्त-द्वारा स्तुति करते हैं। तुम दोनों द्वारा प्रदत्त स्तुति-योग्य सुख सब स्थान में व्याप्त है।

यन्नूनमश्यांगतिंमित्रस्ययायांपथा।
अस्यप्रियस्यशर्मण्यहिंसानस्यसश्चिरे॥ ३॥

यत्। नूनम्। अश्याम्। गतिम्। मित्रस्य। यायाम्। पथा।
अस्य। प्रियस्य। शर्मणि। अहिंसानस्य। सश्चिरे॥ ३॥

यत्यदा नूनमिदानीं गतिं गमनमश्यांप्राप्नुयां यद्योगादनिघातः तदामित्रस्य मित्रभूतस्य पथा मार्गेण मित्रप्रापकेणमार्गेण यायां गच्छेयं मित्रोनयतुविद्वानित्यादिषुमित्रस्येष्टदेशगमयितृत्वंप्रसिद्धं नकेवलमहमेकएवगन्ता किन्तु सर्वेपितथागमन्नित्याह अस्यप्रियस्यमित्रस्येत्यर्थः अहिंसानस्य अहिंसतः यतोयमहन्ता अतःप्रियइत्यर्थः तस्यशर्मणि सुखे गृहेस्थानेवा सश्चिरे संगताः॥ ३॥

३. हम अभी गमन (संगति) प्राप्त करें। मित्रभूत अथवा मित्र-द्वारा दर्शित मार्ग से हम गमन करें। अहिंसक मित्र का प्रिय सुख हमें गृह में प्राप्त हो।

युवाभ्यांमित्रावरुणोपमंधेयामृचा।
यद्धक्षयेमघोनांस्तोतॄणांचस्पूर्धसे॥ ४॥

युवाभ्याम् । मित्रावरुणा । उपऽमम् । धेयाम् । ऋचा ।
यत् । ह । क्षये । मघोनाम् । स्तोतॄणाम् । च । स्पूर्धसे ॥ ४ ॥

हेमित्रावरुणा युवाभ्यांदातव्यं उपमं उपसमीपेमीयमानंधनं ऋचा स्तुत्यासाधनेन धेयां धारयामि यद्ध यत्खलु युवाभ्यांसकाशादाप्तंधनं मघोनां धनवतां अदातॄणांस्तोतॄणांच क्षये गृहे स्पूर्धसे स्पर्धनायभवति धनिकानांस्तोतॄणांच धनाधिक्यविषयेस्पर्धाभवतीत्यर्थः अ-परिमितंधनंभवतीतिभावः ॥ ४ ॥

४. हे मित्र और वरुण, हम तुम, दोनों की स्तुति करके इस प्रकार धन धारण करेंगे कि धनिकों और स्तुतिकर्ताओं के घर में ईर्ष्या का उदय होगा।

आनोमित्रसुदीतिभिर्वरुणश्चसधस्थआ ।
स्वेक्षयेमघोनांसखीनांचवृधसे ॥ ५ ॥

आ । नः । मित्र । सुदीतिऽभिः । वरुणः । च । सधऽस्थे । आ ।
स्वे । क्षये । मघोनाम् । सखीनाम् । च । वृधसे ॥ ५ ॥

हेमित्र त्वंचवरुणश्च सुदीतिभिः सुदीप्तियुक्तौ युवां नोस्मभ्यं सधस्थे सह-स्थानेयज्ञे आगच्छतं द्वितीयआकारोनर्थकआदरार्थोवा किमर्थमिति उच्यते मघोनां धनवतां हविष्मतां सखीनांच युवयोः सखीभूतानामस्माकं क्षये गृहे स्वे स्वकीये वृधसे वर्धनाय॥५॥

५. हे मित्र, हे वरुण, तुम दोनों सुन्दर दीप्ति से युक्त होकर हमारे यज्ञ में उपस्थित होओ। ऐश्वर्यशाली यजमानों के गृह में एवम् तुम दोनों के मित्रों के अर्थात् हमारे गृह में समृद्धि वर्द्धन करो।

युवंनोयेषुवरुणक्षत्रंबृहच्चबिभृथः ।
उरुणोवाजसातयेकृतंरायेस्वस्तये ॥ ६ ॥

युवम् । नः । येषु । वरुणा । क्षत्रम् । बृहत् । च । बिभृथः ।
उरु । नः । वाजऽसातये । कृतम् । राये । स्वस्तये ॥ ६ ॥

हेवरुणा मित्रावरुणौ युवं युवां नोस्माकं क्षत्रं बलं बृहत् प्रभूतपरिवृढमन्नंच येषु स्तोत्रेषुनिमित्तेषु बिभृथः धारयथः युवाभ्यांधृतंबलमन्नंच नोस्मभ्यं वाजसातये अन्नस्यलाभाय यज्ञायवा राये धनाय स्वस्तये क्षेमायच उरु विस्तीर्णं कृतं कुरुतम् ॥ ६ ॥

६. हे मित्र और वरुण, हमारी स्तुतियों के निमित्त तुम दोनों हमारे लिए प्रचुर अन्न तथा बल धारण करते हो। तुम दोनों हमें अन्न, धन और कल्याण विशेष रूप से प्रदान करो।

उच्छन्त्यांमेयजतादेवक्षत्रेरुशंद्गवि।
सुतंसोमंनहस्तिभिरापड्भिर्धावतंनराबिभ्रंतावर्चनानंसम् ॥७॥२॥

उच्छन्त्याम्। मे। यजता। देवऽक्षत्रे। रुशंत्ऽगवि।
सुतम्। सोमम्। न। हस्तिऽभिः। आ। पट्ऽभिः। धावतम्।
नरा। बिभ्रंतौ। अर्चनानसम् ॥ ७ ॥ २ ॥

उच्छन्त्यां उषसि मेसोममितिसंबन्धः यजता यष्टव्यौ रुशद्गवि रोचमानरश्मौप्रातःसवने देवक्षत्रे देवानांक्षत्रंबलंयस्मिन्गृहेतद्देवक्षत्रं तस्मिन्मेमदीयं सुतमभिषुतं सोमं न नेतिसंप्रत्यर्थे इदानीं हस्तिभिः हस्तवद्भिः हंतेर्गतिकर्मणोहस्तशब्दः गमनसाधनपादवद्भिरित्यर्थः पड्भिः पादवद्भिश्च पादचतुष्टयोपेतैरश्वैराधावतं आगच्छतं नरा हेनेतारौमित्रावरुणौ ॥ ७ ॥

७. हे अधिनायक मित्र और वरुण, उषाकाल में, सुन्दर किरण से युक्त प्रातः सवन में, देव-बल-विशिष्ट गृह में तुम दोनों पूजनीय होते हो। उस गृह में हमारे द्वारा अभिषुत सोम का तुम दोनों अवलोकन करो। तुम दोनों अर्चनाना के प्रति प्रसन्न होकर गमन साधन अश्वों पर आरोहण करके अभी आगमन करो।

यश्चिकेतेतिषळृचंनवमंसूक्तं रातहव्यस्यात्रेयस्यार्षं मैत्रावरुणं यश्चिकेतषळ्रातहव्यइत्यनुक्रमणिका। पंक्त्यंतंत्वित्युक्तत्वात्पंक्त्यन्तपरिभाषयानुष्टुभं अन्त्यापंक्तिः विनियोगोलैंगिकः।

यश्चिकेतससुक्रतुर्देवत्रासब्रवीतुनः।
वरुणोयस्यदर्शतोमित्रोवावनंतेगिरः ॥ १ ॥

यः। चिकेत। सः। सुऽक्रतुः। देवऽत्रा। सः। ब्रवीतु। नः।
वरुणः। यस्य। दर्शतः। मित्रः। वा। वनंते। गिरः ॥ १ ॥

यःस्तोता चिकेत जानातिस्तुतिं युवयोः ससुक्रतुः सएवशोभनकर्मा देवत्रा देवेषु स्तोतृषुमध्ये यद्वा देवेषुमध्ये युवयोरेवस्तुतिंयश्चिकेतससुक्रतुरिति ससुकर्मा नोस्माकंब्रवीतु स्तुतिंपरमुपदिशतु यस्यदर्शतोदर्शनीयोवरुणोदर्शनीयोमित्रोवा मित्रश्च वाशब्दश्चार्थे गिरोस्मदीयास्तुतीर्वनंतेसंभजते ॥ १ ॥

१. जो स्तोता देवों के मध्य में तुम दोनों की स्तुति जानता है, वही शोभनकर्म (अनुष्ठान) करनेवाला है। वह शोभनकर्मा स्तोता हमें स्तुतिविषयक उपदेश दें, जिनकी स्तुति को सुन्दर मूर्तिवाले मित्र और वरुण, ग्रहण करते हैं।

ताहिश्रेष्ठंवर्चसाराजानादीर्घश्रुत्तमा।
तासत्पतीऋतावृधऋतावानाजनेजने ॥ २ ॥

ता । हि । श्रेष्ठऽवर्चसा । राजाना । दीर्घश्रुत्ऽतमा । ता । सत्पती- इति सत्ऽपती । ऋतऽवृधा । ऋतऽवाना । जनेऽजने ॥ २ ॥

ताहि तौखलुमित्रावरुणौ श्रेष्ठवर्चसा प्रशस्ततेजस्कौ राजाना ईश्वरौ दीर्घश्रुत्तमा दूरदेशादाह्वानश्रोतृतमौ ता तौ सत्पती सतांयजमानानांस्वामिनौ ऋतावृधा यज्ञस्योदकस्यवावर्धयितारौ जने जने सर्वेषुस्तोतृषुनिमित्तेषु ऋतावाना गमनवन्तौ ॥ २ ॥

२. प्रशस्त तेजवाले और ईश्वरभूत मित्रावरुण दूर देश से आहूत होने पर भी आह्वान श्रवण कर लेते हैं। यजमानों के स्वामी और यज्ञ के वर्द्धयिता वे दोनों प्रत्येक स्तोता के कल्याण-विधानार्थ विचरण करते हैं।

तावामियानोवसेपूर्वाउपब्रुवेसचा ।
स्वश्वासःसुचेतुनावाजाँअभिप्रदावने ॥ ३ ॥

ता । वाम् । इयानः । अवसे । पूर्वौ । उप । ब्रुवे । सचा ।
सुऽअश्वासः । सु । चेतुना । वाजान् । अभि । प्र । दावने ॥ ३ ॥

ता तौ पूर्वौ पुरातनौ वां युवां इयानोगच्छन् अवसे रक्षणाय सचा सह उपब्रुवे उपेत्यस्तौमि स्वश्वासः स्वश्वावयमात्रेयाः सुचेतुना शोभनप्रज्ञानौयुवां वाजान् अभि अन्नानिअभिलक्ष्य प्र प्रकर्षेण दावने दानाय स्तुमइतिशेषः यद्वा स्वश्वासः स्वश्वौ द्वितीयाद्विवचनस्यशसादेशः उपब्रुवइतिसंबन्धः ॥ ३ ॥

३. तुम दोनों पुरातन हो। हम तुम दोनों के निकट उपस्थित होकर रक्षा के लिए स्तवन करते हैं। वेगवान् अश्वों के अधिपति होकर हम अन्नप्रदानार्थ तुम दोनों की स्तुति करते हैं। तुम दोनों शोभन ज्ञानवाले हो।

मित्रोअंहोश्चिदादुरुक्षयायगातुंवनते ।
मित्रस्यहिप्रतूर्वतःसुमतिरस्तिविधतः ॥ ४ ॥

मित्रः । अंहोः । चित् । आत् । उरु । क्षयाय । गातुम् । वनते ।
मित्रस्य । हि । प्रऽतूर्वतः । सुऽमतिः । अस्ति । विधतः ॥ ४ ॥

मित्रोदेवः अंहोश्चित् अंहस्वतोपिस्तोतुः आत् अनन्तरमेव उरुउरवे क्षयाय गृहाय निवासायवा गातुमुपायं वनते प्रयच्छति मित्रस्यहि मित्रस्यखलु देवस्यसुमतिः शोभनबुद्धिः प्रतूर्वतः प्रकर्षेणहिंसतोपि विधतः परिचरतः शुश्रूषकस्य अस्तिहि भवतिखलु ॥ ४ ॥

४. मित्रदेव पापी स्तोता को भी विशाल गृह में निवास करने का उपाय वताते हैं। हिंसक परिचारक के लिए भी मित्रदेव की शोभन वुद्धि है।

वयंमित्रस्यावसिस्यामसप्रथस्तमे ।
अनेहसस्त्वोतयःसत्रावरुणशेषसः ॥ ५ ॥
वयम् । मित्रस्य । अवसि । स्याम । सप्रथःऽतमे । अनेहसः ।
त्वाऽऊतयः । सत्रा । वरुणऽशेषसः ॥ ५ ॥

वयंयजमानामित्रस्य दुःखनिवारकस्यदेवस्य सप्रथस्तमे सर्वतःपृथुतमे अवसि रक्षणे वयंस्याम भवेम किंच अनेहसःअपापाः त्वोतयः त्वयारक्षिताः वरुणशेषसः शेषइत्यपत्यनाम वारकाः पुत्रायेषांतेताहशाः सत्रा वयंसर्वेसहैवभवेम ॥ ५ ॥

५. हम यजमान दुःखनिवारक मित्रदेव की विपुल रक्षा के लिए अधिकारी हों। हम तुम्हारे द्वारा रक्षित और निष्पाप होकर हम सब एक काल में ही वरुण के पुत्रस्वरूप हों।

युवंमित्रेमंजनंयतथःसंचनयथः ।
मामघोनःपरिख्यतंमोअस्माकमृषीणांगोपीथेनउरुष्यतम् ॥६॥३॥
युवम् । मित्रा । इमम् । जनम् । यतथः । सम् । च । नयथः । मा ।
मघोनः । परि । ख्यतम् । मो इति । अस्माकम् । ऋषीणाम् ।
गोऽपीथे । नः । उरुष्यतम् ॥ ६ ॥३ ॥

हेमित्रा मित्रावरुणौ युवं युवां इमंजनंस्तोतारंमांप्रति यतथः आगच्छथः आगत्यच संचनयथः संनयथश्चकामान्प्रापयथः यद्वा यतथइत्यंतर्णीतण्यर्थोयं अहनियतथः व्यापारेषुगमयथः रात्रौचसंनयथः निर्व्यापारंकारयथः मघोनःहविर्लक्षणान्नवतःअस्मान् मापरिख्यतं मापरित्यजतं मो मैव ऋषीणामस्माकं पुत्रानपि परिख्यतं किंतु गोपीथे गौः सोमरसः तस्यपानंयस्मिन्सगोपीथोयज्ञः तस्मिन् नः उरुष्यतंरक्षतम् ॥ ६ ॥

६. हे मित्र और वरुण, हम तुम दोनों की स्तुति करते हैं। तुम दोनों हमारे निकट आगमन करो। आकर समस्त अभिलषित वस्तु प्राप्त कराओ। हम अन्नसम्पन्न हैं। हमारा परित्याग नहीं करना। ऋषियों के अर्थात् हमारे पुत्रों का परित्याग नहीं करना। सुतसोम यज्ञ में हम लोगों की रक्षा करना।

आचिकितानेतिषळृचंदशमंसूक्तं रातहव्यस्यार्षं आनुष्टुभं मैत्रावरुणं अत्रानुक्रमणिका-आचिकितानानुष्टुभन्त्विति । आद्यस्तृचोदशरात्रेचतुर्थेहनिप्रउगशस्त्रेमैत्रावरुणस्य सूत्रितंच-आचिकितानसुक्रतूयमुवोअप्रहणमिति ।

आचिकितानसुक्रतूदेवौमर्तरिशादसा ।
वरुणायऋतपेशसेदधीतप्रयसेमहे ॥ १ ॥

आ । चिकितान । सुक्रतू इति सुऽक्रतू । देवौ । मर्त । रिशादसा ।
वरुणाय । ऋतऽपेशसे । दधीत । प्रयसे । महे ॥ १ ॥

हेचिकितान जानन्स्तुतिं हेमर्त मनुष्य रातहव्यत्वमितितस्यैवंसंबोधनं सुक्रतू शोभन-कर्माणौ रिशादसा हिंसकानांहिंसकौदेवौ आ आकारयेतिशेषः आहूयच ऋतपेशसे पेशइति-रूपनाम ऋतमुदकं उदकमेवरूपंयस्यतादृशाय वरुणाय प्रयसे मत्वर्थोलुप्यते हविर्लक्षणान्नवते महे महतेपूज्याय दधीतदद्याः हविरितिशेषः द्वितीयार्थेवाचतुर्थी महद्धविर्दधीतमहतोन्नस्यला-भायेतिवायोज्यं ॥ १ ॥

१. हे स्तुतिविज्ञाता मनुष्य, तुम शोभनकर्म को करनेवाले और शत्रुओं के हिंसक देवद्वय का आह्वान करो। उदकस्वरूप, हविर्लक्षण, अन्नवान् और पूजनीय वरुण को हव्य प्रदान करो।

ताहिक्षत्रमविह्रुतंसम्यगसुर्य१माशाते ।
अधव्रतेवमानुषंस्व१र्णधायिदर्शतम् ॥ २ ॥

ता । हि । क्षत्रम् । अविऽह्रुतम् । सम्यक् । असुर्यम् । आशाते इति ।
अध । व्रताऽइव । मानुषम् । स्वः । न । धायि । दर्शतम् ॥ २ ॥

ताहि हीतिहेतौ यस्मात्ता तौ क्षत्रं बलं अविह्रुतं अहिंस्यं असुर्यं असुरविघाति मह-द्बलं सम्यगाशाते व्याप्नुतः अध अतोहेतोर्मानुषंमनुष्येषुप्रवृत्तं व्रतेव कर्मेव तद्यथा मनुष्येषु नि-यतं स्वर्णसूर्यइव सयथादिविदृश्यतेतद्वत् दर्शतं दर्शनीयं बलं धायि यज्ञेनिहितं ॥ २ ॥

२. तुम दोनों का बल अहिंसनीय और असुर-विघातक है अर्थात् तुम दोनों महान् बलवाले हो। सूर्य जिस प्रकार अन्तरिक्ष में दृश्यमान होते हैं, उसी प्रकार मनुष्यों के मध्य में तुम दोनों का दर्शनीय बल यज्ञ में स्थापित होता है।

तावामेषेरथानामुर्वींगव्यूतिमेषाम् ।
रातहव्यस्यसुष्टुतिंदधृक्स्तोमैर्मनामहे ॥ ३ ॥

ता । वाम् । एषे । रथानाम् । उर्वीम् । गव्यूतिम् । एषाम् ।
रातऽहव्यस्य । सुऽस्तुतिम् । दधृक् । स्तोमैः । मनामहे ॥ ३ ॥

हेमित्रावरुणौ ता तौप्रसिद्धौ वां युवां रथानां अस्मदीयानामेषांपुरतोवर्तमाना-नां उर्वीं प्रभूतां गव्यूतिं अतिविस्तृतंमार्गं एषे गन्तुं मार्गरक्षणायेत्यर्थः तुमर्थेअसेन्प्र-त्ययः तदर्थंवां मनामहे स्तुमः रातहव्यस्यऋषेः रातहव्यसंबन्धिभिः सुष्टुतिं सुष्टुतिभिः शोभनस्तुतिसाधनैः स्तोमैः दधृक् धर्षकौयुवां ॥ ३ ॥

३. हे मित्र और वरुण, तुम दोनों रात हव्य की प्रकृष्ट स्तुति से शत्रु-पराभवकारी बल लाभ करके हम लोगों के इस रथ के सम्मुख बहुत दूर तक मार्गरक्षार्थ गमन करते हो। तुम दोनों हम लोगों के द्वारा स्तुत होते हो। अधाहिकाव्यांयुवंदक्षस्यपूर्भिरद्भुता।
निकेतुनाजनानांचिकेथेंपूतदक्षसा ॥ ४ ॥

अध। हि। काव्या। युवम्। दक्षस्य। पूःऽभिः। अद्भुता।
नि। केतुना। जनानाम्। चिकेथे इति। पूतऽदक्षसा ॥ ४ ॥

अध अपिच हिमसिद्धौ काव्या स्तुत्यौ युवं युवां दक्षस्य प्रवृद्धस्य ममपूर्भिः पूरकैः स्तवैः हेअद्भुता महान्तौ आश्चर्यभूतौसन्तौ केतुना प्रज्ञानेनअनुकूलेनमनसा जनानां यजमानानामित्यर्थः स्तोत्रंनिचिकेथे नितरांजानीथः हेपूतदक्षसा शुद्धबलौयुवां ॥ ४ ॥

४. हे स्तुतियोग्य और हे शुद्ध बलवाले देवद्वय, हम प्रवृद्धमान की पूरक स्तुति से तुम दोनों अत्यन्त आश्चर्यभूत हो। तुम दोनों अनुकूल मन से यजमानों के स्तोत्र को जानते हो।

तदृतंपृथिविबृहच्छ्रवएषऋषीणाम्।
ज्रयसानावरंपृथ्वतिक्षरन्तियामभिः ॥ ५ ॥

तत्। ऋतम्। पृथिवि। बृहत्। श्रवःऽएषे। ऋषीणाम्।
ज्रयसानौ। अरम्। पृथु। अति। क्षरन्ति। यामऽभिः ॥ ५ ॥

हेपृथिविदेवि त्वयि तव सर्वैरर्थ्यमानत्वेन प्रसिद्धं बृहत् प्रभूतं ऋतमुदकं ऋषीणांस्तोतॄणामस्माकं श्रवएषे अन्नस्यैषणेसति ज्रयसानौ गच्छन्तौ छन्दस्यसानच्‌ऋञ्जृभ्यामित्यसानच् ज्रयतेरपिभवति चितइत्यन्तोदात्तः अरं अलं अत्यर्थंपृथुयथाभवतितथा यामभिर्गमनैः अतिक्षरन्ति अत्यर्थंवर्षतः व्यत्ययेनबहुवचनम् ॥ ५ ॥

५. हे पृथिवी देवी, हम ऋषियों के प्रयोजन को सिद्ध करने के लिए तुम्हारे ऊपर प्रभूत जल अवस्थित है। गमनशील देवद्वय निज गति विधि-द्वारा अति प्रचुर परिमाण में वारि-वर्षण करते हैं।

आयद्वामीयचक्षसामित्रवयंचसूरयः।
व्यचिष्ठेबहुपाय्येयतेमहिस्वराज्ये ॥ ६ ॥ ४ ॥

आ। यत्। वाम्। ईयऽचक्षसा। मित्रा। वयम्। च। सूरयः।
व्यचिष्ठे। बहुऽपाय्ये। यतेमहि। स्वऽराज्ये ॥ ६ ॥ ४ ॥

हेईयचक्षसा व्याप्तदर्शनौ हेमित्रा मित्रावरुणौ वां युवां यत् येवयंच सूरयः स्तोतारः आ आह्वयामः व्यचिष्ठे अत्यन्तविस्तृते बहुपाय्ये बहुभिर्गन्तव्ये बहुभीरक्षितव्येवा स्वराज्ये स्वराट्त्वाय एवंविधराज्यार्थं यतेमहि गच्छेम ॥ ६ ॥

६. हे दूरदर्शी मित्र और वरुण, हम और स्तोता लोग तुम दोनों का आह्वान करते हैं। हम तुम्हारे सुविस्तीर्ण और बहुतों-द्वारा गन्तव्य अथवा बहुतों के द्वारा रक्षितव्य राज्य में गमन करें।

॥ इतिचतुर्थस्यचतुर्थेचतुर्थोवर्गः ॥४॥

बळित्थादेवेतिपंचर्चमेकादशंसूक्तं अत्रेयमनुक्रमणिका—बळित्थापंचयजतइति यजतोनामात्रेयऋषिः आनुष्टुभंत्वित्युक्तत्वादिदमप्यानुष्टुभं मित्रावरुणौदेवता विनियोगोलैंगिकः।

बळित्थादेवनिष्कृतमादित्यायजतंबृहत्।
वरुणमित्रार्यमन्वर्षिष्ठंक्षत्रमाशाथे ॥ १ ॥

बट्। इत्था। देवा। निःऽकृतम्। आदित्या। यजतम्। बृहत्।
वरुण। मित्र। अर्यमन्। वर्षिष्ठम्। क्षत्रम्। आशाथे इति ॥ १ ॥

हेदेवा द्योतमानौ हेआदित्या अदितेःपुत्रौ हेवरुण हेअर्यमन् अरीणांनियमितर्मित्रदेव युवां बट् सत्यं अबाध्यं इत्था इत्थं इदानीं वर्तमानप्रकारेण यजतं यष्टव्यं बृहदतिप्रवृद्धं वर्षिष्ठं प्रवृद्धतमं क्षत्रं बलं आशाथे अश्नुवाथे यद्वा अर्यमा पृथगेव निर्देष्टव्यः द्विवचनं बहुवचनीकर्तव्यम् ॥ १ ॥

१. हे द्युतिमान् अदिति पुत्र मित्र, वरुण और अर्यमा, तुम सब अभी वर्तमान प्रकार से यजनीय वृहत् और अत्यन्त प्रवृद्ध बल धारण करते हो।

आयद्योनिंहिरण्ययंवरुणमित्रसदथः।
धर्तारांचर्षणीनांयन्तंसुम्नंरिशादसा ॥ २ ॥

आ। यत्। योनिम्। हिरण्ययम्। वरुण। मित्र। सदथः।
धर्तारा। चर्षणीनाम्। यन्तम्। सुम्नम्। रिशादसा ॥ २ ॥

यद्यस्माद्धिरण्ययं हितरमणीयं योनिं यज्ञभूमिं हेवरुण हेमित्र आसदथः आगच्छथः तस्माच्चर्षणीनां मनुष्याणां धर्तारा धारकौच हेरिशादसा हिंसकानांक्षेप्तारौयुवां अस्मभ्यं सुम्नं सुखं यन्तं कुरुतमित्यर्थः ॥ २ ॥

२. हे मित्र और वरुण, हे मनुष्यों के रक्षक तथा शत्रुसंहारक, जब तुम लोग आनन्दजनक यज्ञभूमि में आगमन करते हो, तब तुम लोग हमें सुखी करते हो।

अथतृतीया—

विश्वेहिविश्ववेदसोवरुणोमित्रोअर्यमा।
व्रतापदेवसश्चिरेपांतिमर्त्यंरिषः ॥ ३ ॥

विश्वे। हि। विश्वऽवेदसः। वरुणः। मित्रः। अर्यमा।
व्रता। पदाऽइव। सश्चिरे। पान्ति। मर्त्यम्। रिषः ॥ ३ ॥

विश्वेहि सर्वेपि हीतिअप्यर्थे विश्ववेदसः सर्वविदः सर्वधनावा वरुणोमित्रोर्यमाचैतेत्रयः सर्वे व्रतास्मदीयानिकर्माणि पदेव स्थानानीव सश्चिरे संगताभवन्ति अथत्यच मां मर्त्यं रिषोहिंसकाद् पान्ति रक्षन्ति ॥ ३ ॥

३. सर्वविद् मित्र, वरुण, अर्यमा अपने-अपने पद (स्थान) के अनुरूप हमारे यज्ञ में संगत होते हैं और हिंसकों से मनुष्यों की रक्षा करते हैं।

तेहिसत्याऋतस्पृशऋतावानोजनेजने।
सुनीथासःसुदानवोंहोश्चिदुरुचक्रयः ॥ ४ ॥

ते। हि। सत्याः। ऋतऽस्पृशः। ऋतऽवानः। जनेऽजने।
सुऽनीथासः। सुऽदानवः। अंहोः। चित्। उरुऽचक्रयः ॥ ४ ॥

तेहि तेखलु सत्याः सत्यभूताः सत्यफलावा ऋतस्पृशउदकस्पृशतस्यकर्तारः ऋतावानोयज्ञवन्तः जनेजने सर्वेषुयजमानेषु सुनीथासः सुनयनाः सुदानवः सुदानाः हीतिप्रसिद्धवाची सर्वत्रसंबन्धनीयः एवंमहानुभावावरुणादयःअंहोश्चिद् चिदप्यर्थे पापिनोपिस्वस्तोवुरुरुचक्रयः प्रभूतधनादिकर्तारः ॥ ४ ॥

४. वे सत्यदर्शी, जलवर्षी और यज्ञरक्षक हैं। वे प्रत्येक यजमान को सत्पथ प्रदर्शित करते हैं और प्रचुर दान करते हैं। वे महानुभाव वरुणादि पापी स्तोता को प्रभूत धन प्रदान करते हैं।

अथपंचमी—

कोनुवांमित्रास्तुतोवरुणोवातनूनाम् ॥
तत्सुवामेषतेमतिरत्रिभ्यएषतेमतिः ॥ ५ ॥ ५ ॥

कः। सु। वाम्। मित्र। अस्तुतः। वरुणः। वा। तनूनाम्। तत्। सु।
वाम्। आ। ईषते। मतिः। अत्रिऽभ्यः। आ। ईषते। मतिः ॥ ५ ॥ ५ ॥

हेमित्र वां युवयोर्मध्ये त्वंचवरुणोवा कोनुअस्तुतः सर्वैरस्तूयमानःकोस्ति उभौअपिस्तुत्यावित्यर्थः तनूनामितितृतीयार्थेषष्ठी तनुभिस्तुतिभिरस्तुतइतिसंबंधः अत्रमित्रशब्देनमित्रस्यैकस्यैवसंबोधनं वरुणेळास्वन्तरित्यत्रेवात्रद्विवचनसूचकस्याकरस्यानाम्नानात् लोकेषु बहुषुसंनिहितेषु एकमेवसंबोध्य युवयोरिदंयुष्माकमिदमितिप्रयुंजते तत् तस्मात् यस्मात्सर्वेस्तुवन्तितस्मात् तनूनामित्येतद्व्यवहितमपिउत्तरत्रवायोज्यं तनूनामल्पमतीनां अस्माकंमतिःस्तुतिर्वां युवां आईषते अभिगच्छति अत्रिभ्योत्रिगोत्रेभ्यः अस्मभ्यं अस्मदीयमतिः एषते आदरार्थंपुनर्वचनं ॥ ५॥

५. हे मित्र और वरुण, तुम दोनों के मध्य में सबके द्वारा स्तुतियों से कौन अस्तूयमान है ? अर्थात् दोनों ही स्तुतियोग्य हैं। हम लोग अल्प बुद्धि हैं। हम लोग तुम्हारा स्तवन करते हैं। अत्रिगोत्रज लोग तुम्हारा स्तवन करते हैं।

॥ इतिचतुर्थस्यचतुर्थेपंचमोवर्गः ॥ ५ ॥

प्रवोमित्रायेतिपंचर्चैद्वादशंसूक्तं आत्रेयस्ययजतस्यार्षं गायत्रं मैत्रावरुणं तथाचानुक्रम्यते—प्रवोगायत्रमिति। अग्निष्टोमेप्रातःसवने मैत्रावरुणशस्त्रे एतत्सूक्तं सूत्रितंच—प्रवोमित्रायममित्रयोर्वरुणयोरिति । अभिप्लवषळहे पृष्ठ्यषडहेच स्तोमनिमित्तावापार्थमिदमादीनिद्वितीयवर्जितानि चत्वारिसूक्तानि तथैवसूत्रितं—प्रवोमित्रायेतिचतुर्णांद्वितीयमुद्धरेदिति ।

प्रवोमित्रायगायतवरुणायविपागिरा । महिक्षत्रावृतंबृहत् ॥१॥

प्र । वः । मित्राय । गायत । वरुणाय । विपा । गिरा ।
महिऽक्षत्रौ । ऋतम् । बृहत् ॥ १ ॥

हेमदीयाऋत्विजः वोयूयमित्यर्थः मित्रायवरुणायच विपा व्याप्तया गिरा स्तुत्या प्रगायत स्तुतिंकुरुत स्तुत्यास्तुवतेत्येतत्पाकंपचतीतिवत् हेमहिक्षत्रौ प्रभूतबलौ युवां ऋतं यज्ञं बृहत् महत् अतिप्रशस्तंस्तुत्यर्थमागच्छतमितिशेषः अथवा महत्प्रभूतं ऋतं स्तोत्रं शृणुतमितिशेषः ॥ १ ॥

१. हे हमारे ऋत्विको, तुम लोग उच्च स्वर से मित्र और वरुण का भली भाँति से स्तवन करो। हे प्रभूत बलशाली मित्र और वरुण, तुम दोनों इस महायज्ञ में उपस्थित होओ।

अथद्वितीया—

सम्राजायाघृतयोनीमित्रश्चोभावरुणश्च । देवादेवेषुप्रशस्ता ॥२॥

सम्ऽराजा । या । घृतयोनीइतिघृतऽयोनी । मित्रः । च ।
उभा । वरुणः । च । देवा । देवेषु । प्रऽशस्ता ॥ २ ॥

या यौमित्रश्चवरुणश्च परस्परापेक्षयाचशब्दः उभा उभौ सम्राजा सर्वस्यस्वामिनौ घृतयोनी उदकस्योत्पादकौ देवौ द्योतमानौ देवेषुमध्ये प्रशस्ता प्रकर्षेणस्तुत्यौ तौ गायतेतिपूर्वेणान्वयः ॥२. जो मित्र और वरुण दोनों ही परस्परापेक्षा सबके स्वामी, जल के उत्पादक, द्युतिमान् और देवों के मध्य में अतिशय स्तुत्य हैं, हे ऋत्विजो, तुम लोग उन दोनों की स्तुति करो।

तानः शक्तंपार्थिवस्यमहोरायोदिव्यस्य। महिवांक्षत्रंदेवेषु ॥ ३ ॥

ता। नः। शक्तम्। पार्थिवस्य। महः। रायः। दिव्यस्य। महि। वाम्। क्षत्रम्। देवेषु ॥ ३ ॥

ता तौ देवौ नोस्मदर्थं पार्थिवस्य पृथिवीसंबद्धस्य दिव्यस्य दिविभवस्यच महोमहतोरायोधनस्य शक्तं समर्थौभवतं दातुमितिशेषः हेदेवौ वांयुवयोर्महि महत्पूज्यं क्षत्रं बलं देवेषु प्रसिद्धंस्तुमइतिशेषः ॥ ३ ॥

३. वे दोनों देव हम लोगों को पार्थिव धन तथा दिव्य धन दोनों ही देने में समर्थ हैं। हे मित्र और वरुणदेव, तुम दोनों का पूजनीय बल देवों के मध्य में प्रसिद्ध है। हम लोग उसका स्तवन करते हैं।

ऋतमृतेनसपन्तेषिरंदक्षमाशाते। अद्रुहादेवौवर्धते ॥ ४॥

ऋतम्। ऋतेन। सपन्ता। इषिरम्। दक्षम्। आशाते इति। अद्रुहा। देवौ। वर्धते इति ॥ ४ ॥

ऋतेनोदकेननिमित्तेन ऋतं यज्ञं सपन्ता स्पृशन्तौ इषिरं एषणवन्तं दक्षं प्रवृद्धं यजमानं हविर्वा आशाते व्याप्नुतः अद्रुहा अद्रोग्धारौ देवौ मित्रावरुणौ युवांवर्धेते प्रवृद्धौभवतः ॥४॥

४. उदक-द्वारा यज्ञ का स्पर्शन करके वे दोनों देव अन्वेषणकारी प्रवृद्ध यजमान को अथवा हव्य को व्याप्त करते हैं। हे द्रोहरहित मित्रावरुण देव, तुम दोनों प्रवृद्ध होते हो।

अथपंचमी—

वृष्टिद्यावारीत्यापेषस्पतीदानुमत्याः। बृहन्तंगर्तमाशाते ॥५॥६॥

वृष्टिऽद्यावा। रीतिऽआपा। इषः। पती इति। दानुऽमत्याः। बृहन्तम्। गर्तम्। आशाते इति ॥ ५ ॥ ६ ॥

वृष्टिद्यावा वृष्ट्यर्थाद्यौःस्तुतिर्ययोस्तौवृष्टिद्यावा अथवा वृष्टिर्वर्षिका द्यौरन्तरिक्षं याभ्यां तौ तादृशौ रीत्यापा रीगतिरेषणयोः रीतिः प्राप्तिः सैवआपाआविरभिमवप्राप्तिर्ययोस्तौ

यादृशौ इषोन्नस्य पती स्वामिनौ वृष्टिप्रदत्वात्स्वामित्वं दानुमत्याः दानवत्याः दातृपुरुचितायाः इत्यर्थः एतदिड्विशेषणं एवंमहानुभावौ बृहन्तं महान्तं गर्तं रथमाशातेव्याप्नुतः अधितिष्ठतो-यागार्थं ॥५॥

५. जिन दोनों के द्वारा अन्तरिक्ष वर्षणकारी होता है, जो दोनों अभिमत फल के प्रापक हैं, वृष्टिप्रद होने से जो अन्न के अधिपति हैं, और जो दाता के प्रति अनुकूल हैं, वे दोनों महानुभाव यज्ञ के लिए महान् रथ पर अधिष्ठित होते हैं।

॥ इतिचतुर्थस्यचतुर्थेषष्ठोवर्गः ॥ ६ ॥

त्रीरोचनेतिचतुर्ऋचंत्रयोदशंसूक्तं उरुचक्रिर्नामात्रेयऋषिः त्रिष्टुप् मित्रावरुणौदेवता अनुक्रम्यतेच—त्रीरोचनाचतुष्कमुरुचक्रिरिति। विनियोगोलैंगिकः।

त्रीरो॑च॒ना व॑रुण॒ त्रीँरु॒त द्यून्त्रीणि॑ मित्र धारयथो॒ रजां॑सि।
वा॒वृ॒धा॒नाव॒मतिं॑ क्ष॒त्रिय॒स्यानु॑ व्र॒तं रक्ष॑माणावजु॒र्यम् ॥ १॥

त्री। रो॒च॒ना। व॒रु॒ण॒। त्रीन्। उ॒त। द्यून्। त्रीणि॑। मि॒त्र॒।
धा॒र॒य॒थः॒। रजां॑सि। व॒वृ॒धा॒नौ। अ॒मति॑म्। क्ष॒त्रिय॑स्य।
अनु॑। व्र॒तम्। रक्ष॑माणौ। अ॒जु॒र्यम् ॥ १॥

हेवरुण हेमित्र युवां त्री त्रीणि रोचना रोचनानि द्युलोकान्धारयथइतिसंबन्धः उत अपिच त्रीन्द्यून् द्योतमानानंतरिक्षलोकान् धारयथः तथात्रीणिरजांसि भूलोकान् कीदृशौ युवां वावृधाना वर्धमानौ क्षत्रियस्य क्षत्रं बलं तद्वतइन्द्रस्य यद्वा क्षत्रियजातीयस्ययजमानस्य अमतिं रूपनामैतत् रूपंव्रतंकर्मच अजुर्यं अजीर्णअविरतंवा रक्षमाणौ ॥ १॥

१. हे वरुण, हे मित्र, तुम दोनों रोचमान तीन द्युलोकों को धारण करते हो, तीन अन्तरिक्ष लोकों को धारण करते हो और तीन भूलोकों को धारण करते हो। तुम दोनों क्षत्रिय यजमान के अथवा इन्द्र के रूप और कर्म की अविरत रक्षा करते हो।

इरा॑वतीर्वरुण धे॒नवो॑ वां॒ मधु॑मद्वां॒ सिन्ध॑वो मित्र दुह्रे।
त्रय॑स्तस्थुर्वृष॒भास॑स्तिसृ॒णां धि॒षणा॑नां रेतो॒धा वि द्यु॒मन्तः॑ ॥ २॥

इरा॑वतीः। व॒रु॒ण॒। धे॒नवः॑। वा॒म्। मधु॑ऽमत्। वा॒म्। सिंध॑वः।
मि॒त्र॒। दु॒ह्रे॒। त्रयः॑। त॒स्थुः॒। वृ॒ष॒भासः॑। ति॒सृ॒णाम्। धि॒षणा॑नाम्।
रे॒तः॒ऽधाः। वि। द्यु॒ऽमन्तः॑ ॥ २॥

हेवरुण हेमित्र वांयुवयोराज्ञया धेनवोगावः इरावतीः इराक्षीरलक्षणान्नं द्वत्योभवन्ति तथासिंधवः स्यंदनशीलामेघानद्योवा मधुमत् मधुरसमुदकं दुहे दुहन्ति तथा त्रयः त्रिसंख्याकावृषभासोवर्षितारः रेतोधाः उदकस्यधारकाः द्युमंतोदीप्तिमन्तः अग्निवाय्वादित्याः तिसृणां त्रिसंख्याकानां धिषणानां स्थानानां पृथिव्यंतरिक्षद्युलोकानां स्वामिनःसन्तः वि विविधं प्रत्येकं तस्थुस्तिष्ठन्ति युवयोरनुग्रहावत्रयोऽपिदेवास्त्रिषुस्थानेषुवर्तंतइत्यर्थः॥२॥

२. हे मित्र और वरुण, तुम दोनों की आज्ञा से गौएँ दुग्धवती होती हैं। स्यन्दनशील मेघ वा नदियाँ सुमधुर जल प्रदान करती हैं। तुम दोनों के अनुग्रह से जलवर्षक और उदकधारक तथा द्युतिमान अग्नि, वायु और आदित्य नामक तीन देव पृथिवी, अन्तरिक्ष तथा द्युलोक के स्वामी होकर प्रत्येक अधिष्ठित होते हैं।

प्रातर्देवीमदितिंजोहवीमिमध्यन्दिनउदितासूर्यस्य।
रायेमित्रावरुणासर्वतातेळेतोकायतनयायशंयोः॥ ३ ॥

प्रातः। देवीम्। अदितिम्। जोहवीमि। मध्यन्दिने। उत्ऽइता।
सूर्यस्य। राये। मित्रावरुणा। सर्वऽताता। ईळे। तोकाय।
तनयाय। शम्। योः॥ ३ ॥

अहमृषिः प्रातः प्रातःकाले अदितिमखंडनीयां देवानांजननीं देवीं द्योतमानां जोहवीमि आह्वयामि तथामध्यन्दिने सूर्यस्य उदिता उदितौ तत्समृद्धिकाले माध्यन्दिनेसवने जोहवीमि हेमित्रावरुणा युवां राये धनप्राप्तये सर्वतातौ यज्ञे ईळे स्तौमि पुनःकिमर्थं तोकाय पुत्राय तनयाय तत्पुत्रायच शं अरिष्टशमनाय योः सुखस्यमिश्रणायच ईळइति॥ ३ ॥

३. प्रातःकाल में और सूर्य के समृद्धि काल में अर्थात् माध्यन्दिन सवन में हम ऋषि देवों की द्युतिमती जननी अदिति का आह्वान करते हैं। हे मित्र और वरुण, हम धन, पुत्र, पौत्र, अरिष्ट शान्ति और सुख के लिए तुम दोनों का स्तवन, यज्ञ में, करते हैं।

याधर्तारारजसोरोचनस्योतादित्यादिव्यापार्थिवस्य।
नवांदेवाअमृताआमिनन्तिव्रतानिमित्रावरुणाध्रुवाणि॥४॥७॥

या। धर्तारा। रजसः। रोचनस्य। उत। आदित्या। दिव्या।
पार्थिवस्य। न। वाम्। देवाः। अमृताः। आ। मिनन्ति। व्रतानि।
मित्रावरुणा। ध्रुवाणि॥ ४ ॥ ७ ॥

या यौ रोचनस्य रोचमानस्य रजसोलोकस्य स्वर्गाख्यस्येत्यर्थः उतापिच पार्थिवस्य रजसोलोकस्यधर्तारौ आदित्या अदितेःपुत्रौ दिव्या दिविभवौ तौ युवांईळइतिपू-

वंशसंबन्धः हेमित्रावरुणा वांयुवयोः ध्रुवाणि व्रतानिकर्माणि देवाः अन्येइन्द्रादयः अ-मृताः अमरणधर्माणोपि नामिनन्ति नहिंसन्ति यतोध्रुवाणि अतइत्यभिप्रायः ॥ ४ ॥

४. हे द्युलोकोत्पन्न अदिति-पुत्रद्वय, तुम दोनों द्युलोक तथा भूलोक के धारणकर्ता हो। हम तुम दोनों का स्तवन करते हैं। हे मित्र और वरुण, तुम्हारे कार्य स्थिर हैं, उन कार्यों की हिंसा इन्द्र आदि अमर देवगण भी नहीं कर सकते हैं।

पुरूरुणेतिचतुर्कंचंचतुर्दशंसूक्तं उरुचक्रेरार्षं गायत्रं मैत्रावरुणं पुरूरुणागायत्रंत्वित्यनुक्रमणिका पृष्ठ्याभिप्लवषडहयोःप्रातःसवने आवापार्थत्वेनेदमपिसूक्तंपूर्वसूक्तेनसह प्रवोमित्रायेतिचतुर्णाद्वितीयमुद्धरेदितिह्युक्तं चातुर्विंशेहनिप्रातःसवनेमैत्रावरुणशस्त्रेआद्यस्तृचःषळहस्तोत्रियसंज्ञकः सूत्रितंच—पुरूरुणाचिद्ध्यस्तिमतिर्वांसूरउदितइति।

पुरूरुणाचिद्ध्यस्त्यवोनूनंवांवरुण। मित्रवंसिवांसुमतिम् ॥१॥

पुरुऽउरुणा। चित्। हि। अस्ति। अवः। नूनम्। वाम्। वरुण। मित्र। वंसि। वाम्। सुऽमतिम् ॥ १ ॥

हेमित्रावरुणौ वांयुवयोः पुरूरुणाचित् अत्र सोः सुपांसुलुगित्याकारः पुरोरपिबहुउरुबहुतरं अथवा पुरुचतदुरुचपुरूरु अत्यन्तमुरुतरमित्यर्थः तादृगवोरक्षणं नूनं निश्चयेन अस्ति हिप्रसिद्धौ चिदितिपूरणः हेवरुण हेमित्र वांयुवयोः सुमतिं अनुग्रहबुद्धिं वंसि संभजेय यस्मादवोस्तितस्माद्वंसीतिभावः ॥ १ ॥

१. हे मित्र और वरुण, तुम दोनों का रक्षण-कार्य निश्चय ही अत्यन्त दीर्घतर है। हे वरुण और मित्र, हम तुम दोनों की अनुग्रहबुद्धि का सम्भजन करें।

तावांसम्यगद्रुह्वाणेषमश्यामधायसे। वयंतेरुद्रास्याम ॥ २ ॥

ता। वाम्। सम्यक्। अद्रुह्वाणा। इषम्। अश्याम। धायसे। वयम्। ते। रुद्रा। स्याम ॥ २ ॥

हेअद्रुह्वाणा हेअद्रोग्धारौ ता तौ प्रसिद्धौ वां युवां सम्यक्स्तुमइतिशेषः स्तोतारोवयं इषमन्नं धायसे पानाय भोजनाय अश्याम प्राप्नुयाम हेरुद्रा रुतः दुःखाद् द्रावयितारौ रुदद्भिर्द्रष्टणीयौवा तेस्तोतारोवयं स्याम भवेम समृद्धाइतिशेषः युवाभ्यांस्वभूतावांस्याम ॥ २ ॥

२. हे द्रोहविवर्जित देवद्वय, हम तुम दोनों के निकट से भोजन के लिए अन्नलाभ करें। हे रुद्रो, हम लोग तुम्हारे स्तोता हों। समृद्ध हों अथवा तुम्हारे ही हों।

पातंनोरुद्रापायुभिरुतत्रायेथांसुत्रात्रा।
तुर्यामदस्यूंन्तनूभिः ॥ ३ ॥

पातम्। नः। रुद्रा। पायुऽभिः। उत। त्रायेथाम्। सुऽत्रात्रा।
तुर्याम। दस्यून्। तनूभिः ॥ ३ ॥

हेरुद्रा उक्तरूपौ देवौ युवां नोस्मान् पायुभिः रक्षणैःपातं रक्षतं उतापिच सुत्रात्रा शोभनेनत्राणेन त्रायेथां पालयेथां इष्टप्राप्त्यनिष्टपरिहारभेदेनभेदः स्तोत्रादिवैकल्याच्छत्रोर्वा त्रायेथां अभिमतप्रापणेनरक्षतमित्यर्थः वयंच तनूभिः पुत्रादिभिःसहिताः स्वीयैरंगैर्वा दस्यून् शत्रूनतुर्याम हिंस्याम तरेमवा ॥ ३ ॥

३. हे रुद्ररूप देवद्वय, तुम दोनों रक्षा-द्वारा हमारी रक्षा करो। शोभन त्राण-द्वारा पालन करो, अर्थात् इष्ट की प्राप्ति हो, अनिष्ट का निराकरण हो और अभिमत फल लाभ हो। हम अपने पुत्रों के साथ अथवा अपने शरीर से ही शत्रुओं को हिंसित करें।

माकस्याद्भुतक्रतूयक्षंभुजेमातनूभिः।
माशेषसामातनसा ॥ ४ ॥ ८ ।

मा। कस्य। अद्भुतक्रतूइत्यद्भुतऽक्रतू। यक्षम्। भुजेम। तनूभिः।
मा। शेषसा। मा। तनसा ॥ ४ ॥ ८ ॥

हेअद्भुतक्रतू आश्चर्यकर्माणौ वयं कस्य अन्यस्यकस्यच नयक्षं पूजितं धनंमाभुजेम माभुंजीमहि तनूभिरस्मदीयैरवयवैः युवयोरनुग्रहात् समृद्धावयं अन्यथावयंकस्यचिद्धनेन शरीरपोषंनकुर्मइत्यर्थः तथा शेषसा अपत्येनसहितामाभुजेम तनसा पौत्रादिनासहितामाभुजेम अस्मत्कुलेनकेपिभुंजीमहीत्यर्थः ॥ ४ ॥

४. हे आश्चर्य-जनक कर्म करनेवाले, हम अपने शरीर-द्वारा किसी के पूजित (श्रेष्ठ) धन का भी उपभोग नहीं करते हैं। हम तुम्हारे अनुग्रह से समृद्ध हैं—किसी के धन से शरीर पोषण भी नहीं करते हैं। पुत्र-पौत्रों के साथ भी हम दूसरे (तुम्हारे व्यतिरिक्त) के धन का उपभोग नहीं करते हैं। हमारे कुल में कोई भी दूसरे के धन का उपभोग नहीं करता है।

आनोगन्तमितितृचात्मकंपंचदशंसूक्तं बाहुवृक्तस्यात्रेयस्यार्षं गायत्रं मैत्रावरुणं आनस्तृचंबाहुवृक्तइत्यनुक्रमणिका उक्तःसूक्तविनियोगः अग्निष्टोमेप्रातःसवनेमैत्रावरुणशस्त्रे अयमनुरूपस्तृचः सूत्रितंच—आनोमित्रावरुणाआनोगन्तंरिशादसेति।

तत्रप्रथमा—

आनोंगन्तंरिशादसावरुंणमित्रंबर्हणां ।
उपेमंचारुंमध्वरम् ॥ १ ॥

आ । नः । गन्तम् । रिशादसा । वरुंण । मित्रं । बर्हणां । उपं ।
इमम् । चारुंम् । अध्वरम् ॥ १ ॥

हेवरुण हेमित्र हेरिशादसा शत्रूणांप्रेरकौयुवां नोस्माकमिमं चारुं चरणीयं अध्वरं अहिंसकं यज्ञमुपागन्तं उपागच्छतं कीदृशौ बर्हणा परिबर्हणौ निबर्हणौ हन्तारौशत्रूणाम् ॥१॥ १. हे वरुण, हे मित्र, तुम दोनों शत्रुओं के प्रेरक और हन्ता हो। तुम दोनों हमारे इस हिंसावर्जित यज्ञ में आगमन करो।

विश्वंस्यहिप्रचेतसावरुंणमित्रराजंथः ।
ईशानापिप्यतंधियंः ॥ २ ॥

विश्वंस्य । हि । प्रऽचेतसा । वरुंण । मित्रं । राजंथः ।
ईशाना । पिप्यतम् । धियंः ॥ २ ॥

हेवरुण हेमित्र हेप्रचेतसा प्रकृष्टज्ञानौयुवां विश्वस्यराजथः सर्वस्यस्वामिनौ भवथः हीति प्रसिद्धौ हेईशाना अस्माकमीश्वरौयुवां धियोस्मदीयानिकर्माणि पिप्यतं प्याययतंफलैः ॥ २ ॥

२. हे प्रकृष्ट ज्ञानयुक्त मित्र और वरुण, तुम दोनों सबके स्वामी होते हो। हे हमारे ईश्वरद्वय, फल प्रदान-द्वारा हमारे कर्मों का तुम दोनों पालन करो।

उपंनःसुतमागतंवरुंणमित्रंदाशुषंः ।
अस्यसोमंस्यपीतयें ॥ ३ ॥ ९ ॥

उपं । नः । सुतम् । आ । गतम् । वरुंण । मित्रं ।
दाशुषंः । अस्य । सोमंस्य । पीतयें ॥ ३ ॥ ९ ॥

नोस्माकं सुतमभिषुतं सोमंप्रति हेवरुण हेमित्र युवां उपागतं उपागच्छतं दाशुषोहविर्दातुर्ममास्यसोमस्य पीतये पानाय ॥ ३ ॥

३. हे मित्रावरुण, तुम दोनों हमारे अभिषुत सोम के प्रति आगमन करो। हम हवि देनेवाले हैं। हमारे इस सोम को पीने के लिए आगमन करो।

आमित्रेवरुणइतित्र्यृचात्मकंषोडशंसूक्तं बाहुवृक्तस्यार्षमौष्णिहं मैत्रावरुणं आमित्रऔ-ष्णिहमित्यनुक्रमणिका दशरात्रेतृतीयेहनिप्रउगशस्त्रेअयंमैत्रावरुणस्यतृचः सूत्रितंच—आमि-त्रेवरुणेवयमश्विनावेहगच्छतमिति ।

तत्रप्रथमा—

आमित्रेवरुणेवयंगीर्भिर्जुहुमोअत्रिवत् ।
निबर्हिषिसदतंसोमपीतये ॥ १ ॥

आ । मित्रे । वरुणे । वयम् । गीःऽभिः । जुहुमः । अत्रिऽवत् ।
नि । बर्हिषि । सदतम् । सोमऽपीतये ॥ १ ॥

वयमात्रेयाः मित्रेवरुणे मित्रावरुणयोरर्थाय गीर्भिर्मन्त्रैराजुहुमः अत्रिवत् अस्मद्गोत्र-प्रवर्तकोत्रिरिव तस्मात् मित्रावरुणौ सोमपीतये बर्हिषिनिषदतं निषीदतम् ॥ १ ॥

१. हमारे गोत्रप्रवर्तक अत्रि की तरह हम लोग मन्त्र-द्वारा तुम दोनों का आह्वान करते हैं। इसलिए मित्रावरुण सोमपान के लिए कुश के ऊपर उपवेशन करें।

व्रतेनस्थोध्रुवक्षेमाधर्मणायातयज्जना ।
निबर्हिषिसदतंसोमपीतये ॥ २ ॥

व्रतेन । स्थः । ध्रुवऽक्षेमा । धर्मणा । यातयत्ऽजना ।
नि । बर्हिषि । सदतम् । सोमऽपीतये ॥ २ ॥

हेमित्रावरुणौ युवां धर्मणा जगद्धारकेण व्रतेन कर्मणायोगेन ध्रुवक्षेमा स्थः अवि-चलितस्थानौभवथः यातयज्जना यातयन्तः कर्मसुप्रवर्तयन्तोजनाऋत्विजोययोस्तौयातयज्जनौ अथवा यातयन्तोशत्रून्हिंसन्तोजनाभृत्याययोस्तौ शिष्टंगतम् ॥ २ ॥

२. हे मित्र और वरुण, जगद्धारक कर्म के द्वारा तुम दोनों के स्थान विचलित नहीं होते हैं। अर्थात् तुम दोनों स्थानच्युत नहीं होते हो। ऋत्विक् लोग तुम दोनों को यज्ञ प्रदान करते हैं। इसलिए मित्रावरुण सोमपान के लिए कुश के ऊपर उपवेशन करें।

मित्रश्चनोवरुणश्चजुषेतांयज्ञमिष्टये ।
निबर्हिषिसदतांसोमपीतये ॥ ३ ॥ १० ॥

मित्रः । च । नः । वरुणः । च । जुषेताम् । यज्ञम् । इष्टये ।
नि । बर्हिषि । सदताम् । सोमऽपीतये ॥ ३ ॥ १० ॥

मित्रश्चवरुणश्चोभौ नोस्माकं यज्ञमिष्टये अभीष्टाय जुषेतां सेवेतां आगत्यच बर्हिषि निषदतं निषीदतं सोमपानाय ॥ ३ ॥

३. हे मित्र और वरुण, तुम दोनों हमारे यज्ञ को अभिलाषपूर्वक ग्रहण करो और आकर सोमपान के लिए कुश के ऊपर उपवेशन करो।

षष्ठेनुवाकेपंचदशसूक्तानि तत्रयदद्यस्थइतिदशर्चंप्रथमंसूक्तं आत्रेयस्यपौरनाम्नआर्षं आनुष्टुभमाश्विनं अनुक्रान्तंच—यदद्यदशपौरआश्विनंतदानुष्टुभंत्विति। तदित्युक्तत्वादिदमादी-निषट्सूक्तान्याश्विनानि आनुष्टुभंत्विति तुशब्दादिदमुत्तरंचद्वेआनुष्टुभे प्रातरनुवाके आश्विने क्रतौ आनुष्टुभेछन्दसि आश्विनशस्त्रेचेदमादिकेद्वेसूक्ते यदद्यस्थइतिसूक्तेइतिसूत्रितम्।

यदद्यस्थःपरावतियदर्वावत्यश्विना।
यद्वापुरूपुरुभुजायदन्तरिक्षआगतम् ॥ १ ॥

यत्। अद्य। स्थः। पराऽवति। यत्। अर्वाऽवति। अश्विना।
यत्। वा। पुरु। पुरुऽभुजा। यत्। अन्तरिक्षे। आ। गतम् ॥१॥

हेपुरुभुजा बहुषु यज्ञेषु भोक्तारौ अधिकं रक्षितारौवा हेअश्विना अश्विनौ यद्यदि अद्या-स्मिन्काले परावति अत्यंतंदूरेदेशे द्युलोके स्थोभवथः यद्वा अर्वावति अरणवति गन्तुंशक्येप्रदेशे अन्तिकेस्थः यत् यदिवा अथवा पुरु बहु प्रदेशेषुस्थः यद्यदि अन्तरिक्षेस्थः तस्मात्सर्वस्मा-दद्यागतं आगच्छतम् ॥ १ ॥

१. हे अगणित यज्ञ में भोजन करनेवाले, अश्विनीकुमारो, यद्यपि इस समय तुम दोनों अत्यन्त दूर देश द्युलोक में वर्तमान हो, गमनशक्य अन्तरिक्ष में वर्तमान हो अथवा बहुतेरे प्रदेश में वर्तमान हो; तथापि उन सब स्थानों से यहाँ आगमन करो।

इहत्यापुरुभूतमापुरूदंसांसिबिभ्रता।
वरस्यायाम्यध्रिगूहुवेतुविष्टमाभुजे ॥ २ ॥

इह। त्या। पुरुऽभूतमा। पुरु। दंसांसि। बिभ्रता। वरस्या।
यामि। अध्रिगूइत्यध्रिऽगू। हुवे। तुविःऽतमा। भुजे ॥ २ ॥

इहास्मिन्यज्ञे त्या तौ पुरुभूतमा पुरूणां बहूनां यजमानानां भावयितृतमौ पुरु पुरूणि दंसांसि कर्माणि बिभ्रता धारयन्तौ वरस्यावरणीयौ अध्रिगू अन्यैरधृतगमनकर्माणौ यामि उपागच्छामि तुविष्टमा प्रभूततमौ भुजे भोगाय पालनायवा हुवे आह्वयामि ॥ २॥

२. हे अश्विनीकुमारो, तुम दोनों बहुत यजमानों के उत्साहदाता, विविध कर्मों के धारणकर्ता, वरणीय, अप्रतिहतगति और अनिरुद्धकर्मा हो। इस यज्ञ में हम दोनों के समीप उपस्थित होते हैं। प्रभूततम भोग और रक्षा के लिए हम तुम दोनों का आह्वान करते हैं।

अथतृतीया—

ईर्मान्यद्वपुषेवपुश्चक्रंरथस्ययेमथुः ।
पर्यन्यानाहुषायुगामह्नारजांसिदीयथः ॥ ३ ॥

ईर्मा । अन्यत् । वपुषे । वपुः। चक्रम् । रथस्य । येमथुः । परि ।
अन्या । नाहुषा । युगा । मह्ना । रजांसि । दीयथः ॥ ३ ॥

हेअश्विनौ युवां रथस्ययुष्मदीयस्यान्यच्चक्रं ईर्मा अर्तेरीर्मेतिरूपं गंतर्यादित्ये वपुषे तस्यशोभायै वपुर्वपुष्मत् तेजोवत्चक्रंयेमथुः नियमितवन्तौस्थः अन्या अन्येनचक्रेण मह्ना महत्त्वेन स्वसामर्थ्येन नाहुषायुगा नहुषामनुष्याः तेषांयुगा युगोपलक्षितान्कालान् प्रातरादिसवनान् अहोरात्रादिकालान्वा रजांसि लोकांश्च परिगच्छथः परिदीयथः न्यग्न्यस्यमूर्धनिचक्रंरथस्ययेमथुरित्युक्तम् ॥ ३ ॥

३. हे अश्विनीकुमारो, सूर्य की मूर्ति को प्रदीप्त करने के लिए तुम दोनों ने रथ के एक दीप्तिमान् चक्र को नियमित किया है। अपनी सामर्थ्य से मनुष्यों के अहोरात्रादि काल को निरूपित करने के लिए अन्य चक्र-द्वारा (तीनों) लोकों में परिभ्रमण करते हो।

तदूषुवामेनाकृतंविश्वायद्वामनुष्टवे ।
नानाजातावरेपसासमस्मेबन्धुमेयथुः ॥ ४ ॥

तत् । ऊँ इति । सु । वाम् । एना । कृतम् । विश्वा । यत् ।
वाम् । अनु । स्तवे । नाना । जातौ । अरेपसा । सम् ।
अस्मे इति । बन्धुम् । आ । ईयथुः ॥ ४ ॥

हेविश्वाव्याप्तौ यत् येनस्तोत्रेणवां युवां अनुष्टवे अनुस्तवे तदु उइतिपूरणः एना अनेनपौरेण सु सुष्ठुवां युवाभ्यां कृतं संपादितंभवतु नाना पृथगेव जातौ सम्बद्धौ अरेपसा अपापौ अस्मे अस्मभ्यं बन्धुं अन्नंधनंवा समेयथुः सम्यग्गमयथः सम्यक्प्रयच्छतमित्यर्थः ॥ ४ ॥

४. हे व्यापक देवद्वय, हम जिस स्तोत्र-द्वारा तुम दोनों का स्तवन करते हैं, वह तुम दोनों का स्तोत्र इस पुरवासी के द्वारा सुसम्पादित हो। हे पृथक् उत्पन्न तथा निष्पाप देवद्वय, तुम दोनों हमें प्रचुर परिमाण में अन्न प्रदान करो।

आयद्वांसूर्यारथंतिष्ठद्रघुष्यदंसदा ।
परिवामरुषावयोघृणावरन्तआतपः ॥ ५ ॥ ११ ॥

---

१ ऋ० सं० १. २. ३१.।

आ। यत्। वाम्। सूर्या। रथम्। तिष्ठत्। रघुऽस्यदम्। सदा।
परि। वाम्। अरुषाः। वयः। घृणा। वरन्ते। आऽतपः॥५॥११॥

हेअश्विनौ वांयुवयोः सदा सर्वदा रघुष्यदं शीघ्रगंरथं सूर्या युवयोःपत्नी यत्र यदा आतिष्ठव आस्थितवती तदा वांपरिवरन्ते परितोवृण्वन्ति केअरुषा आरोचमानाः घृणादीप्ताः आतपः आतापनाः शत्रूणां वयोश्वाः अथवा आतपइतिविशेष्यं वयोगन्ता-रउक्तलक्षणाः आतपःसर्वतस्तापयित्र्योदीप्तयःपरिवरन्ते ॥ ५ ॥

५. हे अश्विनीकुमारो, जब तुम दोनों की पत्नी सूर्या तुम दोनों के सर्वदा शीघ्रगामी रथ पर आरोहण करती हैं, तब आरोचमान और दीप्त आतप (दीप्तियाँ) तुम दोनों के चतुर्दिक् विस्तृत होते हैं।

युवोरत्रिश्चिकेततिनरासुम्नेनचेतसा।
घर्मंयद्वामरेपसंनासत्यास्नाभुरण्यति ॥ ६ ॥

युवोः। अत्रिः। चिकेतति। नरा। सुम्नेन। चेतसा।
घर्मम्। यत्। वाम्। अरेपसम्। नासत्या। आस्ना। भुरण्यति ॥६॥

हेनरा नेतारावश्विनौ युवोर्युवयोःयुवामित्यर्थः अत्रिरस्मत्पिताऋषिः सुम्नेन सुखेन अग्निदाहोपशमरूपेणहेतुना चेतसा आदरयुक्तेनमनसा चिकेतति जानाति स्तुतवानित्यर्थः सतिदुःखे सुखमुक्ष्यते दुःखस्यकःप्रसंगइत्यतआह यद्यस्मात् हेनासत्यौ वांयुवयोरास्ना आस्येन तन्निष्पन्नेनस्तोत्रेण घर्मं दीप्तं दहन्तमग्निं असुरैः स्वदाहायमक्षिप्तं अरेपसं अपापं सुखकरं भुरण्यति प्राप्तवान् भुरण्यतिर्गतिकर्मा अत्रेरग्नेःसकाशात् रक्षणं हिमेनाग्निंघ्रंसं युवमश्वीसमुतत्तप्तमत्रयेइत्यादिभिःस्पष्टंमदर्शितम् ॥ ६ ॥

६. हे नेता अश्विद्वय, हम लोगों के पिता अत्रि ने तुम दोनों का स्तवन करके जब अग्नि के उत्ताप को सुखसेव्य समझा था, तब उन्होंने अग्नि-दाहोपशम रूप सुखहेतु कृतज्ञ चित्त से तुम दोनों के उपकार को स्मरण किया था।

अथसप्तमी—

उग्रोवांककुहोययिःशृण्वेयामेषुसंतनिः।
यद्वांदंसोभिरश्विनात्रिर्नरावववर्तति ॥ ७ ॥

उग्रः। वाम्। ककुहः। ययिः। शृण्वे। यामेषु। सम्ऽतनिः।
यत्। वाम्। दंसःऽभिः। अश्विना। अत्रिः। नरा। आऽववर्तति॥७॥

१ ऋ०सं० १, ८, ९.। २ ऋ० सं० ७, ८, १६.।

उग्रउद्गूर्णबलोवांयुवयोः ककुहः उच्छ्रितोमहान् ययिर्गन्ता सन्तनिः सततंगच्छन् रथः यामेषु गमनेषु यज्ञेषुवा शृण्वे श्रूयते हेअश्विना हेनरा यद्यस्माद् वांयुवां दंसोभिः कर्मभिः अत्रिरस्मत्पिता आववर्तति आवर्तयति ॥ ७ ॥

७. तुम दोनों का दृढ़, उन्नत, गमनशील, सतत विघूर्णित रथ यज्ञ में प्रसिद्ध है। हे नेता अश्विद्वय, तुम दोनों के ही कार्य-द्वारा हमारे पिता अत्रि आवर्तमान होते हैं अर्थात् तुम दोनों के कार्य-द्वारा उन्होंने परित्राण पाया था।

मध्वंऊषुमंधूयुवारुद्रासिषक्तिपिप्युषी।
यत्संमुद्रातिपर्षथःपक्काःपृक्षोभरन्तवाम् ॥ ८ ॥

मध्वः। ऊँ इति। सु। मधुऽयुवा। रुद्रा। सिसक्ति।
पिप्युषी। यत्। समुद्रा। अति। पर्षथः। पक्काः। पृक्षः।
भरन्त। वाम् ॥ ८ ॥

हेमधूयुवा मधुरस्यसोमादेर्मिश्रयितारौ हेरुद्रा रुव् स्तुतिः तयाद्रवणीयौ रुद्रपुत्रौ वांयुवांमध्वोमधुररसेन सुपिप्युषी सुष्ठुप्यायन्ती स्तुतिरस्मत्कृता सिषक्ति सेवते यद्यदा समुद्रा समुद्रवणसाधनान्यन्तरिक्षाणि अतिपर्षथः अतिपारयथः यज्ञंप्राप्नुथइत्यर्थः तदापक्काः पृक्षोन्नादीनिहविर्लक्षणानि वां भरन्त भ्रियन्तेयजमानैः ॥ ८ ॥

८. हे मधुर सोमरस के मिश्रयिता देवो, हम लोगों की पुष्टिकर स्तुति तुम लोगों के ऊपर मधुर रस सिंचन करती है। तुम लोग अन्तरिक्ष की सीमा का अतिक्रमण करते हो। सुपक्व हव्य तुम दोनों का पोषण करता है

सुत्यमिद्वाउअश्विनायुवामाहुर्मयोभुवा।
तायामन्यामहूतमायामन्नामृळयत्तमा ॥ ९ ॥

सुत्यम्। इत्। वै। ऊँइति। अश्विना। युवाम्। आहुः।
मयःऽभुवा। ता। यामन्। यामऽहूतमा। यामन्। आ।
मृळयत्ऽतमा ॥ ९ ॥

हेअश्विना युवांसत्यमिव सत्यमेव वाइतिपादपूरणः मयोभुवा सुखस्यभावयितारा-वाहुःपुराविदः ता तौ सुखकरत्वेनप्रसिद्धौ युवां यामन् यज्ञे यामहूतमागमनार्थं भृशमा-ह्वातव्यौभवतमितिशेषः यामन्नस्मद्यज्ञे अस्मदर्थागमनेवा मृळयत्तमाच अतिशयेनसुखयि-तारौभवतम् ॥ ९ ॥

९. हे अश्विनीकुमारो, पुराविद्गण (पण्डित लोग) तुम दोनों को जो सुखदाता कहते हैं, वह निश्चय ही सत्य है। हमारे यज्ञ में सुखदानार्थ आहूत होने पर दोनों अतिशय सुखदाता होओ।

अथदशमी—

इमाब्रह्माणिवर्धनाश्विभ्यांसन्तुशन्तमा ।
यातक्षामरथाँइवावोचामबृहन्नमः ॥ १० ॥ १२ ॥

इमा । ब्रह्माणि । वर्धना । अश्विऽभ्याम् । सन्तु । शम्ऽतमा ।
या । तक्षाम । रथान्ऽइव । अवोचाम । बृहत् । नमः ॥१०॥१२॥

अथस्तुतिंनिगमयति इमा इमानीदानींकृतानि ब्रह्माणि परिवृढानि स्तोत्राणि अश्विभ्यां वर्धना वर्धनानि समर्धकानि शंतमा सुखतमानिसन्तु या यानि तक्षाम संपादयाम रथानिवशिल्पी तद्वत्तक्षाम तानिसुखतमानिसन्तु वयं बृहत्प्रभूतं प्रभूतफलप्रदं नमोनमस्कारोक्तिमवोचाम ॥ १० ॥

१०. शिल्पी जिस प्रकार रथों को प्रस्तुत करता है, उसी प्रकार हम लोग अश्विद्वय को संवर्द्धित करने के लिए स्तुति प्रस्तुत करते हैं। वे स्तुतियाँ उन्हें प्रीतिकर हों।

कूष्ठइतिदशर्चंद्वितीयंसूक्तं पौरस्यार्षं कूष्ठइत्यनुक्रमणिका पूर्वत्रतुशब्दादिदमप्यानुष्टुभं आश्विनं तदितिपूर्वोक्तत्वात् प्रातरनुवाकाश्विनशस्त्रयोःपूर्वसूक्तेनसहोक्तोविनियोगः ।

तत्रप्रथमा—

कूष्ठोदेवावश्विनाद्यादिवोमनावसू ।
तच्छ्रवथोवृषण्वसूअत्रिर्वामाविवासति ॥ १ ॥

कूऽस्थः । देवौ । अश्विना । अद्य । दिवः । मनावसू इति ।
तत् । श्रवथः । वृषण्वसूइतिवृषण्ऽवसू । अत्रिः । वाम् । आ ।
विवासति ॥ १ ॥

हेदेवौ हेमनावसू स्तुतिधनौ श्रृणुथःअश्विनाद्यास्मिन्यागदिनेदिवोद्युलोकादागत्य कूष्ठः व्यत्ययेनैकवचनं कौ भूमौ तिष्ठन्तौ सन्तौ तत्स्तोत्रं श्रवथः हेवृषण्वसू वर्षकधनौवां अत्रिरत्नेःपुत्रः आविवासति सर्वतःपरिचरति अथवा कुंइत्यस्यनिपातस्यस्थइत्याख्यातेन सहेतियोगविभागात्समासः ऐकस्वर्यंचाध्येतृसमयप्राप्तं अराइवेत्यत्र यथाइवशब्दःकूचिज्ञायते कूचित्सन्तमित्यादिवदत्रापिद्रष्टव्यं क्वस्थितौभवथः अत्रिर्युवांस्तौति तंश्रृणुथेत्यर्थः ॥१॥

१. हे स्तुतिधन, धनवर्षणकारी देवद्वय, आज इस यज्ञदिन में तुम दोनों द्युलोक से आगमन करके भूमि पर ठहरो और उस स्तोत्र को श्रवण करो, जिसे तुम्हारे उद्देश से अत्रि सर्वदा पाठ करते हैं।

कुहत्याकुहनुश्रुतादिविदेवानासत्या ।
कस्मिन्नायतथोजनेकोवांनदीनांसचा ॥ २ ॥

कुह । त्या । कुह । नु । श्रुता । दिवि । देवा । नासत्या । कस्मिन् ।
आ । यतथः । जने । कः । वाम् । नदीनाम् । सचा ॥ २ ॥

त्या तौ देवा देवौ नासत्या अश्विनौ कुह कुत्रतिष्ठथः नु अद्य कुहश्रुता कुत्रश्रुतौ दिवि द्युलोकेनिवसतइतिशेषः अथप्रत्यक्षकृतः हेदेवौ युवां कस्मिन् जने यजमाने आयतथः आगच्छथः कःस्तोता वांयुवयोर्नदीनांस्तुतीनां सचा सहायः स्यात् ॥ २ ॥

२. वे दीप्तिमान् नासत्यद्वय कहाँ हैं? आज इस यज्ञदिन में वे द्युलोक के किस स्थान में श्रुत हो रहे हैं? हे देवद्वय, तुम दोनों किस यजमान के निकट आगमन करते हो? कौन स्तोता तुम दोनों की स्तुतियों का सहायक है?

कंयाथःकंहगच्छथःकमच्छायुञ्जाथेरथम् ।
कस्यब्रह्माणिरण्यथोवयंवामुश्मसीष्टये ॥ ३ ॥

कम् । याथः । कम् । ह । जग्मथः । कम् । अच्छ । युञ्जाथे इति ।
रथम् । कस्य । ब्रह्माणि । रण्यथः । वयम् । वाम् । उश्मसि । इष्टये ॥ ३ ॥

हेअश्विनौ युवां कं यजमानं यज्ञंवा प्रतियाथः अध्वानमुल्लंघ्ययाथः कंहकंच प्रतिगच्छथः गत्वाच केनसह संगतौभवथः कंचाच्छाभिप्राप्तुंयुंजाथे योजयथोरथमश्वैः कस्यब्रह्माणि परिवृढानि स्तोत्राणि रण्यथः रमेथे वयंच वांयुवां इष्टये गमनायएषणायवा उश्मसि कामयामहे तस्मात्कस्यचयागंप्रतिनगन्तव्यमित्यर्थः ॥ ३ ॥

३. हे अश्विनीकुमारो, तुम दोनों किस यजमान या यज्ञ के प्रति गमन करते हो? जाकर किसके साथ मिलित होते हो? किसके अभिमुखवर्ती होने के लिए रथ में अश्वयोजना करते हो? किसके स्तोत्र तुम दोनों को प्रीत करते हैं? हम लोग तुम दोनों को पाने की कामना करते हैं।

पौरंचिद्ध्युदप्रुतंपौरपौरायजिन्वथः ।
यदींगृभीततातयेसिंहमिवद्रुहस्पदे ॥ ४ ॥

पौरम् । चित् । हि । उदऽप्रुतम् । पौर । पौराय । जिन्वथः ।
४ यत् । ईम् । गृभीतऽतातये । सिंहम्ऽइव । द्रुहः । पदे ॥ ४ ॥

हेपौर इदमश्विनोःसंबोधनं पौरेणस्तुत्यत्वेनसंबन्धादश्विनावपिपौरौ उभयोश्छान्दसमेकवचनं हेपौरसंवन्धिनावश्विनौ युवांपौरं चिदितिपूरणः पौरेणवृष्ट्यर्थंप्रार्थ्यमानत्वेनसंबन्धान्मेघोपिपौरः तं उदप्रुतं उदकप्लावकंमेघं पौरायऋषयेमह्यं जिन्वथः प्रेरयथः यद्यौयुवां ईमितिपूरणः गृभीततातये गृहीतयज्ञसन्तानाय पौराय ईमेनंमेघं प्रतिगच्छथः द्रुहः द्रोहस्य पदे स्थाने अरण्यदेशे सिंहमिवगर्जन्तं प्रबलंसिंहंयथाबलाद्व्यावयन्तिशूराःतद्वज्जिन्वथइति ॥ ४ ॥

४. हे पौर-सम्बन्धी अश्विनीकुमारो, तुम दोनों पौर के निकट पौर को अर्थात् वारिवाहक मेघ को प्रेरित करो। जङ्गल में व्याधगण जैसे सिंह को ताड़ित करते हैं, वैसे ही यज्ञकर्म में व्याप्त पौर के निकट तुम दोनों इसे ताड़ित करो।

प्रच्यवानाज्जुजुरुषोवव्रिमत्कंनमुञ्चथः ।
युवायदीकृथःपुनराकाममृण्वेवध्वः ॥ ५ ॥ १३॥

प्र । च्यवानात् । जुजुरुषः । वव्रिम् । अत्कम् । न । मुञ्चथः । युवा । यदि । कृथः । पुनः । आ । कामम् । ऋण्वे । वध्वः ॥ ५ ॥ १३ ॥

च्यवानादृषेः जुजुरुषोजरसाजीर्णात्सकाशाद्वव्रिं हेयं पुराणं रूपं अत्कंन कवचमिव प्रमुंचथः प्रमुंचतं प्रामुंचतं द्रापिमिवच्यवानादित्यादिमंत्रांन्तरं। यदि यदा पुनःयुवाकृथः युवानं कुरुथइत्यर्थः तदावध्वः सुरूपायाःस्त्रियः कामं कमनीयंरूपमाऋण्वे प्राप्तवान् ॥ ५ ॥

५. तुम दोनों ने जराजीर्ण च्यवन के हेय, पुरातन, कुरूप को, कवच की तरह विमोचित किया था। जब तुम दोनों ने उन्हें पुनर्बार युवा किया था, तब उन्होंने सरूपा कामिनी के द्वारा वाञ्छित मूर्त्ति को पाया था।

अस्तिहिवामिहस्तोतास्मसिवांसंदृशिश्रिये ।
नूश्रुतंमआगतमवोभिर्वाजिनीवसू ॥ ६ ॥

अस्ति । हि । वाम् । इह । स्तोता । स्मसि । वाम् । सम्ऽदृशि । श्रिये । नु । श्रुतम् । मे । आ । गतम् । अवःऽभिः । वाजिनीवसूइतिवाजिनीऽवसू ॥६॥

हेअश्विनौ वांस्तोता पौरोस्तिहि वर्ततेखलु हेदेवौ वांसंदृशि संदर्शने संनिधाने स्मसि स्मः भवेम किमर्थं श्रिये नु अद्य मदीयमाह्वानं श्रुतं शृणुतं श्रुत्वा आगतं आगच्छतं किंतूर्ष्णीं नेत्याह अवोभीरक्षणैःसह वाजिनीवसू अन्नवसू ॥ ६ ॥

६. हे अश्विद्वय, इस यज्ञस्थल में तुम दोनों के स्तोता विद्यमान हैं। हम लोग समृद्धि के लिए तुम दोनों के दृष्टिपथ में अवस्थान करें। आज तुम लोग हमारा आह्वान श्रवण करो। तुम लोग अन्नरूप धन से धनवान् हो। तुम लोग रक्षा के साथ यहाँ आगमन करो।

कोवांमद्यपुरूणामावव्नेमर्त्यांनाम् ।
कोविप्रोंविप्रवाहसाकोयज्ञैर्वाजिनीवसू ॥ ७॥

कः । वाम् । अद्य । पुरूणाम् । आ । वव्ने । मर्त्यांनाम् । कः । विप्रः ।
विप्रऽवाहसा । कः । यज्ञैः । वाजिनीवसूइतिवाजिनीऽवसू ॥ ७॥

हेवाजिनीवसू अन्नवसू वांयुवां अद्यास्मिन्दिने पुरूणां मर्त्यानांमध्ये कआवव्ने सर्वतो भजति हेविप्रवाहसा विप्रैर्मेधाविभिर्वहनीयौ कोविप्रोमेधावीवव्ने कोयजमानोयज्ञैर्वव्ने अत्यन्त-विलंवमसहमानःसन् पुनःपुनर्ब्रूते ॥ ७ ॥

७. हे अन्नरूप धनवान् अश्विद्वय, असंख्य मर्त्यों के मध्य में कौन व्यक्ति आज सर्वापेक्षा तुम दोनों को अधिक प्रसन्न करता है! हे ज्ञानियों द्वारा वन्दित अश्विद्वय, कौन ज्ञानी व्यक्ति तुम दोनों को सर्वापेक्षा अधिक प्रसन्न करता है अथवा कौन यजमान ही यज्ञ द्वारा तुम दोनों को अधिक तृप्त करता है।

आवांरथोरथानांयेष्ठोयात्वश्विना ।
पुरूचिदस्मयुस्तिरआंगूषोमर्त्येष्वा ॥ ८ ॥

आ । वाम् । रथः । रथानाम् । येष्ठः । यातु । अश्विना ।
पुरु । चित् । अस्मऽयुः । तिरः । आङ्गूषः । मर्त्येषु । आ ॥ ८ ॥

हेअश्विना अश्विनौ वांयुवयोरथःएकोरथः रथानांयेष्ठः इतरदेवरथानांमध्येतिश-येनगन्तासन् आयातु कीदृशःसन् पुरूचिद्बहून्यपि अस्मद्विरोधिनस्तिरोहिंसकस्तिरस्क-र्तावा अस्मयुः अस्मान्कामयमानः मर्त्येषु सर्वेषुयजमानेषु मध्येआंगूषः स्तुत्यः आका-रःपूरणः अथवा आंगूषःस्तोमःस्तवः अस्मयुः अस्मान् बलैर्योक्तुंकामयमानः मर्त्येषुम-र्त्यैरस्मदीयैर्ऋत्विग्भिःप्रेरितःसन् उक्तलक्षणाश्विनोरथस्यवास्तुतिरासर्वतः पुरूचित् पुरू-ण्यपिशत्रुबलानितिरस्तिरस्करोति ॥ ८ ॥

८. हे अश्विद्वय अन्य देवताओं के रथों के मध्य में सर्वापेक्षा वेगगामी और असंख्य शत्रु-संहारी एवं सम्पूर्ण मनुष्य यजमानों द्वारा स्तुत तुम दोनों का रथ हम लोगों की हित-कामना करके इस स्थान में आगमन करे।

शमूषुवांमधूयुवास्माकमस्तुचर्कृतिः ।
अर्वाचीनाविचेतसाविभिःश्येनेवदीयतम् ॥ ९ ॥

शम् । ऊँ इति । सु । वाम् । मधुऽयुवा । अस्माकम् । अस्तु । चर्कृतिः ।
अर्वाचीना । विऽचेतसा । विऽभिः । श्येनाऽइव । दीयतम् ॥ ९ ॥

हेमधूयुवा मधुमन्तौ वांयुवाभ्यां चर्कृतिः पुनःपुनःकरणं युवाभ्यां अर्थाय पुनः पुनः क्रियमाणंस्तोत्रं युवयोरागमनस्याभ्यासोवा अस्माकं सु सुष्ठु शमु सुखकरमेव अस्तु भवतु हेअर्वाचीना अर्वागस्मदभिमुखांचनौ हेविचेतसा विशिष्टप्रज्ञौ श्येनेव श्येनाविव विभिर्गन्तृभिरभीशुभिर्दीयतं गच्छतं ॥ ९ ॥

९. हे मधुमान् अश्विद्वय, तुम दोनों के लिए पुनः पुनः सम्पादित स्तोत्र हम लोगों के लिए सुखोत्पादक हो। हे विशिष्ट ज्ञानसम्पन्न अश्विद्वय, तुम दोनों श्येन पक्षी की तरह सर्वत्र गमनशील अश्व पर आरूढ़ होकर हम लोगों के अभिमुख आगमन करो।

अश्विनायद्धकर्हिचिच्छुश्रूयातमिमंहवम्।
वस्वीरूषुवांभुजःपृञ्चन्तिसुवांपृचः ॥ १० ॥ १४ ॥

अश्विना। यत्। ह। कर्हि। चित्। शुश्रुयातम्। इमम्। हवम्। वस्वीः। ऊँ इति। सु। वाम्। भुजः। पृञ्चन्ति। सु। वाम्। पृचः ॥१०॥ १४॥

हेअश्विना युवां यद्ध यत्र कर्हिचिदवस्थितवन्तौभवथः तत्र मे हवं आह्वानं शुश्रुयातं शृणुतं श्रुत्वागच्छतमित्यर्थः किमर्थमिति उच्यते वस्वीः प्रशस्याः भुजोधनानि हविर्लक्षणानि सु सुष्ठु वांयुवांपृंचन्ति मिश्रयन्तिप्राप्नुवन्ति उइतिपूरणः कीदृश्योभुजः वां युवां सु सुष्ठु पृचः संपर्चनाः युवांप्राप्तुं कामयमानाइत्यर्थः अथवा सुपृचः सुसंपर्चनाः स्तोतारोवस्वीर्भुजोवां सुष्ठुपृंचन्ति संपर्चयन्ति ॥ १० ॥

१०. हे अश्विनीकुमारो, तुम दोनों जिस किसी स्थान में अवस्थान करो; किन्तु हमारा यह आह्वान श्रवण करो। तुम दोनों के निकट गमन करने की कामनावाला यह उत्कृष्ट हव्य तुम दोनों के निकट उपस्थित हो।

प्रतिप्रियतममितिनवर्चंतृतीयंसूक्तं अवस्युर्नामात्रेयऋषिः पंक्तिश्छन्दः अश्विनौदेवता अनुक्रान्तंच—प्रतिनवावस्युःपांक्तमिति । प्रातरनुवाकेआश्विनेक्रतौपांक्तेछन्दसि आश्विनशस्त्रेचेदंसूक्तं प्रतिप्रियतममितिपांक्तमितिहिसूत्रितम् ।

प्रतिप्रियतमंरथंवृषणंवसुवाहनम्।
स्तोतावामश्विनावृषिःस्तोमेनप्रतिभूषतिमाध्वीममश्रुतंहवम् ॥ १ ॥

प्रति। प्रियऽतमम्। रथम्। वृषणम्। वसुऽवाहनम्। स्तोता। वाम्। अश्विनौ। ऋषिः। स्तोमेन। प्रति। भूषति। माध्वी इति। मम। श्रुतम्। हवम् ॥ १ ॥

हेअश्विनौ एकःप्रतिशब्दोनुवादः वां युवयोः प्रियतमंरथं स्तोताऋषिरवस्युः स्तोमेनप्रतिभूषति अलंकरोति कीदृशंरथं वृषणं वर्षितारंफलानां वसुवाहनं धनानांवाहकं ईदृशंरथं आगमनायस्तौतीत्यर्थः तस्मात् हेमाध्वी मधुविद्यावेदितारौ मम हवमाह्वानं श्रुतं शृणुतं ॥ १ ॥

१. हे अश्विनीकुमारो, तुम दोनों के स्तुतिकारी अवस्यु ऋषि तुम दोनों के फलवर्षणकारी और धनपूर्ण रथ को अलंकृत करते हैं। हे मधुविद्या को जाननेवालो, तुम दोनों हमारा आह्वान श्रवण करो।

अत्यायातमश्विनातिरोविश्वाअहंसना।
दस्राहिरण्यवर्तनीसुषुम्णासिन्धुवाहसामाध्वीममश्रुतंहवम् ॥२॥

अतिऽआयातम्। अश्विना। तिरः। विश्वाः। अहम्। सना।
दस्रा। हिरण्यवर्तनीइति हिरण्यऽवर्तनी। सुऽसुम्ना। सिन्धुऽवाहसा।
माध्वीइति। मम। श्रुतम्। हवम् ॥ २ ॥

हेअश्विना अत्यायातं सर्वान्यजमानानतिक्रम्यागच्छतं यथाअहमृषिर्विश्वाः सर्वाः अस्मद्विरोधिप्रजाः सना सदातिरस्करोमि अथवा अहं तिरः तिरःसतइतिप्राप्तस्येतिनिरुक्तं। माप्ताःसर्वाःविश्वाःक्रियाःयुष्मदीयाअनुतिष्ठेयमित्यर्थः सना सनातनौ दस्रा शत्रूणामुपक्षपयितारौ हिरण्यवर्तनी हिरण्मयरथौ सुषुम्ना सुधनौ सिन्धुवाहसा नदीनांप्रवाहयितारौ वृष्टिप्रेरणेन तादृशौयुवां अत्यायातं ॥ २ ॥

२. हे अश्विद्वय, तुम दोनों सब यजमानों को अतिक्रमण करके इस स्थान में आगमन करो, जिससे हम समस्त विरोधियों को पराभूत करें। हे शत्रुसंहारक, सुवर्णमय-रथारूढ़, प्रशस्त-धनसम्पन्न, नदियों को वेग-प्रवाहित करनेवालो एवम् मधुविद्या-विशारद अश्विद्वय, तुम दोनों हमारा आह्वान श्रवण करो।

आनोरत्नानिबिभ्रंतावश्विनागच्छंतंयुवम्।
रुद्राहिरण्यवर्तनीजुषाणावाजिनीवसूमाध्वीममश्रुतंहवम् ॥३॥

आ। नः। रत्नानि। बिभ्रतौ। अश्विना। गच्छतम्। युवम्।
रुद्रा। हिरण्यवर्तनीइतिहिरण्यऽवर्तनी। जुषाणा। वाजिनीवसूइति-
वाजिनीऽवसू। माध्वी इति। मम। श्रुतम्। हवम् ॥ ३ ॥

हेअश्विना नोस्मभ्यं रत्नानि रमणीयानिधनानि बिभ्रतौ धारयन्तौ युवं युवां नोस्मान् वा आगच्छतं हेरुद्रा रुद्रपुत्रौ स्तुत्यौवा हेवाजिनीवसू वाजिनधनौ युवां हिरण्यवर्तनी हिरण्यरथौ जुषाणा यज्ञंसेवमानौसन्तावागच्छतमिति माध्वीत्यादिगतं ॥ ३ ॥

---

१ नि० ३. २०.।

३. हे अश्विद्वय, तुम दोनों हमारे लिए रत्न लेकर आगमन करो। हे हिरण्य-रथाधिरूढ़, स्तुतियोग्य, अन्न-रूप धनवालो, यज्ञ में अधिष्ठान करनेवालो एवम् मधुविद्या-विशारद अश्विद्वय, तुम दोनों हमारा आह्वान श्रवण करो।

सुष्टुभोवांवृषण्वसूरथेवाणीच्याहिता।
उतवांककुहोमृगःपृक्षःकृणोतिवापुषोमाध्वीममश्रुतंहवम् ॥ ४ ॥

सुऽस्तुभः। वाम्। वृषण्वसू इति वृषणुऽवसू। रथे। वाणीची। आऽहिता। उत। वाम्। ककुहः। मृगः। पृक्षः। कृणोति। वापुषः। माध्वी इति। मम। श्रुतम्। हवम् ॥ ४ ॥

हेवृषण्वसू वर्षधनौ वर्षितारौवा वसूनां हेअश्विनौ सुष्टुभः सुस्तोतुर्मम वाणीची वाग्रूपास्तुतिः वांयुवयोः रथेआहिता स्थापिता अस्माभिःकृतेत्यर्थः उतापिच वांयुवाभ्यां ककुहोमहान् मृगः मृगयितः वापुषोवपुष्मान् यजमानः पृक्षोन्नंहविः कृणोति करोति तस्मान्ममहवं श्रुतमिति ॥ ४ ॥

४. हे धनवर्षणकारी अश्विद्वय, तुम दोनों के स्तोता का (मेरा) स्तोत्र तुम दोनों के उद्देश से उच्चारित होता है। तुम दोनों का प्रसिद्ध, मूर्त्तिमान् यजमान एकाग्रचित्त होकर तुम दोनों को हव्य प्रदान करता है। हे मधुविद्या-विशारद, तुम दोनों हमारा आह्वान श्रवण करो।

बोधिन्मनसारथ्येषिराहवनश्रुता।
विभिश्च्यवानमश्विनानियाथोअद्वयाविनंमाध्वीममश्रुतंहवम्॥५॥१५॥

बोधित्ऽमनसा। रथ्या। इषिरा। हवनऽश्रुता। विऽभिः। च्यवानम्। अश्विना। नि। याथः। अद्वयाविनम्। माध्वी इति। मम। श्रुतम्। हवम् ॥ ५ ॥१५॥

हेअश्विना बोधिन्मनसा बुध्यमानमनस्कौ रथ्या रथस्वामिनौ इषिरा शीघ्रगन्तारौ सर्वैर्गन्तव्यौवा हवनश्रुता हवनस्यस्तुतेः श्रोतारौयुवां विभिरश्वैः च्यवानमृषिं अद्वयाविनं मायारहितं नियाथः यथातमृषिंप्राप्तवन्तौ तद्वन्मांप्रति पथिनियाथः नितरामागच्छतं प्रच्यवानाज्जुजुरुषोवव्रिमितिर्हुक्तम् ॥ ५ ॥

५. हे अश्विद्वय, तुम दोनों विज्ञ मनवाले, रथाधिरूढ़, द्रुतगामी एवम् स्तोत्र-श्रवणकर्ता हो। तुम दोनों शीघ्र ही अश्व पर आरोहण करके कपटताविहीन च्यवन के निकट उपस्थित हुए थे। हे मधुविद्या-विशारद, तुम दोनों हमारा आह्वान श्रवण करो।

अथषष्ठी—

आवांनरामनोयुजोश्वांसःप्रुषितप्संवः ।
वयोवहन्तुपीतयेसहसुम्नेभिरश्विनामाध्वीममंश्रुतंहवंम् ॥ ६ ॥

आ । वाम् । नरा । मनःऽयुजंः । अश्वांसः । प्रुषितऽप्संवः । वयंः । वहन्तु । पीतयें । सह । सुम्नेभिंः । अश्विना । माध्वी इतिं । ममं । श्रुतम् । हवंम् ॥ ६ ॥

हेनरा कर्मणांनेतारौ हेअश्विना अश्विनौ वां युवां मनोयुजोमनोमात्रेणयुज्यमानाः सुशिक्षिताइत्यर्थः प्रुषितप्सवः विचित्ररूपाः वयः शीघ्रगन्तारः अश्वासोश्वाः आवहन्तु पीतये सोमपानाय सुम्नेभिःसह अस्मभ्यंदेयैः सुखैस्तत्साधनैर्धनादिभिर्वासह वहन्तु ॥ ६ ॥

६. हे नेता अश्विद्वय, तुम दोनों के सुशिक्षित, द्रुतगामी और विचित्र-मूर्त्ति अश्व सोमपान के लिए ऐश्वर्य के साथ इस स्थान में तुम दोनों का आनयन करें। हे मधुविद्या-विशारद, तुम दोनों हमारा आह्वान श्रवण करो।

अश्विनावेहगंच्छतंनासंत्यामाविवेनतम् ।
तिरश्चिदर्ययापरिवर्तिर्यातमदाभ्यामाध्वीममंश्रुतंहवंम् ॥ ७ ॥

अश्विनौ । आ । इह । गच्छतम् । नासंत्या । मा । वि । वेनतम् । तिरः । चित् । अर्यऽया । परि । वर्तिः । यातम् । अदाभ्या । माध्वीइति । ममं । श्रुतम् । हवंम् ॥ ७ ॥

हेअश्विना अश्विनौ इहास्मिन्यज्ञे आगच्छतं हेनासत्या माविवेनतं विगतकामौमाभवतं वेनतिःकान्तिकर्मा हेअदाभ्या अहिंस्यौपूज्यौ अर्यया अर्यौस्वामिनौयुवां सुपांसुलुगित्याश्विना सुपोयाजादेशः तिरश्चित् अन्तर्हितादूरदेशादपि युवांवर्तिरस्मद्यज्ञगृहं परियातं आगच्छतं ॥ ७ ॥

७. हे अश्विद्वय, तुम दोनों इस स्थान में आगमन करो। हे नासत्यद्वय, तुम दोनों प्रतिकूल नहीं होना। हे अजेय प्रभु, तुम दोनों प्रच्छन्न प्रदेश से हमा यज्ञगृह में आगमन करो। हे मधुविद्या-विशारद, तुम दोनों हमारा आह्वान श्रवण करो।

अस्मिन्यज्ञेअंदाभ्याजरितारंशुभस्पती ।
अवस्युमश्विनायुवंगृणन्तमुपंभूषथोमाध्वीममंश्रुतंहवंम् ॥ ८ ॥

अस्मिन् । यज्ञे । अदाभ्या । जरितारंम् । शुभः । पती इति । अवस्युम् । अश्विना । युवम् । गृणन्तंम् । उपं । भूषथः । माध्वी इति । ममं । श्रुतम् । हवंम् ॥ ८ ॥

हेअदाभ्या अहिंस्यौ हेशुभस्पती उदकस्यस्वामिनौ अश्विना युवं युवां अस्मिन्यज्ञे जरितारं स्तोतारं अवस्युं गृणन्तंस्तुवन्तंमां उपभूषथः उपप्राप्नुतम् ॥ ८ ॥

८. हे जल के अधिपति अजेय अश्विद्वय, इस यज्ञ में तुम दोनों स्तवकारी अवस्यु के लिए अनुग्रह प्रदर्शन करो। हे मधुविद्या-विशारद, तुम दोनों हमारा आह्वान श्रवण करो।

अभूदुषारुशत्पशुराग्निरधाय्यृत्वियः ।

अयोजिवांवृषणवसूरथोदस्रावमर्त्योमाध्वीममश्रुतंहवम् ॥९॥१६॥

अभूत् । उषाः । रुशत्ऽपशुः । आ । अग्निः । अधायि ।

ऋत्वियः । अयोजि । वाम् । वृषण्वसू इति वृषण्ऽवसू । रथः ।

दस्रौ । अमर्त्यः । माध्वी इति । मम । श्रुतम् । हवम् ॥ ९ ॥ १६ ॥

उषाः व्युष्टिरभूत् अग्निश्च रुशत्पशुः दीप्तपशुमान् प्रकाशितहविरित्यर्थः अथवा पशवः किरणाः रुशद्रश्मिःसन् अधायि वेद्यामधीयत हेवृषण्वसू प्रदत्तधनौ हेदस्रौ वांयुवयोः अमर्त्यःअमरणधर्मा ध्रुवोरथोयोजि अश्वैर्युक्तोभवत्वित्यर्थः छन्दसिलुङ्लङ्लिटइतिअनेकेष्वर्थेषुलुङ्भवति इहप्रार्थनायां माध्वीत्यादिगतं ॥ ९ ॥

९. उषा विकसित हुई है। समुज्ज्वल किरण-सम्पन्न अग्नि वेदी के ऊपर संस्थापित हुए हैं। हे धनवर्षणकारी, शत्रुसंहारक अश्विद्वय, तुम दोनों के अक्षय्य रथ में अश्व युक्त हों। हे मधुविद्या-विशारद, तुम दोनों हमारा आह्वान श्रवण करो।

आभात्यग्निरितिपंचर्चंचतुर्थंसूक्तं भौमस्यात्रेरार्षं त्रैष्टुभमाश्विनं अत्रानुक्रमणिका—आभातिपंचात्रिरिति ।प्रवर्ग्येअभिष्टवार्थमिदंसूक्तं सूत्रितंच—आभात्यग्निर्ग्रावाणेवेति ।प्रातरनुवाके आश्विनेक्रतौ त्रैष्टुभेछन्दसि आश्विनशस्त्रेच इदमादिकेद्वेसूक्ते सूत्र्यतेहि—आभात्यग्निरितिसूक्तेइति । अप्तोर्यामेहोतुरतिरिक्तोक्थ्येइदंसूक्तं सूत्रितंच—आभात्यग्निःक्षेत्रस्यपतिनावयमितिपरिधानीयेति ।

तत्रप्रथमा—

आभात्यग्निरुषसामनीकमुद्विप्राणांदेवयावाचोअस्थुः ।

अर्वाञ्चानूनंरथ्येहयातंपीपिवांसमश्विनाघर्ममच्छ ॥ १ ॥

आ । भाति । अग्निः । उषसाम् । अनीकम् । उत् । विप्राणाम् ।

देवऽयाः । वाचः । अस्थुः । अर्वाञ्चा । नूनम् । रथ्या । इह ।

यातम् । पीपिऽवांसम् । अश्विना । घर्मम् । अच्छ ॥ १ ॥

उषसामनीकं अनीकभूतः अनीकं सुखं उषसिप्रबुध्यमानइत्यर्थः तादृशोग्निराभातिदीप्यते यद्वा उषसांमुखमाभातिदीपयति उषःकालेह्यग्नयःप्रतिबोध्यन्ते किंच विप्राणां मेधाविनां स्तोतॄणां देवयाः देवकामाः वाचः स्तोत्राणि उदस्थुः उत्तिष्ठन्ति यस्मादेवंतस्माद् हेरथ्या रथस्वामिनौ अश्विना अश्विनौ अर्वांचा अस्मदभिमुखांचनौ नूनं अद्यास्मिन्यागदिने इहायातं कंप्रति पीपिवांसं स्वांगैःपरिवृद्धं घर्मं मदीययज्ञं यद्वा पीपिवांसं आप्यायितं वसतीवरीभिः क्षरद्रूपंसोमरसं अथवा घृतादिनापीपिवांसंघर्मंप्रवर्ग्यं अच्छ अभिलक्ष्य इहयागे आयातं प्रवर्ग्येऽस्यसूक्तस्यविनियोगः ॥ १ ॥

१. उषाकाल में प्रबुध्यमान अग्नि दीप्त होते हैं। मेधावी स्तोताओं के देवाभिलाषी स्तोत्र उद्‌गीत होते हैं। हे रथाधिपति अश्विद्वय, तुम दोनों आज इस यज्ञस्थान में अवतीर्ण होकर इस सोमरसपूर्ण समृद्ध यज्ञ में आगमन करो।

नसंस्कृतंप्रमिमीतोगमिष्ठान्तिनूनमश्विनोपस्तुतेह।
दिवाभिपित्वेवसागमिष्ठाप्रत्यवर्तिंदाशुषेशंभविष्ठा ॥ २ ॥

न । संस्कृतम् । प्र । मिमीतः । गमिष्ठा । अन्ति । नूनम् ।
अश्विना । उपऽस्तुता । इह । दिवा । अभिऽपित्वे । अवसा ।
आऽगमिष्ठा । प्रति । अवर्तिम् । दाशुषे । शम्ऽभविष्ठा ॥ २ ॥

हेअश्विनौ संस्कृतंघर्मं नप्रमिमीतः नहिंस्तां किंतु अन्ति अन्तिके घर्मसमीपे नूनमिदानीं इहयज्ञे गमिष्ठा गन्तृतमौअश्विना अश्विनौ उपस्तुता उपस्तुतौभवतः दिवाभिपित्वे दिवसस्याभिपतनेप्रातःकाले अवसा रक्षणेनसहागमिष्ठा आगन्तृतमौ अवर्तिंप्रतिद्वंद्वभूतौ वर्तिर्जीवनं तदभावोवर्तिः तद्रहितमन्नंयथाभवति तथा आगन्तृतमौ आगत्यच दाशुषे हविर्दत्तवतेयजमानाय शंभविष्ठा सुखस्यभावयितारौभवतं ॥ २ ॥

२. हे अश्विनीकुमारो, तुम दोनों संस्कृत यज्ञ की हिंसा नहीं करो; किन्तु यज्ञ के समीप शीघ्र आगमन करके स्तुति-भाजन होओ। प्रातःकाल में रक्षा के साथ तुम दोनों आगमन करो, जिससे अन्नाभाव नहीं हो। आकर हव्यदाता यजमान को सुखी करो।

उतायातंसङ्गवेप्रातरह्नोमध्यन्दिनउदितासूर्यस्य।
दिवानक्तमवसाशंतमेननेदानींपीतिरश्विनाततान ॥ ३ ॥

उत । आ । यातम् । सम्ऽगवे । प्रातः । अह्नः । मध्यन्दिने ।
उत्ऽइता । सूर्यस्य । दिवा । नक्तम् । अवसा । शम्ऽतमेन ।
न । इदानीम् । पीतिः । अश्विना । आ । ततान ॥ ३ ॥

अह्नोद्वेधा त्रेधा पंचदशधेतिसमानाविभागाःसन्ति इहपंचधाविभागआत्तः एतापिचायात-मागच्छतं कदा संगवे संगवकाले संगच्छते गावोदोहनभूमिंयस्मिन्कालेससंगवःरात्र्यपरकाले-हिगावोवनेहिमतृणानिभक्षयित्वा पुनर्दोहाय संगवे प्रतिनिवर्तन्ते तथा प्रातः प्रातःकालेपि तथामध्यंदिने अह्नोमध्यकाले सूर्यस्यउदिताउदितौ अभ्युदये अत्यन्तमवृद्धसमये अपराह्ण-इत्यर्थः एतत्सायाह्नस्यापिउपलक्षणं नकेवलमुक्तेष्वेवकालेषु किंतर्हि दिवा नक्तं सर्वदा शंतमेनसुखतमेनअवसारक्षणेन हविषावानिमित्तेनायातं किमर्थं आगम्यते पूर्वमेवान्यैर्देवैः स्वीकृतत्वाव् नेत्याह इदानीमपि पीतिरितरदेवानांपानं नाततान नतनोति अश्विना अश्विनौ विहायेतिशेषः ॥ ३ ॥

३. तुम दोनों रात्रि के शेष में, गोदोहन-काल में, प्रातःकाल में, सूर्य जिस समय अत्यन्त प्रवृद्ध होते हैं अर्थात् अपराह्ण काल में; सायाह्न में, रात्रि में अथवा जिस किसी समय में सुखकर रक्षा के साथ आगमन करो। अश्विनीकुमारों को छोड़कर दूसरे देव सोमपान के लिए प्रवृत्त नहीं होते।

इ॒दंहिवां॑प्र॒दिवि॒स्थान॒मोक॑इ॒मेगृ॒हाअ॑श्विने॒दंदु॑रो॒णम् ।
आनो॑दि॒वोबृ॑ह॒तःपर्व॑ता॒दाद्भ्योया॑त॒मिष॒मूर्जं॒वह॑न्ता ॥ ४ ॥

इ॒दम् । हि । वा॒म् । प्र॒ऽदिवि॑ । स्थान॑म् । ओक॑ः । इ॒मे । गृ॒हाः ।
अ॒श्वि॒ना॒ । इ॒दम् । दु॒रो॒णम् । आ । नः॒ । दि॒वः । बृ॒ह॒तः । पर्व॑तात् ।
आ । अ॒त्ऽभ्यः । या॒त॒म् । इष॑म् । ऊर्ज॑म् । वह॑न्ता ॥ ४ ॥

हेअश्विना वांयुवयोः प्रदिविपुराणमिदंस्थोकोनिवासयोग्यंस्थानं उत्तरवेद्याख्यं अथ सौमिकवेद्यभिप्रायेणाह इमेगृहाः प्राचीनवंशादयः इदंदुरोणं देवयजनगृहं नोस्मदर्थं दि-वोद्युलोकाव् बृहतः पर्वताव् पर्ववतोमेघादद्भ्योपांकारणाद् अन्तरिक्षादायातं आगच्छतं किंतूष्णीं न इषमूर्जंच अन्नं बलंच बलसाधनमन्नंसारभूतमित्यर्थः तादृशंवहन्ता वहन्तौ ॥४॥

४. हे अश्विनीकुमारो, यह उत्तर वेदी तुम दोनों का निवासयोग्य प्राचीन स्थान है। ये समस्त गृह और आलय तुम दोनों के ही हैं। तुम दोनों वारिपूर्ण मेघ-द्वारा समाकीर्ण अन्तरिक्ष से अन्न और बल के साथ हम लोगों के निकट आगमन करो।

सम॒श्विनो॒रव॑सा॒नूत॑नेनमयो॒भुवा॑सु॒प्रणी॑तीगमेम ।
आनो॑र॒यिंव॑हत॒मोतवी॒राना॒विश्वा॑न्यमृता॒सौभ॑गानि ॥५॥१७॥

सम् । अ॒श्विनोः॑ । अव॑सा । नूत॑नेन । म॒य॒ःऽभुवा॑ । सु॒ऽप्रनी॑ती ।
ग॒मे॒म॒ । आ । न॒ः । र॒यिम् । व॒ह॒त॒म् । आ । उ॒त । वी॒रान् । आ ।
विश्वा॑नि । अ॒मृ॒ता॒ । सौभ॑गानि ॥ ५ ॥ १७ ॥

वयं संगमेम संगच्छेम अश्विनोर्नूतनेनावसा अनन्यकृतेनरक्षणेन मयोभुवा सुखस्यभावयित्र्या सुप्रणीती सुप्रणीत्या सुष्ठु आगमनेनच अपिवा एते उभेअवसोर्विशेषणे उक्तलक्षणेनं संगमेम नोस्मभ्यं रयिंआवहतं उत वीरान् पुत्रादीनावहतं हेअमृता अमरणधर्माणौ विश्वा विश्वानिसौभगानिसुभगत्वानि आवहतं ॥ ५ ॥

५. हम सब अश्विनीकुमार की श्रेष्ठ रक्षा तथा सुखदायक आगमन के साथ सङ्गत हों। हे अमरणशील देवद्वय, तुम दोनों हमें धन, सन्तति और समस्त कल्याण प्रदान करो।

प्रातर्यावाणेतिपंचर्चंपंचमंसूक्तं आत्रेयं त्रैष्टुभमाश्विनं प्रातर्यावाणेतिह्यनुक्रान्तं प्रातरनुवाकाश्विनशस्त्रयोःपूर्वसूक्तेनसहोक्तोविनियोगः अप्तोर्यामेमैत्रावरुणातिरिक्तोक्थ्येइदमेवशस्यं तथाचसूत्रितं—प्रातर्यावाणाक्षेत्रस्यपतेमधुमन्तमूर्मिमिति ।

तत्रप्रथमा—

प्रातर्यावाणाप्रथमायजध्वंपुरागृध्रादररुषःपिबातः ।
प्रातर्हियज्ञमश्विनादधातेप्रशंसन्तिकवयःपूर्वभाजः ॥ १ ॥

प्रातःऽयावाना । प्रथमा । यजध्वम् । पुरा । गृध्रात् । अररुषः ।
पिबातः । प्रातः । हि । यज्ञम् । अश्विना । दधातेइति । प्र ।
शंसन्ति । कवयः । पूर्वऽभाजः ॥ १ ॥

हेमदीयाऋत्विजः प्रातर्यावाणा प्रातरेवयज्ञगन्तारौ प्रथमा अतएवेतरेभ्योदेवेभ्यःपूर्वभाविनौ प्रकृष्टतमौवा अश्विनौ यजध्वं किमर्थंप्रथमयागनियोगउच्यते गृध्राद् अभिकांक्षतःअररुषःअदातुः रक्षःप्रभृतेः पुरा पूर्वं पिबतः पिबतां अनागतौ कथंयष्टुंशक्यावित्यतआह अश्विना अश्विनौ प्रातर्हि यज्ञं दधाते धारयतः संभजतः पूर्वभाजः पूर्वकालीनाः कवयः अनूचानाऋषयः प्रातरेवैतौ प्रशंसन्ति येवाअनूचानास्तेकवयइतिहिनिगमः ॥१ ॥

१. हे ऋत्विको, अश्विद्वय प्रातःकाल में ही सब देवों से प्रथम ही उपस्थित होते हैं, तुम सब उनका यजन करो। वे अभिकाङ्क्षी और नहीं देनेवाले राक्षस प्रभृति के पूर्व ही हव्य पान करते हैं। अश्विद्वय प्रातःकाल में यज्ञ का संभजन करते हैं। पूर्वकालीन ऋषिगण प्रातःकाल में ही उनकी प्रशंसा करते हैं।

अथद्वितीया—

प्रातर्यजध्वमश्विनाहिनोतनसायमस्तिदेवयाअजुष्टम् ।
उतान्योअस्मद्यजतेविचावःपूर्वःपूर्वोयजमानोवनीयान् ॥ २ ॥

---

१ ऐ० ब्रा० २. २.

प्रातः । यजध्वम् । अश्विना । हिनोत । न । सायम् । अस्ति । देवऽयाः । अजुष्टम् । उत । अन्यः । अस्मत् । यजते । वि । च । आवः । पूर्वःऽपूर्वः । यजमानः । वनीयान् ॥ २ ॥

हेमदीयाःपुरुषाः अश्विना अश्विनौ प्रातः प्रातरेव यजध्वं पूजयध्वं स्तुध्वं हिनोत महिणुत हवींषि सायं सायंकाले हविर्देवयाःदेवगामि नास्ति नविद्यते देवानस्वीकुर्वन्तीत्यर्थः अजुष्टं असेव्यं तद्भवति पूर्वाह्णोवैदेवानामितिहिश्रुतिः । उत अस्मदस्मत्तोन्यःकोपियजते यजेत सोमेन विचावः वितर्पयेच्चहविषा अतोस्मास्वन्येषुचमध्ये पूर्वः पूर्वोयजमानः यःपूर्वःपूर्वोयष्टा भवति सवनीयान् देवानांसंभजनीयः संभाव्योभवति ॥ २ ॥

२. हे हमारे पुरुषो, प्रातःकाल में ही तुम लोग अश्विनीकुमारों का पूजन करो। उन्हें हव्य प्रदान करो। सायंकालीन हव्य देवों के निकट जानेवाला नहीं होता है। देवगण उसे स्वीकृत नहीं करते हैं, वह हव्य असेवनीय हो जाता है। हमसे अन्य जो कोई सोम-द्वारा उनका यजन करता है और हव्य-द्वारा उन्हें तृप्त करता है; जो व्यक्ति हम लोगों से और दूसरों से पहले उनका यजन करता है, वह व्यक्ति देवों का सम्भजनीय या संभाव्य (अभिमत) होता है।

हिरण्यत्वगित्येषाआश्विनेपशौहविषोयाज्या हिरण्यत्वङ्मधुवर्णोघृतस्नुरभिक्रत्वेन्द्रभूरधक्नितिहिसूत्रितं ।

हिरण्यत्वङ्मधुवर्णोघृतस्नुःपृक्षोवहन्नारथोवर्ततेवाम् ।
मनोजवाअश्विनावातरंहायेनातियाथोदुरितानिविश्वा ॥ ३ ॥

हिरण्यऽत्वक् । मधुऽवर्णः । घृतऽस्नुः । पृक्षः । वहन् । आ । रथः । वर्तते । वाम् । मनःऽजवाः । अश्विना । वातऽरंहाः । येन । अतिऽयाथः । दुःऽइतानि । विश्वा ॥ ३ ॥

वांयुवयोरथः पृक्षोन्नमन्नं वहन्नावर्ततेस्मदभिमुखंआगच्छति कीदृशोरथः हिरण्यत्वक् हिरण्याच्छादितरूपःहिरण्यावृतः मधुवर्णः मनोहरवर्णः घृतस्नुः उदकस्य प्रस्रवनः मनोजवाः मनोवेगः वातरंहाः वातसदृशवेगः हेअश्विना येनरथेन विश्वा सर्वाणि दुरितानि पापानि दुर्गमनान्मार्गान्वा अतियाथः अतिक्रम्यगच्छथः ॥ ३ ॥

३. हे अश्विद्वय, तुम दोनों का हिरण्य-द्वारा आच्छादित, मनोहर वर्ण, जलवर्षण करनेवाला मन की तरह वेगवाला, वायु के सदृश वेगपूर्ण और अन्न को धारण करनेवाला रथ आगमन करता है। उस रथ के द्वारा तुम दोनों सम्पूर्ण दुर्गम मार्गों का अतिक्रमण करते हो।

योभूयिष्ठंनासत्याभ्यांविवेषचनिष्ठंपित्वोररतेविभागे।
सतोकमस्यपीपरच्छमीभिरनूर्ध्वभासःसदमित्तुतुर्यात् ॥ ४ ॥

यः। भूयिष्ठम्। नासत्याभ्याम्। विवेष। चनिष्ठम्। पित्वः।
ररते। विऽभागे। सः। तोकम्। अस्य। पीपरत्। शमीभिः।
अनूर्ध्वऽभासः। सदम्। इत्। तुतुर्यात् ॥ ४ ॥

योयजमानोविभागेहविर्विभागवतियागे नासत्याभ्यामश्विभ्यां भूयिष्ठं चनिष्ठं चनइत्यन्ननाम बह्वन्नकर्म विवेष करोति पित्वः कर्मणिषष्ठी अन्नंच ररते ददाति सयजमानोस्यात्मनएवतोकंपुत्रं पीपरत् पालयेत् शमीभिः कर्मभिः अनूर्ध्वभासः अनुन्नतेजस्कान् यद्वोर्ध्वभासःअग्नयः अग्निरहितानयष्टॄन् सदमित् सदैव तुतुर्यात् हिंस्यात् ॥ ४ ॥

४. जो यजमान हविर्विभाग होनेवाले यज्ञ में अश्विनीकुमारों को विपुल अन्न या हव्य प्रदान करता है, वह यजमान कर्म-द्वारा अपने पुत्र का पालन करता है। जो अग्नि को उद्दीप्त नहीं करते हैं अर्थात् अयष्टा हैं, उनकी सदा हिंसा करते हैं।

समश्विनोरवसानूतनेनमयोभुवासुप्रणीतीगमेम।
आनोरयिंवहतमोतवीरानाविश्वान्यमृतासौभगानि ॥ ५ ॥ १८ ॥

सम्। अश्विनोः। अवसा। नूतनेन। मयःऽभुवा। सुऽप्रनीती। गमेम।
आ। नः। रयिम्। वहतम्। आ। उत। वीरान्। आ। विश्वानि।
अमृता। सौभगानि ॥ ५ ॥ १८ ॥

व्याख्यातेयम् ॥ ५ ॥

५. हम सब अश्विनीकुमार की श्रेष्ठ रक्षा तथा सुखदायक आगमन के साथ संगत हों। हे अमरणशील देवद्वय, तुम दोनों हमें धन, सन्तति और समस्त कल्याण प्रदान करो।

अश्विनावेहेतिनवर्चंषष्ठंसूक्तं अत्रानुक्रमणिका—अश्विनौनवसप्तवध्रिरुष्णिगादिचतुर्थीत्रिष्टुप्पंचानुष्टुभइति। सप्तवध्रिर्नामात्रेयऋषिः आदितस्तिस्रउष्णिहः चतुर्थीत्रिष्टुप् शिष्टाः पंचानुष्टुभः प्रातरनुवाकेआश्विनेक्रतावौष्णिहेछन्दसिआश्विनशस्त्रेचाद्यस्तृचोविनियुक्तः सूत्रितंच—अश्विनावर्तिरस्मदाश्विनावेहगच्छतमितितृचाविति। दशरात्रेतृतीयेहनिप्रउगशस्त्रेयमाश्विनस्तृचः सूत्रितंच—अश्विनावेहगच्छतमायाह्यद्रिभिःसुतमिति।

अश्विनावेहगच्छतंनासत्यामाविवेनतम्। हंसाविवपततमासुताँउप ॥ १ ॥

अश्विनौ। आ। इह। गच्छतम्। नासत्या। मा। वि। वेनतम्।
हंसौऽइव। पततम्। आ। सुतान्। उप ॥ १ ॥

हेअश्विनौ इहास्मिन्यागे आगच्छतं हेनासत्या माविवेनतं वेनतिःकान्तिकर्मा मावि-कामौभवतं निस्पृहावकामौ भवतमित्यर्थः हंसाविव तौयथानिर्मलोदकं आगच्छतस्तद्वत् सुतानभिषुतान् सोमान् उपापततं उपागच्छतं ॥ १ ॥

१. हे अश्विनीकुमारो, इस यज्ञ में तुम दोनों आगमन करो। हे नासत्यद्वय, तुम दोनों स्पृहाशून्य मत होओ। जैसे हंसद्वय निर्मल उदक के प्रति आगमन करते हैं, उसी प्रकार तुम दोनों अभिषुत सोम के प्रति आगमन करो।

**अश्विनाहरिणाविवगौराविवानुयवंसम् । हंसाविवपततमासुताँउप ॥२॥**

**अश्विना । हरिणौऽइंव । गौरौऽइंव । अनु । यवंसम् ।**

**हंसौऽइंव । पततम् । आ । सुतान् । उप ॥ २ ॥**

हेअश्विनौ हरिणाविव गौराविव गौरमृगाविवच तौयथा यवसं घासं अनुधावतः ता-विव हंसाविवच सोममागच्छतं ॥ २ ॥

२. हे अश्विनीकुमारो, हरिण और गौर मृग जैसे घास का अनुधावन करते हैं एवम् जैसे हंसद्वय निर्मल उदक के प्रति आगमन करते हैं, उसी प्रकार तुम दोनों अभिषुत सोम के प्रति आगमन करो।

**अश्विनावाजिनीवसूजुषेथांयज्ञमिष्टये । हंसाविवपततमासुताँउप ॥३॥**

**अश्विना । वाजिनीवसूइतिवाजिनीऽवसू । जुषेथाम् । यज्ञम् ।**

**इष्टये । हंसौऽइंव । पततम् । आ । सुतान् । उप ॥ ३ ॥**

हेवाजिनीवसू अन्नार्थंवासयितारौ अश्विना यज्ञमस्मदीयं इष्टये अभीष्टाय एषणायवा जुषेथां सेवेथां ॥ ३ ॥

३. हे अन्न के निमित्त निवासप्रद अश्विद्वय, तुम दोनों हमारे यज्ञ में अभीष्ट सिद्धि के लिए आगमन करो। जैसे हंसद्वय निर्मल उदक के प्रति आगमन करते हैं, उसी प्रकार तुम दोनों अभिषुत सोम के प्रति आगमन करो।

**अत्रिर्यद्वामवरोहन्नृबीसमजोहवीन्नाधमानेवयोषा ।**

**श्येनस्यचिज्जवंसानूतनेनागच्छतमश्विनाशंतमेन ॥ ४ ॥ १९ ॥**

**अत्रिः । यत् । वाम् । अवऽरोहन् । ऋबीसम् । अजोहवीत् ।**

**नाधमानाऽइव । योषा । श्येनस्य । चित् । जवंसा । नूतनेन । आ ।**

**अगच्छतम् । अश्विना । शम्ऽतमेन ॥ ४ ॥ १९ ॥**

अत्रिरस्मत्पिता यद्यदा वां युवां अजोहवीत् अस्तौषीत् नाधमाना याचमाना योषा योषिदिव सायथा पतिंप्रीणयति तद्वत्कुर्वन् ऋबीसं तुषाग्निं अग्निकुंडेक्षिप्तःसन् अवरोहन् वि-मुंचन् अजोहवीत् श्येनस्यचित् जवसा श्येनस्य गरुत्मतइववेगेन चिदित्युपमार्थे अथवा श्ये-

नस्यजवसा वेगेन नूतनेन प्रथमोत्पन्नेन सततंगच्छतः श्येनस्यप्रथमजवेन शंतमेनास्माकं सुखतमेनचरथेन तं रक्षितुमागच्छतं हेअश्विना ॥ ४ ॥

४. हे अश्विनीकुमारो, विनय करने पर स्त्री जैसे पति को प्रसन्न करती है, उसी प्रकार हम लोगों के पिता अत्रि ने तुम्हारी स्तुति करके तुषाग्नि-कुण्ड से मुक्ति-लाभ किया था। तुम दोनों श्येन पक्षी के नवजात वेग से सुखकर रथ-द्वारा हम लोगों की रक्षा के लिए आगमन करो।

॥ इतिचतुर्थस्यचतुर्थेएकोनविंशोवर्गः ॥ १९ ॥

अत्रब्रुवन्तीतिहासंसप्तवध्रेःपुराविदः ॥ भ्रातृव्याःपेटिकायांतमृषिंप्रक्षिप्ययत्नतः ॥ १ ॥ मुद्रांकृत्वागृहेस्वीयेरक्षयित्वान्यवेशयन् ॥ नसंगच्छेतभार्यांस्वांयथारात्रौतथाकृतम् ॥ २ ॥ प्रातःप्रातःसमुद्घाट्यनिर्मथिष्यन्तितंमुनिं ॥ एवंस्थित्वाचिरंकालंपेटायांदुःखितःकृशः ॥ ३ ॥ उपायंचिंतयामासनिर्गमस्यचिरंमुनिः ॥ हृदिनिश्चित्यनासत्यावस्तौषीद्धृष्टमानसः ॥ ४ ॥ तमश्विनौसमागत्यसमुद्घाट्यचपेटिकां ॥ उद्धृत्यतमृषिंशीघ्रंतावदृष्टौबभूवतुः ॥ ५ ॥ सऋषिर्भार्ययासार्धंरमित्वाथपुनर्भयात् ॥ प्रातरेत्यपुनःपेटांप्रविश्यप्रागिवस्थितः ॥ ६ ॥ पेटानिवाससमयेदृष्टवानृग्द्वयंतदा ॥

विजिहीष्ववनस्पतेयोनिःसूष्यंन्त्याइव ।
श्रुतंमेअश्विनाहवंसप्तवध्रिंचमुञ्चतम् ॥ ५ ॥

वि । जिहीष्व । वनस्पते । योनिः । सूष्यंत्याःऽइव ।
श्रुतम् । मे । अश्विना । हवम् । सप्तऽवध्रिम् । च । मुञ्चतम् ॥ ५ ॥

हेवनस्पते वनस्पतिविकाररूपेपेटिके विजिहीष्व विगच्छ विवृताभव सूष्यंत्याइव प्रसोष्यमाणायाःस्त्रियाःयोनिरिव षूङ्प्राणिप्रसवे लटिशतरिरूपं संज्ञापूर्वस्यविधेरनित्यत्वाद्गुणाभावः प्रसवोन्मुख्याःस्त्रियाःयोनिरिव भगः यथाविव्रियते तथात्वमपि विवृताभव तदर्थं हेअश्विना अश्विनौ मेहवं आह्वानं श्रुतं शृणुतं श्रुत्वाच सप्तवध्रिंच मामृषिंमुंचतं मोचयतं ॥ ५ ॥

५. हे वनस्पति-विनिर्मित पेटिके (काठ के बने बक्स), प्रसव करने के लिए उद्यत रमणी की योनि की तरह तुम विवृत (विस्तृत) होओ या फैल जाओ। खुले हुए बक्स की ओर संकेत है। तुम दोनों हमारा आह्वान श्रवण करो। हम सप्तवध्रि ऋषि को मुक्त करो।

भीतायनाधमानायऋषयेसप्तवध्रये ।
मायाभिरश्विनायुवंवृक्षंसंचविचाचथः ॥ ६ ॥

भीताय । नाधमानाय । ऋषये । सप्तऽवध्रये । मायाभिः ।
अश्विना । युवम् । वृक्षम् । सम् । च । वि । च । अचथः ॥ ६ ॥

भीताय निर्गमाद्बिभ्युषे नाधमानाय विमोक्षंयाचमानाय सप्तवध्रयेऋषये हेअश्विना अश्विनौ युवं युवां मायाभिः वृक्षं वृक्षविकारांपेटिकां संचाचथः ममनिर्गमार्थं संगच्छथः विचाचथः विभक्तंकुरुथः ॥ ६ ॥

६. हे अश्विनीकुमारो, तुम दोनों भीत और निर्गमन के लिए प्रार्थना करनेवाले ऋषि सप्तवध्रि के लिए माया-द्वारा पेटिका (बक्स) को संगत और विभक्त करते हो।

यथावातःपुष्करिणींसमिङ्गयतिसर्वतः।
एवातेगर्भएजतुनिरैतुदशमास्यः ॥ ७ ॥

यथा। वातः। पुष्करिणीम्। सम्ऽइङ्गयति। सर्वतः।
एव। ते। गर्भः। एजतु। निःऽऐतु। दशऽमास्यः ॥ ७ ॥

एतदाद्यृक्त्रयंगर्भस्राविण्युपनिषत् एतदाद्यृक्त्रयेणासौसप्तवध्रिःस्वयोषितः ॥ गर्भिण्याःप्रसवायाशुस्तुतवानश्विनावृषिः ॥ १ ॥ यथावातःपुष्करिणीं सरआदिकं सर्वतःसमिंगयति सम्यक्चालयति एवएवं तेतव गर्भएजतु कंपतां इतस्ततःसंचरतु दशमास्यः दशमासान्गर्भे स्थितोनिरैतु निर्गच्छतु ॥ ७ ॥

७. वायु जिस प्रकार सरोवर आदि को संचालित करती है, उसी प्रकार तुम्हारा गर्भ संचालित हो। दस मास के अनन्तर गर्भस्थ जीव निर्गत हो।

यथावातोयथावनंयथासमुद्रएजति।
एवात्वंदशमास्यसहावेहिजरायुणा ॥ ८ ॥

यथा। वातः। यथा। वनम्। यथा। समुद्रः। एजति। एव।
त्वम्। दशऽमास्य। सह। अव। इहि। जरायुणा ॥ ८ ॥

वातोयथाकंपमानोवनंकंपयतिस्वयं ॥ यथासमुद्रश्चलतिचाल्यतेवाथवायुना ॥ १ ॥
स्थित्वादशैवमासांस्त्वंगर्भोल्बेनसुवेष्टितः ॥ निर्गच्छजठरान्मातुर्जरायुयुजआपत ॥ २ ॥ ८ ॥

८. वायु, वन और समुद्र जिस प्रकार कम्पित होते हैं, उसी प्रकार दस मास-पर्यन्त गर्भस्थ जीव जरायु-वेष्टित होकर पतित हो।

दशमासाञ्छशयानःकुमारोअधिमातरि।
निरैतुजीवोअक्षतोजीवोजीवन्त्याअधि ॥ ९ ॥ २० ॥

दश। मासान्। शशयानः। कुमारः। अधि। मातरि।
निःऽऐतु। जीवः। अक्षतः। जीवः। जीवन्त्याः। अधि ॥ ९ ॥ २० ॥

दशमासानुषित्वासौजननीजठरेसुखं ॥ निर्गच्छतुसुखंजीवोजननीचापिजीवतु ॥ १ ॥ ९ ॥

॥ इतिचतुर्थस्यचतुर्थेविंशोवर्गः ॥ २० ॥

९. दस मास-पर्यन्त जननी के जठर में अवस्थित जीव जीवित तथा अक्षत रूप से जीविता जननी से उत्पन्न हो।

महेनोअद्येतिदशर्चंसप्तमंसूक्तं आत्रेयस्यसत्यश्रवसस्यार्षं पांक्तमुषस्यं अनुक्रम्यतेच—महेदशसत्यश्रवाउषस्यंतुपांक्तमिति । प्रातरनुवाकेउषस्येक्रतौपांक्तेछन्दसिआश्विनशस्त्रेचेदंसूक्तं सूत्र्यतेहि—महेनोअद्येतिपांक्तमिति।

महेनोंअद्यबोधयोषोरायेदिवित्मती ।
यथांचिन्नोअबोधयःसत्यश्रवसिवाय्येसुजातेअश्वसूनृते ॥१॥

महे । नः । अद्य । बोधय । उषः । राये । दिवित्मती ।
यथां । चित् । नः । अबोधयः । सत्यऽश्रवसि । वाय्ये ।
सुऽजाते । अश्वंऽसूनृते ॥ १ ॥

अद्यास्मिन्यागदिने हेउषः उषोदेवि दिवित्मती दीप्तिमती त्वंनोस्मान् महे महते राये धनप्राप्तये बोधय प्रज्ञापय प्रकाशयेत्यर्थः सतिप्रकाशे क्रतुद्वाराद्द्रव्यस्योपार्जयितुंशक्यत्वात् यथाचित् यथैवपूर्वंनोस्मानबोधयः अतीतेषुदिवसेषुयथाबोधितवती तद्वदद्यापीत्यर्थः हेसुजाते शोभनप्रादुर्भूते अश्वसूनृते अश्वार्थाप्रियसत्यात्मिकास्तुतिर्वाग्यस्याःसा हेतादृशिदेवि वाय्ये वय्यपुत्रे सत्यश्रवसिमयि अनुगृहाणेत्यर्थः ॥ १ ॥

१. हे दीप्तिमती उषा, तुमने हम लोगों को जैसे पहले प्रबोधित किया था, उसी प्रकार आज भी प्रचुर धन-प्राप्ति के लिए प्रबोधित करो। हे शोभन प्रादुर्भाववाली अश्वप्राप्ति के लिए लोग तुम्हारा स्तवन करते हैं। तुम वय्यपुत्र सत्यश्रवा के प्रति अनुग्रह करो।

यासुनीथेशौचद्रथेव्यौच्छोदुहितर्दिवः ।
साव्युच्छसहीयसिसत्यश्रवसिवाय्येसुजातेअश्वसूनृते ॥ २ ॥
या । सुऽनीथे । शौचत्ऽरथे । वि । औच्छः । दुहितः । दिवः ।
सा । वि । उच्छ । सहीयसि । सत्यऽश्रवसि । वाय्ये । सुऽजाते ।
अश्वंऽसूनृते ॥ २ ॥

हेदिवोदुहितः दिवःसूर्यस्यपुत्रीउषः यात्वं सुनीथे एतन्नामके शोचद्रथे शुचद्रथस्यापत्ये पूर्वंव्यौच्छः व्यवासयस्तमांसि सात्वं सहीयसि अतिशयेनबलवति वाय्ये वय्यपुत्रे सत्यश्रवसि मयि व्युच्छ तमोविवासय उच्छीविवासे विवासोवर्जनं शिष्टमुक्तम् ॥ २ ॥

२. हे सूर्यतनया उषा, तुमने शुचद्रथ के पुत्र सुनीथि का अन्धकार दूर किया था। हे शोभन प्रादुर्भाववाली, अश्वप्राप्ति के लिए लोग तुम्हारा स्तवन करते हैं। तुम वय्यपुत्र अतिशय बलवान् सत्यश्रवा का तमो-निवारण करो।

सानोअद्याभरद्वसुर्व्युच्छादुहितर्दिवः।

योव्यौच्छःसहीयसिसत्यश्रवसिवाय्येसुजातेअश्वसूनृते ॥ ३ ॥

सा। नः। अद्य। भरत्ऽवसुः। वि। उच्छ। दुहितः। दिवः।

यो इति। वि। औच्छः। सहीयसि। सत्यऽश्रवसि। वाय्ये।

सुऽजाते। अश्वऽसूनृते ॥ ३ ॥

हेदुहितर्दिवःउषः आभरद्वसुः आहृतधना सा प्रसिद्धात्वं नोस्माकं अद्यास्मिन्नदिने व्युच्छ तमोविवासय हेसहीयसि यो या उकारोनर्थकः यात्वं पूर्वं व्यौच्छः साद्यापीति ॥ ३ ॥

३. हे द्युलोक की दुहिता, तुम धन आहरण करनेवाली हो। तुम आज हम लोगों का तमोनिवारण करो। हे सुजाता, अश्वप्राप्ति के लिए लोग तुम्हारा स्तवन करते हैं। तुमने वय्यपुत्र अतिशय बलवान् सत्यश्रवा का तमोनाश किया था।

अभियेत्वाविभावरिस्तोमैर्गृणन्तिवह्नयः।

मघैर्मघोनिसुश्रियोदामन्वन्तःसुरातयःसुजातेअश्वसूनृते ॥४॥

अभि। ये। त्वा। विभाऽवरि। स्तोमैः। गृणन्ति। वह्नयः। मघैः।

मघोनि। सुऽश्रियः। दामन्ऽवन्तः। सुऽरातयः। सुऽजाते।

अश्वऽसूनृते ॥ ४ ॥

हेविभावरि प्रकाशोपेते विभाशब्दाच्छन्दसीवनिपाविति वनिप् भातेर्वाकर्तरिवनिप् उषः त्वा त्वां अभिमति येवह्नयोवोढारऋत्विजः स्तोतारः स्तोमैः स्तोत्रैः गृणन्ति स्तुवन्ति तेस्तोतारोमघैः हेमघोनि धनैर्धनवति त्वदनुग्रहाव सुश्रियोभवन्ति सुष्ठुअर्थिभिराश्रयणीयाभवन्ति दामन्वन्तोदानवन्तोभवन्ति सुरातयः रातिर्दानं सुदानाश्चभवन्ति ॥ ४ ॥

४. हे प्रकाशवती उषा, जो ऋत्विक् स्तोत्र-द्वारा तुम्हारा स्तवन करते हैं, वे ऐश्वर्य-द्वारा समृद्धि-सम्पन्न और दानशील होते हैं। हे धन-शालिनी सुजाता उषा, लोग अश्वलाभ के लिए तुम्हारा स्तवन करते हैं।

अथपंचमी—

यच्चिद्धितेगणाइमेछदयन्तिमघत्तये।

परिचिद्वष्टयोदधुर्ददतोराधोअह्रयंसुजातेअश्वसूनृते ॥५॥२१॥

यत्। चित्। हि। ते। गणाः। इमे। छदयन्ति। मघत्तये।

परि। चित्। वष्टयः। दधुः। ददतः। राधः। अह्रयम्। सुऽजाते।

अश्वऽसूनृते ॥ ५ ॥ २१ ॥

हेउषः यच्चिद्धीतिपूरणः यद् येकेचन तेतव स्वभूताइमे पुरतोवर्तमानागणाः संघभूताः मघत्तये धनदातये धनदानाय धनवस्त्वायवा छदयन्ति उपच्छन्दयन्ति तेसर्वेपि अस्मान् परिदधुः परितोधारयन्ति वष्टयश्चिदस्मानेव कामयमानाः किंकुर्वन्तः अह्रयं अह्रियमाणं अक्षोणं अलज्जावहंवा राधोधनं हविर्लक्षणं ददतोयजन्तइत्यर्थः अर्थिभ्योक्षीणंददतोवा ये त्वां हविर्ददतः स्तुवन्ति तेसर्वेप्यस्मदर्थमेवबलंधारयन्ति स्तुवन्तीत्यर्थः अथवा यद्धीत्यत्र यद्यपीतिव्याख्येयं तस्मिन्पक्षे उत्तरवाक्ये तथापीत्यध्याहार्यं अवशिष्टंसमानम् ॥ ५ ॥

५. हे उषा, धन प्रदान करने के लिए तुम्हारे सम्मुख उपस्थित ये उपासकगण अक्षय्य हव्यरूप धन प्रदान करके हम लोगों के प्रति अनुकूल हुए थे। हे शोभन उत्पन्नवाली, अश्व-प्राप्ति के लिए लोग तुम्हारा स्तवन करते हैं।

॥ इतिचतुर्थस्यचतुर्थेएकविंशोवर्गः ॥ २१ ॥

ऐषुधावीरवद्यशउषोमघोनिसूरिषु ।
येनोराधांस्यह्रयामघवानोअरासतसुजातेअश्वसूनृते ॥ ६ ॥

आ । एषु । धाः । वीरऽवत् । यशः । उषः । मघोनि । सूरिषु ।
ये । नः । राधांसि । अह्रया । मघऽवानः । अरासत । सुऽजाते ।
अश्वऽसूनृते ॥ ६ ॥

हेउषोदेवि मघोनि मघवति त्वं सूरिषुयागप्रेरकेषुयजमानेषु स्तोतृषुवा वीरवद्यशः वीरैःपुत्रादिभिरुपेतं अन्नंयशोवा आधाः आधेहिआदेहि आनय येमघवानोधनवन्तः सूरयोनोस्मभ्यं त्वत्स्तोतृभ्योराधांसि धनानि अह्रया अक्षीणानि अरासत ददुस्तेष्वित्यर्थः ॥ ६ ॥

६. हे धनशालिनी उषादेवी, तुम यजमान स्तोताओं को वीर पुत्रादि से युक्त अन्न प्रदान करो, जिससे वे धनवान् होकर हम लोगों को प्रचुर परिमाण में धन प्रदान करें। हे शोभन उत्पन्नवाली, अश्वप्राप्ति के लिए लोग तुम्हारा स्तवन करते हैं।

तेभ्योद्युम्नंबृहद्यशउषोमघोन्यावह ।
येनोराधांस्यश्व्यागव्याभजन्तसूरयःसुजातेअश्वसूनृते ॥ ७ ॥

तेभ्यः । द्युम्नम् । बृहत् । यशः । उषः । मघोनि । आ । वह ।
ये । नः । राधांसि । अश्व्या । गव्या । भजन्त । सूरयः ।
सुऽजाते । अश्वऽसूनृते ॥ ७ ॥

हेउषोमघोनि त्वं तेभ्योद्युम्नं द्योतमानं हिरण्यादिरूपंधनं बृहद्यशोमहदन्नं महतींकीर्तिं वा तेभ्योयजमानेभ्यआवह ये आढ्यानोस्मभ्यं राधांसि धनानि अश्व्या अश्वैर्युक्तानि ग-व्या गोभिर्युक्तानि गोसमूहानश्वसमूहांश्च भजन्त भजेरन्ददुः सूरयोदातारः ॥ ७ ॥

७. हे धनशालिनी उषा, जिस धनवान् ने हम लोगों को अश्व और धेनुओं से युक्त धन प्रदान किया था, उस सम्पूर्ण यजमान को तुम धन और प्रभूत अन्न प्रदान करो। हे शोभन उत्पन्नवाली, अश्वप्राप्ति के लिए लोग तुम्हारा स्तवन करते हैं।

उतनोगोमतीरिषआवहादुहितर्दिवः ।
साकंसूर्यस्यरश्मिभिःशुक्रैःशोचद्भिरर्चिभिःसुजातेअश्वसूनृते॥८॥

उत । नः । गोऽमतीः । इषः । आ । वह । दुहितः । दिवः ।
साकम् । सूर्यस्य । रश्मिऽभिः । शुक्रैः । शोचत्ऽभिः । अर्चिऽभिः ।
सुऽजाते । अश्वऽसूनृते ॥ ८ ॥

उतापिच नोस्मभ्यं गोमतीर्गोभिरुपेतानि इषोन्नानि आवह आनय हेदिवोदुहितरुषः कदा सूर्यस्यरश्मिभिःसाकं शोचद्भिर्दीपयद्भिःशुक्रैर्निर्मलैरर्चिभिः अग्नेस्तेजोभिश्चसाकं सूर्यो-दयकाले अग्नीन्धनकालेचेत्यर्थः ॥ ८ ॥

८. हे द्युलोक की दुहिता उषा, तुम सूर्य की शुभ्र रश्मि एवम् प्रज्वलित अग्नि की प्रदीप्त ज्वाला के साथ हम लोगों के निकट अन्न और धेनुओं का आनयन करो। हे शोभन उत्पन्नवाली, अश्वप्राप्ति के लिए लोग तुम्हारा स्तवन करते हैं।

व्युच्छादुहितर्दिवोमाचिरंतनुथाअपः ।
नेत्त्वास्तेनंयथारिपुंतपातिसूरोअर्चिषासुजातेअश्वसूनृते ॥९॥

वि । उच्छ । दुहितः । दिवः । मा । चिरम् । तनुथाः । अपः ।
न । इत् । त्वा । स्तेनम् । यथा । रिपुम् । तपाति । सूरः । अर्चिषा ।
सुऽजाते । अश्वऽसूनृते ॥ ९ ॥

हेदिवोदुहितरुषः त्वं व्युच्छ विभातंकुरु अपोस्मदीयंकर्म प्रतिचिरं विलंबंमातनुथाः त्वा त्वां रिपुं स्तेनं यथासंतापयतिराजादिः तद्वत् सूरः सूर्यः अर्चिषा तेजसा नेत् नैवतपाति त-स्मात् शीघ्रंनोदेहीत्यर्थः ॥ ९ ॥

९. हे द्युलोक की दुहिता उषा, तुम विभात (प्रकाश) उत्पादन करो। हम लोगों के प्रति विलम्ब नहीं करना। राजा चोर या शत्रु को जिस प्रकार सन्तप्त करते हैं, उसी प्रकार सूर्य तुम्हें रश्मि-द्वारा सन्तप्त

नहीं करें। हे शोभन उत्पन्नवाली, अश्वप्राप्ति के लिए लोग तुम्हारा स्तवन करते हैं।

एतावद्वेदुषस्त्वंभूयोवादातुमर्हसि।
यास्तोतृभ्योविभावर्युच्छन्तीनप्रमीयसेसुजातेअश्वसूनृते॥१०॥२२॥

एतावत्। वा। इत्। उषः। त्वम्। भूयः। वा। दातुम्। अर्हसि। या। स्तोतृऽभ्यः। विभाऽवरि। उच्छन्ती। न। प्रऽमीयसे। सुऽजाते। अश्वऽसूनृते॥ १०॥ २२॥

हेउषः त्वं अस्मभ्यं वा अथवा दित्सितं किमेतावदेव इच्छब्दएवकारार्थः अस्मिन्सूक्ते प्रार्थितमेवेत्यर्थः अथवा भूयोदातुमर्हसि अप्रार्थितमपियद्दातव्यमस्तितत्सर्वंदेहीत्यर्थः हे विभावरिउषः यात्वं स्तोतृभ्यस्तेषांलौकिकवैदिकव्यवहारार्थं व्युच्छन्तीतमोविवासयन्ती नप्रमीयसे नहन्ति नक्रुध्यसीत्यर्थः सात्वंदातुमर्हसीति मीञ्‌हिंसायामित्यस्मात्कर्मण्यात्मनेपदेव्यत्ययेनश्यन्॥१०॥

हे उषा, जो प्रार्थित हुआ है और जो प्रार्थित नहीं हुआ है, वह सब हमें प्रदान करने में तुम समर्थ हो। हे दीप्तिमती, तुम स्तोताओं का तमोनाश करती हो और उनकी हिंसा नहीं करती हो। हे शोभन उत्पन्न वाली, अश्वप्राप्ति के लिए लोग तुम्हारा स्तवन करते हैं।

द्युतद्यामानमितिषळृचमष्टमंसूक्तं अत्रानुक्रमणिका—द्युतद्यामानंषळिति। सत्यश्रवाऋषिः अनुक्तत्वात्त्रिष्टुप् उषस्यंत्वित्युक्तत्वादुषोदेवता प्रातरनुवाकेउषस्येक्रतौत्रैष्टुभेछन्दसिआश्विनशस्त्रेचेदंसूक्तं सूत्रितंच—द्युतद्यामानमुषोवाजेनेति।

द्युतद्यामानंबृहतीमृतेनऋतावरीमरुणप्सुंविभातीम्।
देवीमुषसंस्वरावहन्तींप्रतिविप्रासोमतिभिर्जरन्ते॥॥१॥

द्युतत्ऽयामानम्। बृहतीम्। ऋतेन। ऋतऽवरीम्। अरुणऽप्सुम्। विऽभातीम्। देवीम्। उषसम्। स्वः। आऽवहन्तीम्। प्रति। विप्रासः। मतिऽभिः। जरन्ते॥ १॥

द्युतद्यामानं दीप्तरथं बृहतीं महतीं ऋतेन सत्येन यज्ञेनवा ऋतावरीं ऋतवतीं अरुणप्सुं अरुणरूपां विभातीं व्युच्छन्तीं देवीं द्योतमानामुषसं स्वरावहन्तीं सूर्यंगच्छन्तीं एवंमहानुभावामुषसंप्रति विप्रासोमेधाविनः ऋत्विजोमतिभिःस्तुतिभिर्जरन्ते स्तुवन्ति॥१॥

१. दीप्तिमान् रथ पर आरूढ़, सर्वव्यापिनी, यज्ञ में भली भाँति से पूजित, अरुणवर्ण, सूर्य की पुरोवर्तिनी और दीप्तिमती उषा का स्तवन ऋत्विक् लोग स्तोत्रों-द्वारा करते हैं।

एषाजनंदर्शताबोधयन्तीसुगान्पथःकृण्वतीयात्यग्रे ।
बृहद्रथाबृहतीविश्वमिन्वोषाज्योतिर्यच्छत्यग्रेअह्नाम् ॥ २ ॥

एषा । जनम् । दर्शता । बोधयन्ती । सुऽगान् । पथः । कृण्वती ।
याति । अग्रे । बृहत्ऽरथा । बृहती । विश्वम्ऽइन्वा । उषाः ।
ज्योतिः । यच्छति । अग्रे । अह्नाम् ॥ २ ॥

दर्शता दर्शनीया एषोषा बोधयन्तीकंजनं प्रसुप्तमित्यर्थः पथः सुगान् सुगमनान् कृण्वती अग्रे सूर्यस्यपुरस्तात् याति गच्छति कीदृश्युषाः बृहद्रथा प्रभूतरथा बृहती महती विश्वमिन्वा विश्वंव्याप्नुवाना विश्वतर्पणावा ईदृश्युषाः अह्नामग्रे ज्योतिस्तेजोयच्छति ॥ २ ॥

२. दर्शनीय उषा प्रसुप्त जनों को प्रबोधित करती हैं और मार्गों को सुगम करके विस्तृत (प्रभूत) रथ पर आरोहण करती हैं एवम् सूर्य के पुरोभाग में गमन करती हैं। महती और विश्वव्यापिनी उषा दिवस के आरम्भ में दीप्ति विस्तार करती हैं।

एषागोभिररुणेभिर्युजानास्रेधन्तीरयिमप्रायुचक्रे ।
पथोरदन्तीसुवितायदेवीपुरुष्टुताविश्ववाराविभाति ॥ ३ ॥

एषा । गोभिः । अरुणेभिः । युजाना । अस्रेधन्ती । रयिम् ।
अप्रऽआयु । चक्रे । पथः । रदन्ती । सुवितायं । देवी । पुरुऽस्तुता ।
विश्वऽवारा । वि । भाति ॥ ३ ॥

एषोषाः अरुणेभिररुणवर्णैर्गोभिर्बलीवर्दैः रथंयुजाना योजयन्ती अस्रेधन्ती अशुष्यन्ती अक्षीणावा किं रयिं धनं अप्रायु अप्रगन्तृ अविचलितं चक्रे करोति किंकुर्वती पथोमार्गान् रदन्ती प्रकाशयन्ती किमर्थं सुविताय सुष्ठुगमनाय देवी द्योतमाना पुरुष्टुता बहुभिः स्तुता विश्ववारा सर्वैर्वरणीया विभाति प्रकाशंकरोति ॥ ३ ॥

३. रथ में अरुण वर्ण के वलीवर्दों को युक्त करके वे अक्षीण धनों को अविचलित करती हैं। दीप्तिमती, बहुस्तुता और सबके द्वारा वरणीया उषा मार्गों को प्रकाशित करके शोभमान या प्रकाशित होती हैं।

एषाव्येनीभवतिद्विबर्हाआविष्कृण्वानातन्वंपुरस्तात् ।
ऋतस्यपन्थामन्वेतिसाधुप्रजानतीवनदिशोमिनाति ॥ ४ ॥

एषा । विऽएनी । भवति । द्विऽबर्हाः । आविःऽकृण्वाना । तन्वम् ।
पुरस्तात् । ऋतस्य । पन्थाम् । अनु । एति । साधु । प्रजानतीऽइव ।
न । दिशः । मिनाति ॥ ४ ॥

एषोषाः व्येनीभवति विशेषेणश्वेताभवति द्विबर्हाः द्वयोःप्रथममध्यमयोःस्थानयोः परिवृढाउषाः पश्चात्तन्वं स्वीयांतनुमाविष्कृण्वाना प्रकटीकुर्वती क्व पुरस्तात्पूर्वस्यांदिशि किं

च ऋतस्यादित्यस्य पन्थां पंथानं साधु सम्यगन्वेति किंच प्रजानतीव विश्वंप्रज्ञापयन्ती इवे-तिसंप्रत्यर्थे नदिशोमिनाति नहिनस्ति प्रत्युत दिशःप्रकाशयति अथवा प्रजानतीव अनुगन्त-व्यमितिप्रकर्षेण अवगच्छन्तीच ऋतस्यपंथामन्वेति ॥ ४ ॥

४. प्रथम और मध्यम स्थान में अर्थात् ऊर्द्ध और मध्य अन्तरिक्ष में अवस्थिति करके उषा अपनी मूर्ति को पूर्व दिशा में प्रकटित करती हैं। विशेष श्वेतवर्णवाली उषा अभी ब्रह्माण्ड को प्रबोधित करके आदित्य के मार्ग का भली भाँति से अनुधावन करती हैं। वे दिशाओं की हिंसा नहीं करती हैं; बल्कि दिशाओं को प्रकाशित करती हैं।

एषाशुभ्रानतन्वोविदानोर्ध्वेवस्नातीदृशयेनोअस्थात्।
अपद्वेषोबाधमानातमांस्युषादिवोदुहिताज्योतिषागात् ॥ ५ ॥

एषा । शुभ्रा । न । तन्वः । विदाना । ऊर्ध्वाऽइव । स्नाती । दृशये ।
नः । अस्थात् । अप । द्वेषः । बाधमाना । तमांसि । उषाः ।
दिवः । दुहिता । ज्योतिषा । आ । अगात् ॥ ५ ॥

एषोषाः शुभ्रान शुभ्रवर्णानिर्मलास्वलंकृतायोषिदिव तन्वोगानि विदाना प्रज्ञापयन्ती स्नाती स्नानंकुर्वाणा ऊर्ध्वेव उन्नतेव स्नानादुत्तिष्ठन्तीव नोस्मदर्थं अस्माकंपुरतोवा दृशये सर्वेषांदर्श-नायउदस्थात् पूर्वस्यांदिश्युत्तिष्ठति किंकुर्वन्ती द्वेषोद्वेष्याणि तमांस्यपबाधमाना दिवोदुहितोषाः ति ज्योतिषा तेजसा सहागादागच्छति ॥ ५ ॥

५. सुन्दर अलंकार मे युक्त रमणी की तरह अपने शरीर को प्रका-शित करती हुई और स्नान कर चुकनेवाली की तरह उषा हम लोगों के पुरोभाग में पूर्व की ओर उदित होती हैं। द्युलोक की दुहिता उषा द्वेषक अन्धकार को बाधित करके तेज के साथ आगमन करती हैं।

एषाप्रतीचीदुहितादिवोनॄन्योषेवभद्रानिरिणीतेअप्सः।
व्यूर्ण्वतीदाशुषेवार्याणिपुनर्ज्योतिर्युवतिःपूर्वथाकः ॥ ६ ॥२३॥

एषा । प्रतीची । दुहिता । दिवः । नॄन् । योषाऽइव । भद्रा ।
नि । रिणीते । अप्सः । विऽऊर्ण्वती । दाशुषे । वार्याणि ।
पुनः । ज्योतिः । युवतिः । पूर्वऽथा । अकरित्यकः ॥ ६ ॥ २३ ॥

एषोषाः प्रतीची अभिमुखासती दिवोदुहिता नॄन् सर्वान्प्राणिनः प्रतिभद्रा योषेव क-ल्याणवेषायोषिदिवाप्सोरूपंनिरिणीते प्रेरयति किंच दाशुषे हविर्दात्रेयजमानाय वार्याणि वर-णीयानि धनानि व्यूर्ण्वती प्रयच्छन्ती युवतिर्नित्ययौवना सर्वत्रमिश्रयन्तीवा पुनरपि पूर्वथा पूर्वमिवज्योतिस्तेजोअकःकरोति ॥ ६ ॥

॥ इतिचतुर्थस्यचतुर्थेत्रयोविंशोवर्गः ॥ २३ ॥

६. द्युलोक की दुहिता उषा पश्चिमाभिमुखी होकर कल्याणकारक वेश धारण करनेवाली रमणी की तरह अपने रूप को प्रेरित करती हैं। वह हव्य देनेवाले यजमान को वरणीय धन प्रदान करती हैं। नित्य यौवन-वाली उषा पूर्व की तरह अपनी दीप्ति प्रकाशित करती हैं।

युंजतेमनइतिपंचर्चंनवमंसूक्तं अत्रेयमनुक्रमणिका—युंजतेपंचश्यावाश्वःसावित्रंतुजागतमिति। श्यावाश्वोनामात्रेयऋषिः जगतीछन्दः सवितादेवता पृष्ठ्याभिप्लवषडहयोःप्रथमेहनिवैश्वदेवशस्त्रे सावित्रनिविद्धानमिदं सूत्रितंच—युंजतेमनइहेहवइतिचतस्रइति। आद्याग्रावस्तोत्रेपि सूत्रितंच—युंजतेमनउतयुंजतेधियआतूनइन्द्रक्षुमन्तमिति।

युञ्जतेमनउतयुंञ्जतेधियोविप्राविप्रस्यबृहतोविपश्चितः।
विहोत्रादधेवयुनाविदेकइन्महीदेवस्यसवितुःपरिष्टुतिः ॥ १ ॥

युञ्जते। मनः। उत। युञ्जते। धियः। विप्राः। विप्रस्य।
बृहतः। विपःऽचितः। वि। होत्राः। दधे। वयुनऽवित्। एकः।
इत्। मही। देवस्य। सवितुः। परिऽस्तुतिः ॥ १ ॥

विप्रामेधाविनऋत्विग्यजमानाः मनः स्वीयं सर्वेषुकर्मसु युंजते योजयन्ति सवित्रनुग्रहाय संकल्पंकुर्वंतीत्यर्थः उतापिच धियः कर्माण्यपि युंजते प्राप्नुवंति कस्यानुज्ञयेति उच्यते विप्रस्यमेधाविनः बृहतोमहतः विपश्चितः स्तुत्यस्यज्ञानवतोवा सवितुःअनुज्ञयेति सवितावैप्रसवानामीशइतिश्रुतिः। सएवसविता होत्राः सप्तहोत्रकाणामुचिताः क्रियाः वयुनावित् वयुनमितिप्रज्ञानाम तत्तदनुष्ठानविषयप्रज्ञावेत्ता एकइव एकएव विदधे करोति पृथक्पृथगवधारयति किंच तस्यसवितुर्देवस्य परिष्टुतिः स्तुतिः मही महती अतिप्रभूता स्तुत्यगोचरेत्यर्थः ॥ १ ॥

१. ऋत्विक् यजमान लोग अपने मन को सब कर्मों में लगाते हैं। मेधावी, महान् और स्तुतियोग्य सविता की आज्ञा से यज्ञकार्य में निविष्ट होते हैं। वे होताओं के कार्यों को जानकर उन्हें यज्ञकार्य में प्रेरित करते हैं। सविता देव की स्तुति अत्यन्त प्रभूत है अर्थात् उनकी महिमा स्तुति के अगोचर है।

हविर्धानप्रवर्तनेरराट्यामवनद्धायांविश्वारूपाणीत्येषानुवचनीया सूत्रितंच—विश्वारूपाणिप्रतिमुंचतेकविरितिव्यवस्तायामिति।

विश्वारूपाणिप्रतिमुञ्चतेकविःप्रासावीद्भद्रंद्विपदेचतुष्पदे।
विनाकमख्यत्सवितावरेण्योनुप्रयाणमुषसोविराजति ॥ २ ॥

विश्वा। रूपाणि। प्रति। मुञ्चते। कविः। प्र। असावीत्।
भद्रम्। द्विऽपदे। चतुःऽपदे। वि। नाकम्। अख्यत्। सविता।
वरेण्यः। अनु। प्रऽयानम्। उषसः। वि। राजति ॥ २ ॥

१ ऐ० ब्रा० ७. १६.।

कविः मेधावी सविता विश्वा सर्वाणिरूपाणि आत्मनि प्रतिमुंचते बध्नातिधारयति किं च भद्रं कल्याणं गमनादिविषयं प्रासावीव अनुजानाति कस्मै द्विपदे मनुष्याय चतुष्पदे गवाश्वादिकाय किंच सविता सर्वस्यप्रेरकोदेवोवेरण्योवरणीयःसन् व्यख्यत् ख्यापयति प्रकाशयति किं नाकं नास्मिन्नकंदुःखमस्तीतिनाकः स्वर्गः यजमानार्थं स्वर्गंप्रकाशयतीत्यर्थः सदेवः उषसं प्रयाणमुदयमनु विराजति प्रकाशते सवितुरुदयात्पूर्वंह्युषाउदेति ॥ २ ॥

२. मेधावी सविता स्वयं सम्पूर्ण रूप धारण करते हैं। वे मनुष्यों तथा पशुओं के गमनादि-विषयक कल्याण को जानते हैं। सबके प्रेरक वरणीय सविता देव स्वर्ग को प्रकाशित करते हैं। वे उषा के उदित होने के पश्चात् प्रकाशित होते हैं।

यस्यंप्रयाणमन्वन्यइद्ययुर्देवादेवस्यंमहिमानमोजंसा ।
यःपार्थिवानिविममेसएतंशोरजांसिदेवःसंविताम॑हित्वना ॥ ३ ॥

यस्यं । प्रऽयानंम् । अनुं । अन्ये । इत् । ययुः । देवाः । देवस्यं ।
महिमानंम् । ओजंसा । यः । पार्थिवानि । विऽमुमे । सः ।
एतंशः । रजांसि । देवः । सविता । महिऽत्वना ॥ ३ ॥

अन्यइत् देवाअन्येप्यग्न्यादयोदेवाः देवस्यद्योतमानस्य सवितुः प्रयाणमनु ययुर्गच्छन्ति प्राप्नुवन्ति किं महिमानं महत्त्वं सवितुरुदयाभावेग्निहोत्रादिअनिष्पत्तेस्तेषांहविःस्तुत्याद्यभावात् ओजसा बलेनच युक्ताभवन्ति यःसविता पार्थिवानिरजांसि पृथिव्यादिलोकान् महित्वना स्वमहत्त्वेन विममे परिच्छिनत्ति सदेवः एतशः एतवर्णः शुभ्रः शोभमानःसन् राजतइतिशेषः युवशाता श्रुणोतनेत्यादिवदेतशइत्यादिशकारोपजनश्छान्दसः ॥ ३ ॥

३. अग्नि आदि अन्यान्य देवगण द्युतिमान् सविता का अनुगमन करके महिमा और बल प्राप्त करते हैं अर्थात् सूर्य के उदित होने पर ही अग्नि-होत्रादि कार्य होता है। जो सविता देव अपने माहात्म्य से पृथिव्यादि लोक को परिच्छिन्न करते हैं, वे शोभमान होकर विराजमान हैं।

उतयांसिसवितस्त्रीणिरोचनोतसूर्यस्यरश्मिभिःसमुच्यसि ।
उतरात्रीमुभयतःपरीयसउतमित्रोभवसिदेवधर्मभिः ॥ ४ ॥

उत । यासि । सवितरिति । त्रीणि । रोचना । उत । सूर्यस्य ।
रश्मिऽभिः । सम् । उच्यसि । उत । रात्रीम् । उभयतः । परि ।
ईयसे । उत । मित्रः । भवसि । देव । धर्मऽभिः ॥ ४ ॥

हेसवितर्देव उतापिच त्रीणिरोचना रोचमानान्द्युलोकान् यासि गच्छसि तिस्रोदिवःपृथिवीरित्युक्तं उतापिच सूर्यस्यरश्मिभिः समुच्यसि संगच्छसि उचसमवायइत्यस्येदंरूपं उदयात्पूर्वभावीसविता उदयास्तमयवर्तीसूर्यइति उतापिच रात्रीमुभयतउभयपार्श्वे परीयसे परिगच्छसि उतापिच हेदेव सवितस्त्वं धर्मभिर्जगद्धारकैः कर्मभिः मित्रोभवसिमित्राख्योदेवोभवसि अथवा प्रकाशादिप्रदानेनसखाभवसि सर्वजगताम् ॥ ४ ॥

४. हे सविता, रोचमान तीनों लोकों में तुम गमन करते हो और सूर्य की किरणों से मिलित होते हो, तुम रात्रि के उभय पार्श्व होकर गमन करते हो। हे सविता देव, तुम जगद्धारक कर्म द्वारा मित्र नामक देव होते हो।

उतेशिषेप्रसवस्यत्वमेकइदुतपूषाभवसिदेवयामभिः ।
उतेदंविश्वंभुवनंविराजसिश्यावाश्वस्तेसवितःस्तोममानशे ॥५॥२४॥

उत । ईशिषे । प्रऽसवस्य । त्वम् । एकः । इत् । उत । पूषा । भवसि ।
देव । यामऽभिः । उत । इदम् । विश्वम् । भुवनम् । वि । राजसि ।
श्यावऽअश्वः । ते । सवितरिति । स्तोमम् । आनशे ॥ ५ ॥ २४ ॥

हेसवितस्त्वं एकइव एकएव प्रसवस्य सर्वकर्मानुज्ञाकरणस्य ईशिषे समर्थोभवसि ये लौकिकंगमनादिरूपं वैदिकमग्निहोत्रादिरूपंकर्म अनुतिष्ठन्ते तेषांसर्वेषां अनुज्ञातुमेकएवप्रभवसि उतापिच पूषा पोषकोभवसि हेदेव यामभिर्गमनैः उतापिचेदंविश्वंभुवनं भूतजातं विराजसि ईशिषेधारयितुं यस्मादेवंमहानुभावः तस्माद्धेसवितस्तेतुभ्यं श्यावाश्वऋषिः स्तोत्रमानशे व्याप्नोति करोतीत्येवमात्मानं परोक्षतयानिर्दिशन्नाह ॥ ५ ॥

५. हे सविता देव, अकेले तुम ही सब (लौकिक) या वैदिक कर्मों के अनुशासन में समर्थ हो। हे देव, गमन-द्वारा तुम पूषा (पोषक) होओ। तुम समस्त भुवनजात को धारण करने में समर्थ हो। हे सविता देव, श्यावाश्व ऋषि तुम्हारा स्तवन करते हैं।

तत्सवितुरितिनवर्चंदशमंसूक्तं श्यावाश्वस्यार्षं अत्रेयमनुक्रमणिका—तत्सवितुर्नवगायत्रमाद्यानुष्टुबिति । प्रथमानुष्टुप् शिष्टागायत्र्यः सावित्रंत्वित्युक्तत्वात्सावित्रं अग्निष्टोमेवैश्वदेवशस्त्स्याद्यस्तृचः प्रतिपद अद्यानोदेवेत्यनुचरः सूत्रितंच—तत्सवितुर्वृणीमहेद्यानोदेवसवितरिति वैश्वदेवस्यप्रतिपदनुचराविति ।

तत्रप्रथमा—

तत्सवितुर्वृणीमहेवयंदेवस्यभोजनम् ।
श्रेष्ठंसर्वधातमंतुरंभगस्यधीमहि ॥ १ ॥

१ ऋ० सं० ३.८.४.

तत् । सवितुः । वृणीमहे । वयम् । देवस्य । भोजनम् । श्रेष्ठम् ।
सर्वऽधातमम् । तुरम् । भगस्य । धीमहि ॥ १ ॥

तत्प्राप्यत्वेनप्रसिद्धं भोजनं भोग्यंधनं वयंस्तोतारोवृणीमहे प्रार्थयामः कस्यधनं सवितुः प्रेरकस्यदेवस्य स्वभूतं लब्ध्वाच श्रेष्ठं प्रशस्यं सर्वधातमं सर्वधातृतमं सर्वभोग्यप्रदमित्यर्थः तुरं शत्रूणांहिंसकं धनेनशत्रून्हन्तुंशक्यत्वात् तादृशंधनं भगस्य भजनीयस्य सवितुरनुग्रहात् धीमहि धारयाम उपभोगंकरवामेत्यर्थः अथवा धनंवृणीमहे अर्थित्वाच्च लभेमहीति ॥ १ ॥

१. हम लोग सविता देव से प्रसिद्ध और भोगयोग्य धन के लिए प्रार्थना करते हैं। सविता देव के अनुग्रह से हम भग के निकट से श्रेष्ठ, सर्व-भोगप्रद और शत्रुसंहारक धन लाभ करें।

अस्यहिस्वयंशस्तरंसवितुःकच्चनप्रियम् । नमिनन्तिस्वराज्यम् ॥ २ ॥

अस्य । हि । स्वयशःऽतरम् । सवितुः । कत् । चन ।
प्रियम् । न । मिनन्ति । स्वऽराज्यम् ॥ २ ॥

अस्य सवितुः स्वयशस्तरं स्वयमसाधारणं यशोयस्यातिशयेनभवतितत् तादृशं प्रियं सर्वेषांप्रियभूतं स्वराज्यं स्वयमेवराजमानत्वमैश्वर्यं कच्चन केचिदपिअसुरादयोनमिनन्ति नहिंसन्ति ॥ २ ॥

२. सविता के स्वयम् असाधारण, सर्वप्रिय और राजमान ऐश्वर्य को कोई असुर आदि भी नष्ट नहीं कर सकता है।

सहिरत्नानिदाशुषेसुवातिसविताभगः । तंभागंचित्रमीमहे ॥ ३ ॥

सः । हि । रत्नानि । दाशुषे । सुवाति । सविता । भगः ।
तम् । भागम् । चित्रम् । ईमहे ॥ ३ ॥

सहि सखलु सविता भगोभजनीयोदेवोदाशुषे हविर्दत्तवतेमह्यं रत्नानि रमणीयानिधनानि सुवाति प्रेरयतिप्रयच्छति तंदेवं भागं भजनीयं चित्रं चायनीयंधनं ईमहे याचामहे ॥ ३ ॥

३. वह सविता और भजनीय भग देव हम हव्यदाता को रमणीय धन प्रदान करते हैं। हम उस भजनीय भगदेव से रमणीय धन की याचना करते हैं।

अद्यानइतिचतुर्थीपंचमीभ्याममनोज्ञस्वप्नदर्शनेप्रत्यृचंजुहुयात् अद्यानोदेवसवितरितिद्वाभ्यामितिहिसूत्रितम् ।

अथचतुर्थी—

अद्यानोदेवसवितःप्रजावत्सावीःसौभगम् । पराद्रुःष्वप्न्यंसुव ॥ ४ ॥

अ॒द्य । नः॒ । दे॒व॒ । स॒वि॒त॒रिति॑ । प्र॒जाऽव॑त् । सा॒वीः॒ । सौभ॑गम् ।
परा॑ । दुः॒ऽस्वप्न्य॑म् । सु॒व॒ ॥ ४ ॥

हेसवितर्देव नोस्मभ्यमद्यास्मिन्यागदिने प्रजावत्पुत्राद्युपेतं सौभगं धनं सावीः प्रेरय दुः-स्वप्न्यं दुःस्वमंदुःस्वमवद्दुःखकरंदारिद्र्यं परासुव दूरेप्रेरय ॥ ४ ॥

४. हे सविता देव, आज यज्ञ-दिन में तुम हम लोगों को पुत्रादि से युक्त सौभाग्य (धन) प्रदान करो एवम हम लोगों के दुस्वप्नजनित दारिद्र्य को दूर करो।

विश्वा॑निदेवसवितर्दुरि॒ता॒नि॒परा॑सुव । यद्भ॒द्रंतन्न॒आसु॑व ॥ ५ ॥२५॥

विश्वा॑नि । दे॒व॒ । स॒वि॒तः॒ । दुः॒ऽइ॒ता॒नि॑ । परा॑ । सु॒व॒ ।
यत् । भ॒द्रम् । तत् । नः॒ । आ । सु॒व॒ ॥ ५ ॥ २५ ॥

हेसवितर्देव त्वं विश्वानि दुरितानि परासुव यद्भद्रं प्रजापशुगृहादिकं तन्नोस्मभ्यमासुव अस्मदभिमुखंप्रेरय प्रजावैभद्रंपशवोभद्रंगृहंभद्रमितिहिश्रुतिः ॥ ५ ॥

५. हे सविता देव, तुम हम लोगों के समस्त अमङ्गल को दूर करो एवम् प्रजा, पशु और गृहादिरूप कल्याण को हम लोगों के अभिमुख प्रेरित करो।

अना॑गसो॒अदि॑तयेदे॒वस्य॑सवि॒तुःस॒वे । विश्वा॑वा॒मानि॑धीमहि ॥ ६ ॥

अना॑गसः । अदि॑तये । दे॒वस्य॑ । स॒वि॒तुः । स॒वे । विश्वा॑ ।
वा॒मानि॑ । धी॒म॒हि॒ ॥ ६ ॥

वयमनुष्ठातारः सवितुः प्रेरकस्य देवस्य सवे अनुज्ञायांसत्यां अदितये अखंडनीयायै देव्यैभूम्यै अनागसःस्याम अनपराधिनोभवेम भूम्यांहिपापाःसंभवन्ति अपगतेष्वागःसुविश्वा सर्वाणि वामानि वननीयानि धनानि धीमहिधारयाम ॥ ६ ॥

६. हम अनुष्ठान करनेवाले प्रेरक सविता देव की आज्ञा से अखण्ड-नीया देवी (भूमि) अदिति के निकट निरपराधी हों। हम सम्पूर्ण रमणीय या वाञ्छित धन धारण करें।

चातुर्मास्येषुवैश्वदेवेपर्वणिसावित्रस्यद्वादशकपालस्याविश्वदेवमित्यनुवाक्या सूत्रितंच—आविश्वदेवंसत्पतिंवाममद्यसवितरिति। प्रायणीयएषैवसवितुरनुवाक्या सूत्रितंच—आविश्वदेवं सत्पतिंयइमाविश्वाजातानीति। देवसुवांहविष्ष्वेषैवसवितुरनुवाक्या सूत्रितंच—आविश्वदेवंसत्प-तिंनममियेसवितुर्दैव्यस्यतद्विप्ति ।

सैषासप्तमी—

आविश्वदेवंसत्पतिंसूक्तैरद्यावृणीमहे । सत्यसवंसवितारम् ॥ ७ ॥

आ । विश्वऽदेवम् । सत्ऽपतिम् । सुऽउक्तैः । अद्य । वृणीमहे ।
सत्यऽसवम् । सवितारम् ॥ ७ ॥

विश्वदेवं विश्वेदेवायस्यवशेभवन्ति तंतादृशं तंहिसर्वात्मत्वादिन्द्रंमित्रंवरुणमग्निमाहुरित्यादिश्रुतेरितरेषांतद्विभूतित्वाद्व सत्पतिं सतामनुष्ठातॄणांपालकं सत्यसवं सत्यानुज्ञं सवितारंदेवं अद्यास्मिन्यागदिने सूक्तैरावृणीमहे संभजामहे ॥ ७ ॥

७. आज हम लोग इस यज्ञ-दिन में, सूक्तों (स्तोत्रों) के द्वारा सर्वदेवस्वरूप, अनुष्ठाताओं के पालक और सत्य शासक या रक्षक स[ि]ता देव का संभजन अथवा उपासना करते हैं।

यइमेउभेअहनीपुरएत्यप्रयुच्छन् । स्वाधीर्देवःसविता ॥ ८ ॥

यः । इमे इति । उभे इति । अहनी इति । पुरः । एति ।
अप्रऽयुच्छन् । सुऽआधीः । देवः । सविता ॥ ८ ॥

यःसवितादेवः स्वाधीः शोभनाध्यानः सुकर्मावासन् इमे अहनी रात्र्यहनी तयोःपुरः पुरस्तादप्रयुच्छन् अप्रमाद्यन्नेति गच्छति तमावृणीमहइतिसंबन्धः ॥ ८ ॥

८. जो सविता देव भली भाँति से ध्यान करने के योग्य हैं या सुन्दर कर्मवाले हैं। जो अप्रमत्त होकर दिन और रात के पुरोभाग में गमन करते हैं, उन सविता देव का हम इस यज्ञ-दिन में, सूक्तों के द्वारा संभजन अथवा उपासना करते हैं।

प्रायणीयेयइमाविश्वेतिसवितुर्याज्यासूत्रितंच—यइमाविश्वाजातानिसुत्रामाणंपृथिवींद्यामनेहसमिति । अश्वमेधेश्वमुत्सृज्यानुसवनंसावित्रीष्टिःकार्यातस्यामेषामाध्यन्दिनसवनेनुवाक्या सूत्रितंच—यइमाविश्वाजातान्यादेवोयातुसवितासुरत्नइति ।

सैषानवमी—

यइमाविश्वाजातान्याश्रावयतिश्लोकेन । प्रचसुवातिसविता ॥ ९ ॥ २८ ॥

यः । इमा । विश्वा । जातानि । आऽश्रवयति । श्लोकेन ।
प्र । च । सुवाति । सविता ॥ ९ ॥

---

१ ऋ० सं० २. ३. २२. ।

योदेवइमा इमानि विश्वा सर्वाणि जातानि उत्पन्नान्प्राणिनः जंगमानित्यर्थः तान् श्लो-केन यशसा आश्रावयति सर्वेप्यस्यस्तुतिंशृण्वन्तीत्यर्थः अथवा गर्जनशब्देन सर्वाणीमान्यु-त्पन्नानि आश्रावयति वृष्ट्युन्मुखःसन् किंच सविता प्रसुवातिचप्रेरयति तंवृणीमहइत्यर्थः॥ ९ ॥

९. जो सविता देव समस्त उत्पन्न प्राणियों के निकट यश सुनाते हैं अर्थात् सविता देव के यश को सब सुनते हैं, जो सब प्राणियों को प्रेरित करते हैं, उन सविता देव का इस यज्ञ-दिन में हम सूक्तों के द्वारा संभजन अथवा उपासना करते हैं।

अच्छावदेतिदशर्चमेकादशंसूक्तं भौमस्यात्रेरार्षं अत्रेयमनुक्रमणिका—अच्छदशात्रिः पार्जन्यमुपाद्यास्तिस्रोजगत्यः उपान्त्यानुष्टुबिति यत्पर्जन्येत्येषानवम्यनुष्टुप् विवृक्षानित्याद्या-स्तिस्रोजगत्यः शिष्टाःषट्त्रिष्टुभः पर्जन्योदेवता बृहद्दृग्विधानेशौनकः अच्छावदेतिसूक्तंतुवृष्टि-कामःप्रयोजयेत् ॥ निराहारःक्लिन्नवासाअचिरेणप्रवर्षति ॥ १ ॥ हुत्वायुतंवैवसीनांक्षीराक्तानां हुवाशने ॥ महद्वर्षमवाप्नोतिसूक्तेनाच्छावदेनहि ॥ २ ॥ अनेनसूक्तेनप्रत्यृचंवादिशउपस्थेयाः सूत्रितंच—संस्थितायांसर्वादिशउपतिष्ठेत अच्छावदतवसंगीर्भिराभिरितिचतसृभिः प्रत्यृचं सूक्तेनवेति ।

तत्रप्रथमा—

अच्छा॑वदत॒वसं॑गी॒र्भिरा॒भिःस्तु॒हिप॒र्जन्यं॒नम॒सावि॑वास ।
कनि॑क्रदद्वृष॒भोजी॒रदा॑नू॒रेतो॑दधा॒त्योष॑धीषु॒गर्भ॑म् ॥ १ ॥

अच्छ॑ । व॒द॒ । त॒वस॑म् । गीः॒ऽभिः । आ॒भिः । स्तु॒हि । प॒र्जन्य॑म् । नम॑सा । आ । वि॒वा॒स॒ । कनि॑क्रदत् । वृ॒ष॒भः । जी॒रऽदा॑नुः । रेतः॑ । द॒धा॒ति॒ । ओष॑धीषु । गर्भ॑म् ॥ १ ॥

हेस्तोतस्तवसं बलवन्तं पर्जन्यं अच्छाभिप्राप्य वद प्रार्थय पर्जन्यशब्दोयास्केनबहु-धानिरुक्तः पर्जन्यस्तृपेराद्यन्तविपरीतस्यतर्पयिताजन्यःपरोजेतावाजरयितावाप्रार्जयितावारसा-नामिति आभिर्गीर्भिःस्तुतिवाग्भिः स्तुहि नमसान्नेन हविर्लक्षणेनाविवास सर्वतःपरिचर यः पर्जन्योवृषभोपांवर्षिता जीरदानुः क्षिप्रदानः कनिक्रदत् गर्जनशब्दंकुर्वन्नोषधीषुगर्भं गर्भ-स्थानीयंरेतउदकं दधाति स्थापयति तंस्तुहि ॥ १ ॥

१. हे स्तोता, तुम बलवान् पर्जन्य देव के अभिमुखवर्ती होकर उनकी प्रार्थना करो। स्तुतिवचनों से उनका स्तवन करो। हविर्लक्षण अन्न से उनकी परिचर्या करो। जलवर्षक, दानशील, गर्जनकारी पर्जन्य वृष्टिपात-द्वारा ओषधियों को गर्भयुक्त करते हैं ।

विवृक्षान्हन्त्युतहन्तिरक्षसोविश्वंबिभायभुवनंमहावधात्।
उतानागाईषतेवृष्ण्यावतोयत्पर्जन्यःस्तनयन्हन्तिदुष्कृतः ॥ २ ॥

वि । वृक्षान् । हन्ति । उत । हन्ति । रक्षसः । विश्वम् । बिभाय ।
भुवनम् । महाऽवधात् । उत । अनागाः । ईषते । वृष्ण्यऽवतः ।
यत् । पर्जन्यः । स्तनयन् । हन्ति । दुःऽकृतः ॥ २ ॥

अयंमंत्रोनिरुक्तेस्पष्टव्याख्याततत्वात्तदेवात्रलिख्यते पर्जन्यःविहन्ति वृक्षान्विहन्तिच रक्षांसि सर्वाणिचास्माद्भूतानिबिभ्यति महावधान्महान्ह्यस्यवधोप्यनपराधोभीतः पलायते वर्षकर्मवतोयत्पर्जन्यस्तनयन्हन्ति दुष्कृतः पापकृतइति ॥ २ ॥

२. पर्जन्य वृक्षों को नष्ट करते हैं, राक्षसों का वध करते हैं और महान् वध-द्वारा समग्र भुवन को भय प्रदर्शित करते हैं। गरजनेवाले पर्जन्य पापियों का संहार करते हैं; अतएव निरपराधी भी वर्षण करनेवाले पर्जन्य के निकट से भीत होकर पलायमान हो जाते हैं।

रथीवकशयाश्वाँअभिक्षिपन्नाविर्दूतान्कृणुतेवर्ष्याँ३अह।
दूरात्सिंहस्यस्तनथाउदीरतेयत्पर्जन्यःकृणुतेवर्ष्यं१नभः ॥ ३ ॥

रथीऽइव । कशया । अश्वान् । अभिऽक्षिपन् । आविः । दूतान् ।
कृणुते । वर्ष्यान् । अह । दूरात् । सिंहस्य । स्तनथाः । उत् ।
ईरते । यत् । पर्जन्यः । कृणुते । वर्ष्यम् । नभः ॥ ३ ॥

रथीव रथस्वामीव सयथा कशयाश्वानभिक्षिपन् दूतान्भटानाविष्करोतितद्वदसौपर्जन्योपि कशयाश्वान्मेघान् अभिक्षिपन् अभिप्रेरयन् वर्ष्यान् वर्षकान्दूतान् दूतवद्वृष्टिप्रेरकान् मेघान् मरुतोवा आविष्कृणुते प्रकटयति अहइतिपूरणः एवंसति सिंहस्य सहतेर्हिंसतेर्वाशब्दकर्मणःसिंहशब्दः अवर्षणेनाभिभवितुः शब्दयितुर्वामेघस्य स्तनथाः गर्जनशब्दाः दूरादुदीरते उद्गच्छन्ति कदा यद्यदापर्जन्योनभोन्तरिक्षं वर्ष्यं वर्षोपेतं कृणुते करोति तदा ॥ ३ ॥

३. रथी जिस प्रकार से कशाघात-द्वारा अश्वों को उत्तेजित करके योद्धाओं को आविष्कृत करते हैं, उसी प्रकार पर्जन्य भी मेघों को प्रेरित करके वारिवर्षक मेघों को प्रकटित करते हैं। जब तक पर्जन्य जलद-समूह को अन्तरिक्ष में व्याप्त करते हैं, तब तक सिंह की तरह गरजनेवाले मेघ का शब्द दूर में ही उत्पन्न होता है।

प्रवातावान्तीतिचतुर्थीपर्जन्यस्यचरोर्याज्या सूत्रितंच—प्रवातावान्तिपतयन्तिविद्युतइत्यग्न्याधेयप्रभृतीनितितत्पाठस्तु ।

---

1 नि० १०. ११.।

अथचतुर्थी—

प्रवातावान्तिपतयन्तिविद्युतउदोषधीर्जिहतेपिन्वतेस्वः ।
इराविश्वस्मैभुवनायजायतेयत्पर्जन्यःपृथिवींरेतसावति ॥ ४ ॥

प्र । वाताः । वान्ति । पतयन्ति । विऽद्युतः । उत् । ओषधीः ।
जिहते । पिन्वते । स्वऽरितिस्वः । इरा । विश्वस्मै । भुवनाय ।
जायते । यत् । पर्जन्यः । पृथिवीम् । रेतसा । अवति ॥ ४ ॥

वाताःप्रवान्ति वातावृष्टयर्थंपतयन्ति गच्छन्ति समन्तात्संचरन्ति विद्युतओषधीरोषधय-उज्जिहते उद्गच्छन्ति प्रवर्धन्ते स्वरन्तरिक्षंपिन्वते क्षरति इराभूमिर्विश्वस्मैसर्वस्मै भुवनाय सर्व-जगद्धिताय जायते समर्थाभवति कदैवमिति यद्यदापर्जन्योदेवः पृथिवीं रेतसोदकेनावतिरक्षति अभिगच्छतिवा तदैवंभवति ॥ ४ ॥

४. जब तक पर्जन्य वृष्टि-द्वारा पृथिवी की रक्षा करते हैं, तब तक वृष्टि के लिए हवा बहती रहती है, चारों तरफ़ बिजलियाँ चमकती रहती हैं, ओषधियाँ बढ़ती रहती हैं, अन्तरिक्ष स्रवित होता रहता है और सम्पूर्ण भुवन की हितसाधना में पृथिवी समर्थ होती रहती है।

यस्यव्रतेपृथिवीनन्नमीतियस्यव्रतेशफवज्जर्भुरीति ।
यस्यव्रतओषधीर्विश्वरूपाःसनःपर्जन्यमहिशर्मयच्छ ॥ ५ ॥

यस्य । व्रते । पृथिवी । नन्नमीति । यस्य । व्रते । शफऽवत् ।
जर्भुरीति । यस्य । व्रते । ओषधीः । विश्वऽरूपाः । सः । नः ।
पर्जन्य । महि । शर्म । यच्छ ॥ ५ ॥ २७ ॥

यस्यपर्जन्यस्य व्रते कर्मणि पृथिवीनन्नमीति अत्यर्थंनमति सर्वेषामधोभवति यस्यव्रते शफवत् पादोपेतंगवादिकं जर्भुरीति भ्रियते पूर्यते गच्छतीतिवा यस्यव्रते कर्मण्योषधीरोष-ध्योविश्वरूपानानारूपाभवन्ति हेपर्जन्य सत्महांस्त्वं नोस्मभ्यं महिशर्म महत्सुखं यच्छ प्रयच्छ ॥ ५ ॥

५. हे पर्जन्य, तुम्हारे ही कर्म से पृथिवी अवनत होती हैं, तुम्हारे ही कर्म से पाद-युक्त या खुरविशिष्ट पशुसमूह पुष्ट होते हैं या गमन करते हैं। तुम्हारे ही कर्म से ओषधियाँ विविध वर्ण धारण करती हैं। तुम हम लोगों को महान् सुख प्रदान करो।

दिवोनोवृष्टिंमरुतोररीध्वंप्रपिन्वतवृष्णोअश्वस्यधाराः ।
अर्वाङेतेनस्तनयित्नुनेह्यपोनिषिञ्चन्नसुरःपितानः ॥ ६ ॥

दिवः । नः । वृष्टिम् । मरुतः । ररीध्वम् । प्र । पिन्वत । वृष्णः । अश्वस्य । धाराः । अर्वाङ् । एतेन । स्तनयित्नुना । आ । इहि । अपः । निऽसिञ्चन् । असुरः । पिता । नः ॥ ६ ॥

हेमरुतोयूयं दिवोन्तरिक्षसकाशात् नोस्मदर्थं वृष्टिं ररीध्वं दत्त वृष्णोवर्षकस्याश्वस्य व्यापकस्यमेघस्य संबन्धिन्योधाराउदकधाराः प्रपिन्वत प्रक्षरत हेपर्जन्य त्वमेतेन स्तनयित्नुना गर्जतामेघेन सहार्वांगस्मदभिमुखमेहि आगच्छ किंकुर्वन् अपोंभांसिनिषिंचन् सदेवोसुरः उदकानांनिरसितापिसन् नोस्माकं पितापालकश्च ॥ ६ ॥

६. हे मरुतो, तुम लोग अन्तरिक्ष से हम लोगों के लिए वृष्टि प्रदान करो। वर्षणकारी और सर्वव्यापी मेघ की उदक धारा को क्षरित करो (वर्साओ)। हे पर्जन्य, तुम जलसेचन करके गर्जनशील मेघ के साथ हम लोगों के अभिमुख आगमन करो। तुम वारिवर्षक और हम लोगों के पालक हो।

अभिक्रन्दस्तनयगर्भमाधाउदन्वतापरिदीयारथेन ।
दृतिंसुकर्षविषितन्यंञ्चंसमाभवन्तूद्वतोनिपादाः ॥ ७ ॥

अभि । क्रन्द । स्तनय । गर्भम् । आ । धाः । उदन्ऽवता । परिऽदीय । रथेन । दृतिम् । सु । कर्ष । विऽसितम् । न्यञ्चम् । समाः । भवन्तु । उत्ऽवतः । निऽपादाः ॥ ७ ॥

अभिभूम्यभिमुखं क्रन्द शब्दय तदेवपुनरुच्यतेदाढर्याय स्तनय गर्ज गर्भं गर्भस्थानीयमुदकमोषधीष्वाधाः आधेहि तदर्थमुदन्वता उदकवतारथेन परिदीय परितोगच्छ दृतिं दृतिवदुदकधारकं मेघं विषितं सु सुष्ठु कर्ष आकर्षवृष्ट्यर्थं यद्वा विषितं विमुक्तबंधनं एवंकर्षएवं शेषेण तंबद्धं न्यंचं न्यक्अधोमुखं विकृत उद्वतः ऊर्ध्ववन्तः उन्नतप्रदेशाः निपादाः न्यग्भूतपादाः निकृष्टपादावा निम्नोन्नतप्रदेशाः समाएकस्थाभवन्तु उदकपूर्णाभवंत्वित्यर्थः ॥ ७ ॥

७. पृथिवी के ऊपर तुम शब्द करो—गर्जन करो, उदक द्वारा ओषधियों को गर्भ-धारण कराओ, वारिपूर्ण रथ-द्वारा अन्तरिक्ष में परिभ्रमण करो, उदकधारक मेघ को वृष्टि के लिए आकृष्ट करो या विमुक्तबन्धन करो, उस बन्धन को अधोमुख करो, उन्नत और निम्नतम प्रदेश को समतल करो। अर्थात् सब उदकपूर्ण हो।

महान्तंकोशमुदचानिषिञ्चस्यन्दन्तांकुल्याविषिताःपुरस्तात् ।
घृतेनद्यावापृथिवीव्युन्धिसुप्रपाणंभवत्वघ्न्याभ्यः ॥ ८ ॥

४ महान्तम् । कोशम् । उत् । अच । नि । सिञ्च । स्यन्दन्ताम् ।

कुल्याः । विऽसिताः । पुरस्तात् । घृतेन । द्यावापृथिवी इति । वि । उन्धि । सुऽप्रपानम् । भवतु । अघ्न्याभ्यः ॥ ८ ॥

हेपर्जन्य त्वं महान्तं प्रवृद्धं कोशं कोशस्थानीयंमेघं उत्कृष्टमुदच उद्गच्छ उद्गमयवा तथाकृत्वा निषिंच नीचैःक्षारय कुल्यानद्योविषिताविष्यूताःसत्यः स्यन्दन्तां प्रवहन्तु पुरस्तात्पूर्वाभिमुखं प्रायेण नद्यः प्राच्यः स्यन्दन्ते घृतेनोदकेन द्यावापृथिवी दिवंचपृथिवींच व्युन्धि क्लेदयात्यधिकं अघ्न्याभ्योगोभ्यः सुप्रपानं सुष्ठु प्रकर्षेण पातव्यमुदकं भवतु ॥ ८ ॥

८. हे पर्जन्य, तुम कोशस्थानीय (जल-भाण्डार) महान् मेघ को ऊर्ध्व भाग में उत्तोलित करो एवम् वहाँ से उसे नीचे की ओर क्षारित करो अर्थात् वारिवर्षण कराओ। अप्रतिहत वेगशालिनी नदियाँ पूर्वाभिमुख या पुरोभाग में प्रवाहित हों। जल-द्वारा द्यावा-पृथिवी को क्लिन्न (आर्द्र) करो। गौओं के लिए पानयोग्य सुन्दर जल प्रचुर मात्रा में हो।

यत्पर्जन्यकनिक्रदत्स्तनयन्हंसिदुष्कृतः ।
प्रतीदंविश्वंमोदतेयत्किंचपृथिव्यामधि ॥ ९ ॥

यत् । पर्जन्य । कनिक्रदत् । स्तनयन् । हंसि । दुःऽकृतः । प्रति । इदम् । विश्वम् । मोदते । यत् । किम् । च । पृथिव्याम् । अधि ॥ ९ ॥

हेपर्जन्य यद्यदा त्वं कनिक्रददत्यर्थंशब्दयन् स्तनयन् दुष्कृतः पापकृतोमेघान्हंसि विदारयसि तदानीमिदं विश्वं जगत्प्रतिमोदते विश्वंविशेष्यते यत्किंच पृथिव्यामधिभूम्यामधिष्ठितं यच्चराचरात्मकं तदिदंविश्वं मोदते हृष्यति वृष्टेःसर्वजगत्प्रीतिकारणत्वंमसिद्धम् ॥ ९ ॥

९. हे पर्जन्य, जब तुम गम्भीर गर्जन करके पापिष्ठ मेघों को विदीर्ण करते हो, तब यह सम्पूर्ण विश्व और भूमि में अधिष्ठित चराचरात्मक पदार्थ हृष्ट होते हैं अर्थात् वृष्टि होने से सम्पूर्ण जगत् प्रसन्न होता है।

अवर्षीर्वर्षमुदुषूगृभायाकर्धन्वान्यत्येतवाउ ।
अजीजनओषधीर्भोजनायकमुतप्रजाभ्योविदोमनीषाम् ॥ १० ॥ २८ ॥

अवर्षीः । वर्षम् । उत् । ऊँ इति । सु । गृभाय । अकः । धन्वानि । अतिऽएतवै । ऊँ इति । अजीजनः । ओषधीः । भोजनाय । कम् । उत । प्रऽजाभ्यः । अविदः । मनीषाम् ॥ १० ॥ २८ ॥

इयमतिवृष्टिविमोचनी हेपर्जन्यत्वमवर्षीर्वृष्टवानसि वर्षमुदुषूगृभाय उदुत्कृष्टं सु सुष्ठुगृभाय गृहाण परिहरेत्यर्थः धन्वानि निरुदकप्रदेशानकःजलवतःकृतवानसि किमर्थं अत्येतवाउ अतिक्रम्यगन्तुं ओषधीरजीजनः उदपादयः किमर्थं भोजनाय धनाय भोगायवा कमित्ययंशिशिरंजीवनायकंमितिवत्पादपूरणः उतापिच प्रजाभ्यःसकाशात् मनीषां स्तुतिमविदः प्राप्तवानसि॥ १०॥

॥ इतिचतुर्थस्यचतुर्थेऽष्टाविंशोवर्गः ॥ २८ ॥

१ नि० १. १०.।

१०. हे पर्जन्य, तुमने वृष्टि की है। अभी वृष्टि संहारण करो। तुमने मरुभूमियों को सुगम्य बनाने के लिए जलयुक्त किया है। मनुष्यों के भोग के लिए ओषधियों को उत्पन्न किया है। प्रजाओं के समीप से तुमने स्तुतियां प्राप्त की हैं।

बळित्थेतितृचात्मकंद्वादशंसूक्तं भौमस्यात्रेरार्षं पृथिवीदेवताकं आनुष्टुभं अनुक्रान्तंच— बळित्थातृचंपार्थिवमानुष्टुभमिति सूक्तविनियोगोलैंगिकः आद्यादेवानांहविःषुपृथिव्याअनुवाक्यावळित्थापर्वतानांदह्लाचिद्यावनस्पतीनितिहिसूत्रितं। भूमिस्तोमेत्येषामरुत्वतीयशंसेसूक्तमुखीया।

बळित्थापर्वतानांखिद्रंबिभर्षिपृथिवि।
प्रयाभूमिंप्रवत्वतिमह्नाजिनोषिमहिनि ॥ १ ॥

बट्। इत्था। पर्वतानाम्। खिद्रम्। बिभर्षि। पृथिवि। प्र। या। भूमिम्। प्रवत्वति। मह्ना। जिनोषि। महिनि ॥ १ ॥

द्विरूपापृथिवीचैषा प्रत्यक्षादेवतापिच। मध्यस्थानादेवतोक्ता सात्र संबोध्यवर्ण्यते॥ हेपृथिवि विप्रथनवति मध्यस्थानदेवतेत्वं इत्थाइत्थं अत्र अमुत्रान्तरिक्षेवा बट् सत्यं पर्वतानां मेघानांवाखिद्रं खेदनं भेदनं बिभर्षि धारयसि हेमहिनि महति हेप्रवत्वति प्रकर्षवति प्रवणोदकवतिवायात्वं भूमिं प्रत्यक्षांपृथिवीं मह्ना महत्वेन महतोदकेनवा प्रजिनोषि प्रकर्षेणप्रीणयसि ॥१॥

१. हे पृथिवी (हे मध्य स्थान की देवी), तुम यहाँ अन्तरिक्ष में पर्वतों या मेघों के भेदन को धारण करती हो। तुम बलशालिनी और श्रेष्ठ हो: क्योंकि तुम माहात्म्य-द्वारा पृथिवी को प्रसन्न करती हो।

स्तोमासस्त्वाविचारिणिप्रतिष्टोभन्त्यक्तुभिः।
प्रयावाजंनहेषन्तंपेरुमस्यस्यर्जुनि ॥ २ ॥

स्तोमासः। त्वा। विऽचारिणि। प्रति। स्तोभन्ति। अक्तुऽभिः। प्र। या। वाजम्। न। हेषन्तम्। पेरुम्। अस्यसि। अर्जुनि ॥ २ ॥

हेविचारिणि विविधंचरणशीले पृथिविदेवि त्वां स्तोमासः स्तोतारः अक्तुभिर्गमनशीलैः स्तोत्रैः प्रतिष्टोभन्ति अभिष्टुवन्ति किंच यात्वं हेषंतं शब्दयन्तं वाजंन अश्वमिव अद्भ्यः पेरुं पूरकं मेघं प्रास्यसि प्रक्षिपसि हेअर्जुनि शुभ्रवर्णे गमनशीलेवा ॥ २ ॥

२. हे विविध प्रकार से गमन करनेवाली पृथिवी देवी, स्तोता लोग गमनशील स्तोत्रों-द्वारा तुम्हारा स्तवन करते हैं। हे अर्जुनी (शुभ्रवर्णे या गमनशीले) तुम शब्द करनेवाले अश्व की तरह जलपूर्ण मेघ को प्रक्षिप्त करते हो।

देवानांहविःषुदृह्लाचिदितिपृथिव्यायाज्या एषैवभूमिः स्तोमेनिष्केवल्येऽक्त्र्युवीया स्तृ-
त्रंतु पूर्वमेवोदाहृतं ।

दृह्ला चिद्या वनस्पतीन्क्ष्मया दर्धर्ष्योर्जसा ॥
यत्ते अभ्रस्य विद्युतो दिवो वर्षन्ति वृष्टयः ॥ ३ ॥ १९ ॥

दृह्ला । चित् । या । वनस्पतीन् । क्ष्मया । दर्धर्षि । ओर्जसा ।
यत् । ते । अभ्रस्य । विऽद्युतः । दिवः । वर्षन्ति । वृष्टयः ॥३॥२९ ॥

हेपृथिवि यात्वं दृह्लाचित् सुपांसुलुगितितृतीयायाआकारः दृढया क्ष्मया भूम्या सहव-नस्पतीन् वृक्षान् ओजसा बलेन दर्धर्षि धारयसि अथवा दृह्लेतिविधेयविशेषणं वनस्पतीन् दृह्लान्कृत्वा धारयसीत्यर्थः यत् अस्यास्ते तवसंबंधिनोवृष्टयोवर्षकामेघाः विद्युतोविद्योतमा-नात् अभ्रस्य पंचम्यर्थेषष्ठी अभ्रादपांहर्तुः दिवोन्तरिक्षादादित्याद्वावर्षन्ति अथवा यद्यस्यास्ते तवाभ्रस्यमेघस्य वृष्टयः उदकसंघाताः विद्युतोविद्योतमानायादिवःसकाशाद्वर्षन्ति पतन्ति ॥३॥

३. हे पृथिवी, जब की विद्योतमान अन्तरिक्ष से तुम्हारे सम्बन्धी मेघ वृष्टि पातित करते हैं, तब तुम दृढ़ भूमि के साथ वनस्पतियों को धारण करती हो अथवा वनस्पतियों को दृढ़ करके धारण करती हो।

॥ इतिचतुर्थस्यचतुर्थेएकोनत्रिंशोवर्गः ॥ २९ ॥

प्रसंम्राजइत्यष्टर्चंत्रयोदशंसूक्तं आत्रेयं त्रैष्टुभं वारुणं अनुक्रम्यतेच—प्रसंम्राजेष्टौवारु-णमिति । विनियोगोलैंगिकः ।

तत्रप्रथमा—

प्र सम्राजे बृहदर्चा गभीरं ब्रह्म प्रियं वरुणाय श्रुताय ।
वि यो जघान शमितेव चर्मोपस्तिरे पृथिवीं सूर्याय ॥ १ ॥

प्र । सम्ऽराजे । बृहत् । अर्च । गभीरम् । ब्रह्म । प्रियम् । वरुणाय ।
श्रुताय । वि । यः । जघान । शमिताऽइव । चर्म ।
उपऽस्तिरे । पृथिवीम् । सूर्याय ॥ १ ॥

अग्निः स्वात्मानंसंबोध्य ब्रवीति हेअग्ने त्वं सम्राजे सम्यग्राजमानायईश्वराय श्रुताय सर्वत्रश्रूयमाणाय वरुणाय उपद्रवस्यनिवारकाय जनानामावरकाय एतन्नामकायदेवाय बृहत्प्रभूतं गभीरं दुरवगाहं बह्वर्थोपेतं प्रियं प्रियभूतं ब्रह्म स्तोत्ररूपंकर्म प्रार्च प्रार्चय प्रो-च्चारयेत्यर्थः योवरुणः शमितेवचर्म शमितापशुविशसनकर्ता यथोपस्तरणाय चर्म हन्ति

तद्वत्पृथिवीं विस्तीर्णमन्तरिक्षं तृतीयस्यांपृथिव्यामिति श्रुतेरन्तरिक्षस्यापिपृथिवीशब्दवाच्यत्वं सूर्याय सूर्यस्य उपस्तिरे आस्तरणाय विजघान विस्तारयामास विस्तृतंहि व्यवहारयोग्यं भवति तस्माद्व्यवहारायान्तरिक्षं विस्तारितवान् उरुंहिराजावरुणश्चकारेतिह्युक्तम् ॥ १ ॥

१. हे अत्रि, तुम भली भाँति से राजमान, सर्वत्र विश्रुत (प्रसिद्ध) और उपद्रवों के निवारक वरुण देव के लिए प्रभूत, दुरवगाह (बहुत अर्थ से युक्त) और प्रिय स्तोत्र का उच्चारण करो। पशु-हन्ता जिस प्रकार से निहत पशुओं के चर्म को विस्तृत करता है, उसी प्रकार वे सूर्य के आस्तरणार्थ अन्तरिक्ष को विस्तारित करते हैं।

वनेषुव्य१न्तरिक्षंततानवाजमर्वत्सुपयउस्रियासु ।
हृत्सुक्रतुंवरुणोअप्स्व१ग्निंदिविसूर्यमदधात्सोममद्रौ ॥ २ ॥

वनेषु । वि । अन्तरिक्षम् । ततान । वाजम् । अर्वत्ऽसु । पयः ।
उस्रियासु । हृत्ऽसु । क्रतुम् । वरुणः । अप्ऽसु । अग्निम् । दिवि ।
सूर्यम् । अदधात् । सोमम् । अद्रौ ॥ २ ॥

अयंवरुणोवनेषुवृक्षाग्रेषु अन्तरिक्षंविततान विस्तारितवान् तथावाजसनेयकं वनेषुहीदं एषु वृक्षाग्रेष्वन्तरिक्षंविततं तस्मादाहवनेषु व्यन्तरिक्षंततानेति वाजं बलमर्वत्सु अश्वेषु ततान पयःक्षीरमुस्रियासु गोषु उस्रियेति गोनाम उस्राविणोस्यांभोगाइतितद्व्युत्पत्तिः हृत्सु हृदयेषु क्रतुं कर्मसंकल्पं यद्धि मनसाध्यायति तत्कर्मणाकरोति अप्सूदकेषुअग्निं वैद्युतं और्वंवा सर्वत्र विततानेतिसंबन्धः किंच दिवि द्युलोके सूर्यमदधात् स्थापितवान्सोमंचाद्रौपर्वते अदधात् ॥ २ ॥

२. वरुणदेव वृक्षों के उपरिभाग में अन्तरिक्ष को विस्तारित करते हैं। अश्वों में बल, गौओं में दुग्ध और हृदय में संकल्प विस्तारित करते हैं। वे जल में अग्नि, अन्तरिक्ष में सूर्य और पर्वतों पर सोमलता स्थापित करते हैं।

नीचीनबारंवरुणःकवन्धंप्रससर्जरोदसीअन्तरिक्षम् ।
तेनविश्वस्यभुवनस्यराजायवंनवृष्टिर्व्युनत्तिभूम ॥ ३ ॥

नीचीनऽबारम् । वरुणः । कवन्धम् । प्र । ससर्ज । रोदसी इति ।
अन्तरिक्षम् । तेन । विश्वस्य । भुवनस्य । राजा । यवम् । न ।
वृष्टिः । वि । उनत्ति । भूम ॥ ३ ॥

नीचीनबारं अधोमुखंबिलं प्रससर्ज सृष्टवान् कं कवंधं कवनमुदकं तद्धीयतेऽस्मिन्निति कवन्धोमेघः तंतथाकरोत् अथवा कवन्धमुदकं तदुदकं नीचीनबारं नीचीननिर्गमनबिलंयथाकार

१ तै० सं० १.२.१२. । २ ऋ० सं० १.२.१४. ।

मेघं विदार्योदकमधोमुखंचकारेत्यर्थः किंमतीतीत्युच्यते रोदसी द्यावापृथिव्यौ अन्तरिक्षंच प्रति लोकत्रयहितायेत्यर्थः तेनोदकेन विश्वस्यसर्वस्यभुवनस्य भूतजातस्य राजा स्वामीवरुणोभूम भूमिं व्युनत्तिक्लेदयतिवृष्टिः सेक्ता पुमान् यवंन यवमिवयवान्यथाप्ररोहायसर्वंत्रप्रसारयतितद्वत् भूमिं सर्वंत्रोनत्ति अथवावृष्टिर्वरुणइतिसंबन्धः वर्षकःपर्जन्यइत्यर्थः अस्मिन्पक्षेयवंपुरुषइवेतिपुरुषशब्दोध्याहार्यः अत्रनीचीनबारंवरुणःकबन्धमित्यादिंनिरुक्तंद्रष्टव्यम् ॥ ३ ॥

३. वरुणदेव स्वर्ग, पृथिवी और अन्तरिक्ष के हित के लिए मेघ के निम्न-भाग को सछिद्र करते हैं। वृष्टि जिस प्रकार से यव आदि शस्य को सिक्त करती है, उसी प्रकार अखिल भुवन के अधिपति वरुणदेव समग्र भूमि को आर्द्र करते हैं।

उनत्तिभूमिंपृथिवीमुतद्यांयदादुग्धंवरुणोवष्ट्यादित् ।
समभ्रेणवसतपर्वतासस्तविषीयन्तःश्रथयन्तवीराः ॥ ४ ॥

उनत्ति । भूमिम् । पृथिवीम् । उत । द्याम् । यदा । दुग्धम् ।
वरुणः । वष्टि । आत् । इत् । सम् । अभ्रेण । वसत । पर्वतासः ।
तविषीऽयन्तः । श्रथयन्त । वीराः ॥ ४ ॥

वरुणोभूमिंपृथिवीं प्रथितमन्तरिक्षं अन्तरिक्षस्यापिपृथिवीशब्दवाच्यत्वं पूर्वमुक्तं उतापिच द्यां द्युलोकं उनत्ति क्लेदयति यदायंदुग्धं उदकपूरणं वष्टि कामयते अथवा दुग्धमुदकं तेनतत्कार्यमोषध्यादिकंलक्ष्यते ओषध्यादयः प्रवर्धन्तामितियदाकामयते आदिदनन्तरमेव संवसत समाच्छादयन्ति केपर्वतासः पर्ववन्तोद्रयः केन अभ्रेणमेघेन किंच विषीयन्तोबलमिच्छन्तोवीराविशेषेणवृष्टेःप्रेरयितारोमरुतः श्रथयन्त श्रथयन्तिमेघान् ॥ ४ ॥

४. वरुणदेव जब वृष्टिरूप दुग्ध की कामना करते हैं, तब वे पृथिवी, अन्तरिक्ष और स्वर्ग को आर्द्र करते हैं। अनन्तर पर्वतसमूह वारिदों के द्वारा शिखरों को आवृत करते हैं। मरुद्गण अपने बल से उल्लसित होकर मेघों को शिथिल करते हैं।

इमामूष्वासुरस्यश्रुतस्यमहींमायांवरुणस्यप्रवोचम् ।
मानेनेवतस्थिवाँअन्तरिक्षेवियोममेपृथिवींसूर्येण ॥ ५ ॥ ३० ॥

इमां । ऊँ इति । सु । आसुरस्यं । श्रुतस्यं । महीम् । मायाम् ।
वरुणस्य । प्र । वोचम् । मानेनऽइव । तस्थिऽवान् । अन्तरिक्षे । वि ।
यः । ममे । पृथिवीम् । सूर्येण ॥ ५ ॥ ३० ॥

---

१ नि० १०. ४.।

आसुरस्य असुरसंबन्धिनः असुराणामस्यचवध्यघातकभावःसंवन्धः असुरहन्तुरित्यर्थः अथवा असुरोमेघः प्राणदानात्तत्संबन्धिनः श्रुतस्य विश्रुतस्य महीं महतीं इमां मायां प्रज्ञां प्रवोचं प्रब्रवीमि कैषामायेतिसोच्यते योवरुणोन्तरिक्षेतस्थिवान् तिष्ठन् मानेनेव दंडेनेव सूर्येण पृथिवीमन्तरिक्षं विममे परिच्छिनत्ति तस्यैषामाया ॥ ५ ॥

५. हम प्रसिद्ध असुरहन्ता वरुणदेव की इस महती प्रज्ञा की घोषणा करते ह। जो वरुणदेव अन्तरिक्ष में अवस्थित होकर मानदण्ड की तरह सूर्य-द्वारा पृथिवी और अन्तरिक्ष को परिच्छिन्न करते हैं।

॥ इतिचतुर्थस्यचतुर्थेत्रिंशोवर्गः ॥ ३० ॥

इमामूनुकवितंमस्यमायांमहींदेवस्यनकिरादधर्षं ।
एकंयदुद्नानपृणन्त्येनीरासिञ्चन्तीरवनयःसमुद्रम् ॥ ६ ॥

इमाम् । ऊँ इति । नु । कविऽतमस्य । मायाम् । महीम् । देवस्य । नकिः । आ । दधर्ष । एकम् । यत् । उद्ना । न । पृणन्ति । एनीः । आऽसिञ्चन्तीः । अवनयः । समुद्रम् ॥ ६ ॥

कवितमस्य प्रकृष्टप्रज्ञस्य देवस्य द्योतमानस्य स्तुत्यस्य वा वरुणस्येमांसर्वप्रसिद्धां महीं महतीं मायां प्रज्ञां नकिर्नैवआदधर्ष नहिनस्तिकश्चिदपि ऊन्विति पूरणौ यद्यस्मादेकं समुद्रं उद्ना उदकेन नपृणन्ति नपूरयन्ति काः एनीः एन्यः शुभ्राः गमनशीलावा आसिंचन्ती उदकमासिंचयंत्यः अवनयोनद्यः बह्वयोनद्यः सर्वदोदकेनपूरयंत्योपि नैकमपिसमुद्रंपूरयन्तीति एतद्वरुणस्य महत्कर्मेति अत्रान्तरिक्षविस्तारादिसमुद्रापूरणपर्यन्तंकर्म परमेश्वरस्यैवोचितं नवरुणस्येतिनवाच्यं तस्यवरुणादिरूपावस्थानात् एषब्रह्मेत्यादिश्रुतेः ॥ ६ ॥

६. प्रकृष्ट ज्ञानसम्पन्न और द्युतिमान् वरुणदेव की सर्वप्रसिद्ध महती प्रज्ञा की हिंसा (खण्डन) कोई नहीं कर सकता है। जल-सेचनकारिणी शुभ्र नदियाँ वारि-द्वारा एकमात्र समुद्र को भी पूर्ण नहीं कर सकती हैं। यह वरुण का महान कर्म है।

अर्यम्यंवरुणमित्र्यंवासखायंवासदमिद्भ्रातरंवा ।
वेशंवानित्यंवरुणारणंवायत्सीमागश्चकृमाशिश्रथस्तत् ॥ ७ ॥

अर्यम्यम् । वरुण । मित्र्यम् । वा । सखायम् । वा । सदम् । इत् । भ्रातरम् । वा । वेशम् । वा । नित्यम् । वरुण । अरणम् । वा । यत् । सीम् । आगः । चकृम । शिश्रथः । तत् ॥ ७ ॥

हेवरुणअर्यम्यं अर्यमैवार्यम्यः स्वार्थिकोयत् अतैरिदंरूपं प्रदातारमित्यर्थः अथवा इरज्यान्मननाद्यशास्तीतिअर्यमा गुरुः तंवा अथवा मित्र्यं ञिमिदास्नेहनइत्यस्मात्स्वार्थिकोयत्

अनुरक्तमित्यर्थः वाअथवा सखायं समानख्यानं सदमित् सर्वदैव भ्रातरंवा नित्यं निरन्तरं वेशं निकटनिकेतनवर्तिनंवा अरणंवा अशब्दमित्यर्थः अथवा रणमदातारंवा नित्यंनिरन्तरं एतान्प्रतियत्तीं यदेतदागोपराधं चकृम तच्छिश्रथोस्मत्तोविनाशय ॥ ७ ॥

७. हे वरुण, यदि हम लोग कभी किसी दाता, मित्र, वयस्य, भ्राता, पड़ोसी अथवा मूक के प्रति कोई अपराध करें, तो उन अपराधों का विनाश करो।

कितवासोयद्रिरिपुर्नदीवियद्वाघासत्यमुतयंनविद्म ।
सर्वानाविष्यंशिथिरेवदेवाधातेस्यामवरुणप्रियासः ॥ ८ ॥ ३१ ॥

कितवासः । यत् । रिरिपुः । न । दीवि । यत् । वा । घ । सत्यम् । उत । यत् । न । विद्म । सर्वा । ता । वि । स्य । शिथिराऽइव । देव । अध । ते । स्याम । वरुण । प्रियासः ॥ ८ ॥ ३१ ॥

कितवासः कितवाद्यूतकृतः किंतवास्ति सर्वं मयाजितमितिवदतीतिकितवः नदीवि नदेवने द्यूते यथायद्रिरिपुः लेपयन्ति पापमारोपयन्ति यदस्मासु द्वेष्टारोमयि त्वमेतत्पापमकरोरित्याक्षिपन्ति अत्र पुरस्तादुपचारोपिनकारउपमार्थीयः वा अथवा घेतिपूरणः यत्पापंसत्यं आरोपमन्तरेणकृतवन्तःस्म उत अपिच यत्कृतंपापं नविद्म नजानीमः ता तानि सर्वा सर्वाणि शिथिरेव शिथिलानीव शिथिलबन्धनानिफलानीव विष्य मोचय स्यतिरुपसृष्टोविमोचने हे-देव अध अनन्तरं ते तव प्रियासः प्रियाः स्याम भवेम ॥ ८ ॥

८. हे वरुणदेव, द्यूतक्रीड़ा-द्वारा प्रवञ्चनाकारी पाशक्रीड़क की तरह यदि हम लोग ज्ञानपूर्वक या अज्ञानपूर्वक कोई अपराध करें, तो तुम शिथिल बन्धन की तरह उन्हें मुक्त करो। हे देव, अनन्तर हम तुम्हारे प्रियपात्र हों।

॥ इतिचतुर्थस्यचतुर्थेएकत्रिंशोवर्गः ॥ ३१ ॥

इन्द्राग्नीयमितिषळृचंचतुर्दशंसूक्तं अत्रेरार्षमानुष्टुभमैन्द्राग्नं षष्ठीविराट्पूर्वा आद्यौदशकावष्टकास्त्रयइतिपरिभाषितत्वात् तथाचानुक्रान्तम्—इन्द्राग्नीषळैन्द्राग्नमानुष्टुभंविराट्पूर्वान्तमिति विनियोगोलैंगिकः ।

तत्रप्रथमा—

इन्द्राग्नीयमवथउभावाजेषुमर्त्यम् ।
दृळ्हाचित्सप्रभेदतिद्युम्नावाणीरिवत्रितः ॥ १ ॥

इन्द्राग्नी इति । यम् । अवथः । उभा । वाजेषु । मर्त्यम् । दृळ्हा । चित् । सः । प्र । भेदति । द्युम्ना । वाणीःऽइव । त्रितः ॥ १ ॥

हेइन्द्राग्नी उभा उभौ परस्पराविवियुक्तौ युवां यंमर्त्यमवथः रक्षथः वाजेषु संग्रामेषु समर्त्योंदृह्लाचिद् दृढान्यपिद्युम्ना द्योतमानानि धनानिशत्रुसंबन्धीनि प्रभेदति प्रकर्षेणभिनत्ति त्रितऋषिर्वाणीरिव प्रतिवादिवाक्यानीव अथवा त्रिषुस्थानेषु वर्तमानोग्निः शत्रूणां वाक्यानीव ॥ १ ॥

१. हे इन्द्र और अग्नि, तुम दोनों संग्राम में मर्त्य की रक्षा करो। वे शत्रु-सम्बन्धी द्युतिमान् धन को अतिशय भिन्न करते हैं। वे प्रतिवादियों के वाक्य का खण्डन करते हैं और शत्रुओं के वाक्य की तरह तीनों स्थानों में वर्तमान रहते हैं।

यापृतनासुदुष्टरायावाजेषुश्रवाय्या ।
यापञ्चचर्षणीरभीन्द्राग्नीताहवामहे ॥ २ ॥

या । पृतनासु । दुस्तरा । या । वाजेषु । श्रवाय्या । या । पञ्च ।
चर्षणीः । अभि । इन्द्राग्नी इति । ता । हवामहे ॥ २ ॥

या याविन्द्राग्नी पृतनासु संग्रामेषु दुष्टरा दुष्टरौ अनभिभाव्यौ या यौच वाजेषु संग्रामेषु अन्नेषुवा श्रवाय्या श्रवाय्यौ स्तुत्यौ या यौ पंचचर्षणीः चर्षणयोमनुष्याः तानभिरक्षत-इतिशेषः ता तौ महानुभावौहवामहे स्तुमः ॥ २ ॥

२. जो इन्द्र और अग्नि संग्राम में अनभिभवनीय हैं, जो संग्राम में या अन्न के विषय में स्तवनीय हैं और जो पञ्चश्रेणी के मनुष्यों की रक्षा करते हैं, उन दोनों महानुभावों का हम लोग स्तवन करते हैं।

तयोरिदमवच्छवस्तिग्मादिद्युन्मघोनोः ।
प्रतिद्रुणागभस्त्योर्गवांवृत्रघ्नएषते ॥ ३ ॥

तयोः । इत् । अमऽवत् । शवः । तिग्मा । दिद्युत् । मघोनोः । प्रति ।
द्रुणा । गभस्त्योः । गवाम् । वृत्रऽघ्ने । आ । ईषते ॥ ३ ॥

अमवद् अभिभावुकं शवोबलं तयोरित् तयोरेव मघोनोर्मघवतोरन्नवतोर्धनवतोर्वा तयोर्दिद्युद् वज्रं तिग्मा तीक्ष्णं वर्तते गभस्त्योर्हस्तयोः एवंभूतौदेवौ गवामुदकानां पणिभिरपहृतानांवागवांलाभाय द्रुणा द्रुविकारेण गमनशीलेनवैकेनरथेन वृत्रघ्ने आवरकमेघहननाय तथाविधवृत्रासुरवधायवा प्रतिईषते प्रतिगच्छतः ॥ ३ ॥

३. इन दोनों का बल शत्रुओं को पराभूत करनेवाला है। जब ये दोनों देव एक रथ पर आरूढ़ होकर धेनुओं के उद्धारार्थ और वृत्र के विनाशार्थ गमन करते हैं, तब इन दोनों धनवानों के हाथों में तीक्ष्ण वज्र विराजमान रहता है।

अथचतुर्थी—

तावामेषेरथानामिन्द्राग्नीहवामहे।
पतीतुरस्यराधसोविद्वांसागिर्वणस्तमा ॥ ४ ॥

ता। वाम्। एषे। रथानाम्। इन्द्राग्नी इति। हवामहे। पती इति। तुरस्य। राधसः। विद्वांसा। गिर्वणःऽतमा ॥ ४ ॥

हेदेवौ ता तौ वक्ष्यमाणगुणौ वां युवां हवामहे स्तुमः किमर्थं रथानामेषेयुद्धे रथानांप्रेरणाय कीदृशौयुवां इन्द्राग्नीइंद्रमग्निंचपरस्परयुग्मभूतौ तुरस्य जंगमरूपस्य राधसोधनादिलक्षणस्य धनस्य पती स्वामिनौ विद्वांसा सर्वज्ञौ गिर्वणस्तमा गीर्भिर्वननीयतमौ ईदृशौयुवां हवामहे॥४॥

४. हे गमनशील, धन के अधिपति, सर्वज्ञ तथा निरतिशय वन्दनीय इन्द्र और अग्नि, युद्ध में रथ प्रेरित करने के लिए हम लोग तुम दोनों का आह्वान करते हैं।

तावृधन्तावनुद्यून्मर्तायदेवावदभा।
अर्हन्ताचित्पुरोदधेंशेवदेवावर्वते ॥ ५ ॥

ता। वृधन्तौ। अनु। द्यून्। मर्ताय। देवौ। अदभा। अर्हन्ता। चित्। पुरः। दधे। अंशाऽइव। देवौ। अर्वते ॥ ५ ॥

ता तौ अनुद्यून् प्रतिदिनं वृधन्तौ वर्धमानौ सर्वदाप्रवृद्धावित्यर्थः पर्धनेदृष्टान्तः मर्तेव मनुष्याविव तौयथाप्रतिदिनंवर्धेते देवौ द्योतमानौ अदभा अहिंस्यौ अर्हंताचित् प्रकर्षेणपूज्यौ चिदितिपूजायां तादृशौमहानुभावौदेवावर्वतेश्वलाभाय पुरोदधे पुरस्कुर्वे अंशेव अंशोनामद्वादशादित्यमध्यवर्तीदेवः सभगस्याप्युपलक्षकः अंशाविव आदित्याविवदीप्तावित्यर्थः ॥ ५ ॥

५. हे अहिंसनीय देवद्वय, हम लोग अश्व लाभ के लिए तुम दोनों का स्तवन करते हैं। तुम दोनों मनुष्यों की तरह सर्वदा वर्द्धमान होते हो एवम् आदित्यद्वय की तरह दीप्तिमान् हो।

अथषष्ठी—

एवेन्द्राग्निभ्यामहाविहव्यंशूष्यंघृतंनपूतमद्रिभिः।
तासूरिषुश्रवोबृहद्रयिंगृणत्सुदिधृतमिषंगृणत्सुदिधृतम् ॥६॥३२॥

एव। इन्द्राग्निऽभ्याम्। अहावि। हव्यम्। शूष्यम्। घृतम्। न। पूतम्। अद्रिऽभिः। ता। सूरिषु। श्रवः। बृहत्। रयिम्। गृणत्ऽसु। दिधृतम्। इषम्। गृणत्ऽसु। दिधृतम् ॥ ६ ॥ ३२ ॥

एव एवं इदानींक्रियमाणप्रकारेणस्तुतिसाहित्येनेत्यर्थः इन्द्राग्निभ्यां हव्यं हविः अहावि परित्यक्तमासीत् कीदृशंतत् शूष्यं बलकरं किमिव अद्रिभिर्ग्रावभिः पूतमभिषुतं घृतंन सोमरसमिव तद्यथायुवाभ्यांप्रदीयते तद्वच्चरुपुरोडाशादिकमपि ता तौदेवौ सूरिषु मेधाविष्वस्मासु बृहत्प्रभूतं श्रवोन्नं यशोवा रयिंधनंच दिधृतं धारयतं इषमन्नं गृणत्सु स्तुवत्सु दिधृतंपुनरुक्तिरादरार्था ॥ ६ ॥

६. पत्थरों-द्वारा पिसे हुए सोमरस की तरह बलकारक हव्य सम्प्रति प्रदत्त हुआ है। तुम दोनों ज्ञानियों को अन्न प्रदान करो। स्तवकारियों को प्रभूत धन और अन्न प्रदान करो।

॥ इतिचतुर्थस्यचतुर्थेद्वात्रिंशोवर्गः ॥ ३२ ॥

प्रवोमहइतिनवर्चंपंचदशंसूक्तं एवयामरुदाख्यस्यात्रेयस्यमुनेरार्षं मरुद्देवताकमतिजगतीछन्दस्कं तथाचानुक्रमणिका—प्रवोनवैवयामरुन्मारुतमतिजागतमिति। दशरात्रेषष्ठेहनितृतीयसवनेच्छावाकशस्त्रे इदंसूक्तं सूत्रितंच—एवयामरुदुक्थोवृषाकपिनेति।

प्रवो॑म॒हे॑म॒तयो॑यन्तु॒विष्ण॑वेम॒रुत्व॑तेगिरि॒जाए॑व॒याम॑रुत्।
प्रशर्धा॑य॒प्रय॑ज्यवेसु॒खा॒दये॑त॒वसे॑भ॒न्ददि॑ष्टये॒धुनि॑व्रताय॒शव॑से ॥ १ ॥

प्र। वः। म॒हे। म॒तयः॑। य॒न्तु॒। विष्ण॑वे। म॒रुत्व॑ते। गि॒रि॒ऽजाः॑। ए॒व॒याम॑रुत्। प्र। शर्धा॑य। प्रऽय॑ज्यवे। सु॒ऽखा॒दये॑। त॒वसे॑। भ॒न्दत्ऽइ॑ष्टये। धुनि॑ऽव्रताय। शव॑से ॥ १ ॥

प्रयन्तु प्रगच्छन्तु गिरिजाः वाचिनिष्पन्नामतयस्स्तुतयः कस्मै वस्तुभ्यं वचनव्यत्ययः विष्णवेव्याप्तायेन्द्राय विष्णवेवा मरुत्वते मरुद्भिस्तद्वते कस्यस्तुतयइत्युच्यते एवयामरुत् एतन्नामकस्यऋषेः षष्ठ्यालुक् अथवा यन्मृषिर्गिरिजाः स्तुतेर्जनयिताभवति उत्तरार्धेमरुत्स्तुतिः किंच प्रयन्तुस्तुतयः कस्मै शर्धाय बलाय मारुताय इतरत्सर्वंबलविशेषणं प्रयज्यवे प्रकर्षेणयष्टव्याय सुखादयेशोभनाभरणाय खादिराभरणविशेषः हस्तेषुखादिश्चंपत्सुखादयइतिचश्रुतेः तवसे बलवते भंददिष्टये स्तुतिरूपाइष्टिर्यस्यतत्भन्ददिष्टि तस्मै धुनिव्रताय मेघानांचालनं कर्मयस्य तादृशाय शवसे गमनवते ॥ १ ॥

१. एवया ऋषि के वचन-निष्पन्न स्तोत्र मरुतों के साथ विष्णु के निकट उपस्थित हों एवम् वे ही स्तोत्र बलशाली, पूजनीय, शोभनालंकृत, शक्तिसम्पन्न, स्तुतिप्रिय, मेघसञ्चालनकारी और द्रुतगामी मरुतों के निकट उपस्थित हों।

---

१ ऋ०सं० २. ४. ६.। २ ऋ० सं० ४. ३. १६.।

अथद्वितीया--

प्रयेजातामहिनायेचनुस्वयंप्रविद्मनाब्रुवतएवयामरुत्।
क्रत्वातद्वोमरुतोनाधृषेशवोदानामह्नातदेषामधृष्टासोनाद्रयः ॥२॥

प्र। ये। जाताः। महिना। ये। च। नु। स्वयम्। प्र। विद्मना।
ब्रुवते। एवयामरुत्। क्रत्वा। तत्। वः। मरुतः। न। आऽधृषे।
शवः। दाना। मह्ना। तत्। एषाम्। अधृष्टासः। न। अद्रयः ॥ २ ॥

ये महिना महता विष्णुनेन्द्रेणवासह प्रजाताः प्रादुर्भूताः तान्ब्रुवते येच नु क्षिप्रं स्वयमेव विद्मना यज्ञगमनविषयज्ञानेनसहप्रजाताः प्रादुर्भूताः तान् मरुतःएवयामरुत् ब्रुवते स्तौति प्रेत्ययमाख्यातेनवा संबन्धनीयः ब्रुवतइतिव्यत्ययेनबहुवचनं एकवचनेवाछान्दसःशः निघाताभावश्छान्दसः अथप्रत्यक्षवादः हेमरुतोवोयुष्माकं तत्प्रसिद्धं शवोबलं क्रत्वाचोलनादिरूपेण कर्मणायुक्तं नाधृषे कैश्चिदप्याधर्षणीयंनभवति अन्येषामसुरादीनां क्रत्वा कर्मणावानभिभाव्यंभवति कृत्यार्थेकेन् किंचैषांवः तद्बलं दाना अभिमतदानेन मह्ना महत्त्वेनचोपेतं यूयं प्रबलाः अधृष्टासः अधर्षणीयाः तत्रदृष्टान्तः अद्रयोन तेयथाअधृष्याः तद्वद्यूयमपि ॥ २ ॥

२. जो महान् इन्द्र के सहित प्रादुर्भूत हुए हैं, जो यज्ञ-गमन-विषयक ज्ञान के साथ प्रादुर्भूत हुए हैं, उन मरुतों का एवयामरुत् स्तवन करते हैं। हे मरुतो, तुम लोगों का बल अभिमत फल दान से महान् है और अनभिभवनीय है। तुम लोग पर्वत की तरह अटल हो।

प्रयेदिवोबृहतःशृण्विरेगिरासुशुक्वानःसुभ्वएवयामरुत्।
नयेषामिरीसधस्थईष्टआँअग्नयोनस्वविद्युतःप्रस्पन्द्रासोधुनीनाम् ॥३॥

प्र। ये। दिवः। बृहतः। शृण्विरे। गिरा। सुऽशुक्वानः। सुऽभ्वः।
एवयामरुत्। न। येषाम्। इरी। सधऽस्थे। ईष्टे। आ। अग्नयः।
न। स्वऽविद्युतः। प्र। स्पन्द्रासः। धुनीनाम् ॥ ३ ॥

येमरुतोबृहतोदिवोद्युलोकादागच्छन्तः प्रशृण्विरे शृण्वन्ति तान्मरुतोगिरा एवयामरुत्स्तुतवान् कीदृशास्ते शुशुक्वानोदीप्ताः सुभ्वः सुष्ठुभवन्तः येषांमरुतां सधस्थे सहस्थाने स्वकीयेनिवासे तिष्ठतां इरी ईरिता प्रेरिता नेष्टे आनेशतेच चालयितुं आइतिचार्थे अग्नयोन अग्नयइव स्वविद्युतःस्वयमेवविद्योतमानाः धनीनां नदीनां स्पन्द्रासः वर्षणेनचालयितारश्च ॥ ३ ॥

३. जो दीप्त और स्वच्छन्दतया विस्तीर्ण स्वर्ग से आह्वान श्रवण करते हैं, अपने गृह में अवस्थिति करने पर जिन्हें चालित करने में कोई समर्थ नहीं है, जो अपनी दीप्ति-द्वारा दीप्तिमान् हैं, जो अग्नि की तरह नदियों को सञ्चालित करते हैं। एवयामरुत् स्तुति-द्वारा उनकी उपासना करते हैं।

अथचतुर्थी–

सचक्रमेमहतोनिरुरुक्रमःसमानस्मात्सदसएवयामरुत् ।
यदायुक्तत्मनास्वादधिष्णुभिर्विष्पर्धसोविमहसोजिगातिशेवृधोनृभिः॥४॥

सः । चक्रमे । महतः । निः । उरुऽक्रमः । समानस्मात् । सदसः ।
एवयामरुत् । यदा । अयुक्त । त्मना । स्वात् । अधि । स्नुऽभिः ।
विऽस्पर्धसः । विऽमहसः । जिगाति । शेऽवृधः । नृऽभिः ॥ ४ ॥

समरुद्गणोमहतः प्रवृद्धाव् समानस्माव् सर्वेषांसाधारणाव् सदसःस्थानादन्तरिक्षाव् उरुक्रमोविस्तीर्णक्रमणःसन् निश्चक्रमे निरगच्छव् कदेत्युच्यते एवयामरुदृषिः यदा स्वात्स्वकीयस्थानाव् अधीतिपंचम्यर्थानुवादी त्मना आत्मनैव स्नुभिर्गन्तृभिर्नृभिः स्वनेतृभिरश्वैरयुक्त युक्तोभवदागमनप्रार्थनाय अथ बहुवदुच्यते तदानीं विस्पर्धसःविविधस्पर्धाः अहंपुरतोगच्छाम्यहं पुरतोगच्छामीति तेषांस्पर्धा अथवा विगतस्पर्धानह्येषांसार्धंस्पर्धकाःसन्ति विमहसोविशिष्टबलाः शेवृधःशेवस्यसुखस्यवर्धयितारः जिगाति निर्गच्छन्ति व्यत्ययेनैकवचनम् ॥ ४ ॥

४. मरुतों के स्वेच्छानुसार गमन करनेवाले अश्व जब रथ में युक्त होते हैं, तब एवयामरुत् उनके लिए अपेक्षा करते हैं। सर्वव्यापी मरुद्गण महान् तथा सर्वसाधारण स्थान अन्तरिक्ष से निर्गत हुए हैं। परस्पर स्पर्द्धाकारी, बलशाली और सुखदाता मरुद्गण निर्गत हुए हैं ।

अथपंचमी–

स्वनोनवोमवान्रेजयद्वृषात्वेषोययिस्तविषएवयामरुत् । येनासहन्तऋञ्जतस्वरोचिषःस्थारश्मानोहिरण्ययाःस्वायुधासइष्मिणः॥५॥२३॥

स्वनः । न । वः । अमऽवान् । रेजयत् । वृषा । त्वेषः । ययिः ।
तविषः । एवयामरुत् । येन । सहन्तः । ऋञ्जत । स्वऽरोचिषः ।
स्थाःऽरश्मानः । हिरण्ययाः । सुऽआयुधासः । इष्मिणः ॥ ५ ॥ २३ ॥

हेमरुतोवोयुष्माकं स्वनोवेगजनितःशब्दोनरेजयव् नकंपयतु एवयामरुतंमां सुपांसुलुगितिद्वितीयायालुक् स्वनोविशेष्यते अमवान् बलवान् वृषा वर्षितावृष्टेः त्वेषोदीप्तः ययिर्गन्ता तविषः प्रवृद्धः येनस्वनेनसहन्तः शत्रूनभिभवन्तोयूयं ऋञ्जत प्रसाधयथ लड्थेंलेट् कीदृशायू-

यं स्वरोचिषः स्वायत्तरश्मयः स्थारश्मानः स्थिररश्मयोहिरण्ययाःहिरण्याभरणाः स्वायुधासः स्वायत्तायुधाः इष्मिणोन्नवन्तोगमनवन्तोवा ॥ ५ ॥

५. हे मरुतो, तुम लोग स्वाधीनतेजा, स्थिरदीप्ति, स्वर्णाभरणभूषित और अन्नदाता हो। तुम लोग जिस शब्द से शत्रुओं को अभिभूत करके अपना कार्यसाधन करते हो, वह प्रबल वारिवर्षणकारी, दीप्त, विस्तृत और प्रवृद्ध ध्वनि एवयामरुत् को कम्पित न करे।

॥ इतिचतुर्थस्यचतुर्थेत्रयस्त्रिंशोवर्गः ॥ ३३ ॥

अपारोवोमहिमावृद्धशवसस्त्वेषंशवोवत्वेवयामरुत्।
स्थातारोहिप्रसितौसंदृशिस्थनतेनउरुष्यतानिदःशुशुक्वांसोनाग्नयः ॥ ६ ॥

अपारः। वः। महिमा। वृद्धऽशवसः। त्वेषम्। शवः। अवतु।
एवयामरुत्। स्थातारः। हि। प्रऽसितौ। सम्ऽदृशि। स्थन। ते।
नः। उरुष्यत। निदः। शुशुक्वांसः। न। अग्नयः ॥ ६ ॥

हेमरुतोवोयुष्माकं महिमा अपारोनवधिकः हेवृद्धशवसः प्रवृद्धबलाः त्वेषं दीप्तं शवो-युष्माकंबलमवतुरक्षतु एवयामरुतंमां द्वितीयैकवचनस्यलुक् यूयंप्रसितौ प्रबलबन्धने नियमन-वतियज्ञे संदृशि संदर्शनेनिमित्ते स्थातारोहि स्थाननियमेनतिष्ठन्तोस्थन भवथखलु तेनोस्मा-न्निदोनिन्दकाच्छत्रोःसकाशादुरुष्यतरक्षत अग्नयइवशुशुक्वांसोदीप्ताःयूयमिति ॥ ६ ॥

६. हे समधिक बलशाली मरुतो, तुम लोगों की महिमा अपार है, निरवधि है। तुम लोगों की शक्ति एवयामरुत् की रक्षा करे। नियमयुक्त यज्ञ के सन्दर्शन-विषय में तुम लोग ही नियामक हो। तुम लोग प्रज्वलित अग्नि के सदृश दीप्त हो। निन्दकों से तुम लोग हमारी रक्षा करो।

तेरुद्रासःसुमखाअग्नयोयथातुविद्युम्नाअवन्त्वेवयामरुत्।
दीर्घंपृथुपप्रथेसद्मपार्थिवंयेषामज्मेष्वामहःशर्धांस्यद्भुतैनसाम् ॥ ७ ॥

ते। रुद्रासः। सुऽमखाः। अग्नयः। यथा। तुविऽद्युम्नाः। अवन्तु।
एवयामरुत्। दीर्घम्। पृथु। पप्रथे। सद्म। पार्थिवम्। येषाम्।
अज्मेषु। आ। महः। शर्धांसि। अद्भुतऽएनसाम् ॥ ७ ॥

तेमरुतोरुद्रासोरुद्रपुत्राः सुमखाः शोभनयज्ञाः अग्नयोयथाग्नयइव तुविद्युम्नाः प्रभूतदी-प्तयः अथवाग्निसदृशाः तुविद्युम्नाः प्रभूतधनाः अवन्तु रक्षन्तु एवयामरुत् एतन्नामानमृषिंमां

पार्थिवं पृथिव्यत्रान्तरिक्षं तत्संबन्धि दीर्घं आयतं पृथु विस्तीर्णं सद्म सदनं पप्रथे मरुद्भिःप्रथितमभूत् अद्भुतैनसां अपापानांयेषां अज्मेषु गमनेषु महोमहान्ति शर्धांसिच बलानि आगच्छन्तीतिशेषः ॥ ७ ॥

७. हे पूजनीय और अग्नि की तरह प्रभूत दीप्तिशाली रुद्रपुत्रो, एवयामरुत् की रक्षा करो। अन्तरिक्ष-सम्बन्धी दीर्घ और विस्तीर्ण गृह मरुतों के द्वारा विख्यात होता है। निष्पाप मरुद्गण गमनकाल में प्रभूत-शक्ति प्रकाशित करते हैं।

अद्वेषोनोमरुतोगातुमेतनश्रोताहवंजरितुरेवयामरुत् ।
विष्णोर्महःसमन्यवोयुयोतनस्मद्रथ्योनदंसनापद्वेषांसिसनुतः॥८॥

अद्वेषः । नः । मरुतः । गातुम् । आ । इतन । श्रोत । हवम् ।
जरितुः । एवयामरुत् । विष्णोः । महः । सऽमन्यवः । युयोतन ।
स्मत् । रथ्यः । न । दंसना । अप । द्वेषांसि । सनुतरिति ॥ ८ ॥

हेमरुतः अद्वेषः अद्वेषसोयूयं नोस्माकं गातुं गमनस्वभावंस्तोत्रंमति आइतन आगच्छत तदर्थं जरितुः स्तोतुरेवयामरुत् एवयामरुतोममहवं श्रोत शृणुत विष्णोर्व्यापकस्येन्द्रस्य महोमहतो हेसमन्यवः समानयज्ञाः यूयं स्मत् अयंप्रशस्तनाम प्रशस्तारथ्योन रथिनोयोद्धारइव तेयथाशत्रूनपाकुर्वन्ति तद्वदस्माकं दंसना कर्मणा सनुतः अन्तर्हितनामैतत् अन्तर्हितान् द्वेषांसि द्वेष्टॄन् अपयुयोतन दूरेवियोजयत पृथक्कुरुत ॥ ८ ॥

८. हे विद्वेषहीन मरुतो, तुम लोग हमारे स्तोत्र के सन्निहित होओ एवं स्तवनकारी एवयामरुत् का आह्वान श्रवण करो। हे इन्द्र के साथ एकत्र यज्ञभाग प्राप्त करनेवाले मरुतो, योद्धा लोग जिस प्रकार से शत्रुओं को अपसारित करते हैं, उसी प्रकार तुम लोग हमारे गूढ़ शत्रुओं को दूर करो।

एषाअध्यायोपाकरणोत्सर्जनयोर्विनियुक्ता ।

गन्तानोयज्ञंयज्ञियाःसुशमिश्रोताहवमरक्षएवयामरुत् ।
ज्येष्ठासोनपर्वतासोव्योमनियूयंतस्यप्रचेतसःस्यातदुर्धर्तवोनिदः ॥ ९ ॥ ३४ ॥

गन्त । नः । यज्ञम् । यज्ञियाः । सुऽशमि । श्रोत । हवम् । अरक्षः ।
एवयामरुत् । ज्येष्ठासः । न । पर्वतासः । विऽओमनि । यूयम् ।
तस्य । प्रऽचेतसः । स्यात । दुःऽधर्तवः । निदः ॥ ९ ॥ ३४ ॥

हेयज्ञियाः मरुतोयूयं नोस्माकंयज्ञं गन्त आगच्छत सुशमि शोभनकर्मयथाभवतित-था सुकर्मत्वायेत्यर्थः तदर्थं नोहवं अस्मदीयमाह्वानं श्रोत शृणुत अरक्षः रक्षोवर्जितायूयं लिंगवचनयोर्व्यत्ययः ज्येष्ठासोन ज्येष्ठाइव पर्वतासः विन्ध्यादयइव अतिप्रवृद्धाव्योमनिअन्त-रिक्षेवर्तमानाः प्रचेतसः प्रवृद्धज्ञानाः यूयं तस्यनिदोनिन्दकस्य दुर्धर्तवो दुर्धराः स्यात भवत ॥९॥

९. हे यजनयोग्य मरुतो, तुम लोग हमारे यज्ञ में आगमन करो, जिससे यह यज्ञ सुसम्पन्न हो। तुम लोग रजोवर्जित या निर्विघ्न हो। हमारा आह्वान श्रवण करो। हे प्रकृष्ट ज्ञान-सम्पन्न मरुतो, अत्यन्त वर्द्धमान विन्ध्यादि पर्वत की तरह अन्तरिक्ष में अवस्थान करके तुम लोग निन्दकों का शासन करते हो।

॥ इतिचतुर्थस्यचतुर्थेचतुस्त्रिंशोवर्गः ॥३४॥

॥ इतिपंचमेमंडलेषष्ठोनुवाकः ॥ ६ ॥

॥ समाप्तंचात्रेयंपंचमंमंडलम् ॥ ५ ॥

भारद्वाजेषष्ठेमंडले षडनुवाकाः तत्र प्रथमेनुवाकेपंचदश सूक्तानि तत्रत्वंह्यग्नइतित्रयोदशर्चंप्रथमंसूक्तं त्वंह्यग्नेसप्तोनेतिबार्हस्पत्योभरद्वाजः षष्ठंमंडलमपश्यदित्यनुक्रान्तत्वात् मंडलद्रष्टासएवभरद्वाजऋषिः अनादेशपरिभाषयात्रिष्टुप् मंडलादिपरिभाषयाग्निर्देवता पशोर्हविष्यवदीयमानेमैत्रावरुणेनानुवचनीयमिदंमनोतासूक्तं सूत्रितंच—त्वंह्यग्नेप्रथमइत्यन्वाहेति । प्रातरनुवाके आग्नेयेक्रतौत्रैष्टुभेछन्दस्येतदादिसूक्तषट्कं द्वितीयवर्जं सूत्रितंच—त्वंह्यग्नेप्रथमइतिषण्णांद्वितीयमुद्धरेदिति आद्योपाकरणेविनियुक्ता सूत्रंतुपूर्वमंत्रेउक्तम् ।

तत्रप्रथमा—

त्वंह्यंग्नेप्रथमोमनोतास्याधियोअभवोदस्महोता ।
त्वंसींवृषन्नकृणोर्दुष्टरीतुसहोविश्वस्मैसहसेसहध्यै ॥ १ ॥

त्वम् । हि । अग्ने । प्रथमः । मनोता । अस्याः । धियः । अभवः । दस्म । होता । त्वम् । सीम् । वृषन् । अकृणोः । दुस्तरीतु । सहः । विश्वस्मै । सहसे । सहध्यै ॥ १ ॥

हेअग्ने प्रथमोदेवानांमध्येप्रथमः प्रतमः प्रकृष्टतमः पूर्वभावीवात्वं मनोताहि देवानांमनोयत्रऊतंसंबद्धंभवतिताद्दशोभवसि हिशब्दोग्निःसर्वमनोता अग्नौमनोताःसंगच्छन्तेइत्यादिब्राह्मणप्रसिद्धिद्योतनार्थः हेदस्म दर्शनीय अस्याधियः अस्यकर्मणोहोता देवानामाह्वाता अभवः भवसि हेवृषन् कामानांवर्षितः त्वंसीं सर्वतःदुष्टरीतु दुर्हिंस्यमहिंस्यं सहोबलं अकृणोः अकरोः किमर्थं विश्वस्मैसहसे सर्वस्यापिबलवतःशत्रोः सहध्यै अभिभवनाय ॥ १ ॥

१. हे अग्नि, तुम देवताओं के मध्य में प्रकृष्टतम हो। देवताओं का मन तुममें सम्बद्ध है। हे दर्शनीय, इस यज्ञ में तुम्हीं देवों के आह्वान करनेवाले होते हो। हे अभीष्टवर्षी, समस्त बलशाली शत्रुओं को पराभूत करने के लिए तुम हमें अनिवार्य बल प्रदान करो।

अथद्वितीया—

अधाहोतान्यसीदोयजीयानिळस्पदइषयन्नीड्यःसन् ।
तंत्वानरःप्रथमंदेवयन्तोमहोरायेचितयन्तोअनुग्मन् ॥ २ ॥

४    १ ऐ० ब्रा० २.१०. ।

अध । होता । नि । असीदः । यजीयान् । इळः । पदे । इषयन् ।
ईड्यः । सन् । तम् । त्वा । नरः । प्रथमम् । देवऽयन्तः । महः । राये ।
चितयन्तः । अनु । ग्मन् ॥ २ ॥

अध अधुना हेअग्ने यजीयान् अतिशयेनयष्टात्वं होता होमनिष्पादकःसन् इळः भूम्याःवेदिलक्षणायाः पदे स्थाने न्यसीदोनिषण्णवानसि किंकुर्वन् इषयन् पशुपुरोडाशादिलक्षणमन्नमिच्छन् ईड्यः स्तुत्यःसन् तं तादृशं त्वा त्वां प्रथमं इतरदेवताभ्यःपूर्वं देवयन्तोदेवंत्वात्मनइच्छन्तोनरोनेतारोमनुष्याऋत्विग्यजमानाः महोमहते रायेधनाय चितयन्तोजानन्तः स्तुत्याज्ञापयन्तोवा अनुग्मन् अन्वगच्छन्पूर्वम् ॥ २ ॥

२. हे अग्नि, तुम अतिशय यज्ञकर्त्ता और होमनिष्पादक हो। तुम हव्य ग्रहण करके स्तुतियोग्य होते हो। तुम वेदी रूप स्थान पर उपवेशन करो। धर्मानुष्ठानकारी ऋत्विक् लोग महान् धन प्राप्त करने की आशा से देवों के मध्य में प्रथम ही तुम्हारा अनुसरण करते हैं।

वृतेवयन्तंबहुभिर्वसव्यैस्त्वेरयिंजागृवांसोअनुग्मन् ।
रुशन्तमग्निंदर्शतंबृहन्तंवपावन्तंविश्वहादीदिवांसम् ॥ ३ ॥

वृताऽइव । यन्तम् । बहुऽभिः । वसव्यैः । त्वे इति । रयिम् ।
जागृऽवांसः । अनु । ग्मन् । रुशन्तम् । अग्निम् । दर्शतम् ।
बृहन्तम् । वपाऽवन्तम् । विश्वहा । दीदिऽवांसम् ॥ ३ ॥

वृतेव मार्गेणेवेति संप्रत्यर्थेलोकद्वयमध्यगतेनमार्गेण बहुभिरनेकैर्वसव्यैः वसुभिः स्वार्थिकस्तद्धितप्रत्ययः यजमानानांनिवासयोग्यैर्वासार्धं यन्तं गच्छन्तंत्वां अनुग्मन्अनुगच्छन्ति संभजन्तेयजमानाः कीदृशास्ते त्वे त्वयिदेवे रयिं धनं जागृवांसः प्रयच्छन्तइत्यर्थः कीदृशंत्वामित्युच्यते रुशन्तं दीप्तवर्णं अग्निं अंगनादिगुणविशिष्टं दर्शतं दर्शनीयं बृहन्तं महान्तं वपावन्तं विश्वहा सर्वेषुकालेषु दीदिवांसंदीप्यमानं ॥ ३ ॥

३. हे अग्नि, तुम दीप्तिमान्, दर्शनीय, महान् हव्यभोजी और सम्पूर्ण काल में दीप्तिमान् हो। तुम वसुओं के मार्ग से अर्थात् अन्तरिक्ष से गमन करते हो। धनाभिलाषी यजमान तुम्हारा अनुसरण करते हैं।

अथचतुर्थी–

पदंदेवस्यनमसाव्यन्तःश्रवस्यवःश्रवआपन्नमृक्तम् ।
नामानिचिद्दधिरेयज्ञियानिभद्रायान्तेरणयन्तसंदृष्टौ ॥ ४ ॥

पदम् । देवस्य । नमसा । व्यन्तः । श्रवस्यवः । श्रवः । आपन् ।
अमृक्तम् । नामानि । चित् । दधिरे । यज्ञियानि । भद्रायाम् ।
ते । रणयन्त । सम्ऽदृष्टौ ॥ ४ ॥

देवस्य द्योतमानस्याग्नेः पदं आहवनीयस्थानं नमसा हविषा स्तोत्रेणवा व्यन्तोगच्छन्तः श्रवस्यवोऽन्नमिच्छन्तः पूर्वेयजमानाः श्रवः सर्वत्रश्रूयमाणमन्नं अमृक्तं अन्यैरपरिबाध्यं आपन् आप्नुवन्ति हेअग्नेतेतव भद्रायां स्तुत्यायां सन्दृष्टौ निमित्तायां रणयन्त रमयन्तित्वां किंच यज्ञियानि यज्ञयोग्यानि नामानि नमनीयानि वैश्वानरोजातवेदाइत्यादीनि दधिरे धारयन्ति अथवानमनसाधनानिस्तोत्राणिदधिरे चिदितिपूरणः ॥ ४ ॥

४. अन्नाभिलाषी होकर यजमान लोग स्तोत्र के साथ दीप्तिमान् अग्नि के आहवनीय स्थान में गमन करते हैं और अप्रतिहत भाव से अथवा अबाध्य रूप से प्रचुर अन्न प्राप्त करते हैं। हे अग्नि, दर्शन होने पर वे स्तुतियों से आनन्दित होते हैं और तुम्हारे यागयोग्य नामों को धारण करते हैं—जातवेदा, वैश्वानर इत्यादि नामों का संकीर्तन करते हैं।

त्वांवर्धन्तिक्षितयःपृथिव्यान्त्वांरायउभयासोजनानाम् ।
त्वंत्रातातरणेचेत्योभूःपितामातासदमिन्मानुषाणाम् ॥ ५ ॥३५॥

त्वाम् । वर्धन्ति । क्षितयः । पृथिव्याम् । त्वाम् । रायः ।
उभयासः । जनानाम् । त्वम् । त्राता । तरणे । चेत्यः । भूः । पिता ।
माता । सदम् । इत् । मानुषाणाम् ॥ ५ ॥ ३५ ॥

हेअग्ने त्वां क्षितयोमनुष्याऋत्विजः पृथिव्यां वेदिलक्षणायां वर्धन्ति वर्धयन्ति उभयासोउभयविधानिपश्वपशुरूपाणि जनानां यजमानानांसंबन्धीनि रायोधनानि ऋत्विजोध्वर्य्वादयः त्वांत्वामुद्दिश्यवर्धन्ति अथवा उभयविधानिधनानि गवादीनि जनानां जायमानानां पुत्रादीनामर्थाय प्राप्तुंत्वांवर्धन्ति हेतरणे दुःखात्तारकाग्ने त्वंचेत्योज्ञातव्यःस्तुत्यःसन् त्राता रक्षिता भूर्भवसि किंच मानुषाणां मनुष्याणांस्तोतॄणामस्माकं सदमित्सर्वदा पितामाताच त्राता पितृस्थानीयोभूर्भवसि ॥ ५ ॥

५. हे अग्नि, मनुष्यगण तुम्हें वेदी के ऊपर वर्द्धित करते हैं। तुम यजमानों के पशु और अपशु रूप दोनों प्रकार के धन को वर्द्धित करते हो। अध्वर्यु आदि भी उभय विध धन प्राप्त करने के लिए तुम्हें वर्द्धित करते हैं। हे दुःखविनाशक अग्नि, तुम स्तुतिभाजन होकर मनुष्यों के रक्षक और पितृ-मातृ-स्थानीय हो।

॥ इतिचतुर्थस्यचतुर्थेपञ्चत्रिंशोवर्गः ॥ ३५॥

अथषष्ठी—

सपर्यैण्यःसप्रियोविक्ष्व१ग्निर्होतामन्द्रोनिषसादायजीयान् ।
तंत्वावयंदमआदीदिवांसमुपज्ञुबाधोनमसासदेम ॥ ६ ॥

सपर्यैण्यः । सः । प्रियः । विक्षु । अग्निः । होता । मन्द्रः । नि ।
ससाद । यजीयान् । तम् । त्वा । वयम् । दमे । आ । दीदिऽवांसम् ।
उप । ज्ञुऽबाधः । नमसा । सदेम ॥ ६ ॥

सोग्निः सपर्येण्यः पूज्यः प्रियः कामानांपूरकः विक्षुप्रजासु होता होमनिष्पादकः मन्द्रो-मदनीयः यजीयानतिशयेनेतरदेवानांयष्टायजनीयोवा एवं महानुभावोग्निः निषसाद निषण्णो-भूत् अथप्रत्यक्षकृतः तंत्वा तादृशंत्वां वयं यजमानादमेगृहे दीदिवांसं दीप्यमानं ज्ञुबाधः जा-नुनीबाधयन्तः अवनतजानवः प्रणताःसन्तोनमसास्तोत्रेणोपासदेम आसादयेम अथवा उप-सीदेमेत्येवमाशास्ते ॥ ६ ॥

६. पूजनीय, अभीष्टवर्षी, प्रजाओं के मध्य में होमनिष्पादक, मोहप्रद और अतिशय यजनीय अग्नि वेदी के ऊपर उपविष्ट होते हैं। हे अग्नि, तुम गृह में प्रज्वलित होते हो । हम लोग जानु को अवनत करके, स्तोत्र के साथ, तुम्हारे निकट उपस्थित होते हैं।

तंत्वावयंसुध्यो३नव्यमग्नेसुम्नायवईमहेदेवयन्तः ।
त्वंविशोअनयोदीद्यानोदिवोअग्नेबृहतारोचनेन ॥ ७ ॥

तम् । त्वा । वयम् । सुऽध्यः । नव्यम् । अग्ने । सुम्नऽयवः । ईमहे ।
देवऽयन्तः । त्वम् । विशः । अनयः । दीद्यानः । दिवः । अग्ने ।
बृहता । रोचनेन ॥ ७ ॥

हेअग्ने तं तादृशं महानुभावं नव्यं स्तुत्यं त्वा त्वां सुध्यः शोभनबुद्धयः सुम्नायवः सु-खमिच्छन्तोदेवयन्तोदेवंत्वामिच्छन्तोवयं ईमहे याचामहे स्तुमइत्यर्थः हेअग्ने त्वं दीद्यानोदी-प्यमानःसन् केन बृहता महता रोचनेन रोचमानेन तेजसा दीद्यानः विशः प्रजाः स्तोतॄनस्मान् दिवः स्वर्गं अनयः अगमयः रोचनेनादित्येन दिवंअगमयइतिवासंबन्धः आदित्यमार्गेणेत्यर्थः ॥ ७ ॥

७. हे अग्नि, तुम स्तुतियोग्य हो । हम शोभन बुद्धिवाले, सुखाभिलाषी और तुम्हारी कामना करनेवाले हैं। हम तुम्हारा स्तवन करते हैं। हे अग्नि, तुम दीप्यमान हो। महान् रोचमान मार्ग से अर्थात् आदित्य मार्ग से तुम हम स्तोताओं को स्वर्ग पहुंचाओ ।

अथाष्टमी–

विशांकविंविश्पतिंशश्वतीनांनितोशनंवृषभंचर्षणीनाम्।
प्रेतीषणिमिषयन्तंपावकंराजन्तमग्निंयजतंरयीणाम् ॥ ८ ॥

विशाम्। कविम्। विश्पतिम्। शश्वतीनाम्। निऽतोशनम्। वृषभम्।
चर्षणीनाम्। प्रेतिऽइषणिम्। इषयन्तम्। पावकम्। राजन्तम्।
अग्निम्। यजतम्। रयीणाम् ॥ ८ ॥

शश्वतीनां नित्यानां विशां ऋत्विग्यजमानलक्षणानां विश्पतिं स्वामिनं कविं क्रान्तदर्शिनं नितोशनं शत्रूणांहिंसकं वृषभं कामानांवर्षकं चर्षणीनां स्तोतॄणां मनुष्याणां प्रेतीषणिं प्राप्तगमनं इषयन्तं अन्नंकुर्वन्तं पावकं शोधकं राजन्तं दीप्यमानं दीपयन्तंवा रयीणांलाभाय यजतं यष्टव्यं अग्निंस्तुमइतिशेषः ॥ ८ ॥

८. नित्यस्वरूप ऋत्विक् यजमान आदि के स्वामी, ज्ञानसम्पन्न, शत्रुविनाशक, कामनाओं के पूरक, स्तोता मनुष्यों के प्राप्तव्य, अन्नविधायक, शुद्धता-सम्पादक, धनार्थियों के द्वारा यष्टव्य और दीप्यमान अग्नि का हम लोग स्तवन करते हैं।

सोअग्नईजेशशमेचमर्तोयस्तआनट्समिधाहव्यदातिम्।
यआहुतिंपरिवेदानमोभिर्विश्वेत्सवामादधतेत्वोतः ॥ ९ ॥

सः। अग्ने। ईजे। शशमे। च। मर्तः। यः। ते। आनट्। सम्ऽइधा।
हव्यऽदातिम्। यः। आऽहुतिम्। परि। वेद। नमःऽभिः।
विश्वा। इत्। सः। वामा। दधते। त्वाऽऊतः ॥ ९ ॥

हेअग्ने त्वां समर्तः सयजमानईजे यजते शशमेच स्तौति शशमानइतिस्तुतिकर्मसुपाठात् इदमपिस्तुतिकर्म योयजमानस्तेतव समिधासह हव्यदातिं हविषांदानं आनट् करोति किंच योयजमानोनमोभिःस्तुभिराहुतिमाज्यादिलक्षणां परिवेद परितोवेत्ति ददातीत्यर्थः सयजमानस्त्वोतः त्वयारक्षितःसन् विश्वेत् सर्वाणि वामा वमनीयानि धनानि दधतेधारयति ॥ ९ ॥

९. हे अग्नि, जो यजमान तुम्हारा यजन करता है, जो स्तवन करता है, जो यजमान प्रज्वलित इन्धन के साथ तुम्हें हव्य प्रदान करता है, जो स्तुति के साथ तुम्हें आहुति प्रदान करता है, वह यजमान तुम्हारे द्वारा रक्षित होता है और समस्त अभिलषित धन प्राप्त करता है।

अथदशमी—

अस्माउतेमहिमहेविधेमनमोभिरग्नेसमिधोतहव्यैः ।
वेदीसूनोसहसोगीर्भिरुक्थैरातेभद्रायांसुमतौयतेम ॥ १० ॥

अस्मै । ऊँ इति । ते । महि । महे । विधेम । नमःऽभिः । अग्ने ।
सम्ऽइधा । उत । हव्यैः । वेदी । सूनो इति । सहसः । गीःऽभिः ।
उक्थैः । आ । ते । भद्रायाम् । सुऽमतौ । यतेम ॥ १० ॥

हेअग्ने महे महते अस्मै तेतुभ्यं महि महत् अत्यधिकंविधेम परिचरेम कैरितिउच्यते नमोभिःनमस्कारैः समिधावा उतापिच हव्यैर्हविर्भिः हेसहसःसूनो बलस्यपुत्र वेदी वेद्यां गीर्भिः स्तोत्रैरुक्थैः शस्त्रैश्च विधेमेतिसंबन्धः किंच ते तव भद्रायां स्तुत्यायां सुमतौ शोभनानुग्रहबुद्धौ आयतेम आगच्छेमभवेमेत्यर्थः ॥ १० ॥

१०. हे अग्नि, तुम महान् हो। हम नमस्कार, इंधन और हव्य के द्वारा तुम्हारी परिचर्या करते हैं। हे बलपुत्र, हम लोग स्तोत्र और शस्त्र के साथ वेदी के ऊपर तुम्हारी अर्चना करते हैं। हम लोग तुम्हारा शोभन अनुग्रह प्राप्त करने के लिए यत्न करते हैं। हम लोग सफल हों।

आयस्ततन्थरोदसीविभासाश्रवोभिश्चश्रवस्य१स्तरुत्रः ।
बृहद्भिर्वाजैःस्थविरेभिरस्मेरेवद्भिरग्नेवितरंविभाहि ॥ ११ ॥

आ । यः । ततन्थ । रोदसी इति । वि । भासा । श्रवःऽभिः । च ।
श्रवस्यः । तरुत्रः । बृहत्ऽभिः । वाजैः । स्थविरेभिः । अस्मे इति ।
रेवत्ऽभिः । अग्ने । विऽतरम् । वि । भाहि ॥ ११ ॥

हेअग्ने यस्त्वं रोदसी द्यावापृथिव्यौ भासा दीप्त्या व्याततंथ व्यतनोः किंच तरुत्रः तारकस्त्वं श्रवोभिः स्तुतिभिः श्रवस्यश्चभवसि हेतादृशाग्ने बृहद्भिर्महद्भिर्वाजैरन्नैः स्थविरेभिः स्थविरैः स्थूलैः रेवद्भिःरयिमद्भिः अस्मदर्थं वितरं विशिष्टतरं विभाहि विशेषेणदीप्यस्व ॥ ११ ॥

११. हे अग्नि, दीप्ति-द्वारा तुमने द्यावा-पृथिवी को विस्तृत किया है। तुम परित्राणकर्त्ता और स्तुति-द्वारा पूजनीय हो। तुम प्रचुर अन्न और विशिष्ट धन के साथ हम लोगों के निकट भली भाँति से दीप्त होओ।

अथद्वादशी—

नृवद्वसोसदमिद्धेह्यस्मेभूरितोकायतनयायपश्वः ।
पूर्वीरिषोबृहतीरारेअघाअस्मेभद्रासौश्रवसानिसन्तु ॥ १२ ॥

नृऽवत् । वसो इति । सदम् । इत् । धेहि । अस्मे इति । भूरि ।
तोकाय । तनयाय । पश्वः । पूर्वीः । इषः । बृहतीः । आरेऽअघाः ।
अस्मे इति । भद्रा । सौश्रवसानि । सन्तु ॥ १२ ॥

हेवसो वासक धनवन्वाग्ने नृवत् मनुष्यैरुपेतंधनं सदमित् सर्वदास्मेअस्मासु धेहि स्थापय किंच भूरि प्रभूतान् पश्वः पशूंश्च धेहि किमर्थं तोकायास्मत्पुत्राय तनयाय तत्पुत्राय किंच पूर्वीः पूरयित्र्यःकामानांबह्व्योवा महतीर्महत्यः आरेअघाः आरे दूरे अघानि यासु ताः स्ताहृश्यइषःउकलक्षणान्यन्नानि भद्रा भद्राणि सौश्रवसानि सुश्रवस्त्वानि अस्मे अस्मासु सन्तुभवन्तु ॥ १२ ॥

१२. हे धनवान् अग्नि, मनुष्यों से युक्त अर्थात् पुत्र-पौत्रादि से युक्त धन तुम हमें प्रदान करो। हमारे पुत्र-पौत्रों को प्रभूत पशु प्रदान करो। कामनाओं के पूरक और पापरहित पर्याप्त अन्न तथा सौभाग्य हमें प्राप्त हो।

पुरूण्यग्नइतित्रयोदशी उखासंभरणीयेष्टौ अग्नेःक्षत्रवतोनुवाक्या सूत्रितंच—पुरूण्यग्नेपुरुधात्वायासचित्रचित्रंचितयन्तमस्मेइति तत्पाठस्तु ।

अथत्रयोदशी—

पुरूण्यग्नेपुरुधात्वायावसूनिराजन्वसुतातेअश्याम् ।
पुरूणिहित्वेपुरुवारसन्त्यग्नेवसुविधतेराजनित्वे ॥ १३ ॥ ३६ ।

पुरूणि । अग्ने । पुरुधा । त्वाऽया । वसूनि । राजन् । वसुता । ते ।
अश्याम् । पुरूणि । हि । त्वे इति । पुरुऽवार । सन्ति । अग्ने ।
वसु । विधते । राजनि । त्वे इति ॥ १३ ॥ ३६ ॥

हेअग्ने राजन् ते तव पुरूणि बहूनि पुरुधा गवाश्वादिरूपेणबहुप्रकाराणि वसूनि धनानि वसुता वसुतायै वसुमत्त्वाय त्वायाहि त्वयाहेतुभूतेन अश्यां व्याप्नुयां भुंजीयवा अत्रभरतस्वामी वसुतेत्येतत्पदंसप्तम्यन्तंचकार भट्टभास्करमिश्रोपि एकपदंसंबुध्यन्तंचकार हेपुरुवार बहुभिर्वरणीयाग्ने राजनि राजमाने त्वे त्वयि पुरूणि बहूनि वसु वसूनि विधते परिचरते मह्यं दातव्यानिसन्ति ॥ १३ ॥

१३. हे दीप्तिमान् अग्नि, हम तुम्हारे निकट से गो-अश्वादिरूप बहुविध धन प्राप्त करें। तुम धनवान् हो। हे सर्ववरणीय अग्नि, तुम शोभन हो। तुममें बहुविध धन निहित है।

॥ इतिचतुर्थस्यचतुर्थेषट्त्रिंशोवर्गः ॥ ३६ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् ॥ पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येचतुर्थाष्टकेचतुर्थोध्यायःसमाप्तः ॥४॥

## ॥ श्रीगणेशाय नमः ॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् ॥ निर्ममेतमहंवन्देविद्यातीर्थंमहेश्वरम् ॥ १ ॥

॥ अथपञ्चमाध्यायआरभ्यते ॥

षष्ठमण्डलस्यषडनुवाकात्मकस्य प्रथमेनुवाकेपञ्चदशसूक्तानि तत्रत्वंहीत्येकादशर्चंद्वितीयंसूक्तम् भरद्वाजस्यार्षमाग्नेयम् अन्त्याषट्पञ्चाशदक्षराशक्वरी आदितोदशानुष्टुभः अनुक्रम्यतेहि—त्वंह्येकादशानुष्टुभंशक्वर्यंतमिति प्रातरनुवाके आग्नेयेक्रतौ आनुष्टुभेछन्दसीदंसूक्तम् उत्तमावर्जंविनियुक्तम् सूत्र्यतेहि— त्वंहिक्षैतवदग्नायोहोताजनिष्टेति आश्विनशस्त्रेचैतच्छंसनीयं प्रातरनुवाकन्यायेनेत्यतिदिष्टत्वात् अङ्गिरसांद्विरात्रेद्वितीयेहनीदमेवसूक्तमाज्यशस्त्रं सूत्रितं च—त्वंहिक्षैतवदितिचाज्यमिति ।

तत्रप्रथमा—

त्वंहिक्षैतंवद्यशोऽग्नेमित्रोनपत्यंसे ।
त्वंविचर्षणेश्रवोवसोपुष्टिंनपुष्यसि ॥ १ ॥

त्वम् । हि । क्षैतऽवत् । यशः । अग्ने । मित्रः । न । पत्यंसे ।
त्वम् । विऽचर्षणे । श्रवः । वसो इति । पुष्टिम् । न । पुष्यसि ॥ १ ॥

हेअग्ने त्वंहि त्वंखलुक्षैतवत्क्षितिःक्षयोपचयस्तत्संबन्धिक्षैतं शुष्कंकाष्ठं तद्युक्तंयशोन्नंहविर्लक्षणंपत्यसे अभिपतसिगच्छसि तत्रदृष्टान्तः मित्रोन अहरभिमानीदेवोमित्रः सइव यद्वा यशइतिगृहनाम क्षैतवत् क्षैतं निवासकंहविर्लक्षणमन्नंतद्युक्तंयजमानगृहं मित्रभूतःपुरुषइवाभिपतसि यद्वा पत्यतिरैश्वर्यकर्मा ईदृशमन्नं पत्यसे ईशिषे अतःकारणात् हेविश्वचर्षणेविशेषेणसर्वस्यद्रष्टः वसो वासकाग्नेत्वं श्रवःश्रवणीयमन्नं यजमानगृहस्थंन अयंनशब्दश्चार्थे अन्नकार्यभूतांपुष्टिंच पुष्यसि वर्द्धयसि ॥ १ ॥

१. हे अग्नि, तुम मित्र देव की तरह शुष्क काष्ठ के द्वारा हवि के ऊपर अभिपतित होते हो; अतएव हे सर्वदर्शी, धन-सम्पन्न अग्नि, तुम अन्न और पुष्टि-द्वारा हम लोगों को वर्द्धित करो।

अथद्वितीया—

त्वांहिष्मांचर्षणयोयज्ञेभिर्गीर्भिरीळते ।
त्वांवाजीयात्यवृकोरजस्तूर्विश्वचर्षणिः ॥ २ ॥

त्वाम् । हि । स्म । चर्षणयः । यज्ञेभिः । गीःऽभिः । ईळते ।
त्वाम् । वाजी । याति । अवृकः । रजःऽतूः । विश्वऽचर्षणिः ॥ २ ॥

हेअग्ने त्वांहिस्म त्वामेवखलु चर्षणयोमनुष्यायज्ञेभिर्यज्ञसाधनैर्हविर्भिर्गीर्भिःस्तुतिभिरीळतेस्तुवन्ति अपिच वाजी वाजोगमनं तद्वान्सूर्यस्त्वां याति गच्छति प्रविशतीत्यर्थः तथाचश्रूयते—अग्निंवावादित्यःसायंप्रविशतितस्मादग्निर्दूरान्नक्तंददृशेइति वाजिशब्दश्चसूर्यवाचकत्वेनक्वचिच्छ्रूयते अग्निर्वायुःसूर्यः तेवैवाजिनइति वायुःसप्तिःआदित्योवाजीतिच कीदृशोवाजीअवृकोहिंसकरहितः रजस्तूः उदकमत्ररजउच्यते तस्यवृष्टिलक्षणस्यप्रेरयिता यद्वा रजसां लोकानां तरिता गन्ता विश्वचर्षणिः सर्वस्यद्रष्टा ॥ २ ॥

२. हे अग्नि, मनुष्यगण हव्यसाधन हव्य और स्तुति के द्वारा तुम्हारी अर्चना करते हैं। हिंसावर्जित, जल के प्रेरक अथवा लोगों में अभिगमन करनेवाले, सर्वद्रष्टा सूर्यदेव तुम्हारा अभिगमन करते हैं।

सजोषस्त्वादिवोनरोयज्ञस्यकेतुमिन्धते ।
यद्धस्यमानुषोजनःसुम्नायुर्जुह्वेअध्वरे ॥ ३ ॥

सऽजोषसः । त्वा । दिवः । नरः । यज्ञस्य । केतुम् । इन्धते ।
यत् । ह । स्यः । मानुषः । जनः । सुम्नऽयुः । जुह्वे । अध्वरे ॥ ३ ॥

हेअग्ने सजोषः सजोषसः सहप्रीयमाणादिवःस्तुतेर्नरोनेतारऋत्विजः यज्ञस्यकेतुं प्रज्ञापकं त्वा त्वां इन्धते समिद्धंकुर्वन्ति कदेतिचेदुच्यते यद्ध यदाखलु स्यः समानुषोमनोरपत्यभूतोजनोजातोयजमानोहोतावा सुम्नयुः सुम्नंसुखमात्मनइच्छन् अध्वरे हिंसाप्रत्यवायरहितेयज्ञे जुह्वे त्वामाह्वयति तदेत्यर्थः ॥ ३ ॥

३. हे अग्नि, समान प्रीति धारण करनेवाले ऋत्विक् लोग तुम्हें समिद्ध अर्थात् प्रज्वलित करते हैं। तुम यज्ञ के प्रज्ञापक हो। मनु के अपत्य यजमान लोग सुखाभिलाषी होकर यज्ञ में तुम्हारा आह्वान करते हैं।

अथचतुर्थी—

ऋधद्यस्तेसुदानवेधियामर्तःशशमते ।
ऊतीषबृहतोदिवोद्विषोअंहोनतरति ॥ ४ ॥

ऋधत् । यः । ते । सुऽदानवे । धिया । मर्तः । शशमते । ऊती ।
सः । बृहतः । दिवः । द्विषः । अंहः । न । तरति ॥ ४ ॥

---

१ तै० ब्रा० २. १. २. । २ तै० ब्रा० १. ६. ३. । ३ तै० ब्रा० १. ७. ८. ।

ऋधत् सयजमानः ऋध्नुयात् हेअग्ने सुदानवे शोभनदानाय तुभ्यं षष्ठ्यर्थेचतुर्थी तवसंबन्धिन्या धिया कर्मणा योमर्तोमरणधर्मायजमानः शशमते शाम्यति यद्वा शमतिःस्तुतिकर्मा त्वदर्थंकर्मणायुक्तःसन् स्तौतिसयजमानः बृहतोमहतः दिवोदीप्तस्यतव संबन्धिन्या ऊती ऊत्या रक्षया द्विषोद्वेष्टॄन् अंहोन आहननशीलंपापमिवतरत्यतिक्रामति ॥ ४ ॥

४. हे अग्नि, तुम दानशील हो, जो मरणशील यजमान यज्ञ-कर्म में रत होकर तुम्हारा स्तवन करता है, वह समृद्धिशाली हो। हे अग्नि, तुम दीप्तियुक्त हो। वह यजमान तुम्हारे द्वारा रक्षित होकर भीषण पाप की तरह शत्रुओं को पराभूत करे।

समिधायस्तआहुतिंनिशितिंमर्त्योनशत्।
वयावन्तंसपुष्यतिक्षयमग्नेशतायुषम् ॥ ५ ॥ १ ॥

सम्ऽइधा। यः। ते। आऽहुतिम्। निऽशितिम्। मर्त्यः। नशत्।
वयाऽवन्तम्। सः। पुष्यति। क्षयम्। अग्ने। शतऽआयुषम् ॥ ५ ॥ १ ॥

हेअग्ने समिधासमिन्धनहेतुभूतेनेध्मेनसह ते त्वदीयां निशितिं निशितां तनूकृतां मन्त्रसंस्कृतामाहुतिं योमर्त्योमनुष्यः नशत् व्याप्नुयात् नशतिर्व्याप्तिकर्मा समनुष्योयजमानः वयावन्तं वयाः शाखाः पुत्रपौत्रादिलक्षणास्तद्युक्तं शतायुषं बहुविधान्नं चिरकालजीवनंवा क्षयंगृहं पुष्यति पोषयति वर्द्धयति तत्रचिरकालमवतिष्ठतइत्यर्थः ॥ ५ ॥

५. हे अग्नि, जो मनुष्य काष्ठ-द्वारा तुम्हारी मन्त्र-संस्कृत आहुति को व्याप्त (पुष्ट) करता है, वह मनुष्य पुत्र-पौत्रादि से युक्त गृह में सौ वर्षों तक आयु का भोग करता है।

॥ इतिचतुर्थस्यपञ्चमेप्रथमोवर्गः ॥ १ ॥

त्वेषस्तेधूमऋण्वतिदिविषञ्छुक्रआततः।
सूरोनहिद्युतात्वंकृपापावकरोचसे ॥ ६ ॥

त्वेषः। ते। धूमः। ऋण्वति। दिवि। सन्। शुक्रः। आऽततः।
सूरः। न। हि। द्युता। त्वम्। कृपा। पावक। रोचसे ॥ ६ ॥

हेअग्ने त्वेषःदीप्तस्य तेतव शुक्रः निर्मलः शुभ्रवर्णोवाधूमः दिव्यन्तरिक्षे आततोविस्तीर्णःसन् ऋण्वति मेघात्मनापरिणतोगच्छति अपिच हेपावक शोधकाग्ने सूरोन सूर्यइव कृपाअभिमुखीकरणसमर्थयास्तुत्या स्तूयमानस्त्वं द्युतादीप्त्या रोचसेहि दीप्यसेखलु ॥ ६ ॥

६. हे अग्नि, तुम दीप्तिशाली हो। तुम्हारा शुभ्र वर्ण का धूम अन्तरिक्ष में विस्तृत होता है और मेघरूप में परिणत होता है। हे पावक (शुद्धि विधायक), तुम स्तोत्र-द्वारा प्रसन्न होकर सूर्य की तरह दीप्ति-द्वारा रुचिमान् होते हो।

अथसप्तमी–

अधाहिविक्ष्वीड्योसिप्रियोनोअतिथिः।
रण्वःपुरीवजूर्यःसूनुर्नत्रययाय्यः ॥ ७ ॥

अर्ध । हि । विक्षु । ईड्यः । असि । प्रियः । नः । अतिथिः ।
रण्वः । पुरिऽइव । जूर्यः । सूनुः । न । त्रययाय्यः ॥ ७ ॥

अधापिच विक्षु प्रजासु हेअग्ने त्वमीड्यः स्तुत्योसि भवसि हियस्मादर्थे यस्मादेवं तस्मान्नोस्माकमतिथिः लुप्तोपममेतत् अतिथिरिवप्रियोसि यद्वा हविर्वहनाय सततगामीभूत्वास्माकंप्रियोसि तथा पुरीव नगर्यां जूर्यः जीर्णोवृद्धोहितोपदेष्टा राजेव रण्वोरमणीयोगन्तव्योवा भवसि तथा सूनुर्न पुत्रइव त्रययाय्यः यजमानैस्त्रातव्यः पालयितव्योभवसि त्रायतेरेतद्रूपं यद्वैतत्सूनोर्विशेषणं विद्यातपःकर्मलक्षणं त्रयंयातीतित्रययाय्यः यातेरौणादिकआय्यप्रत्ययः स्पृहयाय्यइतियथा अथवा त्रययाय्योजन्मत्रयंप्राप्तः जन्मत्रयंस्मर्यते मातुरग्रेधिजननंद्वितीयंमौंजिबन्धनात् । तृतीयंयज्ञदीक्षायाइतिजन्मत्रयंस्मृतमिति ॥ तादृशःपुत्रइतिरण्वोरमणीयोसि ॥ ७ ॥

७. हे अग्नि, तुम प्रजाओं के स्तुतिभाजन हो; क्योंकि तुम अतिथि की तरह हम लोगों के प्रिय हो। नगर में वर्तमान हितोपदेष्टा वृद्ध की तरह तुम आश्रययोग्य हो एवम् पुत्र की तरह पालनीय हो।

क्रत्वाहिद्रोणेअज्यसेग्नेवाजीनकृत्व्यः।
परिज्मेवस्वधागयोत्योनह्वार्यःशिशुः ॥ ८ ॥

क्रत्वा । हि । द्रोणे । अज्यसे । अग्ने । वाजी । न । कृत्व्यः ।
परिज्माऽइव । स्वधा । गयः । अत्यः । न । ह्वार्यः । शिशुः ॥ ८ ॥

हेअग्ने क्रत्वा कर्मणामन्थनरूपेण द्रोणे द्रुमेकाष्ठे अरण्यांविद्यमानस्त्वं अज्यसेहि यज्यसेखलु तथा वाजीन वेजनवानश्वइव कृत्व्यः कृत्वीतिकर्मनाम हविर्वहनादीनांकर्मणांकर्ता सयथा पुरुषंवहति तद्वद्धविर्वहनमग्नेरश्वसादृश्यं तथा परिज्मेव परितः सर्वत्रगन्तावायुरिव दावानलादिरूपेणसर्वत्रगन्तात्वं स्वधा अन्ननामैतत् अन्नं गयः गृहंच भवसि उभयोर्दातेत्यर्थः अपिच शिशुर्जातमात्रोबालोपि त्वमत्योन सततगामीजात्यश्वइव ह्वार्यः कुटिलमितस्ततोगन्तासि ह्वकौटिल्ये इत्यस्यैतद्रूपम् ॥ ८ ॥

८. हे अग्नि, अरणिमन्थन रूप कर्म से तुम्हारी विद्यमानता प्रकाशित होती है। अश्व जिस प्रकार से अपने आरोही का वहन करता है, उसी प्रकार तुम हव्य वहन करो। तुम वायु की तरह सर्वत्र गमन करते हो। तुम अन्न और गृह प्रदान करो। तुम शिशु और अश्व की तरह कुटिलगामी हो।

कारीर्यामग्नेर्धामच्छदोवैकल्पिक्यनुवाक्यात्वंत्येति सूत्रितंच–त्वन्त्याचिदच्युताधामन्तेविश्वमिति।

सैषानवमी—

त्वंत्याचिदच्युताग्नेपशुर्नयवंसे ।
धामांहयत्तेंअजरवनांवृश्चन्तिशिक्वंसः ॥ ९ ॥

त्वम् । त्या । चित् । अच्युंता । अग्नें । पशुः । न । यवंसे ।
धामं । ह । यत् । ते । अजर । वनां । वृश्चन्ति । शिक्वंसः ॥ ९ ॥

हेअग्ने त्वन्त्या तानिकाष्ठानि चिच्छब्दोपिशब्दसमानार्थोभिन्नक्रमः अच्युताअच्युतानि च्यावयितुमशक्यान्यपि अत्सीतिशेषः तत्रदृष्टान्तः यवसे घासेविसृष्टः पशुरिव सयथा सर्वंभक्षयति तथा त्वं प्रौढकाष्ठादीनि क्षणमात्रेणदहसीत्यर्थः हेअजर जरारहिताग्ने यद्यस्य सुपांसुलुगितिषष्ठ्याअलुक् शिक्वसोदीप्तस्य ते तव धाम धामानि तेजांसि वना वननीयानिसंभजनीयान्यरण्यानि वृश्चन्ति छिन्दन्ति तक्षन्ति सत्वमितिपर्वत्रान्वयः हेत्येतत्पादपूरणम् ॥ ९ ॥

९. हे अग्नि, तृण आदि चरने के लिए विसृष्ट (छोड़ा गया) पशु जिस प्रकार सम्पूर्ण तृण भक्षण कर लेता है, उसी प्रकार तुम प्रौढ़ काष्ठों को क्षण मात्र में भक्षण कर लेते हो। हे अविनश्वर अग्नि, तुम दीप्तिशाली हो। तुम्हारी शिखायें अरण्यों को छिन्न कर देती हैं।

वेषिह्यंध्वरीयतामग्नेहोतादमेंविशाम् ॥
समृधोंविश्पतेकृणुजुषस्वंहव्यमंङ्गिरः ॥ १० ॥

वेषिं । हि । अध्वरिऽयताम् । अग्नें । होतां । दमें । विशाम् ।
समृऽऋधः । विश्पते । कृणु । जुषस्वं । हव्यम् । अङ्गिरः ॥ १० ॥

हेअग्ने अध्वरीयतां अध्वरंयज्ञमात्मनइच्छतां विशांयजमानानां दमे गृहे त्वंहोता देवानामाह्वातासन् वेषिहि स्तुतिंहवींषिवा यतःकामयसे अतःकारणात् विश्पते विशांपालकाग्ने समृधः समृद्धान् अस्मान्यजमानान् कृणु कुरु कृत्वाच हेअङ्गिरः अङ्गनादिगुणयुक्तः अङ्गाररूपवाग्ने हव्यं अस्मदीयंहविः जषस्व सेवस्व ॥ १० ॥

१०. हे अग्नि, तुम यज्ञाभिलाषी यजमानों के गृह में होता रूप से प्रविष्ट होते हो। हे मनुष्यों के पालक अग्नि, तुम हम लोगों का समृद्धिविधान करो। हे अंगार-रूप अग्नि, तुम हमारे हव्य को स्वीकार करो।

अथैकादशी—

अच्छांनोमित्रमहोदेवदेवानग्नेवोचंःसुमतिंरोदंस्योः । वीहिस्वस्तिंसुक्षितिंदिवोनॄन्द्विषोअंहांसिदुरितातरेमतातरेमतवावंसातरेम ॥ ११ ॥ २ ॥

अच्छ॑ । नः॒ । मि॒त्र॒ऽम॒ह॒ः । दे॒व॒ । दे॒वान् । अग्ने॑ । वोचः॑ । सु॒ऽम॒तिम् । रोद॑स्योः । वी॒हि । स्व॒स्तिम् । सु॒ऽक्षि॒तिम् । दि॒वः । नॄन् । द्वि॒षः । अंहां॑सि । दुः॒ऽइ॒ता । त॒रे॒म॒ । ता । त॒रे॒म॒ । तव॑ । अव॑सा । त॒रे॒म॒ ॥ ११ ॥ २ ॥

हेमित्रमहः अनुकूलदीप्ते देवदानादिगुणयुक्ताग्ने रोदस्योः द्यावापृथिव्योर्वर्तमानस्त्वं देवान्यष्टव्यानिन्द्रादीनच्छाभिमुख्येन नोस्माकंसुमतिं स्तुतिं वोचः ब्रूहि दिवःस्तुतेर्नॄंनेतॄनस्मान् सुक्षितिं शोभननिवासयुक्तं स्वस्तिं अविनाशं वीहि गमय वेतिरत्रान्तर्भावितण्यर्थोद्रष्टव्यः वयंच द्विषोद्वेष्टॄन् शत्रूनंहांसिपापानि दुरिता तत्फलरूपाणि दुर्गमनानितरेम अतिक्रामेम तथा ता तानि व्यवहितानि जन्मान्तरकृतानिच पापादीनि तरेम उक्तएवार्थोदाढर्चायपुनरुच्यते हेअग्ने तवावसा रक्षणेन द्वेष्टृप्रभृतीनत्यन्तंतरेम ॥ ११ ॥

११. हे अनुकूल दीप्तिवाले, देव-दानवादि गुणयुक्त और द्यावा-पृथिवी में वर्तमान अग्निदेव, तुम देवों के निकट हम लोगों की स्तुति का उच्चारण करो। हम स्तोताओं को शोभन निवास-युक्त सुख में ले जाओ। हम लोग शत्रुओं, पापों और कष्टों का अतिक्रमण करें। हम लोग जन्मान्तर में कृतपापों से मुक्त हों। हे अग्नि, तुम्हारी रक्षा के द्वारा हम शत्रु आदि से उद्धार पायें। ॥ इतिचतुर्थस्यपञ्चमेद्वितीयोवर्गः ॥ २ ॥

अग्नेसक्षेषदित्यष्टर्चंतृतीयंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयं अनुक्रान्तंच—अग्नेष्टौइति। प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः।

**अग्ने॒सक्षे॑षदृत॒पाऋ॑त॒जाउ॒रुज्योति॑र्नशतेदेव॒युष्टे॑।**
**यंत्वंमि॒त्रेण॒वरु॑णःस॒जोषा॒देव॒पासि॒त्यज॑सा॒मर्त॒मंह॑ः ॥ १ ॥**

अग्ने॑ । सः । क्षे॒ष॒त् । ऋ॒त॒ऽपाः । ऋ॒ते॒ऽजाः । उ॒रु । ज्योतिः॑ । न॒श॒ते॒ । दे॒व॒ऽयुः । ते॒ । यम् । त्वम् । मि॒त्रेण॑ । वरु॑णः । स॒ऽजोषाः॑ । देव॑ । पासि॑ । त्यज॑सा । मर्त॑म् । अंहः॑ ॥ १ ॥

हेअग्ने सयजमानः क्षेषत् क्षयति निवसति चिरकालंजीवेदित्यर्थः कीदृशोयजमानः ऋतपाः ऋतस्ययज्ञस्य पालकः ऋतेजाः यज्ञनिमित्तंजातः उषित्वाच तेत्वदियं देवयुर्देवानात्मनइच्छन् सयजमानः उरुविस्तीर्णं ज्योतिःसूर्याख्यं नशते प्राप्नोति हेदेव द्योतमानाग्ने यं मर्तं मनुष्यंयजमानं मित्रेण वरुणः तृतीयार्थेप्रथमा वरुणेनच सजोषाः सहप्रीयमाणस्त्वं त्यजसा त्याजनसाधनेनायुधेनांहःअंहसःपापात् पासि रक्षसि सयजमानइतिपर्वत्रसंबन्धः ॥ १ ॥

१. हे अग्नि, वह यजमान चिरकालपर्यन्त जीवन धारण करे, जो यजमान यज्ञ का पालन करता है और यज्ञ के निमित्त उत्पन्न हुआ है। वरुण और मित्र के साथ समान प्रीति धारण करके, तेज-द्वारा तुम पाप से जिसकी रक्षा करते हो, वह देवाभिलाषी यजमान तुम्हारी विस्तीर्ण ज्योति प्राप्त करता है।

अथद्वितीया–

ईजेयज्ञेभिःशशमेशमीभिर्ऋधद्वारायाग्नयेददाश ।
एवाचनतंयशसामजुष्टिर्नांहोमर्तंनशतेनप्रदृप्तिः ॥ २ ॥

ईजे । यज्ञेभिः । शशमे । शमीभिः । ऋधत्ऽवाराय । अग्नये ।
ददाश । एव । चन । तम् । यशसाम् । अजुष्टिः । न । अंहः ।
मर्तम् । नशते । न । प्रऽदृप्तिः ॥ २ ॥

योयजमानः ऋधद्वाराय ऋधत् समृद्धं वारं वरणीयं धनं यस्य तादृशायाग्नये ददशे हवींषिददाति सयजमानः यज्ञेभिः सर्वैर्यज्ञैः ईजे इष्टवान्भवति तथाशमीभिः कर्मभिः कृच्छ्रचान्द्रायणादिभिः शशमे शान्तश्चभवति आग्नेयेनयोगेनसर्वफलंलभतइत्यर्थः अपिच तंयजमानं यशसां यशस्विनां पुत्राणां अजुष्टिरप्राप्तिर्नैव नशते नैवप्राप्नोति पुत्रवान्भवत्येवेत्यर्थः तथा मर्तं मनुष्यंतं अंहः पापं न नशते तथा प्रदृप्तिः अनर्थहेतुः प्रदर्पश्च तंनप्राप्नोति ॥ २ ॥

२. वरणीय धन से समृद्धमान् अग्नि के लिए जो यजमान हव्य प्रदान करता है, वह सम्पूर्ण यज्ञ के द्वारा यज्ञवान् अर्थात् सफल-यज्ञ होता है। तथा कृच्छ्र चान्द्रायणादि कर्म-द्वारा शान्त होता है यानी अग्नि कर्म-द्वारा वह सम्पूर्ण फल प्राप्त करता है। वह यजमान यशस्वी पुत्रों के अभाव को भी नहीं प्राप्त करता है। उसे पाप तथा अनर्थक गर्व नहीं छूते।

सूरोनयस्यदृशतिररेपाभीमायदेतिशुचतस्तआधीः ।
हेषस्वतःशुरुधोनायमक्तोःकुत्राचिद्रण्वोवसतिर्वनेजाः ॥ ३ ॥

सूरः । न । यस्य । दृशतिः । अरेपाः । भीमा । यत् । एति ।
शुचतः । ते । आ । धीः । हेषस्वतः । शुरुधः । न । अयम् ।
अक्तोः । कुत्र । चित् । रण्वः । वसतिः । वनेऽजाः ॥ ३ ॥

सूरोन सूर्यस्येवयस्याग्नेः दृशतिः दर्शनं अरेपाः पापरहितं हेअग्ने यत् यस्य ते तव शुचतोज्वलतः धीः धारयित्रीज्वाला भीमा भयङ्करासती आसमन्तादेति गच्छति योयमग्निः हेषस्वतः शब्दयुक्ताः शुरुधोन शुचः शोकस्यरोधयित्रीगाश्च अक्तोः अक्तुरितिरात्रिनाम तेनच तत्रसञ्चारीराक्षसादिर्लक्ष्यते राक्षसादेःस्वभूतादददातीतिशेषः सोयंवसतिः सर्वेषामावासभूतः वनेजाः अरण्येजायमानः कुत्राचित् क्वचिदेवस्थाने पर्वताग्रादौ रण्वो रमणीयोभवति ॥ ३ ॥

३. सूर्य के समान अग्नि का दर्शन पापरहित है। हे अग्नि, तुम्हारी प्रज्वलित ज्वाला भयंकर है और सर्वत्र गमन करती है। अग्निदेव रात्रि में शब्दायमान धेनु की तरह विस्तृत होते हैं। सबके आवासभूत अर्थात् निवासप्रद और अरण्यजात अग्नि पर्वत के अग्र भाग में रमणीय होते हैं।

अथचतुर्थी—

तिग्मंचिदेममहिवर्पोअस्यभसदश्वोनयमसानआसा ।
विजेहमानःपरशुर्नजिह्वांद्रविर्नद्रावयतिदारुधक्षत् ॥ ४ ॥

तिग्मम् । चित् । एम॑ । महि॑ । वर्पः । अस्य । भस॑त् । अश्वः । न । यमसानः । आसा । विऽजेहमानः । परशुः । न । जिह्वाम् । द्रविः । न । द्रवयति । दारु॑ । धक्ष॑त् ॥ ४ ॥

अस्याग्नेः एम गमनभूतोमार्गः तिग्मं तीक्ष्णं स्प्रष्टुमशक्यत्वात् अस्यचवर्पोरूपं महि महत् प्रभूतं भसत् दीप्यते भसभर्त्सनदीप्त्योरितिधातुः कीदृशोग्निः अश्वोन अश्वइव आसा आस्येन यमसानः तृणादिकंनियच्छन् तथापरशुर्न यथापरशुःस्वकीयांधारांकाष्ठेप्रक्षिपति तथास्वकीयांजिह्वांज्वालांविजेहमानःतरुगुल्मादौप्रक्षिपन् तथा दारु काष्ठं धक्षत् दहन् द्रविर्न द्रविर्द्रावयिता स्वर्णकारः सयथा स्वर्णादिकंद्रावयति तथा सर्वंवनंद्रावयति मूर्तंभूतंसर्वंभस्मसात्करोतीत्यर्थः ॥ ४ ॥

४. अग्नि का मार्ग तीक्ष्ण है। इनका रूप अत्यन्त दीप्तिमान् है। अग्नि अश्व की तरह मुख-द्वारा तृणादि को प्राप्त करते हैं। कुठार जैसे अपनी धार को काष्ठ पर प्रक्षिप्त करता है, उसी प्रकार अग्नि अपनी ज्वाला को तरु गुल्म आदि पर प्रक्षिप्त करते हैं। स्वर्णकार जैसे सुवर्ण आदि को द्रवीभूत करता है, उसी प्रकार अग्नि सम्पूर्ण वन को द्रवित करते हैं अर्थात् सम्पूर्ण वस्तु को अग्नि भस्मीभूत कर डालते हैं।

सइदस्तेवप्रतिधादसिष्यञ्छिशीततेजोयसोनधाराम् ।
चित्रध्रजतिररतिर्योअक्तोर्वेर्नद्रुषद्वारघुपत्मजंहाः ॥ ५ ॥ ३ ॥

सः । इत् । अस्ताऽइव । प्रति॑ । धात् । असिष्यन् । शिशीत । तेजः । अयसः । न । धाराम् । चित्रऽध्रजतिः । अरतिः । यः । अक्तोः । वेः । न । द्रुऽसद्वा । रघुपत्मऽजंहाः ॥ ५ ॥ ३ ॥

सइत् सखल्वग्निः अस्तेव बाणादेःक्षेप्तेव प्रतिधात् स्वकीयज्वालांप्रतिधत्ते यथाधन्वी लक्ष्याभिमुख्येनबाणंसन्धत्ते तथा ज्वालांसन्धत्तइत्यर्थः प्रतिधायच असिष्यन् ज्वालांप्रक्षेप्स्यन् तेजःस्वकीयं शिशीत निश्यति तीक्ष्णीकरोति अत्रदृष्टांतः अयसोनधारां यथा अयोमयस्यपरश्वादेर्धारां प्रक्षेप्तुकामस्तीक्ष्णीकरोतितद्वत् तीक्ष्णीकृत्यच चित्रध्रजतिः विचित्रगतिः अक्तोरात्रेः अरतिरभिगन्ता वेर्न पक्षीव द्रुषद्वा वृक्षेषुसीदन् रघुपत्मजंहाः लघुपतनसमर्थपादः एवंभूतःसन् योग्निर्वर्तते सइतिपूर्वंत्रान्वयः ॥ ५ ॥

५. वाण चलानेवाला जैसे लक्ष्य के अभिमुख वाण चलाता है, वैसे ही अग्नि अपनी ज्वाला को प्रक्षिप्त करते हैं। कुठार आदि को चलानेवाला जैसे कुठार आदि की धार को तीक्ष्ण करता है वैसे ही अग्नि भी अपनी ज्वाला को फेंकते समय तीक्ष्ण करते हैं। वृक्ष के ऊपर निवास करनेवालें और लघुपतन-समर्थ पाद-विशिष्ट पक्षी की तरह विचित्रगति अग्नि रात्रि का अतिक्रमण करते हैं अर्थात् धीरे-धीरे अन्धकार का विनाश करते हैं।

सईंरे॒भोनप्रतिंवस्तउस्राःशो॒चिषांररपीतिमि॒त्रमंहाः।
नक्तं॒यईमरु॒षोयोदिवा॒नॄनमर्त्यौअरु॒षोयोदिवा॒नॄन्॥ ६॥

सः। ईम्। रे॒भः। न। प्रति। व॒स्ते। उ॒स्राः। शो॒चिषा। र॒र॒पी॒ति। मि॒त्रऽमंहाः। नक्तम्। यः। ई॒म्। अ॒रु॒षः। यः। दिवा। नॄन्। अमर्त्यः। अ॒रु॒षः। यः। दिवा। नॄन्॥ ६॥

सईं सोयमग्निः रेभोन स्तुत्यः सूर्यइव उस्राः दीप्ताः ज्वालाः प्रतिवस्ते आच्छादयति तथा मित्रमहाः सर्वेषामनुकूलप्रकाशःसन् शोचिषा तेजसा ररपीति भृशंशब्दंकरोति यईम-यमग्निः नक्तं रात्रौ अरुषः आरोचमानःसन् दिवा अहनीव नॄन् मनुष्यान् स्वस्वकार्येप्रेरयति पुनर्यच्छब्दःपूरकः तथाऽमर्त्योऽमरणधर्मा अरुषआरोचमानोरोषरहितोवा योऽग्निः दिवा द्यो-तमानेनतेजसा नॄन्नेतॄन् आत्मीयान्रश्मीन् प्रेरयति सइतिपूर्वत्रसंबन्धः यद्वा नक्तं रात्रौ योय-मग्निररुषः आरोचमानः यश्चमरणरहितोग्निः सः दिवा अह्नि नॄन्नेतॄन् देवान् हविर्भिः संयोजयति योदिवानॄनितिपुनरुक्तिरादरार्था॥ ६॥

६. वे अग्नि स्तवनीय सूर्य की तरह दीप्त ज्वाला को आच्छादित करते हैं। सबके अनुकूल प्रकाश को विस्तारित करके वे तेज-द्वारा अत्यन्त शब्द करते हैं। अग्नि रात्रि में शोभित होकर मनुष्यों को दिवस की तरह अपने-अपने कार्यों में लगाते हैं। अमरणशील और सुन्दर अग्नि द्युतिमान् तेज-द्वारा अपनी किरणों को नेताओं के लिए प्रेरित करते हैं। अथवा सुन्दर अग्नि दिन में देवों को हवि के संयक्त करते हैं।

दि॒वोनयस्य॑विध॒तोनवींनो॒द्वृषारु॒क्षओषधीषुनूनोत्।
घृणा॒नयोध्रजंसा॒पत्मंना॒यन्नारोदंसी॒वसुना॒दंसुपत्नीं॥ ७॥

दि॒वः। न। यस्य॑। वि॒ध॒तः। नवींनोत्। वृषा। रु॒क्षः। ओषधीषु। नू॒नो॒त्। घृणा। न। यः। ध्रजंसा। पत्मना। यन्। आ। रोदंसी॒ इति। वसुना। दम्। सु॒पत्नी॒ इति सुऽपत्नी॥ ७॥

४ दिवोन दीप्तस्यसूर्यस्येव विधतोविधातुः रश्मीकुर्वतोयस्याग्नेर्नवीनोत भृशंशब्दोभूव ए-तदेवव्याचष्टे वृषा कामानांवर्षिता रुक्षः दीप्तः सोग्निरोषधीषु दह्यमानासु नूनोव भृशंशब्दम-

करोव यश्चघृणान सञ्चलनशीलेनदीप्तेनेव ध्रजसा गमनशीलेनतेजसा पत्मना इतस्ततउत्पतता यन् गच्छन् वर्तते सोग्निः दं अस्मच्छत्रून्दमयन् सुपत्नी शोभनपतिके रोदसी द्यावापृथिव्यौवसुना धनेन आपूरयति ॥ ७ ॥

७. दीप्तिमान् सूर्य की तरह रश्मि विस्तीर्ण करनेवाले जिस अग्नि का महान् शब्द हुआ है, वे अभीष्टवर्षी और दीप्त अग्नि ओषधियों के (जलाने योग्य) मध्य में अत्यन्त शब्द करते हैं। जो दीप्त और गमनशील तथा इतस्ततः ऊर्द्धगामी तेज-द्वारा गमन करते हैं, वे अग्नि हमारे शत्रुओं को दनन करते हुए शोभनपति-सम्पन्न स्वर्ग और पृथिवी को धन-द्वारा पूर्ण करते हैं।

धायोभिर्वायोयुज्येभिरर्कैर्विद्युन्नदंविद्योत्स्वेभिःशुष्मैः।
शर्धोवायोमरुतांततक्षऋभुर्नत्वेषोरभसानोअद्यौत् ॥ ८ ॥ ४ ॥

धार्यःऽभिः। वा। यः। युज्येभिः। अर्कैः। विऽद्युत्। न। दविद्योत्। स्वेभिः। शुष्मैः। शर्धः। वा। यः। मरुताम्। ततक्ष। ऋभुः। न। त्वेषः। रभसानः। अद्यौत् ॥ ८ ॥ ४ ॥

योग्निः धायोभिर्वा धारकैरश्वैरिव युज्येभिः युज्यैः स्वयमेवयुज्यमानैरर्कैरर्चनीयैर्दीप्तिभिर्गच्छति सोग्निः विद्युन्न विद्युदिव स्वेभिः स्वकीयैः शुष्मैः शोषकैस्तेजोभिर्दविद्योत विद्योतते यश्च मरुतां एतत्संज्ञकानांदेवानां शर्द्धोवा बलमिव ततक्ष तनूकरोति सर्वंतीक्ष्णीकरोतिशोषयतीतियावत् सोयं ऋभुर्न उरुभासमानःसूर्यइवत्वेषोदीप्तः रभसानोवेगंकुर्वन्अद्यौत् विद्योतते प्रकाशते ॥ ८ ॥

८. जो अग्नि अश्व की तरह स्वयमेव युज्यमान अर्चनीय दीप्ति के साथ गमन करते हैं, वे अग्नि अपने तेज के द्वारा विद्युत् की तरह चमकते हैं। जो अग्नि मरुतों के बल को स्वल्प करते हैं, वे निरतिशय दीप्तिशाली, सूर्य की तरह प्रदीप्त और वेगसम्पन्न अग्नि प्रकाशमान होते हैं।

॥ इतिचतुर्थस्यपञ्चमेचतुर्थोवर्गः ॥ ४ ॥

यथाहोतरित्यष्टर्चंचतुर्थंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयं यथाहोतरित्यनुक्रान्तं—प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः।

यथाहोतर्मनुषोदेवतातायज्ञेभिःसूनोसहसोयजासि।
एवानोअद्यसमनासमानानुशन्नग्नउशतोयक्षिदेवान् ॥ १ ॥

यथा। होतः। मनुषः। देवऽताता। यज्ञेभिः। सूनो इति। सहसः। यजासि। एव। नः। अद्य। समना। समानान्। उशन्। अग्ने। उशतः। यक्षि। देवान् ॥ १ ॥

हेहोतः देवानामाह्वातः सहसःसूनो बलस्यपुत्राग्ने यथा येनप्रकारेण मनुषः मनोः प्र-

आपतेः यजमानस्य देवताता यज्ञनामैतत् देवतातौ यज्ञे यज्ञेभिर्यजमानसाधनैर्हविर्भिः यजासि देवान्यजसि एव एवं हेअग्ने नोस्माकं अद्यास्मिन्यज्ञे समानान् त्वत्सदृशानिन्द्रादीनुशन्कामयमानस्त्वं उशतः कामयमानान्यष्टव्यान्देवान् समना क्षिप्रं यक्षि यज यद्वा समानंमन्येस्मिन्देवानितिसमनोयज्ञस्तस्मिन्नितियोज्यम् ॥ १ ॥

१. हे देवों के आह्वान करनेवाले बलपुत्र अग्नि, जिस प्रकार प्रजापति (यजमान) के यज्ञ में तुमने हव्य-द्वारा देवों का यजन किया था, उसी प्रकार हम लोगों के इस यज्ञ में आज यजनीय इन्द्रादि देवों को अपने समान समझकर तुम उनका शीघ्र यजन करो।

सनोविभावांचक्षणिर्नवस्तोरग्निर्वन्दारुवेद्यश्चनोधात्।
विश्वायुर्योअमृतोमर्त्येषूषर्भुद्भूदतिथिर्जातवेदाः ॥ २ ॥

सः। नः। विभाऽवा। चक्षणिः। न। वस्तोः। अग्निः। वन्दारु।
वेद्यः। चनः। धात्। विश्वऽआयुः। यः। अमृतः। मर्त्येषु।
उषःऽभुत्। भूत्। अतिथिः। जातऽवेदाः ॥ २ ॥

वस्तोरहनि चक्षणिर्न प्रकाशकःसूर्यइव विभावा विशेषेणदीप्यमानः वेद्यः सर्वैर्ज्ञातव्योलम्भनीयोवा सोग्निः नोस्मभ्यं वन्दारु वन्दनीयं स्तुत्यं चनः अन्नं धात् दधातु प्रयच्छत्वित्यर्थः विश्वायुः सर्वान्नः सर्वेषांजीवनहेतुर्वा अमृतोमरणरहितः अतिथिर्हविर्वहनाय सततगामी जातवेदाः जातानांवेदिता जातधनोवा एवंभूतोयोग्निः मर्त्येषु मनुष्येषु यजमानेषुउषर्भुद्भूदुषःकालेअग्निहोमार्थंप्रबुद्धोभवति सइतिपूर्वेणान्वयः ॥ २ ॥

२. जो दिन के प्रकाशक हैं, जो सूर्य की तरह अत्यन्त दीप्तिमान् हैं, जो सबके बोधगम्य हैं, जो सबके जीवनभूत हैं, अविनश्वर हैं, अतिथि हैं, जातवेदा हैं और जो मनुष्यों के मध्य में उषाकाल में प्रबुद्ध होते हैं, वे अग्नि हम लोगों को वन्दनीय (उत्कृष्ट) धन प्रदान करें।

द्यावोनयस्यपनयन्त्यभ्वंभासांसिवस्तेसूर्योनशुक्रः ॥
वियइनोत्यजरःपावकोश्नस्यचिच्छिश्नथत्पूर्व्याणि ॥ ३ ॥

द्यावः। न। यस्य। पनयन्ति। अभ्वम्। भासांसि। वस्ते। सूर्यः।
न। शुक्रः। वि। यः। इनोति। अजरः। पावकः। अश्नस्य।
चित्। शिश्नथत्। पूर्व्याणि ॥ ३ ॥

नेतिसंप्रत्यर्थे उक्तंच अस्त्युपमार्थस्यसंप्रत्यर्थेप्रयोगइति द्यावः स्तोतारः सम्प्रतीदानीं यस्याग्नेरभ्वंमहत्कर्म पनयन्ति स्तुवन्ति सोग्निः सूर्योन सूर्यइव शुक्रः शुक्लवर्णःसन् भासांसि तेजांसि वस्ते आच्छादयति यश्चाजरोजरारहितः पावकः सर्वस्यशोधकोग्निः विइनोति भासा सर्वंव्याप्नोति सोयं अश्नस्यचित् व्यापनशीलस्यापिराक्षसादेः पूर्व्याणि चिरन्तनानि पुराणि शिश्नथत् हिनस्ति श्नथक्नथहिंसायांइतिधात्रः ॥ ३ ॥

३. स्तोता लोग अभी जिन अग्नि के महान् कर्म की स्तुति करते हैं, वे सूर्य की तरह शुभ्रवर्ण अग्नि अपने तेज को आच्छादित करते हैं।

जरारहित और पवित्र बनानेवाले अग्नि दीप्ति-द्वारा सब पदार्थों को प्रकाशित करते हैं और व्यापनशील राक्षसादि को तथा पुरातन नगरों की हिंसा करते हैं।

वन्द्याहिसूंनोअस्यंद्मसद्वांचक्रेअग्निर्जनुषाज्माऽन्नम् ।
सत्वंनंऊर्जसनऊर्जंधाराजेवजेरवृकेक्षेष्यन्तः ॥ ४ ॥
वन्द्या । हि । सूनो इति । असि । अद्मऽसद्वा । चक्रे । अग्निः ।
जनुषा । अज्म । अन्नम् । सः । त्वम् । नः । ऊर्जऽसने । ऊर्जम् ।
धाः । राजाऽइव । जेः । अवृके । क्षेषि । अन्तरिति ॥ ४ ॥

हेसूनो सहसस्पुत्र यद्वा षूप्रेरणे सर्वस्यप्रेरकाग्ने वन्द्या वदनीयः स्तुत्योसिहि परःपादः परोक्षकृतः अद्म सद्वा अद्मस्वदनीयेषु हविष्षुसीदन् हविःस्वीकरणायोपविशन्नग्निः जनुषा जन्मना स्वभावतएव अज्म गृहनामैतत् गृहमन्नंच यजमानानां चक्रे करोति हेऊर्जसने ऊर्जस्यान्नस्यदातरग्ने नोस्मभ्यं सतादृशस्त्वं ऊर्जमन्नं धाः धेहि तथा राजेवजेः अस्मच्छत्रूञ्जय एतत्सर्वार्थमवृकेराक्षसादिभिर्बाधकैर्वियक्तेस्मदीयाग्न्यगारेन्तर्मध्ये क्षेषि निवससि ॥ ४ ॥

४. हे सबके प्रेरक अग्नि, तुम वन्दनीय हो। अग्नि हव्य के ऊपर आसीन होकर स्वभावतः ही उपासकों को गृह और अन्न प्रदान करते हैं। हे अन्नप्रदायक अग्नि, तुम हम लोगों को अन्न प्रदान करो तथा राजा की तरह हमारे शत्रुओं को जीतो एवम् उपद्रव-शून्य हमारे अग्न्यागार में निवास करो।

नितिक्तियोवारणमन्नमत्तिवायुर्नराष्ट्र्यत्येत्यक्तून् ।
तुर्यामयस्तआदिशामरातीरत्योनह्रुतःपततःपरिह्रुत् ॥ ५ ॥ ५ ॥
निऽतिक्ति । यः । वारणम् । अन्नम् । अत्ति । वायुः । न । राष्ट्री ।
अति । एति । अक्तून् । तुर्याम । यः । ते । आऽदिशाम् । अरातीः ।
अत्यः । न । ह्रुतः । पततः । परिऽह्रुत् ॥ ५ ॥ ५ ॥

योग्निर्वारणं तमसांनिवारकं स्वकीयंतेजः नितिक्ति निश्यतितीक्ष्णीकरोति तिजनिशानेइतिधातुः यश्चान्नं यष्टृभिर्दीयमानं हविर्लक्षणमत्ति भक्षयति तथाचश्रूयते अन्नादोवाएषोन्नपतिःयदग्निरिति सोग्निः वायुर्न वायुरिवराष्ट्रीईश्वरनामैतत् राष्ट्रं राज्यं तद्वान्वायुर्यथा स्वमाहात्म्येनसर्वमीष्टे तद्वत्सर्वस्येश्वरइत्यर्थः तादृशःसन् अक्तून्रात्रीः अत्येति अतिक्रामति तद्गतमन्धकारंतिरस्करोतीत्यर्थः वयंच त्वत्प्रसादात् तुर्याम तं हिंस्याम योजनः ते तुभ्यं आदिशामादिश्यमानानां दीयमानानांहविषां अरातीः अरातिरदाता छान्दसोदीर्घः यद्वा अरातीर्धनस्यादाताद्य ते त्वांमति आदिशामादेष्टॄणामाचक्षाणानामस्माकं योजनोविरोधी तंहिंस्याम त्वंच अत्योन शीघ्रगामीजात्यश्वइव ह्रुतोहिंसकान्पततःआभिमुख्येनगच्छतःशत्रून्परिह्रुत् परिगत्य हन्ताभव ह्वरयतेर्हिंसार्थस्यैतद्रूपम् ॥ ५ ॥

---

१ ऐ० ब्रा० १. ८. ।

५. जो अग्नि अन्धकार के निवारक हैं, जो अपने तेज को तीक्ष्ण करते हैं, जो हवि का भक्षण करते हैं और जो वायु की तरह सब पर शासन करते हैं, वे अग्नि रात्रि का अतिक्रमण करते हैं अर्थात् रात्रि के अन्धकार का विनाश करते हैं। हे अग्नि, हम तुम्हारे प्रसाद से उस व्यक्ति को जीतें, जो तुम्हें हव्य प्रदान नहीं करता है। तुम अश्व की तरह वेगगामी होकर हमारे आक्रमण करनेवाले शत्रुओं को विनष्ट करो।

आसूर्यो॒नभा॒नुमद्भि॑र॒र्कैरग्ने॑त॒तन्थ॒रोद॑सी॒विभा॒सा।
चि॒त्रोन॑य॒त्परि॒तमां॒स्य॒क्तः शो॒चिषा॒पत्म॑न्नौशि॒जोनदीय॑न्॥ ६॥

आ। सूर्यः॑। न। भा॒नु॒मत्ऽभिः॑। अ॒र्कैः। अग्ने॑। त॒तन्थ॑।
रोद॑सी॒ इति॑। वि। भा॒सा। चि॒त्रः। न॒य॒त्। परि॑। तमां॑सि।
अ॒क्तः। शो॒चिषा॑। पत्म॑न्। औ॒शि॒जः। न। दीय॑न्॥ ६॥

हेअग्ने रोदसी द्यावापृथिव्यौ भासा दीप्त्या व्याततन्थ विशेषेणाच्छादयसि तत्रदृष्टान्तः भानुमद्भिः प्रभावद्भिरर्कैरर्चनीयैः किरणैः सूर्योन यथासूर्यः आतनोति तद्वत् परोर्द्धर्चः परोक्षकृतः पत्मन् पतत्यस्मिन्निति पत्ममार्गः तस्मिन्नौशिजोन उशिजस्तोतारःस्तुत्यतयातत्संबन्धीऔशिजःसूर्यः सइव दीयन् गच्छन् शोचिषा तेजसा अक्तः संश्लिष्टःअतएव चित्रश्चायनीयोऽग्निः तमांसि नैशान्यन्धकाराणि परिणयत् परिनयति परितोगमयति सर्वस्मादपिदिग्भागान्निवर्तयतीत्यर्थः॥ ६॥

६. हे अग्नि, तुम द्यावा-पृथिवी को विशेष रूप से आच्छादित करते हो जैसे सूर्य देव अपनी दीप्तिमान् और पूजनीय किरणों से द्यावा-पृथिवी को आच्छादित करते हैं। अपने पथ से गमन करनेवाले सूर्य की तरह विचित्र अग्नि अन्धकारों को दूर करते हैं।

त्वांहि॒म॒न्द्रत॑मम॒र्कशो॒कैर्व॑वृ॒महे॒महि॑नः॒श्रोष्य॑ग्ने।
इन्द्रं॒नत्वा॒शव॑सादे॒वता॒वा॒युं॑पृ॒णन्ति॒राध॑सा॒नृत॑माः॥ ७॥

त्वाम्। हि। म॒न्द्रऽत॑मम्। अ॒र्क॒ऽशो॒कैः। व॒वृ॒महे॑। महि॑। नः॒।
श्रोषि॑। अ॒ग्ने॒। इन्द्र॑म्। न। त्वा॒। शव॑सा। दे॒वता॑। वा॒युम्।
पृ॒ण॒न्ति॒। राध॑सा। नृऽत॑माः॥ ७॥

हेअग्ने मन्द्रतमं स्तुत्यतमं त्वां अर्कशोकैरर्चनीयैः पूजनीयैः शोकैर्दीप्तिभिर्युक्तं हियस्माद्ववृमहे वृणीमहे सम्भजामहे यद्वार्कशोकैःअर्चनीयैःप्रशस्यैःदीप्तिकरणैः स्तोत्रैः साधनभूतैस्त्वां संभजामहे तस्मान्महिमहत् नोस्मदीयंस्तोत्रं श्रोषि शृणु हेअग्ने नृतमाः स्तुतीनांनेतृतमाःऋत्विजः शवसा बलेन वायुं गन्तारं अथवा वायुमिव शवसाबलेनयुक्तमिन्द्रंन इन्द्रमिव देवतात्मानंत्वां राधसा हविर्लक्षणेनधनेन पृणन्ति प्रीणयन्ति देवताशब्दात् द्वितीयायाःसुपांसुलुगितिलुक्॥ ७॥

७. हे अग्नि, तुम अत्यन्त स्तवनीय, पूजार्ह और दीप्तियुक्त हो। हम लोग तुम्हारा सम्भजन करते हैं; इसलिए तुम हमारे महान् स्तोत्र का श्रवण करो। हे अग्नि, नेता रूप ऋत्विक् लोग तुम्हें हविर्लक्षण धन से सन्तुष्ट करते हैं। तुम बल में वायु के सदृश और इन्द्र की तरह देव-स्वरूप हो।

नूनोंअग्नेवृकेभिःस्वस्तिवेषिरायःपथिभिःपर्ष्यंहः।
तासूरिभ्योगृणतेरासिसुम्नंमदेमशतहिमाःसुवीराः ॥ ८ ॥ ६ ॥

नु। नः। अग्ने। अवृकेभिः। स्वस्ति। वेषि। रायः। पथिऽभिः। पर्षि। अंहः। ता। सूरिऽभ्यः। गृणते। रासि। सुम्नम्। मदेम। शतऽहिमाः। सुऽवीराः ॥ ८ ॥ ६ ॥

हेअग्ने नोस्मान्अवृकेभिः वृकास्तेनास्तद्रहितैः पथिभिर्मार्गैः रायोधनानि नु क्षिप्रं स्वस्ति क्षेमेण वेषि गमयप्रापय अंहः अंहसः पापात् पर्षि उक्तलक्षणैर्मार्गैःपारयचास्मान् यानि त्वया सूरिभ्यः स्तोतृभ्योदेयानि सुम्नानि ता तानि सुम्नं सुम्नानि सुखानि गृणते स्तुवते मह्यं रासि देहि वयंच शतहिमाः शतंहेमंतान् संवत्सरान् सुवीराः वीर्याज्जायन्तइतिवीराःपुत्रादयः शोभनपुत्रादिसहिताः सन्तोमदेम हृष्याम ॥ ८ ॥

८. हे अग्नि, तुम शीघ्र ही वृक से रहित मार्ग-द्वारा हम लोगों को निर्विघ्न-पूर्वक ऐश्वर्य के समीप ले जाओ। पाप से हम लोगों का उद्धार करो। तुम स्तोताओं को जो सुख प्रदान करते हो, वही सुख हमें प्रदान करो। हम लोग शोभन सन्तति-सम्पन्न होकर सौ वर्ष पर्यन्त सुख-भोग करें। ॥ इतिचतुर्थस्यपञ्चमेषष्ठोवर्गः ॥ ६ ॥

हुवेवइतिसप्तर्चंपञ्चमंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयं तथाचानुक्रम्यते—हुवेवःसप्तेति प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः।

हुवेवःसूनुंसहसोयुवानमद्रोघवाचंमतिभिर्यविष्ठम्।
यइन्वतिद्रविणानिप्रचेताविश्ववाराणिपुरुवारोअध्रुक् ॥ १ ॥

हुवे। वः। सूनुम्। सहसः। युवानम्। अद्रोघऽवाचम्। मतिऽभिः। यविष्ठम्। यः। इन्वति। द्रविणानि। प्रऽचेताः। विश्वऽवाराणि। पुरुऽवारः। अध्रुक् ॥ १ ॥

हेअग्ने वः व्यत्ययेनबहुवचनं त्वां मतिभिर्मननीयैस्तोत्रैः हुवे आह्वयामि कीदृशं सहसोबलस्य सूनुं पुत्रं अग्निर्हिबलेनमथ्यमानोजायते युवानं नित्यतरुणं फलस्यमिश्रयितारंवा अद्रोघवाचं अद्रोग्धव्या प्रशस्ता स्तुतिरूपावाक् यस्मिन्प्रयुज्यते तादृशं यविष्ठं अतिशयेनयुवानं प्रचेताः प्रकृष्टज्ञानाः पुरुवारः पुरुभिर्बहुभिर्वरणीयःसम्भजनीयः अध्रुक् अद्रोग्धा यजमानानां एवंभूतोयोग्निः विश्ववाराणि सर्वैर्वरणीयानि संभजनीयानि प्रशस्यानि द्रविणानि धनानि इन्वति प्रेरयति स्तोतृभ्योददातीतियावत् तं त्वां हुवेइतिपूर्वत्रसंबन्धः ॥ १ ॥

१. हे अग्नि, हम स्तोत्रों-द्वारा तुम्हारा आह्वान करते हैं। तुम बल-पुत्र, नित्य तरुण, प्रशस्त स्तुति-द्वारा स्तवनीय, अतिशय युवा, प्रकृष्ट ज्ञानवाले, बहुस्तुत और द्रोह-रहित हो। इस प्रकार के अग्नि स्तोताओं को अभिलषित धन प्रदान करते हैं।

त्वेवसूंनिपुर्वणीकहोतर्दोषावस्तोरेरिरेयज्ञियांसः।
क्षामेवविश्वाभुवनानियस्मिन्त्संसौभगानिदधिरेपावके ॥ २ ॥

त्वे इति। वसूनि। पुरुऽअनीक। होतः। दोषा। वस्तोः। आ। ईरिरे। यज्ञियांसः। क्षामऽइव। विश्वा। भुवनानि। यस्मिन्। सम्। सौभगानि। दधिरे। पावके ॥ २ ॥

हे पुर्वणीक बहुज्वालहोतर्देवानामाह्वातरग्ने त्वे त्वयि दोषा रात्रौ वस्तोरहनिच यज्ञियासोयज्ञार्हायजमानाः वसूनि हविर्लक्षणानिधनानि एरिरे आभिमुख्येनप्रेरयन्ति प्रापयन्ति जुह्वतीत्यर्थः विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि क्षामेव क्षमायां भूम्यामिव यस्मिन्पावकेशोधकेग्नौ सौभगानि धनानि सन्दधिरे देवाःसम्यङ्निहितवन्तः अग्नौ वामं वसु संन्यदधतेतिब्राह्मणं तस्मिंस्त्वयीतिपूर्वत्रयोज्यम् ॥ २ ॥

२. हे बहु-ज्वाला-विशिष्ट देवों के आह्वान करनेवाले अग्नि, याग-योग्य यजमान तुममें हव्य रूप धन को अहर्निश समर्पित करते हैं। देवों ने जिस प्रकार सम्पूर्ण जीवों को पृथिवी पर स्थापित किया था, उसी प्रकार अग्नि में सम्पर्ण धन को रखा था।

त्वंविक्षुप्रदिवंःसीदआसुक्रत्वारथीरभवोवार्याणाम्।
अतंइनोषिविधतेचिकित्वोव्यांनुषग्जातवेदोवसूंनि ॥ ३ ॥

त्वम्। विक्षु। प्रऽदिवंः। सीदः। आसु। क्रत्वा। रथीः। अभवः। वार्याणाम्। अतः। इनोषि। विधते। चिकित्वः। वि। आनुषक्। जातऽवेदः। वसूंनि ॥ ३ ॥

हेअग्ने त्वं प्रदिवः पुराणनामैतत् पुरातनकालीनासु विक्षु प्रजासु आसु परिदृश्यमानासुच सीदः सीदसिविश्वान्तरात्मनावर्तसे तथाकृत्वा आत्मीयेनकर्मणा वार्याणां वरणीयानांधनानांरथीरभवः रंहयितायजमानेभ्यः प्रापयिताभूः अतःकारणात् हेचिकित्वोविद्वन् जातवेदः जातानांप्राणिनांवेदितरग्ने विधते परिचरतेयजमानाय वसूनि धनानि आनुषगनुषक्तंसततंयथाभवतितथा विइनोषि विविधंप्रेरयसि ॥ ३ ॥

३. हे अग्नि, तुम प्राचीन तथा परिदृश्यमान प्रजाओं में सर्वतोभाव से अवस्थान करते हो एवम् अपने कार्य-द्वारा यजमानों को वाञ्छित धन

१ तै० सं० १.५.१.।

प्रदान करते हो। हे ज्ञानी जातवेदा, अतएव तुम परिचर्याकारी यजमान को निरन्तर धन प्रदान करो।

प्रवर्ग्यैभिष्टवेयोनःसनुत्यइतिद्वृचः सूत्रितंच—योनःसनुत्योअभिदासदग्नेभवानोअग्नेसुमनाउपेतौइतिद्वृचाइति।

योनःसनुंत्योअभिदासंदग्नेयोअन्तंरोमित्रमहोवनुष्यात्।
तमजरेभिर्वृषंभिस्तवस्वैस्तपांतपिष्ठतपंसातपंस्वान् ॥ ४ ॥

यः। नः। सनुंत्यः। अभिऽदासंत्। अग्ने। यः। अन्तंरः।
मित्रऽमहः। वनुष्यात्। तम्। अजरेंभिः। वृषंऽभिः। तवं।
स्वैः। तपं। तपिष्ठ। तपंसा। तपंस्वान् ॥ ४ ॥

हेअग्ने यःशत्रुः सनुत्यः सनुतरित्यन्तर्हितनाम अन्तर्हितेदेशेवर्तमानःसन् नोस्मानभिदासदुपक्षयतिबाधते यश्च अन्तरः आभ्यन्तरवर्तीसन् हे मित्रमहः अनुकूलदीप्ते मित्राणां महयितर्वा अग्ने वनुष्यात् हिंस्यात् तमुभयविधं हेतपिष्ठतृप्ततमाग्ने तपसा तेजसा तपस्वान् तेजस्वी त्वं अजरेभिः जरारहितैर्वृषभिर्वर्षितृभिर्वृष्टिहेतुभूतैः तवस्वैः स्वभूतैःअसाधारणैस्तेजोभिस्तपदह ॥ ४ ॥

४. हे अनुकूल दीप्तिवाले अग्नि, जो शत्रु अन्तर्हित देश में वर्तमान होकर हम लोगों को बाधित करता है और जो शत्रु अभ्यन्तरवर्ती होकर हम लोगों को बाधित करता है, उन दोनों प्रकार के शत्रुओं को तुम अपने तेज-द्वारा दग्ध करो। तुम्हारा तेज जरारहित वृष्टि-हेतुभूत और असाधारण है।

यस्तेंयज्ञेनंसमिधायउक्थैरर्केभिःसूनोसहसोददांशत्।
समर्त्येष्वमृतप्रचेंतारायाद्युम्नेनश्रवंसाविभांति ॥ ५ ॥
यः। ते। यज्ञेनं। समऽइधा। यः। उक्थैः। अर्केभिः। सूनो इति।
सहसः। ददांशत्। सः। मर्त्येषु। अमृत। प्रऽचेंताः। राया।
द्युम्नेनं। श्रवंसा। वि। भाति ॥ ५ ॥

हेसहसःसूनो बलस्यपुत्राग्ने ते त्वां योयजमानः यज्ञेन ददाशत्परिचरति यश्च समिधा समिन्धनसाधनेनेध्मेन यश्च उक्थैःशस्त्रैः अर्केभिरर्चनीयैःस्तोत्रैश्चपरिचरति हेअमृत मरणधर्मरहिताग्ने सयजमानः मर्त्येषु मनुष्येषु प्रचेताः प्रकृष्टज्ञानःसन् राया धनेन द्युम्नेन द्योतमानेन श्रवसा श्रवणीयेनान्नेन यशसावा विभाति विशेषेणप्रकाशते ॥ ५ ॥

५. हे बलपुत्र अग्नि, जो यजमान यज्ञ-द्वारा तुम्हारी परिचर्या करता है, जो इन्धन शस्त्र और अर्चनीय स्तोत्रों-द्वारा तुम्हारी परिचर्या करता है, हे अमर अग्नि, वह यजमान मनुष्यों के मध्य में प्रकृष्ट ज्ञान से युक्त होता है और धन तथा द्युतिमान् अन्न से अतिशय शोभित होता है।

अथषष्ठी—

सतत्कृधीषितस्तूयमग्नेस्पृधोबाधस्वसहसासहस्वान् ।
यच्छस्यसेद्युभिरक्तोवचोभिस्तज्जुषस्वजरितुर्घोषिमन्म ॥ ६ ॥

सः । तत् । कृधि । इषितः । तूयम् । अग्ने । स्पृधः । बाधस्व ।
सहसा । सहस्वान् । यत् । शस्यसे । द्युऽभिः । अक्तः । वचःऽभिः
तत् । जुषस्व । जरितुः । घोषि । मन्म ॥ ६ ॥

हेअग्ने सत्वं इषितः प्रेषितःसन् तूयं क्षिप्रं तत् कृधिकुरु किंतदित्यतआह सहस्वान् बलवांस्त्वंस्पृधः स्पर्धमानान् सहसा बलेन परेषामभिभवसमर्थेनतेजसावा बाधस्व विनाशय द्युभिः द्योतमानैस्तेजोभिरक्तःसंसिक्तःत्वं वचोभिः स्तुतिरूपैर्वाक्यैर्यच्छस्यसे यत् स्तूयसे त्वामुद्दिश्ययत् स्तोत्रंस्तोतृभिःक्रियतइत्यर्थः तत् मन्म मननीयं घोषि घोषणीयं जरितुःस्तोत्रं जुषस्व सेवस्व॥६॥

६. हे अग्नि, तुम जिस कार्य के लिए प्रेषित हुए हो, उस कार्य को शीघ्र ही करो। तुम बलवान् हो; अतएव दूसरों को अभिभूत करनेवाले बल से शत्रुओं को विनष्ट करो। स्तुतिरूप वचन से जो स्तोता तुम्हारा स्तवन करता हैं, उस स्तोता के उच्चारित स्तोत्र का तुम सेवन करो। अग्नि, द्युतिमान् तेज से युक्त हैं।

अग्नयेकामायपुरोडाशमष्टाकपालमित्यस्य अश्यामेत्येषायाज्या सूत्रितंच—अश्यामतंकाममग्नेतवोतीतिकामायेति ।

अश्यामतंकाममग्नेतवोतीअश्यामरयिंरयिवःसुवीरम् ।
अश्यामवाजमभिवाजयन्तोश्यामद्युम्नमजराजरन्ते ॥ ७ ॥७॥

अश्याम । तम् । कामम् । अग्ने । तव । ऊती । अश्याम । रयिम् ।
रयिऽवः । सुऽवीरम् । अश्याम । वाजम् । अभि । वाजयन्तः ।
अश्याम । द्युम्नम् । अजर । अजरम् । ते ॥ ७ ॥ ७ ॥

हेअग्ने ते तव संबन्धिन्यऊती ऊत्या रक्षया तं कामं अश्याम प्राप्नुयाम तमेवकामंविवृणोति हेरयिवोधनवन्नग्ने सुवीरं शोभनपुत्रादियुक्तं रयिं धनं अश्याम प्राप्नुयाम तथा वाजयन्तः वाजमन्नमात्मनइच्छन्तोवयं वाजं त्वयादत्तमन्नं अभि आभिमुख्येनाश्याम प्राप्नुयाम हेअजरजरारहिताग्ने ते त्वदीयमजरंजरारहितं द्युम्नं द्योतमानं यशश्च अश्याम प्राप्नुयाम ॥ ७ ॥

७. हे अग्नि, तुम्हारी रक्षा-द्वारा हम अभिलषित फल प्राप्त करें। हे धनाधिपति, हम शोभन पुत्र आदि से युक्त धन प्राप्त करें। अन्नाभिलाषी होकर हम तुम्हारे द्वारा प्रदत्त अन्न लाभ करें। हे जरारहित अग्नि, हम तुम्हारे अजर और द्युतिमान् यश का लाभ करें।

प्रनव्यसेतिसप्तर्चंषष्ठंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयं प्रनव्यसेत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः ।

तत्रप्रथमा—

प्रनव्यसासहसःसूनुमच्छायज्ञेनगातुमवइच्छमानः ।
वृश्चद्वनंकृष्णयामंरुशन्तंवीतीहोतारंदिव्यंजिगाति ॥ १ ॥

प्र । नव्यसा । सहसः । सूनुम् । अच्छ । यज्ञेन । गातुम् । अवः ।
इच्छमानः । वृश्चत्ऽवनम् । कृष्णऽयामम् । रुशन्तम् । वीती ।
होतारम् । दिव्यम् । जिगाति ॥ १ ॥

गातुमुपगन्तव्यं स्तोतव्यंवा सहसःसूनुं बलस्यपुत्रमग्निमवः अन्नं रक्षणंवाइच्छमानः इच्छन् स्तोता नव्यसा नवतरेणयज्ञेनयुक्तःसन् अच्छाभिमुख्येन प्रजिगाति प्रकर्षेणगच्छति कीदृशमग्निं वृश्चद्वनं वृक्णं छिन्नंदग्धंवनंयेनतादृशं कृष्णयामं कृष्णवर्त्मानं रुशन्तं श्वेतवर्णं वीती वीत्या कान्तेन यज्ञेन होतारं यष्टारं दिव्यं दिविभवम् ॥ १ ॥

१. स्तुति के योग्य, बलपुत्र अग्नि के निकट अन्न की अभिलाषा करनेवाले यजमान (स्तोता) नवीन यज्ञ से युक्त होकर गमन करते हैं। अग्नि वन को दग्ध करनेवाले, कृष्णवर्त्मा, श्वेतवर्ण, कमनीय, होता और स्वर्गीय हैं।

सःश्वितानस्तन्यतूरोचनस्थाअजरेभिर्नानदद्भिर्यविष्ठः ।
यःपावकःपुरुतमःपुरूणिपृथून्यग्निरनुयातिभर्वन् ॥ २ ॥

सः । श्वितानः । तन्यतुः । रोचनऽस्थाः । अजरेभिः । नानदत्ऽभिः ।
यविष्ठः । यः । पावकः । पुरुऽतमः । पुरूणि । पृथूनि । अग्निः ।
अनुऽयाति । भर्वन् ॥ २ ॥

सोग्निःश्वितानः श्वेतमानः श्वेतवर्णोवर्तते तन्यतुः शब्दकारी रोचनस्थाः रोचन्तेस्मिन्ग्रहनक्षत्रादीनिइतिरोचनमन्तरिक्षं तत्रस्थितः अजरेभिः जरारहितैर्नानदद्भिरत्यर्थंशब्दंकुर्वद्भिर्मरुद्भिर्युक्तोरश्मिभिर्वा यविष्ठोयुवतमः यः पावकः शोधकोग्निः पुरुतमः अतिशयेनप्रभूतः सन् पुरूणि बहूनि पृथूनि स्थूलानि काष्ठानि भर्वन् भक्षयन् अनुयाति अनुगच्छति सइत्थमित्यंवर्तते इतिपूर्वत्रसंबन्धः ॥ २ ॥

२. अग्नि श्वेतवर्ण, शब्दकारी, अन्तरिक्ष में वर्तमान, अजर और अत्यन्त शब्दकारी मरुतों के साथ मिलित एवम् युवतम हैं। अग्नि पावक और सुमहान् हैं। वे असंख्य स्थूल काष्ठों को भक्षण करके अनुगमन करते हैं।

गार्हपत्यादीनांमिथःसंसर्गेअग्नयेविविचयेइष्टिःकर्तव्या तत्रविवइत्येषानुवाक्या ।

सैषातृतीया—

वितेविष्वग्वातंजूतासोअग्नेभामासःशुचेशुचयश्चरन्ति ।
तुविम्रक्षासोदिव्यानवग्वावनावनन्तिधृषतारुजन्तः ॥ ३ ॥

वि । ते । विष्वंक् । वातंऽजूतासः । अग्ने । भामासः । शुचे । शुचयः । चरन्ति । तुविऽम्रक्षासः । दिव्याः । नवंऽग्वाः । वना । वनन्ति । धृषता । रुजन्तः ॥ ३ ॥

हेशुचे शुद्धदीप्तवाग्ने ते त्वदीयाः वातजूतासोवातेनप्रेरिताः शुचयोनिर्मलाः भामासोदीप्तयः विष्वक् सर्वतोविचरन्तिविविधंगच्छन्ति तुविम्रक्षासः बहुकाष्ठानिस्पृशन्तः दिव्याः दिवि द्योतमानेग्नौभवाः नवग्वानूतनगमनास्तेरश्मयः वना वनानि वनन्ति सम्भजन्ते दहन्तीत्यर्थः किंकुर्वन्तः धृषता धर्षकेण तेजसा रुजन्तः वनानि भंजयन्तः ॥ ३ ॥

३. हे विशुद्ध अग्नि, तुम्हारी प्रदीप्त शिखायें पवन-द्वारा सञ्चालित होकर बहुत काष्ठों को भक्षण करती हैं और सर्वत्र व्याप्त होती हैं। प्रदीप्त अग्नि से सम्भूत नवोत्पन्न रश्मियाँ घर्षणकारी दीप्ति-द्वारा वनों को भज्जित करती हुई दग्ध करती हैं।

येतेशुक्रासःशुचयःशुचिष्मःक्षांवपन्तिविषितासोअश्वाः ।
अधंभ्रमस्तंउर्वियाविभांतियातयमानोअधिसानुपृश्नेः ॥ ४ ॥

ये । ते । शुक्रासः । शुचयः । शुचिष्मः । क्षाम् । वपन्ति । विऽसिताः । अश्वाः । अध । भ्रमः । ते । उर्विया । वि । भाति । यातयमानः । अधि । सानु । पृश्नेः ॥ ४ ॥

हेशुचिष्मः दीप्तिमन्नग्ने ते तव शुक्रासः शुद्धाः येशुचयोदीप्तयः क्षां पृथिवीं भूमिं वपन्ति मुण्डयन्ति केशस्थानीयानोषधिवनस्पतीन्दहन्तीत्यर्थः अग्निर्हदाविरोमापृथिव्याइतिनिगमान्तरम्। तेरश्मयः विषितासः विमुक्ताअश्वाइव इतस्ततोगच्छन्तीतिशेषः अधास्मिन्काले त्वदीयः भ्रमोभ्रमणशीलोज्वालासमूहः पृश्नेः नानारूपायाः भूमेः अधि उपरि सानुसमुच्छ्रितंदेशं पर्वताग्रादिकं प्रतियातयमानः स्वकीयमग्रंव्यापारयन् उर्विया उरु बहुलं विभाति विशेषेणप्रकाशते ॥ ४ ॥

४. हे दीप्तिसम्पन्न अग्नि, तुम्हारी जो सम्पूर्ण शुभ्र रश्मियाँ पृथिवी के केशस्थानीय ओषधियों को दग्ध करती हैं, वे विमुक्त अश्वों की तरह इतस्ततः गमन करती हैं। तुम्हारी भ्रमणशील शिखायें विचित्र रूप पृथ्वी के ऊपर स्थित उन्नत प्रदेश पर आरोहण करके अभी विराजित होती हैं।

---

१ ऋ० सं० १.५.९.।

अथपञ्चमी—

अर्धजिह्वापापतीतिप्रवृष्णोगोषुयुधोनाशनिःसृजाना ।
शूरस्येवप्रसितिःक्षातिरग्नेर्दुर्वर्तुर्भीमोदयतेवनानि ॥ ५ ॥

अर्ध । जिह्वा । पापतीति । प्र । वृष्णः । गोषुऽयुधः । न । अशनिः ।
सृजाना । शूरस्यऽइव । प्रऽसितिः । क्षातिः । अग्नेः । दुःऽवर्तुः ।
भीमः । दयते । वनानि ॥ ५ ॥

अधापिच वृष्णोवर्षितुरग्नेर्जिह्वा ज्वाला प्रपापतीति प्रकर्षेणपुनःपुनःपततिगच्छति तत्रदृष्टान्तः-गोषुयुधोनाशनिःसृजाना असुरप्रहृतासुगोषुयुध्यन्निन्द्रोगोषुयुत् तस्मात्सृज्यमाना अशनिर्वज्र-इव तथाशूरस्येव शौर्योपेतस्यनरस्य प्रसितिः प्रबन्धनंयथान्यैःदुःसहमेवमग्नेः क्षातिर्ज्वालासो-ढुमशक्येत्यर्थः क्षीयन्ते दह्यन्तेस्यामोषधिवनस्पतयइति क्षायतेःअधिकरणेक्तिन् अपिचदुर्वर्तुर्दु-र्वारःअन्यैर्वारयितुमशक्योभीमोभयङ्करोग्निः वनानि दयते दहति दयतिरत्रदहतिकर्मा ॥ ५॥

५. वर्षणकारी अग्नि की शिखायें बारम्बार निर्गत होती हैं। जैसे, धेनुओं के लिए युद्ध करनेवाले इन्द्र के द्वारा प्रयुक्त वज्र बारम्बार निर्गत होता है। वीरों के पौरुष (बन्धन) की तरह अग्नि की शिखा दुःसह, दुर्निवार है। भयंकर अग्नि वनों को दग्ध करते हैं।

आभानुनापार्थिवानिज्रयांसिमहस्तोदस्यधृषताततन्थ ।
सबाधस्वापभयासहोभिःस्पृधोवनुष्यन्वनुषोनिजूर्व ॥ ६ ॥

आ । भानुना । पार्थिवानि । ज्रयांसि । महः । तोदस्य । धृषता ।
ततन्थ । सः । बाधस्व । अप । भया । सहःऽभिः । स्पृधः । वनुष्यन् ।
वनुषः । नि । जूर्व ॥ ६॥

हेअग्ने भानुना दीप्त्या पार्थिवानि पृथिव्यांभवानि ज्रयांसि ज्रयतिर्गतिकर्मा गन्तव्या-निस्थानानि महः महतः तोदस्य प्रेरकस्य धृषता धर्षकेण रश्मिनासह आततंथ आस्तृणा-सि आच्छादयसि सत्वं भया भयकरणानि अपबाधस्व तथा सहोभिः अभिभवनसमर्थैर्बलै-स्तेजोभिर्वा स्पृधः स्पर्धमानान् वनुष्यन् हिंसन् वनुषोहिंसकान्शत्रून् निजूर्व निजहि जूर्व-र्तिहिंसाकर्मा ॥ ६ ॥

६. हे अग्नि, तुम प्रबल और उत्तेजक रश्मि-द्वारा पृथिवी के गन्तव्य स्थानों को दीप्ति-द्वारा आच्छन्न करो। तुम सम्पूर्ण विपत्तियों को दूर करो एवम् अपने तेजः प्रभाव से स्पर्द्धा-कारियों को अभिभूत करके शत्रुओं को विनष्ट करो।

उखासम्भरणीयेष्टावग्नेःक्षत्रवतःसचित्रेत्येषायाज्या सूत्रितंच—सचित्रचित्रंचितयन्तम-स्मेअग्निरीशेबृहतःक्षत्रियस्येति ।

सैषासप्तमी—

सचित्रचित्रंचितयन्तमस्मेचित्रक्षत्रचित्रतमंवयोधाम्।
चन्द्रंरयिंपुरुवीरंबृहन्तंचन्द्रचन्द्राभिर्गृणतेयुवस्व ॥ ७ ॥ ८ ।

सः । चित्र । चित्रम् । चितयन्तम् । अस्मे इति । चित्रऽक्षत्र ।
चित्रऽतमम् । वयःऽधाम् । चन्द्रम् । रयिम् । पुरुऽवीरम् । बृहन्तम् ।
चन्द्र । चन्द्राभिः । गृणते । युवस्व ॥ ७ ॥ ८ ॥

हेचित्र चायनीय हेचित्रक्षत्र विचित्रबलचायनीयधनवा हेचन्द्र आह्लादकाग्ने सताहशस्त्वं चन्द्राभिः आह्लादयित्रीभिः स्तुतिभिः गृणते स्तुवते वचनव्यत्ययः स्तुवद्भ्यः अस्मे अस्मभ्यं दातुं रयिं धनं युवस्व पृथक्कुरु कीदृशंरयिं चित्रं चायनीयं चितयन्तं ज्ञापयन्तं धनेनहिपुरुषःप्रख्यायते चित्रतमं अतिशयेनाश्चर्यभूतं वयोधां वयसोन्नस्यधातारं प्रदातारं चन्द्रं आह्लादकं पुरुवीरं पुरुभिर्बहुभिर्वीरैःपुत्रपौत्रादिभिर्युक्तं बृहन्तं महान्तं ईदृशंधनमस्मभ्यंप्रयच्छेत्यर्थः ॥ ७ ॥

७. हे विचित्र अद्भुत बल-सम्पन्न, आनन्द-दायक अग्नि, हम लोग, आह्लादक स्तोत्रों-द्वारा तुम्हारा स्तवन करते हैं। तुम अद्भुत, अतयद्भुत् यशस्कर, अन्नप्रद, अन्नदायक और पुत्र-पौत्रादि समन्वित विपुल ऐश्वर्य प्रदान करो।

॥ इतिचतुर्थस्यपञ्चमेऽष्टमोवर्गः ॥ ८ ॥

मूर्धानमितिसप्तर्चंसप्तमंसूक्तम् भरद्वाजस्यार्षं वैश्वानराग्निर्देवताकं षष्ठीसप्तम्यौजगत्यौ शिष्टाःपञ्चत्रिष्टुभः तथाचानुक्रान्तम्—मूर्धानंवैश्वानरीयंहिद्विजगत्यन्तमिति । गतःसूक्तविनियोगः विषुवत्याग्निमारुतेआद्यस्तृचोवैकल्पिकःस्तोत्रियः तथैवसूत्रितं—मूर्धानंदिवोअरतिंपृथिव्यामूर्धादिवोनाभिरग्निःपृथिव्याइतिवेति ।

तत्रप्रथमा—

मूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निम्।
कविंसम्राजमतिथिंजनानामासन्नापात्रंजनयन्तदेवाः ॥ १ ॥

मूर्धानम् । दिवः । अरतिम् । पृथिव्याः । वैश्वानरम् । ऋते ।
आ । जातम् । अग्निम् । कविम् । सम्ऽराजम् । अतिथिम् ।
जनानाम् । आसन् । आ । पात्रम् । जनयन्त । देवाः ॥ १ ॥

मूर्धानं शिरोभूतं कस्य दिवोद्युलोकस्य पृथिव्याः प्रथितायाभूमेः अरतिं गन्तारं बन्धिनं यद्वा गन्तव्यंस्वामिनं वैश्वानरंविश्वेषांनराणांसंबन्धिनं ऋते ऋतमितिसत्यस्ययज्ञस्यवानाम निमित्तसप्तम्येषा ऋतनिमित्तं आ आभिमुख्येन जातं सृष्ट्यादावुत्पन्नं कविं क्रान्तदर्शिनं सम्राजं सम्यग्राजमानं जनानां यजमानानामतिथिंहविर्वहनायसततंगन्तारं यद्वा अतिथिवत्पूज्यंआसन्आसनि आस्ये द्वितीयार्थेसप्तमी आस्यभूतअग्निलक्षणेनास्येनहिदेवाहवींषिभुञ्जते पात्रं पातारंरक्षकं यद्वा आस्येनधारकमेवंगुणविशिष्टंवैश्वानराग्निं देवाः स्तोतारऋत्विजः देवाएववाआजनयन्त यज्ञाभिमुख्येनाजीजनन् अरण्योःसकाशातउदपादयन् ॥ १ ॥

१. वैश्वानर अग्नि स्वर्ग के शिरोभूत, भूमि में गमन करनेवाले, यज्ञ के लिए उत्पन्न, ज्ञान-सम्पन्न, भली भाँति से राजमान, यजमानों के अतिथिस्वरूप, मुखस्वरूप (अग्नि-लक्षण मुख से ही देवगण भोजन करते हैं) और रक्षाविधायक हैं। देवों, स्तोताओं या ऋत्विकों ने अग्नि को उत्पन्न किया है।

नाभिंयज्ञानांसदनंरयीणांमहामाहावमभिसंनवन्त ।
वैश्वानरंरथ्यमध्वराणांयज्ञस्यकेतुंजनयन्तदेवाः ॥ २ ॥

नाभिम् । यज्ञानाम् । सदनम् । रयीणाम् । महाम् । आऽहावम् । अभि । सम् । नवन्त । वैश्वानरम् । रथ्यम् । अध्वराणाम् । यज्ञस्य । केतुम् । जनयन्त । देवाः ॥ २ ॥

यज्ञानां ज्योतिष्टोमादियागानां नाभिं नहनं बन्धकं तथा रयीणांधनानां सदनं स्थानमेकनिलयं महां महान्तमाहावंआहूयन्तेस्मिन्नाहुतयइत्याहावः तादृशं यद्वा वृष्ट्युदकधारणं आहावं निपानस्थानीयमेवंभूतमग्निं अभि अभितः संनवन्तः स्तोतारःसम्यक्स्तुवन्ति तथावैश्वानरं विश्वेषांनराणांसंबन्धिनं अध्वराणां यज्ञानां रथ्यं रथिनं यथारथीस्वरथंनयति तद्वन्नेतारं प्रापयितारं गमयितारं यज्ञस्यकेतुं प्रज्ञापकं एवंविधमग्निं देवाः स्तोतारऋत्विजोदेवाएववा जनयन्त जनयन्ति मन्थनेनोत्पादयन्ति ॥ २ ॥

२. स्तोता लोग यज्ञ के बन्धक, धन के स्थान और हव्य के आश्रयस्वरूप अग्नि का, भली भाँति से, स्तवन करते हैं। देवगण यज्ञीय द्रव्यों के वहनकारी और यज्ञ के केतुस्वरूप वैश्वानर अग्नि को उत्पन्न करते हैं।

त्वद्विप्रोजायतेवाज्यग्नेत्वद्वीरासोअभिमातिषाहः ।
वैश्वानरत्वमस्मासुधेहिवसूनिराजन्स्पृहयाय्याणि ॥ ३ ॥

त्वत् । विप्रः । जायते । वाजी । अग्ने । त्वत् । वीरासः । अभिमातिऽसहः । वैश्वानर । त्वम् । अस्मासु । धेहि । वसूनि राजन् । स्पृहयाय्याणि ॥ ३ ॥

हेअग्ने वाजी हविर्लक्षणान्नवान्पुरुषः त्वत् त्वत्तःसकाशात् विप्रोमेधावीजायते तुभ्यंह-विर्दानेनमेधावीभवति तथा वीरासोवीराः त्वत् त्वत्तः अभिमातिषाहः अभिमातीनांशत्रूणांअ-भिभवितारोजायन्ते यस्मादेवंतस्मात् हेवैश्वानर राजन् राजमानाग्ने त्वमस्मासु त्वद्भकेषु स्पृहयाय्याणि स्पृहणीयानि वसूनि धनानि धेहि निधेहि ॥ ३ ॥

३. हे अग्नि, हवीरूप अन्न से युक्त पुरुष तुम्हारे समीप से ही ज्ञान-वान् होता है। वीर लोग तुम्हारे समीप से ही शत्रुओं को अभिभूत करनेवाले होते हैं। इसलिए हे दीप्तिशाली वैश्वानर, तुम हम लोगों को वाञ्छित धन प्रदान करो।

त्वांविश्वेंअमृतजायमानंशिशुंनदेवाअभिसंनवन्ते ।
तवक्रतुभिरमृतत्वमायन्वैश्वानरयत्पित्रोरदीदेः ॥ ४ ॥

त्वाम् । विश्वें । अमृत । जायमानम् । शिशुम् । न । देवाः । अभि । सम् । नवन्ते । तवं । क्रतुऽभिः । अमृतऽत्वम् । आयन् । वैश्वानर । यत् । पित्रोः । अदीदेः ॥ ४ ॥

हेअमृत मरणधर्मरहिताग्ने विश्वेसर्वेदेवाः स्तोतारः जायमानं अरण्योः सकाशादुत्पद्य-मानं त्वां शिशुंन पुत्रमिव अभिसन्नवन्तेअभिसंस्तुवन्ति यद्वा दीव्यन्तिइतिदेवारश्मयः तेसर्वे जायमानंत्वां अभिसन्नवन्ते अभि संगच्छन्ते यथापितरः पुत्रमभिगच्छन्ति अपिच हेवैश्वानराग्ने यद्यदा पित्रोः पालयित्र्योर्द्यावापृथिव्योर्मध्ये अदीदेः दीप्यसे तदानीं तव त्वदीयैः क्रतुभिः कर्मभिः ज्योतिष्टोमादिभिर्यागैः अमृतत्वं देवत्वं आयन् यजमानाःप्राप्नुवन्ति ॥ ४ ॥

४. हे अमरणशील अग्नि, तुम पुत्र की तरह अरणिद्वय से उत्पन्न हुए हो। समस्त देवगण तुम्हारा स्तवन करते हैं। हे वैश्वानर, जब तुम पालक द्यावा-पृथिवी के मध्य में दीप्यमान होते हो, तब यजमान लोग तुम्हारे यज्ञकार्य-द्वारा अमरत्व लाभ करते हैं।

वैश्वानरतवतानिव्रतानिमहान्यग्नेनकिरादधर्ष ।
यज्जायमानःपित्रोरुपस्थेविन्दःकेतुंवयुनेष्वह्नाम् ॥ ५ ॥

वैश्वानर । तवं । तानिं । व्रतानिं । महानिं । अग्ने । नकिः । आ । दधर्ष । यत् । जायमानः । पित्रोः । उपऽस्थें । अविन्दः । केतुम् । वयुनेषु । अह्नाम् ॥ ५ ॥

हेवैश्वानर विश्वेषांनराणांसंबन्धिन्नग्ने तव त्वदीयानि तानि प्रसिद्धानि व्रतानि कर्माणि महानि महान्ति नकिरादधर्ष नकश्चनान्योधर्षयति बाधते यद्यदा त्वं पित्रोर्द्यावापृथिव्योरुपस्थे

उपस्थानेन्तरिक्षे वयुनेषु गन्तव्येषुमार्गेषु जायमानःसन् अह्नांकेतुं प्रज्ञापकंसूर्यं स्वर्भानुनावृतं अविन्दः अलम्भयः तमोरूपमसुरं स्वतेजसानिवारयन् अस्थापयइत्यर्थः तदा तानिव्रतानीति पूर्वत्रान्वयः ॥ ५ ॥

५. हे वैश्वानर, तुम्हारे उन प्रसिद्ध महान् कर्मों में कोई भी बाधा उपस्थित नहीं कर सकता है। पितृ-मातृ-स्वरूप द्यावा-पृथिवी के क्रोड़भूत अन्तरिक्ष-मार्ग में उत्पन्न होकर तुमने दिवसों के प्रज्ञापक सूर्य को अन्तरिक्ष-पथ में संस्थापित किया है।

वैश्वानरस्यविमितानिचक्षसासानूनिदिवोअमृतस्यकेतुना।
तस्येदुविश्वाभुवनाधिमूर्धनिवयाइवरुरुहुःसप्तविस्रुहः ॥ ६ ॥

वैश्वानरस्य। विऽमितानि। चक्षसा। सानूनि। दिवः। अमृतस्य। केतुना। तस्य। इत्। ऊँम् इति। विश्वा। भुवना। अधि। मूर्धनि। वयाःऽइव। रुरुहुः। सप्त। विऽस्रुहः ॥ ६ ॥

वैश्वानरस्य विश्वनरहितस्याग्नेः चक्षसा तेजसा अमृतस्योदकस्य केतुना प्रज्ञापकेन दिवोद्युलोकस्य सानूनि समुच्छ्रितस्थलानि नक्षत्ररूपाणि विमितानि निर्मितानि यद्वा दिवोन्तरिक्षस्यसानूनि समुच्छ्रितप्रदेशाःमेघात्मकाः विमितानि निर्मिताः धूमविकारत्वात्तेषां तस्येदु तस्यैववैश्वानरस्य मूर्धनि मूर्धस्थानीयेउपरिवर्तमानेधूमे मेघात्मना परिणते विश्वा विश्वानि व्याप्तानि भुवना भुवनान्युदकानि अधिवसन्ति यद्वा वैश्वानरात्मकस्यपरब्रह्मणोमूर्धनि उपरिप्रदेशे सर्वाणिभूतजातान्यधिवसन्ति तथावयाः शाखाइव सप्तसर्पणशीलाः सप्तसंख्यावा विस्रुहोनद्यश्च गङ्गाद्यारुरुहुः रोहन्ति अस्मादेववैश्वानरात्प्रादुर्भवन्ति आहुतिद्वारासकलंजगत् अग्नेःसकाशादुत्पद्यतेइत्यर्थः ॥ ६ ॥

६. वैश्वानर के वारिप्रज्ञापक तेज-द्वारा द्युलोक के उन्नत स्थल (नक्षत्र आदि अथवा मेघ) निर्मित हुए हैं। वैश्वानर के शिरःस्थान (मेघरूप में परिणत धूम) में वारिराशि अवस्थान करती हैं एवं उससे सात नदियाँ शाखा की तरह उद्भूत होती हैं। अर्थात् आहुति-द्वारा सम्पूर्ण जगत् अग्नि से उत्पन्न होता है।

वियोरजांस्यमिमीतसुक्रतुर्वैश्वानरोविदिवोरोचनाकविः।
परियोविश्वाभुवनानिपप्रथेदब्धोगोपाअमृतस्यरक्षिता ॥७॥९॥

वि। यः। रजांसि। अमिमीत। सुऽक्रतुः। वैश्वानरः। वि। दिवः। रोचना। कविः। परि। यः। विश्वा। भुवनानि। पप्रथे। अदब्धः। गोपाः। अमृतस्य। रक्षिता ॥ ७ ॥ ९ ॥

सुक्रतुः सुकर्मा वैश्वानरः विश्वेषांनराणांहितोयोग्निः रजांस्युदकानि लोकावा व्यमिमीत निर्मितवान् तथा दिवोद्युलोकस्यसंबन्धीनि रोचना रोचमानानि दीप्यमानानि नक्षत्रादीनि कविः क्रान्तदर्शीसन् योग्निर्व्यमिमीत यश्च विश्वा सर्वाणि भुवनानि भूतजातानि व्याप्तान्युदकानिवा परिपप्रथे परितोप्रथयत् सोयमदब्धः केनाप्यहिंसितः गोपाः सर्वस्यमोपायितारक्षिता अमृतस्य अमरणहेतोरुदकस्यरक्षिता पालयितासन् वर्ततइतिशेषः ॥ ७ ॥

७. शोभन कर्म करनेवाले जिन वैश्वानर अग्नि ने उदक अथवा लोकों का निर्माण किया था, ज्ञान-सम्पन्न होकर जिन्होंने द्युलोक के दीप्तिमान् नक्षत्रों को सृष्ट किया था और जिन्होंने समस्त भूत-जात को चतुर्दिक् प्राप्त किया था, वे अजेय, पालक और वारिरक्षक अग्नि विराजमान होते हैं।

॥ इतिचतुर्थस्यपञ्चमेनवमोवर्गः ॥ ९ ॥

पृक्षस्येतिसप्तर्चमष्टमंसूक्तं भरद्वाजस्यार्षं वैश्वानराग्निदेवताकं आद्याःषड्जगत्यः सप्तमीत्रिष्टुप् तथाचानुक्रान्तम्—पृक्षस्यान्त्यात्रिष्टुविति । चातुर्विंशिकेहन्याग्निमारुतेइदंसूक्तं वैश्वानरीयनिविद्धानं सूत्रितंच—पृक्षस्यवृष्णोवृष्णेशर्धायेति । आभिप्लविकेपृष्ठ्याभिप्लवषडहयोः पञ्चमेहनिइदमेवसूक्तंवैश्वानरनिविद्धानं सूत्रितंच—पृक्षस्यवृष्णोवृष्णेशर्धायनूचित्सहोजाइत्याग्निमारुतमिति । विषुवत्याग्निमारुते आद्यौतृचौस्तोत्रियानुरूपौ सूत्रितंच—पृक्षस्यवृष्णोअरुषस्यनूसहइतिस्तोत्रियानुरूपाविति ।

पृक्षस्य॒वृष्णो॑अरु॒षस्य॒नूसहः॒प्रनुवो॑चंवि॒दथा॑जा॒तवे॑दसः ।
वै॒श्वा॒न॒राय॑म॒तिर्नव्य॑सी॒शुचिः॒सोम॑इवपवते॒चारु॑र॒ग्नये॑ ॥ १ ॥

पृ॒क्षस्य॑ । वृष्णः॑ । अ॒रु॒षस्य॑ । नु । सहः॑ । प्र । नु । वो॒च॒म् ।
वि॒दथा॑ । जा॒तऽवे॑दसः । वै॒श्वा॒न॒राय॑ । म॒तिः । नव्य॑सी । शुचिः॑ ।
सोम॑ःऽइव । प॒व॒ते । चारुः॑ । अ॒ग्नये॑ ॥ १ ॥

पृक्षस्य संपृक्तस्य व्याप्तस्य यद्वा पृक्षंहविर्लक्षणमन्नंतद्वतः वृष्णः वर्षितुःअरुषस्य आरोचमानस्य जातवेदसः जातानांवेदितुर्वैश्वानराग्नेः सहोबलं अभिभवनसमर्थं विदथा विदथेयज्ञे नु क्षिप्रं प्रवोचं प्रब्रवीमि प्रकर्षेणस्तौमीत्यर्थः एकोनुशब्दःपूरकः नव्यसी नवतराशुचिर्निर्मला यद्वा स्तोतॄणां शोधयित्री चारुः शोभना मतिर्मननीयास्तुतिश्च अस्मैवैश्वानरायाग्नये पवते मत्सकाशात्स्रवति स्वयमेवनिर्गच्छतीत्यर्थः सोमइव यथासोमोदशापवित्रात्स्रवति तद्वत् ॥ १ ॥

१. हम लोग सर्वव्यापी, वारिवर्षक और दीप्तिमान् जातवेदा के बल के लिए इस यज्ञ में भली भाँति से स्तवन करते हैं। वैश्वानर अग्नि के
४ अभिमुख नवीन, निर्मल और शोभन स्तोत्र सोमरस की तरह निर्गत होता है।

सजायमानःपरमेव्योमनिव्रतान्यग्निर्व्रतपाअरक्षत ॥
व्यन्तरिक्षममिमीतसुक्रतुर्वैश्वानरोमहिनानाकमस्पृशत् ॥ २ ॥

सः । जायमानः । परमे । विऽओमनि । व्रतानि । अग्निः ।
व्रतऽपाः । अरक्षत । वि । अन्तरिक्षम् । अमिमीत । सुऽक्रतुः ।
वैश्वानरः । महिना । नाकम् । अस्पृशत् ॥ २ ॥

सवैश्वानरोग्निः व्रतपाः व्रतस्यपालकः परमे उत्कृष्टे व्योमनि व्योम्न्याकाशे जायमानः सूर्यात्मना प्रादुर्भवन् व्रतानि कर्माणि लौकिकानि वैदिकानिच अरक्षत रक्षति अंतरिक्षंच व्यमिमीत एतदुपलक्षितान् त्रींल्लोकान्निर्मितवान् तथा सुक्रतुः शोभनकर्मा वैश्वानरोग्निः महिना स्वमहिम्ना तेजसा नाकं द्युलोकं अस्पृशत् स्पृशतिस्म ॥ २ ॥

२. सत्कर्मपालक वैश्वानर उत्कृष्ट आकाश में जायमान होकर लौकिक तथा वैदिक दोनों कर्मों की रक्षा करते हैं और अन्तरिक्ष का परिमाण करते हैं। शोभन कर्म करनेवाले वैश्वानर अपने तेजों से द्युलोक का स्पर्शन करते हैं।

व्यस्तभ्नाद्रोदसीमित्रोअद्भुतोन्तर्वावदकृणोज्ज्योतिषातमः ।
विचर्मणीवधिषणेअवर्तयद्वैश्वानरोविश्वमधत्तवृष्ण्यम् ॥ ३ ॥

वि : अस्तभ्नात् । रोदसी इति । मित्रः । अद्भुतः । अन्तःऽवावत् ।
अकृणोत् । ज्योतिषा । तमः । वि । चर्मणी इवेति चर्मणीऽइव ।
धिषणे इति । अवर्तयत् । वैश्वानरः । विश्वम् । अधत्त । वृष्ण्यम् ॥ ३

मित्रोमित्रभूतः सर्वेषांअद्भुतोमहानाश्चर्यभूतोवा वैश्वानरोग्निः रोदसी द्यावापृथिव्यौ व्यस्तभ्नात् विशेषेणस्तम्भितवान् यथा अधोनपततः तथा स्वकीयदेशेस्थापितवानित्यर्थः तथा ज्योतिषा तेजसा तमःअंधकारंच अंतर्वावत् अन्तर्हितं तिरोहितमकृणोदकरोत् वावदिति वातेर्गतिकर्मणोयङ्लुगन्तस्यरूपं अपिच धिषणे धारयित्र्यौ द्यावापृथिव्यौ चर्मणीइव यथा पशोर्विशसिताद्वेचर्मणीशोषणार्थंप्रसारयतितथाव्यावर्तयत् विवृते विस्तृते अकरोत् किंबहुना वैश्वानरोयमग्निः विश्वं सर्वं वृष्ण्यंवीर्यमधत्त धत्ते धारयति ॥ ३ ॥

३. सबके मित्रभूत और महान् आश्चर्यभूत वैश्वानर ने द्यावापृथिवी को अपने-अपने स्थान पर विशेष रूप से स्तम्भित किया है। तेज-द्वारा उन्होंने अन्धकार को अन्तर्हित किया है। आधारभूत द्यावा-पृथिवी को उन्होंने पशुचर्म की तरह विस्तृत किया है। वैश्वानर अग्नि समस्त वीर्य धारण करते हैं।

अपामुपस्थेमहिषाअगृभ्णतविशोराजानमुपतस्थुर्ऋग्मियम् ।
आदूतोअग्निमभरद्विवस्वतोवैश्वानरंमातरिश्वापरावतः ॥ ४ ॥

अपाम् । उपऽस्थे । महिषाः । अगृभ्णत । विशः । राजानम् ।
उप । तस्थुः । ऋग्मियम् । आ । दूतः । अग्निम् । अभरत् ।
विवस्वतः । वैश्वानरम् । मातरिश्वा । पराऽवतः ॥ ४ ॥

अपइत्यन्तरिक्षनाम अपामन्तरिक्षस्य उपस्थे उपस्थाने मध्ये महिषाः महन्नामैतत् महान्तोमरुतः अगृभ्णत अगृह्णन् इमंवैश्वानरंवैद्युतात्मनावर्तमानमजानन्नित्यर्थः गृहीत्वाच विशः प्रजाः राजानं स्वामिनं ऋग्मियमर्चनीयं उपतस्थुरस्तुवन् अपिचेमंवैश्वानरं अग्निं पुरा सूर्यसमीपे विद्यमानं दूतः वेगवान् देवानांदूतोवा मातरिश्वा वायुः परावतोदूरदेशात् विवस्वत-आदित्यात् आभरत् इमंलोकंप्रत्याजहार ॥ ४ ॥

४. महान् मरुतों ने अन्तरिक्ष के मध्य में अग्नि को धारण किया था और मनुष्यों ने पूजनीय स्वामी कहकर इनकी स्तुति की थी। देवों के दूत या वेगवान् मातरिश्वा (वायु) दूर देश-स्थित सूर्यमण्डल से वैश्वानर अग्नि को इस लोक में लाये हैं।

युगेयुगेविदथ्यंगृणद्भ्योग्नेरयिंयशसंधेहिनव्यसीम् ।
पव्येवराजन्नघशंसमजरनीचानिवृश्चवनिनंनतेजसा ॥ ५ ॥

युगेऽयुगे । विदथ्यम् । गृणत्ऽभ्यः । अग्ने । रयिम् । यशसम् । धेहि ।
नव्यसीम् । पव्याऽइव । राजन् । अघऽशंसम् । अजर । नीचा ।
नि । वृश्च । वनिनम् । न । तेजसा ॥ ५ ॥

हेअग्ने युगेयुगे कालेकाले विदथ्यं विदथोयज्ञः तदर्हंत्वामुद्दिश्य नव्यसीं नवतरांस्तुतिं गृणद्भ्यः उच्चारयितृभ्योस्मभ्यं रयिं धनं यशसं यशस्विनं पुत्रंच धेहि विधेहि कुरु किंच हेराजन् राजमान अजर जरारहिताग्ने पव्येव वज्रेणेव आत्मीयेनतेजसा वनिनंन वृक्षमिव अघशंसं अघस्यानर्थस्यशंसितारं शत्रुं नीचा नीचीनः न्यग्भूतोयथाभवतितथा निवृश्च निजहि ॥ ५ ॥

५. हे अग्नि, तुम यागयोग्य हो। तुम्हारे उद्देश्य से जो नवीन स्तोत्र का उच्चारण करते हैं, उन्हें तुम धन और यशस्वी पुत्र प्रदान करो। हे जरारहित और हे राजमान अग्नि, तुम अपने तेज-द्वारा शत्रु को उसी प्रकार निपातित करो, जैसे वज्र वृक्ष को निपातित करता है।

अस्माकमग्नेमघवंत्सुधारयानामिक्षत्रमजरंसुवीर्यम् ।
वयंजयेमशतिनंसहस्रिणंवैश्वानरवाजमग्नेतवोतिभिः ॥ ६ ॥

अस्माकम् । अग्ने । मघवंत्ऽसु । धारय । अनामि । क्षत्रम् ।
अजरम् । सुऽवीर्यम् । वयम् । जयेम । शतिनम् । सहस्रिणम् ।
वैश्वानर । वाजम् । अग्ने । तव । ऊतिऽभिः ॥ ६ ॥

हेअग्ने अस्माकं सप्तम्यर्थेषष्ठी अस्मासु मघवत्सु हविर्लक्षणेनधनेनयुक्तेषु क्षत्रं धनं धारय स्थापय कीदृशं अनामि अनमनीयमनपहार्यमजरंजरारहितमनश्वरं सुवीर्यं शोभनवीर्योपेतं किंच हेवैश्वानराग्ने तवोतिभिः त्वत्संबन्धिभीरक्षणैः वयं शतिनं शतसंख्यायुक्तं शतपुरुषयुक्तंवा तथा सहस्रिणं वाजमन्नं जयेम लभेमहि ॥ ६ ॥

६. हे अग्नि, हम लोग हविर्लक्षण धन से युक्त हैं। हमें तुम अनपहार्य, अक्षय और सुवीर्य धन प्रदान करो। हे वैश्वानर अग्नि, हम तुम्हारे द्वारा रक्षित होकर शत-सहस्र प्रकार अन्न लाभ करें।

अदब्धेभिस्तवगोपाभिरिष्टेस्माकंपाहित्रिषधस्थसूरीन् ।
रक्षाचनोददुषांशर्धोअग्नेवैश्वानरप्रचंतारीःस्तवानः ॥ ७ ॥ १० ।

अदब्धेभिः । तव । गोपाभिः । इष्टे । अस्माकम् । पाहि ।
त्रिऽसधस्थ । सूरीन् । रक्ष । च । नः । ददुषाम् । शर्धः । अग्ने ।
वैश्वानर । प्र । च । तारीः । स्तवानः ॥ ७ ॥ १० ॥

हेइष्टे यष्टव्य एषणीयवा त्रिषधस्थ त्रिषुलोकेषुसहावस्थायिन् यद्वा आहवनीयादिषुत्रिष्वायतनेषुयष्टव्यैर्देवैःसहावतिष्ठमानाग्ने अदब्धेभिः केनाप्यहिंसितैः तवत्वदीयैर्गोपाभिःगोपकैः रक्षकैस्तेजोभिः अस्माकं सूरीन् अस्मदीयान्स्तोतॄन्पाहि रक्ष हेवैश्वानराग्ने ददुषां हवींषिदत्तवतां नोस्माकं शर्धोबलं रक्षच स्तवान स्तूयमानस्त्वं प्रचतारीः प्रवर्धयच ॥ ७ ॥

७. हे तीनों लोकों में वर्तमान यागार्ह अग्नि, किसी के द्वारा भी अहिंसित और रक्षाकारी बल-द्वारा तुम हम स्तोताओं की रक्षा करो। हे वैश्वानर अग्नि, तुम हम हव्यदाताओं के बल की रक्षा करो। हम लोग तुम्हारा स्तवन करते हैं, तुम हमें प्रवर्द्धित करो।

॥ इतिचतुर्थस्यपञ्चमेदशमोवर्गः ॥ १० ॥

अहश्चेतिसप्तर्चंनवमंसूक्तं भरद्वाजस्यार्षं वैश्वानराग्निदेवताकं अनुक्रान्तंच अहश्चेति । व्यूळ्हेदशरात्रेषष्ठेहनिआग्निमारुतशस्त्रेवैश्वानरनिविद्धानमिदं सूत्र्यतेहि—अहश्चकृष्णंमध्वोवोनामेति ।

तत्रप्रथमा—

अहंश्चकृष्णमहरर्जुंनंचविवर्तेतेरजंसीवेद्याभिः ।
वैश्वानरोजायमानोनराजावातिरज्ज्योतिषाग्निस्तमांसि ॥ १ ॥

अहंः । च । कृष्णम् । अहंः । अर्जुनम् । च । वि । वर्तेते इतिं ।
रजंसी इतिं । वेद्याभिः । वैश्वानरः । जायमानः । न । राजा ।
अवं । अतिरत् । ज्योतिषा । अग्निः । तमांसि ॥ १ ॥

आहरतिपुरुषोस्मिन्कर्माणीत्यहः कृष्णं कृष्णवर्णं एतत्सामानाधिकरण्यादहःशब्दोरात्रिवचनः तमसाकृष्णवर्णारात्रिश्च अर्जुनंच सौरेणतेजसा शुक्लवर्णमहोदिवसश्चरजसी स्वस्वभासा सर्वंजगद्रंजयन्तौ वेद्याभिः वेदितव्याभिः अनुकूलतयाज्ञातव्याभिः स्वप्रवृत्तिभिःविवर्तेते विविधंपर्यावर्तेते यद्वा रजसी द्यावापृथिव्यौ उपलक्षणमेतत् लोकत्रयं प्रत्यावर्तेते एतच्चवैश्वानराग्नेराज्ञयेतिशेषः सहिदेवतात्वेनात्रप्रतिपाद्यः सचवैश्वानरोग्निःजायमानोनराजा प्रादुर्भवन् प्रवर्धमानोराजेव ज्योतिषा तेजसा तमांसि अवातिरत् अवतिरतिर्वधकर्मा अवतिरति विनाशयति॥१॥

१. कृष्णवर्ण रात्रि और शुक्लवर्ण दिवस अपनी-अपनी ज्ञातव्य प्रवृत्ति-द्वारा सम्पूर्ण जगत् को रञ्जित करके नियत परिवर्तित होते हैं। वैश्वानर अग्नि राजा की तरह प्रकाशित होकर दीप्ति-द्वारा तमोनाश करते हैं।

अथद्वितीया—

नाहंतन्तुंनविजानाम्योतुंनयंवयन्तिसमरेतमानाः ।
कस्यंस्वित्पुत्रइहवक्त्वानिपरोवंदात्यवरेणपित्रा ॥ २ ॥

न । अहम् । तन्तुम् । न । वि । जानामि । ओतुम् । न । यम् ।
वयन्ति । सम्ऽअरे । अतमानाः । कस्य । स्वित् । पुत्रः । इह ।
वक्त्वानि । परः । वदाति । अवरेण । पित्रा ॥ २ ॥

वैश्वानरस्यमहत्वमाख्यास्यन् ऋषिस्तदर्थंयज्ञं वस्त्रात्मकतयारूपयन् तस्यदुर्ज्ञानत्वमनयाप्रतिपादयतीतियज्ञवादिनोमन्यन्ते तन्तुं तन्तवः पटस्य प्रागायतानि सूत्राणि तानिच यज्ञात्मकस्यवस्त्रस्य गायत्र्यादीनिछन्दांसि स्तुतशस्त्राणिच तान्यहं नविजानामि तथा ओतुं ओतवस्तिरश्चीनानिसूत्राणि तानिचात्रयजूंषि आध्वर्यवाणिकर्माणिच तान्यहं नविजानामि अपिच एतदुभयसाध्यंतंपटं यज्ञलक्षणं नविजानामि यंपटंयज्ञलक्षणंसमरे संगमनेदेवयजने अतमानाः सततंचेष्टमानाऋत्विजः वयन्ति तंतूनोतूंश्चसंतन्वन्ति वस्त्ररूपेणनिष्पादयन्तीत्यर्थः इहा-

स्मिन्लोके कस्यस्वित् स्विदितिवितर्के कस्यखलु पुत्रोमनुष्यः वक्त्वानि वक्तव्यानितानिइमानि परः परस्तादमुष्मिन्लोके वर्तमानोयःसूर्यः तस्यपित्राअवरेण, अवस्तादस्मिंल्लोकेवर्तमानेनवैश्वानराग्निना अनुशिष्टःसन् वदाति वदेत् नकश्चिदपिप्रवदितुंशक्नोतीत्यर्थः एतच्चसंप्रदायविद्भिरुक्तं वैश्वानरस्यपुत्रोसौपरस्ताद्दिवियःस्थितः। छन्दांस्यध्वरवस्त्रस्यस्तुतशस्त्राणितन्तवः॥ यजूंषिचेष्टाश्चोतुःस्याद्वस्त्रंवातव्यमध्वरः । परःपरस्थितःसूर्यःपिताग्निःपार्थिवोमवइति ॥ रूपकतयाजगत्सृष्टेर्दुर्ज्ञानत्वमनयाप्रतिपादयतीत्यात्मविदोमन्यन्ते तन्तुं तन्तून् तन्तुस्थानानि सूक्ष्माणि वियदादीन्यपञ्चीकृतानि भूतानि नविजानामि ओतुं ओतून् पञ्चीकृतानि स्थूलानि ओतुस्थानीयान्यपि वियदादीनि नविजानामि नच तत्कार्यं पटस्थानीयं प्रपंचं विजानामि यं प्रपंचं समरे तंतूनामोतूनांच संगमने अतमानाः सततंचेष्टमानाः संसारिणः वयन्ति उत्पादयन्ति तेषां भोगार्थमीश्वरः सृजतीतिकर्तृत्वमुपचर्यते इहास्मिन्विषये परः परस्ताद्बुद्धेरविषये वर्तमानानि वक्त्वानि वक्तव्यानि इमानि अवरेण अर्वाचीनेन सृष्टयुत्तरकालमुत्पन्नेन पित्रा स्वजनकेन अनुशिष्टःसन्कस्यखलुपुत्रः वदाति वदेत् स्वोत्पत्तेःप्राचीनंवृत्तान्तंअजानानः कश्चिदपिनवदेदित्यर्थः ॥ २ ॥

२. हम तन्तु (सूत्र) अथवा ओतु (तिरश्चीन सूत्र) नहीं जानते हैं एवम् सतत चेष्टा-द्वारा जो वस्त्र वयन किया जाता है, वह भी हमें कुछ अवगत नहीं है। इस लोक में अवस्थित पिता-द्वारा उपदिष्ट होकर किसका पुत्र अन्य जगत् के वक्तव्य वाक्यों को बोलने में समर्थ होता है ?

अथतृतीया—

सइत्तन्तुंसविजानात्योतुंसवक्त्वान्यृतुथावदाति ।
यईंचिकेतदमृतस्यगोपाअवश्चरन्परोअन्येनपश्यन् ॥ ३ ॥

सः । इत् । तन्तुम् । सः । वि । जानाति । ओतुम् । सः । वक्त्वानि । ऋतुऽथा । वदाति । यः । ईम् । चिकेतत् । अमृतस्य । गोपाः । अवः । चरन् । परः । अन्येन । पश्यन् ॥ ३ ॥

यद्यप्युक्तप्रकारेणदुर्ज्ञानानि तथाप्येतानि वैश्वानरोग्निर्जानाति वदतिचेत्यनयाप्रतिपादयति सइत् सएववैश्वानरोग्निःतन्तुं तन्तुस्थानीयानि गायत्र्यादीनिछन्दांसि स्तुतशस्त्राणि विजानाति तथा सएव ओतुं ओतुस्थानीयानियजूंष्याध्वर्यवाणिचकर्माणि विजानाति ऋतुथा कालेकाले तत्तदनुष्ठानसमये वक्त्वानि वक्तव्यानिच तानि वदाति वदति वदेत् योयंवैश्वानरः अमृतस्य गोपाः उदकस्यगोपायितारक्षिता अवः अवस्ताद्भूलोकेचरन् पार्थिवाग्निरूपेणसंचरन् परः परस्ताद्दिवि अन्येनसूर्यात्मनापश्यन् सर्वंजगत्प्रकाशयन् ईं इमानि परिदृश्यमानानि सर्वाणिभूतानि चिकेतत् जानाति सएवेतिपूर्वत्रसंबन्धः यद्वा सइत् सएव तन्तुं तन्तुस्थानीयानि सूक्ष्म-

भूतानि विजानाति नान्यःकश्चिव् तथाओतुं ओतुस्थानीयानिस्थूलभूतानिच सएवविजानाति सएववक्त्वानि वक्तव्यान्युपदेष्टव्यानि इमानि ऋतुथा कालेकाले यदायदाविद्यासंप्रदायोच्छेदः तदातदा वदातिवदेव कोसौ योविजानीयाव वदेच्चेत्यतआह योवैश्वानरः विश्वनरात्मकः परमात्मा अमृतस्य अमृतत्वस्य विमोक्षणस्य गोपाः रक्षिता अवः अवस्ताव संसारदशायांचरन् अन्तःकरणोपेतोजीवात्मभावेनसंचरन् परः परस्तादविद्यायाःऊर्ध्वं वर्तमानेनान्येनउक्तविलक्षणेन निरुपाधिकेन सच्चिदादिलक्षणेनरूपेण पश्यन् सर्वंजगत्प्रकाशयन् ईं इमानि चिकेतज्जानाति तथाच परमात्मानंप्रकृत्यश्रूयते—तमेवभान्तमनुभातिसर्वंतस्यभासासर्वमिदंविभातीति ॥ ३ ॥

३. एक मात्र वैश्वानर ही तन्तु एवम् ओतु को जानते हैं। वे समय-समय पर वक्तव्यों को कहते हैं। वारिरक्षक और भूलोक में संचरण करनेवाले अग्नि अन्तरिक्ष में सूर्यरूप से सम्पूर्ण जगत् को प्रकाशित करते हुए इन परिदृश्यमान भूतों को अवगत करते हैं।

अयंहोताप्रथमःपश्यतेममिदंज्योतिरमृतंमर्त्येषु ।
अयंसजज्ञेध्रुवआनिषत्तोमर्त्यस्तन्वा३वर्धमानः ॥ ४ ॥

अयम् । होता । प्रथमः । पश्यत । इमम् । इदम् । ज्योतिः । अमृतम् । मर्त्येषु । अयम् । सः । जज्ञे । ध्रुवः । आ । निऽसत्तः । अमर्त्यः । तन्वा । वर्धमानः ॥ ४ ॥

अयंवैश्वानरोग्निः प्रथमआद्योहोता मानुषोहिहोताद्वितीयः हेमनुष्याः तं इमं पश्यत भजतेत्यर्थः मर्त्येषु मरणस्वभावेषुशरीरेषु अमृतं मरणरहितं इदं वैश्वानराख्यंज्योतिः जाठररूपेणवर्ततइत्यर्थः अपिच सोयमग्निः ध्रुवोनिश्चलः आसमन्तान्निषत्तोनिषण्णः सर्वव्यापी अतएवामर्त्यः मरणरहितोपि तन्वा शरीरेण संबन्धाव जज्ञे जायते वर्धमानश्चभवतीत्युपचर्यते ॥४॥

४. ये वैश्वानर अग्नि आदि होता हैं। हे मनुष्यो, तुम लोग अग्नि का भजन करो। अमरणशील अग्नि मरणशील शरीर में जाठर रूप से वर्तमान रहते हैं। निश्चल, सर्वव्यापी, अक्षय अग्नि शरीर, धारण-पूर्वक उत्पन्न और वर्द्धमान होते हैं।

अथपञ्चमी—

ध्रुवंज्योतिर्निहितंदृशयेकंमनोजविष्ठंपतयत्स्वन्तः ।
विश्वेदेवाःसमनसःसकेताएकंक्रतुमभिवियन्तिसाधु ॥ ५ ॥

ध्रुवम् । ज्योतिः । निऽहितम् । दृशये । कम् । मनः । जविष्ठम् । पतयत्ऽसु । अन्तरिति । विश्वे । देवाः । सऽमनसः । सऽकेताः । एकम् । क्रतुम् । अभि । वि । यन्ति । साधु ॥ ५ ॥

---

१ तै० उपनिषत्

ध्रुवं निश्चलं मनः मनसः तस्मादपि जविष्ठं अतिशयेनवेगवत् ईदृशंवैश्वानराख्यंज्योतिः पतयत्सु गच्छत्सु जंगमेषुप्राणिषु अन्तर्मध्ये निहितं प्रजापतिनास्थापितं किमर्थं दृशये कंदर्शनार्थं किंच विश्वेसर्वेदेवाश्च समनसः समानमनस्काः सकेताः समानप्रज्ञाश्चसन्तः एकं मुख्यं गन्तारंवा क्रतुं कर्मणांकर्तारं वैश्वानरं साधु सम्यक् अभिवियन्ति आभिमुख्येनविविधंप्राप्नुवन्ति सेवन्तइत्यर्थः यद्वा पतयत्सु गच्छत्सु प्राणिष्वन्तर्मध्ये हृदये मनोजविष्ठं मनसोप्यतिशयेनवेगयुक्तं ध्रुवं निश्चलं निर्विकल्पं तथाचवाजसनेयकं—अनेजदेकंमनोजवीयइति । ज्योतिः ब्रह्मचैतन्यं निहितं नकेनचित्स्थापितं योवेदनिहितंगुहायांपरमेव्योमन्निति[1]हि श्रूयते । किमर्थं दृशये दर्शनार्थं ज्ञानेनहिसर्वंजानन्ति अपिच दीव्यन्तीतिदेवाइन्द्रियाणि विश्वे सर्वेदेवाः सर्वाणींद्रियाणि चक्षुराद्याः समनसः मनसासहवर्तमानाः सकेताः सतेजस्काः सन्तः एकमद्वितीयं क्रतुं सृष्ट्यादीनांकर्मणांकर्तारं विश्वनरात्मकं परमात्मानं अभिलक्ष्य साधु सम्यक् वियन्ति विविधंगच्छन्ति देवाएववा इमं अभिवियन्ति आभिमुख्येन विविधमुपयन्ति उपासतइत्यर्थः तथाचश्रूयते—तद्देवाज्योतिषांज्योतिरायुर्होपासतेमृतम्[2]मिति ॥ ५ ॥

५. मन की अपेक्षा भी अतिशय वेगवान् (वैश्वानर की) निश्चल ज्योति सुख के पथों को प्रदर्शित करने के लिए जंगम-जीवों में अन्तर्निहित रहती है। सम्पूर्ण देवगण एकमत और समान-प्रज्ञ होकर सम्मान के साथ, प्रधान कर्म-कर्त्ता वैश्वानर के अभिमुखवर्ती होते हैं।

विमेकर्णापतयतोविचक्षुर्वी३ दंज्योतिर्हृदयआहितंयत् ।
विमेमनश्चरतिदूरआधीःकिंस्विद्वक्ष्यामिकिमुनूमनिष्ये ॥ ६ ॥
वि । मे । कर्णा । पतयतः । वि । चक्षुः । वि । इदम् । ज्योतिः ।
हृदये । आऽहितम् । यत् । वि । मे । मनः । चरति । दूरेऽआधीः ।
किम् । स्वित् । वक्ष्यामि । किम् । ऊँ इति । नु । मनिष्ये ॥ ६ ॥

वैश्वानरंश्रोतुकामस्य मे मम कर्णा कर्णौ विपतयतः विविधंगच्छतः श्रोतव्यानां तदीयगुणानांबहुत्वात् तथा वैश्वानरंदिदृक्षमाणस्य ममचक्षुरिन्द्रियं विपतयति विविधंगच्छति द्रष्टव्यानांतदीयरूपाणां बहुत्वात् तथा ज्योतिः प्रकाशकं हृदयेहृदयपुण्डरीके आहितं निहितं यद्बुद्ध्याख्यंतत्त्वं इदमपि विपतयति विविधंगच्छति वैश्वानरात्मानंज्ञातुं अपिच दूरे आधीःदूरे विप्रकृष्टेविषये आधीराध्यानंयस्यतादृशं छान्दसोलिङ्गव्यत्ययः मे मदीयं मनश्च विचरति विविधंप्रवर्तते एवमहमहमिकया सर्वेष्विन्द्रियेषुप्रवृत्तेषु किंस्विदहं वैश्वानरस्यरूपमिति वक्ष्यामि। किमुनु किमुखलु सम्प्रतिमनिष्ये मनसाप्रपत्स्येवैश्वानरस्यगुणानामनन्तत्वात् मन्दप्रज्ञेनमया ज्ञातुंनशक्यतइत्यर्थः ॥ ६ ॥

---

1 तै० आरण्यके । 2 बृहदारण्यके ।

६. तुम्हारे गुण को श्रवण करने के लिए हमारे कर्णद्वय और तुम्हारे रूप को देखने के लिए हमारे चक्षु धावित होते हैं। हृदय-कमल में जो ज्योति (बुद्धि) निहित है, वह भी तुम्हारे स्वरूप को अवगत करने के लिए समुत्सुक होती है। दूरस्थ-विषयक चिन्ता से युक्त हमारा हृदय तुम्हारे अभिमुख धावित होता है। हम वैश्वानर के किस प्रकार के स्वरूप का वर्णन करें। अथवा किस रूप में उन्हें हृदय में धारण करें।

विश्वेदेवाअनमस्यन्भियानास्त्वामग्नेतमसितस्थिवांसम्।
वैश्वानरोवतूतयेनोमर्त्योवतूतयेनः ॥ ७ ॥ ११ ॥

विश्वे। देवाः। अनमस्यन्। भियानाः। त्वाम्। अग्ने। तमसि। तस्थिऽवांसम्। वैश्वानरः। अवतु। ऊतये। नः। अमर्त्यः। अवतु। ऊतये। नः ॥ ७ ॥ ११ ॥

हेवैश्वानर तमस्यन्धकारे तस्थिवांसं स्थितवन्तंत्वां विश्वे सर्वेदेवाः अनमस्यन् नमस्कुर्वंति कुतोहेतोः भियानाः अन्धकाराद्भीताः तादृशोऽमर्त्योमरणरहितोवैश्वानरोग्निः नोस्मान् ऊतयेऊत्या रक्षणेनावतु रक्षतु पुनरुक्तिरादरार्था ॥ ७ ॥

७. हे वैश्वानर, सम्पूर्ण देवगण तुम्हें नमस्कार करते हैं। तुम अन्धकार में अवस्थित हो। वैश्वानर अपनी रक्षा-द्वारा हम लोगों की रक्षा करें। अमर अग्नि अपनी रक्षा द्वारा हम लोगों की रक्षा करें।

॥ इतिचतुर्थस्यपञ्चमेएकादशोवर्गः ॥ ११ ॥

पुरोवइतिसप्तचंदशमंसूक्तं भरद्वाजस्यार्षमाग्नेयं सप्तमीविंशिकाद्विपदाविराट् शिष्टास्त्रिष्टुभः तथाचानुक्रान्तं—पुरोवोद्विपदान्तं। प्रातरनुवाकेआग्नेयेक्रतौ त्रैष्टुभेछन्दसीदमादीनिचत्वारिसूक्तानि सूत्रितंच—पुरोवोमन्द्रमितिचत्वारितंसुप्रतीकमितिषळिति।

तत्रप्रथमा—

पुरोवोमन्द्रंदिव्यंसुवृक्तिंप्रयतियज्ञेअग्निमध्वरेदधिध्वम्।
पुरउक्थेभिःसहिनोविभावास्वध्वराकरतिजातवेदाः ॥ १ ॥

पुरः। वः। मन्द्रम्। दिव्यम्। सुऽवृक्तिम्। प्रऽयति। यज्ञे। अग्निम्। अध्वरे। दधिध्वम्। पुरः। उक्थेभिः। सः। हि। नः। विभाऽवा। सुऽअध्वरा। करति। जातऽवेदाः ॥ १ ॥

हेऋत्विग्यजमानावोयूयं मन्द्रं मोदनं स्तुत्यंवा दिव्यं दिविभवं सुवृक्तिं सुष्ठु दोषैर्वर्जितं सुखेनावर्जनीयंवा एवंगुणमग्निं प्रयति प्रगच्छति प्रवर्तमानेध्वरे रक्षःप्रभृतिभिरहिंस्ये हिंसाप्रत्यवायरहितेवास्मिन्यज्ञे पुरोदधिध्वं पुरस्तादाहवनीयरूपेणधारयत यद्वा पुरोधसंकुरुत उ-

क्थेभिः स्तुवशस्त्रैश्च पुरोदधिध्वं विभावा विशेषेणदीप्यमानः जातवेदाः जातानांवेदितासोऽग्निः हियस्माद् नोस्मान् स्वध्वरा शोभनयागान् करति करोति तस्मात्पुरोदधिध्वमित्यन्वयः ॥ १ ॥

१. हे यजमानो, तुम लोग इस प्रवर्तमान, विघ्न-रहित यज्ञ में स्तवनीय, स्वर्गोद्भव और सब प्रकार से दोष-विवर्जित अग्नि को, स्तोत्र-द्वारा, सम्मुख में स्थापित करो; क्योंकि जातवेदा यज्ञ में हम लोगों का समृद्धि-विधान करते हैं।

तमुंद्युमःपुर्वणीकहोतरग्नेअग्निभिर्मनुषइधानः।
स्तोमंयमस्मैममतेवशूषंघृतंनशुचिमतयःपवन्ते ॥ २ ॥

तम्। ऊँ इति। द्युऽमः। पुरुऽअनीक। होतः। अग्ने। अग्निऽभिः। मनुषः। इधानः। स्तोमम्। यम्। अस्मै। ममताऽइव। शूषम्। घृतम्। न। शुचि। मतयः। पवन्ते ॥ २ ॥

हेद्युमः दीप्तिमन् पुर्वणीक बहुज्वाल होतर्देवानामाह्वातरग्ने अग्निभिस्तवावयवभूतैरन्यैरग्निभिःसार्धं इधानः समिध्यमानःदीप्तःसन्मनुषः मनुष्यस्यस्तोतुः तमु तंस्तोमंशृण्विति शेषः उइतिपादपूरणं यंस्तोमंस्तोत्रं शूषं सुखकरं घृतंन पवित्राभ्यामुत्पूतं घृतमिव शुचि शुद्धं अस्माअग्नये मतयोमन्तारःस्तोतारः ममतेव ममतानामब्रह्मवादिनीदीर्घतमसोमाता सेव पवन्ते पुनन्ति संस्कुर्वन्ति दोषवर्जितमुच्चारयन्तीत्यर्थः तंस्तोममित्यन्वयः ॥ २ ॥

२. हे दीप्तिमान् बहुज्वाला-विशिष्ट, देवों के आह्वानकर्त्ता अग्नि, अपने अवयवभूत अन्य अग्नियों के साथ समिद्धमान होकर तुम मनुष्य स्तोता के इस स्तोत्र का श्रवण करो। स्तोता लोग ममता की तरह अग्नि के उद्देश्य से मनोहर स्तोत्र को घृत की तरह अर्पित करते हैं।

पीपायसःश्रवसामर्त्येषुयोअग्नयेददाशविप्रउक्थैः।
चित्राभिस्तमूतिभिश्चित्रशोचिर्व्रजस्यसातागोमतोदधाति ॥ ३॥

पीपाय। सः। श्रवसा। मर्त्येषु। यः। अग्नये। ददाश। विप्रः। उक्थैः। चित्राभिः। तम्। ऊतिऽभिः। चित्रऽशोचिः। व्रजस्य। साता। गोऽमतः। दधाति॥ ३ ॥

सयजमानः मर्त्येषुमनुष्येषु श्रवसान्नेन पीपाय वर्धते विप्रोमेधावी योयजमानः उक्थैः स्तुतिभिःसार्धं हवींषि ददाश प्रयच्छति तंयजमानं चित्रशोचिर्विचित्रदीप्तिरग्निः चित्राभिराश्चर्यभूताभिःऊतिभीरक्षाभिर्गोमतोगोभिर्युक्तस्यव्रजस्य गोष्ठस्य साता सातौ संभजने दधाति धारयति ॥ ३ ॥

३. जो यजमान स्तोत्र के साथ अग्नि में हव्य प्रदान करता है, वह मनुष्यों के मध्य में अग्नि-द्वारा समृद्धि लाभ करता है। विचित्र दीप्तिवाले अग्नि, विचित्र या आश्चर्यभूत रक्षा के द्वारा उस यजमान को गो-युक्त गोष्ठ के भोग का अधिकारी बनाते हैं।

आयःपप्रौजायमानउर्वीदूरेदृशाभासाकृष्णाध्वा।
अर्धबहुचित्तमऊर्म्यायास्तिरःशोचिषाददृशेपावकः॥ ४॥

आ। यः। पप्रौ। जायमानः। उर्वी इति। दूरेऽदृशा। भासा।
कृष्णऽअध्वा। अध। बहु। चित्। तमः। ऊर्म्यायाः। तिरः।
शोचिषा। ददृशे। पावकः॥ ४॥

कृष्णाध्वा कृष्णवर्मायोग्निः जायमानः प्रादुर्भवन् उर्वीविस्तीर्णे द्यावापृथिव्यौ दूरेदृशा दूरेदृश्यमानया भासा दीप्त्या आपप्रौ आपूरयति सपावकोग्निरधानन्तरं ऊर्म्यायाः रात्रिनामैतत् रात्रेःसंबन्धि बहुचित् बह्वपितमः अन्धकारं शोचिषा दीप्त्या तिरस्कुर्वन् ददृशे दृश्यते॥ ४॥

४. प्रादुर्भूत होकर कृष्णवर्मा अग्नि ने दूर से ही दृश्यमान दीप्ति-द्वारा विस्तीर्ण द्यावा-पृथिवी को पूर्ण किया है। वह पावक अग्नि रात्रि के सघन अन्धकार को अपनी दीप्ति-द्वारा नष्ट करते हैं और परिदृश्यमान होते हैं।

नूनश्चित्रंपुरुवाजाभिरूतीअग्नेरयिंमघवद्भ्यश्चधेहि।
येराधसाश्रवसाचात्यन्यान्त्सुवीर्येभिश्चाभिसन्तिजनान्॥ ५॥

नु। नः। चित्रम्। पुरुऽवाजाभिः। ऊती। अग्ने। रयिम्।
मघवत्ऽभ्यः। च। धेहि। ये। राधसा। श्रवसा। च। अति।
अन्यान्। सुऽवीर्येभिः। च। अभि। सन्ति। जनान्॥ ५॥

हेअग्ने मघवद्भ्योहविर्लक्षणधनयुक्तेभ्योनोस्मभ्यं पुरुवाजाभिर्बह्वन्नैः ऊती ऊतिभीरक्षणैः सह चित्रं चायनीयंरयिं धनं नु क्षिप्रं धेहि देहि प्रयच्छ चशब्दोवक्ष्यमाणेनसमुच्चयार्थः ये राधसाधनेन श्रवसान्नेनच सुवीर्येभिः शोभनैर्वीर्यैश्च अन्यान् जनान् मनुष्यानति अतिशयेनाभिसंति अभिभवन्ति तादृशान्पुत्रांश्चास्मभ्यंदेहीत्यर्थः॥५॥

५. हे अग्नि, हम लोग हविर्लक्षण धन से युक्त हैं। हमें तुम शीघ्र ही बहुत अन्न और रक्षा के साथ विचित्र धन प्रदान करो। धन, अन्न और उत्कृष्ट वीर्य-द्वारा अन्य मनुष्यों को जो पराजित कर सके ऐसा पुत्र हमें प्रदान करो।

अथषष्ठी—

इमंयज्ञंचनोधाअग्नउशन्यन्तआसानोजुहुतेहविष्मान्।
भरद्वाजेषुदधिषेसुवृक्तिमवीर्वाजस्यगध्यस्यसातौ॥ ६॥

इमम् । यज्ञम् । चनः । धाः । अग्ने । उशन् । यम् । ते । आसानः । जुहुते । हविष्मान् । भरत्ऽवाजेषु । दधिषे । सुऽवृक्तिम् । अवीः । वाजस्य । गध्यस्य । सातौ ॥ ६ ॥

हेअग्ने उशन् कामयमानस्त्वं इमं पुरोवर्तियज्ञं यागसाधनं नोहविर्लक्षणमन्नं धाः धेहि स्वात्मनिधारय यंच पुरोडाशादिकं आसानः आसीनः उपविशन् हविष्मान् हविर्युक्तोयजमानस्तेतुभ्यं त्वदर्थं जुहुते जुहोति तमिममित्यन्वयः अपिच भरद्वाजेष्वृषिषु सुवृक्तिं सुष्ठुदोषैर्वर्जितांस्तुतिं दधिषे धारय गध्यस्य गध्यतिर्मिश्रीभावकर्मा मिश्रणीयस्य प्राप्यस्य वाजस्यान्नस्य सातौ संभजनेनिमित्तभूते अवीस्तानृषीन्रक्षच ॥ ६ ॥

६. हे अग्नि, बैठकर जो हव्ययुक्त यजमान तुम्हारे लिए हवन करता है, तुम हव्याभिलाषी होकर उस यज्ञ-साधन अन्न को स्वीकार करो। भरद्वाज-वंशीयों के निर्दोष स्तोत्र को ग्रहण करो। उनके प्रति अनुग्रह करो, जिससे वे नाना प्रकार का अन्न प्राप्त कर सकें।

विद्वेषांसीनुहिवर्धयेळांमदेमशतहिमाःसुवीराः ॥ ७ ॥ १२ ॥

वि । द्वेषांसि । इनुहि । वर्धय । इळाम् । मदेम । शतऽहिमाः । सुऽवीराः ॥ ७ ॥ १२ ॥

हेअग्ने द्वेषांसि द्वेष्टॄञ्शत्रून् विइनुहि विविधंगमय इळामन्नंचास्मदीयंवर्धय वयंच सुवीराः शोभनैर्वीरैःपुत्रपौत्रादिभिरुपेताःसन्तः शतहिमाः शतंहेमंतान्संवत्सरान् मदेम मोदेम तृप्ताभूयास्म ॥ ७ ॥

७. हे अग्नि, शत्रुओं को विलीन करो। हम लोगों के अन्न को वर्द्धित करो। हम लोग शोभन पुत्र-पौत्रादि से युक्त होकर शत हेमन्त-पर्यन्त सुख भोग कर सकें।

॥ इतिचतुर्थस्यपञ्चमेद्वादशोवर्गः ॥ १२ ॥

यजस्वहोतरितिषळृचमेकादशंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयं अनुक्रम्यतेच—यजस्वषळिति प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः।

तत्रप्रथमा—

यजस्वहोतरिषितोयजीयानग्नेबाधोमरुतांनप्रयुक्ति । आनोमित्रावरुणानासत्याद्यावाहोत्रायपृथिवीववृत्याः ॥ १ ॥

यजस्व । होतः । इषितः । यजीयान् । अग्ने । बाधः । मरुताम् । न । प्रऽयुक्ति । आ । नः । मित्रावरुणा । नासत्या । द्यावा । होत्राय । पृथिवी इति । ववृत्याः ॥ १ ॥

हेहोतर्देवानामाह्वातरग्ने यजीयान् यष्टृतमस्त्वं इषितः प्रेषितः अस्माभिःप्रार्थितःसन् नेतिसंप्रत्यर्थे संप्रतिप्रयुक्ति प्रयुक्तौ प्रयुज्यमानेयज्ञे मरुतां देवानां बाधः शत्रूणांबाधकंगणं यजस्व यद्वैतद्वाक्यद्वयं हेहोतरग्ने यजस्व देवानित्येकंवाक्यं प्रयुज्यतइतिप्रयुक्ति बलं मरुतांनप्रयुक्ति मरुतांबलमिव अस्मच्छत्रून्बाधोबाधस्वेतिद्वितीयंवाक्यं अपिच मित्रावरुणा अहरभिमानीदेवोमित्रः वरुणोरात्र्यभिमानी तौच नासत्या सत्यस्यनेतारौ सत्यस्वभावावेववा नासिकाप्रभवौवा अश्विनौ द्यावापृथिवीदिवंचपृथिवींच एतांश्चदेवान् होत्राय अस्मद्यज्ञाय तदर्थं आववृत्याः आवर्तय आवहेत्यर्थः ॥ १ ॥

१. हे देवों के आह्वानकारी तथा यजन करनेवालों में श्रेष्ठ, हम लोग तुम्हारी प्रार्थना करते हैं। तुम अभी हम लोगों के इस आरब्ध यज्ञ में शत्रुबाधक मरुतों का यजन करो। तुम मित्र, वरुण, नासत्यद्वय और द्यावा-पृथिवी को हमारे यज्ञ के लिए लाओ।

त्वंहोतामन्द्रतमोनोअध्रुगन्तर्देवोविदथामर्त्येषु ।
पावकयाजुह्वा३वह्निरासाग्नेयजस्वतन्वं१तवस्वाम् ॥ २ ॥

त्वम् । होता । मन्द्रऽतमः । नः । अध्रुक् । अन्तः । देवः । विदथा । मर्त्येषु । पावकया । जुह्वा । वह्निः । आसा । अग्ने । यजस्व । तन्वम् । तव । स्वाम् ॥ २ ॥

हेअग्ने त्वं मर्त्येषु मनुष्येषु अन्तर्मध्ये वर्तमाने विदथा विदथेयज्ञे होता देवानामाह्वाता भवसि कीदृशस्त्वं मन्द्रतमःस्तुत्यतमः नोस्माकमध्रुकअद्रोग्धा अस्मदर्थंद्रोहरहितोवा सर्वदामित्रभूतइत्यर्थः देवोदानादिगुणयुक्तः अपिच हेअग्ने जिह्वा हूयन्तेस्यामाहुतयइति जुहूर्ज्वाला तया पावकयाशोधयित्र्या आसा आस्येन देवानामास्यभूतया वह्निर्हविषांवोढात्वं तव स्वां स्वभूतां स्विष्टकृदाख्यां तन्वं तनूं यजस्व ॥ २ ॥

२. हे अग्नि, तुम अतिशय स्तवनीय, हम लोगों के प्रति द्रोह-रहित और दानादि गुण से युक्त हो। हे अग्नि, तुम हव्य वहन करनेवाले हो। तुम शुद्धि-विधायक और देवों के मुख-स्वरूप ज्वाला के द्वारा अपने शरीर का यजन करो। अथतृतीया—

धन्याचिद्धित्वेधिषणावष्टिप्रदेवाञ्जन्मगृणतेयजध्यै ।
वेपिष्ठोअङ्गिरसांयद्धविप्रोमधुच्छन्दोभनतिरेभइष्टौ ॥ ३ ॥

धन्या । चित् । हि । त्वे इति । धिषणा । वष्टि । प्र । देवान् । जन्म । गृणते । यजध्यै । वेपिष्ठः । अङ्गिरसाम् । यत् । ह । विप्रः । मधु । छन्दः । भनति । रेभः । इष्टौ ॥ ३ ॥

धन्या धनमिच्छन्ती धनहेतुभूताधिषणास्तुतिः हेअग्ने तेत्वां वष्टि कामयते चिद्धीत्येतत्पादपूरणं किमर्थं देवान्यष्टव्यानिन्द्रादीन् प्रयजध्यै प्रकर्षेणयष्टुं त्वदीयंजन्मप्रादुर्भावं गृणते स्तुवतेयजमानाय ईदृग्भूतयजमानार्थं यद्ध यदाखलु अङ्गिरसामृषीणांमध्ये वेपिष्ठः अतिशयेन स्तुतेःप्रेरयिता विप्रोमेधावी रेभः स्तोताभरद्वाजः इष्टौ यज्ञे मधु मधुवन्मदकरं छन्दः स्तोत्रं भनति उच्चारयति तदाधिषणावष्टीत्यन्वयः॥ ३ ॥

३. हे अग्नि, धनाभिलाषिणी स्तुति तुम्हारी कामना करती है; क्योंकि तुम्हारे प्रादुर्भाव से इन्द्रादि देवों के यजन में यजमान समर्थ होते हैं। ऋषियों के मध्य में अंगिरा स्तुति के अतिशय प्रेरयिता हैं और मेधावी भरद्वाज यज्ञ में हर्षकारक स्तोत्र का उच्चारण करते हैं।

अदिद्युतत्स्वपाकोविभावाग्नेयजस्वरोदसीउरूची ॥
आयुंनयंनमसारातहव्याअञ्जन्तिसुप्रयसंपञ्चजनाः ॥ ४ ॥

अदिद्युतत् । सु । अपाकः । विऽभावा । अग्ने । यजस्व । रोदसी इति । उरूची इति । आयुम् । न । यम् । नमसा । रातऽहव्याः । अञ्जन्ति । सुऽप्रयसम् । पञ्च । जनाः ॥ ४ ॥

अयमग्निः सुअदिद्युतत् सुष्ठुद्योतते दीप्यते कथंभूतः अपाकः पाकःपक्वव्यप्रज्ञोमूर्खः तद्विलक्षणोऽपाकः विभावा दीप्तिमान् शेषः प्रत्यक्षकृतः हेअग्ने सत्वं उरूची उरुविस्तीर्णेअञ्चत्यौ विस्तृते रोदसी द्यावापृथिव्यौ यजस्व हविषापूजय आयुंन मनुष्यमतिथिमिव यं पञ्चजनाःमनुष्याः ऋत्विग्यजमानलक्षणाः रातहव्याः दत्तहविष्काःसन्तःसुप्रयसं शोभनहविर्लक्षणं यमग्निं नमसान्नेनहविर्लक्षणेन अञ्जन्ति सिञ्चन्तितर्पयन्ति सत्वं यजस्वेत्यन्वयः॥ ४ ॥

४. बुद्धिमान् और दीप्तिमान् अग्नि भली भाँति से शोभा पाते हैं। हे अग्नि, तुम विस्तृत द्यावा-पृथिवी का हव्य-द्वारा पूजन करो। तुम शोभन हव्य सम्पन्न हो। मनुष्य यजमान की तरह अग्नि को, हवि देनेवाले ऋत्विक्-यजमान आदि हव्य-द्वारा, तृप्त करते हैं।

अथपञ्चमी—

वृञ्जेहयन्नमसाबर्हिरग्नावयामिस्रुग्घृतवतीसुवृक्तिः ।
अम्यक्षिसद्मसदनेपृथिव्याअश्रायियज्ञःसूर्येनचक्षुः ॥ ५ ॥

वृञ्जे । ह । यत् । नमसा । बर्हिः । अग्नौ । अयामि । स्रुक् । घृतऽवती । सुऽवृक्तिः । अम्यक्षि । सद्म । सदने । पृथिव्याः । अश्रायि । यज्ञः । सूर्ये । न । चक्षुः ॥ ५ ॥

यद्व यदाखलु नमसा हविषासह अग्नौ अग्निसमीपे बर्हिर्वृञ्जे वृजिश्छेदनार्थः छिद्यते आह्रियतइत्यर्थः सुवृक्तिः सुष्ठुदोषैर्वर्जिता घृतवती घृतपूर्णास्रुक् अयामि नियम्यते बर्हिष्यासाद्यते तथा पृथिव्याभूमेः सदने स्थाने सद्महविरासादनार्थावेदिः अम्यक्षि म्यक्षतिर्गतिकर्मा गम्यते परिगृह्यते तदानींयज्ञः अश्रायि यजमानेआश्रितोभवति तत्रदृष्टान्तः—सूर्येनचक्षुः यथा सूर्येसर्वस्यप्रेरकेआदित्येप्रकाशकंतेजःसमवैतितद्वत् ॥ ५ ॥

५. जब अग्नि के समीप हव्य के साथ कुश आनीत होता है एवम् दोषवर्जित घृतपूर्ण स्रुक् कुश के ऊपर रखा जाता है, तब भूमि के ऊपर अग्नि के लिए आधारभूत वेदि रचित होती है। सूर्य जिस प्रकार से तेजोराशि को समवेत करते हैं, उसी प्रकार यजमान का यज्ञ-कार्य समाश्रित होता है।

दशस्यानःपुर्वणीकहोतर्देवेभिरग्ने अग्निभिरिधानः।

रायःसूनोसहसोवावसानाअतिस्रसेमवृजनंनांहः ॥ ६ ॥ १३ ॥

दशस्य। नः। पुरुऽअनीक। होतः। देवेभिः। अग्ने। अग्निऽभिः। इधानः। रायः। सूनो इति। सहसः। ववसानाः। अति। स्रसेम। वृजनम्। न। अंहः ॥ ६ ॥ १३ ॥

हेपुर्वणीक बहुज्वाल होतर्देवानामाह्वातरग्ने देवेभिर्देवैर्द्योतमानैः अन्यैरग्निभिःत्वद्विभूतिभूतैःसार्धं इधानः इध्यमानोदीप्यमानःसन् नोस्मभ्यं रायोधनानि दशस्य प्रयच्छ हेसहसः सूनो बलस्यपुत्राग्ने वावसानाः हविषात्वामाच्छादयन्तोवयं वृजनंन शत्रुमिव अंहः पापं अतिस्रसेम अतिगच्छेम अतिक्रामेमेत्यर्थः ॥ ६ ॥

६. हे बहुज्वाला-विशिष्ट देवों के आह्वानकर्त्ता अग्नि, तुम दीप्तिशाली अन्य अग्नियों के साथ प्रदीप्त होकर हम लोगों को धन प्रदान करो। हे बलपुत्र, हम लोग हवि-द्वारा तुम्हें आच्छादित करते हैं। शत्रु तुल्य पाप से हम लोग मुक्त हों।

॥ इतिचतुर्थस्यपञ्चमेत्रयोदशोवर्गः ॥ १३ ॥

मध्येहोतेतिषळृचंद्वादशंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयं मध्यइत्यनुक्रान्तं प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः।

मध्येहोतादुरोणेबर्हिषोराळग्निस्तोदस्यरोदसीयजध्यै।

अयंससूनुःसहसऋतावादूरात्सूर्योनशोचिषाततान ॥ १ ॥

मध्ये। होता। दुरोणे। बर्हिषः। राट्। अग्निः। तोदस्य। रोदसी इति। यजध्यै। अयम्। सः। सूनुः। सहसः। ऋतऽवा। दूरात्। सूर्यः। न। शोचिषा। ततान ॥ १ ॥

होता देवानामाह्वाता बर्हिषोयज्ञस्य राट् राजाग्निः तोदस्य तुद्यतेतपसापीड्यतेइतितोदो-यजमानः तस्यदुरोणेगृहे मध्येनिषीदतीतिशेषः किमर्थं रोदसी द्यावापृथिव्यौ यजध्यै यष्टुं सत्तादृशोयं सहसःसूनुः सहसस्पुत्रः ऋतावा सत्यवान् यज्ञवान्वाग्निः सूर्योन सूर्यइव दूरात् दूरतएव शोचिषा तेजसा ततान आतनोति विस्तारयति दूरदेशेवर्तमानोपि सूर्यइवसर्वंजगद्भासयतीत्यर्थः ॥ १ ॥

१. देवों के आह्वानकारी और यज्ञ के अधिपति अग्नि द्यावा-पृथिवी का यजन करने के लिए यजमान के गृह में अवस्थित होते हैं। यज्ञ-सम्पन्न, बलपुत्र अग्नि दूर से ही दीप्ति के द्वारा सम्पूर्ण जगत् को सूर्य की तरह प्रकाशित करते हैं।

आयस्मिन्त्वेस्वपाकेयजत्रयक्षद्राजन्त्सर्वतातेवनुद्यौः।
त्रिषधस्थस्ततरुषोनजंहोहव्यामघानिमानुषायजध्यै ॥ २ ॥

आ। यस्मिन्। त्वे इति। सु। अपाके। यजत्र। यक्षत्। राजन्। सर्वताताऽइव। नु। द्यौः। त्रिऽसधस्थः। ततरुषः। न। जंहः। हव्या। मघानि। मानुषा। यजध्यै ॥ २ ॥

द्यौःस्तोता सर्वतातेव इवशब्दःपूरकः यज्ञनामैतत् सर्वतातौ सर्वैस्तायमानेयज्ञे यद्वा सर्वशब्दात्स्वार्थिकस्तातिल्प्रत्ययः सर्वस्तोता हेयजत्र यष्टव्य राजन् राजमानाग्ने अपाके प्राज्ञे त्वे यस्मिंस्त्वेत्वयि सु अत्यन्तं नु क्षिप्रं आयक्षत् आयजति हवींषिजुहोति त्रिषधस्थः त्रिषुलोकेषुसहस्थितः यद्वा गार्हपत्यादिरूपेणत्रिधावस्थितः तादृशस्त्वं ततरुषोन तरितासूर्यइव जंहः शीघ्रंगन्ताभव जंहइतिहन्तेर्गतिकर्मणोरूपं यद्वा तॄप्लवनतरणयोरित्यस्मात्क्वसौरूपंततर्वानिति तस्य षष्ठ्यांरूपमेतत् ततरुषइति तरितुःसूर्यस्येवजंहोवेगस्तवभवत्वित्यर्थः किमर्थं मघानि मंहनीयानि प्रशस्यानि मानुषा मनुष्याणांसंबंधीनि हव्या हव्यानि हवींषि यजध्यै यष्टुं देवेभ्योदातुम ॥२॥

२. हे यागार्ह, दीप्तिसम्पन्न अग्नि, तुम बुद्धि-सम्पन्न हो। सम्पूर्ण यजमान तुममें आग्रहपूर्वक प्रचुर हव्य समर्पण करते हैं। तुम त्रिभुवन में अवस्थित होकर मनुष्यदत्त उत्कृष्ट हव्य को देवों के निकट वहन करने के लिए सूर्य की तरह वेगशाली होओ।

तेजिष्ठायस्यारतिर्वनेराट्तोदोअध्वन्नवृधसानोअद्यौत्।
अद्रोघोनद्रविताचेततित्मन्नमर्त्योवर्त्रओषधीषु ॥ ३ ॥

तेजिष्ठा। यस्य। अरतिः। वनेऽराट्। तोदः। अध्वन्। न। वृधसानः। अद्यौत्। अद्रोघः। न। द्रविता। चेतति। त्मन्। अमर्त्यः। अवर्त्रः। ओषधीषु ॥ ३ ॥

यस्याग्निः अरतिर्गन्त्रीज्वाला तेजिष्ठा अतिशयेनतेजस्विनीसती वनेराट् दावरूपेणअरण्येराजमानावर्तते वृधसानोवर्धमानः सोग्निः तोदोअध्वंन तोदः सर्वस्यप्रेरकःसूर्यः सइव अध्वनि स्वमार्गेन्तरिक्षे अर्थात् द्योततेप्रकाशते अपिच अद्रोघोन अद्रोग्धव्योयन्ना प्राणरूपेणसर्वेषामद्रोग्धावायुरिव तादृशः अमर्त्योमरणरहितः सोग्निः ओषधीषु ओषः पाकः सएधीयतेइत्योषधयोवनानि तेषु द्रविता शीघ्रगामीसन् अवत्रंः केनाप्यवारणीयश्चभवन् त्मन् आत्मना स्वप्रकाशेनैवचेतति चेतयति सर्वंजगत् ज्ञापयति ॥ ३ ॥

३. जिनकी सर्वव्यापिनी और अतिशय तेजस्विनी ज्वाला वन में दीप्त होती है, वे प्रवृद्धमान अग्नि सूर्य की तरह अन्तरिक्ष मार्ग में विराजमान होते हैं। सबके कल्याण-विधायक वायु की तरह अक्षय और अनिवार्य ओषधियों के मध्य में वेगपूर्वक गमन करते हैं और अपनी दीप्ति-द्वारा सम्पूर्ण जगत् को प्रवुद्ध करते हैं।

सास्माकेभिरेतरीनशूषैरग्निःष्टवेदमआजातवेदाः।
द्रुन्नोवन्वन्क्रत्वानार्वोस्त्रःपितेवजारयायियज्ञैः ॥ ४ ॥

सः। अस्माकेभिः। एतरि। न। शूषैः। अग्निः। स्तवे। दमे। आ। जातऽवेदाः। द्रुऽअन्नः। वन्वन्। क्रत्वा। न। अर्वा। उस्त्रः। पिताऽइव। जारयायि। यज्ञैः ॥ ४ ॥

जातवेदाः जातधनोजातप्रज्ञोवा सोग्निः अस्माकेभिरस्मदीयैः स्तोतृभिः एतरीन एवरि गन्तरि याचमानेपुरुषे विद्यमानानिस्तोत्राणियथात्यन्तं सुखकराणि तथा शूषैः सुखकरैःस्तोत्रैः दमेस्मदीययज्ञगृहे आ आभिमुख्येन स्तवे स्तूयते अपिच द्रुन्नः द्रुः द्रुमः सएवअन्नंयस्यस-तथोक्तः अतएव वन्वन् वनानि संभजन् क्रत्वान क्रतुना आत्मीयेनकर्मणाच अर्वा गन्ताभ-वति तत्रदृष्टान्तः—उस्त्रः पितेव पितापालयितावत्सानांजनकोवा उस्त्रोवृषभइव सयथा मैथुना-र्थंशीघ्रंगच्छतितद्वत् यज्ञैर्यज्ञवद्भिर्यजमानैश्च जारयायि स्तूयते जरतेःस्तुतिकर्मणएतद्रूपम् ॥४॥

४. जातवेदा अग्नि याजकों के सुखदायक स्तोत्र की तरह हम लोगों के स्तोत्र-द्वारा हमारे यज्ञ-गृह में स्तुत होते हैं। यजमान लोग द्रुमभोजी, अरण्याश्रयकारी और वत्सों के पिता वृषभ की तरह क्षिप्र-कर्मकारी अग्नि का स्तवन करते हैं।

अधस्मास्यपनयन्तिभासोवृथायत्तक्षदनुयातिपृथ्वीम्।
सद्योयःस्पन्द्रोविषितोधवीयानृणोनतायुरतिधन्वाराट् ॥ ५ ॥

अध। स्म। अस्य। पनयन्ति। भासः। वृथा। यत्। तक्षत्। अनुऽयाति। पृथ्वीम्। सद्यः। यः। स्पन्द्रः। विऽसितः। धवीयान्। ऋणः। न। तायुः। अति। धन्व। राट् ॥ ५ ॥

अथास्मिन् लोके स्मेतिपूरकः अस्याग्नेर्भासोरश्मीन् पनयन्ति स्तोतारःस्तुवन्ति यद्यदा वृथा अनायासेन तक्षत् तक्षन् तनूकुर्वन् वनानि सम्यक्दहन् पृथ्वीं विस्तीर्णामरण्यभुवमनुयात्यनुगच्छति तदानींपनयन्तीत्यन्वयः योग्निः स्पन्द्रः स्पन्दनवान् विषितोविमुक्तःप्रतिबन्धरहितः अतएव सद्यः शीघ्रंधवीयान् गन्तृतमोभवति कइव ऋणोनतायुः ऋणोतिर्गतिकर्मा तायुरितिस्तेननाम यथास्तेनःशीघ्रंगन्ताभवति तद्वत् सोयमग्निःधन्वमरुभूमिमतिक्रम्य राट् राजते यद्वा धन्वन्त्यस्मादापइतिधन्वान्तरिक्षं अतिशयेनान्तरिक्षमाक्रम्यराजते ॥ ५ ॥

५. जब अग्नि अनायास ही वनों को भस्म करके पृथ्वी के ऊपर विस्तृत होते हैं, तब स्तोता लोग इस लोक में अग्नि की शिखाओं का स्तवन करते हैं। अप्रतिहत भाव से विचरण करनेवाले और चोर की तरह द्रुतगमन करनेवाले अग्नि मरुभूमि के ऊपर विराजित होते हैं।

सत्वंनोअर्वन्निदायाविश्वेभिरग्नेअग्निभिरिधानः ॥
वेषिरायोवियासिदुच्छुनामदेमशतहिमाःसुवीराः ॥ ६ ॥ १४ ।

सः। त्वम्। नः। अर्वन्। निदायाः। विश्वेभिः। अग्ने। अग्निऽभिः। इधानः। वेषि। रायः। वि। यासि। दुच्छुनाः। मदेम। शतऽहिमाः। सुऽवीराः॥ ६ ॥ १४ ॥

हेअर्वन् गन्तरग्ने सतादृशस्त्वं निदायाः निन्दित्र्याः प्रजायाः निन्दायाएववापाहीतिशेषः कथंभूतः सन् विश्वेभिः सर्वैरग्निभिः त्वच्छाखाभूतैः इधानः इध्यमानःसन् रायोधनानिच अस्मान्वेषि गमय यद्वा हविर्लक्षणानि धनानि वेषि कामयसे दुच्छुनाः दुःखकारिणीः शत्रुसेनाः वियासिच विविधंगमयसिच वयंच सुवीराः शोभनपुत्रपौत्राःसन्तः शतहिमाः शतसंवत्सरान् मदेम मोदेम ॥६॥

६. हे शीघ्र गमन करनेवाले अग्नि, तुम समस्त अग्नियों के साथ प्रज्वलित होकर हम लोगों की निन्दा से रक्षा करो। तुम हम लोगों को धन प्रदान करो। दुःखदायक शत्रु-सैन्य को दूर करो। हम लोग शोभन पुत्र-पौत्र से युक्त होकर शत हेमन्त अर्थात् सौ वर्षपर्यन्त सुख भोग करें।

॥ इतिचतुर्थस्यपञ्चमेचतुर्दशोवर्गः ॥ १४ ॥

त्वद्विश्वेतिषळृचंत्रयोदशंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमाग्नेयं त्वद्विश्वेत्यनुक्रान्तं प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः।

त्वद्विश्वासुभगसौभगान्यग्नेवियन्तिवनिनोनवयाः।
श्रुष्टीरयिर्वाजोवृत्रतूर्येदिवोवृष्टिरीड्योरीतिरपाम् ॥ १ ॥

त्वत्। विश्वा। सुऽभग। सौभगानि। अग्ने। वि। यन्ति। वनिनः। न। वयाः। श्रुष्टी। रयिः। वाजः। वृत्रऽतूर्ये। दिवः। वृष्टिः। ईड्यः। रीतिः। अपाम् ॥ १ ॥

हेसुभग शोभनधनाग्ने विश्वा विश्वानिसर्वाणि सौभगानि धनानि त्वत् त्वत्तः वियन्ति विविधंनिर्गच्छन्ति हिरण्यमूलत्वात्सर्वेषांधनानां हिरण्यंचाग्नेःसकाशादुत्पन्नं तस्यरेतःपरापतत् तद्धिरण्यमभवदितिश्रुतेः। निर्गमनेदृष्टान्तः—वनिनोनवयाः यथावृक्षात्शाखाविविधंनिर्गच्छन्ति तद्वत् तथा रयिः पशुसंघश्च त्वत्सकाशादेव श्रुष्टीक्षिप्रं व्येति निर्गच्छति पशवोवैरयिःपशूने-वावरुन्धेइतितैत्तिरीयकम्। वृत्रतूर्ये वृत्राणांशत्रूणांहिंसकेसंग्रामे शत्रूनजेतुं वाजोबलंच त्वत्तोव्येति दिवोन्तरिक्षाद्यावृष्टिः सापि त्वत्तएवव्येति अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते। आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइतिस्मरणात्॥ अतस्त्वमीड्यः सर्वैःस्तुत्यःसन् अपामुदकानां रीतिर्निर्गमयिताभवसि ॥ १ ॥

१. हे शोभन धनवाले अग्नि, विविध प्रकार के धन तुमसे ही उत्पन्न हुए हैं। जैसे वृक्ष से विविध प्रकार की शाखायें उत्पन्न होती हैं। तुमसे पशुसमूह शीघ्र ही उत्पन्न होता है। संग्राम में शत्रुओं को जीतने के लिए बल भी तुमसे ही उत्पन्न होता है। अन्तरिक्ष की वृष्टि तुमसे ही उत्पन्न होती है; अतएव तुम सबके स्तवनीय हो।

त्वंभगोन॒आहिरत्नंमि॒षेपरिज्मेवक्षयसिद॒स्मवर्चाः।
अग्नेमि॒त्रोनबृ॒ह॒तऋ॒तस्यासिक्ष॒त्तावा॒मस्यदेव॒भूरेः ॥ २ ॥

त्वम्। भर्गः। नः। आ। हि। रत्नम्। इ॒षे। परिज्माऽइव।
क्ष॒य॒सि॒। द॒स्मऽवर्चाः। अग्ने। मि॒त्रः। न। बृ॒ह॒तः। ऋ॒तस्य।
असि। क्ष॒त्ता। वा॒मस्य। दे॒व॒। भूरेः ॥ २ ॥

हेअग्ने भगोभजनीयस्त्वं नोस्मभ्यं रत्नं रमणीयंधनं आइषे आगमय प्रयच्छ इणूगतावित्यस्यैतद्रूपं हीतिपूरकः दस्मवर्चाः दर्शनीयदीप्तिस्त्वं परिज्मेवपरितोगन्तावायुरिव क्षयसि सर्वत्रनिवससि यद्वा क्षयतिरैश्वर्यकर्मा सर्वस्येशिषे हेअग्ने मित्रोन प्रमीतेस्त्रायकोदेवइव बृहतोमहतःऋतस्योदकस्य यज्ञस्यवा क्षत्तासि क्षदतिरन्नदानकर्मा दाताभवसि तथा हेदेव द्योतमानाग्ने भूरेर्बहुलस्य वामस्य वननीयस्य धनस्यच दाताभवसीत्यनुषङ्गः ॥ २ ॥

२. हे अग्नि, तुम संभजनीय हो। तुम हमें रमणीय धन प्रदान करो। हे दर्शनीय-दीप्ति, तुम सर्वव्यापी वायु की तरह सर्वत्र अवस्थिति करो! हे दीप्तिमान् अग्नि, तुम मित्र की तरह प्रचुर यज्ञ और पर्याप्त वाञ्छित धन प्रदान करो। अथतृतीया—

ससत्पतिःशवसाहन्तिवृत्रमग्नेविप्रोविपणेर्भर्तिवाजम्।
यंत्वंप्रचेतऋतजातरा॒या॒स॒जोषा॒नप्त्रापांहि॒नोषि ॥ ३ ॥

---

१ तै० ब्रा० १. १. ३. । २ तै० सं० १. ५. ८. ।

सः । सत्ऽपतिः । शवसा । हन्ति । वृत्रम् । अग्ने । विप्रः । वि । पणेः ।
भर्ति । वाजम् । यम् । त्वम् । प्रऽचेतः । ऋतऽजात । राया ।
सऽजोषाः । नप्त्रा । अपाम् । हिनोषि ॥ ३ ॥

हेअग्ने सत्पतिः सतांपालयिता सपुरुषः वृत्रमावरकंशत्रुं शवसा बलेन हन्ति सचविप्रोमेधावीसन् पणेर्वणिजः एतन्नाम्नोसुरस्य वाजमन्नं बलंवा बिभर्ति वियुज्यहरति हृग्रहोर्भंइतिभः त्वं हेप्रचेतः प्रकृष्टज्ञान ऋतजात ऋतमितियज्ञनाम तदर्थंजाताग्ने अपांनप्त्रा नपातयित्रा पुत्रेण मध्यमस्थानेन वैद्युताग्निना सजोषाः संगतस्त्वं यंपुरुषं राया चतुर्थ्यर्थेतृतीया धनार्थं हिनोषि प्रेरयसि सहन्तीत्यन्वयः ॥ ३ ॥

३. हे प्रकृष्ट ज्ञान-सम्पन्न और यज्ञ के लिए समुद्भूत अग्नि, तुम वारिपुत्र वैद्युताग्नि के साथ संगत होकर धन के लिए जिस व्यक्ति को प्रेरित करते हो, वह साधुओं का रक्षाकारी और बुद्धिमान् व्यक्ति बल-द्वारा शत्रुओं का संहार करता है एवम् पणिकी शक्ति का अपहरण करता है ।

यस्तेसूनोसहसोगीर्भिरुक्थैर्यज्ञैर्मर्तोनिशितिंवेद्यानट् ।
विश्वंसदेवप्रतिवारमग्नेधत्तेधान्यं१पत्यतेवसव्यैः ॥ ४ ॥

यः । ते । सूनो इति । सहसः । गीःऽभिः । उक्थैः । यज्ञैः । मर्तः ।
निऽशितिम् । वेद्या । आनट् । विश्वम् । सः । देव । प्रति । वा । अरम् ।
अग्ने । धत्ते । धान्यम् । पत्यते । वसव्यैः ॥ ४ ॥

हेसहसःसूनो बलस्यपुत्राग्ने ते तव निशितिं तैक्ष्ण्यं योमर्तोमनुष्योयजमानः गीर्भिः स्तुतिभिः उक्थैः शस्त्रैः यज्ञैर्यजनसाधनैः हविर्भिश्च वेद्या वेद्यायां यज्ञभूमौ आनट् प्रापयति समर्तः हेदेव द्योतमानाग्ने विश्वं सर्वं अरं पर्याप्तं वाशब्दश्चार्थे धान्यंच प्रतिधत्ते प्रतिधारयति वसव्यैर्वसुभिश्चपत्यते संगच्छते ॥ ४ ॥

४. हे बलपुत्र और द्युतिमान् अग्नि, जो यजमान स्तुति, उपासना और यज्ञ-द्वारा यज्ञभूमि में तुम्हारी तीक्ष्ण दीप्ति को आकृष्ट करता है; वह मनुष्य समस्त प्राचुर्य और धान्य धारण करता है एवं धनसम्पन्न होता है ।

अथपंचमी—

तानृभ्यआसौश्रवसासुवीराग्नेसूनोसहसःपुष्यसेधाः ।
कृणोषियच्छवसाभूरिपश्वोवयोवृकायारयेजसुरये ॥ ५ ॥

ता । नृऽभ्यः । आ । सौश्रवसा । सुऽवीरा । अग्ने । सूनो इति ।
सहसः । पुष्यसे । धाः । कृणोषि । यत् । शवसा । भूरि । पश्वः ।
वयः । वृकाय । अरये । जसुरये ॥ ५ ॥

हेसहसःसूनो सहसस्पुत्राग्ने सुवीराः शोभनैःपुत्रैरुपेतानि सौश्रवसा सुश्रवांसि शोभनान्यन्नानि ता तानि नृभ्यः शत्रुजनेभ्यः आहृत्य धाः अस्मासुधेहि किमर्थं पुष्यसे पोषार्थं यद्वा नृभ्यः स्तुतीनांनेतृभ्योस्मभ्यं आधेहि आभिमुख्येनप्रयच्छ शवसा बलेनयुक्तस्त्वं भूरि बहुलं पश्वः पशोःसंवन्धिदध्यादिलक्षणं यदन्नयोन्नं वृकाय आदात्रे जसुरये उपक्षपयित्रे कृणोषि तदन्नमाहृत्यप्रयच्छेत्यर्थः ॥ ५ ॥

५. हे बलपुत्र अग्नि, तुम हम लोगों के पोषणार्थ, शत्रुओं से लाकर, उत्कृष्ट पुत्रों के साथ शोभन अन्न प्रदान करो। विद्वेषपूर्ण शत्रुओं से बल-द्वारा जो पशु-सम्बन्धी दध्यादि अन्न तुम आहरण करते हो, वह प्रचुर परिमाण में हमें प्रदान करो।

वद्मासूनोसहसोनोविहायाअग्नेतोकंतनयंवाजिनोदाः।
विश्वाभिर्गीर्भिरभिपूर्तिमश्यांमदेमशतहिमाःसुवीराः ॥६॥१५॥

वद्मा । सूनो इति । सहसः । नः । विऽहायाः । अग्ने । तोकम् । तनयम् । वाजि । नः । दाः । विश्वाभिः । गीःऽभिः । अभि । पूर्तिम् । अश्याम् । मदेम । शतऽहिमाः । सुऽवीराः ॥ ६ ॥ १५ ॥

हेसहसःसूनोग्ने विहायाः महन्नामैतद् महांस्त्वं नोस्माकं वद्मा वदिता हितोपदेष्टाभव अपिच तोकं पुत्रं तनयं तत्पुत्रंच वाजि अन्नयुक्तं नोस्मभ्यं दाः देहि अहंस्तोता विश्वाभिः सर्वाभिर्गीर्भिस्त्वद्विषयाभिः स्तुतिभिः पूर्तिं कामानांपूर्तिं अभ्यश्यां अभिप्राप्नुयां अन्यद्गतम् ॥६॥

६. हे बलपुत्र अग्नि, तुम बलशाली हो। तुम हम लोगों के उपदेष्टा होओ। हम लोगों को अन्न के साथ पुत्र और पौत्र प्रदान करो। हम स्तुतियों के द्वारा पूर्ण मनोरथ हों। हम लोग शोभन पुत्र-पौत्रों के साथ शत हेमन्त अर्थात् सौ वर्ष पर्यन्त सुख भोग करें।

॥ इतिचतुर्थस्यपञ्चमेपञ्चदशोवर्गः ॥ १५ ॥

अग्नायइतिषळृचंचतुर्दशंसूक्तं भरद्वाजस्यार्षमाग्नेयं षष्ठीशक्करी शिष्टाःपञ्चानुष्टुभः तथाचानुक्रान्तं—अग्नायआनुष्टुभंशक्कर्यंतमिति। प्रातरनुवाके आग्नेयेक्रतौ आश्विनशस्त्रेचेदंसूक्तं सूत्रितंच—अग्नायोहोताजनिष्टेति। अत्रेश्चतुर्वीराख्ये चतुरात्रेऽहीनेतृतीयेहनीदंसूक्तं आज्यशस्त्रं सूत्रितंच—अग्नायोमर्त्योदुवइतितृतीयइति।

तत्रप्रथमा—

अग्नायोमर्त्योदुवोधियंजुजोषधीतिभिः।
भसन्नुषप्रपूर्व्यइषंवुरीतावसे॥ १॥

अग्ना । यः । मर्त्यः । दुवः । धियम् । जुजोष । धीतिऽभिः । भसंत् । नु । सः । प्र । पूर्व्यः । इषम् । वुरीत । अवसे ॥ १ ॥

योमर्त्योमनुष्यः अग्ना अग्नौ अग्निविषयं दुवः परिचरणं धियंकर्मंच यज्ञादिलक्षणं धीतिभिः स्तुतिभिःसार्धं जुजोष सेवतेआचरति समर्त्यः पूर्व्यः पूर्वेषांमुख्यःसन् नु क्षिप्रं प्रभसत् प्रभासेत प्रकृष्टप्रकाशवान्भवेत् अवसे पुत्रादीनांरक्षणार्थं इषमन्नंच वुरीत वृणीत संभजेत शत्रुसकाशाल्लभेतेत्यर्थः ॥ १ ॥

१. जो मनुष्य स्तोत्र के साथ अग्नि की परिचर्या करता है और यागादि कार्य करता है, वह मनुष्यों के मध्य में शीघ्र ही प्रधान होकर प्रकाशमान होता है। अपने पुत्र आदि की रक्षा के लिए वह शत्रुओं के समीप से प्रचुर अन्न प्राप्त करता है।

अग्निरिद्धिप्रचेताअग्निर्वेधस्तमऋषिः ।
अग्निंहोतारमीळतेयज्ञेषुमनुषोविशः ॥ २ ॥

अग्निः । इत् । हि । प्रऽचेताः । अग्निः । वेधःऽतमः । ऋषिः ।
अग्निम् । होतारम् । ईळते । यज्ञेषु । मनुषः । विशः ॥ २ ॥

अग्निरित् अग्निरिव प्रचेताः प्रकृष्टज्ञानवान् नान्यःकश्चित् हियस्मादेवंतस्मात् वेधस्तमोविधातृतमोतिशयेनहविर्वहनादीनांकर्मणांकर्ता ऋषिः सर्वस्यद्रष्टाचभवति मनुषोमनुष्यस्य यजमानस्य विशः प्रजाऋत्विग्लक्षणाहोतारंदेवानामाह्वातारं तादृशमग्निं यज्ञेषु यागेषुईळते स्तवन्ति ॥ २ ॥

२. एकमात्र अग्नि ही प्रकृष्ट ज्ञान से युक्त है और दूसरा कोई भी नहीं है। वे यज्ञ-कार्य के अतिशय निर्वाहक और सर्वद्रष्टा हैं। यजमानों के पुत्र आदि (ऋत्विग्गण) यज्ञ में अग्नि को देवों के आह्वानकर्त्ता कहकर स्तवन करते हैं।

अथतृतीया—

नानाह्य१ग्नेवसेस्पर्धन्तेरायोअर्यः ।
तूर्वन्तोदस्युमायवोव्रतैःसीक्षन्तोअव्रतम् ॥ ३ ॥

नाना । हि । अग्ने । अवसे । स्पर्धन्ते । रायः । अर्यः । तूर्वन्तः ।
दस्युम् । आयवः । व्रतैः । सीक्षन्तः । अव्रतम् ॥ ३ ॥

हेअग्ने अर्यः अरेःशत्रोः रायोधनानि अवसे त्वव स्तोतृणांरक्षणार्थं नाना शत्रुसकाशात्पृथक्भूताः स्पर्धन्ते अहमेवपालयान्यहमेवपालयानीतिस्पर्धांकुर्वन्ति आयवोमनुष्यास्ते चस्तोतारः दस्युमुपक्षपयितारंशत्रुं तूर्वन्तोहिंसन्तः व्रतैस्त्वद्देवत्यैर्यागैः अव्रतंव्रतविरोधिनंचपुरुषं सीक्षन्तः सोढुमभिभवितुमिच्छन्तोभवन्ति ॥ ३॥

३. हे अग्नि, शत्रुओं का धन उनके निकट से पृथक् होकर तुम्हारे स्तोताओं की रक्षा करने के लिए परस्पर स्पर्द्धा करते हैं। शत्रुविजयी तुम्हारे स्तोता लोग तुम्हारा यज्ञ करके व्रतविरोधियों को पराभूत करने की इच्छा करते हैं। अथचतुर्थी—

अ॒ग्निर॒प्सामृ॑ती॒षहं॑वी॒रं॑द॑दाति॒सत्प॑तिम् ।
यस्य॒त्रस॑न्ति॒शव॑सः॒स॒ञ्चक्षि॒शत्र॑वोभि॒या ॥ ४ ॥

अ॒ग्निः । अ॒प्साम् । ऋ॒ति॒ऽसह॑म् । वी॒रम् । द॒दाति॑ । सत्ऽप॑तिम् ।
यस्य॑ । त्रस॑न्ति । शव॑सः । स॒म्ऽचक्षि॑ । शत्र॑वः । भि॒या ॥ ४ ॥

अयमग्निः वीरंपुत्रं ददाति स्तोतृभ्यः प्रयच्छति कीदृशंपुत्रंअप्सां अपामाप्तव्यानांकर्मणां सनितारं संभक्तारं ऋतीषहं ऋतीनां अरातीनां सोढारं अभिभवितारं सत्पतिं सतांकर्मणांपालयितारं यस्यवीरस्य संचक्षि संदर्शनेसति शवसोबलात् भियाभीत्या शत्रवस्त्रसन्ति उद्विजन्ते तंवीरमित्यन्वयः ॥ ४ ॥

४. अग्नि स्तोताओं को सुन्दर कार्य करनेवाला, शत्रुविजयी और साधुजनोचित कार्यों का पालन करनेवाला पुत्र प्रदान करते हैं, जिसे देखकर ही शत्रुगण उसके बल से भीत होकर कम्पित होने लगते हैं।

अ॒ग्निर्हि॑वि॒द्मना॑नि॒दो॑दे॒वोमर्त॑मुरु॒ष्यति॑ ।
स॒हावा॒यस्यावृ॑तोर॒यिर्वाजे॒ष्ववृ॑तः ॥ ५ ॥

अ॒ग्निः । हि । वि॒द्मना॑ । नि॒दः । दे॒वः । मर्त॑ः । उ॒रु॒ष्यति॑ । स॒हऽवा॑ ।
यस्य॑ । अवृ॑तः । र॒यिः । वाजे॑षु । अवृ॑तः ॥ ५ ॥

सहावा सहोबलंतद्वान् देवोदानादिगुणयुक्तोग्निः विद्मना ज्ञानेनयुक्तःसन् तं मर्तं मनुष्यं यजमानं निदोनिन्दकात् उरुष्यति रक्षति हीतिपूरकः यस्यमर्तस्य रयिः हविर्लक्षणंधनं अवृतः रक्षःप्रभृतिभिरनाच्छादितं वाजेषु यज्ञेषु अवृतः अन्यैर्यजमानैरसंभक्तं तं हविष्मन्तं यजमानं उरुष्यतीत्यन्वयः ॥ ५ ॥

५. जिस मनुष्य का हव्यरूप धन यज्ञ में राक्षसों के द्वारा अनावृत (निर्विघ्न) होता है और अन्यान्य यजमानों के द्वारा असंभक्त होता है, बलशाली और ज्ञानसम्पन्न अग्निदेव उस यजमान की निन्दकों से रक्षा करते हैं।

अच्छा॑नोमित्रमहोदेवदे॒वानग्ने॒वोचः॑सुम॒तिंरोद॑स्योः । वी॒हिस्व॒स्तिंसु॑क्षि॒तिंदि॒वोनॄन्द्वि॒षोअंहां॑सिदु॒रि॒तात॑रेम॒तात॑रेम॒तवाव॑सात॑रेम ॥ ६ ॥ १६ ॥

अच्छ॑ । नः॒ । मि॒त्र॒ऽम॒हः॒ । दे॒व॒ । दे॒वान् । अग्ने॑ । वोचः॑ । सु॒ऽम॒तिम् ।
रोद॑स्योः । वी॒हि । स्व॒स्तिम् । सु॒ऽक्षि॒तिम् । दि॒वः । नॄन् । द्वि॒षः ।
अंहां॑सि । दुः॒ऽइ॒ता । त॒रे॒म॒ । ता । त॒रे॒म॒ । तव॑ । अव॑सा । त॒रे॒म॒ ॥ ६ ॥ १६

व्याख्यातेयं अक्षरार्थस्तु अनुकूलदीप्ते दानादिगुणयुक्ताग्ने· द्यावापृथिव्योरभिगतरुचं अस्मदीयांसुष्टुतिं यष्टव्यान्देवान्प्रति वोचः प्रब्रूहि 'स्तुतेनैनंनूनस्मांश्च सुनिवासं अविनाशंगमय वयंच त्वत्प्रसादाद्द्वेष्टृन् पापानि तत्फलानि दुर्गमनानिचातिक्रामेम व्यवहितानि जन्मान्तरकृतानिच तान्यतिक्रामेम त्वदीयेनरक्षणेन अत्यन्तमतिक्रामेमेति'॥ ६ ॥

६. हे अनुकूल दीप्तिवाले, दानादिगुणयुक्त और द्यावा-पृथिवी में वर्तमान अग्निदेव, तुम देवों के निकट हम लोगों की स्तुति का उच्चारण करो। हम स्तोताओं को शोभन निवास-युक्त सुख में ले जाओ। हम लोग शत्रुओं, पापों और कष्टों का अतिक्रमण करें। हम लोग जन्मान्तर में कृत पापों से मुक्त हों। हे अग्नि, हम तुम्हारी रक्षा के द्वारा शत्रुओं से उद्धार पावें।

॥ इतिचतुर्थस्यपंचमेषोडशोवर्गः ॥ १६ ॥

इममूषुवइत्येकोनविंशत्यृचंपञ्चदशंसूक्तं आंगिरसस्यवीतहव्यस्यभरद्वाजस्यवार्षं आग्नेयं आदौनवजगत्यः तृतीयाषष्ठ्यौतुशक्कर्यतिशक्कर्यौ पञ्चदशीशक्करी सप्तदश्यनुष्टुप् अष्टादशी· बृहती दशम्याद्याःपञ्च षोळश्येकोनविंशीचेतिसप्तत्रिष्टुभः तथाचानुक्रान्तं—इममूष्वेकोनावीतहव्यऋषिर्वा जागतंप्राग्दशम्याः तृतीयापञ्चदश्यौशक्कर्यौषष्ठ्यतिशक्कर्यनुष्टुब्बृहत्याउपान्त्येइति प्रातरनुवाकेआग्नेयेक्रतौआश्विनशस्त्रेचआदितोनवर्चः सूत्रितंच—इममूषुवोअतिथिमुषर्बुधमिति। दशरात्रेपञ्चमेहनिनवर्चमाज्यशस्त्रंच सूत्रितंच—इममूषुवोअतिथिमुषर्बुधमितिनवाज्यमिति।

तत्रप्रथमा—

इ॒ममू॒षु वो॒ अति॑थिमुष॒र्बुधं॒ विश्वा॑सां वि॒शां पति॑मृञ्जसे गि॒रा।
वेतीद्दि॒वो ज॒नुषा॒ कच्चि॒दा शुचि॒र्ज्योक्चि॑दत्ति॒ गर्भो॒ यदच्यु॑तम्॥ १॥

इ॒मम्। ऊँ इति॑। सु। वः॒। अति॑थिम्। उ॒षः॒ऽबुध॑म्। विश्वा॑साम्। वि॒शाम्। पति॑म्। ऋ॒ञ्ज॒से। गि॒रा। वेति॑। इत्। दि॒वः। ज॒नुषा॑। कत्। चि॒त्। आ। शुचिः॑। ज्योक्। चि॒त्। अ॒त्ति॒। गर्भः॑। यत्। अच्यु॑तम्॥ १॥

हेवीतहव्यऋषे भरद्वाजवा वः त्वं विभक्तिवचनयोर्व्यत्ययः इममु इममेवाग्निं गिरा स्तुत्या सुऋंजसे सुष्ठुप्रसाधय ऋंजतिःप्रसाधनकर्मेतियास्कः। कीदृशमतिथिं सततंगन्तारं यद्वा अतिथिवत्पूज्यं उषर्बुधं उषसिप्रबुद्धं विश्वासां सर्वासां विशां प्रजानां पतिं पालयितारं जनुषा जन्मना स्वतएवशुचिः शुद्धोनिर्मलोवाग्निः कच्चित् कदाचित् कस्मिंश्चित् यागकाले दिवो- द्युलोकात् आवेति आगच्छति तदानींप्रसाधयेत्यन्वयः एवंप्रसाधितोग्निः गर्भः अरण्योर्मध्ये गर्भवद्वर्तमानः यद्वा द्यावापृथिव्योर्गर्भभूतःसन् यद्धविः अच्युतं च्युतिरहितं नित्यं अग्निहोत्रादिसाधनभूतं पयःप्रभृतिकं तद्ज्योक्चित् चिरकालं अत्ति भक्षयति ॥ १ ॥

---

१ नि० ६. २१.।

१. हे वीतहव्य अथवा भरद्वाज ऋषि, तुम उषाकाल में प्रबुद्ध, लोक-रक्षक और जन्म से ही अथवा स्वभाव से ही शुद्ध या निर्मल अतिथिरूप अग्नि को प्रसन्न करो। अग्नि सब समय में द्युलोक से अवतीर्ण होते हैं और अक्षय हव्य भक्षण करते हैं।

मित्रंनयंसुधितंभृगवोदधुर्वनस्पतावीड्यमूर्ध्वशोचिषम् ।
सत्वंसुप्रीतोवीतहव्येअद्भुतप्रशस्तिभिर्महयसेदिवेदिवे ॥ २ ॥

मित्रम् । न । यम् । सुऽधितम् । भृगवः । दधुः । वनस्पतौ । ईड्यम् ।
ऊर्ध्वऽशोचिषम् । सः । त्वम् । सुऽप्रीतः । वीतऽहव्ये । अद्भुत ।
प्रशस्तिऽभिः । महयसे । दिवेऽदिवे ॥ २ ॥

वनस्पतावरण्यां सुधितं सुष्ठुनिहितं ईड्यं स्तुत्यं ऊर्ध्वशोचिषं उच्छ्रिततेजस्कं यमग्निंत्वां मित्रंनमित्रमिव सखिभूतमिव भृगवोमहर्षयः दधुरादधुः गृहेस्थापितवन्तः हेअद्भुत महन्नग्ने सतादृशस्त्वं वीतहव्ये एतत्संज्ञेऋषौ सुप्रीतः सुष्ठुप्रीयमाणोभव यतः दिवेदिवे प्रतिदिनं प्रशस्तिभिः प्रकृष्टैःस्तोत्रैः महयसे पूज्यसे भरद्वाजऋषिश्चेत् वीतहव्येदत्तहविष्के भरद्वाजइतियोजनीयम् ॥ २ ॥

२. हे अद्भुत अग्नि, तुम अरणि के मध्य में निहित, स्तुतिवाही और ऊर्ध्व ज्वालावाले हो। तुम्हें भृगु लोग (महर्षि) गृह में सखा की तरह स्थापित करते हैं। वीतहव्य अथवा भरद्वाज प्रतिदिन उत्कृष्ट स्तोत्र-द्वारा तुम्हारी पूजा करते हैं। तुम उनके प्रति प्रसन्न होओ।

अथतृतीया—

सत्वंदक्षस्यावृकोवृधोभूरर्यःपरस्यान्तरस्यतरुषः । रायःसूनोसहसो
मर्त्येष्वाछर्दिर्यच्छवीतहव्यायसप्रथोभरद्वाजायसप्रथः ॥ ३ ॥

सः । त्वम् । दक्षस्य । अवृकः । वृधः । भूः । अर्यः । परस्य ।
अन्तरस्य । तरुषः । रायः । सूनो इति । सहसः । मर्त्येषु । आ ।
छर्दिः । यच्छ । वीतऽहव्याय । सऽप्रथः । भरत्ऽवाजाय । सऽप्रथः ॥ ३ ॥

हेअग्ने सतादृशः अवृकोबाधकरहितस्त्वं दक्षस्यानुष्ठानसमर्थस्य वृधोवर्धयिता भूः भवसि तथा परस्य विप्रकृष्टस्य अर्यः अरेः शत्रोः अन्तरस्यान्तिकतरस्यसन्निकृष्टस्यशत्रोः तरुषः तरिताभवसि अतःकारणात् हेसहसःसूनो सप्रथः सर्वतःपृथुस्त्वं मर्त्येषु मनुष्येषुमध्ये भरद्वाजायसंभृतहविर्लक्षणान्नाय वीतहव्याय वीतं गमितंहव्यंहविर्येनतादृशाय भरद्वाजायेतिवायोज्यं रायोधनानि छर्दिर्गृहमायच्छ प्रयच्छ सप्रथइतिपुनरुक्तिरादरार्था ॥ ३ ॥

३. हे अग्नि, जो यागादि के अनुष्ठान में निपुण हैं, उसे तुम समृद्ध बनाते हो और दूरस्थ तथा समीपस्थ शत्रु से उसकी रक्षा करते हो। हे महान् अग्नि, तुम मनुष्यों के मध्य में भरद्वाज को धन और गृह प्रदान करो।

द्युतानंवोअतिथिंस्वर्णरमग्निंहोतारंमनुषःस्वध्वरम्।
विप्रंनद्युक्षवचसंसुवृक्तिभिर्हव्यवाहमरतिंदेवमृंजसे ॥ ४ ॥

द्युतानम्। वः। अतिथिम्। स्वःऽनरम्। अग्निम्। होतारम्।
मनुषः। सुऽअध्वरम्। विप्रम्। न। द्युक्षऽवचसम्। सुवृक्तिऽभिः।
हव्यऽवाहम्। अरतिम्। देवम्। ऋंजसे ॥ ४ ॥

हेवीतहव्य त्वं सुवृक्तिभिः शोभनाभिःस्तुतिभिः हव्यवाहं हविषांवोढारं देवमग्निं ऋंजसे प्रसाधय कीदृशं द्युतानं दीप्यमानं वोयुष्माकं अतिथिमतिथिवत्पूज्यं स्वर्णरं स्वर्गस्यनेतारं मनुषोमनोःप्रजापतेर्यज्ञे होतारं देवानामाह्वातारं स्वध्वरं शोभनयज्ञं विप्रंन मेधाविनंविपश्चित-मिव द्युक्षवचसं दीप्तेर्निवासभूतंद्युक्षं तादृशवाक्योपेतं अरतिमर्यंस्वामिनं ॥ ४ ॥

४. हे वीतहव्य, तुम शोभन स्तुति-द्वारा हव्यवाहक, दीप्तिमान्, अतिथिवत् पूजनीय; स्वर्गप्रदर्शक मनु के यज्ञ में देवों का आह्वान करनेवाले यज्ञसम्पादक, मेधावी और ओजस्वी वक्ता अग्निदेव को प्रसन्न करो।

अथपञ्चमी—

पावकयायश्चितयन्त्याकृपाक्षामन्रुरुचउषसोनभानुना।
तूर्वन्नयामन्नेतशस्यनूरणआयोघृणेनततृषाणोअजरः॥५॥१७॥

पावकया। यः। चितयन्त्या। कृपा। क्षामन्। रुरुचे। उषसः।
न। भानुना। तूर्वन्। न। यामन्। एतशस्य। नु। रणे। आ। यः।
घृणे। न। ततृषाणः। अजरः ॥ ५ ॥ १७ ॥

योग्निः पावकया शोधयित्र्या चितयन्त्या चेतयन्त्या प्रज्ञापयन्त्या कृपा दीप्त्या क्षामन् भूम्यां रुरुचे दीप्यते उषसोनभानुना यथाउषसः प्रकाशेनभासन्तेतद्वत् अपिच यामन् यामनि सङ्ग्रामे तूर्वन् शत्रून् हिंसनपुरुषइव एतशस्य एतत्संज्ञकस्यऋषेरणे सूर्येणसहसंग्रामे सहायार्थं [illegible] आघृणे आदीप्यते प्रैतशंसूर्येपस्पृधानमितिनिगमोन्तरं। नूनं सर्वेदेवास्तस्य [illegible] मथ्य ततृषाणस्तृषितः प्रभावेनसर्वभक्षणशीलः अजरः जरारहितश्चभवति सं देवमृंजसइतिपूर्वस्यामृचिसंबन्धः ॥ ५ ॥

---

१ ऋ० सं० १.४.२९.।

५. जैसे उषा प्रकाश से शोभित होती है, वैसे ही जो पृथिवी के ऊपर पवित्रताकारक और चेतनाविधायक दीप्ति के द्वारा विराजित होते हैं, जो संग्राम में शत्रुसंहार-कारक वीर के सदृश एतश ऋषि की सहायता करने के लिए शीघ्र प्रदीप्त हुए थे और जो सर्वभक्षणशील तथा क्षयरहित हैं हे वीतहव्य, उन्हें तुम प्रसन्न करो।

॥ इतिचतुर्थस्यपञ्चमेसप्तदशोवर्गः ॥ १७ ॥

अ॒ग्निम॑ग्निंवः स॒मिधा॑दुवस्यतप्रि॒यम्प्रि॑यंवो॒अति॑थिंगृणी॒षणि॑ ।
उप॑वोगी॒र्भिर॒मृत॑विवासतदे॒वोदे॒वेषु॒वन॑ते॒हिवार्य॑दे॒वोदे॒वेषु॒वन॑ते॒हिनो॒दुवः॑॥ ६

अ॒ग्निम्ऽअ॑ग्निम् । व॒ः । स॒म्ऽइधा॑ । दु॒व॒स्य॒त॒ । प्रि॒यम्ऽप्रि॑यम् । व॒ः । अति॑थिम् । गृ॒णी॒षणि॑ । उप॑ । व॒ः । गी॒ःऽभिः॑ । अ॒मृत॑म् । वि॒वा॒स॒त॒ । दे॒वः । दे॒वेषु॑ । वन॑ते । हि । वार्य॑म् । दे॒वः । दे॒वेषु॑ । वन॑ते । हि । न॒ः । दुव॑ः ॥ ६ ॥

हेऽस्मदीयाःस्तोतारोवोयूयं प्रियंप्रियंअत्यंतंप्रियं वोयुष्माकमतिथिं अतिथिवत्पूज्यं गृणी- षणि शब्दनीयं स्तुत्यं अग्निमग्निं अग्निमेव नान्यंदेवमित्यर्थः समिधा समिन्धनेन समिद्भिर्वा दुवस्यत परिचरत यद्वा गृणीषणीतिसप्तम्यन्तं गृणीषणि स्तोत्रे विषयतयावर्तमानं अपिच वोयूयं अमृतममरणं अग्निं गीर्भिःस्तुतिभिः उपेत्य विवासत परिचरत हियस्मात् देवेषुमध्ये देवोदानादिगुणयुक्तोग्निः वार्यं वरणीयं समिदादिकं वनते संभजते हियस्माच्च देवेषुमध्ये देवोग्निः नोस्माकं दुवः परिचरणं वनते संभजते तस्माद्दुवस्यतेत्यन्वयः ॥ ६ ॥

६. हे हमारे स्तोताओ, अत्यन्त प्रिय और अतिथि की तरह पूजनीय अग्नि का इंधन-द्वारा तुम लोग निरन्तर पूजन करो। देवों के मध्य में दानादिगुणसम्पन्न अग्नि इंधन ग्रहण करते हैं और हम लोगों का पूजन ग्रहण करते हैं; इसलिए अविनश्वर अग्नि के सम्मुख होकर स्तोत्र-द्वारा उनकी पूजा करो।

दशमेहन्याग्निमारुतेसमिद्धमितितृचोजातवेदस्यनिविद्धानार्थः सूत्रितंच—समिद्धमग्निं- समिधागिरागृणइतितृचश्चेति ।

स॒मि॑द्धम॒ग्निंस॒मिधा॑गि॒रागृ॑णेशु॒चिंपा॑व॒कंपु॒रोअ॑ध्व॒रेध्रु॒वम् ।
वि॒प्रंहो॒तारं॑पु॒रु॒वार॑म॒द्रुहं॑क॒विंसु॒म्नैरी॑महेजा॒तवे॑दसम् ॥ ७ ॥

सम्ऽइ॑द्धम् । अ॒ग्निम् । स॒म्ऽइधा॑ । गि॒रा । गृ॒णे । शु॒चिम् । पा॒व॒कम् । पु॒रः । अ॒ध्व॒रे । ध्रु॒वम् । वि॒प्रम् । हो॒तार॑म् । पु॒रु॒ऽवार॑म् । अ॒द्रुह॑म् । क॒विम् । सु॒म्नैः । ई॒म॒हे॒ । जा॒तऽवे॑दसम् ॥ ७ ॥

समिद्धं सम्यग्दीप्तमग्निं समिधा सामिंधनहेतुभूतया गिरा स्तुत्या गृणे स्तौमि यद्वा स- मिधा समिद्भिर्दारुभिः समिद्धं सम्यगिद्धं अपिच शुचिं स्वयंशुद्धं पावकं सर्वेषांशोधकं ध्रुवं निश्चलं तमग्निं अध्वरे यज्ञे पुरस्करोमीतिशेषः तथाविप्रं मेधाविनं होतारं देवानामाह्वातारं पु- रुवारं बहुभिर्वरणीयं अद्रुहं अद्रोग्धारंसर्वेषामनुकूलं कविं क्रान्तदर्शिनं जातवेदसं जातानां

वेदितारमग्निं सुम्नैः सुखकरैःस्तोत्रैः ईमहे संभजामहे यद्वा द्वितीयार्थेतृतीया सुम्नानि धनानि ईमहे याचामहे ॥ ७ ॥

७. हम समिध से प्रदीप्त अग्नि को, स्तुति-द्वारा, प्रसन्न करते हैं। स्वतः शुद्ध, पवित्रता-विधायक और निश्चल अग्नि को हम यज्ञ में स्थापित करते हैं। ज्ञान-सम्पन्न देवों को बुलानेवाले, सबके द्वारा वरणीय, सदाशयसम्पन्न, सर्वदर्शी और सर्व-भूतज्ञ अग्नि का हम सुखकर स्तोत्र से सम्भजन करते हैं अथवा अग्नि के निकट धन के लिए प्रार्थना करते हैं।

त्वांदूतमग्नेअमृतंयुगेयुगेहव्यवाहंदधिरेपायुमीड्यम् ।
देवासश्चमर्तासश्चजागृविंविभुंविश्पतिंनमसानिषेदिरे ॥ ८ ॥

त्वाम् । दूतम् । अग्ने । अमृतम् । युगेऽयुगे । हव्यऽवाहम् । दधिरे । पायुम् । ईड्यम् । देवासः । च । मर्तासः । च । जागृविम् । विऽभुम् । विश्पतिम् । नमसा । नि । सेदिरे ॥ ८ ॥

हेअग्ने त्वां देवासोदेवाश्च मर्तासोमनुष्याश्च दूतं दधिरे विदधिरेकृतवन्तः कीदृशंत्वां अमृतममरणं युगेयुगे कालेकाले तत्तद्यागानुष्ठानसमये हव्यवाहं हव्यानांहविषांवोढारं पायुं पालयितारमीड्यंस्तुत्यं अपिच ते उभयविधाः जागृविं जागरणशीलं विभुं व्याप्तं विश्पतिं विशांप्रजानांपालयितारं तमग्निं नमसानमस्कारेण हविर्लक्षणान्नेनवा निषेदिरे उपसेदिरे ॥ ८ ॥

८. हे अग्नि, देवता और मनुष्य तुमको दूत बनाते हैं। तुम अमरणशील, प्रत्येक समय में हव्य वहन करनेवाले, पालक और स्तवनीय हो। वे दोनों (वीतहव्य और भरद्वाज) जागरणशील, व्याप्त और प्रजाओं के पालक अग्नि को, नमस्कार-द्वारा अथवा हव्य-द्वारा, स्थापित करते हैं।

विभूषन्नग्नउभयाँअनुव्रतादूतोदेवानांरजसीसमीयसे ।
यत्तेधीतिंसुमतिमावृणीमहेऽधस्मानस्त्रिवरूथःशिवोभव ॥ ९ ॥

विऽभूषन् । अग्ने । उभयान् । अनु । व्रता । दूतः । देवानाम् । रजसी इति । सम् । ईयसे । यत् । ते । धीतिम् । सुऽमतिम् । आऽवृणीमहे । अध । स्म । नः । त्रिऽवरूथः । शिवः । भव ॥ ९ ॥

हेअग्ने उभयाननुभयविधान् देवान् मनुष्यांश्च विभूषन् विशेषेणभूषयन् अलंकुर्वन् त्वां अनुव्रता व्रतान्यनु व्रतेषु कर्मसु यागेषु देवानांदूतःसन् रजसी द्यावापृथिव्यौ समीयसे संचरसि देवानानेतुंद्युलोकंगच्छसि हवींषिचनेतुमिमंलोकं किंच यद्यस्मात्तेतुभ्यं त्वदर्थं धीतिं कर्म सुमतिं शोभनांस्तुतिंच आवृणीमहे वयंसंभजामहे अध अतःकारणात् त्रिवरूथस्त्रिस्थानस्त्वं नोस्माकं शिवःसुखकरोभव स्मेत्येतत्पादपूरणम् ॥ ९ ॥

९. हे अग्नि, तुम देवों और मनुष्यों को विशेष प्रकार से अलंकृत करके और यज्ञ में देवों का दूत हो करके द्यावा-पृथिवी में सञ्चरण करते हो। हम लोग शोभन स्तुति-द्वारा और यज्ञ-द्वारा तुम्हारा सम्भजन करते हैं; अतएव तुम त्रिभुवनवर्त्ती होकर हमारे लिए सुख-विधान करो।

प्रातरनुवाकाश्विनशस्त्रयोराग्नेयेक्रतौत्रैष्टुभेछन्दसि तंसुप्रतीकमित्याद्याः षळृचः सूत्रितंच—तंसुप्रतीकमितिषळिति। तत्रप्रथमासूक्तेदशमी—

तंसुप्रतीकंसुदृशंस्वञ्चमविद्वांसोविदुष्टरंसपेम।
सयंक्षद्विश्वावयुनानिविद्वान्प्रहव्यमग्निरमृतेषुवोचत्॥१०॥१८॥

तम्। सुऽप्रतीकम्। सुऽदृशम्। सुऽअञ्चम्। अविद्वांसः। विदुःऽतरम्। सपेम। सः। यक्षत्। विश्वा। वयुनानि। विद्वान्। प्र। हव्यम्। अग्निः। अमृतेषु। वोचत्॥ १० ॥ १८ ॥

अविद्वांसोवैदुष्यरहिताअल्पमतयोवयं विदुष्टरं विद्वत्तरं सर्वज्ञंतमग्निं सपेम परिचरेम कीदृशं सुप्रतीकं शोभनांगं सुदृशं शोभनद्रष्टारं स्वंचं सुष्ठुअञ्चन्तं गच्छन्तं किंच सतादृशोग्निः यक्षत् देवान्यजतु विश्वा सर्वाणि वयुनानि ज्ञाननामैतत् इहतुज्ञातव्येवर्तते ज्ञातव्यान्यर्थजातानि विद्वान् जानन्नग्निः अमृतेषु मरणरहितेषुदेवेषु हव्यमस्मदीयं हविः प्रवोचत् प्रब्रवीतु युष्मदर्थं हविःकल्पितं तदर्थंयूयमागच्छतेत्येवंकथयत्॥ १० ॥

१०. हम अल्पबुद्धिवाले सर्वज्ञ, शोभनाङ्ग, मनोज्ञमूर्ति और गमनशील अग्निदेव का परिचरण करते हैं। ज्ञातव्य वस्तुओं को जाननेवाले अग्नि देवों का यजन करें और देवों के मध्य में हमारे हव्य को प्रचारित करें। ॥ इतिचतुर्थस्यपञ्चमेऽष्टादशोवर्गः ॥ १८॥

अथैकादशी—

तमग्नेपास्युततंपिपर्षियस्तआनट्कवयेशूरधीतिम्।
यज्ञस्यवानिशितिंवोदितिंवातमित्पृणक्षिशवसोतराया॥ ११ ॥

तम्। अग्ने। पासि। उत। तम्। पिपर्षि। यः। ते। आनट्। कवये। शूर। धीतिम्। यज्ञस्य। वा। निःशितिम्। वा। उत्ऽइतिम्। वा। तम्। इत्। पृणक्षि। शवसा। उत। राया॥ ११ ॥

हेअग्ने तंपुरुषं पासि रक्षसि उतापिच तंपिपर्षि कामैःपूरयसि यःपुरुषः हेशूर शौर्यवन्नग्ने कवये क्रान्तदर्शनाय ते तुभ्यं त्वदर्थं धीतिंकर्म स्तुतिंवा आनट् प्राप्नोति यद्वा क्रियाग्रहणंकर्तव्यमिति कर्मणःसंप्रदानत्वाच्चतुर्थी कविंत्वांधीतिंआनट् प्रापयतितंपासीत्यन्वयः अपिच

यज्ञस्य यागस्य वा तत्साधनभूतस्यहविषोवा निशितिं वा निशितिःसंस्कारःतंवाउदितिं उद्ग-मनंवा आनट् प्रापयति तमित् तमेव शवसा बलेन पृणक्षि पूरयसि उतापिच राया धनेन पू-रयसि ॥ ११ ॥

११. हे शौर्यसम्पन्न अग्नि, तुम दूरदर्शी हो। जो पुरुष तुम्हारा स्तवन करता है, तुम उसकी रक्षा करते हो और उसका मनोरथ पूर्ण करते हो। जो यज्ञसम्पादन करता है और जो हव्य उत्क्षेप (प्रदान) करता है, उसको तुम बल और धन से पूर्ण करते हो।

त्वमग्नेवनुष्यतोनिपाहित्वमुंनःसहसावन्नवद्यात् ।
संत्वाध्वस्मन्वदभ्येतुपाथःसंरयिःस्पृहयाय्यःसहस्री ॥ १२ ॥

त्वम् । अग्ने । वनुष्यतः । नि । पाहि । त्वम् । ऊँ इति । नः ।
सहसाऽवन् । अवद्यात् । सम् । त्वा । ध्वस्मन्ऽवत् । अभि ।
एतु । पाथः । सम् । रयिः । स्पृहयाय्यः । सहस्री ॥ १२ ॥

हेअग्ने त्वं वनुष्यतोहिंसकाच्छत्रोः निपाहि नितरामस्मान्रक्ष हेसहसावन्बलवन्नग्ने त्व-मु त्वमेव नोस्मानवद्यात् पापात् निपाहि त्वात्वां ध्वस्मन्वत् ध्वंसनवत् ध्वस्तदोषं पाथोहविर्ल-क्षणं अस्माभिर्दत्तमन्नं समभ्येतु सम्यगभिगच्छतु स्पृहयाय्यः स्पृहणीयः सहस्री सहस्रसं-ख्यायुक्तः रयिः त्वयादत्तंधनं सम्यगभिगच्छतु ॥ १२ ॥

१२. हे अग्नि, तुम शत्रुओं से हम लोगों की रक्षा करो। हे बल-सम्पन्न अग्नि, तुम हम लोगों का पाप से परित्राण करो। तुम्हारे समीप हम लोगों-द्वारा प्रदत्त निर्दोष हव्य उपस्थित हो। तुम्हारे द्वारा प्रदत्त सहस्र प्रकार का धन हमारे समीप उपस्थित हो।

व्यूळ्हेदशरात्रेपंचमेहन्याग्निमारुतेअग्निर्होतेतितृचोजातवेदसनिविद्धानीयः सूत्रितंच—अ-ग्निर्होतागृहपतिःसराजेतितिस्रइति। पत्नीसंयाजेषुग्रहपतेराद्यानुवाक्या सूत्रितंच—अग्निर्होतागृ-हपतिःसराजाहव्यवाळग्निरजरःपितानइतिपत्नीसंयाजाइति । आश्विनशस्त्रस्यैषैवप्रतिपत् सूत्रि-तंच—अग्निर्होतागृहपतिःसराजेति । प्रतिपदेकपातिनीपच्छइति ।

सैषासूक्तेत्रयोदशी—

अग्निर्होतागृहपतिःसराजाविश्वावेदजनिमाजातवेदाः ।
देवानामुतयोमर्त्यानांयजिष्ठःसप्रयजतामृतावा ॥ १३ ॥

अग्निः । होता । गृहऽपतिः । सः । राजा । विश्वा । वेद ।
जनिम । जातऽवेदाः । देवानाम् । उत । यः । मर्त्यानाम् ।
यजिष्ठः । सः । प्र । यजताम् । ऋतऽवा ॥ १३ ॥

होता देवानामाह्वाता राजा राजमानः सोऽग्निः गृहपतिः गृहाणांपतिरधिपतिर्भवति तथा विश्वा विश्वानिसर्वाणि जनिम जन्मानि जन्मवन्ति भूतजातानि जातवेदाः जातप्रज्ञःसन् वेद वेत्तिजानाति योऽग्निःदेवानामिन्द्रादीनां उतापिच मर्त्यानांमनुष्याणांचमध्ये यजिष्ठः अतिशयेनयष्टाभवति ऋतावा ऋतंसत्यंयज्ञोवातद्वान्सोऽग्निः प्रयजतां प्रकर्षेणदेवान्यजतु ॥ १३ ॥

१३. देवों को बुलानेवाले, दीप्तिमान् अग्नि गृह के अधिपति और सर्वज्ञ हैं; अतएव वे सम्पूर्ण प्राणियों को जानते हैं। जो अग्नि देवों और मनुष्यों के मध्य में अतिशय यज्ञकारी हैं, वे सत्य-सम्पन्न अग्नि उत्तम रूप से यज्ञ करें।

अग्नेयदद्येतिदर्शपूर्णमासयोःस्विष्टकृतोयाज्या सूत्रितंच—अग्नेयदद्यविशोअध्वरस्यहोतरित्यनवानंयजतीति ।

अग्ने॒यद॒द्यवि॒शोअ॑ध्वरस्यहोत॒ःपाव॑कशोचे॒वेष्ट्वंहियज्वा॑ ।
ऋ॒तायं॑जासिमहि॒नावियद्भूर्ह॒व्यावं॑हयविष्ठ॒यातेअ॒द्य ॥ १४ ॥

अग्ने॑ । यत् । अ॒द्य । वि॒शः । अ॒ध्व॒रस्य॑ । हो॒त॒रिति॑ । पाव॑कऽशोचे ।
वेः । त्वम् । हि । यज्वा॑ । ऋ॒ता । य॒जा॒सि॒ । म॒हि॒ना । वि ।
यत् । भूः । ह॒व्या । व॒ह॒ । य॒वि॒ष्ठ॒ । या । ते॒ । अ॒द्य ॥ १४ ॥

हेअध्वरस्यहोतः यज्ञस्यनिष्पादक पावकशोचे शोधकदीप्ते एवंभूतहेअग्ने अद्यास्मिन्काले विशोमनुष्यस्य यजमानस्य यत्कर्तव्यं तत् वेः कामयस्व हियस्मात् त्वंयज्वा देवानांयष्टाभवसि तस्मात् त्वंऋता ऋते यज्ञे यजासि देवान्यज अपिच महिना महिम्ना स्वमाहात्म्येन यद्यस्मात् विभूःविभवसि व्याप्तोभवसि अतःकारणात् हेयविष्ठ युवतमाग्ने तेतुभ्यं त्वदर्थं अद्येदानीं या यानि हव्यानि जुहुमः तानि हव्या हव्यानि हवींषि वह स्वकीयांस्विष्टकृदाख्यांतनुं प्रापय ॥ १४ ॥

१४. हे यज्ञनिष्पादक और शोधक दीप्तिवाले अग्नि, इस समय जो यजमान का कर्त्तव्य है, उसकी तुम कामना करो। तुम देवों का यजन करनेवाले हो, अतएव तुम यज्ञ में देवों का यजन करो। हे युवतम अग्नि, तुम अपने माहात्म्य से सर्वव्यापी हो। आज तुम्हारे लिए जो हव्य प्रदान करते हैं, उसे तुम स्वीकार करो।

अ॒भिप्रयां॑सि॒सुधि॑ताति॒हिख्यो॒नित्वा॑दधीत॒रोद॑सी॒यज॑ध्यै ।
अवा॑नोमघव॒न्वाज॑साता॒वग्ने॒विश्वा॑निदु॒रि॒तात॑रेम॒ताता॑रेम॒तवाव॑सातरेम ॥ १५ ॥ १९ ॥

अ॒भि । प्रयां॑सि । सुऽधि॑तानि । हि । ख्यः॑ । नि । त्वा॒ । द॒धी॒त॒ ।
रोद॑सी॒ इति॑ । यज॑ध्यै । अव॑ । नः॒ । म॒घ॒ऽव॒न् । वाज॑ऽसातौ । अग्ने॑ ।
विश्वा॑नि । दुः॒ऽइ॒ता । त॒रे॒म॒ । ता । त॒रे॒म॒ । तव॑ । अव॑सा । त॒रे॒म॒ ॥ १५ ॥ १९ ॥

हेअग्ने सुधितानि सुनिहितानि वेद्यामासादितानि प्रयांस्यन्नानि हविर्लक्षाणान्यभिख्यः अभिपश्यसि हिपूरकः तादृशंत्वां रोदसी द्यावापृथिव्यौ एतदुपलक्षितान्सर्वान्देवान् यजध्यै यष्टुंनिदधीत अयंयजमानोनिहितवान् हेमघवन्नग्ने नोस्मान्वाजसातौ संग्रामे अन्नस्यसंभजनेवा निमित्तभूते अव रक्ष वयंच विश्वानि सर्वाणि दुरिता दुरितानि दुःखानि तरेमातिक्रमेम अन्यद्गतम् ॥ १५ ॥

१५. हे अग्नि, वेदी के ऊपर यथाविधि स्थापित हव्य को देखो। यजमान ने तुम्हें द्यावा-पृथिवी में यज्ञ के लिए स्थापित किया है। हे ऐश्वर्य-सम्पन्न अग्नि, तुम संग्राम में हम लोगों की रक्षा करो, जिससे हम समस्त पाप से परित्राण पावें।

॥ इतिचतुर्थस्यपञ्चमेएकोनविंशोवर्गः ॥ १९ ॥

अग्निप्रणयनेअग्नेविश्वेभिरित्येषानुवक्तव्या सूत्रितंच—अग्नेविश्वेभिःस्वनीकदेवैरित्यर्धर्चआरमेदिति । सैषासूक्तेषोडशी—

अग्ने॒विश्वे॑भिःस्वनीकदे॒वैरूर्णा॑वन्तंप्रथ॒मःसी॑द॒योनि॑म् ।
कु॒ला॒यिनं॑घृ॒तव॑न्तंसवि॒त्रेय॒ज्ञंन॑य॒यज॑मानायसा॒धु ॥ १६ ॥

अग्ने॑ । विश्वे॑भिः । सु॒ऽअ॒नी॒क॒ । दे॒वैः । ऊर्णा॑ऽवन्तम् । प्र॒थ॒मः । सी॒द॒ । योनि॑म् । कु॒ला॒यिन॑म् । घृ॒तऽव॑न्तम् । स॒वि॒त्रे । य॒ज्ञम् । न॒य॒ । यज॑मानाय । सा॒धु ॥ १६ ॥

हेस्वनीक सुज्वालाग्ने विश्वेभिः विश्वैःसर्वैर्देवैःसह ऊर्णावन्तं ऊर्णास्तुकावन्तं योनिं उत्तरवेदिलक्षणंस्थानं प्रथमः सर्वेषुदेवेषुमुख्यस्त्वं सीद उपविश कीदृशंयोनिं कुलायिनं कुलायोनीडं तत्सदृशं गुग्गुल्वादिसंभरणोपतं तथाचश्रूयते—कुलायमिवह्येतद्यज्ञेक्रियतेयत्पैतुदारवाः परिधयोगुग्गुलूर्णास्तुकाःसुगन्धितेजनानीति[1] । घृतवन्तं व्याघारणाज्ययुक्तं एवमुत्तरवेद्यांनिषण्णस्त्वं सवित्रे हविषांप्रेरयित्रेयजमानाय षष्ठ्यर्थेचतुर्थ्येषा ईदृशस्ययजमानस्य यज्ञं साधु आर्जवेननय देवान्प्रापय ॥ १६ ॥

१६. हे शोभन शिखासम्पन्न अग्नि, तुम समस्त देवों के सहित सर्वाग्रगण्य होकर ऊर्णा (कम्बल) युक्त, कुलाय सदृश और घृतसंयुक्त उत्तर वेदी पर अवस्थान करो। हव्यदाता यजमान के यज्ञ को समुचित रूप से देवों के निकट ले जाओ।

इ॒मम॑ुत्यम॑थर्व॒वद॒ग्निंम॑न्थन्ति॒वे॒धसः॑ ।
यम॑ङ्कूयन्त॒मान॑य॒न्नमू॑रंश्या॒व्या॑भ्यः ॥ १७ ॥

इ॒मम् । ऊँ इति॑ । त्यम् । अ॒थ॒र्व॒ऽवत् । अ॒ग्निम् । म॒न्थ॒न्ति॒ । वे॒धसः॑ । यम् । अ॒ङ्कु॒ऽयन्त॑म् । आ । अन॑यन् । अमू॑रम् । श्या॒व्या॑भ्यः ॥ १७ ॥

[1] ऐ० ब्रा० १.२८.।

वेधसःकर्मणांविधातारऋत्विजः इमंदृश्यमानं त्यं तंपूर्वोक्तगुणमग्निं अथर्ववत् यथाअथर्वाख्यऋषिःपुराअमथ्नात् तथामन्थन्ति मथ्नन्ति अरण्योःसकाशातजनयन्ति अंकूयन्तं कुत्सितमंचनंगमनंअंकु तदात्मनइच्छन्तं देवेभ्योनिर्गत्य इतस्ततःपलायमानं अमूरं अमूढं यमग्निं श्याव्याभ्यः श्यावीतिरात्रिनाम तत्रभवास्तमसःसंहतयःश्याव्याः ताभ्यःसकाशादानयन् आगमयन् तंमंथन्तीत्यन्वयः ॥ १७ ॥

१७. कर्म का विधान करनेवाले ऋत्विक् लोग अथर्वा ऋषि की तरह अग्नि का मन्थन करते थे। देवता से निर्गत होकर इतस्ततः पलायमान और बुद्धिमान् अग्नि को रात्रि के अन्धकारों से आनयन करते थे।

जनिष्वादेववीतयेसर्वतातास्वस्तये।
आदेवान्वक्ष्यमृताँऋतावृधोयज्ञंदेवेषुपिस्पृशः ॥ १८ ॥

जनिष्व । देवऽवीतये । सर्वऽताता । स्वस्तये । आ । देवान् ।
वक्षि । अमृतान् । ऋतऽवृधः । यज्ञम् । देवेषु । पिस्पृशः ॥ १८ ॥

हेअग्ने सर्वताता सर्वैस्तायमानेयज्ञे मथ्यमानस्त्वं जनिष्व प्रादुर्भव किमर्थं देववीतये देवकामाययजमानाय षष्ठ्यर्थेचतुर्थ्येषा ईदृशस्ययजमानस्य स्वस्तये अविनाशार्थं जनित्वा च अमृतान् मरणरहितान् ऋतावृधोयज्ञस्यवर्धयितॄन् देवानावक्षि आवह तदनन्तरं तेषुदेवेषु अस्मदीयंयज्ञंपिस्पृशः स्पर्शय प्रापयेत्यर्थः ॥ १८ ॥

१८. हे अग्नि, देवाभिलाषी यजमान के कल्याण को अविनश्वर करने के लिए तुम यज्ञ में मथ्यमान होकर प्रादुर्भूत होओ। यज्ञवर्द्धक और अमरणशील देवों का आनयन करो। अनन्तर, देवों के निकट हमारे यज्ञ को पहुंचा दो।

अथैकोनविंशी—

वयमुत्वागृहपतेजनानामग्नेअकर्मसमिधाबृहन्तम्।
अस्थूरिनोगार्हपत्यानिसन्तुतिग्मेनंनस्तेजसासंशिशाधि ॥१९॥२०॥

वयम् । ऊँ इति । त्वा । गृहऽपते । जनानाम् । अग्ने ।
अकर्म । सम्ऽइधा । बृहन्तम् । अस्थूरि । नः । गार्हऽपत्यानि ।
सन्तु । तिग्मेन । नः । तेजसा । सम् । शिशाधि ॥ १९ ॥ २० ॥

हेगृहपते यज्ञानांपालकाग्ने जनानां प्राणिनांमध्ये वयमु वयमेव त्वा त्वांसमिधा समिन्धनेन बृहन्तं महान्तं अकर्म कृतवन्तःस्मः अतः कारणात् नोस्माकं गार्हपत्यानिगृहपतित्वानि अस्थूरि अस्थूरिणि एकाश्वयुक्तःशकटःस्थूरिरित्युच्यते तद्विपरीतोबहुभिरश्वैरुपेतःशकटोऽ-

४ २४

स्थूरिः तेनचसंपूर्णतालक्ष्यते अस्थूरीणि पुत्रपशुधनादिभिःसंपूर्णानिभवन्तु अपिच नोस्मान् तिग्मेन तीक्ष्णेनतेजसा संशिशाधि सम्यङ्निश्य सम्यक्तीक्ष्णीकुरु संयोजयेत्यर्थः ॥ १९ ॥

१९. हे यज्ञपालक अग्नि, प्राणियों के मध्य में हम लोग ही तुम्हें इंधन-द्वारा महान् बनाते हैं। अतएव हम लोगों के गार्हपत्य अग्नि-पुत्र, पशु और धनादि द्वारा सम्पूर्णता लाभ करें। तीक्ष्ण तेज-द्वारा तुम हम लोगों को योजित करो।

॥ इतिचतुर्थस्यपञ्चमेविंशोवर्गः ॥ २० ॥

॥ इतिषष्ठेमण्डलेप्रथमोनुवाकः ॥ १ ॥

द्वितीयेनुवाके अष्टसूक्तानि तत्रत्वमग्नेयज्ञानामितिअष्टाचत्वारिंशदृचंप्रथमंसूक्तं भरद्वाजस्यार्षमाग्नेयं आद्याषष्ठीचवर्धमानागायत्रीषट्कसप्तकाष्टकाःसावर्धमानेत्युक्तलक्षणोपेतत्वात् सप्तविंश्यनुष्टुप् आतेअग्नेअग्निंदेवासइत्येतेऋचावनुष्टुभौ तयोःपूर्वावीतीयोदेवमितित्रिष्टुप् शिष्टाद्वाचत्वारिंशदृचोगायत्र्यः तथाचानुक्रम्यते—त्वमग्नेष्टाचत्वारिंशद्गायत्रं वर्धमानाद्याषष्ठीचसप्तविंश्यनुष्टुप्त्रिष्टुपपूर्वेचांत्येइति प्रातरनुवाकाश्विनशस्त्रयोराग्नेयेक्रतौगायत्रेछन्दसीदंसूक्तमुच्यते तत्रान्त्यास्तिस्रऋचउद्धर्तव्याः सूत्र्यतेहि—त्वमग्नेयज्ञानामितितिस्रउत्तमामुद्धरेदिति। विश्वजितिआग्निमारुते बृहत्सामयद्यग्निष्टोमसामस्यात् तदानीं आद्याःषळृचःस्तोत्रियानुरूपार्थाः सूत्रितं हि—त्वमग्नेयज्ञानामितिस्तोत्रियानुरूपाविति।

तत्रप्रथमा—

त्वम॑ग्ने य॒ज्ञानां॒ होता॒ विश्वे॑षां हि॒तः। दे॒वेभि॒र्मानु॑षे॒ जने॑ ॥ १ ॥

त्वम्। अ॒ग्ने॒। य॒ज्ञाना॑म्। होता॑। विश्वे॑षाम्। हि॒तः।
दे॒वेभिः॑। मानु॑षे। जने॑ ॥ १ ॥

हेअग्ने त्वं विश्वेषां सर्वेषां सप्तसंस्थारूपेणभिन्नानांयज्ञानांहोता होमनिष्पादकोसि यद्वा यज्ञानांसंबन्धीदेवानामाह्वाताभवसि कुतइत्यतआह यस्मात्त्वं मानुषे मनोःसंबन्धिनिमनुष्ये जने यजमाने देवेभिर्देवैः हितः होतृत्वेननिहितोसि तस्मादित्यर्थः ॥ १ ॥

१. हे अग्नि, तुम सम्पूर्ण यज्ञ के होमनिष्पादक हो अथवा देवों के आह्वानकर्त्ता हो। तुम मनु-सम्बन्धी मनुष्य के यज्ञ में देवों-द्वारा होतृकार्य में नियुक्त हो।

अथद्वितीया—

स नो॑ म॒न्द्राभि॑रध्व॒रे जि॒ह्वाभि॑र्यजा म॒हः। आ दे॒वान्व॑क्षि॒ यक्षि॑ च ॥ २ ॥

सः। नः॒। म॒न्द्राभिः॑। अ॒ध्व॒रे। जि॒ह्वाभिः॑। य॒ज॒। म॒हः।
आ। दे॒वान्। व॒क्षि॒। यक्षि॑। च॒ ॥ २ ॥

हेअग्ने सत्वं नोस्माकमध्वरेयज्ञे मन्द्राभिर्मदकरीभिः स्तुत्याभिर्वा जिह्वाभिः ज्वालाभिः महोमहतोदेवान्यज हविर्भिस्तर्पय कथंतदिति उच्यते देवान्यष्टव्यानिन्द्रादीन् आवक्षि आवह ततोयक्षिच यजच हवींषितेभ्योदेहीत्यर्थः ॥ २ ॥

२. हे अग्नि, तुम हम लोगों के यज्ञ में मदकारक ज्वाला-द्वारा महान् देवों का यजन करो। इन्द्रादि देवों का आनयन करो और उन्हें हव्य प्रदान करो।

पाथिकृत्यामग्नेः पथिकृतोनुवाक्या वेत्थेत्येषा सूत्रितंच—वेत्थाहिवेधोअध्वनआदेवानामपि पन्थामगन्मेति ।

वेत्था॒हि वे॑धो॒ अध्व॑नः प॒थश्च॑ दे॒वाञ्ज॑सा । अग्ने॑ य॒ज्ञेषु॑ सुक्रतो ॥३॥

वेत्थ॑ । हि । वे॒ध॒ः । अध्व॑नः । प॒थः । च॒ । दे॒व॒ । अञ्ज॑सा ।
अग्ने॑ । य॒ज्ञेषु॑ । सु॒क्र॒तो॒ इति॑ सुऽक्रतो ॥ ३ ॥

हेवेधः विधातः सुक्रतो शोभनकर्मन् देव दानादिगुणयुक्ताग्ने त्वं यज्ञेषु दर्शपूर्णमासादियागेषु अध्वनोमहामार्गान् पथश्चक्षुद्रमार्गांश्च अंजसा जवेन वेत्थ जानासि हियस्मादेवं तस्मात् कारणात् यज्ञमार्गाद्भ्रष्टंयजमानं पुनस्तंमार्गंप्रापयेत्यर्थः ॥ ३ ॥

३. हे विधाता, हे शोभन कर्म करनेवाले दानादि गुणविशिष्ट अग्नि, तुम दर्शपूर्णमासादि यज्ञ में महान् और क्षुद्र मार्गों को वेग-द्वारा जानते हो; अतः यज्ञमार्ग से भ्रष्ट यजमान को पुनः सन्मार्गाधिरूढ़ करो।

त्वामी॑ळे॒ अध॑ द्वि॒ता भ॑र॒तो वा॒जिभि॑ः शु॒नम् । ईजे॑ य॒ज्ञेषु॑ य॒ज्ञिय॑म् ॥४॥

त्वाम् । ई॒ळे॒ । अध॑ । द्वि॒ता । भ॒र॒तः । वा॒जिऽभि॑ः । शु॒नम् ।
ईजे॑ । य॒ज्ञेषु॑ । य॒ज्ञिय॑म् ॥ ४ ॥

हेअग्ने त्वांभरतः दौष्यंतिः एतत्संज्ञोराजा वाजिभिः वाजोहविर्लक्षणमन्नंतद्वद्भिर्ऋत्विग्भिःसह द्विता द्विविधं इष्टप्राप्त्यनिष्टपरिहाररूपेणद्विधाभिन्नं शुनं सुखमुद्दिश्य ईळे स्तुतवान् स्तुत्वाच यज्ञियं यज्ञार्हं त्वां यज्ञेषु तृतीयार्थेसप्तमी यज्ञैः ईजे इष्टवान् तस्मैत्वमुभयविधंसुखंप्रादाइत्यर्थः ॥ ४ ॥

४. हे अग्नि, दुष्यन्ततनय भरत हव्यदाता ऋत्विकों के साथ सुख के उद्देश्य से तुम्हारा स्तवन करते हैं। तुमसे इष्ट की प्राप्ति और अनिष्ट का निवारण होता है। स्तवन के उपरान्त तुम्हारा यजन करते हैं। तुम यागयोग्य हो।

अथपञ्चमी—

त्वमि॒मा वार्या॑ पु॒रु दिवो॑दासाय सुन्व॒ते । भ॒रद्वा॑जाय दा॒शुषे॑ ॥५॥२१॥

त्वम् । इमा । वार्या । पुरु । दिवःऽदासाय । सुन्वते ।
भरत्ऽवाजाय । दाशुषे ॥ ५ ॥ २१ ॥

हेअग्ने त्वं इमा इमानि दृश्यमानानि पुरु पुरूणि बहूनि वार्या वार्याणिवरणीयानिसं-भजनीयानिधनानि दिवोदासाय सुन्वते लुप्तोपममेतत् यथासोमाभिषवंकुर्वतेदिवोदासाख्यायराज्ञे प्रादाः तथा दाशुषे हवींषिदत्तवतेभरद्वाजायऋषये देहीतिशेषः ॥ ५ ॥

५. हे अग्नि, सोमाभिषवकारी राजा दिवोदास को तुमने जिस प्रकार से बहुविध रमणीय धन प्रदान किया था, उसी प्रकार से हव्य प्रदान करनेवाले भरद्वाज ऋषि को बहुविध रमणीय धन प्रदान करो।

॥ इतिचतुर्थस्यपञ्चमेएकविंशोवर्गः ॥ २१ ॥

अथषष्ठी—

त्वंदूतोअमर्त्यआवहादैव्यंजनम् । शृण्वन्विप्रस्यसुष्टुतिम् ॥ ६ ॥

त्वम् । दूतः । अमर्त्यः । आ । वह । दैव्यम् । जनम् ।
शृण्वन् । विप्रस्य । सुऽस्तुतिम् ॥ ६ ॥

अमर्त्योमरणधर्मस्त्वं दूतोभूत्वा दैव्यं देवसंबन्धिनंजनमावह अस्मद्यज्ञे आनय किंकुर्वन् विप्रस्य मेधाविनोभरद्वाजस्य सुष्टुतिं शोभनांस्तुतिंशृण्वन् ॥ ६ ॥

६. हे अग्नि, तुम अमरणशील और दूत हो। मेधावी भरद्वाज ऋषि की शोभन स्तुति श्रवण कर तुम हमारे यज्ञ में देवों को ले आओ।

त्वामग्नेस्वाध्योऽमर्तासोदेववीतये । यज्ञेषुदेवमीळते ॥ ७ ॥

त्वाम् । अग्ने । सुऽआध्यः । मर्तासः । देवऽवीतये ।
यज्ञेषु । देवम् । ईळते ॥ ७ ॥

हेअग्ने देवं द्योतमानं त्वां स्वाध्यः शोभनाध्यानाः मर्तासोमनुष्याः देववीतये देवानांत-र्पणार्थं यज्ञेषु ईळते स्तुवंति याचन्तेवा ॥ ७ ॥

७. हे द्युतिमान अग्नि, सुन्दर चिन्ता करनेवाले मनुष्य देवों को तृप्त करने के लिए यज्ञ में तुम्हारा स्तवन करते हैं अथवा तुमसे याचना करते हैं।

तवप्रयंक्षिसंदृशमुतक्रतुंसुदानवः । विश्वेजुषन्तकामिनः ॥ ८ ॥

तव । प्र । यक्षि । सम्ऽदृशम् । उत । क्रतुम् । सुऽदानवः ।
विश्वे । जुषन्त । कामिनः ॥ ८ ॥

हेअग्ने तव संदृशं सम्यक्दर्शनीयं यद्वा सम्यग्द्रष्टारं सर्वस्यभासकंतेजः प्रयक्षि प्रयक्षे प्रकर्षेणपूजयामि उतापिच सुदानवः सुदानोः शोभनदानस्य तव क्रतुं कर्म प्रज्ञानंवा पूजयामि न केवलमहमेव किंतु अन्येविश्वेसर्वेपि यजमानाः कामिनः त्वदनुग्रहात्तैस्तैःकामैरुपेताःसन्तः जुषन्त त्वदीयंसंदृशंक्रतुंचसेवन्ते ॥ ८ ॥

८. हे अग्नि, हम तुम्हारे दर्शनीय तेज का पूजन भली भाँति से करते हूं और तुम्हारे शोभन दानशील कार्य का भी पूजन करते हैं। अकेले हम ही नहीं; किन्तु दूसरे यजमान लोग भी तुम्हारे अनुग्रह से सफलाभिलाष होकर तुम्हारे यज्ञ या कार्य का सेवन करते हैं।

त्वंहोता॒मनु॑र्हि॑तो॒वह्नि॑रा॒साविदु॒ष्ट॑रः। अग्ने॒यक्षि॑दि॒वोविश॑ः॥ ९ ॥

त्वम्। होता॑। मनु॑ऽहितः। वह्नि॑ः। आ॒सा। वि॒दुःऽत॑रः।

अग्ने॑। यक्षि॑। दि॒वः। विश॑ः॥ ९ ॥

हेअग्ने त्वंहोता होतृत्वेन मनुर्हितः मनुनाआहितोसि आसा आस्येन आस्यभूतयाज्वालया वह्निर्हविषांवोढा विदुष्टरः अतिशयेनविद्वान् अतःकारणात् त्वं दिवः द्युलोकसंबन्धिनीः विशः दैवीःप्रजाः यक्षि यज ॥ ९ ॥

९. हे अग्नि, होतृकार्य में मनु ने तुम्हें नियुक्त किया है। तुम ज्वालारूप मुख-द्वारा हव्य वहन करनेवाले और अतिशय विद्वान् हो। तुम द्युलोक-सम्वन्धिनी प्रजाओं (देवों) का यजन करो।

दर्शपूर्णमासयोःसामिधेनीषु अग्नआयाहीत्याद्यास्तिस्रः सूत्रितंच—अग्नआयाहिवीतयेगृणानईळेन्योनमस्यस्तिरइति। गार्हपत्याहवनीययोर्मिथःसंसर्गे अग्नयेवीतयेष्टाकपालःपुरोडाशः तस्यअग्नआयाहीत्येषानुवाक्या सूत्रितंच—अग्नआयाहिवीतयेयोअग्निंदेववीतयइति।

सैषासूक्तेदशमी—

अग्न॒आया॑हिवी॒तये॑गृणा॒नोह॒व्यदा॑तये। निहोता॑सत्सिब॒र्हिषि॑॥ १० ॥ २२

अग्ने॑। आ। या॒हि॒। वी॒तये॑। गृ॒णा॒नः। ह॒व्यऽदा॑तये। नि।

होता॑। स॒त्सि॒। ब॒र्हिषि॑॥ १० ॥ २२ ॥

हेअग्ने त्वमायाहि आगच्छ किमर्थं वीतये हविषांभक्षणार्थं किंच हव्यदातये हव्यानि हवींषिदेवेभ्योदातुं गृणानः स्तूयमानस्त्वं बर्हिषि आस्तीर्णेदर्भे होतासन् निषत्सि निषीद उपविश ॥ १० ॥

१०. हे अग्नि, तुम हव्य भक्षण करने के लिए आगमन करो और देवों के समीप हव्य वहन करने के लिए, स्तुति-भाजन होकर होता रूप से कुश के ऊपर उपवेशन करो।

॥ इतिचतुर्थस्यपञ्चमेद्वाविंशोवर्गः ॥ २२ ॥

तंत्वा॑स॒मिद्भि॑रङ्गिरोघृ॒तेन॑वर्धयामसि। बृ॒हच्छो॑चायविष्ठ्य॥ ११ ॥

तम् । त्वा । सुमित्ऽभिः । अङ्गिरः । घृतेन । वर्धयामसि ।
बृहत् । शोच । यविष्ठ्य ॥ ११ ॥

हेअङ्गिरः अङ्गनादिगुणयुक्त अङ्गाररूपवा अङ्गिरसःपुत्रवाग्ने तं पूर्वोक्तगुणं त्वा त्वां समिद्भिः समिन्धनहेतुभिर्दारुभिः घृतेनाज्येनच वर्धयामसि वर्धयामः अतोहेयविष्ठ्य युवतमाग्ने बृहत् महत् अत्यन्तं शोच दीप्यस्व ॥ ११ ॥

११. हे अङ्गार रूप अग्नि, हम लोग काष्ठ और आज्य-द्वारा तुम्हें प्रवर्द्धित करते हैं; इसलिए हे युवतम अग्नि, तुम अत्यन्त दीप्तिमान् होओ। अथद्वादशी—

सनःपृथुश्रवाय्यमच्छादेवविवाससि । बृहदग्नेसुवीर्यम् ॥ १२ ॥

सः । नः । पृथु । श्रवाय्यम् । अच्छ । देव । विवाससि ।
बृहत् । अग्ने । सुऽवीर्यम् ॥ १२ ॥

हेदेव द्योतमानाग्ने सपूर्वोक्तगुणस्त्वं पृथु विस्तीर्णं श्रवाय्यं श्रवणीयं प्रशस्यं बृहन्महत् सुवीर्यं शोभनवीर्योपेतं धनं नोस्मानच्छविवाससि अभिगमय अत्रवाजसनेयकं—अच्छादेवविवाससीति तन्नोगमयेत्येवैतदाहेति ॥ १२ ॥

१२. हे द्युतिमान् अग्नि, तुम हम लोगों को विस्तीर्ण, प्रशंसनीय और महान् धन प्रदान करो।

अग्निमंथनेत्वामग्नेपुष्करादधीत्याद्यास्तिस्रऋचोनूच्याः सूत्रितंच—त्वामग्नेपुष्करादधीतितिस्रणामर्धर्चेशिष्ट्वारमेदिति ।

त्वामग्नेपुष्करादध्यथर्वानिरमन्थत । मूर्ध्नोविश्वस्यवाघतः ॥१३॥

त्वाम् । अग्ने । पुष्करात् । अधि । अथर्वा । निः । अमन्थत ।
मूर्ध्नः । विश्वस्य । वाघतः ॥ १३ ॥

हेअग्ने अथर्वा एतत्संज्ञऋषिः त्वां पुष्करादधि पुष्करपर्णेनिरमन्थत अरण्योः सकाशादजनयत् कीदृशात् पुष्करात् मूर्ध्नः मूर्धवद्धारकात् विश्वस्य सर्वस्यजगतः वाघतोवाहकात् पुष्करपर्णेहिप्रजापतिःभूमिमप्रथयत् तत्पुष्करपर्णेप्रथयदितिश्रुतेः। भूमिश्चसर्वजगतआधारभूतेति पुष्करपर्णस्यसर्वजगद्धारकत्वं अत्र पुष्करशब्देनपुष्करपर्णमभिधीयते इत्येतच्चतैत्तिरीयकेविस्पष्टमाम्नातं—त्वामग्नेपुष्करादधीत्याह पुष्करपर्णेह्येनमुपश्रुतमविन्ददिति[1] ॥ १३ ॥

१३. हे अग्नि, मस्तक की भाँति संसार के धारक पुष्करपत्र के ऊपर अरणिद्वय के मध्य से तुम्हें अथर्वा ऋषि ने उत्पन्न किया है।

---

१ तै० ब्रा० १. १. ३. ।

अथचतुर्दशी—

तमुत्वादध्यङ्ङृषिःपुत्रईधेअथर्वणः । वृत्रहणंपुरंदरम् ॥१४॥

तम् । ऊँ इति । त्वा । दध्यङ् । ऋषिः । पुत्रः । ईधे । अथर्वणः । वृत्रऽहनम् । पुरम्ऽदरम् ॥ १४ ॥

हेअग्ने यउक्तगुणः तमु तमेव त्वामथर्वणःपुत्रोदध्यङ्एतत्संज्ञऋषिः ईधेदीपितवान् कीदृशं वृत्रहणं आवरकाणांशत्रूणांहन्तारं पुरंदरं असुरपुराणांदारयितारम् ॥ १४ ॥

१४. हे अग्नि, अथर्वा के पुत्र दध्यङ ऋषि ने तुम्हें समुज्ज्वलित किया था। तुम आवरणकारी शत्रुओं के हननकर्त्ता और असुरों के नगर विनाशक हो।

तमुत्वापाथ्योवृषासमीधेदस्युहन्तमम्।धनंजयंरणेरणे॥१५॥२३॥

तम् । ऊँ इति । त्वा । पाथ्यः । वृषा । सम् । ईधे । दस्युहन्ऽतमम् । धनम्ऽजयम् । रणेऽरणे ॥ १५ ॥ २३ ॥

पाथ्योवृषानामकश्चिदृषिः तमु तमेव त्वा त्वां हेअग्ने समीधे समैंध समदीपयत् कीदृशं दस्युहन्तमं अतिशयेन दस्यूनां उपक्षपयितॄणां शत्रूणां हन्तारं रणेरणे युद्धेयुद्धे धनंजयं धनानांजेतारम् ॥ १५ ॥

१५. हे अग्नि, पाथ्य वृषा नाम के किसी ऋषि ने तुम्हें समुद्दीपित किया है। तुम दस्युहन्ता और प्रत्येक युद्ध में धन के जेता हो।

॥ इतिचतुर्थस्यपञ्चमेत्रयोविंशोवर्गः ॥ २३ ॥

उक्थ्येक्रतौ तृतीयसवने मैत्रावरुणस्य एह्यूष्वित्यादिकौतृचौस्तोत्रियानुरूपौ आभिप्लविकेषुउक्थ्येषुतु एतौवैकल्पिकौस्तोत्रियानुरूपौ आभिप्लविकेषुउक्थ्येषु सूत्रितंच—एह्यूषुब्रवाणितआग्निरगामिंभारतइति पौनराधेयिक्यामिष्टौ उत्तराज्यभागस्य एह्यूष्वित्यनुवाक्या सूत्रितंच—एह्यूषुब्रवाणितइत्याग्नेयावाज्यभागाविति ।

सैषासूक्तेषोडशी—

एह्यूषुब्रवाणितेग्नइत्थेतरागिरः ॥ एभिर्वर्धासइन्दुभिः ॥ १६ ॥

आ । इहि । ऊँ इति । सु । ब्रवाणि । ते । अग्ने । इत्था । इतराः । गिरः । एभिः । वर्धासे । इन्दुऽभिः ॥ १६ ॥

हेअग्ने एहि आगच्छ ते तुभ्यं त्वदर्थं गिरःस्तुतीः इत्था इत्थमनेनप्रकारेण सु सुष्ठु ब्रवाणीत्याशास्यते ताःस्तुतीः शृणिवत्यर्थः उइत्यैतत्पूरकं इतराः अंसुरैः कृताःस्तुतीः शृणिव-

विशेषः तथा चब्राह्मणं—अग्निरित्थेतरागिरइत्यसुर्याहवाइतरागिरइति । अपिचआगतस्त्वं एभिरेतैः इन्दुभिः सोमैः वर्धसे वर्धस्व ॥ १६ ॥

१६. हे अग्नि, तुम यहाँ आगमन करो; क्योंकि हम तुम्हारे लिए जिस प्रकार का स्तोत्र उच्चारित करते हैं, उसे तुम श्रवण करो। यहाँ आकर तुम इन सोमरसों-द्वारा वर्द्धमान होओ।

यत्रक्वंचतेमनोदक्षंदधसउत्तरम् । तत्रासदःकृणवसे ॥ १७ ॥

यत्र । क्वं । च । ते । मनः । दक्षम् । दधसे । उत्ऽतरम् । तत्र । सदः । कृणवसे ॥ १७ ॥

हेअग्ने ते तव मनः अनुग्रहात्मकमन्तःकरणं यत्र यस्मिन्देशे क्व च कस्मिंश्चिद्यजमानेव-र्तते तत्र तस्मिन्यजमाने उत्तरमुद्धततरं श्रेष्ठं दक्षं बलं बलकरमन्नंवा दधसे धारयसि तथा सदः स्थानंच कृणवसे तस्मिन्यजमानेकरोषि ॥ १७ ॥

१७. हे अग्नि, तुम्हारा अनुग्रहात्मक अन्तःकरण जिस देश में और जिस यजमान में वर्तमान होता है, वह श्रेष्ठ बल और अन्न धारण करता है। तुम उसी यजमान में अपना स्थान बनाते हो।

अथाष्टादशी—

नहितेपूर्तमक्षिपद्भुवन्नेमानांवसो । अथादुवोवनवसे ॥ १८ ॥

नहि । ते । पूर्तम् । अक्षिऽपत् । भुवत् । नेमानाम् । वसो इति । अर्थ । दुर्वः । वनवसे ॥ १८ ॥

हेअग्ने तेत्वदीयं पूर्तं पूरकं तेजः अक्षिपत् अक्ष्णोःपातकं विनाशकं नहिभुवत् नभवतु सर्वदास्माकं दर्शनसामर्थ्यंकरोतु हेनेमानांवसो नेमशब्दःअल्पवाची मनुष्याणांमध्येकतिपयानां यजमानानांवासक अथ अतःकारणात् दुवः अस्माभिर्यजमानैःकृतंपरिचरणं वनवसे संभजस्व ॥ १८ ॥

१८. हे अग्नि, तुम्हारा दीप्तिपुञ्ज नेत्र-विघातक नहीं हो, वह सदा हमें दर्शनसमर्थ बनावे। हे कतिपय यजमानों के गृहप्रदाता, तुम हम यजमानों के द्वारा विहित परिचरण को ग्रहण करो।

आग्निरंगामिभारतोवृत्रहापुरुचेतनः । दिवोदासस्यसत्पतिः ॥ १९ ॥

आ । अग्निः । अगामि । भारतः । वृत्रऽहा । पुरुऽचेतनः । दिवःऽदासस्य । सत्ऽपतिः ॥ १९ ॥

---

१ ऐ० ब्रा० ३. ४९.

अयमग्निः आ अगामि अस्माभिःस्तुतिभिरभ्यगम्यत कीदृशःभारतः हविषांभर्ता दि-वोदासस्य एतत्संज्ञस्यराज्ञः वृत्रहा वृत्राणांशत्रूणांहन्ता पुरुचेतनः पुरूणांबहुनांचेतयिताज्ञाता सर्वज्ञइत्यर्थः सत्पतिः सतांयजमानानांपालयिता ॥ १९ ॥

१९. स्तुतियों के द्वारा हम लोग अग्नि का अभिगमन करते हैं। अग्नि हवि के स्वामी, दिवोदास राजा के शत्रुओं को विनष्ट करनेवाले, सर्वज्ञ और यजमानों के पालक हैं।

सहिविश्वातिपार्थिवारयिंदाशंन्महित्वना ।
वन्वन्नवातोअस्तृतः ॥ २० ॥ २४ ॥

सः । हि । विश्वा । अति । पार्थिवा । रयिम् । दाशत् । महिऽत्वना ।
वन्वन् । अवातः । अस्तृतः ॥ २० ॥ २४ ॥

सहि सखल्वग्निः विश्वा विश्वानिसर्वाणि पार्थिवा पृथिव्यांभवानिभूतजातानि महि-त्वना महत्त्वेनस्वमहिम्ना अतिक्रामन् रयिं धनं दाशत् अस्मभ्यंददातु यद्वा विश्वं सर्वं पार्थिवं पृथिव्यां विद्यमानंधनं अतिशयेन दाशद्ददातु कीदृशोग्निः महित्वना महत्त्वेनतेजसा वन्वन् काष्ठानिशत्रून्वाहिंसन् अवातः अन्यैःशत्रुभिरप्रतिगतः अस्तृतः केनाप्यहिंसितः ॥ २० ॥

२०. अग्नि अपनी महिमा के द्वारा हम लोगों को सम्पूर्ण पार्थिव धन (भूतजात) प्रचुर परिणाम में प्रदान करें। अग्नि अपने तेज से शत्रुओं या काष्ठों के विनाशक, शत्रुओं के द्वारा अजेय और किसी के भी द्वारा अहिंसित हैं।

॥ इतिचतुर्थस्यपञ्चमेचतुर्विंशोवर्गः ॥ २४ ॥

सप्रत्नवन्नवीयसाग्नेद्युम्नेनसंयता । बृहत्ततन्थभानुना ॥ २१ ॥

सः । प्रत्नऽवत् । नवीयसा । अग्ने । द्युम्नेन । सम्ऽयता । बृहत् ।
ततन्थ । भानुना ॥ २१ ॥

हेअग्ने यःपूर्वोक्तगुणविशिष्टः सतादृशस्त्वं प्रत्नवत् प्रत्नेनपुराणेन नवीयसा नवतरेण द्युम्ने-नद्योतमानेन संयता संगच्छता सम्यग्व्याप्नुवता भानुना तेजसा बृहन्महदन्तरिक्षं ततन्थ विस्ता-रयसि ॥ २१ ॥

२१. हे अग्नि, तुम प्राचीनवत् नवीन दीप्ति-द्वारा इस विस्तीर्ण अन्तरिक्ष को विस्तारित करते हो।

अथद्वाविंशी—

प्रवःसखायोअग्नयेस्तोमंयज्ञंचधृष्णुया ।अर्चगायचवेधसे ॥२२॥

प्र। वः। सखायः। अग्नये। स्तोमम्। यज्ञम्। च। धृष्णुऽया।
अर्च। गाय। च। वेधसे॥ २२॥

हेसखायः समानख्यानाः ऋत्विजः वोयूयं धृष्णुया शत्रूणांधर्षकाय वेधसे विधात्रे अग्नये स्तोमं स्तोत्रं गाय गायत तथा यज्ञं यजनसाधनं हविश्च प्रार्च प्रयच्छ॥ २२॥

२२. हे मित्रभूत ऋत्विग्गण, तुम लोग शत्रुहन्ता और विधातास्वरूप अग्नि का स्तोत्र गान करो एवम् यज्ञसाधन हव्य प्रदान करो।

सहियोमानुषायुगासीदद्धोताकविक्रतुः।
दूतश्चहव्यवाहनः॥ २३॥

सः। हि। यः। मानुषा। युगा। सीदत्। होता। कविऽक्रतुः।
दूतः। च। हव्यऽवाहनः॥ २३॥

सहि सखल्वग्निः सीदत् सीदतु अस्मदीययज्ञे बर्हिष्युपविशतु योग्निःहोता देवानामाह्वाता कविक्रतुः क्रान्तप्रज्ञः मानुषायुगा मानुषाणियुगानिमनुष्यसंबन्धिनोयज्ञार्हान्कालविशेषान् येषुयागाअनुष्ठीयन्ते अत्यन्तसंयोगेद्वितीया एतावन्तंकालं देवानांदूतः सहव्यवाहनोहविषांवोढाचभवति॥ २३॥

२३. वह अग्नि हमारे यज्ञ में कुशों के ऊपर उपवेशन करें, जो अग्नि देवों के आह्वाता, अतिशय बुद्धिमान्, मनुष्य-सम्वन्धी यज्ञकाल में देवों के दूत और हव्य के वाहक हैं।

तारा जानाशुचिव्रतादित्यान्मारुतंगणम्।
वसोयक्षीहरोदसी॥ २४॥

ता। राजाना। शुचिऽव्रता। आदित्यान्। मारुतम्। गणम्।
वसो इति। यक्षि। इह। रोदसी इति॥ २४॥

ता तौ प्रसिद्धौ राजाना राजमानौ शुचिव्रता शुचिकर्माणौ मित्रावरुणौ आदित्यानदितेःपुत्रान् धात्रादीन् मारुतंगणं मरुतांसंघंच रोदसी द्यावापृथिव्यौच एतान्देवान् हेवसो वासकाग्ने इहास्मिन्यज्ञे यक्षि यज॥ २४॥

२४. हे गृहप्रदाता अग्नि, तुम इस यज्ञ में प्रसिद्ध, राजमान, सुन्दर कर्म करनेवाले मित्रावरुण, अदितिपुत्र, मरुद्गण और द्यावा-पृथिवी का यजन करो।

अथपञ्चविंशी—

वस्वीतेअग्नेसंदृष्टिरिषयतेमर्त्याय। ऊर्जोनपादमृतस्य॥२५॥२५॥

वस्वीं । ते । अग्ने । सम्ऽदृष्टिः । इषऽयते । मर्त्याय । ऊर्जः ।
नपात् । अमृतस्य ॥ २५ ॥ २५ ॥

हेऊर्जोनपात् बलस्यपुत्राग्ने अमृतस्य मरणरहितस्य ते तव संदृष्टिः दीप्तिः वस्वीवासयित्री प्रशस्येत्यर्थः सा मर्त्याय मनुष्याय यजमानाय इषयते इषमन्नमिच्छति ददातीत्यर्थः ॥२५॥

२५. हे बलपुत्र अग्नि, तुम मरणरहित हो। तुम्हारी प्रशस्त दीप्ति मनुष्य यजमानों को अन्न प्रदान करती है।

॥ इतिचतुर्थस्यपञ्चमेपञ्चविंशोवर्गः ॥ २५ ॥

क्रत्वादाअस्तुश्रेष्ठोद्यत्वावन्वन्त्सुरेक्णाः । मर्तआनाशसुवृक्तिम् ॥ २६ ॥

क्रत्वा । दाः । अस्तु । श्रेष्ठः । अद्य । त्वा । वन्वन् । सुऽरेक्णाः ।
मर्तः । आनाश । सुऽवृक्तिम् ॥ २६ ॥

हेअग्ने अद्येदानीं क्रत्वा कर्मणा परिचरणात्मना त्वा त्वां वन्वन् संभजन् दाः हवींषि दातायजमानः श्रेष्ठोतिशयेनप्रशस्योस्तु सुरेक्णाः शोभनधनश्चास्तु तथा समर्तोमनुष्यः सुवृक्तिं त्वद्विषयां सुष्टुतिंच आनाश व्याप्नोतु तव सर्वदास्तोताभवत्वित्यर्थः ॥ २६ ॥

२६. हे अग्नि, आज हवि देनेवाले यजमान परिचरण कर्म-द्वारा तुम्हारा संभजन करके अतिशय प्रशंसनीय और शोभन धनवाले हों। वह मनुष्य तुम्हारी स्तुति का सर्वदा स्तोता हो।

तेतेअग्नेत्वोताइषयन्तोविश्वमायुः ।
तरन्तोअर्योअरातीर्वन्वन्तोअर्योअरातीः ॥ २७ ॥

ते । ते । अग्ने । त्वाऽऊताः । इषयन्तः । विश्वम् । आयुः । तरन्तः ।
अर्यः । अरातीः । वन्वन्तः । अर्यः । अरातीः ॥ २७ ॥

हेअग्ने ते त्वदीयाः ये त्वांस्तुवन्ति ते स्तोतारः त्वोतास्त्वयाऊतारक्षिताः अतएव इषयन्तः इषमात्मनइच्छन्तःसन्तः विश्वं सर्वं आयुरन्नं लभन्तइतिशेषः आयुरेववाशतवर्षलक्षणमिषयन्तः इच्छन्तः प्राप्नुवन्तीतिशेषः तथाअर्यः अरातीरभिगन्त्रीःअरातीः काश्चिच्छत्रुसेनाः तरन्तः अतिक्रामन्तः अर्योभिगन्त्रीः अरातीः काश्चनशत्रुसेनाः वन्वन्तोहिंसंतश्च भवन्तीतिशेषः ॥ २७ ॥

२७. हे अग्नि, तुम्हारे स्तोता लोग तुम्हारे द्वारा रक्षित होते हैं, वे सब अभिलाषी होकर सम्पूर्ण आयु और अन्न प्राप्त करते हैं। वे आक्रमणकारी शत्रुओं को पराजित और विनष्ट करते हैं।

अथाष्टाविंशी—

अग्निस्तिग्मेनशोचिषायासद्विश्वन्यत्रिणम् ।
अग्निर्नोवनतेरयिम् ॥ २८ ॥

अग्निः । तिग्मेन । शोचिषा । यासत् । विश्वम् । नि । अत्रिणम् ।
अग्निः । नः । वनते । रयिम् ॥ २८ ॥

अयमग्निः तिग्मेन तीक्ष्णेन शोचिषा तेजसा विश्वं सर्वं अत्रिणमत्तारं राक्षसादिकं नियासन्निहन्तु अपिच नोस्मभ्यमग्निः रयिं धनं वनते ददातु ॥ २८ ॥

२८. अग्नि अपने तीक्ष्ण तेज के द्वारा सब वस्तुओं के भोजनकर्त्ता, राक्षसों के संहारकर्त्ता और हम लोगों के धन-प्रदाता हैं।

सुवीरंरयिमाभरजातवेदोविचर्षणे । जहिरक्षांसिसुक्रतो ॥ २९ ॥

सुऽवीरम् । रयिम् । आ । भर । जातऽवेदः । विऽचर्षणे । जहि ।
रक्षांसि । सुक्रतो इति सुऽक्रतो ॥ २९ ॥

हेजातवेदः जातप्रज्ञान जातधनवा विचर्षणे विशेषेणद्रष्टरग्ने सुवीरं शोभनैर्वीरैः पुत्रपौत्रादिभिरुपेतं रयिं धनं आभर आहर तथा हेसुक्रतो सुकर्मन्नग्ने रक्षांसिच जहि विनाशय ॥ २९ ॥

२९. हे जातवेदा अग्नि, तुम शोभन पुत्र-पौत्रादि से युक्त धन आहरण करो। हे शोभन कर्म करनेवाले तुम राक्षसों का विनाश करो।

अथत्रिंशी—

त्वंनःपाह्यंहसोजातवेदोअघायतः । रक्षाणोब्रह्मणस्कवे ॥ ३० ॥ २६ ॥

त्वम् । नः । पाहि । अंहसः । जातऽवेदः । अघऽयतः । रक्ष ।
नः । ब्रह्मणः । कवे ॥ ३० ॥ २६ ॥

हेजातवेदस्त्वन्नोस्मान् अंहसः पापात् पाहि रक्ष तथा हेब्रह्मणस्कवे स्तुतिरूपस्यमंत्रस्यकवे कावयितः शब्दयितरग्ने अग्निर्हिशब्दमुत्पादयति तथाच स्मर्यते—मनःकायाग्निमाहन्तिसप्रेरयतिमारुतं । मारुतस्तूरसिचरन्मन्द्रंजनयतिस्वरमिति । तादृशाग्ने अघायतः अघमनर्थं अस्माकमिच्छतः शत्रोश्च नोस्मान्रक्ष ॥ ३० ॥

३०. हे जातवेदा, तुम पाप से हम लोगों की रक्षा करो। हे स्तुतिरूपमन्त्रों के कर्त्ता अग्नि, तुम विद्वेषकारियों से हमारी रक्षा करो।

॥ इतिचतुर्थस्यपञ्चमेषड्विंशोवर्गः ॥ २६ ॥

अथैकत्रिंशी—

**योनोअग्नेदुरेवआमर्तोवधायदाशति । तस्मान्नःपाह्यंहसः ॥ ३१ ॥**

यः । नः । अग्ने । दुःऽएवः । आ । मर्तः । वधाय । दाशति ।
तस्मात् । नः । पाहि । अंहसः ॥ ३१ ॥

हेअग्ने दुरेवोदुष्टाभिप्रायोयोमर्तोमनुष्यः वधाय स्वस्यायुधाय नोस्मान् आदाशति अभिप्रयच्छति आयुधेनास्मान्हन्तीत्यर्थः तस्मान्मनुष्यात् अंहसः पापाच्च नोस्मान्पाहिरक्ष॥ ३१॥

३१. हे अग्नि, जो मनुष्य दुष्ट अभिप्राय से हम लोगों को मारने के लिए आयुध प्रदर्शित करता है अर्थात् आयुध-द्वारा हमारी हिंसा करता है, उस मनुष्य से और पाप से तुम हमारी रक्षा करो।

**त्वंतंदेवजिह्वयापरिबाधस्वदुष्कृतम् । मर्तोयोनोजिघांसति ॥ ३२ ॥**

त्वम् । तम् । देव । जिह्वया । परि । बाधस्व । दुःऽकृतम् ।
मर्तः । यः । नः । जिघांसति ॥ ३२ ॥

हेदेव द्योतमानाग्ने त्वं तं वक्ष्यमाणं दुष्कृतं दुष्कर्मकारिणंमनुष्यं जिह्वया ज्वालया परिबाधस्व सर्वतोजहि योमर्तोमनुष्यः नोस्मान् जिघांसति हन्तुमिच्छति ॥ ३२ ॥

३२. हे द्युतिमान् अग्नि, जो मनुष्य हम लोगों को मारने की इच्छा करता है, उस दुष्कर्मकारी मनुष्य को तुम ज्वाला-द्वारा परिबाधित करो।

**भरद्वाजायसप्रथःशर्मयच्छसहन्त्य । अग्नेवरेण्यंवसु ॥ ३३ ॥**

भरत्ऽवाजाय । सऽप्रथः । शर्म । यच्छ । सहन्त्य ।
अग्ने । वरेण्यम् । वसु ॥ ३३ ॥

हेसहन्त्य शत्रूणामभिभवितरग्ने भरद्वाजायमह्यमृषये सप्रथः सर्वतःपृथुविस्तीर्णं शर्म सुखं गृहंवा यच्छ देहि तथावरेण्यं वरणीयं वसु धनंच देहि ॥ ३३ ॥

३३. हे शत्रुओं को अभिभूत करनेवाले अग्नि, तुम हमें अर्थात् भरद्वाज ऋषि को विस्तीर्ण (विपुल) सुख अथवा गृह प्रदान करो और वरणीय धन भी दो।

पौर्णमास्यामाग्नेयाज्यभागस्यानुवाक्याअग्निर्वृत्राणीत्येषा सूत्रितंच—अग्निर्वृत्राणिजंघनदितिपूर्वस्याज्यभागस्यानुवाक्येइति । इष्टिपशुसोमेषुच यत्र वृधन्वन्तौ पुष्टिमन्तावित्यादिविशेषविधिर्नदृश्यते तत्र सर्वत्र एषैवप्रथमाज्यभागानुवाक्या उपसद्याग्नेयस्यैषानुवाक्या सायंकालीनस्यतु एषैवयाज्या सूत्रितंच—अग्निर्वृत्राणिजंघनद्यउग्रइवशर्यहेति विपर्यासोयाज्यानुवाक्यानामिति ।

सैषाचतुस्त्रिंशी—

अ॒ग्निर्वृ॒त्राणि॑जङ्घनद्द्रविण॒स्युर्वि॑प॒न्यया॑ । समि॑द्धः शु॒क्र आहु॑तः ॥ ३४ ॥

अ॒ग्निः । वृ॒त्राणि॑ । ज॒ङ्घ॒न॒त् । द्र॒वि॒ण॒स्युः । वि॒प॒न्यया॑ ।
सम्ऽइ॑द्धः । शु॒क्रः । आऽहु॑तः ॥ ३४ ॥

विपन्यया स्तुत्या स्तूयमानः द्रविणस्युर्द्रविणंधनंस्तोतॄणांइच्छन् यद्वा हविर्लक्षणं धनमात्मनइच्छन् अग्निर्वृत्राण्यावरकाणि रक्षःप्रभृतीनि तमांसिवाजंघनत् भृशंहन्तु कीदृशोग्निः समिद्धः सम्यग्दीप्तः अतएव शुक्रः शुक्लवर्णः आहुतः हविर्भिरभिहुतः ॥ ३४ ॥

३४. भली भाँति से दीप्त; अतएव शुक्लवर्ण और हवि-द्वारा आहूत अग्नि स्तुति से स्तूयमान होकर हवि की इच्छा करते हैं। अग्नि शत्रुओं का अथवा अन्धकार का विनाश करें।

गर्भे॑मा॒तुः पि॒तुष्पि॒ता वि॑दि॒द्युता॒नो अ॒क्षरे॑ ।
सीद॑न्नृ॒तस्य॒ योनि॒मा ॥ ३५ ॥ २७ ॥

गर्भे॑ । मा॒तुः । पि॒तुः । पि॒ता । वि॒ऽदि॒द्यु॒ता॒नः । अ॒क्षरे॑ । सीद॑न् ।
ऋ॒तस्य॑ । योनि॑म् । आ ॥ ३५ ॥ २७ ॥

अत्रमातृपितृशब्दाभ्यां भूद्यौश्चाभिधीयेते द्यौः पिता पृथिवीमातेतिश्रुतेः मातुर्भूम्याः गर्भे गर्भस्थाने मध्ये अक्षरेक्षरणरहिते वेद्याख्येस्थानेविदिद्युतानः विशेषेणदीप्यमानः पितुः पिताद्युलोकस्य पालयिता हविषांप्रदानेन एवंभूतोग्निः ऋतस्य यज्ञस्य योनिं उत्तरवेद्याख्यधिष्ण्यं सप्तम्यर्थेद्वितीया आसीदन् उत्तरवेद्यामुपविशन् अग्निर्वृत्राणि जंघनदित्यन्वयः ॥ ३५ ॥

३५. माता पृथिवी की गर्भस्थानीय और क्षरणरहित वेदी पर अग्नि विद्युतिमान् होते हैं और हवि-द्वारा द्युलोक के पालक अग्नि यज्ञ की उत्तर वेदी पर उपविष्ट होकर शत्रुओं का विनाश करते हैं।

॥ इतिचतुर्थस्यपञ्चमेसप्तविंशोवर्गः ॥ २७ ॥

अथषट्त्रिंशी—

ब्रह्म॑प्र॒जाव॒दाभ॑र॒जात॑वेदो॒विच॑र्षणे । अग्ने॒यद्दी॒दय॑द्दि॒वि ॥ ३६ ॥

ब्रह्म॑ । प्र॒जाऽव॑त् । आ । भ॒र॒ । जात॑ऽवेदः । वि॒ऽच॑र्षणे ।
अग्ने॑ । यत् । दी॒दय॑त् । दि॒वि ॥ ३६ ॥

---

१ तै० ब्रा० ३. ७. ५.।

हेजातवेदःजातानांवेदितः विचर्षणे विशेषेणद्रष्टरग्ने प्रजावत् पुत्रपौत्रसहितंब्रह्मान्नमाभर आहर यद्ब्रह्म दिविद्युलोके दीदयद्दीप्यते देवेषुमध्येयत्प्रशस्तमन्नं राजते तदाहरेत्यर्थः॥ ३६ ॥

३६. हे सर्वदर्शी जातवेदा, तुम पुत्र-पौत्रों के साथ उस अन्न का आनयन करो, जो अन्न द्युलोक में देवों के मध्य में प्रशस्त अन्न होकर शोभमान हो।

उपत्वारण्वसंदृशंप्रयस्वन्तःसहस्कृत । अग्नेससृज्महेगिरः ॥ ३७ ॥

उप । त्वा । रण्वऽसन्दृशम् । प्रयस्वन्तः । सहःऽकृत ।
अग्ने । ससृज्महे । गिरः ॥ ३७ ॥

हेसहस्कृत सहसा बलेनोत्पन्नाग्ने प्रयस्वन्तःहविर्लक्षणान्नवन्तोवयं रण्वसन्दृशं रमणीयसंदर्शनंस्तोतव्यसंदर्शनंवात्वा त्वां उप प्रति गिरः स्तुतीः ससृज्महे विसृजामः उच्चारयामइत्यर्थः ॥ ३७ ॥

३७. हे बल-द्वारा उत्पाद्यमान अग्नि, तुम्हारा दर्शन अत्यन्त रमणीय है। हवीरूप अन्न लेकर हम लोग तुम्हारे समीप स्तोत्रों का उच्चारण करते हैं।

अथाष्टत्रिंशी—

उपच्छायामिवघृणेरगन्मशर्मतेवयम् । अग्नेहिरण्यसन्दृशः ॥ ३८ ॥

उप । छायाम्ऽइव । घृणेः । अगन्म । शर्म । ते । वयम् ।
अग्ने । हिरण्यऽसंदृशः ॥ ३८ ॥

हेअग्ने हिरण्यसंदृशः हितरमणीयतेजसः हिरण्यवद्रोचमानतेजसोवा घृणेर्दीप्तस्य ते तव शर्म शरणं आश्रयणं उपागन्म उपगच्छाम तत्रदृष्टान्तः छायामिव यथाघर्मार्ताः संतप्ताः छायामुपगच्छन्ति तद्वत् ॥ ३८ ॥

३८. हे अग्नि, तुम्हारा तेज सुवर्ण की तरह रोचमान है और तुम दीप्तिसम्पन्न हो। हम लोग तुम्हारी शरण में उसी तरह प्राप्त होते हैं, जैसे कि घर्मार्त्त पुरुष छाया का आश्रय ग्रहण करता है।

उपस दिमातःकालस्याग्नेयस्ययउग्रइवेतियाज्या सायंकालीनस्यत्वेषैवानुवाक्या सूत्रितं च—अग्निर्वृत्राणिजंघनद्यउग्रइवशर्यहेति ।

सैषात्रैकोनचत्वारिंशी—

यउग्रइवशर्यहातिग्मशृङ्गोनवंसगः । अग्नेपुरोरुरोजिथ ॥ ३९ ॥

यः । उग्रःऽइव । शर्यऽहा । तिग्मऽशृङ्गः । न । वंसगः ।
अग्ने । पुरः । रुरोजिथ ॥ ३९ ॥

योग्निः उग्रइव उद्गीर्णबलोधन्वीव शर्यहा शर्यैर्बाणैः शत्रूणांहन्ता तिग्मशृंगोनवंसगः तीक्ष्णशृंगोवननीयगतिर्वृषभइव हेअग्ने सत्वं पुरः आसुरीस्तिस्रःपुरीः रुरोजिथ भग्नवानसि रुद्रोवाएषयदग्निरितिश्रुतेः। रुद्रकृतमपित्रिपुरदहनं अग्निकृतमेवेत्यग्निःस्तूयते यद्वा त्रिपुरदहनसाधनभूतेबाणे अग्नेरनीकत्वेनावस्थानात् अग्निःपुराणिभग्नवानित्युच्यते देवासुरावाएषुलोकेषुसमयतंतेत्यादिकंब्राह्मणमनुसन्धेयं ॥ ३९ ॥

३९. अग्नि प्रचण्ड बलशाली धानुष्क की तरह बाणों-द्वारा शत्रुओं के हन्ता हैं और तीक्ष्ण शृङ्ग वृषभ की तरह हैं। हे अग्नि तुमने त्रिपुरासुर के तीनों पुरों को भग्न किया है।

अग्निमन्थनेजायमानेग्नौआयंहस्तइत्येषानुवाक्या सूत्रितंच—आयंहस्तेनखादिनमित्यर्धर्चआरमेदिति।

अथचत्वारिंशी—

**आयंहस्तेनखादिनंशिशुंजातंनबिभ्रति।विशामग्निंस्वध्वरम्॥४०॥२८॥**

आ। यम्। हस्ते। न। खादिनम्। शिशुम्। जातम्। न।
बिभ्रति। विशाम्। अग्निम्। सुऽअध्वरम्॥ ४० ॥ २८ ॥

मन्थनोत्पन्नंयमग्निं शिशुंजातंन जातंपुत्रमिव हस्तेआ बिभ्रति हस्तेष्वभिमुखंधारयन्त्यध्वर्यवः पूर्वोनशब्दःपुरस्तादुपचारोप्युपमार्थीयः खादिनंन भक्षकंव्याघ्रादिमिव यथा तंबिभ्रतःपुरुषाअवहिताः तथाभूताइत्यर्थः यद्वा नेतिसंप्रत्यर्थे संप्रतीदानीं खादिनं हविषांभक्षकं यमग्निंहस्तेधारयन्ति विशां जनानां स्वध्वरं शोभनयागस्यनिष्पादकं तमग्निं हेऋत्विजः परिचरतेतिशेषः ॥ ४० ॥

४०. अध्वर्यु लोग अरणिमन्थन से उत्पन्न जिस सद्योजात अग्नि को पुत्र की तरह हाथ में यानी अभिमुख धारण करते हैं, उस हव्य-भक्षक और मनुष्यों के शोभन यज्ञ के निष्पादक अग्नि का हे ऋत्विक्गण तुम लोग परिचरण करो।

॥ इतिचतुर्थस्यपञ्चमेष्टाविंशोवर्गः ॥ २८ ॥

अग्निमन्थनेजातस्याग्नेआहवनीयेप्रहरणसमयेप्रदेवंदेववीतयइतिद्वृचोनुवक्तव्यः सूत्रितंच—प्रदेवंदेववीतयइविद्वेअग्निनाग्निःसमिध्यतइति।

तत्रप्रथमासूक्तेएकचत्वारिंशी—

**प्रदेवंदेववीतयेभरतावसुवित्तमम्। आस्वेयोनौनिषीदतु॥४१॥**

प्र। देवम्। देवऽवीतये। भरत। वसुवित्ऽतमम्। आ।
स्वे। योनौ। नि। सीदतु॥ ४१ ॥

---

१ तै० सं० ५. ४. ३.। २ ऐ० ब्रा० १. २३.।

हेअध्वर्यवः देवं द्योतमानं वसुवित्तमं वसूनां धनानां वेदयितारं लंभयितारमग्निं प्रभरत प्रहरत आहवनीयेग्नौ प्रक्षिपत किमर्थं देववीतये देवानांभक्षणार्थं तथाचब्राह्मणं—प्रदेवंदेववीतयेभरतावसुवित्तममितिप्रह्रियमाणायाभिरूपायद्यज्ञेभिरूपंतत्समृद्धमास्वेयोनौनिषीदत्वित्येषहवाअस्यस्वोयोनिर्यदग्निरग्नेरिति । सचाग्निः स्वेयोनौ कारणे स्थाने आहवनीयेआनिसीदतु अभिनिषण्णोभवतु ब्राह्मणंचभवति—एषवाअस्यस्वोयोनिर्यदग्निरग्नेरिति ॥ ४१ ॥

४१. हे अध्वर्युगण, तुम लोग देवों के भक्षणार्थ आहवनीय अग्नि में प्रक्षेप करो। अग्नि द्युतिमान् और धनों के ज्ञाता हैं। अग्नि अपने आहवनीय स्थान में उपवेशन करें।

आजातंजातवेदसिप्रियंशिशीतातिथिम् । स्योनआगृहपतिम् ॥४२॥

आ । जातम् । जातऽवेदसि । प्रियम् । शिशीत । अतिथिम् ।
स्योने । आ । गृहऽपतिम् ॥ ४२ ॥

हेअध्वर्यवः जातं प्रादुर्भूतमतिथिं लुप्तोपममेतत् अतिथिमिवप्रियं अतएव गृहपतिं गृहाणांस्वामिनमग्निं जातवेदसि जातप्रज्ञे स्योने सुखकरे आहवनीयेग्नौ आशिशीत अन्तर्णीतण्यर्थस्यशीङएतद्रूपं शाययत स्थापयत यद्वा श्यैङ्गतावित्यस्यछान्दसंरूपं गमयत प्रापयतेत्यर्थः शोतनूकरणेइत्यस्यवारूपं श्यत तीक्ष्णीकुरुतसंस्कुरुत प्रहरतेतियावत् द्वितीयआकारःपूरकः जातइतरोजातवेदाइतरइत्यादिकंब्राह्मणमत्रानुसन्धेयम् ॥ ४२ ॥

४२. हे अध्वर्युओ, प्रादुर्भूत, अतिथि की तरह प्रिय और गृहस्वामी अग्नि को ज्ञानप्रदायक और सुखकर आहवनीय अग्नि में संस्थापित करो।

अग्नेयुक्ष्वाहियेतवाश्वासोदेवसाधवः । अरंवहन्तिमन्यवे ॥ ४३ ॥

अग्ने । युक्ष्व । हि । ये । तव । अश्वासः । देव । साधवः ।
अरम् । वहन्ति । मन्यवे ॥ ४३ ॥

हेदेव द्योतमानाग्ने तानश्वान् युक्ष्व आत्मीयेरथेयोजय ये तव त्वदीयाः साधवः साधकाः सुशीलावा अश्वासोश्वाः अरं अलंपर्याप्तं वहन्ति किमर्थं मन्यवे मन्यतेयष्टव्यत्वेनदेवानित्येतिमन्युर्यागस्तदर्थं तानश्वान्रथेयुङ्क्ष्वेत्यर्थः हिखलु ॥ ४३ ॥

४३. हे द्युतिमान् अग्नि, तुम उन समस्त सुशील अश्वों को अपने रथ में युक्त करो, जो तुम्हें यज्ञ के प्रति पर्याप्त रूप से वहन करते हैं।

---

४ १ ऐ० ब्रा० १.१६.। २ ऐ० ब्रा० १.१६.। ३ ऐ० ब्रा० १.१६.।

अथचतुश्चत्वारिंशी–

**अच्छानोयाह्यावहाभिप्रयाँसिवीतये । आदेवान्त्सोमपीतये ॥ ४४॥**

अच्छ । नः । याहि । आ । वह । अभि । प्रयाँसि ।
वीतये । आ । देवान् । सोमऽपीतये ॥ ४४ ॥

हेअग्ने नोस्मान् अच्छाभिमुख्येनायाहि आगच्छ तथा प्रयांसि हविर्लक्षणान्यन्नान्यभिलक्ष्य देवानावह किमर्थं वीतये तेषांहविषांस्वादनार्थं तथा सोमपीतये सोमपानार्थंच तान्देवानावह ॥ ४४ ॥

४४. हे अग्नि, तुम हमारे अभिमुख आगमन करो। हव्य-भोजन और सोमपान करने के लिए तुम देवों का आनयन करो।

**उदग्नेभारतद्युमदजस्रेणदविद्युतत् । शोचाविभाह्यजर ॥ ४५॥२९॥**

उत् । अग्ने । भारत । द्युऽमत् । अजस्रेण । दविद्युतत् ।
शोच । वि । भाहि । अजर ॥ ४५ ॥ २९ ॥

हेभारत हविषांभर्तरग्ने उच्छोच उद्गततरंदीप्यस्व तदेवविवृणोति हेअजर जरारहिताग्ने दविद्युतत् भृशंद्योतमानस्त्वं द्युमत् द्युमतादीप्तिमता सुपांसुलुगितितृतीयायालुक् अजस्रेणाविच्छेदेनतेजसा विभाहि विशेषेणप्रकाशयस्व यद्वा भातिरत्रांतर्णीतण्यर्थः त्वं प्रथममुद्दीप्यस्व पश्चादात्मीयेनतेजसा सर्वंजगत्प्रकाशयेतियोजनीयम् ॥ ४५ ॥

४५. हे हव्यवाहक अग्नि, तुम अत्यन्त ऊद्ध्र्वतेज होकर दीप्यमान होओ। हे जरारहित अग्नि, तुम अजस्र द्युतिमान् तेज से प्रकाशित होओ। तुम पहले उद्दीप्त होओ और पश्चात् अपने तेज से सम्पूर्ण जगत् को प्रकाशित करो।

॥ इतिचतुर्थस्यपञ्चमेएकोनत्रिंशोवर्गः ॥२९ ॥

अथषट्चत्वारिंशी–

**वीतीयोदेवंमर्तोदुवस्येदग्निमीळीताध्वरेहविष्मान् ।**
**होतारंसत्ययजंरोदस्योरुत्तानहस्तोनमसाविवासेत् ॥ ४६ ॥**

वीती । यः । देवम् । मर्तः । दुवस्येत् । अग्निम् । ईळीत । अध्वरे ।
हविष्मान् । होतारम् । सत्यऽयजम् । रोदस्योः । उत्तानऽहस्तः ।
नमसा । आ । विवासेत् ॥ ४६ ॥

योमर्तोमनुष्योहविष्मान् हविर्भिर्युक्तोयजमानोवीती वीत्याकान्तेन हविर्लक्षणेनान्नेन यंकंचनदेवं दुवस्येत् परिचरेत्तस्मिन्नध्वरे यज्ञे अग्निमीळीत स्तुवीत सर्वेषुयागेष्वग्निःपूज्यत-इत्यर्थः कीदृशमग्निं रोदस्योर्द्यावापृथिव्योर्लोकद्वये वर्तमानानांहोतारमाह्वातारं सत्ययजं सत्ये-न अवितथेनहविषा यष्टारं किंचायंयजमानः ईदृशमग्निं उत्तानहस्तः कृतांजलिपुटःसन् नम-सा नमस्कारेण हविषावा आविवासेत् परिचरेत् ॥ ४६ ॥

४६. हवि से युक्त जो यजमान् हविर्लक्षण अन्न-द्वारा जिस किसी देवता की परिचर्या करता है, उस यज्ञ में भी अग्नि स्तुत होते हैं अर्थात् अग्नि की पूजा सब यज्ञों में होती है। अग्नि द्यावा-पृथिवी में वर्तमान देवों के आह्वानकर्त्ता और सत्य रूप हवि-द्वारा यष्टव्य है। यजमान लोग बद्धाञ्जलि होकर नमस्कार-पूर्वक ऐसे अग्नि की परिचर्या करें।

आतेअग्नऋचाहविर्हृदातष्टंभरामसि ।
तेतेभवन्तूक्षणऋषभासोवशाउत ॥ ४७ ॥

आ । ते । अग्ने । ऋचा । हविः । हृदा । तष्टम् । भरामसि ।
ते । ते । भवन्तु । उक्षणः । ऋषभासः । वशाः । उत ॥ ४७ ॥

अनयाध्ययनंप्रशस्यतइत्याश्वलायनोमन्यते हेअग्ने तेतुभ्यंहृदा हृदयेन तष्टं संस्कृतं ऋ-चा ऋग्रूपेणवर्तमानं हविः ऋचमेवहविःकृत्वा आभरामसि आहरामः तेइतितच्छब्देन प्रकृतऋ-ग्रूपंहविःपरामृश्यते प्रतिनिर्दिश्यमानापेक्षयापुंस्त्वबहुत्वे ऋग्रूपंतद्धविः ते तुभ्यं उक्षणः उक्षाणः सेचनसमर्थाः ऋषभासः ऋषभाः उतापिच वशाश्चभवन्तु ऋषभवशारूपेणपरिणतंसत् त्वद्भ-क्षणाय भवत्वितिशेषः ॥ ४७ ॥

४७. हे अग्नि, हम तुम्हें संस्कृत ऋक्रूप हव्य प्रदान करते हैं। अर्थात् ऋचा को ही हव्य बनाकर प्रदान करते हैं। ऋक्स्वरूप वह हवि तुम्हारे भक्षण के लिए सेचनसमर्थ वृषभ और गोरूप में परिणत हो।

अथाष्टाचत्वारिंशी—

अग्निंदेवासोअग्रियमिन्धतेवृत्रहन्तमम् ।
येनावसून्याभृतातृह्लारक्षांसिवाजिना ॥ ४८ ॥ ३० ॥

अग्निम् । देवासः । अग्रियम् । इन्धते । वृत्रहन्ऽतमम् । येन ।
वसूनि । आऽभृता । तृह्ला । रक्षांसि । वाजिना ॥ ४८ ॥ ३० ॥

अग्रियं मुख्यं वृत्रहन्तमं अतिशयेनवृत्रस्यहन्तारं इममग्निं देवासोदेवाः इन्धते दीपय-न्ति येनाग्निना वसूनि असुरैरपहृतानिधनानि हविर्लक्षणान्यन्नानिवा आभृताअसुरसकाशा-

यजमानाद्वा आहृतानि येनच वाजिना बलवताग्निना रक्षांसि यज्ञविरोधीनि वृत्त्वा वृढानि हिंसितानि तमग्निमिन्धतइत्यन्वयः ॥ ४८ ॥

४८. जिस बलवान् अग्नि ने यज्ञविरोधक राक्षसों का संहार किया है, जिस अग्नि ने असुरों के समीप से धन आहरण किया है, उस वृत्रहन्ता प्रधान अग्नि को देवगण उद्दीप्त करते हैं।

॥ इतिचतुर्थस्यपञ्चमेत्रिंशोवर्गः ॥ ३० ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन्।

पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येचतुर्थाष्टकेपञ्चमोध्यायःसमाप्तः ॥५॥

## ॥श्रीगणेशायनमः॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत्। निर्ममेतमहंवन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

चतुर्थाष्टकेषष्ठोध्यायआरभ्यते षष्ठेमंडलेद्वितीयेनुवाकेप्रथमंसूक्तंव्याख्यातं तत्रपिबासोममितिपंचदशर्चंद्वितीयंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रमंत्याद्विपदात्रिष्टुप् तथाचानुक्रान्तं—पिबपंचोनैन्द्रं त्रैष्टुभंद्विपदान्तमिति। अभिजितिमरुत्वतीयशस्त्रे एतन्निविद्धानं सूत्रितंच—पिबासोमंतमुष्टुही-तिमध्यंदिनइति। समूळ्हेदशरात्रेष्टमेहनिमरुत्वतीयशस्त्रेएतत्सूक्तं सूत्रितंच—पिबासोममभितम-स्यद्यावापृथिवीइति। सूर्यस्तुताख्येकाहेमरुत्वतीयेएतत्सूक्तंनिविद्धानं सूत्र्यतेहि—सूर्यस्तुवा-यशस्कामःपिबासोममभीति। महाव्रतेपिमरुत्वतीयेएतत्सूक्तं तथैवपंचमारण्यकेसूत्रितंच—पि-बासोममभियमुग्रतर्दःकयाशुभासवयसःसनीळाइति माध्यन्दिनसवनेआद्यास्तिस्रोहोत्रकाव-रुणब्राह्मणाच्छंसिनांप्रस्थितयाज्याः सूत्रितंच—पिबासोममभियमुग्रतर्दइति। तिस्रोवाङ्किहिंसो-मकामंत्वाहुरिति।

तत्रप्रथमा—

ॐ पिबा॒ सोम॑म॒भि यमु॑ग्र॒ तर्द॑ ऊ॒र्वं गव्यं॒ महि॑ गृणा॒न इ॑न्द्र।
वि यो धृ॑ष्णो॒ वधि॑षो वज्रहस्त॒ विश्वा॑ वृ॒त्रम॑मि॒त्रिया॒ शवो॑भिः ॥ १ ॥

पिब॑। सोम॑म्। अ॒भि। यम्। उ॒ग्र॒। तर्दः॑। ऊ॒र्वम्। गव्य॑म्।
महि॑। गृ॒णा॒नः। इ॒न्द्र॒। वि। यः। धृ॒ष्णो॒ इति॑। वधि॑षः।
व॒ज्र॒ऽह॒स्त॒। विश्वा॑। वृ॒त्रम्। अ॒मि॒त्रिया॑। शवः॑ऽभिः ॥ १ ॥

हेउग्र उद्गूर्णबलेन्द्र गृणानः अंगिरोभिःस्तूयमानस्त्वं यंसोममभिउद्दिश्य पातुमित्यर्थः महि महत् गव्यं गोसंबन्धि ऊर्वं पणिभिराहृतंसमूहं तर्दः प्रकाशितवानसि तृदिहिंसाकर्मा अ-त्रप्रकाशनार्थः तंसोमंपिब पानंकुरु हेधृष्णोशत्रूणांधर्षक वज्रहस्त वज्रपाणे हेइन्द्र यस्त्वंशवो-भिर्बलैःसहितः सन् विश्वा विश्वं वृत्रं आवरकं अमित्रिया अमित्रियंशत्रुं अमित्रशब्दाद्धित्री-यैकवचनस्येयादेशः विवधिषः व्यवधीः सत्वं सोमंपिबेतिसंबन्धः ॥ १ ॥

१. हे युद्यतायुध या प्रचण्ड बलशाली इन्द्र, अङ्गिराओं-द्वारा स्तूयमान होकर तुमने सोमपान करने के लिए पणियों-द्वारा अपहृत गौओं को प्रकाशित किया था। तुम सोमपान करो। हे शत्रुओं के विनाशक वज्रधर इन्द्र, बल से युक्त होकर तुमने सम्पूर्ण शत्रुओं का विनाश किया है।

अथद्वितीया—

सईंपाहियऋजीषीतरुत्रोयःशिप्रवान्वृषभोयोमतीनाम् ।
योगोत्रभिद्वज्रभृद्योहरिष्ठाःसइन्द्रचित्राँअभितृन्धिवाजान् ॥२॥

सः । ईम् । पाहि । यः । ऋजीषी । तरुत्रः । यः । शिप्रऽवान् ।
वृषभः । यः । मतीनाम् । यः । गोत्रऽभित् । वज्रऽभृत् । यः ।
अरिऽस्थाः । सः । इन्द्र । चित्रान् । अभि । तृन्धि । वाजान् ॥ २ ॥

हेइन्द्र ऋजीषी ऋजीषशब्देनगतरसःसोमोभिधीयते तद्वान् यस्त्वं तरुत्रः शत्रूणांवारकोसि यस्त्वं शिप्रवान् शोभनहनुरसि यस्त्वं मतीनां स्तोतॄणां . मन्यतेःस्तुतिकर्मणःकर्तरिक्तिच् वृषभः कामानांवर्षितासि सत्वं ईं एनं सोमं पाहि पिब हेइन्द्र यस्त्वं वज्रभृत् वज्रधरोयस्त्वंगोत्रभिद्गोत्राणांपर्वतानांमेघानांवाभेत्तासि यस्त्वं हरिष्ठाः हर्योःस्थातासि हेइन्द्र सत्वं चित्रान् विचित्रान् वाजानन्नानि अभितृन्धि अस्मभ्यंप्रकाशय ॥ २ ॥

२. हे रसविहीन सोम के पानकर्त्ता इन्द्र, तुम शत्रुओं से त्राण करनेवाले, शोभन कपोलवाले और स्तोताओं की कामना के पूरक हो। तुम इस सोमरस का पान करो। हे इन्द्र, तुम वज्रधर, पर्वतों या मेघों के विदारक और अश्वों के संयोजक हो। तुम हम लोगों के विचित्र अन्न को प्रकाशित करो।

अथतृतीया—

एवापाहिप्रत्नथामन्दतुत्वाश्रुधिब्रह्मवावृधस्वोतगीर्भिः ।
आविःसूर्यंकृणुहिपीपिहीषोजहिशत्रूँरभिगाइन्द्रतृन्धि ॥ ३ ॥

एव । पाहि । प्रत्नऽथा । मन्दतु । त्वा । श्रुधि । ब्रह्म ।
ववृधस्व । उत । गीःऽभिः । आविः । सूर्यम् । कृणुहि । पीपिहि ।
इषः । जहि । शत्रून् । अभि । गाः । इन्द्र । तृन्धि ॥ ३ ॥

हेइन्द्रत्वं प्रत्नथा प्रत्नान्पुराणान्सोमान् यथाअपिबः तथा एवएवमिममस्मदीयंसोमं पाहि पिब सच सोमस्त्वयापीतःसन् त्वा त्वां मन्दतु मदयतु ब्रह्म अस्माभिःकृतं स्तोत्रं श्रुधि शृणु उतापिच गीर्भिः स्तुतिरूपाभिर्वाग्भिर्ववृधस्व त्वंवर्धस्व अपिच सूर्यं सर्वस्यप्रेरकं देवं आविष्कृणुहि आविष्कुरु वयंसूर्यंयथापश्येम तथाकुर्वित्यर्थः इषः अन्नानिच पीपिहि अस्मभ्यंप्यायय शत्रूनस्मत्सपत्नान् जहि नाशय हेइन्द्र त्वंपणिभिरपहृतागाः अभितृन्धि प्रकाशय ॥ ३ ॥

३. हे इन्द्र, तुमने जैसे प्राचीन सोमरस पान किया था, वैसे ही हमारे इस सोमरस को पियो। यह सोमरस तुम्हें प्रसन्न करे। हमारे स्तोत्र को सुनो और स्तुतियों-द्वारा वर्द्धमान होओ। सूर्य को आविष्कृत करो। हम लोगों को अन्न भोजन कराओ। हमारे शत्रुओं का विनाश करो और पणियों-द्वारा अपहृत गौओं को प्रकाशित करो।

तेत्वामदांबृहदिन्द्रस्वधावइमेपीताउक्षयन्तद्युमन्तंम्।
महामनूनंतवसंविभूतिंमत्सरासोजर्हृषन्तप्रसाहम् ॥ ४ ॥

ते। त्वा। मदाः। बृहत्। इन्द्र। स्वधाऽवः। इमे। पीताः।
उक्षयन्त। द्युऽमन्तम्। महाम्। अनूनम्। तवसम्। विऽभूतिम्।
मत्सरासः। जर्हृषन्त। प्रऽसहम् ॥ ४ ॥

हेस्वधावः अन्नवन्निन्द्र मदाः मदकराः तइमेपीताःसोमाः द्युमन्तं दीप्तिमन्तं त्वा त्वां बृहत्यन्तं उक्षयन्त सिंचयन्तु अपिच हेइन्द्र त्वां मत्सरासोमदकराः सोमाः जर्हृषन्त भृशंहर्षयन्तु कीदृशं महां महान्तं प्रभूतं अनूनं सर्वगुणैर्न्युनतारहितं संपूर्णमित्यर्थः तवसं प्रवृद्धं विभूतिं विभवन्तं प्रसाहं शत्रूणामभिभवितारं ॥ ४ ॥

४. हे अन्नवान् इन्द्र, तुम दीप्तिमान् हो। यह पिया गया मादक सोमरस तुम्हें अतिशय सिंचित करे। हे इन्द्र, यह मदकारक सोमरस तुम्हें अतिशय हर्षित करे। तुम महान्, निखिल गुणवान्, प्रवृद्ध, विभववान् और शत्रुओं को पराभूत करनेवाले हो।

अथपञ्चमी—

येभिःसूर्यमुषसंमन्दसानोवासयोपदृळ्हानिदर्द्रत्।
महामद्रिंपरिगाइन्द्रसन्तंनुत्थाअच्युतंसदसःपरिस्वात् ॥५॥१॥

येभिः। सूर्यम्। उषसम्। मन्दसानः। अवासयः। अप।
दृळ्हानि। दर्द्रत्। महाम्। अद्रिम्। परि। गाः। इन्द्र। सन्तम्।
नुत्थाः। अच्युतम्। सदसः। परि। स्वात् ॥ ५ ॥ १ ॥

हेइन्द्र येभिः यैः सोमैः मन्दसानोमोदमानस्त्वं सूर्यं सर्वप्रेरकं देवं उषसमुषोदेवतांच अवासयः स्वस्थानेन्यवासयः अथवा सूर्योषसौ यथा तमांसिविवासयतस्तथाकार्षीः किंकुर्वन् दृळ्हानि दृढानि तमांसि अपदर्द्रदपदारयन् किंच हेइन्द्र त्वं पणिभिरपहृतागाः परिसंतं परितोवियमानं महां महान्तं अद्रिं पर्वतं नुत्थाः अनुदः कीदृशं स्वात् स्वकीयात् सदसः स्थानात् परि परितः अच्युतं अविचालितं विनाशरहितं स्थिरमित्यर्थः ॥ ५ ॥

५. हे इन्द्र, सोमरस से मोदमान होकर तुमने दृढ़ अन्धकार का भेदन किया है और सूर्य तथा उषा को अपने-अपने स्थान पर निवेशित किया है। तुमने अपने स्थान से अविचलित अर्थात् विनाश-रहित, स्थिर पर्वत को विदीर्ण किया है, जिस पर्वत के चारों तरफ़ पणियों-द्वारा अपहृत गौएँ वर्तमान थीं।

॥ इतिचतुर्थस्यषष्ठेप्रथमोवर्गः ॥ १॥

तवंक्रत्वातवतद्दंसनाभिरामासुपक्वंशच्यानिदीधः ।
और्णोर्दुरउस्रियाभ्योविदृह्ळोदूर्वाद्गाअसृजोअङ्गिरस्वान् ॥६॥

तवं । क्रत्वा । तव । तत् । दंसनाभिः । आमासु । पक्वम् । शच्या । नि । दीधरितिदीधः । और्णोः । दुरः । उस्रियाभ्यः । वि । दृह्ळा । उत् । ऊर्वात् । गाः । असृजः । अङ्गिरस्वान् ॥ ६ ॥

हेइन्द्र तवक्रत्वा त्वदीययाप्रज्ञया तवदंसनाभिः त्वदीयैःकर्मभिः शच्या सामर्थ्येन आमासु अपक्वासुगोषु पक्वं परिणतं तत्प्रसिद्धंपयः निदीधः नितरांधारयसिअपिच हेइन्द्र त्वं उस्रियाभ्योगोभ्यः गानिर्गमयितुमित्यर्थः दृह्ळा दृढानि बलेनपाषाणादिभिर्दृढीकृतानीत्यर्थः दुरोद्वाराणि व्यौर्णोः उद्घाटितवानसि अंगिरस्वान्अंगिरोभिर्युक्तस्त्वं ऊर्वात् समूहात् गोष्ठादित्यर्थः गाः उदसृजः उदगमयः ॥ ६ ॥

६. हे इन्द्र, तुमने अपनी बुद्धि, कार्य और सामर्थ्य के द्वारा अपरिपक्व गौओं को परिणत दुग्ध प्रदान किया है अर्थात् अकाल में ही गौओं को क्षीरदायिनी बनाया है। हे इन्द्र, तुमने गौओं को बाहर आने के लिए पाषाणादि के दृढ़ द्वारों को उद्घाटित किया है। अङ्गिराओं के साथ मिलित होकर तुमने गौओं को गोष्ठ से उन्मुक्त किया था।

पप्राथक्षांमहिदंसोव्युर्वीमुपद्यामृष्वोबृहदिन्द्रस्तभायः ।
अधारयोरोदसीदेवपुत्रेप्रत्नेमातरायह्वीऋतस्य ॥ ७ ॥

पप्राथ । क्षाम् । महि । दंसः । वि । उर्वीम् । उप । द्याम् । ऋष्वः । बृहत् । इन्द्र । स्तभायः । अधारयः । रोदसी इति । देवपुत्रे इति देवऽपुत्रे । प्रत्ने इति । मातरा । यह्वी इति । ऋतस्य ॥ ७ ॥

हेइन्द्र त्वं महि महता दंसः दंससा कर्मणा उर्वीं विस्तीर्णां क्षां भूमिं विपप्राथविशेषेण पूरितवानसि प्रापूरणेइतिधातुः हेइन्द्र ऋष्वोमहांस्त्वं बृहत् बृहतीं द्यां दिवं उपस्तभायः उपस्तभ्नासि निरालंबं वितिष्ठन्तीद्यौः यथानपतति इन्द्रस्तथाकरोतीत्यर्थः अपिच त्वं रोदसी द्यावापृथिव्यौ अधारयः पोषणैर्धारयसि कीदृश्यौ देवपुत्रे देवाःपुत्राययोस्ते प्रत्ने पुराणे मातरा मातरौनिर्मात्र्यौ ऋतस्योदकस्य यज्ञस्यवा यह्वी यह्वयौमहत्यौ यद्वा विश्वस्यमातरौ ऋतस्य ब्रह्मणः यह्वी पुत्र्यौ यह्वुरित्यपत्यनामैतत् ॥ ७ ॥

७. हे इन्द्र, तुमने महान् कर्म-द्वारा विस्तीर्ण पृथिवी को विशेष प्रकार से पूर्ण किया है। हे इन्द्र, तुम महान् हो। तुमने महान् द्युलोक को धारण किया है, जिससे वह निपतित न हो जाय। तुमने पोषण करने के लिए द्यावा-पृथिवी को धारण किया है। देवता लोग द्यावा-पृथिवी के पुत्र हैं। द्यावा-पृथिवी पुरातन, यज्ञ अथवा उदक का निर्माण करनेवाली और महान् हैं।

अधत्वाविश्वेपुरइन्द्रदेवाएकंतवसंदधिरेभराय।
अदेवोयदभ्यौहिष्टदेवान्त्स्वर्षातावृणतइन्द्रमत्र ॥ ८ ॥

अध। त्वा। विश्वे। पुरः। इन्द्र। देवाः। एकम्। तवसम्।
दधिरे। भराय। अदेवः। यत्। अभि। औहिष्ट। देवान्।
स्वःऽसाता। वृणते। इन्द्रम्। अत्र ॥ ८ ॥

अधाधुनास्मिन्काले विश्वेदेवाः सर्वेवह्न्यादयः हेइन्द्र एकं मुख्यं तवसं प्रवृद्धं बलवन्तं त्वा त्वां भराय संग्रामाय पुरोदधिरे पुरस्ताच्चक्रिरे यद्यदा अदेवोवृत्रासुरः देवान् अभ्यौहिष्ट संग्रामार्थंअभिगतवान् ओहतिर्गतिकर्मा किंच अत्रास्मिन्काले स्वर्षाता स्वर्षातौ संग्रामेदेवामरुतइतिशेषः इन्द्रं वृणते संभजन्ते स्म मरुतोहीन्द्रंदेवेषुपलायितेषुसमभजन्नित्यर्थः अधुना पुरोदधिरेइतिसंवन्धः ॥ ८ ॥

८. हे इन्द्र, जब कि, वृत्रासुर-संग्राम के लिए देवगण चले थे, तब सम्पूर्ण देवों ने एक तुम्हें ही संग्राम के लिए अगुआ बनाया था। तुम अत्यन्त बलशाली हो। तुमने मरुतों के संग्राम में इन्द्र को साहाय्य दिया था।

अधद्यौश्चित्तेअपसानुवज्राद्द्वितानमद्भियसास्वस्यमन्योः।
अहिंयदिन्द्रोअभ्योहसानंनिचिद्विश्वायुःशयथेजघान ॥ ९ ॥

अध। द्यौः। चित्। ते। अप। सा। नु। वज्रात्। द्विता।
अनमत्। भियसा। स्वस्य। मन्योः। अहिम्। यत्। इन्द्रः। अभि।
ओहसानम्। नि। चित्। विश्वऽआयुः। शयथे। जघान ॥ ९ ॥

साप्रसिद्धा देवानामाश्रयत्वेन द्यौश्चिद् द्युलोकोपि हेइन्द्र अधाधुनास्मिन्काले द्विता द्विधा द्विप्रकाराद् तेत्वदीयाद्वज्राद् स्वस्यात्मीयाद् मन्योः क्रोधाच्च भियसा भयेन अपानमद् अपनाम नुइतिपूरणः विश्वयुर्वह्वन्नइन्द्रः यद्यदा अभ्योहसानमभिगच्छन्तं अहिं वृत्रं शयथे शयननिमित्ते मरणायेत्यर्थः जघान न्यवधीद् चिदितिपूरणः यदा वृत्रंजघान अस्मिन्कालेद्यौर्नेनामेतिसंबन्धः ॥ ९ ॥

९. विपुल अन्नवाले इन्द्र ने जब कि सोने (मरने) के लिए आक्रमणकारी वृत्र का वध किया था, तब हे इन्द्र, तुम्हारे क्रोध और वज्र के भय से द्युलोक अवसन्न हो गया था।

अधत्वष्टातेमहउग्रवज्रंसहस्रभृष्टिंववृतच्छताश्रिम्।
निकाममरमणसंयेननवन्तमहिंसंपिणगृजीषिन् ॥ १० ॥ २ ॥

अधं। त्वष्टा। ते। महः। उग्र। वज्रम्। सहस्रऽभृष्टिम्। ववृतत्।
शतऽअश्रिम्। निऽकामम्। अरऽमनसम्। येन। नवन्तम्।
अहिम्। सम्। पिणक्। ऋजीषिन् ॥ १० ॥ २ ॥

अधाधुना हेउग्र उद्गूर्णबलेन्द्र महोमहतस्तव त्वष्टा देवशिल्पी वज्रं ववृतत् न्यवर्तयत निष्पन्नंकृतवान् कीदृशं सहस्रभृष्टिं सहस्रधारं शताश्रिं शतपर्वाणं हेऋजीषिन् गतरससोमवन्निन्द्र येनवज्रेण निकामं नियतःकामोयस्यतं अरमनसं शत्रूणामरमभिगन्तृमनोयस्यतं नवन्तं शब्दायमानं अहिं वृत्रमसुरं संपिणक् संपिष्टवानसि तंवज्रंकृतवानित्यर्थः ॥ १० ॥

१०. हे अत्यन्त बलशाली इन्द्र देवशिल्पी त्वष्टा ने तुम्हारे लिए सहस्र धारावाले और सौ पर्व (गाँठ) वाले वज्र का निर्माण किया था। हे नीरस सोमपान करनेवाले इन्द्र, उसी वज्र-द्वारा तुमने नियताभिलाष, उद्धत-प्रकृति और शब्दायमान वृत्रासुर को चूर्ण किया था।

॥ इतिचतुर्थस्यषष्ठेद्वितीयोवर्गः ॥ २ ॥

अथैकादशी—

वर्धान्यंविश्वेमरुतःसजोषाःपचच्छतंमहिषाँइन्द्रतुभ्यम्।
पूषाविष्णुस्त्रीणिसरांसिधावन्वृत्रहणंमदिरमंशुमस्मै ॥ ११ ॥

वर्धान्। यम्। विश्वे। मरुतः। सऽजोषाः। पचत्। शतम्।
महिषान्। इन्द्र। तुभ्यम्। पूषा। विष्णुः। त्रीणि। सरांसि।
धावन्। वृत्रऽहनम्। मदिरम्। अंशुम्। अस्मै ॥ ११ ॥

सजोषाः सहप्रीयमाणाः विश्वे मरुतः सर्वेदेवाः हेइन्द्र यंत्वां वर्धान् स्तोत्रैर्वर्धयन्ति हेइन्द्र तस्मैतुभ्यं पूषा एतन्नामकोदेवः विष्णुरेतन्नामकश्च शतं शतसंख्याकान् महिषान् पुंपशून् पचत् पचेत् अपिच अस्मै तुभ्यं सरांसि द्रोणकलशपूतभृदाहवनीयाख्यानित्रीणिपात्राणिपूरयितुं अंशुं सोमं धावन्गच्छन्भवति पूषाविष्णुश्च सोमैः पात्राणि पूर्यतइत्यर्थः कीदृशं सोमं मदिरं मदकरं वृत्रहणं वृत्राणांशत्रूणांहन्तारं अत्र वृत्रहन्शब्देन सोमोभिधीयते पोतेहिसतिसोमे वृत्राणिहन्तुमिन्द्रःसमर्थोभवतीतियावत् ॥ ११ ॥

११. हे इन्द्र, सम्पूर्ण मरुद्गण समान प्रीतिभाजन होकर स्तोत्र-द्वारा तुम्हें वर्द्धित करते हैं और तुम्हारे निमित्त पूषा तथा विष्णुदेव शतसंख्यक महिषों का पाक करते हैं। तीन पात्रों को पूर्ण करने के लिए मदकारक और वृत्रविनाशक सोम धावित होता है अर्थात् पूषा और विष्णु सोमपात्र को पूर्ण करें। सोमपान करने के बाद वृत्र-विनाश में इन्द्र समर्थ होते हैं। 　　अथद्वादशी—

आक्षोदोमहिवृतंनदीनांपरिष्ठितमसृजमूर्मिमपाम्।
तासामनुप्रवतइन्द्रपन्थांप्रार्दयोनीचीरपसःसमुद्रम्॥ १२॥

आ। क्षोदः। महि। वृतम्। नदीनाम्। परिऽस्थितम्। असृजः। ऊर्मिम्। अपाम्। तासाम्। अनु। प्रऽवतः। इन्द्र। पन्थाम्। प्र। आर्दयः। नीचीः। अपसः। समुद्रम्॥ १२॥

हेइन्द्र त्वं महि महद्वृतं वृत्रेण परिवृतमाच्छादितं परिष्ठितं परितःस्थितं नदीनां सिन्धूनां संबन्धि क्षोदः उदकं आअसृजः आसमन्तात्सृष्टवानसि येननद्यःपूर्णाःप्रवहेयुःतदित्यर्थः अपामुदकानामूर्मिं समूहं सृष्टवानसि पुनर्वचनमादरार्थं हेइन्द्र तासांनदीनां संबन्धिनः पंथां पथोमार्गान्प्रवतःप्रवणानन्वकार्षीरितिशेषः अन्वित्युपसर्गयोग्यक्रियाध्याहारः किंच नीचीः प्रवणाभिमुखीर्वेगयुक्ताइत्यर्थः अपसोपउदकानिअपसइत्यपएवार्थेवर्तते समुद्रमुदधिं प्रार्दयः प्रागमयः अर्दतिर्गतियनकर्मा॥ १२॥

१२. हे इन्द्र, तुमने वृत्र-द्वारा समाच्छादित सर्वतः स्थित नदियों के जल को उन्मुक्त किया था, जिससे नदियां प्रवाहित हुईं। तुमने उदक तरङ्ग को उन्मुक्त किया है। हे इन्द्र, तुमने उन नदियों को निम्न मार्ग से प्रवाहित किया है। तुमने वेगयुक्त उदक को समद्र में पहुँचाया है।

एवातावि॑श्वा॑चकृवांसमिन्द्रंमहामुग्रमंजुर्यंसहोदाम्।
सुवीरंत्वास्वायुधंसुवज्रमाब्रह्मनव्यमवसेववृत्यात्॥ १३॥

एव। ता। विश्वा। चकृऽवांसम्। इन्द्रम्। महाम्। उग्रम्। अजुर्यम्। सहःऽदाम्। सुऽवीरम्। त्वा। सुऽआयुधम्। सुऽवज्रम्। आ। ब्रह्म। नव्यम्। अवसे। ववृत्यात्॥ १३॥

हेइन्द्र त्वा त्वां नव्यं नूतनमन्यैरकृतपूर्वं ब्रह्म अस्माभिःकृतंस्तोत्रं अवसेअस्माकंरक्षणाय आववृत्याद् आवर्तयतु कीदृशंत्वां एव एवमुक्तप्रकारेण ता तानिप्रसिद्धानि विश्वा विश्वानिसर्वाणिकर्माणि चकृवांसं कृतवन्तमिन्द्रमीश्वरं महां महान्तं उग्रमोजस्विनं अजुर्यमजरं सहोदां सहसोबलस्यदातारं सुवीरं शोभनवीरामरुतोयस्यतं स्वायुधंशोभनायुधं सुवज्रं शोभनवज्रोपेतं॥ १३॥

१३. हे इन्द्र, इस प्रकार से तुम सम्पूर्ण कार्यों के करनेवाले, ऐश्वर्यशाली, महान् ओजस्वी, अजर, बलदाता, शोभन मरुतों से सहायता पानेवाले, अस्त्रधारी और वज्रधर हो। हम लोगों का नवीन स्तोत्र तुम्हें प्रवर्तित करे, जिससे हम लोगों की रक्षा हो।

सनोवाजायश्रवसइषेचरायेधेहिद्युमतइन्द्रविप्रान् ।
भरद्वाजेनृवतइन्द्रसूरीन्दिविचस्मैधिपार्येनइन्द्र ॥ १४ ॥

सः । नः । वाजाय । श्रवसे । इषे । च । राये । धेहि । द्युऽमतः । इन्द्र । विप्रान् । भरत्ऽवाजे । नृऽवतः । इन्द्र । सूरीन् । दिवि । च । स्म । एधि । पार्ये । नः । इन्द्र ॥ १४ ॥

हेइन्द्र सत्वं द्युमतोदीप्तिमतः विप्रान्मेधाविनोस्मान् वाजाय बलाय श्रवसे यशसे इषेचान्नायच राये धनाय धेहिधारय अपिच हेइन्द्र भरद्वाजेमयि नृवतोमनुष्यवतः परिचारकयुक्तानित्यर्थः सूरीन् तवस्तोतॄन् पुत्रपौत्रान्कुर्वितिशेषः हेइन्द्र त्वं पार्ये पारणीये आगामिनिच दिविदिवसे एधिस्म नोस्माकंरक्षिताखलुभवेत्यर्थः ॥ १४ ॥

१४. हे इन्द्र, तुम हम लोगों को बल, पुष्टि, अन्न और धन के लिए धारण करो। हम लोग शक्तिसम्पन्न और मेधावी हैं। हे इन्द्र, हम भरद्वाज को परिचारकों से युक्त करो। तुम्हारी स्तुति करनेवाले पुत्र-पौत्रों को करो। हे इन्द्र, तुम आनेवाले दिवस में हमारी रक्षा करो।

षष्ठेहनितृतीयसवनेब्राह्मणाच्छंसिशस्त्रे अनुरूपतृचस्य अयावाजमितितृतीया सूत्रितंच—अयावाजंदेवहितंसनेमेतिस्तोत्रियानरूपाविति ।

अयावाजंदेवहितंसनेममदेमशतहिमाःसुवीराः ॥ १५ ॥ ३ ॥

अया । वाजम् । देवऽहितम् । सनेम । मदेम । शतऽहिमाः । सुऽवीराः ॥ १५ ॥ ३ ॥

अया अनयास्तुत्या देवहितं देवेनद्योतमानेनेन्द्रेणदत्तं वाजमन्नं सनेम वयंसंभजेम अपिच सुवीराःशोभनपुत्रोपेतावयं शतहिमाः शतसंवत्सरान् मदेम हृष्याम ॥ १५ ॥

१५. इस स्तुति के द्वारा हम लोग द्युतिमान् इन्द्र-द्वारा प्रदत्त अन्न-लाभ करें। हम लोग शोभन पुत्र-पौत्रों से युक्त होकर सौ वर्ष पर्यन्त प्रमुदित हों। ॥ इतिचतुर्थस्यषष्ठेतृतीयोवर्गः ॥ ३ ॥

तमुष्टुहीति पंचदशर्चंतृतीयंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रं तथाचानुक्रम्यते—तमुष्टुहीति । अभिजितिनिष्केवल्येएतन्निविद्धानं सूत्रितंच—तमुष्टुहीतिमध्यन्दिनइति । इन्द्राग्न्योःकुलायनाम्न्येकाहेपि निष्केवल्येएतन्निविद्धानं सूत्रितंच—तिष्ठाहरीतमुष्टुहीतिमध्यंदिनइति । महाव्रतेपि निष्केवल्ये तथैवपंचमारण्यकेसूत्रितं—तमुष्टुहियोअभिभूत्योजाःसुतइत्वंनिमिश्लइन्द्रसोमइतित्रीणीति ।

तत्रप्रथमा—

तमुंष्टुहियोअभिभूत्योजावन्वन्नवातःपुरुहूतइन्द्रः ।
अषाह्ळमुग्रंसहमानमाभिर्गीर्भिर्वर्धवृषभंचर्षणीनाम् ॥ १ ॥

तम् । ऊँ इति । स्तुहि । यः । अभिभूतिऽओजाः । वन्वन् । अवातः । पुरुऽहूतः । इन्द्रः । अषाह्ळम् । उग्रम् । सहमानम् । आभिः । गीःऽभिः । वर्ध । वृषभम् । चर्षणीनाम् ॥ १ ॥

अभिभूत्योजाः अभिभावुकतेजाः वन्वन् शत्रून्हिंसन् अवातः शत्रुभिराहिंसितः वनोते-र्निष्ठान्तस्यनञ्पूर्वस्यरूपं यद्वा वातेर्वातं अनभिगतः पुरुहूतः बहुभिराहूतः यइन्द्रोस्तीतिशेषः हेभरद्वाज तमुष्टुहि तमेवेन्द्रंस्तुहि अपिच आभिर्वक्ष्यमाणाभिर्गीर्भिः स्तुतिरूपाभिर्वाग्भिः तमिन्द्रं वर्ध वर्धय कीदृशं अषाह्ळमनभिभूतं उग्रमुद्गूर्णमोजस्विनंवा सहमानं शत्रूनभि-भवन्तं चर्षणीनां प्रजानांसंबन्धिनं वृषभं वर्षितारं ॥ १ ॥

१. हे भरद्वाज, तुम अनभिभूत तेजवाले, शत्रुओं की हिंसा करनेवाले, अघृष्य और बहुतों के द्वारा आहूत इन्द्र का स्तवन करो। तुम इन स्तोत्रों-द्वारा अनभिभूत, ओजस्वी, शत्रुविजयी और मनुष्यों के अभीष्ट-पूरक इन्द्र को संवर्द्धित करो।

सयुध्मःसत्वांखजकृत्समद्वांतुविम्रक्षोनंदनुमाँऋजीषी ।
बृहद्रेणुश्च्यवनोमानुषीणामेकःकृष्टीनामभवत्सहावा ॥ २ ॥

सः । युध्मः । सत्वा । खजऽकृत् । समत्ऽवा । तुविऽम्रक्षः । नदनुऽमान् । ऋजीषी । बृहत्ऽरेणुः । च्यवनः । मानुषीणाम् । एकः । कृष्टीनाम् । अभवत् । सहऽवा ॥ २ ॥

बृहद्रेणुः बृहतोमहतोरेणोःपांसोरुत्थापकःसंग्रामेष्वितियावत् एकोमुख्यः सहावा बलवान् सइन्द्रः मानुषीणां मनोःसंबन्धिनीनां कृष्टीनां प्रजानांयजमानानां च्यवनः अभिगन्ता अभव-त् आसीत् कीदृशः युध्मोयोद्धा सत्वादाता सनोतेर्भेदनार्थस्येदंरूपं खजकृत् खजानांसंग्रामा-णांकर्ता खजइतिसंग्रामनामैतत् समद्वा यजमानैःसहमदःसमत्तद्वान् तुविम्रक्षः म्रक्षतिःसंश्लेह-कर्मा तुवीनां बहूनां वर्षणेन संश्लेहनकर्ता नदनुमान् शब्दवान् ऋजीषी ऋजीषशब्देनसवनद्व-याभिषुतः पुनस्तृतीयसवनेप्यभिषुतः सोमउच्यते तद्वव ॥ २ ॥

२. इन्द्र संग्राम में रेणुओं के उत्थापक, मुख्य, बलवान्, योद्धा, दाता, युद्ध में संलग्न, सहानुभूति-सम्पन्न, वृष्टि-द्वारा बहुतों के उपकारक, शब्द-विधायक, तीनों सवनों में सोमपान करनेवाले और मनु की सन्तानों की रक्षा करनेवाले हैं।

अथतृतीया–

त्वंह्नुत्यददमायोदस्यूँरेकःकृष्टीरवनोरार्याय ।
अस्तिस्विन्नुवीर्यं१तत्तंइन्द्रनस्विदस्तितदृतुथाविवोचः ॥ ३ ॥

त्वम् । ह । नु । त्यत् । अदमयः । दस्यून् । एकः । कृष्टीः । अवनोः ।
आर्याय । अस्ति । स्वित् । नु । वीर्यम् । तत् । ते । इन्द्र । न ।
स्वित् । अस्ति । तत् । ऋतुऽथा । वि । वोचः ॥ ३ ॥

हेइन्द्र त्यत् सः सत्वं त्यदितितच्छब्दपर्यायोत्रलिंगव्यत्ययः दस्यून् कर्महीनान्जनान् नु क्षिप्रं अदमयः दान्तानकरोः हशब्दःपूरणार्थः अपिच एकोमुख्यः त्वंकृष्टीः पुत्रदासादीन् आर्याय कर्मकृतेजनाय अवनोरददाः एवंस्तुवन्नप्यृषिरिन्द्रंयदानाद्राक्षीत् तदा तस्यवीर्यसद्भावेविचिकित्समानः परार्धर्चमाह हेइन्द्रते तव यत्पूर्वमुक्तं तद्वीर्यं सामर्थ्यं स्विन्वस्ति किंस्विद्भवति किंस्विन्नेतिविचिकित्सायां नस्विदस्ति यद्वा नास्तितद्बलं ऋतुथा कालेकाले विवोचः विशेषेणब्रूहि ॥ ३ ॥

३. हे इन्द्र, तुम कर्मविहीन मनुष्यों को शीघ्र ही वशीभूत करो। अकेले तुमने ही कर्मानुष्ठानकारी आर्यों को पुत्र-दासादि प्रदान किया था। हे इन्द्र, तुममें इस प्रकार की पूर्वोक्त सामर्थ्य है अथवा नहीं? तुम समय-समय पर अपने वीर्य का विशेष परिचय प्रदान करो।

अथचतुर्थी–

सदिद्धितेतुविजातस्यमन्येसहःसहिष्ठतुरतस्तुरस्य ।
उग्रमुग्रस्यतवसस्तवीयोरध्रस्यरध्रतुरोबभूव ॥ ४ ॥

सत् । इत् । हि । ते । तुविऽजातस्य । मन्ये । सहः । सहिष्ठ ।
तुरतः । तुरस्य । उग्रम् । उग्रस्य । तवसः । तवीयः । अरध्रस्य ।
रध्रऽतुरः । बभूव ॥ ४ ॥

पूर्वमंत्रे इन्द्रस्यबलसदसद्भावं सन्दिहानयाबलमस्त्येवेत्यवधारयन्नाह हियस्मादर्थे यस्मात्कारणात् हेसहिष्ठ बलवत्तमेन्द्र तुविजातस्य बहुयज्ञेषुप्रादुर्भूतस्य तुरतः अस्मान्हिंसतः तुरस्यशत्रूणांहिंसितुःबलवतोवा तेतव सहोबलं सदित् विद्यमानमेवाहंमन्ये उग्रस्य ओजस्विनः तवसः प्रवृद्धस्य अरध्रस्य शत्रुभिर्वशीकर्तुमशक्यस्य रधेर्वशीकरणार्थस्यरूपं रध्रतुरः वशीकरणीयानांसपत्नानांहिंसकस्यतव बलं बभूव भवत्येव कीदृशं उग्रं उद्गूर्णं तवीयः प्रवृद्धतरं यतस्त्वंवृत्रादीन्शत्रून्हंसि अतस्तेबलंविद्यतएवेत्यर्थः ॥ ४ ॥

४. तथापि हे बलवान् इन्द्र, तुम संसार के बहुत यज्ञों में प्रादुर्भूत हुए हो और हमारे शत्रुओं का विनाश किया है। तुममें प्रचण्ड और प्रवृद्ध बल है हम ऐसा समझते हैं। तुम ओजस्वी, समृद्धिसम्पन्न, शत्रुओं-द्वारा अजेय तथा जयशील शत्रुओं के निधनकर्त्ता हो।

तन्नः प्रत्नं सख्यमस्तु युष्मे इत्था वदद्भिर्वलमङ्गिरोभिः ।
हन्नच्युतच्युद्दस्मेषयन्तमृणोः पुरो वि दुरो अस्य विश्वाः ॥५॥४॥

तत् । नः । प्रत्नम् । सख्यम् । अस्तु । युष्मे इति । इत्था । वदत्ऽभिः ।
वलम् । अङ्गिरःऽभिः । हन् । अच्युतऽच्युत् । दस्म । इषयन्तम् ।
ऋणोः । पुरः । वि । दुरः । अस्य । विश्वाः ॥ ५ ॥ ४ ॥

प्रत्नं पुराणं चिरकालानुवर्तीत्यर्थः तत्प्रसिद्धं नोस्मदीयं सख्यं स्तुत्यस्तोतृलक्षणं सखित्वं हेइन्द्र युष्मे युष्मास्वस्तु पूजार्थंबहुवचनं हेअच्युतच्युत् अच्युतानां अविचलितानांच्यावक हेदस्म दर्शनीयेन्द्रत्वं इषयन्तं आयुधानिप्रेरयन्तं बलमेतन्नामानमसुरं इत्था सत्यमेव वदद्भि-स्त्वांस्तुवद्भिरंगिरोभिःसह हन् हतवानसि अपिच अस्यबलस्य पुरः नगराणि व्यृणोः व्यग-मयः वियुक्तान्यकार्षीरित्यर्थः विश्वाः सर्वाः दुरः पुरीणांद्वारश्चव्यृणोः ॥ ५ ॥

५. हे अविचलित पर्वतादि के संचालनकर्त्ता और मनोज्ञदर्शन इन्द्र, हम लोगों का चिरकालानुवर्ती सख्य चिरस्थायी हो। तुमने स्तवकारी अङ्गिराओं के साथ अस्त्रनिक्षेप करनेवाले बल नामक असुर का वध किया था एवं उसके नगरों और नगरों के द्वारों को उद्घाटित किया था। ॥ इतिचतुर्थस्यषष्ठेचतुर्थोवर्गः ॥ ४ ॥

अथषष्ठी—

स हि धीभिर्हव्यो अस्त्युग्र ईशानकृन्महति वृत्रतूर्ये ।
स तोकसाता तनये स वज्री वितन्तसाय्यो अभवत्समत्सु ॥ ६ ॥

सः । हि । धीभिः । हव्यः । अस्ति । उग्रः । ईशानऽकृत् । महति ।
वृत्रऽतूर्ये । सः । तोकऽसाता । तनये । सः । वज्री । वितन्तसाय्यः ।
अभवत् । समत्ऽसु ॥ ६ ॥

उग्रः ओजस्वी ईशानकृत् स्तोतॄनीशानान्समर्थान्करोतीतीशानकृत् सइन्द्रः महति प्र-भूते वृत्रतूर्ये संग्रामे वृत्रतूर्यइतिसंग्रामनामैतत् धीभिः स्तोतृभिः स्तुतिभिर्वा हव्योजयार्थिभि-राह्वातव्यः अस्ति भवति हिशब्दःपादपूरणः तोकसाता तोकस्यपुत्रस्यसातौलाभेनि॰िचे तनये तत्पुत्रे निमित्तेसति सइन्द्रआह्वातव्योस्ति वज्री वज्रवान् सइन्द्रः समत्सु संग्रामेषु वितंतसाय्यः विशेषेणविस्तार्यः स्तोत्रैर्वन्दनीयोभवत् भवति यद्वा तन्तसाय्यः शत्रूणांहिंसकः तंतसइतिधातु-र्हिंसाकर्मा तस्यकर्तरिरूपम् ॥ ६ ॥

६. ओजस्वी और स्तोताओं की सामर्थ्य को करनेवाले इन्द्र महान् संग्राम में स्तोताओं या स्तुतियों-द्वारा आहूत होते हैं। पुत्र, लाभ के लिए इन्द्र आहूत होते हैं। वज्रधारी इन्द्र संग्राम में विशेष रूप से वन्दनीय होते हैं।

समज्मनाजनिममानुषाणाममर्त्येननाम्नातिप्रसर्स्रे ।
सद्युम्नेनसशवसोतरायासवीर्येणनृतमःसमोकाः ॥ ७ ॥

सः । मज्मना । जनिम । मानुषाणाम् । अमर्त्येन । नाम्ना । अति । प्र । सर्स्रे । सः । द्युम्नेन । सः । शवसा । उत । राया । सः । वीर्येण । नृऽतमः । समऽओकाः ॥ ७ ॥

सइन्द्रः अमर्त्येन विनाशरहितेन नाम्ना शत्रूणांनमयित्रा मज्मना बलेन मज्मनेतिबलनामैतत् मानुषाणां मनुष्याणां जनिम जन्मसंघमित्यर्थः अतिप्रसर्स्रे अतिप्रपेदे सइन्द्रः द्युम्नेन यशसा समोकाः समानस्थानोभवति किंच सइन्द्रः शवसा बलेन समोकाभवति उतापिच नृतमोनेतृतमः सइन्द्रः राया धनेन वीर्येण सामर्थ्येनच समोकाभवति ॥ ७ ॥

७. इन्द्र ने विनाशरहित और शत्रुओं को अभिभूत करनेवाले बल-द्वारा मनुष्यों के जन्म को अतिशय प्राप्त किया है। इन्द्र यश-द्वारा समान स्थानवाले होते हैं और नेतृतम इन्द्र धन तथा सामर्थ्य के द्वारा समान स्थानवाले होते हैं।

सयोनमुहेनमिथूजनोभूत्सुमन्तुनामाचुमुरिंधुनिंच ।
वृणक्पिप्रुंशम्बरंशुष्णमिन्द्रःपुरांच्यौत्नायशयथायनूचित् ॥८॥

सः । यः । न । मुहे । न । मिथु । जनः । भूत् । सुमन्तुऽनामा । चुमुरिम् । धुनिम् । च । वृणक् । पिप्रुम् । शम्बरम् । शुष्णम् । इन्द्रः । पुराम् । च्यौत्नाय । शयथाय । नु । चित् ॥ ८ ॥

यइन्द्रः न मुहे संग्रामेकदापिनमुह्यति यश्च मिथु मिथ्यावृथा जनोजनयितानभून्नभवति किंतु सुमन्तुनामा प्रज्ञाननामा प्रख्यातनामेत्यर्थः सइन्द्रः पुरां शत्रुसंबन्धिनीनांपुरीणां च्यौत्नाय च्यवनाय नाशाय शयथाय शत्रूणांमरणायच नूचित् शीघ्रमेवकर्मकुरुतइतिशेषः तथा चुमुरिंधुनिंच एतन्नामकावसुरौ वृणगवृणक् हिंसितवानसि वृणक्तिर्हिंसाकर्मा अपिच पिप्रुं शंबरं शुष्णं एतन्नामकान्त्रीनसुरान् हिंसितवानसि ॥ ८ ॥

८. जो इन्द्र संग्राम में कभी भी कर्त्तव्य-विमूढ़ नहीं होते हैं, जो कभी भी वृथा वस्तुओं को उत्पन्न नहीं करते हैं; किन्तु जो प्रख्यात नामवाले हैं, वही इन्द्र शत्रुओं के नगरों को विनष्ट करने के लिए और शत्रुओं को मारने के लिए शीघ्र ही कार्यरत होते हैं। हे इन्द्र, तुमने चुमुरि, धुनि, पिप्रु, शम्बर और शुष्ण नामक असुरों को विनष्ट किया है।

उदावंतात्वक्षसापन्यसाचवृत्रहत्यायरथमिन्द्रतिष्ठ ।
धिष्ववज्रंहस्तआदक्षिणत्राभिप्रमन्दपुरुदत्रमायाः ॥ ९ ॥
उत्ऽअवंता । त्वक्षसा । पन्यसा । च । वृत्रऽहत्याय । रथम् ।
इन्द्र । तिष्ठ । धिष्व । वज्रम् । हस्ते । आ । दक्षिणऽत्रा । अभि ।
प्र । मन्द । पुरुऽदत्र । मायाः ॥ ९ ॥

हेइन्द्र उदवतोद्गच्छता अवतिरत्रगतिकर्मा त्वक्षसा शत्रूणांतनूकर्त्रा पन्यसा स्तुत्यतरेणबलेनयुक्तस्त्वं वृत्रहत्याय शत्रुहननाय स्वकीयंरथंच तिष्ठ आरोह तथा दक्षिणत्रा दक्षिणहस्तेपाणौ वज्रं स्वकीयमायुधं आधिष्व आधत्स्व तदनंतरं हेपुरुदत्र बहुधनेन्द्र त्वं आसुरीर्मायाः अभि अभिगम्य प्रमन्द प्रकर्षेण जहि अत्रमन्दतिर्वधकर्मा ॥ ९ ॥

९. हे इन्द्र, तुम ऊद्र्ध्वगामी और शत्रुओं के संहारकर्त्ता हो। तुम स्तवनीय बल से युक्त होकर शत्रुओं को मारने के लिए अपने रथ पर आरोहण करो। दक्षिण हस्त में अपने अस्त्र वज्र को धारण करो। हे बहु-धनवाले इन्द्र, तुम जाकर आसुरी माया को विशेष प्रकार से उच्छिन्न करो।

अग्निर्नशुष्कंवनमिन्द्रहेतीरक्षोनिधक्ष्यशनिर्नभीमा ।
गम्भीरयऋष्वयायोरुरोजाध्वानयद्दुरितादम्भयच्च ॥ १० ॥ ५ ॥
अग्निः । न । शुष्कम् । वनम् । इन्द्र । हेतिः । रक्षः । नि । धक्षि ।
अशनिः । न । भीमा । गंभीरया । ऋष्वया । यः । रुरोज ।
अध्वनयत् । दुःऽइता । दंभयत् । च ॥ १० ॥ ५ ॥

अग्निर्न अग्निरिव नशब्दउपमार्थीयः यथाअग्निःशुष्कंनीरसंवनंवृक्षसमूहंदहति हेइन्द्र हेतिस्त्वदीयंवज्रं तद्वच्छत्रून्नाशयति तदेवाह अशनिर्नभीमा यथाअशनिर्भीमाभवति तद्वद्भयंकरस्त्वं रक्षोराक्षसं निधक्षि वज्रेण नितरांदह यइन्द्रः गंभीरया शत्रुभिरधर्षणीयया ऋष्वया महत्या ऋष्वइतिमहन्नामैतत् हेत्या रुरोज शत्रून्बभंज अध्वनयत् युद्धेगर्जनलक्षणंशब्दंकरोति तथाच दुरिता दुरितानि दंभयच्चभिनत्तिच सत्वंरक्षोनिधक्षीतिपूर्वेणान्वयः ॥ १० ॥

१०. हे इन्द्र, अग्नि जिस प्रकार से नीरस वृक्षों को दग्ध करते हैं, उसी प्रकार तुम्हारा वज्र शत्रुओं को नष्ट करता है। तुम वज्र की तरह भयंकर हो। तुम वज्र-द्वारा राक्षसों को अतिशय भस्मसात् करो। इन्द्र ने अनभिभूत और महान् वज्र-द्वारा शत्रुओं को भग्न किया है। इन्द्र संग्राम में शब्द करते हैं और समस्त दुरितों का भेदन करते हैं।


॥ इतिचतुर्थस्यषष्ठेपंचमोवर्गः ॥ ५ ॥

आसहस्रंपथिभिरिन्द्रराया तुविद्युम्नतुविवाजेभिरर्वाक् ।
याहिसूनोसहसोयस्यनूचिददेवईशेपुरुहूतयोतोः ॥ ११ ॥

आ । सहस्रम् । पथिऽभिः । इन्द्र । राया । तुविऽद्युम्न ।
तुविऽवाजेभिः । अर्वाक् । याहि । सूनो इति । सहसः । यस्य ।
नु । चित् । अदेवः । ईशे । पुरुऽहूत । योतोः ॥ ११ ॥

हेतुविद्युम्न बहुधन हेसहसःसूनो बलस्यपुत्रेन्द्र ओजसोजातमुतमन्यएनमितिनिगमान्तरे बलपुत्रत्वंप्रसिद्धं राया धनेन युक्तस्त्वं सहस्रं सहस्रेण बहुभिरित्यर्थः तुविवाजेभिः बहुबलैः पथिभिः पतन्ति गच्छंत्यमीभिरितिपंथानोवाहाः तैअर्वाक् मदभिमुखःसन् आयाह्यागच्छ हे-पुरुहूत बहुभिराहूतेन्द्र यस्यतव योतोः बलादिभिःपृथक्कर्तुं अदेवः कश्चिदसुरः नूचिदीशे नेष्टे अत्रनूचिदितिनिषेधार्थेवर्तते ॥ ११ ॥

११. हे बहुधन-सम्पन्न, बहुतों के द्वारा आहूत, बलपुत्र इन्द्र, कोई भी असुर तुम्हें बल से पृथक् करने में समर्थ नहीं हो सकता है। धन से युक्त होकर तुम असंख्य बलशाली वाहनों के द्वारा हमारे अभिमुख आगमन करो।

प्रतुविद्युम्नस्यस्थविरस्यघृष्वेर्दिवोररप्शेमहिमापृथिव्याः ।
नास्यशत्रुर्नप्रतिमानमस्तिनप्रतिष्ठिःपुरुमायस्यसह्योः ॥ १२ ॥

प्र । तुविऽद्युम्नस्य । स्थविरस्य । घृष्वेः । दिवः । ररप्शे । महिमा ।
पृथिव्याः । न । अस्य । शत्रुः । न । प्रतिऽमानम् । अस्ति । न ।
प्रतिऽस्थिः । पुरुऽमायस्य । सह्योः ॥ १२ ॥

तुविद्युम्नस्य बहुयशसोबहुधनस्यवा स्थविरस्य प्रवृद्धस्य घृष्वेः शत्रूणांघर्षकस्येन्द्रस्य महिमामहत्त्वं दिवोद्युलोकात् पृथिव्याः भूमेश्च प्रररप्शे प्रररिचे विरप्शीतिमहन्नामसुपाठात् नाम्नांचप्रायेणधातुजत्वाद्रप्शतिरत्रातिशयवाची पुरुमायस्य बहुप्रज्ञस्य सह्योः शत्रूणामभिभवितुरस्येन्द्रस्य शत्रुःशातयितानास्ति प्रतिमानं प्रतिनिधिर्नास्ति अस्यप्रतिष्ठिः प्रतिष्ठा आश्रयो-नास्ति सएव सर्वस्यप्रतिष्ठेत्यर्थः ॥ १२ ॥

१२. बहुत धनवाले या बहुत यशवाले, शत्रुओं के निहन्ता और प्रवर्धमान इन्द्र की महिमा द्यावा-पृथिवी से भी महान् है। बहुत बुद्धिवाले और शत्रुओं को अभिभूत करनेवाले इन्द्र का कोई शत्रु नहीं है, कोई प्रतिनिधि नहीं है और न कोई आश्रय है।

प्रतत्तेअद्याकरणंकृतंभूत्कुत्संयदायुमतिथिग्वमस्मै ।
पुरूसहस्रानिशिशाअभिक्षामुत्तूर्वयाणंधृषतानिनेथ ॥ १३ ॥

---

१ ऋ० सं० ८. ३. ४.

प्र । तत् । ते । अद्य । करणम् । कृतम् । भूत् । कुत्सम् । यत् ।
आयुम् । अतिथिऽग्वम् । अस्मै । पुरु । सहस्रा । नि । शिशाः ।
अभि । क्षाम् । उत् । तूर्वयाणम् । धृषता । निनेथ ॥ १३ ॥

अद्येदानीमपि हेइन्द्र ते त्वया कृतंकरणं तत्कर्म प्रभूत् प्रभवति प्रकाशते किंतदिति उच्यते कुत्सं शुष्णाद्राक्षसादेतन्नामानमृषिंच आयुं शत्रुभ्यःसकाशादेतत्संज्ञकं पौरूरवसं अतिथिग्वं अतिथीनामभिगन्तारं दिवोदासंच शंबराद्ररक्षिथेतियत्करणंतत्प्रभवतीतिपूर्वेणसंबन्धः ररक्षिथेतिद्वितीयाश्रुतेरुचितक्रियाध्याहारः अपिचास्मै अनंतरोक्तायातिथिग्वाय पुरु पुरूणि बहूनि सहस्रासहस्राणि शंबरस्यधनानि निशिशाः अददाः इन्द्रःशंबरंहत्वा तस्यधनानिदिवोदासायददावित्यर्थः तथा हेइन्द्र धृषता धर्षणेन त्वदीयेनवज्रेण शंबरं हत्वा क्षां पृथिवीं अभि अभिलक्ष्य पृथिव्यांवर्तमानं तूर्वयाणं त्वरितगमनं दिवोदासंउन्निनेथ आपद्भ्यःउदगमयः॥१३॥

१३. हे इन्द्र, तुम्हारा वह कर्म प्रकाशित होता है। तुमने शुष्ण नामक राक्षस से कुत्स को और शत्रुओं के समीप से आयु तथा दिवोदास की रक्षा की थी। तुमने हम अतिथिग्व को शम्बर के समीप से बहुत धन प्रदान किया था। हे इन्द्र, तुमने विजयी वज्र-द्वारा शम्बर को मार करके पृथिवी में वर्तमान शीघ्र गमन करनेवाले दिवोदास को विपद् से बचाया था।

अनुक्रीनाद्ध्येकाहेमरुत्वतीयशस्त्रे अनुत्वाहिघ्नइतिसूक्तमुखीया सूत्रितंच—अनुत्वाहिघ्ने-अधदेवदेवाअनुतेदायिमहइन्द्रियायेति ।

सैषासूक्तेचतुर्दशी—

अनुत्वाहिघ्नेअधदेवदेवामदन्विश्वेकवितमंकवीनाम् ।
करोयत्रवरिवोबाधितायदिवेजनायतन्वेगृणानः ॥ १४ ॥

अनु । त्वा । अहिऽघ्ने । अध । देव । देवाः । मदन् । विश्वे ।
कविऽतमम् । कवीनाम् । करः । यत्र । वरिवः । बाधिताय ।
दिवे । जनाय । तन्वे । गृणानः ॥ १४ ॥

हेदेव द्योतमानेन्द्र त्वा त्वां अधास्मिन्काले विश्वे सर्वेदेवाःस्तोतारः अहिघ्ने मेघहननाय वृष्टिप्रदानायेत्यर्थः अनुमदन्ननुमदन्ति अनुस्तुवन्ति कीदृशंत्वां कवीनां मेधाविनांमध्ये कवितमं अत्यंतकविं यत्र यस्मिन्काले गृणानः स्तोतृभिःस्तूयमानः त्वं बाधिताय दारिद्र्यादिभिःपीडिताय दिवे स्तोत्रेजनाय तन्वे स्तोतॄणांतनयायच वरिवोधनं करः अकरोः अददाः अथवा हेदेवेन्द्र अथास्मिन्काले विश्वे सर्वेदेवाः सुराः अहिर्वृत्रएवोच्यते तस्यहननाय कवीनांकवितमंत्वां अनुमदन्ति यत्र यस्मिंस्तोत्रेसति बाधितायासुरैःपीडिताय दिवे द्युलोकनिवासाय जनाय तन्वे शोभायै वृत्रहननेन तवशोभार्थं वरिवश्चकर्थ ॥ १४ ॥

१४. हे द्युतिमान् इन्द्र, सम्पूर्ण स्तोता लोग अभी मेघ को विनष्ट करने के लिए अर्थात् वृष्टि प्रदान करने के लिए तुम्हारा स्तवन कर रहे हैं। तुम सम्पूर्ण मेधावियों में श्रेष्ठ हो। स्तोताओं के स्तवन से प्रसन्न होकर तुम दारिद्र्यादि से पीड़ित यजमानों और उनके पुत्रों को धन प्रदान करते हो। अथपंचदशी—

अनुद्यावापृथिवीतत्तओजोमर्त्याजिहतइन्द्रदेवाः।
कृष्वाकृत्नोअकृतंयत्तेअस्त्युक्थंनवीयोजनयस्वयज्ञैः ॥१५॥ ६॥

अनु। द्यावापृथिवी इति। तत्। ते। ओजः। अमर्त्याः। जिहते।
इन्द्र। देवाः। कृष्व। कृत्नो इति। अकृतम्। यत्। ते। अस्ति।
उक्थम्। नवीयः। जनयस्व। यज्ञैः॥ १५॥ ६॥

हेइन्द्र ते त्वदीयं तत्प्रसिद्धमोजोबलं द्यावापृथिवी अनुजिहते अनुजिहाते अमर्त्याअमरणधर्माणोदेवास्त्वदीयंबलं अनुजिहाते अनुगच्छन्ति हेकृत्नो बहूनांकर्मणांकर्तः तेत्वदीयं अकृतं यत्कर्मास्ति तत्कृष्व कुरुष्व तदनन्तरं यज्ञैर्यज्ञेषु नवीयोनवतरं उक्थं स्तोत्रं जनयस्व॥ १५॥

१५. हे इन्द्र, द्यावा-पृथिवी और अमरदेव तुम्हारे बल को स्वीकार करते हैं। हे बहुत कार्य के करनेवाले इन्द्र, तुम असम्पादित कार्यों का अनुष्ठान करो और उसके अनन्तर यज्ञ में नवीनतर स्तोत्र को उत्पन्न करो। ॥ इतिचतुर्थस्यषष्ठेषष्ठोवर्गः॥ ६॥

महाँइन्द्रइतित्रयोदशर्चंचतुर्थंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रं अनुक्रान्तंच महान्सप्तोनेति माध्यंदिनसवनेसोमातिरेकेएकंशस्त्रंभवति तत्रेदंसूक्तं सूत्रितंच—महाँइन्द्रोनृवद्विष्णोर्नुकमिति समूळ्हेद्वितीयेछन्दोमेमरुत्वतीयशस्त्रेएतत्सूक्तं सूत्रितंच महाँइन्द्रोनृवदितिमरुत्वतीयमिति।

महाँइन्द्रोनृवदाचर्षणिप्राउतद्विबर्हाअमिनःसहोभिः।
अस्मद्र्यग्वावृधेवीर्यायोरुःपृथुःसुकृतःकर्तृभिर्भूत्॥ १॥

महान्। इन्द्रः। नृऽवत्। आ। चर्षणिऽप्राः। उत। द्विऽबर्हाः।
अमिनः। सहःऽभिः। अस्मद्र्यक्। ववृधे। वीर्याय। उरुः। पृथुः।
सुऽकृतः। कर्तृऽभिः। भूत्॥ १॥

नृवत् यथा नेताराजाभृत्यादीनांकामानांपूरयितातद्वत् चर्षणिप्राः चर्षणीनां स्तोतृजनानांकामानांपूरकः महान् प्रभूतइन्द्रआगच्छतु आइत्युपसर्गदर्शनाद्गच्छत्वित्याख्यातस्याध्याहारः उतापिच द्विबर्हाः द्वयोर्लोकयोःपरिवृढः सहोभिः शत्रुबलैः अमिनः अहिंसनीयइन्द्रः अस्मद्र्यक् अस्मदभिमुखंयथाभवतितथा वीर्याय वीरकर्मकरणाय ववृधे वर्धते उरुः शरीरेणविस्तीर्णः पृथुगुणैः प्रथितः कर्तृभिर्यजमानैः सुकृतोभूत् सुष्ठुपरिचरितोभवति॥ १॥

१. राजा की तरह स्तोता मनुष्यों की कामनाओं के पूरक प्रभूत इन्द्र आगमन करें। दोनों लोकों के ऊपर पराक्रम को विस्तारित करनेवाले और शत्रुओं-द्वारा अहिंसनीय इन्द्र हम लोगों के निकट वीरत्व प्रकाशित करने के लिए वर्द्धित होते हैं। इन्द्र विस्तीर्ण शरीरवाले और प्रख्यात गुणवाले हैं। वे यजमानों-द्वारा भली भाँति से परिचित होते हैं।

इन्द्रमेवधिषणासातयेंधाद्बृहन्तमृष्वमजरंयुवानम्।
अषाह्ळेनशवसाशूशुवांसंसद्यश्चिद्योवावृधेअसामि ॥ २ ॥

इन्द्रम्। एव। धिषणा। सातये। धात्। बृहन्तम्। ऋष्वम्। अजरम्। युवानम्। अषाह्ळेन। शवसा। शूशुऽवांसम्। सद्यः। चित्। यः। ववृधे। असामि ॥ २ ॥

धिषणा अस्मदीयास्तुतिः सातये दानाय इन्द्रमेवधात् धारयति कीदृशं बृहन्तं महान्तं ऋष्वं गन्तारं अजरं जरारहितं युवानं नित्यतरुणं अषाह्ळेन शत्रुभिरनभिभूतेन शवसा बलेन शूशुवांसं प्रवृद्धं श्वयतेरिदंरूपं यइन्द्रः सद्यश्चित् सद्यएवजातमात्रःसन् असामि अनल्पं अधिकंयथाभवतितथा ववृधे वर्धते ॥ २ ॥

२. इन्द्र उत्पन्न होते ही अत्यधिक वर्द्धमान होते हैं। हमारी स्तुति दान के लिए इन्द्र को धारण करती है। इन्द्र महान्, गमनशील, जरा-रहित, युवा और शत्रुओं-द्वारा अनभिभूत होनेवाले बल से वर्द्धमान हैं।

पृथूकरस्नाबहुलागभस्तीअस्मद्र्य१क्संमिमीहिश्रवांसि।
यूथेवपश्वःपशुपादमूनाअस्माँइन्द्राभ्यावंवृत्स्वाजौ ॥ ३ ॥

पृथू इति। करस्ना। बहुला। गभस्ती इति। अस्मद्र्यक्। सम्। मिमीहि। श्रवांसि। यूथाऽइव। पश्वः। पशुऽपाः। दमूनाः। अस्मान्। इन्द्र। अभि। आ। ववृत्स्व। आजौ ॥ ३ ॥

हेइन्द्र त्वं पृथूविस्तीर्णौ करस्ना कर्मणांकर्तारौ बहुला बहुप्रदौ गभस्ती त्वदीयौबाहू श्रवांस्यन्नानि दातुमितिशेषः अस्मद्र्यक् अस्मदभिमुखं संमिमीहि कुरु किंच हेइन्द्र दमूनाः दान्तमनास्त्वं आजौ संग्रामे अस्मानभ्याववृत्स्व अभ्यावर्तस्व तत्रदृष्टान्तः—पशुपाः पशूनांपालकः पश्वः पशूनांयूथेव यूथानियथावर्तयतितद्वत् ॥ ३ ॥

३. हे इन्द्र, तुम अन्नदान करने के लिए हम लोगों के अभिमुख अपने विस्तीर्ण, कार्यकर्त्ता और अतिशय दानशील हाथों को करो। हे इन्द्र, तुम शान्त मनवाले हो। पशुपालक जिस प्रकार से पशुओं के समूह को संचारित करता है, उसी प्रकार तुम संग्राम में हम लोगों को संचारित करो।

तंवइन्द्रंचतिनंमस्यशाकैरिहनूनंवाजयन्तोहुवेम ।
यथाचित्पूर्वेजरितारआसुरनेद्याअनवद्याअरिष्टाः ॥ ४ ॥

तम् । वः । इन्द्रम् । चतिनम् । अस्य । शाकैः । इह । नूनम् । वाजऽयन्तः । हुवेम । यथा । चित् । पूर्वे । जरितारः । आसुः । अनेद्याः । अनवद्याः । अरिष्टाः ॥ ४ ॥

नूनमद्य इहास्मिन्यज्ञे वाजयन्तः अन्नमिच्छन्तोवयं स्तोतारः शाकैः शक्तैः समर्थैः अस्य तवसहायैर्मरुद्भिःसहितं चतिनं शत्रूणांचातकं नाशकमित्यर्थः हेइन्द्र परमेश्वरं तं वः प्रसिद्धंत्वां हुवेम स्तुमः यथाचिद्यथैव पूर्वे पुरातनाः जरितारः स्तोतारः अनेद्याः अनिंद्याः अनवद्याः पापरहिताः अरिष्टाः अहिंसिताश्च आसुः बभूवुः हेइन्द्र त्वत्प्रसादाद्वयमपि तथैवभवेमेत्यर्थः॥४॥

४. हम स्तोता लोग अन्नाभिलाषी होकर इस यज्ञ में समर्थ सहायक मरुतों के साथ शत्रुनिहन्ता प्रसिद्ध इन्द्र का स्तवन करते हैं। हे इन्द्र, तुम्हारे पुरातन स्तोता की तरह हम लोग भी अनिन्द्य, पापरहित और अहिंसित हों।

धृतव्रतोधनदाःसोमवृद्धःसहिवामस्यवसुनःपुरुक्षुः ।
संजग्मिरेपथ्याउरायोअस्मिन्त्समुद्रेनसिन्धवोयादमानाः॥५॥७॥

धृतऽव्रतः । धनऽदाः । सोमऽवृद्धः । सः । हि । वामस्य । वसुनः । पुरुऽक्षुः । सम् । जग्मिरे । पथ्याः । रायः । अस्मिन् । समुद्रे । न । सिन्धवः । यादमानाः ॥ ५ ॥ ७ ॥

सहि सखल्विन्द्रः धृतव्रतोधनकर्मा धनदाः सएवधनप्रदः कीदृशस्यधनस्येत्याकांक्षायां उपसर्जनीभूतस्यापिधनस्यविशेषणे वामस्य वसुनइति वामस्य वननीयस्य वसुनः श्रेष्ठस्य यद्वा वसुनोधनस्यस्वामीतिशेषः सोमवृद्धः सएवसोमेप्रवृद्धः पुरुक्षुः बह्वन्नः सएव अस्मिन्निन्द्रएव पथ्याः स्तोतॄणांहितानि रायोधनानि संजग्मिरे संगच्छन्ते तत्रदृष्टान्तः—सिन्धवोनद्यः समुद्रेन यथासमुद्रे यादमानाअभिगच्छन्तः तद्वत् ॥ ५ ॥

५. जिस तरह नदियाँ प्रवाहित होकर समुद्र में निपतित होती हैं, उसी प्रकार स्तोताओं का हितकर धन इन्द्र के प्रति गमन करता है। इन्द्र धन से कर्म करनेवाले, वाञ्छित धन के स्वामी और सोमरस-द्वारा प्रवर्द्धमान हैं।

॥ इतिचतुर्थस्यषष्ठेसप्तमोवर्गः ॥ ७ ॥

शविष्ठंनआभरशूरशवओजिष्ठमोजोअभिभूतमुग्रम् ।
विश्वाद्युम्नावृष्ण्यामानुषाणामस्मभ्यंदाहरिवोमादयध्यै ॥६॥

शविष्ठम् । नः । आ । भर । शूर । शवः । ओजिष्ठम् । ओजः ।

अभिऽभूते । उग्रम् । विश्वा । द्युम्ना । वृष्ण्या । मानुषाणाम् ।
अस्मभ्यम् । दाः । हरिऽवः । मादयध्यै ॥ ६ ॥

हेशूर विक्रान्तेन्द्र शविष्ठं बलवत्तमं शवोबलं नोस्मभ्यं आभराहर हेअभिभूते शत्रूणामभिभावुकेन्द्र उग्रमप्रसह्यं ओजिष्ठमोजस्वितमं ओजोदीप्तिमस्मभ्यंआभर विश्वा विश्वानि सर्वाणि वृष्ण्या वृष्ण्यानि सेचनसमर्थानि द्युम्ना द्युम्नानिद्योतमानानि यानिधनानि मानुषाणां मनुष्याणां भोग्यतयाकल्पितानि हेहरिवः हरिवन्निन्द्र तानिधनानि मादयध्यै अस्मान्मादितुं अस्मभ्यंदाः प्रयच्छ ॥ ६ ॥

६. हे पराक्रमशाली इन्द्र, तुम हम लोगों को प्रकृष्टतम बल प्रदान करो। हे शत्रुओं को अभिभूत करनेवाले इन्द्र, तुम हम लोगों को असह्य और अतिशय ओजस्वी दीप्ति प्रदान करो। हे अश्ववाले इन्द्र, तुम हम लोगों को सेचन-समर्थ, द्युतिमान् और मनुष्यों के भोग्य के लिए कल्पित सम्पूर्ण धन प्रदान करो।

यस्तेमदःपृतनाषाळमृध्रइन्द्रतंनआभरशूशुवांसम् ।
येनतोकस्यतनयस्यसातौमंसीमहिजिगीवांसस्त्वोताः ॥ ७ ॥

यः । ते । मदः । पृतनाषाट् अमृध्रः । इन्द्र । तम् । नः । आ ।
भर । शूशुऽवांसम् । येन । तोकस्य । तनयस्य । सातौ । मंसीमहि ।
जिगीवांसः । त्वाऽऊताः ॥ ७ ॥

पृतनाषाट् शत्रुसेनानामभिभविता अमृध्रः अहिंसितः योमदोहर्षः हेइन्द्र ते त्वयादेयः शूशुवांसं मवृद्धं तं मदं नोस्मभ्यमाभराहर त्वोतास्त्वयारक्षिताः जिगीवांसोजितवन्तोवयं तोकस्य पुत्रस्य तनयस्य तत्पुत्रस्यच सातौ लाभेनिमित्तभूतेसति येनहर्षेण मंसीमहि त्वांस्तुवीमहि तमाभरेतिपूर्वेणान्वयः ॥ ७ ॥

७. हे इन्द्र, तुम हम लोगों को शत्रु-सेनाओं को अभिभूत करनेवाला और अहिंसित हर्ष प्रदान करो। तुम्हारे द्वारा रक्षित होकर हम लोग जयशील हों। पुत्र-पौत्र के लाभ के निमित्त हम लोग उसी हर्ष से तुम्हारा स्तवन करें।

आनोभरवृषणंशुष्ममिन्द्रधनस्पृतंशूशुवांसंसुदक्षम् ।
येनवंसामपृतनासुशत्रून्तवोतिभिरुतजामीँरजामीन् ॥ ८ ॥

आ । नः । भर । वृषणम् । शुष्मम् । इन्द्र । धनऽस्पृतम् ।
शूशुऽवांसम् । सुऽदक्षम् । येन । वंसाम । पृतनासु । शत्रून् ।
तव । ऊतिऽभिः । उत । जामीन् । अजामीन् ॥ ८ ॥

हेइन्द्र त्वं वृषणं वर्षितारं शुष्मं सेनालक्षणंबलं नोस्मभ्यं आभराहर कीदृशं धनस्पृतं धनस्यपालकं शूशुवांसं मवृद्धं सुदक्षं शोभनबलं हेइन्द्र तवोतिभिः त्वदीयाभीरक्षाभिः पृत-

नासु-संग्रामेषु पृतनाइतिसंग्रामनाम येनबलेन शत्रून्वंसाम हनाम उतेत्यप्रभिन्नक्रमः जामीन् बन्धून् उतापिच अजामीन् शत्रूंश्च येनशुष्मेण वंसाम तंशुष्ममाभरेतिपूर्वेणसंबन्धः ॥ ८ ॥

८. हे इन्द्र, तुम हम लोगों को अभिलाषपूरक सेनारूप बल प्रदान करो। वह (बल) धन का पालक, प्रवृद्ध और शोभन बल हो। हे इन्द्र, तुम्हारी रक्षा-द्वारा हम संग्राम में जिस बल से आत्मीय तथा अपरिचित शत्रुओं का वध कर सकें।

आतेशुष्मोवृषभएतुपश्चादोत्तरादधरादापुरस्तात् ।
आविश्वतोअभिसमेत्वर्वाङिन्द्रद्युम्नंस्वर्वद्धेह्यस्मे ॥ ९ ॥

आ । ते । शुष्मः । वृषभः । एतु । पश्चात् । आ । उत्तरात् ।
अधरात् । आ । पुरस्तात् । आ । विश्वतः । अभि । सम् । एतु ।
अर्वाङ् । इन्द्र । द्युम्नम् । स्वःऽवत् । धेहि । अस्मे इति ॥ ९ ॥

हेइन्द्र वृषभः वर्षिता ते त्वदीयं शुष्मोबलं अर्वाङस्मदभिमुखःसन् पश्चात् पश्चिमभागात् एतु आगच्छतु उत्तरादुत्तरभागादागच्छतु अधरा दक्षिणाच्चएतु पुरस्तात् पूर्वभागाच्चगच्छतु विश्वतः सर्वस्माद्दिग्भागात् अभि अस्मानभिलक्ष्यआसमेतु सम्यगागच्छतु हेइन्द्र त्वं स्वर्वत् सुखयुक्तं द्युम्नं धनं अस्मे अस्मभ्यं धेहि प्रयच्छ ॥ ९ ॥

९. हे इन्द्र, तुम्हारा अभीष्टवर्षी बल पश्चिम, उत्तर, दक्षिण और पूर्व की ओर से हमारे अभिमुख आगमन करे। वह प्रत्येक दिशा होकर हमारे निकट आगमन करे। तुम हम लोगों को सब प्रकार के साथ धन प्रदान करो।

नृवत्तइन्द्रनृतमाभिरूतीवंसीमहिवामंश्रोमतेभिः ।
ईक्षेहिवस्वउभयस्यराजन्धारत्नंमहिस्थूरंबृहन्तम् ॥ १० ॥

नृऽवत् । ते । इन्द्र । नृऽतमाभिः । ऊती । वंसीमहि । वामम् ।
श्रोमतेभिः । ईक्षे । हि । वस्वः । उभयस्य । राजन् । धाः ।
रत्नम् । महि । स्थूरम् । बृहन्तम् ॥ १० ॥

नृवत् मनुष्यैःपरिचारकजनैर्युक्तं श्रोमतेभिः श्रोतव्यैर्यशोभिः सहितं वामं वननीयंधनं हेइन्द्र ते त्वत्तः नृतमाभिः नेतृतमाभिः ऊतीऊतिभीरक्षाभिः वंसीमहि वयंसंभजेमहि हियस्मात्कारणात् हेराजन् राजमानेन्द्र त्वं उभयस्य पार्थिवस्यदिव्यस्यच वस्वो-धनस्य ईक्षेईशिषे तस्मात्कारणात् महि महान्तं स्थूरं विपुलं बृहन्तं गुणैःपरिवृढं रत्नं रमणीयं धनं अवरत्नशब्दःपुंल्लिंगः धाः धेहि ॥ १० ॥

१०. हे इन्द्र, परिचारकों से युक्त और श्रोतव्य यश के साथ हम लोग श्रेष्ठ धन का उपभोग, तुम्हारी रक्षा के द्वारा, करते हैं। हे राजमान इन्द्र, तुम पार्थिव और दिव्य धन के अधिपति हो; अतएव तुम हम लोगों को महान्, असीम एवम् गुणयुक्त रत्न प्रदान करो।

मरुत्वन्तंवृषभंवावृधानमकवारिंदिव्यंशासमिन्द्रम्।

विश्वासाहमवसेनूतनायोग्रंसहोदामिहतंहुवेम ॥ ११ ॥

मरुत्वन्तम्। वृषभम्। ववृधानम्। अकवऽअरिम्। दिव्यम्।

शासम्। इन्द्रम्। विश्वऽसहम्। अवसे। नूतनाय। उग्रम्।

सहःऽदाम्। इह। तम्। हुवेम ॥ ११ ॥

इहास्मिन्यज्ञे नूतनाय अभिनवाय अवसे रक्षणाय तं प्रसिद्धं इन्द्रं हुवेम स्तुमः आह्वयामोवा कीदृशं मरुत्वंतं मरुद्भिर्युक्तं वृषभं कामानांवर्षितारं ववृधानं प्रवृद्धं अकवारिं अकुत्सितशत्रुंदिव्यं द्योतमानं शासं शासितारं विश्वसहं विश्वस्यलोकस्याभिभवितारं उग्रमोजस्विनं सहोदां बलप्रदं ॥ ११ ॥

११. हम लोग अभिनव रक्षा के लिए इस यज्ञ में प्रसिद्ध इन्द्र का आह्वान करते हैं। वे मरुतों के साथ युक्त, अभीष्टवर्षी, समृद्ध, शत्रुओं के द्वारा अकुत्सित (अकदर्य), दीप्तिमान्, शासनकारी, लोक का अभिभव करनेवाले, प्रचण्ड और बलप्रद हैं।

जनंवज्रिन्महिचिन्मन्यमानमेभ्योनृभ्योरन्धयायेष्वस्मि।

अधाहित्वापृथिव्यांशूरसातौहवामहेतनयेगोष्वप्सु ॥ १२ ॥

जनम्। वज्रिन्। महि। चित्। मन्यमानम्। एभ्यः। नृऽभ्यः।

रन्धय। येषु। अस्मि। अध। हि। त्वा। पृथिव्याम्। शूरऽसातौ।

हवामहे। तनये। गोषु। अप्ऽसु ॥ १२ ॥

येषु येषांनृणांमध्ये अहमस्मि एकोभवामि हेवज्रिन् वज्रवन्निन्द्र त्वं एभ्योनृभ्योमनुष्येभ्यः महि महदत्यन्तमात्मानंमन्यमानंजनं बहुमन्यमानमित्यर्थः रन्धय वशीकुरु चिदिति पादपूरणः अधाधुना पृथिव्यां भूम्यां शूरसातौ युद्धे प्रवृत्तेसति तनये पुत्रेनिमित्तेच गोषु पशुषु अप्सु उदकेषुचनिमित्तेषु हेइन्द्र त्वा द्युलोकेस्थितं त्वां हवामहे वयमाह्वयामः ॥ १२ ॥

१२. हे वज्रधर, हम जिन मनुष्यों के मध्य में वर्तमान हैं, उन मनुष्यों से अपने को अधिक माननेवाले व्यक्ति को तुम वशीभूत करो। हम लोग अभी इस लोक में युद्ध के समय में एवम् पुत्र, पशु और उदक लाभ के निमित्त तुम्हारा आह्वान करते हैं।

वयन्तएभिःपुरुहूतसख्यैःशत्रोःशत्रोरुत्तरइत्स्याम।

घ्नन्तोवृत्राण्युभयानिशूररायामदेमबृहतात्वोताः ॥ १३ ॥ ८ ॥

वयम्। ते। एभिः। पुरुऽहूत। सख्यैः। शत्रोःऽशत्रोः। उत्ऽतरे।

इत्। स्याम। घ्नन्तः। वृत्राणि। उभयानि। शूर। राया। मदेम।

बृहता। त्वाऽऊताः ॥ १३ ॥ ८ ॥

हेपुरुहूत बहुभिराहूतेन्द्र एभिः सिद्धैः सख्यैः स्तोत्रलक्षणैः सखिकर्मभिः ते त्वयासहव-यं उभयानि जामिरूपाण्यजामिरूपाणि वृत्राण्यमित्राणि घ्नन्तः हिंसन्तः शत्रोःशत्रोः सर्वस्मा-च्छत्रोउत्तरइत्स्याम अधिकाएवभवेम हेशूर विक्रान्तेन्द्र त्वोताः वयं त्वयारक्षिताःसन्तः बृहता महता राया धनेन मदेम हृष्याम ॥ १३ ॥

१३. हे बहुजनाहूत इन्द्र, हम लोग इन स्तोत्र रूप सखिकर्म के द्वारा तुम्हारे साथ समुदित शत्रुओं का संहार करें और उनकी अपेक्षा प्रबल हों। हे पराक्रमवान् इन्द्र, हम लोग तुम्हारे द्वारा रक्षित होकर महान् धन से प्रसन्न हों।

॥ इतिचतुर्थस्यषष्ठेऽष्टमोवर्गः ॥ ८ ॥

द्यौर्नयइन्द्रेतित्रयोदशर्चंपंचमंसूक्तं भरद्वाजस्यार्षमैन्द्रं त्रैष्टुभं विपिप्रोरित्येषासप्तमी दशा-क्षरचतुष्टययुक्ताविराट् अनुक्रम्यतेच—द्यौर्नविपिप्रोर्विराडिति पृष्ठ्यषडहस्यषष्ठेहनितृतीयसवने उक्थ्यस्तोत्राणि यदिद्विपदासुस्तुवीरन् यदिवाग्निष्टोमसंस्थः स्यात् तदानीं माध्यंदिनसवने अ-च्छावाकः स्वशस्त्रे आरंभणीयाभ्यऊर्ध्वमेतत्सूक्तंशंसेत् सूत्रितंच—द्यौर्नयइन्द्रेत्यच्छावाकइति इदमेवसूक्तमिन्द्राविष्णोरुत्क्रान्तिनाह्येकाहंनिष्केवल्यनिविद्धानं द्यौर्नयइन्द्रेतिमाध्यंदिनइति ।

द्यौर्नयइन्द्राभिभूमार्यस्तस्थौरयिःशवसापृत्सुजनान् ।
तंनःसहस्रभरमुर्वरासांदद्धिसूनोसहसोवृत्रतुरम् ॥ १ ॥

द्यौः । न । यः । इन्द्र । अभि । भूम । अर्यः । तस्थौ । रयिः । शवसा । पृत्ऽसु । जनान् । तम् । नः । सहस्रऽभरम् । उर्वराऽसाम् । दद्धि । सूनो इति । सहसः । वृत्रऽतुरम् ॥ १ ॥

योरयिः पुत्ररूपंधनं शवसा बलेन पृत्सु संग्रामेषु अर्यः अरीन् शत्रून्जनान् अभितस्थौ आक्रामेत् तत्रदृष्टान्तः-द्यौर्न द्योतमानःसूर्योयथा भूम भूतानि आक्रामति तद्वत् हेसहसःसूनो बलस्यपुत्रेन्द्र त्वं तंपुत्रं नोस्मभ्यंदद्धि देहि कीदृशं सहस्रभरं सहस्रस्यधनस्यभर्तारं उर्वरासां सस्याढ्यानांभूमीनां सवितारं संभक्तारं वृत्रतुरं वृत्राणांशत्रूणां तरितारं तुर्वितारंवा ॥ १ ॥

१. हे बलपुत्र इन्द्र, सूर्य जिस प्रकार से अपनी दीप्ति-द्वारा पृथिवी को आक्रान्त करते हैं उसी प्रकार संग्राम में शत्रुओं को आक्रान्त करनेवाला पुत्ररूप धन तुम हमें प्रदान करो। वह सहस्र प्रकार के धन का भर्ता, शस्यपूर्ण भूमि का अधिपति और शत्रुओं का निहन्ता हो।

अथद्वितीया—

दिवोनतुभ्यमन्विन्द्रसत्रासुर्यंदेवेभिर्धायिविश्वम् ।
अहिंयद्वृत्रमपोवव्रिवांसंहन्नृजीषिन्विष्णुनासचानः ॥ २ ॥

दिवः । न । तुभ्यम् । अनु । इन्द्र । सत्रा । असुर्यम् । देवेभिः ।
धायि । विश्वम् । अहिम् । यत् । वृत्रम् । अपः । वव्रिऽवांसम् ।
हन् । ऋजीषिन् । विष्णुना । सचानः ॥ २ ॥

दिवोन सूर्यायेव हेइन्द्र तुभ्यं सत्रासत्यमेव विश्वं व्याप्तं असुर्यमसुरत्वं बलं देवेभिः देवैःस्तोतृभिः अनुधायि व्यधायि अकारि स्तोत्रैःस्तूयमानोदवताबलवतीभवतीत्यर्थः हेऋजीषिन् विगतरससोमेन्द्र विष्णुनासचानः संगच्छमानस्त्वं षचसमवायेइतिधातोरूपं यद्येनासुर्येण अपः उदकानि वव्रिवांसं परिवृण्वन्तं अहिमागत्यहन्तारं वृत्रमसुरं हन् अहन् अवधीः तद्बलं व्यधायीतिपूर्वेणसंबन्धः ॥ २ ॥

२. हे इन्द्र, स्तोताओं ने स्तोत्र-द्वारा सूर्य की तरह तुममें सचमुच समस्त बल अर्पित किया था। हे नीरस सोमपान करनेवाले इन्द्र, तुमने विष्णु के साथ युक्त होकर बल-द्वारा वारिनिरोधक आदि वृत्र का वध किया था।

तूर्वन्नोजीयान्तवसस्तवीयान्कृतब्रह्मेन्द्रोवृद्धमहाः ।
राजाभवन्मधुनःसोम्यस्यविश्वासांयत्पुरांदर्तुमावत् ॥ ३ ॥

तूर्वन् । ओजीयान् । तवसः । तवीयान् । कृतऽब्रह्मा । इन्द्रः ।
वृद्धऽमहाः । राजा । अभवत् । मधुनः । सोम्यस्य । विश्वासाम् ।
यत् । पुराम् । दर्तुम् । आवत् ॥ ३ ॥

यद्यदा इन्द्रोविश्वासांसर्वासां पुरां असुरपुरीणां दर्तुं दारकंवज्रं आवत् प्रापत् तदा सोम्यस्य सोममयस्य मधुनः मधुररसस्य राजाभवत् स्वाम्यासीत् कीदृशः तूर्वन् हिंसकान्हिंसन् ओजीयान् अतिशयेनओजस्वी तवसोबलवतः तवीयान् बलवत्तरः कृतब्रह्मा कृतंब्रह्म स्तोत्रंयस्मैस्तोतृभिः सः अथवा कृतंदत्तंब्रह्मान्नंयेनस्तोतृभ्यःसः वृद्धमहाः वृद्धतेजाः एवंभूतइन्द्रोराजाभवदिति ॥ ३ ॥

३. जब इन्द्र ने सम्पूर्ण शत्रु-पुरियों के विदारक वज्र को प्राप्त किया, तब वे मधुर सोमरस के स्वामी हुए। इन्द्र हिंसकों की हिंसा करनेवाले अतिशय ओजस्वी, बलवान्, अन्न देनेवाले और प्रवृद्ध तेजवाले हैं।

अथचतुर्थी—

शतैरपद्रन्पणयइन्द्रात्रदशोणयेकवयेर्कसातौ ।
वधैःशुष्णस्याशुषस्यमायाःपित्वोनारिरेचीत्किंचनप्र ॥ ४ ॥

शतैः। अपद्रन्। पणयः। इन्द्र। अत्र। दशऽओणये। कवये।
अर्कऽसातौ। वधैः। शुष्णस्य। अशुषस्य। मायाः। पित्वः। न।
अरिरेचीत्। किम्। चन। प्र॥ ४॥

अत्रास्मिन्नर्कसातौ अर्कोन्नंमाप्यतेस्मिन्नित्यर्कसातिः युद्धं तस्मिन् दशोणये बहुहविष्के कवये मेधाविनः पंचम्यर्थेचतुर्थी हेइन्द्र त्वत्सहायात्कुत्सात् बिभ्यतः पणयएतन्नामकासुराः शतैः शतसंख्याकैर्बलैः सार्धमपद्रन्नपाद्रवन् अपलायन्त अपिचेन्द्रः अशुषस्याशुष्कस्य संपूर्णबलस्येत्यर्थः शुष्णस्यैतन्नामकासुरस्य शत्रोर्मायाः कपटान्वधैर्हननसाधनैरायुधैः नप्रारिरेचीत् प्ररिक्तानतिरिक्तान्नाकरोत् पित्वोन्नस्य पितुरित्यन्ननामैतत् किंच नकिंचिदपि नप्रारिरेचीत् तदीयमन्नंसर्वमप्यपाहारयत् ॥ ४ ॥

४. हे इन्द्र, युद्ध में बहुत अन्न प्रदान करनेवाले और तुम्हारी सहायता करनेवाले मेधावी कुत्स से भीत होकर शतसंख्यक सेनाओं के साथ पणि नामक असुर ने पलायन किया था। इन्द्र ने बलशाली शुष्ण नामक असुर की कपटता को आयुध-द्वारा नष्ट करके उसके समस्त अन्न को अपहृत किया था।

महोद्रुहोअपविश्वायुधायिवज्रस्ययत्पतनेपादिशुष्णः।
उरुषसरथंसारथयेकरिन्द्रःकुत्सायसूर्यस्यसातौ ॥ ५ ॥ ९ ॥

महः। द्रुहः। अप। विश्वऽआयु। धायि। वज्रस्य। यत्।
पतने। पादि। शुष्णः। उरु। सः। सऽरथम्। सारथये। कः। इन्द्रः।
कुत्साय। सूर्यस्य। सातौ॥ ५॥ ९॥

यद्यदा शुष्णोसुरः वज्रस्यपतने पाते पादि अगच्छत् अम्रियतेत्यर्थः तदा महोमहतः द्रुहोद्रोग्धुः शुष्णस्य संबन्धि विश्वायु सर्वगतंबलमितिशेषः अपधायि अपहितमकारि तिरस्कृतमित्यर्थः सइन्द्रः सारथये सारथिभूतायकुत्साय सरथं समानरथं सूर्यस्यसातौ भजने निमित्तभूते उरुविस्तीर्णंयथाभवतितथा कः अकरोत् तथाचोक्तं—कुत्सायेन्द्रोसुरंशुष्णंजिघांसुः कुत्समात्मनः । सारथिंकल्पयित्वास्यशत्रुशुष्णमहंस्ततः ॥ कुत्सस्यरक्षांबहुलांचकारेत्यनयोच्यतेइति ॥ ५ ॥

५. वज्र के पतित होने से जब शुष्ण ने प्राण त्याग किया, तब महान् द्रोही शुष्ण का सम्पूर्ण बल नष्ट हो गया। इन्द्र ने सूर्य का संभजन करने के लिए सारथीभूत कुत्स को अपने रथ को विस्तृत करने के लिए कहा।

॥ इतिचतुर्थस्यषष्ठेनवमोवर्गः ॥ ९ ॥

प्रश्येनोनमदिरमंशुमस्मैशिरोदासस्यनमुचेर्मथायन्।
प्रावन्नमींसाप्यंससन्तंपृणग्रायासमिषासंस्वस्ति ॥ ६ ॥

प्र । श्येनः । न । मदिरम् । अंशुम् । अस्मै । शिरः । दासस्य । नमुचेः ।
मथायन् । प्र । आवत् । नमीम् । साप्यम् । ससन्तम् । पृणक् ।
राया । सम् । इषा । सम् । स्वस्ति ॥ ६ ॥

श्येनः सुपर्णश्चनेत्ययंशब्दःसमुच्चयेवर्तते अस्माइन्द्राय मदिरं मदकरंअंशुं सोमं प्रेति आइत्यस्यार्थेवर्तते आहरत् उपसर्गदर्शनाच्चाख्यातमध्याह्रियते किंचायमिन्द्रोपि दासस्य प्राणिनामुपक्षपयितुर्नमुचेरेतन्नामासुरस्य शिरःशीर्षं मथायन् मंथनंकुर्वन् साप्यं सपस्यपुत्रं ससन्तं स्वपन्तं नमीं एतत्संज्ञकमृषिं प्रावत् प्रारक्षत् स्वस्त्यविनाशेन राया पश्वादिधनेन इषान्नेन च तमृषिं संपृणक् समयोजयत् ॥ ६ ॥

६. इन्द्र ने प्राणियों को उपद्रुत करनेवाले नमुचि नामक असुर के मस्तक को चूर्ण किया एवम् सप के पुत्र निद्रित नमी ऋषि की रक्षा करके उन्हें पशु आदि धन तथा अन्न से युक्त किया। उस समय श्येन पक्षी ने इन्द्र के लिए मदकर सोम का आनयन किया था।

विपिप्रोरहिमायस्यदृह्लाःपुरोवज्रिञ्छवसानदर्दः ।
सुदामन्तद्रेक्णोअप्रमृष्यमृजिश्वनेदात्रंदाशुषेदाः ॥ ७ ॥

वि । पिप्रोः । अहिऽमायस्य । दृह्लाः । पुरः । वज्रिन् । शवसा ।
न । दर्दरितिदर्दः । सुऽदामन् । तत् । रेक्णः । अप्रऽमृष्यम् ।
ऋजिश्वने । दात्रम् । दाशुषे । दाः ॥ ७ ॥

हेवज्रिन् वज्रवन्निन्द्र त्वं अहिमायस्य अहंत्योमायायस्य पिप्रोरेतन्नाम्नोसुरस्यसंबन्धिनीः दृह्लाः दृढानि पुरः प्राकारादीनिदुर्गाणि शवसा बलेन विदर्दः विदारितवानसि नेतिपादपूरणः त्वंपिप्रोर्नृमणःप्रारुजःपुरः । शतंपूर्भिरायसीभिर्निपाहीतिदर्शनात् । अपिच हेसुदामन् शोभनदानेन्द्र त्वं दात्रं हविर्लक्षणं धनं दाशुषे दत्तवते ऋजिश्वने एतन्नामकायराजर्षये अप्रमृष्यं केनाप्यबाध्यं तत्तस्यस्वभूतंरेक्णोधनं दाः अदाः दत्तवानसि ॥ ७ ॥

७. हे वज्रधर इन्द्र, तुमने तुरन्त मायावाले पिप्रु नामक असुर के दृढ़ दुर्गों को बल-द्वारा विदीर्ण किया था। हे शोभन दान-सम्पन्न इन्द्र, तुमने हव्यरूप धन प्रदान करनेवाले राजर्षि ऋजिश्वा को अप्रतिबाध धन प्रदान किया था।     अथाष्टमी—

सवेतसुंदशमायंदशोणिंतूतुजिमिन्द्रःस्वभिष्टिसुम्नः ।
आतुग्रंशश्वदिभंद्योतनायमातुर्नसीमुपसृजाइयध्यै ॥ ८ ॥

---

१ ऋ० सं० १. ४. ९. । २ ऋ० सं० ५. २. ४. ।

सः । वेतसुम् । दशऽमायम् । दशऽओणिम् । तूतुजिम् । इन्द्रः ।
स्वभिष्टिऽसुम्नः । आ । तुग्रम् । शश्वत् । इभम् । द्योतनाय ।
मातुः । न । सीम् । उप । सृज । इयध्यै ॥ ८ ॥

स्वभिष्टिसुम्नः सुष्ठुअभ्येषणीयान्यभिगम्यानिसुम्नानिसुखानियेनदेयानिसइन्द्रः दशमायं बहुवंचनं वेतसुं वेतसुनामकमसुरं दशोणिं एतन्नामकंच तूतुजिं तूतुजिनामकंच आ अपिच तुग्रं तुग्रनामकमसुरं तथा इभमेतन्नामकमसुरंच इयध्यै एतुं द्योतनाय एतत्संज्ञायराज्ञे शश्वदुपसृजउपासृजत् वशीचकार तत्रदृष्टान्तः— मातुर्न मातुर्जनन्याइव पुत्रं यथामातेपुत्रावशीभवन्तितद्वद्वशंचकारेत्यर्थः सीमितिपादपूरणः ॥ ८ ॥

८. अभिलषित सुख-प्रदाता इन्द्र ने वेतसु, दशोणि, तूतुजि, तुग्र और इभ नामक असुरों को राजा द्योतन के निकट सर्वदा गमन करने के लिए उसी तरह वशीभूत किया था, जैसे कि माता के निकट गमन करने में पुत्र वशीभूत होते हैं। अथनवमी—

सईस्पृधोवनतेअप्रतीतोबिभ्रद्वज्रंवृत्रहणंगभस्तौ ।
तिष्ठद्धरीअध्यस्तेवगर्तेवचोयुजावहतइन्द्रमृष्वम् ॥ ९ ॥

सः । ईम् । स्पृधः । वनते । अप्रतिऽइतः । बिभ्रत् । वज्रम् ।
वृत्रऽहनम् । गभस्तौ । तिष्ठत् । हरी इति । अधि । अस्ताऽइव ।
गर्ते । वचःऽयुजा । वहतः । इन्द्रम् । ऋष्वम् ॥ ९ ॥

गभस्तौ हस्ते वृत्रहणं वृत्राणांशत्रूणांहन्तारं वज्रं स्वकीयमायुधं बिभ्रद्धारयन् अप्रतीतः शत्रुभिरप्रतिगतः सइन्द्रः स्पृधः स्पर्धमानान् ईं इमान् वृत्रप्रभृतीन् शत्रून् वनते हन्ति हरी स्वकीयावश्वौ अधितिष्ठत् आरोहति तत्रदृष्टान्तः— अस्तेव गर्तेयथाक्षेप्ताशूरः रथेअधितिष्ठवत्तद्वत् तथावचोयुजा वचोमात्रेणयुज्यमानौ यद्वा स्तोतॄणां स्तुतिभिः युज्यमानौ तौ हरीच ऋष्वं महान्तं इन्द्रं वहतः ॥ ९ ॥

९. शत्रुओं-द्वारा नहीं निरस्त होनेवाले इन्द्र हाथ में शत्रुओं को मारनेवाले अपने आयुध को धारण करते हुए स्पर्द्धाकारी वृत्रादि शत्रुओं को विनाश करते हैं। शूर जिस प्रकार से रथ पर आरोहण करता है, उसी प्रकार वे अपने अश्वों पर आरोहण करते हैं। वचन-मात्र से पूजित होकर वे दोनों घोड़े महान् इन्द्र का वहन करें।

सनेमतेवसानव्यइन्द्रप्रपूरवःस्तवन्तएनायज्ञैः ।
सप्तयत्पुरःशर्मशारदीर्दर्धन्दासीःपुरुकुत्सायशिक्षन् ॥ १० ॥

सनेम । ते । अवसा । नव्यः । इन्द्र । प्र । पूरवः । स्तवन्ते ।

एना । यज्ञैः । सप्त । यत् । पुरः । शर्म । शारदीः । दर्त् । हन् ।
दासीः । पुरुऽकुत्साय । शिक्षन् ॥ १० ॥

हेइन्द्र ते त्वदीयेन अवसा रक्षणेन नव्योनवीयोनवतरं त्वयादीयमानंधनं सनेम वयंस्तोतारोभजेमहि पूरवोमनुष्याः स्तोतारः एना अनेनस्तोत्रेण युक्तैर्यज्ञैः प्रस्तवन्ते त्वांस्तुवन्ति यद्यस्मात्कारणात् दासीः कर्मणामुपक्षपयित्रीः शत्रुप्रजाः हन् घ्नन् हिंसन् पुरुकुत्साय एतन्नामकायराज्ञे शिक्षन् धनानिप्रयच्छन् हेइन्द्र त्वं शारदीः शरन्नाम्नोसुरस्यसंबन्धिनीः सप्त सप्तसंख्याकाः पुरः पुरी शर्म शर्मणावज्रेण दर्द् विदारितवानसि तस्मात्कारणात्त्वांस्तोतारः स्तुवन्तीत्यर्थः ॥१०॥

१०. हे इन्द्र, तुम्हारी रक्षा के द्वारा हम स्तोता लोग नवीन धन के लिए सम्भजन करते हैं। मनुष्य स्तोता लोग इस प्रकार से युक्त यज्ञों के द्वारा तुम्हारी स्तुति करते हैं कि यज्ञविद्वेषी प्रजाओं की हिंसा करते हुए पुरुकुत्स राजा को धन प्रदान करते हैं। हे इन्द्र, तुमने शरत् नामक असुर की सात पुरियों को वज्र-द्वारा विदीर्ण किया है।

त्वंवृधइन्द्रपूर्व्योभूर्वरिवस्यन्नुशनेकाव्याय ।
परानववास्त्वमनुदेयंमहेपित्रेददाथस्वंनपातम् ॥ ११ ॥

त्वम् । वृधः । इन्द्र । पूर्व्यः । भूः । वरिवस्यन् । उशने । काव्याय ।
परा । नवऽवास्त्वम् । अनुऽदेयम् । महे । पित्रे । ददाथ । स्वम् ।
नपातम् ॥ ११ ॥

हेइन्द्र पूर्व्यः पुरातनस्त्वं काव्याय कविपुत्राय उशने उशनसेभार्गवाय वरिवस्यन् धनमिच्छन् वृधोभूः स्तोतॄणांवर्धकोभवसि अनुदेयमनुदातव्यंधनं नववास्त्वं एतन्नामकंअसुरं पराहत्य स्वंस्वकीयमौशनसं नपातं युद्धेशत्रुभिर्गृहीतंपुत्रं महे महते पित्रे पालयितव्यायोशनसे पराददाथ तस्यशत्रुंहत्वा प्रकर्षेणदत्तवानसि ॥ ११ ॥

११. हे इन्द्र, धनाभिलाषी होकर तुम कविपुत्र उशना के लिए प्राचीन उपकारक हुए थे अर्थात् स्तोताओं के वर्द्धक हुए थे तुमने नववास्त्व नामक असुर का वध किया और क्षमताशाली पिता उशना के निकट उसके देय पुत्र को समर्पित किया।

अथद्वादशी—

त्वंधुनिरिन्द्रधुनिमतीरृणोरपःसीरानस्रवन्तीः ।
प्रयत्समुद्रमतिशूरपर्षिपारयातुर्वशंयदुंस्वस्ति ॥ १२ ॥

त्वम् । धुनिः । इन्द्र । धुनिऽमतीः । ऋणोः । अपः । सीराः ।
न । स्रवन्तीः । प्र । यत् । समुद्रम् । अति । शूर । पर्षि । पारय ।
तुर्वशम् । यदुम् । स्वस्ति ॥ १२ ॥

हेइन्द्र धुनिः शत्रूणांकंपयितात्वं धुनिमतीः धुनिर्नामासुरोयासुनिरोधकतयाविद्यते ताः अपः उदकानि सीरान नदीरिव स्रवन्तीः प्रवहन्तीः ऋणोः अगमयः धुनिंहत्वा तेननिरोधिता-न्युदकानिप्रवाहयतीत्यर्थः हेशूर वीरेन्द्र यद्यदा समुद्रमति अतिक्रम्यमपर्षि प्रतीर्णोभवसि तदा समुद्रपारेतिष्ठन्तौ तुर्वशंयदुंच पारय पारयः समुद्रमतारयः ॥ १२ ॥

१२. हे इन्द्र, तुम शत्रुओं को कँपानेवाले हो। तुमने धुनि नामक असुर-द्वारा निरुद्ध जल को नदी की तरह प्रवहणशील बनाया था अर्थात् धुनि का हनन करके निरुद्ध जलराशि को बहाया था। हे वीर इन्द्र, जब तुम समुद्र का अतिक्रमण करके उत्तीर्ण होते हो, तब समुद्र के पार में वर्तमान तुर्वश और यदु को समुद्र पार कराते हो।

तवंहत्यदिन्द्रविश्वमाजौसस्तोधुनीचुमुरीयाहसिष्वप्।
दीदयदित्तुभ्यंसोमेभिःसुन्वन्दभीतिरिध्मभृतिःपक्थ्यर्कैः॥१३॥१०॥

तवं। ह। त्यत्। इन्द्र। विश्वम्। आजौ। सस्तः।
धुनीचुमुरीइति। या। ह। सिस्वप्। दीदयंत्। इत्। तुभ्यम्।
सोमेभिः। सुन्वन्। दभीतिः। इध्मऽभृतिः। पक्थी। अर्कैः॥१३॥१०॥

हेइन्द्र आजौ संग्रामे तवह तवैव विश्वं व्याप्तं त्यत्तादृशंकर्म भवति कीदृशमिति तदु-च्यते या यौ धुनीचुमुरी धुनिश्चचुमुरिश्चेत्येतन्नामकावसुरौ सिष्वप् अस्वापयः तावसुरौ स-स्तः संग्रामेसुप्तवन्तौ मृतावित्यर्थः भूतार्थेव्यत्ययेनलट् द्वितीयोहशब्दःपादपूरणः तदनन्तरं हेइ-न्द्र तुभ्यंत्वदर्थंसुन्वन् सोमानभिषुण्वन् पक्थी पक्थवान् हवींषिपक्ववान् इध्मभृतिः इध्मानांभ-र्ता हर्तावा दभीतिर्नामराजर्षिः सोमेभिः सोमैःअर्कैर्हविर्लक्षणैरन्नैः दीदयदित् दीप्यतएव धुनिं चुमुरिं तस्मै जंघथेत्यर्थः त्वंनिदस्युंचुमुरिंधुनिंचेतिदर्शनात् ॥ १३ ॥

१३. हे इन्द्र, संग्राम में उस तरह के सब कार्य तुम्हारे ही हैं। धुनी और चुमुरी नामक असुरों को तुमने संग्राम में सुलाया है अर्थात् मार डाला है। हे इन्द्र, इसके अनन्तर हव्यपाक करनेवाले, ईंधन के भर्ता और तुम्हारे निमित्त सोमाभिषव करनेवाले राजर्षि दभीति ने हवीरूप अन्न से तुम्हें प्रदीप्त किया है।

॥ इतिचतुर्थस्यषष्ठेदशमोवर्गः ॥ १० ॥

इमाउत्वेतिद्वादशर्चंषष्ठंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रं नवमीएकादशीचवैश्वदेव्यौ तथा-चानुक्रम्यते—इमाउद्वादशनवम्येकादश्यौवैश्वदेव्याविति। उपहव्यनाम्न्येकाहे इदंसूक्तं मरु-त्वतीयनिविद्धानं सूत्रितंच—इमाउत्वायएकइदितिमध्यंदिनइति इन्द्राविष्णोरुत्क्रान्तिनाम्न्येका-हेपीदंमरुत्वतीयंनिविद्धानं सूत्रितंच—इमाउत्वायोर्नयइन्द्रेतिमध्यंदिनइति। तृतीयेछन्दोमे-पिमरुत्वतीयेइदंसूक्तं सूत्रितंच—प्रमन्दिनइमाउत्वेतिमरुत्वतीयमिति।

---

१ ऋ० सं० ५. २. २९.।

इमाउत्वापुरुतमस्यकारोर्हव्यंवीरहव्याहवन्ते ।
धियोरथेष्ठामजरंनवीयोरयिर्विभूतिरीयतेवचस्या ॥ १ ॥

इमाः । ऊँ इति । त्वा । पुरुऽतमस्य । कारोः । हव्यम् । वीर । हव्याः । हवन्ते । धियः । रथेऽस्थाम् । अजरम् । नवीयः । रयिः । विऽभूतिः । ईयते । वचस्या ॥ १ ॥

पुरुतमस्य बहुलंकामंकांक्षतः तमुअभिकांक्षायामितिधातुः कारोः स्तोतुर्भरद्वाजस्यसंबन्धिन्यः हव्याः स्तुत्याः प्रशस्याः इमाधियः स्तुतयः हेवीर शूरेन्द्र हव्यं त्वा त्वां हवंते ह्वयन्ति कीदृशं रथेस्थां रथेस्थितं अजरं जरारहितं नवीयोनवीयांसं नवतरं उइतिपूरणः अपिच वचस्या स्तुत्या श्रेष्ठाविभूतिः जगतोविभवहेतुः रयिर्हविर्लक्षणंधनं ईयते त्वामभिगच्छति ॥१॥

१. हे शूर इन्द्र, बहुत कार्य की अभिलाषा करनेवाले, स्तोता भरद्वाज की प्रशंसनीय स्तुतियां तुम्हारा आह्वान करती हैं। इन्द्र रथ पर स्थित, जरारहित और नवीनतर हैं। श्रेष्ठ विभूति (हविर्लक्षण धन) इन्द्र का अनुगमन करती है।

तमुस्तुषइन्द्रंयोविदानोगिर्वाहसंगीर्भिर्यज्ञवृद्धम् ।
यस्यदिवमतिमह्नापृथिव्याःपुरुमायस्यरिरिचेमहित्वम् ॥ २ ॥

तम् । ऊँ इति । स्तुषे । इन्द्रम् । यः । विदानः । गिर्वाहसम् । गीःऽभिः । यज्ञऽवृद्धम् । यस्य । दिवम् । अति । मह्ना । पृथिव्याः । पुरुऽमायस्य । रिरिचे । महिऽत्वम् ॥ २ ॥

यइन्द्रः विदानः सर्वंविद्वान् सर्वैर्ज्ञायमानोवा गिर्वाहसं गीर्भिर्वहनीयं यज्ञवृद्धं यज्ञैः प्रवृद्धं तमु तमेवेन्द्रं स्तुषे स्तुवे पुरुमायस्य बहुप्रज्ञस्य बहुवचनस्यवा यस्येन्द्रस्य महित्वं माहात्म्यं दिवं दिवोद्युलोकात् पंचम्यर्थेद्वितीया पृथिव्याः भूलोकात् मह्ना महिम्ना अतिरिरिचे अतिरिच्यते तंस्तुवइतिसंबन्धः ॥ २ ॥

२. जो सब जानते हैं अथवा जो सबके द्वारा जाने जाते हैं, जो स्तुतियों-द्वारा प्रापणीय हैं और जो यज्ञ-द्वारा प्रवर्द्धमान होते हैं, उन इन्द्र का हम स्तवन करते हैं। बहुत प्रज्ञावाले इन्द्र का माहात्म्य द्यावा-पृथिवी का अतिक्रमण करता है।

४ सइत्तमोवयुनंततन्वत्सूर्येणवयुनवच्चकार ।
कदातेमर्ताअमृतस्यधामेयक्षन्तोनामिनन्तिस्वधावः ॥ ३ ॥

सः । इत् । तमः । अवयुनम् । ततन्वत् । सूर्येण । वयुनऽवत् ।

चकार । कदा । ते । मर्ताः । अमृतस्य । धाम । इयक्षन्तः ।
न । मिनन्ति । स्वधाऽवः ॥ ३ ॥

सइत् सएवेन्द्रः अवयुनं अप्रज्ञानं प्रज्ञाननाशनमित्यर्थः ततन्वत् वृत्रेणविस्तीर्यमाणंतमोन्धकारं दिविसूर्येण दिव्यारोपितेनदेवेन वयुनवत् प्रकाशवत् चकार कृतवान् परोर्धर्चःप्रत्यक्षकृतः हेस्वधावः बलवन्निन्द्र मर्ताः मनुष्याः अमृतस्य नित्यस्य तेत्वदीयंधामस्वर्गाख्यंस्थानं तन्नस्थानदेवानित्यर्थः इयक्षंतः यष्टुमिच्छन्तः कदा कदाचित् सर्वदेत्यर्थः नमिनन्ति किमपिप्राणिजातंनहिंसन्ति ॥ ३ ॥

३. इन्द्र ने ही वृत्त-द्वारा विस्तीर्ण और अप्रज्ञात (अप्रकाशित) अन्धकार को सूर्य-द्वारा प्रकाशित किया था। हे बलवान् इन्द्र, तुम अमरणशील हो। मनुष्यगण तुम्हारे स्वर्ग नामक स्थान का (वहाँ रहनेवालों देवों का) सर्वदा यजन करना चाहते हैं। वे किसी प्राणी की हिंसा नहीं करते।

यस्ताचकारसकुहस्विदिन्द्रःकमाजनंचरतिकासुविक्षु ।
कस्तेयज्ञोमनसेशंवरायकोअर्कइन्द्रकतमःसहोता ॥ ४ ॥

यः । ता । चकार । सः । कुह । स्वित् । इन्द्रः । कम् । आ ।
जनम् । चरति । कासु । विक्षु । कः । ते । यज्ञः । मनसे । शम् ।
वराय । कः । अर्कः । इन्द्र । कतमः । सः । होता ॥ ४ ॥

यइन्द्रः ता तान्युक्तप्रसिद्धानि वृत्रवधादीनिकर्माणि चकार अकरोत् सइन्द्रोद्यकुहस्वित् क्वस्विद्वर्तते कंजनं कमपिदेशमाचरति कासु विक्षु प्रजासु वर्तते इतीन्द्रस्य विभूतिमहत्त्वान्ननिश्चेतुंशक्यं अथप्रत्यक्षस्तुतिः हेइन्द्र कः कीदृशोयज्ञः ते तव मनसे चेतसे शं सुखकरोभवति वराय तववरणाय कः कीदृशोर्कोमंत्रः समर्थोभवति होता आह्वाता तववरणाय यःसमर्थोभवति सहोता कतमश्च भवति ॥ ४ ॥

४. जिन इन्द्र ने उन वृत्र-वधादि प्रसिद्ध कार्यों को किया है, वे अभी कहाँ वर्तमान हैं, किस देश और किन प्रजाओं के मध्य में वर्तमान हैं (अतिशय विभूति के कारण यह निश्चय किया जा सकता है कि वे कहाँ हैं।) हे इन्द्र, किस तरह का यज्ञ तुम्हारे चित्त के लिए सुखकर होता है ? तुम्हारा वरण करने में किस तरह का मन्त्र समर्थ होता है ? तुम्हारा वरण करने में जो समर्थ होता है, वह कौन है ?

इदाहितेवेविषतःपुराजाःप्रत्नासआसुःपुरुकृत्सखायः ।
येमध्यमासउतनूतनासउतावमस्यपुरुहूतबोधि ॥ ५ ॥ ११ ॥

इदा । हि । ते । वेविषतः । पुराऽजाः । प्रत्नासः । आसुः ।
पुरुऽकृत् । सखायः । ये । मध्यमासः । उत । नूतनासः ।
उत । अवमस्य । पुरुऽहूत । बोधि ॥ ५ ॥ ११ ॥

पुराजाः पूर्वस्मिन्कालेजाताः प्रत्नासः पुराणाः अंगिरःप्रभृतयः इदाहि इदानीमिव हिश-ब्दउपमार्थेवर्तते वेविषतः कर्माणिप्राप्नुवन्तः हेपुरुकृत बहूनांकर्मणांकर्तरिन्द्र ते तव सखायः स्तोतारः आसुः बभूवुः येमध्यमासोमध्यमकालजाः उतापिच येनूतनासोद्यतनाः यतस्तेपिसर्वे तेस्तोतारोबभूवुः अतःकारणात् उतापिच अवमस्यार्वाचीनस्य ममापिस्तोत्रं हेपुरुहूत बहुभिरा-हूतेन्द्र त्वंबोधि बुध्यस्व ॥ ५ ॥

५. हे बहुत कार्यों के करनेवाले इन्द्र, पूर्वकालोत्पन्न पुरातन अङ्गिरा आदि आजकल की तरह कार्य करते हुए तुम्हारे स्तोता हुए थे। मध्य-कालीन और नवीन (आजकलवाले) भी तुम्हारे स्तोता हुए हैं; अतएव हे बहुजनाहूत इन्द्र, तुम मुझ अर्वाचीन की स्तुति को समझो (सुनो)।

॥ इतिचतुर्थस्यषष्ठेएकादशोवर्गः ॥ ११ ॥

तंपृच्छन्तोवरासःपराणिप्रत्नातइन्द्रश्रुत्यानुयेमुः ।
अर्चामसिवीरब्रह्मवाहोयादेवविद्मतात्त्वामहान्तम् ॥ ६ ॥

तम् । पृच्छन्तः । अवरासः । पराणि । प्रत्ना । ते । इन्द्र । श्रुत्या ।
अनु । येमुः । अर्चामसि । वीर । ब्रह्मऽवाहः । यात् । एव ।
विद्म । तात् । त्वा । महान्तम् ॥ ६ ॥

हेवीर शूर ब्रह्मवाहः ब्रह्मभिर्मन्त्रैर्वहनीयेन्द्र अवरासोर्वाचीनामनुष्याः तंउक्तगुणोपेतं त्वां पृच्छंतोर्चन्तः पृच्छतिरर्चतिकर्मा पराणि प्रकृष्टानि प्रत्ना प्रत्नानि पुराणानि श्रुत्या श्रुत्यानिश्रो-तव्यानि ते त्वदीयानिकर्माणि अनुयेमुः अनुयमनंनिबन्धनंस्तुतिरूपाभिर्वाग्भिर्निबबन्धुः तथा वयमपि महान्तं प्रभूतं त्वा त्वां अर्चामसि अर्चामःस्तुमः यादेव यान्येवकर्माणि विद्मजानी-मःतत् तैःकर्मभिः स्तुमइतिसंबन्धः ॥ ६ ॥

६. हे शूर और मन्त्र-द्वारा प्रापणीय इन्द्र, अर्वाचीन मनुष्यगण, उक्त गुणों से युक्त, तुम्हारी अर्चना करते हैं। तुम्हारे प्राचीन और उत्कृष्ट महान् कार्यों को स्तुति रूप वचनों में बाँधते हैं। तुम्हारे जिन कार्यों को हम लोग जानते हैं, उन्हीं से हम लोग तुम्हारी अर्चना करते हैं। तुम महान् हो।

अभित्वापाजोरक्षसोवितस्थेमहिजज्ञानमभितत्सुतिष्ठ ।
तवप्रत्नेनयुज्येनसख्यावज्रेणधृष्णोअपतानुदस्व ॥ ७ ॥

अभि । त्वा । पाजः । रक्षसः । वि । तस्थे । महि । जज्ञानम् ।
अभि । तत् । सु । तिष्ठ । तव । प्रत्नेन । युज्येन । सख्या । वज्रेण ।
धृष्णो इति । अप । ता । नुदस्व ॥ ७ ॥

रक्षसोरक्षसांसंबन्धिपाजः सेनालक्षणंबलं हेइन्द्र त्वाअभि त्वांअभिमुखं वितस्थे प्रति-ष्ठते तथात्वमपि महि महत् जज्ञानं प्रादुर्भवत् तद्बलं अभि अभिमुखःसन् सु सुष्ठु तिष्ठ स्थि-रोभव स्थित्वाच हेधृष्णो शत्रूणांधर्षकेन्द्र तव त्वदीयेनवज्रेण ता तद्बलं अपनुदस्व अपगतं प्रेरय छिन्धीत्यर्थः कीदृशेनप्रत्नेन पुराणेन युज्येन योज्येन सख्या नित्यसहायेन ॥ ७ ॥

७. हे इन्द्र, राक्षसों का बल तुम्हारे अभिमुख प्रतिष्ठित है। तुम भी उस प्रादुर्भूत महान् बल के अभिमुख स्थिर होओ। हे शत्रुओं के घर्षक इन्द्र, स्थिर होकर तुम अपने वज्र-द्वारा उस बल का अपनोदन करो। तुम्हारा वज्र पुरातन, योजनीय और नित्य सहायक है।

सतुश्रुधीन्द्रनूतनस्यब्रह्मण्यतोवीरकारुधायः।
त्वंह्याऽ३पिःप्रदिविपितॄणांशश्वद्बभूथसुहवएष्टौ ॥ ८ ॥

सः। तु। श्रुधि। इन्द्र। नूतनस्य। ब्रह्मण्यतः। वीर। कारुऽधायः।
त्वम्। हि। आपिः। प्रऽदिवि। पितॄणाम्। शश्वत्। बभूथ।
सुऽहवः। आऽइष्टौ ॥ ८ ॥

हेकारुधायः कारूणांस्तोतॄणांधारकः हेवीरेन्द्र सः प्रसिद्धस्त्वं नूतनस्येदानींतनस्य ब्रह्मण्यतः ब्रह्मस्तोत्रंकर्तुमिच्छतोमम स्तोत्रं नु क्षिप्रं श्रुधिशृणु हियस्मात्कारणात् हेइन्द्र त्वं आइष्टौ आयजने अभिकामनेवासति सुहवः शोभनाह्वानःसन् प्रदिवि पूर्वस्मिन्काले पितॄणां अंगिरसां आपिर्बन्धुः शश्वच्चिरकालं बभूथाभूः तस्मात्कारणात् मदीयंस्तोत्रं श्रुधीतिसंबन्धः ॥ ८ ॥

८. हे स्तोताओं के धारक वीर इन्द्र, तुम हमारे स्तोत्र को शीघ्र सुनो। हम इदानीन्तन (आधुनिक) और स्तोत्र करने की इच्छा रखनेवाले हैं। हे इन्द्र, यज्ञ में तुम शोभन आह्वानवाले होकर पूर्वकाल में अङ्गिराओं के चिरकाल तक बन्धु हुए थे। इसलिए तुम हमारे स्तोत्र को सुनो।

प्रोतयेवरुणंमित्रमिन्द्रंमरुतःकृष्वावसेनोअद्य।
प्रपूषणंविष्णुमग्निंपुरंधिंसवितारमोषधीःपर्वतांश्च ॥ ९ ॥

प्र। ऊतये। वरुणम्। मित्रम्। इन्द्रम्। मरुतः। कृष्व। अवसे।
नः। अद्य। प्र। पूषणम्। विष्णुम्। अग्निम्। पुरम्ऽधिम्।
सवितारम्। ओषधीः। पर्वतान्। च ॥ ९ ॥

अस्यामृचिविश्वेदेवाःस्तूयन्ते हेभरद्वाज अद्येदानीं वरुणं रात्र्यभिमानिनंच मित्रमहर-भिमानिनंच इन्द्रंच प्रसिद्धं मरुतोमरुद्गणांश्च नोस्माकं ऊतये तर्पणाय अवसे रक्षणायच प्रकृष्वाभिमुखीकुरुष्व किंच पूषणं एतत्संज्ञकंचविष्णुं सर्वव्यापिनंदेवंच पुरंधिं पुरुधियं पुरु-कर्माणं अग्निंच सवितारं सर्वस्यप्रेरकं देवं ओषधीः ओषध्यभिमानिनोदेवान् पर्वतांश्चाद्री-न इत्येतान्देवान् अस्माकंतर्पणाय रक्षणायच प्रकुरुष्व स्तुत्याभिमुखीकुरु ॥ ९ ॥

९. हे भरद्वाज, तुम अभी हम लोगों की तृप्ति और रक्षा के लिए राज्याभिमानी वरुण, दिनाभिमानी मित्र, इन्द्र, मरुद्गण, पूषा, सर्वव्यापी विष्णु, बहु कर्मकारी अग्नि, सबके प्रेरक सविता, ओषधियों के अभिमानी देव और पर्वतों को स्तुति के अभिमुख करो।

इमउंत्वापुरुशाकप्रयज्योजरितारोअभ्यर्चन्त्यर्कैः।
श्रुधीहवमाहुवतोहुवानोनत्वावाँअन्योअमृतत्वदस्ति ॥ १० ॥

इमे। ऊँ इति। त्वा। पुरुऽशाक। प्रयज्यो इति प्रऽयज्यो।
जरितारः। अभि। अर्चन्ति। अर्कैः। श्रुधि। हवम्। आ। हुवतः।
हुवानः। न। त्वाऽवान्। अन्यः। अमृत। त्वत्। अस्ति ॥ १० ॥

हेपुरुशाक बहुशक्ते हेप्रयज्यो प्रकृष्टेनयजनीयेन्द्र त्वा त्वां इमे जरितारः स्तोतारः अर्कैरर्चनीयैःस्तोत्रैः अभ्यर्चन्ति अभिष्टुवन्ति तथा हेअमृत अमरणशीलेन्द्र हुवानः स्तूयमानस्त्वं आहुवतोभिष्टुवतोमम हवं स्तोत्रं श्रुधि श्रृणु किंच त्वावान् त्वत्सदृशोदेवः त्वदन्योनास्ति ॥ १० ॥

१०. हे बहुत शक्तिवाले अतिशय यजनीय इन्द्र, ये स्तोता लोग अर्चनीय स्तोत्रों के द्वारा तुम्हारा स्तवन करते हैं। हे अमरणशील इन्द्र, स्तूयमान होकर तुम स्तुति करनेवाले मेरे स्तोत्र को सुनो; क्योंकि तुम्हारे सदृश दूसरे देव नहीं हैं।

नूमआवाचमुपयाहिविद्वान्विश्वेभिःसूनोसहसोयजत्रैः।
येअग्निजिह्वाऋतसापआसुर्येमनुंचक्रुरुपरंदसाय ॥ ११ ॥

नु। मे। आ। वाचम्। उप। याहि। विद्वान्। विश्वेभिः। सूनो इति। सहसः। यजत्रैः। ये। अग्निऽजिह्वाः। ऋतऽसापः।
आसुः। ये। मनुम्। चक्रुः। उपरम्। दसाय ॥ ११ ॥

इयंचवैश्वदेवीत्युक्तं हेसहसःसूनो बलस्यपुत्रेन्द्र विद्वान् सर्वज्ञस्त्वं यजत्रैर्यजनीयैर्विश्वेभिःसर्वैःदेवैःसह नु क्षिप्रं मे मदीयाः वाचः स्तुतिरूपाणिवचांसि उप अभिआयाहि आगच्छ एवंभूतमिन्द्रंप्रार्थयते ऐन्द्रत्वात्सूक्तस्य येदेवाः अग्निजिह्वाः अग्निर्जिह्वास्थानीयोयेषां ते ऋतसापः ऋतंयज्ञंस्पृशन्तःआसुर्भवन्ति येच देवाः दसायशत्रूणामुपक्षेपणाय मनुं राजर्षिं उपरं दस्यूनामुपरिभवं चक्रुः कृतवन्तः तैः सहागच्छेतिपूर्वेणसंबन्धः ॥ ११ ॥

११. हे बलपुत्र इन्द्र, तुम सर्वज्ञ हो। तुम सम्पूर्ण यजनीय देवों के साथ शीघ्र ही मेरे स्तुतिरूप वचन के अभिमुख आगमन करो। जो देव अग्नि-जिह्व हैं, जो यज्ञ में भोजन करते हैं और जिन्होंने राजर्षि मनु

को, शत्रुओं को नष्ट करने के लिए, दस्युओं के ऊपर किया है, उन्हीं के साथ आगमन करो।

सनोबोधिपुरएतासुगेषूतदुर्गेषुपथिकृद्विदानः।
येअश्रमासउरवोवहिष्ठास्तेभिर्नइन्द्राभिवक्षिवाजम् ॥ १२ ॥ १२ ॥

सः। नः। बोधि। पुरःऽएता। सुऽगेषु। उत। दुःऽगेषु। पथिऽकृत्। विदानः। ये। अश्रमासः। उरवः। वहिष्ठाः। तेभिः। नः। इन्द्र। अभि। वक्षि। वाजम् ॥ १२ ॥ १२ ॥

हेइन्द्र पथिकृद्वर्त्मनांकर्ता विदानः सर्वविद्वान् सत्वं सुगेषु सुखेनगन्तव्येषु उतापिच दुर्गेषु दुःखेनगन्तव्येषुचमार्गेषु नोस्माकं पुरएता पुरोगन्ता बोधि भव बोधीतिभवतेर्लोण्म-ध्यमपुरुषैकवचनस्यछान्दसंरूपं अश्रमासः श्रमरहिताः उरवो महान्तः वहिष्ठाः वोढृतमाः तव येअश्वाः सन्ति हेइन्द्र तेभिः तैरश्वैः नोस्मभ्यं वाजमन्नंअभिवक्षि अभिवह ॥१२॥

१२. हे इन्द्र, तुम मार्ग-निर्माता और विद्वान् हो। तुम सुखपूर्वक जाने योग्य मार्ग में तथा दुःख से जाने योग्य मार्ग में हम लोगों के अग्रसर होओ। श्रमरहित, महान् और वाहक श्रेष्ठ जो तुम्हारे अश्व हैं, उनके द्वारा हे इन्द्र, तुम हम लोगों के लिए अन्न आहरण करो।

यएकइदित्येकादशर्चंसप्तमंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रं तथाचानुक्रान्तं—यएकइदेका-दशेति आभिप्लविकेप्रथमेहनिदशरात्रस्यप्रथमेहनिच माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रे अहीनसूक्तस्यस्थाने त्रीणिसंपातसूक्तानि तेष्विदंद्वितीयंसूक्तं सूत्रितंच—यएकइद्धर्यस्तिग्मश्रृंग-इति उपहव्यनाम्न्येकाहेपीदं निष्केवल्यनिविद्धानं सूत्रितंच—यएकइदिति मध्यंदिनइति।

यएकइद्धव्यश्चर्षणीनामिन्द्रंतंगीर्भिरभ्यर्चआभिः।
यःपत्यतेवृषभोवृष्ण्यावान्त्सत्यःसत्वापुरुमायःसहस्वान् ॥ १ ॥

यः। एकः। इत्। हव्यः। चर्षणीनाम्। इन्द्रम्। तम्। गीःऽभिः। अभि। अर्चे। आभिः। यः। पत्यते। वृषभः। वृष्ण्यऽवान्। सत्यः। सत्वा। पुरुऽमायः। सहस्वान् ॥ १ ॥

यइन्द्रश्चर्षणीनां प्रजानां आपत्सु एकइत् एकएव हव्योह्वातव्यः आभिर्गीर्भिः स्तुतिरू-पाभिर्वाग्भिः तमिन्द्रं अभ्यर्चे अभिष्टौमि यइन्द्रःपत्यते स्तोतॄनभिगच्छति यद्वा पत्यतेलोकाना-मीष्टे कीदृशः वृषभः कामानांवर्षिता वृष्ण्यावान् बलवान् सत्यः अविसंवादी सत्वा शत्रूणां सादयिता कामानांदातावा सदेर्वासनोतेर्वेदंरूपं पुरुमायोबहुप्रज्ञः सहस्वानभिभवनवान् तमि-न्द्रमभिष्टौमीतिसंबन्धः ॥ १ ॥

१. जो इन्द्र प्रजाओं की आपत्तियों में एकमात्र आह्वान करने के योग्य हैं। जो स्तोताओं के प्रति आगमन करते हैं। जो अभीष्टवर्षक,

बलवान्, सत्यवादी, शत्रुपीड़क, बहुप्रज्ञ और अभिभवकर्त्ता हैं उन इन्द्र का स्तुतियों-द्वारा स्तवन करते हैं।

तमुं नः पूर्वे पितरो नवग्वाः सप्त विप्रासो अभि वाजयन्तः।
नक्षद्दाभं ततुरिं पर्वतेष्ठामद्रोघवाचं मतिभिः शविष्ठम् ॥ २ ॥

तम्। ऊँ इति। नः। पूर्वे। पितरः। नवऽग्वाः। सप्त। विप्रासः।
अभि। वाजयन्तः। नक्षत्ऽदाभम्। ततुरिम्। पर्वतेऽस्थाम्।
अद्रोघऽवाचम्। मतिऽभिः। शविष्ठम् ॥ २ ॥

पूर्वेप्रत्नाः नवग्वाः नवभिर्मासैः सत्रमनुष्ठितवन्तः सप्तसप्तसंख्याकाः विप्रासः विप्रामेधाविनः वाजयन्तः वाजमन्नंहविर्लक्षणमिन्द्रस्यकुर्वन्तः इन्द्रंवा वाजिनंबलिनंकुर्वन्तः तत्करोतीतिणिच् एवंभूतानोस्माकं पितरोंगिरसः तमु तमेवेन्द्रं मतिभिः स्तुतिभिरभितुष्टुवुरितिशेषः कीदृशं नक्षद्दाभं नक्षतिर्गतिकर्मा अभिगच्छतां शत्रूणां दंभितारं हिंसितारं ततुरिं तरितारं पर्वतेष्ठां पर्वतेष्ववस्थितं अद्रोघवाचं अद्रोग्धव्याअनतिक्रमणीयावागाज्ञारूपायस्यतं शविष्ठं बलवत्तमं ॥ २ ॥

२. पुरातन, नौ महीनों में यज्ञ करनेवाले, सप्त-संख्यक मेधावी, हमारे पिता अङ्गिरा आदि ने इन्द्र को बलवान् अथवा अन्नवान् करते हुए स्तुतियों-द्वारा उनका स्तवन किया था। इन्द्र गमनशील, शत्रुओं के हिंसक, पर्वतों पर अवस्थिति करनेवाले और अनुल्लंघनीय शासन हैं।

तमीमह इन्द्रमस्य रायः पुरुवीरस्य नृवतः पुरुक्षोः।
यो अस्कृधोयुरजरः स्वर्वान्तमा भर हरिवो मादयध्यै ॥ ३ ॥

तम्। ईमहे। इन्द्रम्। अस्य। रायः। पुरुऽवीरस्य। नृऽवतः।
पुरुऽक्षोः। यः। अस्कृधोयुः। अजरः। स्वःऽवान्। तम्। आ।
भर। हरिऽवः। मादयध्यै ॥ ३ ॥

पुरुवीरस्य बहुपुत्रपौत्रयुक्तस्य नृवतः परिचारकजनसहितस्य पुरुक्षोर्बह्वन्नस्य बहुपशोर्वा अस्यरायः इदंधनं द्वितीयार्थेषष्ठी तमिन्द्रं ईमहे याचामहे योरयिः अस्कृधोयुः अविच्छिन्नः अजरोजराहानिरहितः स्वर्वान् सुखयुक्तः हेहरिवः हरिवन् स्वकीयाश्वोपेतेन्द्र त्वं तं रयिं मादयध्यै अस्मान्मादयितुं आभराहर ॥ ३ ॥

३. बहुत पुत्र-पौत्रों से युक्त, परिचारकों के साथ और पशुओं के साथ हम लोग इन्द्र के निकट अविच्छिन्न, अक्षय और सुखदायक धन की प्रार्थना करते हैं। हे अश्वों के अधिपति, तुम हम लोगों को सुखी करने के लिए वह धन आहरण करो।

तन्नोविवोचोयदितेपुराचिज्जरितारआनशुःसुम्नमिन्द्र ।
कस्तेभागःकिंवयोदुध्रखिद्वःपुरुहूतपुरूवसोसुरघ्नः ॥४॥

तत् । नः । वि । वोचः । यदि । ते । पुरा । चित् । जरितारः ।
आनशुः । सुम्नम् । इन्द्र । कः । ते । भागः । किम् । वयः ।
दुध्र । खिद्वः । पुरुऽहूत । पुरुवसो इति पुरुऽवसो । असुरऽघ्नः ॥४॥

हेइन्द्र यदि यत् ते तव पुराचित् पूर्वस्मिन्काले जरितारः स्तोतारः सुम्नं सुखंआनशुः प्रापुः तत् तत्सुखं नोस्माकं विवोचः विब्रूहि हेदुध्र दुर्धर हेखिद्वःशत्रूणांखेदयितः हेपुरुहूत हेपुरुवसोइन्द्र असुरघ्न असुराणांहन्तुस्तेतवयज्ञेषु कोभागःकॢप्तः वयः हविर्लक्षणमन्नंकिंकॢप्तं यदि केचिच्चिरंतनाः पूर्वकालेपि त्वत्तःसकाशात् सुखं लेभिरे तर्ह्यहमपि तत्सुखंलप्स्यइतिविचार्यसुखप्राप्तिविलंबोममासोढव्योभवेदित्यर्थः ॥ ४ ॥

४. हे इन्द्र, जब पूर्वकाल में तुम्हारे स्तोताओं ने सुख-लाभ किया था, तब हम लोगों को भी वह सुख बताओ। हे दुर्द्धर्ष, शत्रु-विजयी, ऐश्वर्यशाली, बहुजनाहूत इन्द्र, तुम असुरों के मारनेवाले हो। तुम्हारे लिए यज्ञ में कौन भाग और कौन हव्य कल्पित हुआ है?

तंपृच्छन्तीवज्रहस्तंरथेष्ठामिन्द्रंवेपीवक्वरीयस्यनूगीः ।
तुविग्राभंतुविकूर्मिरभोदांगातुमिषेनक्षतेतुम्रमच्छ ॥ ५॥ १३ ॥

तम् । पृच्छन्ती । वज्रऽहस्तम् । रथेऽस्थाम् । इन्द्रम् । वेपी ।
वक्वरी । यस्य । नु । गीः । तुविऽग्राभम् । तुविऽकूर्मिम् । रभःऽदाम् ।
गातुम् । इषे । नक्षते । तुम्रम् । अच्छ ॥ ५ ॥ १३ ॥

— पूर्वयोपालब्धइन्द्र ऋषये कामान्प्रायच्छत् ततःसकामपूर्णऋषिराह वज्रहस्तं वज्रपाणिं रथेष्ठां रथेस्थितं तमिन्द्रं पृच्छन्ती अर्चयन्ती पृच्छतिरर्चतिकर्मा वेपी वेपोयागादिलक्षणंकर्म तद्वती वक्वरीगुणानांवक्त्रीगीः ईदृशीस्तुतिर्यस्ययजमानस्यभवति कीदृशमिन्द्रं पृच्छन्ती तुविग्राभं तुवीनांबहूनांग्रहीतारं तुविकूर्मिं बहुकर्माणं रभोदां रभसोबलस्यदातारं नुइतिपूरणः सयजमानः गातुं सुखं इषेगच्छति किंच तुम्रं ग्लापयितारं शत्रुं अच्छाभिमुखं नक्षते गच्छति॥५॥

५. यागादि लक्षण कर्म से युक्त और गुणवाचक स्तुति करनेवाले यजमान वज्र धारण करनेवाले और रथ पर अवस्थिति करनेवाले इन्द्र की अर्चना करते हैं। इन्द्र बहुतों के ग्रहण करनेवाले (आश्रयदाता) बहुत कर्म करनेवाले और बल के दाता हैं। वह यजमान सुख प्राप्त करता है और शत्रु के अभिमुख गमन करता है।

अयाहत्यंमाययावावृधानंमनोजुवास्वतवःपर्वतेन ।
अच्युताचिद्वीळितास्वोजोरुजोविदृळ्हाधृषताविरप्शिन् ॥ ६ ॥

अया । ह । त्यम् । मायया । वावृधानम् । मनःऽजुवा । स्वऽतवः ।
पर्वतेन । अच्युता । चित् । वीळिता । सुऽओजः । रुजः । वि ।
दृळ्हा । धृषता । विऽरप्शिन् ॥ ६ ॥

हेस्वतवसः स्वभूतबलेन्द्र त्वंमनोजुवा मनोवद्गच्छता अया अनेनपर्वतेन बहुपर्वणा स्वकीयेनायुधेन वज्रेणशतपर्वणेतिंदर्शनात् मायया वावृधानं वर्धमानं त्यं तं प्रसिद्धं वृत्रं व्यरुजः विशेषेणभांक्षीः तथा हे स्वोजः शोभनतेजः हेविरप्शिन् हेमहन् इन्द्र त्वं अच्युता अच्युतानि चिद्धि नाशरहितान्यपि वीळिता वीळितानि अशिथिलीकृतानि दृळ्हा दृढानि पुराणि धृषता धर्षकेणवज्रेण व्यरुजोभग्नवानसि ॥ ६ ॥

६. हे निज बल से बलवान् इन्द्र, तुमने मन की तरह गमन करनेवाले और बहुत पर्व (गाँठ) वाले वज्र से माया-द्वारा प्रवृद्ध उस वृत्र को चूर्ण किया था। हे शोभन तेजवाले महान् इन्द्र, तुमने धर्षक, वज्र-द्वारा नाश-रहित, अशिथिल और दृढ़ पुरियों को भग्न किया था।

तंवोधियानव्यस्याशविष्ठंप्रत्नंप्रत्नवत्परितंसयध्यै ।
सनोवक्षदनिमानःसुवह्मेन्द्रोविश्वान्यतिदुर्गहाणि ॥ ७ ॥

तम् । वः । धिया । नव्यस्या । शविष्ठम् । प्रत्नम् । प्रत्नऽवत् ।
परिऽतंसयध्यै । सः । नः । वक्षत् । अनिऽमानः । सुऽवह्मा । इन्द्रः ।
विश्वानि । अति । दुःऽगहानि ॥ ७ ॥

नव्यस्या नवतरया धिया स्तुत्या शविष्ठं बलवत्तमं प्रत्नं पुराणं हेइन्द्र तंवस्त्वां प्रत्नवत् चिरंतनाऋषयइव परितंसयध्यै परितोविस्तारयितुं अहंप्रवृत्तोस्मीतिशेषः अनिमानः अपरिमाणः सुवह्मा शोभनवहनः सइन्द्रः विश्वानि समस्तानि दुर्गहाणि दुर्गाणि नोस्मभ्यं अतिवक्षदतिवहतु ॥ ७ ।हे इन्द्र, हम चिरन्तन ऋषियों की तरह नवीन स्तुतियों के द्वारा तुम्हें (तुम्हारे गौरव को) विस्तारित करते हैं। तुम अतिशय बलवान् और प्राचीन हो। अपरिमाण और शोभन वहनकारी इन्द्र हम लोगों की समस्त विघ्नों से, रक्षा करें।

आजनायद्रुह्वणेपार्थिवानिदिव्यानिदीपयोन्तरिक्षा ।
तपावृषन्विश्वतःशोचिषातान्ब्रह्मद्विषेशोचयक्षामपश्च ॥ ८ ॥

आ । जनाय । द्रुह्वणे । पार्थिवानि । दिव्यानि । दीपयः ।
अन्तरिक्षा । तप । वृषन् । विश्वतः । शोचिषा । तान् ।
ब्रह्मऽद्विषे । शोचय । क्षाम् । अपः । च ॥ ८ ॥

हेइन्द्र त्वं ब्रह्मणे साधुजनानांद्रोग्धुर्जनायजनस्यराक्षसादेः षष्ठ्यर्थेचतुर्थी पार्थिवानि पृथिव्यांभवानि दिव्यानि दिविभवानि अन्तरिक्षा अन्तरिक्षेभवानि च स्थानानि आदीपयः आसमंतात्तापय हेवृषन् कामानांवर्षितरिन्द्र त्वं विश्वतः सर्वतोविद्यमानान् तान् राक्षसादीन् शोचिषा त्वदीययादीप्त्या तप दह किंच ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे राक्षसादये ब्रह्मद्विषंदग्धुमित्यर्थः क्षां पृथिवीं अपश्चान्तरिक्षं शोचय दीपय आपइत्यन्तरिक्षनामैतत् ॥ ८ ॥

८. हे इन्द्र, तुम साधु-द्रोही राक्षसों के लिए द्यावा-पृथिवी और अन्तरिक्षस्थित स्थानों को सन्तप्त करते हो। हे कामनाओं के वर्षक इन्द्र, तुम अपनी दीप्ति-द्वारा सर्वत्र विद्यमान उन राक्षसों को भस्मीभूत करो। ब्राह्मणद्वेषी राक्षसों को दग्ध करने के लिए पृथिवी और अन्तरिक्ष को दीप्त करो।

भुवोजनस्यदिव्यस्यराजापार्थिवस्यजगतस्त्वेषसंदृक् ।
धिष्ववज्रन्दक्षिणइन्द्रहस्तेविश्वाअजुर्यदयसेविमायाः ॥ ९ ॥

भुवः । जनस्य । दिव्यस्य । राजा । पार्थिवस्य । जगतः ।
त्वेषऽसंदृक् । धिष्व । वज्रम् । दक्षिणे । इन्द्र । हस्ते । विश्वाः ।
अजुर्य । दयसे । वि । मायाः ॥ ९ ॥

हेत्वेषसंदृक् दीप्तदर्शनेन्द्र दिव्यस्य दिविभवस्य जनस्य राजा ईश्वरोभुवोभवसि जगतोजंगमस्य पार्थिवस्यच राजा भवसि दक्षिणे हस्ते वज्रं धिष्व निधेहि तेनवज्रेण विश्वाः सर्वाआसुरीर्मायाः विदयसे विबाधसे दयदानगतिहिंसारक्षणेष्वितिधातुः हेइन्द्र अजुर्य जरयितुमशक्येन्द्र त्वमिति ॥ ९ ॥

९. हे दीप्य-दर्शन इन्द्र, तुम स्वर्गीय तथा पार्थिव जन के ईश्वर होते हो। हे अतिशय स्तवनीय इन्द्र, तुम दक्षिण हस्त में वज्र धारण करते हो और असुरों की माया को उच्छिन्न करते हो।

आसंयतमिन्द्रणःस्वस्तिंशत्रुतूर्यायबृहतीममृध्राम् ।
ययादासान्यार्याणिवृत्राकरोवज्रिन्त्सुतुकानाहुषाणि ॥ १० ॥

आ । सम्ऽयतम् । इन्द्र । नः । स्वस्तिम् । शत्रुऽतूर्याय ।
बृहतीम् । अमृध्राम् । यया । दासानि । आर्याणि । वृत्रा ।
करः । वज्रिन् । सुऽतुका । नाहुषाणि ॥ १० ॥

हेइन्द्र शत्रुतूर्याय शत्रूणांतारणाय बृहतीं महतीं अमृध्रां अहिंसितां संयतं संयतीं संगच्छमानां स्वस्तिं क्षेमलक्षणां संपदं हेइन्द्र नोस्मभ्यमाभर हेवज्रिन् वज्रवन्निंद्र ययास्वस्त्या दासानि कर्महीनानिमनुष्यजातानि आर्याणि कर्मयुक्तानि करः अकरोः नाहुषाणि मनुष्यसंबन्धीनि नहुषाइतिमनुष्यनामैतत् वृत्रा वृत्राणि शत्रून् सुतुका सुतुकानि शोभनहिंसोपेतान्यकरोः ॥ १० ॥

१०. हे इन्द्र, तुम हम लोगों को महान्, अहिंसित, संगच्छमान और कल्याणयुक्त सम्पत्ति प्रदान करो, जिससे शत्रुगण वर्षण करने में समर्थ न हों। हे वज्रधर इन्द्र, जिस कल्याण के द्वारा तुमने कर्महीन मनुष्यों को कर्मयुक्त बनाया था और मनुष्य-सम्बन्धी शत्रुओं को शोभन हिंसा से युक्त किया था।

सनोनियुद्भिःपुरुहूतवेधोविश्ववाराभिरागहिप्रयज्यो ।
नयाअदेवोवरतेनदेवआभिर्याहितूयमामद्र्यद्रिक् ॥ ११ ॥१४॥

सः । नः । नियुत्ऽभिः । पुरुऽहूत । वेधः । विश्वऽवाराभिः ।
आ । गहि । प्रयज्यो इति प्रऽयज्यो । न । याः । अदेवः । वरते ।
न । देवः । आ । आभिः । याहि । तूयम् । आ । मद्र्यद्रिक् ॥११॥१४॥

हेपुरुहूत हेवेधोविधातः हेप्रयज्यो प्रकृष्टेनयजनीयेन्द्र सत्वं विश्ववाराभिः विश्वैर्वरणीयाभिः संभजनीयाभिः नियुद्भिरश्वैर्नोस्मानागह्यागच्छ अदेवोसुरः यानियुतःयानश्वान्नवरते नवारयति देवश्च नवरते आभिर्नियुद्भिः तूयमाक्षिप्रमेव मद्र्यद्रिक् मदभिमुखःसन् आयाह्यागच्छ अद्र्यागमस्यद्विर्वचनंछान्दसं ॥ ११ ॥

११. हे बहुजनाहूत, विधाता, अतिशय यजनीय इन्द्र, तुम सबके द्वारा सम्भजनीय अश्वों के द्वारा हमारे निकट आगमन करो। जिन अश्वों का निवारण देव या असुर कोई भी नहीं करते हैं; उन अश्वों के साथ तुम शीघ्र ही हमारे अभिमुख आगमन करो।

सुतइदितिदशर्चमष्टमंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रं सुतइद्दशेत्यनुक्रान्तं विषुवतिनिष्केवल्येइदंसूक्तं सूत्रितंच—सुतइत्त्वमेषप्रपूर्वीरिति । महाव्रतेपिनिष्केवल्येइदमादीनित्रीणिसूक्तानि तथैवपंचमारण्यकेसूत्रितं—सुतइत्त्वंनिमिश्लइन्द्रसोमइतित्रीणीति ।

सुतइत्त्वंनिमिश्लइन्द्रसोमेस्तोमेब्रह्मणिशस्यमानउक्थे ।
यद्वायुक्ताभ्यांमघवन्हरिभ्यांबिभ्रद्वज्रंबाह्वोरिन्द्रयासि ॥ १ ॥

सुते । इत् । त्वम् । निऽमिश्लः । इन्द्र । सोमे । स्तोमे । ब्रह्मणि ।
शस्यमाने । उक्थे । यत् । वा । युक्ताभ्याम् । मघऽवन् ।
हरिऽभ्याम् । बिभ्रत् । वज्रम् । बाह्वोः । इन्द्र । यासि ॥ १ ॥

सोमेसुतेइव अभिषुतएव सति ब्रह्मणि बृहति महति स्तोमे स्तोत्रे उच्चार्यमाणेसति उक्थेशस्त्रे शस्यमानेसति हेइन्द्र त्वं निमिश्लः निमिश्लःसन् हरी संयोजयन् हेमघवन् धनवन्निन्द्र त्वं बाह्वोर्हस्तयोर्वज्रंस्वकीयमायुधं बिभ्रत् धारयन् युक्ताभ्यां रथेनियुक्ताभ्यां हरिभ्यामश्वाभ्यां यासि यद्वा आगच्छसीति यच्च तत्सोमेभिषुतइतिसंबन्धः ॥ १ ॥

१. हे इन्द्र, सोम के अभिषुत होने पर और महान् स्तोत्र के उच्चार्यमाण होने पर एवम् शास्त्र (वैदिक स्तुति) विहित होने पर तुम रथ में अपने अश्व को संयुक्त करते हो। हे धनवान् इन्द्र, तुम दोनों हाथों में वज्र धारण करके रथ में योजित अश्वद्वय के साथ आगमन करते हो।

यद्वा॑ दि॒वि पार्ये॒ सुष्वि॑मिन्द्र वृत्र॒हत्येऽव॑सि॒ शूर॑साते।
यद्वा॒ दक्ष॑स्य बि॒भ्युषो॒ अबि॑भ्य॒दर॑न्धयः॒ शर्ध॑त इन्द्र॒ दस्यू॑न् ॥ २ ॥

यत्। वा॒। दि॒वि। पार्ये॑। सुस्वि॑म्। इ॒न्द्र॒। वृ॒त्र॒ऽहत्ये॑। अव॑सि। शूर॑ऽसातौ। यत्। वा॒। दक्ष॑स्य। बि॒भ्युषः॑। अबि॑भ्यत्। अर॑न्धयः। शर्ध॑तः। इ॒न्द्र॒। द॒स्यू॑न् ॥ २ ॥

हेइन्द्र त्वं दिवि द्युलोके शूरसातौ शूरैर्भटैःसंभजनीये वृत्रहत्ये युद्धेच पार्ये प्राप्तव्ये सति सुष्विमभिषोतारं यजमानं अवसि यद्वा रक्षसीति यच्चवेतिसमुच्चये दक्षस्य यज्ञादिषुसमर्थस्य बिभ्युषः शत्रुभ्योबिभ्यतोजनस्य शर्धतः संग्रामेउत्सहमानान् दस्यूनुपक्षपयितॄन्शत्रून् हेइन्द्र त्वं अबिभ्यद्भीतिरहितःसन् अरन्धयः यद्वा वशीकरोषीति यच्चतत्सर्वं सोमेभिषुतइतिपूर्वेणसंबन्धः तथाचोक्तं यद्वाह्वोर्धारयन्वज्रंहरिभ्यांयासिवृत्रहन्॥ यच्चरक्षतिसंग्रामेनूनंसोममभिषुण्वतः॥ यच्चकर्मसुदक्षस्ययजमानस्यापारयः ॥ वशीकरोषितांतस्मैबिभ्यतेभीतिवर्जितः॥ तत्सोमेभिषुतेस्तोत्रशस्त्रयोश्चप्रवृत्तयोः॥ इतिद्वचोयमेकार्थःसुतइत्त्वमितिद्वयंइति ॥ २ ॥

२. हे इन्द्र, तुम स्वर्ग में शूरों-द्वारा सम्भजनीय संग्राम में उपस्थित होकर अभिषवकारी यजमान की रक्षा करते हो एवम् निर्भीक होकर धार्मिक तथा सन्त्रस्त यजमान के विघ्नकारी दस्युओं को वशीभूत करते हो।

पाता॑ सु॒तमिन्द्रो॑ अस्तु॒ सोमं॑ प्रणे॒नीरु॒ग्रो ज॑रि॒तार॑मू॒ती।
कर्ता॑ वी॒राय॒ सुष्व॑य उ लो॒कं दाता॒ वसु॑ स्तुव॒ते की॒रये॑ चित् ॥ ३ ॥

पाता॑। सु॒तम्। इन्द्रः॑। अ॒स्तु॒। सोम॑म्। प्र॒ऽने॒नीः। उ॒ग्रः। ज॒रि॒तार॑म्। ऊ॒ती। कर्ता॑। वी॒राय॑। सुस्व॑ये। ऊँ इति॑। लो॒कम्। दाता॑। वसु॑। स्तु॒व॒ते। की॒रये॑। चि॒त् ॥ ३ ॥

इन्द्रः सुतमभिषुतंसोमं पातास्तु पानशीलोभवतु तृन्नन्तत्वान्नलोकाव्ययनिष्ठेतिषष्ठीप्रतिषेधार्थः कीदृशः ऊती ऊत्यामार्गेण जरितारं स्तोतारं प्रणेनीः प्रकर्षेणनेता उग्रः उद्गूर्णः वीराय यज्ञादिकर्मसुदक्षाय सुस्वये सोमाभिषवंकुर्वतेयजमानाय लोकं स्थानं कर्तादातेत्यर्थः उइतिपादपूरणः स्तुवते स्तोत्रंकुर्वते कीरयेचित् चिदितिचार्थेस्तोत्रेच कीरिरितिस्तोतृनामैतत् वसु धनंदातास्तु ॥ ३ ॥

३. इन्द्र अभिषुत सोम के पानकर्त्ता होते हैं। भीषण इन्द्र स्तवकारी को (निरापद) मार्ग से ले जाते हैं। इन्द्र यज्ञ करने में दक्ष तथा सोमाभिषव करनेवाले यजमान को स्थान प्रदान करते हैं एवम् स्तोत्र करनेवाले को धन प्रदान करते हैं।

गन्तेयान्तिसवनाहरिभ्यांबभ्रिर्वज्रंपपिःसोमंददिर्गाः।
कर्तावीरंनर्यंसर्ववीरंश्रोताहवंगृणतःस्तोमवाहाः॥ ४॥
गन्ता। इयन्ति। सवना। हरिऽभ्याम्। बभ्रिः। वज्रम्। पपिः।
सोमम्। ददिः। गाः। कर्ता। वीरम्। नर्यम्। सर्वऽवीरम्।
श्रोता। हवम्। गृणतः। स्तोमऽवाहाः॥ ४॥

इन्द्रः हरिभ्यां स्वकीयाभ्यां इयन्ति हृदयस्थानानि त्रीणि सवना सवनानि गन्ता गमनशीलोभवतु कीदृशः वज्रं स्वकीयमायुधं बभ्रिर्भर्ता धारकः सोममभिषुतं पपिः पाता गाः ददिर्दाता नर्यं मनुष्यहितं सर्ववीरं बहुपुत्रोपेतं वीरं पुत्रं कर्ता यजमानाय दाता गृणतः स्तुवतः स्तोतुः संबन्धि हवं स्तोत्रं श्रोताश्रावकः स्तोमवाहाः स्तोमैः स्तोत्रैर्वहनीयः॥ ४॥

४. इन्द्र अपने अश्वद्वय के साथ हृदयस्थानीय तीनों सवनों में गमन करते हैं। इन्द्र वज्र धारण करनेवाले, अभिषुत सोम के पान करनेवाले, गोदाता, मनुष्यों के हित के लिए बहु पुत्रोपेत पुत्र प्रदान करनेवाले और स्तवकारी यजमान के स्तोत्र को श्रवण करनेवाले तथा स्वीकार करनेवाले हैं।

अस्मैवयंयद्वावानतद्विविष्मइन्द्राययोनःप्रदिवोअपस्कः।
सुतेसोमेस्तुमसिशंसदुक्थेन्द्रायब्रह्मवर्धनंयथासत्॥ ५॥ १५॥
अस्मै। वयम्। यत्। ववान। तत्। विविष्मः। इन्द्राय।
यः। नः। प्रऽदिवः। अपः। करिति कः। सुते। सोमे। स्तुमसि।
शंसत्। उक्था। इन्द्राय। ब्रह्म। वर्धनम्। यथा। असत्॥५॥१५॥

प्रदिवः पुराणोयइन्द्रः नोस्मदर्थं अपः पोषणादिकंकर्म कः करोति अयमिन्द्रः यवस्तोत्रादिकं ववान कामयते अस्माइन्द्राय वयं तद्विविष्मः व्यामुमः कुर्मइत्यर्थः सोमेसुतेभिषुते सति स्तुमसि स्तुमः इन्द्रायस्तोत्राणिकुर्मः उक्था उक्थानि शस्त्राणि शंसव शंसंतः प्रथमाबहुवचनस्यलुक् ब्रह्म हविर्लक्षणमन्नं इन्द्रायेन्द्रार्थंवर्धनंयथावृद्धिकरं असव स्याव तथाकुर्मइत्यर्थः॥ ५॥ जो पुरातन इन्द्र हम लोगों के लिए पोषणादि कर्म करते हैं, उन्हीं इन्द्र के अभिलषित स्तोत्र का हम लोग उच्चारण करते हैं। सोमाभिषुत होने पर हम लोग इन्द्र का स्तवन करते हैं। उक्थों का उच्चारण करते हुए हम लोग इन्द्र को हविर्लक्षण अन्न उस प्रकार से देते हैं, जिससे उनका वर्द्धन हो।

ब्रह्मा॑णि॒ हि च॑कृ॒षे वर्ध॑नानि॒ ताव॑त्त इन्द्र म॒तिभि॑र्विविष्मः ।
सु॒ते सोमे॑ सुतपाः॒ शंत॑मानि॒ रान्द्या॑ क्रियास्म॒ वक्ष॑णानि य॒ज्ञैः ॥ ६ ॥

ब्रह्मा॑णि । हि । च॒कृ॒षे । वर्ध॑नानि । ताव॑त् । ते॒ । इ॒न्द्र॒ ।
म॒तिऽभिः॑ । वि॒वि॒ष्म॒ः । सु॒ते । सोमे॑ । सु॒त॒ऽपा॒ः । शम्ऽत॑मानि ।
रान्द्या॑ । क्रि॒या॒स्म॒ । वक्ष॑णानि । य॒ज्ञैः ॥ ६ ॥

हेइन्द्र त्वं हियस्मात्कारणात् ब्रह्माणि स्तोत्राणि वर्धनानि स्वयमेववृद्धिकराणि चकृषे कृतवानसि तस्मात्कारणात् तावत् तावन्ति तादृशानि स्तोत्राणि ते तुभ्यं मतिभिर्बुद्धिभिः वयं विविष्मः व्याप्नुमः वर्धनानि स्तोत्राणि मम यथा भवेयुः त्वं तादृशानि कल्पितवानसीत्यर्थः अपिच हेसुतपाः अभिषुतसोमस्यपातः त्वामुद्दिश्य सुतेसोमेअभिषुतेसति शंतमानि सुखकृत्तमानि रांद्या रांद्याणि रमणीयानि यज्ञैर्हविर्भिर्युक्तानि वक्षणानि वाहकानि स्तोत्राणि क्रियास्म करवाम ॥ ६ ॥

६. हे इन्द्र, जिस लिए तुमने स्तोत्रों को स्वयं बढ़ाया है; अतः हम लोग उस तरह के स्तोत्रों का, तुम्हारे उद्देश्य से, बुद्धिपूर्वक, उच्चारण करते हैं। (हमारे स्तोत्र जिस प्रकार से वर्द्धमान हों, तुमने वैसा ही किया है)। हे अभिषुत-सोमपान-कर्त्ता इन्द्र, तुम्हारे उद्देश्य से सोमाभिषव होने पर तुम्हारे उद्देश्य से निरतिशय सुखदायक, कमनीय और हवि से युक्त स्तोत्रों का उच्चारण करते हैं।

स नो॑ बोधि पुरो॒ळाशं॒ ररा॑णः॒ पिबा॒ तु सोमं॒ गोऋ॑जीकमिन्द्र ।
एदं ब॒र्हिर्यज॑मानस्य सीदो॒रुं कृ॑धि त्वाय॒त उ॑ लो॒कम् ॥ ७ ॥

सः । नः॒ । बो॒धि॒ । पु॒रो॒ळाश॑म् । ररा॑णः । पिब॑ । तु । सोम॑म् ।
गोऽऋ॑जीकम् । इ॒न्द्र॒ । आ । इ॒दम् । ब॒र्हिः । यज॑मानस्य ।
सी॒द॒ । उ॒रुम् । कृ॒धि॒ । त्वा॒ऽय॒तः । उँ॒ इति॑ । लो॒कम् ॥ ७ ॥

हेइन्द्र रराणोरममाणः सत्वं नोस्मदीयं पुरोडाशं एतल्लक्षणंहविर्बोधि बुध्यस्व किंच गोऋजीकं गोविकारदध्यादिभिःसंस्कृतं अभिषुतंसोमंनुक्षिप्रं पिब पिबेः तदर्थंच यजमानस्य संबन्धीदं बर्हिरासीदाभिविश तदनंतरं त्वायतस्त्वामिच्छन्तोयजमानस्य लोकं स्थानं उरु विस्तीर्णं कृधि कुरु उइतिपूरणः ॥ ७ ॥

७. हे इन्द्र, प्रमुदित होकर तुम हम लोगों के पुरोडाश को स्वीकार करो। दही आदि से संस्कृत सोमरस को शीघ्र पियो। सोमपान करने के लिए यजमान-सम्बन्धी कुशों पर बैठो। तदनन्तर तुम्हारी इच्छा करनेवाले यजमान के स्थान को विस्तीर्ण करो।

सर्मन्दस्वाह्यनुजोषमुग्रप्रत्वायज्ञासइमेअश्नुवन्तु।
प्रेमेहवासःपुरुहूतमस्मेआत्वेयंधीरवसइन्द्रयम्याः ॥ ८ ॥

सः। मन्दस्व। हि। अनु। जोषम्। उग्र। प्र। त्वा। यज्ञासः॥
इमे। अश्नुवन्तु। प्र। इमे। हवासः। पुरुऽहूतम्। अस्मे इति।
आ। त्वा। इयम्। धीः। अवसे। इन्द्र। यम्याः॥ ८॥

हेउग्र उद्गूर्णबलेन्द्र सत्वं अनुजोषं कामानुगुणं यथाभवतितथा मन्दस्व मोदस्व हिशब्दःपादपूरणः हियोगेमन्दस्वेत्याख्यातस्यव्यत्ययात्सर्वानुदात्तत्वं इमेयज्ञासोयज्ञाः सोमाः त्वा त्वां प्राश्नुवन्तु प्राप्नुवन्तु हेपुरुहूत बहुभिराहूतेन्द्र त्वां अस्मे अस्मदीयानि इमे हवासोहवाःस्तोत्राणि प्राप्नुवन्तु इयंधीः स्तुतिः त्वां अवसे अस्माकं रक्षणाय आयम्याः आयच्छतु नियच्छतु ॥८॥

८. हे उद्यतायुध इन्द्र, तुम अपनी इच्छा के अनुसार प्रमुदित होओ। यह सोमरस तुम्हें प्राप्त हो। हे बहुजनाहूत इन्द्र, हमारे स्तोत्र तुम्हें प्राप्त हों। यह स्तुति हम लोगों की रक्षा के लिए तुम्हें नियुक्त (प्रवृत्त) करें।

तंवःसखायःसंयथासुतेषुसोमेभिरींपृणताभोजमिन्द्रम्।
कुवित्तस्माअसतिनोभरायनसुष्विमिन्द्रोवसेमृधाति ॥ ९ ॥

तम्। वः। सखायः। सम्। यथा। सुतेषु। सोमेभिः। ईम्।
पृणत। भोजम्। इन्द्रम्। कुवित्। तस्मै। असति। नः।
भराय। न। सुस्विम्। इन्द्रः। अवसे। मृधाति॥ ९॥

हेसखायः स्तोतारोवोयूयं सोमेषु सुतेषु अभिषुतेषुसत्सु भोजं दातारं तमीं एतमिन्द्रं सोमेभिः सोमैः यथाकामं संपृणत संपूरयत तस्माइन्द्राय कुविद्बहूपकरणं कुविदितिबहुनामैतत् असति अस्तु किमर्थं नोस्माकं भराय भरणाय पोषणाय इन्द्रः सुष्विमभिषवणशीलं यजमानं अवसे तर्पणाय नमृधाति नबाधते ॥ ९ ॥

९. हे स्तोताओ, सोमाभिषव होने पर तुम लोग दाता इन्द्र को, सोमरस-द्वारा, यथाभिलाषपूर्ण करो। इन्द्र के लिए वह (सोम) बहुत परिमाण में हो, जिससे वह हम लोगों का पोषण करें। इन्द्र अभिवर्षणशील यजमान की तृप्ति (सुख) में बाधा नहीं देते हैं।

एवेदिन्द्रःसुतेअस्ताविसोमेभरद्वाजेषुक्षयदिन्मघोनः।
असद्यथाजरित्रउतसूरिरिन्द्रोरायोविश्ववारस्यदाता ॥१०॥१६॥

एव। इत्। इन्द्रः। सुते। अस्तावि। सोमे। भरत्ऽवाजेषु।
क्षयत्। इत्। मघोनः। असत्। यथा। जरित्रे। उत। सूरिः।
इन्द्रः। रायः। विश्वऽवारस्य। दाता॥ १०॥ १६॥

मघोनोधनवतोहविष्मतोयजमानस्य क्षयत् ईश्वरः इन्द्रः सोमेसुते अभिषुतेसति भरद्वाजेषु भरद्वाजेमयि एव एवं अस्तावि स्तुतोभूत् इन्द्रः जरित्रे स्तोत्रे सूरिः सन्मार्गे प्रेरकोयथासत् भवत् उतापिच विश्ववारस्य विश्वैर्वरणीयस्य रायोधनस्य दाता यथाभवेत् तथा स्तावीतिसंबन्धः इदितिद्वयंपूरणम् ॥१०॥

१०. सोमाभिषव होने पर हवीरूप धनवाले और यजमान के ईश्वर इन्द्र स्तोता के सन्मार्ग-प्रदर्शक और वरणीय धन-प्रदाता जैसे हों, वैसा ही जानकर भरद्वाज ऋषि ने स्तुति की।

॥ इतिषष्ठेमंडलेद्वितीयोनुवाकः ॥ २ ॥

तृतीयेनुवाकेविंशतिसूक्तानि तत्रवृषामदइतिदशर्चंप्रथमंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रं वृषेत्यनुक्रान्तं विषुवतिनिष्केवल्येएतत्सूक्तं सूत्रितंच—वृषामदःप्रमंहिष्ठायेति।

वृषा॒मद॒इन्द्रे॒श्लोक॑उ॒क्थास॒चा॒सोमे॑षुसुत॒पाऋ॑जी॒षी।
अ॒र्च॒त्र्यो॑म॒घवा॒नृभ्य॑उ॒क्थैर्द्यु॒क्षोराजा॒गि॒रामक्षि॑तोतिः ॥ १ ॥

वृषा॑। मदः॑। इन्द्रे॑। श्लोकः॑। उ॒क्था। स॒चा॑। सोमे॑षु। सु॒त॒ऽपाः। ऋ॒जी॒षी। अ॒र्च॒त्र्यः॑। म॒घऽवा॑। नृऽभ्यः॑। उ॒क्थैः। द्यु॒क्षः। राजा॑। गि॒राम्। अक्षि॑तऽऊतिः ॥ १ ॥

सोमेषु सोमवत्सुयागेषु इन्द्रे सोमपानजनितोमदः वृषा यजमानस्यकामानां वर्षकोभवति यद्वा सर्वजनाह्लादकस्य वर्षणस्य कर्ता भवति उक्था उक्थेनशस्त्रेण सचा सह श्लोकः स्तोत्ररूपः शब्दोवृषाभवति सुतपाः अभिषुतस्य सोमस्य पाता ऋजीषी ऋजीषं गतरसमपि सोमं नपरित्यजन् मघवा धनवान् सचेन्द्रोनृभ्यःस्तुतीनांनेतृभ्यः उक्थैः स्तोत्रैः अर्चत्र्योर्चनीयोभवति द्युक्षोद्युलोकनिवासः गिरां स्तुतीनां राजेश्वरइन्द्रः अक्षितोतिरक्षिणरक्षणोभवति ॥ १ ॥

१. सोमवान् यज्ञ में इन्द्र का सोमपान-जनित हर्ष यजमान की कामनाओं का पूरक हो और वैदिकोपासना-सहित स्तोत्र अभिलाषवर्षक हो। अभिषुत सोमरस पान करनेवाले, नीरस सोम का भी त्याग नहीं करनेवाले धनवान् इन्द्र स्तुतिकारकों की स्तुतियों-द्वारा अर्चनीय होते हैं। द्युलोकनिवासी और स्तुतियों के अधिपति इन्द्र रक्षक होते हैं।

ततु॑रिर्वी॒रोनर्यो॒विचे॑ता॒ःश्रोता॒हवं॑गृण॒तउ॒र्व्यू॑तिः।
वसुः॒शंसो॑न॒रांका॒रुधा॑यावा॒जीस्तु॒तोवि॒दथे॑दाति॒वाज॑म् ॥ २ ॥

तर्तुरिः । वीरः । नर्यः । विऽचेताः । श्रोता । हवम् । गृणतः ।
उर्विऽऊतिः । वसुः । शंसः । नराम् । कारुऽधायाः । वाजी ।
स्तुतः । विदथे । दाति । वाजम् ॥ २ ॥

वाजी अन्नवानिन्द्रः विदथे यज्ञे अस्माभिःस्तुतःसन् वाजमन्नंदाति अस्मभ्यंददाति कीदृशइन्द्रः ततुरिः शत्रूणांहिंसकः वीरोविक्रान्तः नर्योनरहितः विचेताः विविक्तज्ञानः हवमस्मदीयंस्तोत्रं श्रोता गृणतः स्तुवतः स्तोतृजनस्य उर्व्यूतिः विस्तृतरक्षः वसुर्वासयिता नरां नृणां स्तोतृजनानां शंसः शंसनीयः कारुधायाः कारूणांस्तोतॄणांधारयिता एवंभूतइन्द्रो-वाजंददातीतिसंबन्धः ॥ २ ॥

२. शत्रुओं के हिंसक, विक्रमवान्, मनुष्यों के हितकर्त्ता, विवेकशील, हम लोगों के स्तोत्र को सुननेवाले स्तोताओं के अतिशय रक्षक, गृहप्रदाता, स्तोताओं-द्वारा प्रशंसनीय, स्तोताओं के धारक यज्ञ में स्तूयमान होने पर हम लोगों को अन्न प्रदान करते हैं।

अक्षोनचक्र्योःशूरबृहन्प्रतेमह्नारिरिचेरोदस्योः ।
वृक्षस्यनुतेपुरुहूतवयाव्यू३ंतयोरुरुहुरिन्द्रपूर्वीः ॥ ३ ॥

अक्षः । न । चक्र्योः । शूर । बृहन् । प्र । ते । मह्ना । रिरिचे ।
रोदस्योः । वृक्षस्य । नु । ते । पुरुऽहूत । वयाः । वि । ऊतयः ।
रुरुहुः । इन्द्र । पूर्वीः ॥ ३ ॥

हेशूर विक्रान्तेन्द्र बृहन् महान् तेत्वदीयोमह्ना महिमा रोदस्योर्द्यावापृथिव्योः प्ररिरिचे अतिरिच्यते द्यावापृथिवीभ्यामित्यर्थः अत्रदृष्टान्तः—चक्र्योःचक्रयोः अक्षोन रथसंबन्धी अ-क्षोयथाचक्राभ्यांबहिर्गतः तद्वत् हेपुरुहूत बहुभिराहूतेन्द्र त्वदीयाः पूर्वीर्बह्वयः ऊतयोरक्षाः विरुरुहुःविशेषेणरोहन्ति तत्रदृष्टान्तः—वृक्षस्यनु यथावृक्षस्य वयाः शाखाः विरोहन्तितद्वत् ॥३॥

३. हे विक्रान्त इन्द्र, चक्रद्वय के अक्ष की तरह (रथ-सम्बन्धी अक्ष जैसे पहियों से बाहर हो जाता है) तुम्हारी बृहत् महिमा द्यावा-पृथिवी को अतिक्रान्त करती है। हे बहुजनाहूत, वृक्ष की शाखाओं की तरह तुम्हारा रक्षण-कार्य वर्द्धमान होता है।

शचीवतस्तेपुरुशाकशाकागवामिवस्रुतयःसंचरणीः ।
४ वत्सानांनतंतयस्तइन्द्रदामन्वन्तोअदामानःसुदामन् ॥ ४ ॥

शचीऽवतः । ते । पुरुऽशाक । शाकाः । गवाम्ऽइव । स्रुतयः ।
सम्ऽचरणीः । वत्सानाम् । न । तन्तयः । ते । इन्द्र । दामन्ऽवन्तः ।
अदामानः । सुऽदामन् ॥ ४ ॥

हेपुरुशाक बहुकर्मन्निन्द्र शचीवतः प्रज्ञावतस्तेत्वदीयाः शाकाः शक्तयःकर्माणिवा सर्वतः संचरन्तीविशेषः तत्रदृष्टान्तः—गवामिव धेनूनांस्रुतयोमार्गाः यथा संचरणीः सर्वत्रसंचारिणोभवन्तितद्वत् अपिच वत्सानां न तंतयः तंतिर्नामदीर्घप्रसारितारज्जुः तत्रनियतैर्विशाखदामभिः बहवोवत्साबध्यन्ते यथा तन्तयोबहुनांवत्सानांबन्धकाः हेसुदामन् शोभनदामेन्द्र तथा तेत्वदीयाः शाकाः दामन्वन्तः बंधनवन्तः बहूनांशत्रूणांबंधकाः अदामानः स्वयमन्यैरबद्धाः ॥ ४ ॥

४. हे बहुकर्मा इन्द्र, तुम प्रज्ञावान् हो। तुम्हारी शक्तियाँ (अथवा कर्म) उसी तरह से सर्वत्र विचरण करती हैं, जैसे धेनुओं के मार्ग सर्वत्र सञ्चारी होते हैं। हे शोभन दानवाले इन्द्र, बछड़ों की डोरियों की तरह तुम्हारी शक्तियाँ स्वयम् अनिरुद्ध होकर बहुत शत्रुओं को बन्धन युक्त करती हैं।

अन्यदद्यकर्वरमन्यदुश्वोऽसच्चसन्मुहुराचक्रिरिन्द्रः ।
मित्रोनोअत्रवरुणश्चपूषार्योवशस्यपर्येतास्ति ॥ ५ ॥ १७ ॥
अन्यत् । अद्य । कर्वरम् । अन्यत् । ऊँ इति । श्वः । असत् ।
च । सत् । मुहुः । आऽचक्रिः । इन्द्रः । मित्रः । नः । अत्र ।
वरुणः । च । पूषा । अर्यः । वशस्य । परिऽएता । अस्ति ॥ ५ ॥ १७ ॥

अयमिन्द्रः अद्यास्मिन्दिवसे अन्यत् कर्वरं कर्मनामैतत् कर्मकरोति अन्यदु अन्यदेव उक्तविलक्षणमेवकर्म श्वः परस्मिन्दिने करोति एतदेव विव्रियते असच्च अशुभमशनिपातनादिकं सत् वर्षणादिकं शोभनंकर्मच यद्वा त्रिशिरसोविश्वरूपस्य वधादिकमसत् कर्मलोपोपद्रवकारिणोवृत्रादेरसुरस्य वधादिरूपं सत्कर्मच मुहुः पुनःपुनः असाविन्द्रः आचक्रिः कर्ताभवति एवं परस्परविलक्षणंकर्म स्वमहिम्ना पुनःपुनरावर्तयन् प्रतिदिवसमन्यदेव परेषामसाधारणं कर्म करोतीत्यर्थः एवंविधइन्द्रः अत्रास्मिन्यज्ञेनोस्माकं वशस्य कामयितव्यस्यफलस्य स्वर्गादेः पर्येतास्ति परिगमयिताभवतु अस्तेर्लेटिरूपं मित्रोहरभिमानीदेवः वरुणोरात्र्यभिमानी पूषा पोषकोदेवः अर्यः प्रेरकः सविता एतेचेन्द्रेणनियम्यमानाअस्मदीयस्यकामस्य परिगमयितारः सन्तु यद्वा मित्रादयोप्यत्रस्वप्राधान्येन अभिधीयन्ते मित्रादयइन्द्रः प्रत्येकं अस्मदीयस्यकामस्यपर्येतास्तु तथाच बृहद्देवतायामुक्तं प्रोतयेन्यदितिर्त्वेतैवैश्वदेव्यावृचौस्मृतेइति ॥ ५ ॥

५. इन्द्र आज एक काम करते हैं, तो दूसरे दिन इससे कुछ विलक्षण ही कार्य करते हैं। वे पुनः-पुनः सत् और असत् कार्यों का अनुष्ठान करते हैं। इन्द्र, मित्र, वरुण, पूषा, सविता इस यज्ञ में हम लोगों की कामनाओं के पूरक हों।

वित्वदापोनपर्वतस्यपृष्ठादुक्थेभिरिन्द्रानयन्तयज्ञैः ।
तंत्वाभिःसुष्टुतिभिर्वाजयन्तआजिनजंग्मुर्गिर्वाहोअश्वाः ॥६॥

वि । त्वत् । आपः । न । पर्वतस्य । पृष्ठात् । उक्थेभिः । इन्द्र ।
अनयन्त । यज्ञैः । तम् । त्वा । आभिः । सुस्तुतिऽभिः । वाजयन्तः ।
आजिम् । न । जग्मुः । गिर्वाहः । अश्वाः ॥ ६ ॥

हेइन्द्र त्वव त्वत्सकाशाव् उक्थेभिरुक्थैःशस्त्रैः यज्ञैर्हविर्भिश्च स्तोतारः कामान् आत्मनो-व्यनयन्त विविधंप्रापयन्ति तत्रदृष्टान्तः—पर्वतस्याद्रेःपृष्ठादुपरिभागावआपोन अपः उदकानिय-थातद्वव् अपिचहेगिर्वाहः गीर्भिःस्तुतिरूपाभिर्वाग्भिः वहनीयेन्द्र तंप्रसिद्धं त्वा त्वां वाजयन्तो-बलिनंकुर्वन्तः यद्वा वाजमन्नमिच्छन्तः भरद्वाजाःस्तोतारः आभिः पूर्वोक्ताभिःसुष्टुतिभिःशोभना-भिःस्तुतिभिः जग्मुः प्रापुः क्षिप्रगमनेदृष्टान्तः—अश्ववाहाः आजिंन संग्रामंयथाशीघ्रंमापुः तद्वव् ॥ ६ ॥

६. हे इन्द्र, तुम्हारे समीप से शस्त्र और हवि के द्वारा स्तोता लोग कामनाओं को प्राप्त करते हैं, जैसे पर्वत के उपरिभाग से जल प्राप्त होता है। हे स्तुतियों द्वारा वन्दनीय इन्द्र, अश्वगण जैसे वेगपूर्वक संग्राम में उपस्थित होते हैं, वैसे ही स्तुति करनेवाले अन्नाभिलाषी भरद्वाज आदि स्तुतियों के साथ तुम्हारे निकट गमन करते हैं।

नयंजरन्तिशरदोनमासानद्यावइन्द्रमवकर्शयन्ति ।
वृद्धस्यचिद्वर्धतामस्यतनूःस्तोमेभिरुक्थैश्चशस्यमाना ॥ ७ ॥

न । यम् । जरन्ति । शरदः । न । मासाः । न । द्यावः । इन्द्रम् ।
अवऽकर्शयन्ति । वृद्धस्य । चित् । वर्धताम् । अस्य । तनूः ।
स्तोमेभिः । उक्थैः । च । शस्यमाना ॥ ७ ॥

शरदः संवत्सराः यमिन्द्रं नजरन्ति नजरयन्ति नापक्षीणयन्ति तथा मासाश्च नापक्षी-णयन्ति तथा द्यावोदिवसाश्चयमिन्द्रंनावकर्शयन्ति नाल्पीभावयन्ति वृद्धस्यचिव प्रवृद्धस्यापि अस्येन्द्रस्य तनूः शरीरं स्तोमेभिरस्मदीयैःस्तोत्रैःउक्थैश्चशस्त्रैश्च शस्यमाना स्तूयमाना सती वर्धतां प्रवृद्धाभवतु ॥ ७ ॥

७. संवत्सर और मास आदि जिस इन्द्र को वृद्ध नहीं बना सकते हैं; दिवस जिस इन्द्र को अल्प (दुर्बल) नहीं बना सकते हैं, उस प्रवर्द्धमान इन्द्र का शरीर हम लोगों की स्तुतियों और स्तोत्रों-द्वारा स्तूयमान होकर प्रवृद्ध हो।

नवीळवेनमतेनस्थिरायनशर्धतेदस्युजूतायस्तवान् ।
अज्राइन्द्रस्यगिरयश्चिदृष्वागंभीरेचिद्भवतिगाधमस्मै ॥ ८ ॥

न । वीळवे । नमते । न । स्थिराय । न । शर्धते । दस्युऽजूताय ।
स्तवान् । अज्राः । इन्द्रस्य । गिरयः । चित् । ऋष्वाः । गंभीरे ।
चित् । भवति । गाधम् । अस्मै ॥ ८ ॥

स्तवान् अस्माभिःस्तूयमानइन्द्रः वीळवे दृढगात्राय यजमानाय ननमते नवशीभवति स्थिराय युद्धेअविचलितायच ननमते शर्धतेउत्सहमानाय दस्युजूताय कर्मवर्जितैःप्रेरिताययजमानाय नवशीभवति यद्यपि स्तोतारोबहुगुणाःसन्ति तथापीन्द्रस्तेभ्योदस्युसहितेभ्योनवशीभवतीत्यर्थः अपिचऋष्वाः महान्तः गिरयश्चित्पर्वताअपिइन्द्रस्यअज्राः असुगमनाः क्षेपणीयाभवन्ति गंभीरेचिदगाधेपिस्थाने अस्माइन्द्राय गाधमेवस्थानं विषयोभवति ॥ ८ ॥

८. हम लोगों की स्तुति-द्वारा स्तूयमान इन्द्र दृढ़गात्र, संग्राम में अविचलित और दस्युओं (कर्मविवर्जितों) द्वारा उत्साहित तथा प्रेरित यजमान के वशीभूत नहीं होते हैं। अर्थात् यद्यपि स्तोता बहुत गुणवाले हैं; तथापि इन्द्र दस्यु-सहित स्तोता के वशीभूत नहीं होते हैं। महान् पर्वत भी इन्द्र के लिए सुगम हैं और अगाध स्थान भी इन्द्र के लिए विषयीभूत हैं।

गंभीरेणनउरुणामत्रिन्प्रेषोयन्धिसुतपावन्वाजान् ।
स्थाऊषुऊर्ध्वऊतीअरिषण्यन्नक्तोर्व्युष्टौपरितक्म्यायाम् ॥ ९ ॥

गंभीरेण । नः । उरुणा । अमत्रिन् । प्र । इषः । यन्धि ।
सुतऽपावन् । वाजान् । स्थाः । ऊँ इति । सु । ऊर्ध्वः । ऊती ।
अरिषण्यन् । अक्तोः । विऽउष्टौ । परिऽतक्म्यायाम् ॥ ९ ॥

हेअमत्रिन् अमत्रं बलं तद्वन् हेसुतपावन् सुतस्यसोमस्यपातरिन्द्र गंभीरेणकेनापिदुरवगाहेन उरुणा विस्तीर्णेन मनसा नोस्मभ्यं इषोन्नानि वाजान्बलानिच प्रयन्धि प्रयच्छ किंच अक्तोरात्रेः व्युष्टौ विवासे अह्नि परितक्म्यायां रात्रौ हेइन्द्र त्वं ऊती अस्माकंरक्षायै अरिषण्यन्नहिंसंस्त्वं ऊर्ध्वउद्युक्तः स्थाः ऊषु सुष्ठुतिष्ठेव ॥ ९ ॥

९. हे बलवान् और सोमपानकर्त्ता इन्द्र, तुम किसी के द्वारा भी अनवगाहनीय उदार चित्त से हम लोगों को अन्न और बल प्रदान करो। हे इन्द्र, तुम दिन-रात हम लोगों की रक्षा के लिए तत्पर रहो।

सचस्वनायमवसेअभीकइतोवातमिन्द्रपाहिरिषः ।
अमाचैनमरण्येपाहिरिषोमदेमशतहिमाःसुवीराः ॥ १० ॥ १८ ॥

सचस्व । नायम् । अवसे । अभीके । इतः । वा । तम् । इन्द्र ।
पाहि । रिषः । अमा । च । एनम् । अरण्ये । पाहि । रिषः ।
मदेम । शतऽहिमाः । सुऽवीराः ॥ १० ॥ १८ ॥

हेइन्द्र त्वं नायं कर्मणांस्तुतीनांचनेतारं अभीके संग्रामे अवसेरक्षणाय सचस्व सेवस्व इतोवाअस्माद सन्निकृष्टाच्चरिषः शत्रोः अमुतोविप्रकृष्टाच्छत्रोश्च वाशब्दः अनुक्तेनविवक्षितेनसमुच्चयार्थः हेइन्द्र तंस्तोतारं पाहि रक्ष तथा अमाच गृहेच अमेतिगृहनाम अरण्ये काननेच रिषः शत्रोः पाहि तंरक्ष तदनन्तरं सुवीराः शोभनपुत्रावयं शतहिमाः शतसंवत्सरान्मदेम हृष्याम ॥ १० ॥

१०. हे इन्द्र, तुम संग्राम में स्तुति-कर्त्ता की रक्षा के लिए उनका सेवन करो। निकटस्थ या दूरस्थ शत्रुओं से उनकी रक्षा करो। गृह में अथवा कानन में रिपुओं से उनकी रक्षा करो। शोभन पुत्रवाले होकर हम लोग सौ वर्षों तक प्रमुदित हों।

यातऊतिरितिनवर्चंद्वितीयंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रं तथाचानुक्रांतं—यावेनवेति । पृष्ठ्याभिप्लवषडहयोः द्वितीयेहनिइदंसूक्तं निष्केवल्यनिविद्धानं सूत्रितंच—यातऊतिरवमेतिमध्यंदिनइति ।

तत्रप्रथमा—

यातंऊतिरवमायापरमायामध्यमेन्द्रशुष्मिन्नस्ति ।
ताभिरूषुवृत्रहत्येवीर्नएभिश्चवाजैर्महान्नउग्र ॥ १ ॥

या । ते । ऊतिः । अवमा । या । परमा । या । मध्यमा । इन्द्र ।
शुष्मिन् । अस्ति । ताभिः । ऊँ इति । सु । वृत्रऽहत्ये ।
अवीः । नः । एभिः । च । वाजैः । महान् । नः । उग्र ॥ १ ॥

हेशुष्मिन् बलवन्निन्द्र तेत्वदीया या ऊतिर्यारक्षा अवमा अधमास्ति यापरमा उत्कृष्टास्ति यामध्यमास्ति ताभिरूतिभिः वृत्रहत्ये युद्धेनोस्मान् सु अत्यन्तं अवीः पालय किंचहेउग्रउद्गूर्णेन्द्र महांस्त्वं एभिर्भोज्यसाधनैर्वाजैरन्नैश्च नोस्मान्त्संयोजयेतिशेषः ॥ १ ॥

१. हे बलवान् इन्द्र, तुम संग्राम में हम लोगों का, अधम, उत्तम और मध्यम सब प्रकार की रक्षा-द्वारा, भली भाँति से, पालन करो। हे भीषण इन्द्र, तुम महान् हो। तुम हम लोगों को भोज्य साधन अन्नों से युक्त करो।

आभिःस्पृधोमिथतीररिषण्यन्नमित्रस्यव्यथयामन्युमिन्द्र ।
आभिर्विश्वाअभियुजोविषूचीरार्यायविशोवतारीर्दासीः ॥ २ ॥

आभिः । स्पृधः । मिथतीः । अरिषण्यन् । अमित्रस्य । व्यथय ।
मन्युम् । इन्द्र । आभिः । विश्वाः । अभिऽयुजः । विषूचीः ।
आर्याय । विशः । अव । तारीः । दासीः ॥ २ ॥

हेइन्द्र आभिरस्मदीयाभिः स्तुतिभिः मिथतीः शत्रुसैन्यानिहिंसतीः स्पृधोस्मदीयाःसेनाः अरिषण्यन् अहिंसन् पालयन्नित्यर्थः अमित्रस्यशत्रोः मन्युं संग्रामादिषुविद्यमानंकोपंव्यथय नाशय अपिच आभिःस्तुतिभिरेव अभियुजोभियोक्त्रीःविषूचीः सर्वतोविद्यमानाः दासीः कर्मणामुपक्षपयित्रीः विश्वाः सर्वाः विशः प्रजाः आर्याय यज्ञादिकर्मकृतेयजमानाय अवतारीः विनाशय ॥ २ ॥

२. हे इन्द्र, तुम हमारी स्तुतियों से शत्रुसेनाओं को नष्ट करनेवाली हमारी सेना की रक्षा करते हुए संग्राम में विद्यमान शत्रु के कोप को नष्ट करो। यज्ञादि कार्य करनेवाले यजमान के लिए तुम कार्यों को विनष्ट करनेवाले सम्पूर्ण प्रजाओं को स्तुतियों-द्वारा विनष्ट करो।

इन्द्रजामयउतयेजामयोर्वाचीनासोवनुषोयुयुज्रे ।
त्वमेषांविथुराशवांसिजहिवृष्ण्यानिकृणुहीपराचः ॥ ३ ॥

इन्द्र । जामयः । उत । ये । अजामयः । अर्वाचीनासः । वनुषः ।
युयुज्रे । त्वम् । एषाम् । विथुरा । शवांसि । जहि । वृष्ण्यानि ।
कृणुहि । पराचः ॥ ३ ॥

हेइन्द्र जामयः ज्ञातिरूपाः संनिकृष्टायेशत्रवः उतापिच अजामयोदूरदेशेस्थिताः येशत्रवः अर्वाचीनासः अस्मदभिमुखाः वनुषोहिंसन्तः युयुज्रे उद्युक्ताभवन्ति एषामुभयविधानां शत्रूणां संबन्धीनि शवांसि बलानि विथुरा विथुराणिहीनानि त्वं कुर्वितिशेषः तथा वृष्ण्यानि एषांवीर्याणि जहि नाशय किंच पराचः उभयविधान्शत्रून् पराचः पराङ्मुखान् कृणुहि कुरु॥३॥

३. हे इन्द्र, ज्ञातिरूप निकटस्थ अथवा दूर देशस्थित जो शत्रु हमारे अभिमुखी न होकर हिंसा के लिए उद्यत होते हैं, उन दोनों प्रकार के शत्रुओं के बल को तुम नष्ट करो। इनके वीर्यों को नष्ट करो और इन्हें पराङ्मुख करो।

शूरोवाशूरंवनतेशरीरैस्तनूरुचातरुषियत्कृण्वैते ।
तोकेवागोषुतनयेयदप्सुविक्रन्दसीउर्वरासुब्रवैते ॥ ४ ॥

शूरः । वा । शूरम् । वनते । शरीरैः । तनूऽरुचा । तरुषि । यत् ।
कृण्वैते इति । तोके । वा । गोषु । तनये । यत् । अप्ऽसु । वि ।
क्रन्दसी इति । उर्वरासु । ब्रवैते इति ॥ ४ ॥

हेइन्द्र शूरः त्वदनुगृहीतोवीरः शरीरैरंगैः शूरंवा वीरमपि वनते हन्ति वेत्ययमपीत्यस्यार्थेवर्तते यद्वा वेत्यनेनविकल्पाभिधायकेनाशूरोवात्वदनुगृहीतःसन् शूरंवनते कदावनतइति एतदाह—तनूरुचा शरीरेण शोभमानौ परस्परविरोधिनौ तरुषे शुद्धे यद्यदा कृण्वैते संग्रामंकुर्वाते यद्यदाच तोकेवा पुत्रनिमित्तेवा गोषुनिमित्तभूतासुवा तनये पौत्रेनिमित्तभूतेवा अप्सु उदकेषुनिमित्तेषुवा उर्वरासु सर्वसस्याढ्यासुभूमिषुनिमित्तासु क्रन्दसी क्रन्दमानावा क्रोशन्तौ विब्रवैते विवदेते हेइन्द्र पुत्रादिलाभजयस्त्वदनुगृहीतस्यभवतीत्यर्थः॥ ४ ॥

४. हे इन्द्र, तुम्हारे द्वारा अनुगृहीत वीर अपने शरीर से शत्रुवीरों को विनष्ट करता है। जब कि वे दोनों परस्पर विरोधी, शोभित शरीर से संग्राम में प्रवृत्त होते हैं। जब कि वे पुत्र, पौत्र, धेनु, जल और उर्वरा (उपजाऊ भूमि) के लिए हल्ला मचाते हुए विवाद करते हैं।

नहित्वाशूरोनतुरोनधृष्णुर्नत्वायोधोमन्यमानोयुयोध।
इन्द्रनकिष्ट्वाप्रत्यस्त्येषांविश्वाजातान्यभ्यसितानि ॥ ५ ॥ १९ ॥

नहि। त्वा। शूरः। न। तुरः। न। धृष्णुः। न। त्वा। योधः। मन्यमानः। युयोध। इन्द्र। नकिः। त्वा। प्रति। अस्ति। एषाम्। विश्वा। जातानि। अभि। असि। तानि ॥ ५ ॥ १९ ॥

हेइन्द्र त्वा त्वयासह शूरोविक्रान्तजनोनहियुयोध नयुध्यते तथातुरः अन्येषांशत्रूणांहिंसकः अतः त्वयानयुयोध धृष्णुर्धर्षकोनयुयोध मन्यमानः युद्धेक्रुध्यन् योधोभटः त्वा त्वयान युयोध हेइन्द्र एषांशूरादीनांमध्ये कश्चनत्वा तवनकिः प्रत्यस्ति प्रतिनिधिर्नास्ति विश्वा विश्वानि जातानि प्रादुर्भूतानि तानि शूरादीनि त्वं अभ्यसि अभिभवसि ॥ ५ ॥

५. हे इन्द्र, विक्रान्त जन, शत्रुनिहन्ता, विजयी और युद्ध में प्रकुपित योद्धा तुम्हारे साथ युद्ध करने में समर्थ नहीं होता है। हे इन्द्र, इनके मध्य में कोई भी तुम्हारा प्रतिद्वन्द्वी नहीं है। तुम इन व्यक्तियों की अपेक्षा श्रेष्ठ हो।

सपत्यतउभयोर्नृम्णमयोर्यदीवेधसःसमिथेहवन्ते।
वृत्रेवामहोनृवतिक्षयेवाव्यचस्वन्तायदिवितन्तसैते ॥ ६ ॥

सः। पत्यते। उभयोः। नृम्णम्। अयोः। यदि। वेधसः। सम्ऽइथे। हवन्ते। वृत्रे। वा। महः। नृऽवति। क्षये। वा। व्यचस्वन्ता। यदि। वितन्तसैते इति ॥ ६ ॥

अयोरनयोरुभयोर्मध्ये सजनः नृम्णं धनं पत्यते ईष्टे कयोर्मध्ये कईष्टइति एतदुभयमाह यदि यस्यजनस्य यदीतिनिपातोयस्यार्थेवर्तते समिथे यज्ञेवेधसः कर्मणांविधातारऋत्विजः हवन्ते इन्द्रंस्तुवन्ति सईष्टइतिसंबन्धः महोमहतिप्रभूते वृत्रेवा निरोधेनिमित्तेवा नृपतिपरिचारकमनुष्ययुक्तेक्षयेवा गृहनिमित्तेवा व्यचस्वन्तौ यदि यदीयौजनौ तियावित्यर्थेवर्तते तितंसैते वियुध्येते तयोर्मध्येइतिसंबन्धः तसेरुपक्षयकर्मणोविपूर्वाद्वितंतसैतेइतिभवति यद्वाततंसइतिधातुः कंड्वादिषुपठ्यते तस्मादिदंरूपमिति ॥ ६ ॥

६. महान् शत्रुओं का निरोध करने के लिए अथवा परिचारकों से युक्त गृह के लिए जो दो व्यक्ति परस्पर युद्ध करते हैं, उन दोनों के मध्य में वही जन, धन-लाभ करता है, जिसके यज्ञ में ऋत्विक् लोग इन्द्र का हवन करते हैं।

अर्धस्मातेचर्षणयोयदेजानिन्द्रंत्रातोतभंवावरूता ।
अस्माकांसोयेनृतंमासोअर्यइन्द्रंसूरयोंदधिरेपुरोनंः ॥ ७ ॥

अर्ध । स्म । ते । चर्षणयंः । यत् । एजांन् । इन्द्रं । त्राता ।
उत । भव । वरूता । अस्माकांसः । ये । नृऽतंमासः । अर्यः ।
इन्द्रं । सूरयंः । दधिरे । पुरः । नः ॥ ७ ॥

अधस्मापिच हेइन्द्र तेत्वदीयाश्चर्षणयः पुरुषाः यद्यदा एजान् एजेयुर्भीत्याकंपेयुः तदा त्वं तेषां त्राता पालकोभव उतापिच वरूता संभक्ताभव अस्माकासोस्मदीयाः नृतमासोनेतृतमाः येमनुष्याः हेइन्द्र त्वां अर्योरयः मापयितारइत्यर्थः तेषां त्राताभव हेइन्द्रसूरयोयेस्तोतारःनोस्मान्पुरोदधिरे पुरश्चक्रिरे तेषांच त्राताभवेति ॥ ७ ॥

७. हे इन्द्र, तुम्हारे पुरुष (स्तोता) जब कम्पित हों, तब तुम उनके पालक होओ। उनके रक्षक होओ। हे इन्द्र, हमारे जो नेतृतम पुरुष तुम्हें प्राप्त करनेवाले होते हैं, तुम उनके त्राता होओ। हे इन्द्र, जिन स्तोताओं ने हमें पुरोभाग में स्थापित किया है, तुम उनके त्राता होओ।

साकमेधेषुमाहेन्द्र्यामिष्टौइन्द्रस्यवृत्रघ्नोयाज्या सूत्रितंच—अनुतेदायिमहइन्द्रियायविश्वकर्मन्हविषावावृधानइति । अनुक्रीनाम्न्येकाहेनिष्केवल्येएषैवसूक्तमुखीया सूत्रितंच—अनुतेदायिमहइन्द्रियायकथोनुतेपरिचराणिविद्वानितिद्वेइति ।

अनुंतेदायिमहइन्द्रियायंसत्रातेविश्वमनुंवृत्रहत्यें ।
अनुंक्षत्रमनुसहोंयजत्रेन्द्रंदेवेभिरनुंतेनृषह्यें ॥ ८ ॥

अनुं । ते । दायि । महे । इन्द्रियायं । सत्रा । ते । विश्वंम् ।
अनुं । वृत्रऽहत्यें । अनुं । क्षत्रम् । अनुं । सहंः । यजत्र ।
इन्द्रं । देवेभिंः । अनुं । ते । नृऽसह्यें ॥ ८ ॥

हेइन्द्र महे महते ते तुभ्यमिन्द्रियाय ऐश्वर्यार्थं अनुदायि अन्वदायि अनुदीयतेस्म वृत्रहत्ये वृत्रवधेनिमित्ते ते तुभ्यं विश्वं समस्तं सत्रा सत्यमनुदायि कैःकिमनुदीयतइतितदुभयमाह येनविश्वंबिभर्ति तवक्षत्रं बलमनुदायि येनशत्रूनभिभवति तद्गुणविशिष्टं सहोबलमनुदायि हे यजत्र यजनीयेन्द्र ते तुभ्यं नृसह्ये युद्धे देवेभिः सर्वैःदेवैः एतत्सर्वमनुदायि ॥ ८ ॥

८. हे इन्द्र, तुम महान् हो। शत्रु-वध के लिए तुममें समस्त शक्ति अर्पित हुई है। हे यजनीय इन्द्र, युद्ध में समस्त देवों ने तुम्हें शत्रुओं को अभिभूत करनेवाला बल और विश्वधारक बल प्रदान किया था।

एवानःस्पृधःसमंजासमत्स्विन्द्ररारन्धिमिथतीरदेवीः।
विद्यामवस्तोरवसागृणन्तोभरद्वाजाउततइन्द्रनूनम् ॥ ९ ॥ २० ॥

एव। नः। स्पृधः। सम्। अज। समत्ऽसु। इन्द्र।
ररन्धि। मिथतीः। अदेवीः। विद्याम। वस्तोः। अवसा।
गृणन्तः। भरत्ऽवाजाः। उत। ते। इन्द्र। नूनम् ॥ ९ ॥ २० ॥

हेइन्द्र एवएवंस्तुतस्त्वं नोस्मदीयाःस्पृधः स्पर्धमानाः शत्रुसेनाः समत्सुसंग्रामेषु समज शत्रुवधार्थंप्रेरय किंच मिथतीर्हिंसतीःअदेवीरासुरीःसेनाःररन्धि अस्मदर्थंवशीकुरु उतापिच हेइन्द्र तेगृणन्तः त्वां स्तुवन्तोभरद्वाजावयं अवसा अन्नेन सहवस्तोर्वासस्यनिवासमित्यर्थः नूनमवश्यं विद्याम लभेमहि ॥ ९ ॥

९. हे इन्द्र, इस प्रकार से स्तुत होकर तुम संग्राम में हम लोगों को शत्रुओं को मारने के लिए प्रोत्साहित करो और प्रेरित करो। तुम हम लोगों के लिए हिंसा करनेवाली असुर-सेना को वशीभूत करो। हे इन्द्र, तुम्हारी स्तुति करनेवाले हम भरद्वाज अन्न के साथ अवश्य ही निवास प्राप्त करें।

श्रुधीनइन्द्रेत्यष्टर्चंतृतीयंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रं तथाचानुक्रम्यते—श्रुधीनोष्टाविति। विनियोगोलैंगिकः।

तत्रप्रथमा—

श्रुधीनइन्द्रह्वयामसित्वामहोवाजस्यसातौवावृषाणाः।
संयद्विशोयन्तशूरसाताउग्रंनोवःपार्येअहन्दाः ॥ १ ॥

श्रुधि। नः। इन्द्र। ह्वयामसि। त्वा। महः। वाजस्य।
सातौ। ववृषाणाः। सम्। यत्। विशः। अयन्त। शूरऽसातौ।
उग्रम्। नः। अवः। पार्ये। अहन्। दाः ॥ १ ॥

हेइन्द्र वव्रृषाणाः सोमैस्त्वांसिंचन्तोवयंस्तोतारः महोमहतोवाजस्यान्नस्य सातौ लाभार्थं त्वा त्वां ह्वयामसि आह्वयामः हेइन्द्र त्वं नोस्माकं तदाह्वानं श्रुधि शृणु यद्यदा विशोजनाः शूरसाताशूरसातौ युद्धे समयन्त संगच्छन्ते तदा पार्ये अन्तिमे अहन्नहनि दिवसे नोस्मभ्यं उग्रमुद्गूर्णमवोरक्षणं दाः अदाः प्रयच्छ ॥ १ ॥

१. हे इन्द्र, हम स्तोता लोग अन्न-लाभ करने के लिए सोमरस के द्वारा तुम्हारा सिंचन करते हुए तुम्हारा आह्वान करते हैं। तुम हम लोगों के आह्वान को श्रवण करो। जब मनुष्यगण युद्ध के लिए गमन करेंगे, तब तुम हम लोगों की भली भाँति से रक्षा करना।

त्वांवाजीहवतेवाजिनेयोमहोवाजस्यगध्यस्यसातौ ।
त्वांवृत्रेष्विन्द्रसत्पतिंतरुत्रंत्वांचष्टेमुष्टिहागोषुयुध्यन् ॥ २ ॥

त्वाम् । वाजी । हवते । वाजिनेयः । महः । वाजस्य । गध्यस्य ।
सातौ । त्वाम् । वृत्रेषु । इन्द्र । सत्ऽपतिम् । तरुत्रम् ।
त्वाम् । चष्टे । मुष्टिऽहा । गोषु । युध्यन् ॥ २ ॥

वाजी हविर्लक्षणान्नवान् वाजिनेयोवाजिन्याःपुत्रोभरद्वाजः हेइन्द्र त्वां गध्यस्य सर्वैः प्राप्यस्य महोमहतोवाजस्यान्नस्य सातौ लाभेनिमित्ते हवते स्तौति अपिच हेइन्द्र सत्पतिं सज्जनानांपालकं तरुत्रं दुर्जनानांतारकं त्वां वृत्रेषूपद्रवेषुनिमित्तेषु भरद्वाजोहवते मुष्टिहा मुष्टिबलेनशत्रूणांहन्ता गोषुनिमित्तभूतासु युध्यन् शत्रुभिःसहयुद्धंकुर्वन् भरद्वाजस्त्वां चष्टे पश्यति प्रतिपालयते ॥ २ ॥

२. हे इन्द्र, सबके द्वारा प्रापणीय और महान् अन्न-लाभ करने के लिए वाजिनी-पुत्र भरद्वाज अन्नवान् होकर तुम्हारा स्तवन करते हैं। हे इन्द्र, तुम सज्जनों के पालक और दुर्जनों के विघातक हो। उपद्रुत होने पर भरद्वाज तुम्हारा आह्वान करते हैं। वे मुष्टिबल-द्वारा शत्रुओं को विनष्ट करनेवाले हैं। जब वे गौओं के लिए युद्ध करते हैं, तब तुम्हारे ऊपर निर्भर रहते हैं।

त्वंकविंचोदयोर्कसातौत्वंकुत्सायशुष्णंदाशुषेवर्क् ।
त्वंशिरोअमर्मणःपराहन्नतिथिग्वायशंस्यंकरिष्यन् ॥ ३ ॥

त्वम् । कविम् । चोदयः । अर्कऽसातौ । त्वम् । कुत्साय ।
शुष्णम् । दाशुषे । वर्क् । त्वम् । शिरः । अमर्मणः । परा ।
अहन् । अतिथिऽग्वाय । शंस्यम् । करिष्यन् ॥ ३ ॥

हेइन्द्र त्वं अर्कसातौ अन्नलाभार्थं कविं भार्गवमृषिं चोदयः अचोदयः प्रेरय किंच हे

इन्द्र त्वं दाशुषे हविर्दत्तवते कुत्साय शुष्णमसुरं वर्क् छेदितवानसि वर्गिति वृणक्तेः छेदनार्थस्य लुङिरूपं तथा त्वं अतिथिग्वाय अतिथीनामभिगंत्रे दिवोदासाय शंस्यं स्तुत्यं सुखं करिष्यन् अमर्मणः मर्महीनमात्मानं मन्यमानस्य शंबरस्य शिरः शीर्षं पराहन्नवधीः ॥ ३ ॥

३. हे इन्द्र, अन्न-लाभ करने के लिए तुम भार्गव ऋषि को प्रेरित करो। हव्यदाता कुत्स के लिए तुमने शुष्णासुर का छेदन किया था। तुमने अतिथिग्व (दिवोदास) को सुखी करने के लिए शम्बरासुर का शिरश्छेदन किया था। वह अपने को मर्महीन (दुर्भेद्य) समझता था।

त्वं रथं प्र भरो योधमृष्वमावो युध्यन्तं वृषभं दशद्युम्।
त्वं तुग्रं वेतसवे सचाहन्त्वं तुजिं गृणन्तमिन्द्र तूतोः ॥ ४ ॥

त्वम्। रथम्। प्र। भरः। योधम्। ऋष्वम्। आवः। युध्यन्तम्।
वृषभम्। दशऽद्युम्। त्वम्। तुग्रम्। वेतसवे। सचा। अहन्।
त्वम्। तुजिम्। गृणन्तम्। इन्द्र। तूतोरिति तूतोः ॥ ४ ॥

हेइन्द्र त्वं वृषभसंज्ञकाय राज्ञे योधं युद्धसाधनं ऋष्वं महान्तं रथं प्रभरः प्रापयः अपिच युध्यन्तं शत्रुभिः सह युद्धं कुर्वन्तं दशद्युं दशदिवसायुध्यतो यस्य गताः तं वृषभमेतदाख्यं राजानमावः युद्धादपीपलः किंच त्वं वेतसवे एतन्नाम्ने राज्ञे सचा सहायभूतः सन् तुग्रमसुरं हन् हतवानसि वेतसुर्नामकश्चिदसुरः अत्र तस्मादन्योसावुच्यते यद्वा वेतसवइति तृतीयार्थे चतुर्थी वेतसुनासुरेण सहितं तुग्रं हतवानसि तथाच मंत्रान्तरं श्रूयते—अहंपितेव वेतसूँरभिष्टये तुग्रं कुत्साय स्मदिभं चरन्धयमिति। हेइन्द्र त्वं गृणन्तं त्वां स्तुवन्तं तुजिमेतदाख्यं राजानं तूतोरवर्धयः ॥ ४ ॥

४. हे इन्द्र, तुमने वृषभ नामक राजा को युद्ध-साधन महान् रथ प्रदान किया था। जब वे शत्रुओं के साथ दस दिनों तक युद्ध कर रहे थे, तब तुमने उनकी रक्षा की थी। वेतसु राजा के सहायभूत होकर तुमने तुग्रासुर को मारा था। तुमने स्तवकर्ता तुजि राजा की समृद्धि को बढ़ाया था।

त्वं तदुक्थमिन्द्र बर्हणा कः प्र यच्छता सहस्रा शूर दर्षि।
अव गिरेर्दासं शम्बरं हन्प्रावो दिवोदासं चित्राभिरूती ॥ ५ ॥ २१ ॥

त्वम्। तत्। उक्थम्। इन्द्र। बर्हणा। कः। प्र। यत्।
शता। सहस्रा। शूर। दर्षि। अव। गिरेः। दासम्। शंबरम्। हन्।
प्र। आवः। दिवःऽदासम्। चित्राभिः। ऊती ॥ ५ ॥ २१ ॥

हेइन्द्र बर्हणा बर्हणः शत्रूणां हिंसकस्त्वं उक्थं प्रशस्यं तत्कर्म कः अकरोः किं तत्कर्मेति उच्यते हेशूर वीरेन्द्र त्वं शता शतानि सहस्रा सहस्राणिच शंबरस्यानुचरान् भटान्प्रदर्षि विदारितवानसि तथा निगमान्तरे अध्वर्यवो यः शतं शंबरस्येति। तथा त्वं दासं यज्ञादिकर्मणामुपक्षपयितारं गिरेः पर्वतान्निर्गतं शंबरमसुरं अवहन् अवावधीः तथापि श्रूयते यः शंबरं पर्वतेषु-

क्षियन्तमिति। किंच चित्राभिर्विचित्रादिभिः ऊती ऊतिभीरक्षाभिः दिवोदासंराजानं प्रावः प्रकर्षेणपालयसिस्म ॥ ५ ॥

५. हे इन्द्र, तुम शत्रुनिहन्ता हो। तुमने प्रशंसनीय कार्यों का संपादन किया है; क्योंकि हे वीर इन्द्र, तुमने शत-शत और सहस्र-सहस्र शम्बर-सेनाओं को विदीर्ण किया है। तुमने पर्वत से निर्गत, यज्ञादि कार्यों के विघातक शम्बरासुर का वध किया है। विचित्र रक्षा-द्वारा तुमने दिवोदास की रक्षा की है।

त्वंश्रद्धाभिर्मन्दसानःसोमैर्दभीतयेचुमुरिमिन्द्रसिष्वप्।
त्वंरजिंपिठीनसेदशस्यन्षष्टिंसहस्राशच्यासचाहन् ॥ ६ ॥

त्वम्। श्रद्धाभिः। मन्दसानः। सोमैः। दभीतये। चुमुरिम्। इन्द्र। सिस्वप्। त्वम्। रजिम्। पिठीनसे। दशस्यन्। षष्टिम्। सहस्रा। शच्या। सचा। अहन् ॥ ६ ॥

हेइन्द्र श्रद्धाभिः श्रद्धापुरःसरमादरातिशयेनानुष्ठितैःकर्मभिः मन्दसानोमोदमानः यच्छ्रद्धयायुक्तंकर्मतत्सारवद्भवति तथाचश्रूयते—यदेवविद्ययाकरोतिश्रद्धयोपनिषदातदेववीर्यवत्तरंभवतीति। सोमैश्चमन्दसानस्त्वं दभीतये एतन्नामकायराजर्षये चुमुरिं एतदाख्यमसुरं सिष्वप् अस्वापयः अवधीरित्यर्थः किंच हेइन्द्र त्वं पिठीनसे एतन्नामकाय रजिं एतदाख्यांकन्यांवाराज्यंवा दशस्यन् प्रयच्छन् शच्या प्रज्ञया षष्टिं षष्टिसंख्याकानि सहस्रा भटानांसहस्राणि सचा सहयुगपदेवाहन्नवधीः ॥ ६ ॥

६. हे इन्द्र, श्रद्धापूर्वक अनुष्ठित कार्यों-द्वारा और सोमरस-द्वारा मोदमान होकर तुमने दभीति राजा के लिए चुमुरि नामक असुर का वध किया था। हे इन्द्र, तुमने पिठीनस् को रजि नामक कन्या या राज्य प्रदान किया था। तुमने बुद्धि से साठ हज़ार योद्धाओं को एक काल में ही विनष्ट किया था।

अहंचनतत्सूरिभिरानश्यांतवज्यायइन्द्रसुम्नमोजः।
त्वयायत्स्तवंतेसधवीरवीरास्त्रिवरूथेननहुषाशविष्ठ ॥ ७ ॥

अहम्। चन। तत्। सूरिऽभिः। आनश्याम्। तव। ज्यायः। इन्द्र। सुम्नम्। ओजः। त्वया। यत्। स्तवन्ते। सधऽवीर। वीराः। त्रिऽवरूथेन। नहुषा। शविष्ठ ॥ ७ ॥

---

१ ऋ० सं० २. ६. ९.। २ बृहदारण्यकोपनिषत्.

हेसधवीर वीरैःसहित शविष्ठ बलवत्तमेन्द्र वीराःस्तोतारः त्रिवरूथेन त्रीणिवरूथान्यावरकाणिभुवनानियस्यतेन नहुषा शत्रूणांबन्धकेन त्वयादत्तं यत्सुम्नंसुखंओजोबलंच स्तवन्ते स्तुवन्ति हेइन्द्र तव त्वयादत्तं ज्यायः अतिशयेनप्रशस्यं तत्सुम्नमोजः अहंचन अहमपिभरद्वाजः सूरिभिर्मदीयैःस्तोतृभिःसह आनश्यां प्राप्नुयां ॥ ७॥

७. हे वीरों के साथी बलवत्तम इन्द्र, तुम त्रिभुवनों के रक्षक और शत्रुविजयी हो। स्तोता लोग तुम्हारे द्वारा प्रदत्त सुख और बल की स्तुति करते हैं। हे इन्द्र, हम भरद्वाज तुम्हारे द्वारा प्रदत्त उत्कृष्ट सुख और बल को अपने स्तोताओं के साथ प्राप्त करें।

वयंतेअस्यामिन्द्रद्युम्नहूतौसखायःस्यामममहिनप्रेष्ठाः।
प्रातर्दनिःक्षत्रश्रीरस्तुश्रेष्ठोघनेवृत्राणांसनयेधनानाम् ॥८॥२२॥

वयम्। ते। अस्याम्। इन्द्र। द्युम्नऽहूतौ। सखायः। स्याम। महिन। प्रेष्ठाः। प्रातर्दनिः। क्षत्रऽश्रीः। अस्तु। श्रेष्ठः। घने। वृत्राणाम्। सनये। धनानाम् ॥ ८ ॥ २२ ॥

हेमहिन पूजनीयेन्द्र ते त्वदर्थं सखायःस्तोतारोवयं अस्यांद्युम्नहूतौ अस्मिन्धननिमित्तेस्तोत्रे प्रेष्ठाः अतिशयेनप्रियाः स्याम भवेम प्रातर्दनिः प्रतर्दनोनामराजातस्यपुत्रःक्षत्रश्रीः एतन्नामकोममयाज्योराजा श्रेष्ठोस्तु सर्वेषामुत्कृष्टोभवतु किमर्थं वृत्राणां शत्रूणांघनेवधायच धनानां वसूनां सनये संभजनायच श्रेष्ठोस्त्वितिसंबन्धः ॥ ८ ॥

८. हे पूजनीय इन्द्र, हम लोग तुम्हारे मित्रभूत और स्तोता हैं। धन-लाभार्थ किये गये इन स्तोत्रों-द्वारा हम लोग तुम्हारे निरतिशय प्रीति-भाजन हों। प्रातर्दन के पुत्र हमारे राजा क्षत्र श्री शत्रुओं का वध और धन-लाभ करके सबसे उत्कृष्ट हों।

किमस्यमदेत्यष्टर्चंचतुर्थंसूक्तं भरद्वाजस्यार्षं अनुक्रान्तंच—किमस्यान्त्याचायमानस्याभ्यावर्तिनोदानस्तुतिः भरद्वाजऋषिः त्रिष्टुप्छन्दः अंत्यायास्तुदानस्तुतिरूपत्वात् यातेनोच्यत इतिन्यायेनदानमेवदेवता विनियोगोलैंगिकः।

किमस्यमदेकिम्वस्यपीताविन्द्रःकिमस्यसख्येचकार।
रणावायेनिषदिकिन्तेअस्यपुराविविद्रेकिमुनूतनासः ॥ १ ॥

किम्। अस्य। मदे। किम्। ऊँ इति। अस्य। पीतौ। इन्द्रः। किम्। अस्य। सख्ये। चकार। रणाः। वा। ये। निऽसदि। किम्। ते। अस्य। पुरा। विविद्रे। किम्। ऊँ इति। नूतनासः ॥१॥

भरद्वाजऋषिः फलविलंबनासहिष्णुःसन् अनयेन्द्रमाक्षिपति अस्यसोमस्य मदेसति इन्द्रः किंचकार कृतवान् किमु किंच अस्यसोमस्य पीतौ पानेसति किंचकार अस्यसोमस्य सख्ये सखित्वे किंचकार पानात्पूर्वं इन्द्रः सोमेनसहवसतीत्यर्थः अस्यसोमस्य निषदि गृहे रणावाये स्तोतारःसंति तेस्तोतारः पुरा पूर्वं हेइन्द्र ते त्वत्तः किंविविद्रे किंलेभिरे नूतनासः नूतनाइदानींतनाः स्तोतारश्च किमुलेभिरे ॥ १ ॥

१. सोमरस से प्रसन्न होकर इन्द्र ने क्या किया ? इस सोमरस को पान करके क्या किया ? इस सोमरस के साथ मैत्री करके उन्होंने क्या किया ? पुरातन और आधुनिक स्तोताओं ने सोमगृह में तुमसे क्या प्राप्त किया ?

सदस्यमदेसद्वस्यपीताविन्द्रःसदस्यसख्येचकार ।
रणावायेनिषदिसत्तेअस्यपुराविविद्रेसदुनूतनासः ॥ २ ॥

सत् । अस्य । मदे । सत् । ऊँ इति । अस्य । पीतौ । इन्द्रः ।
सत् । अस्य । सख्ये । चकार । रणाः । वा । ये । निऽसदि ।
सत् । ते । अस्य । पुरा । विविद्रे । सत् । ऊँ इति । नूतनासः ॥ २ ॥

एवमाक्षिप्तइन्द्रः तस्मै ऋषये ईप्सितं धनं प्रददौ तदनंतरमृषिः इन्द्रसकाशात् संपूर्णकामःसन् पुरा यान्युपालंभप्रतिपादकानिवाक्यान्युवोच इदानीं तानि निराकरोति इन्द्रः अस्यसोमस्य मदेसत् शुभंकर्मचकार अस्यसोमस्य पीतौ पाने सत् शुभं कर्म चकार अस्य सख्ये सत् शुभंचकार येरणावास्तोतारश्च ते निषदिगृहे यज्ञगृहइत्यर्थः पुरा पूर्वं हेइन्द्र ते त्वत्तः सत् शुभं कर्म विविद्रेलेभिरे नूतनासः इदानींतनाःस्तोतारः सदु शुभमेवकर्म लेभिरे॥२॥

२. सोमपान से प्रमुदित होकर इन्द्र ने सुन्दर (शोभन) कार्यों को किया था। सोमपान करके उन्होंने सुन्दर कर्म किया था। इसके साथ उन्होंने शुभ कार्य किया था। हे इन्द्र पुरातन तथा इदानीन्तन स्तोताओं ने सोमगृह में तुमसे शुभ कर्म को प्राप्त किया था।

नहिनुतेमहिमनःसमस्यनमघवन्मघवत्त्वस्यविद्म ।
नराधसोराधसोनूतनस्येन्द्रनकिर्ददृशइन्द्रियंते ॥ ३ ॥

नहि । नु । ते । महिमनः । समस्य । न । मघऽवन् । मघवत्ऽत्वस्य ।
विद्म । न । राधसःऽराधसः । नूतनस्य । इन्द्र । नकिः । ददृशे ।
इन्द्रियम् । ते ॥ ३ ॥

हेमघवन्धनवन्निन्द्र ते त्वदीयस्य समस्य समस्तस्य महिमनोमहिम्नोमहिमानं नहि विद्म वयंनजानीमः नुशब्दःपूरणः तथा मघवत्त्वस्य त्वदीयस्यधनिकत्वस्यच वयं नजानीमः

नूतनस्य स्तुत्यस्य राधसोराधसः त्वदीयं सर्वंधनंच नजानीमः सर्वत्रद्वितीयार्थेषष्ठी हेइन्द्र ते त्वदीयं इन्द्रियंसामर्थ्यं नकिर्ददृशे केनापिनदृश्यते ॥ ३ ॥

३. हे धनवान् इन्द्र, तुम्हारे तुल्य दूसरे की महिमा हमें अवगत नहीं हैं। तुम्हारे तुल्य धनिकत्व और धन भी हमें अवगत नहीं। हे इन्द्र, तुम्हारी तरह सामर्थ्य कोई भी नहीं दिखा सकता है।

एतत्त्यत्तइन्द्रियमचेतियेनावधीर्वरशिखस्यशेषः।
वज्रस्ययत्तेनिहतस्यशुष्मात्स्वनाच्चिदिन्द्रपरमोददार ॥ ४ ॥

एतत्। त्यत्। ते। इन्द्रियम्। अचेति। येन। अवधीः।
वरऽशिखस्य। शेषः। वज्रस्य। यत्। ते। निऽहतस्य।
शुष्मात्। स्वनात्। चित्। इन्द्र। परमः। ददार ॥ ४ ॥

हेइन्द्र येनवीर्येण वरशिखस्य वरशिखोनामकश्चिदसुरः शेषः शेषांसिपुत्रान् शेषइत्यपत्यनामैतत् अवधीरहिंसीः ते त्वदीयमेतत्त्यत् तदिदमिन्द्रियंवीर्यं अचेति अस्माभिरज्ञायि हेइन्द्र यद्यस्मात् शुष्माद्बलात् निहतस्य प्रेरितस्य त्वदीयवज्रस्य स्वनाच्चित् ध्वनेरेवपरमः वरशिखस्यपुत्राणांमध्ये बलाद्याधिक्येनोत्कृष्टःकश्चित्पुत्रः ददार अदीर्यत ॥ ४ ॥

४. हे इन्द्र, तुमने जिस वीर्य-द्वारा वरशिख नामक असुर के पुत्रों का संहार किया था, तुम्हारा वह वीर्य हम लोगों के द्वारा अवगत नहीं है। हे इन्द्र, बल-पूर्वक निक्षिप्त तुम्हारे वज्र के शब्द से ही बलिष्ठतम वरशिख के पुत्र विदीर्ण हुए थे।

वधीदिन्द्रोवरशिखस्यशेषोभ्यावर्तिनेचायमानायशिक्षन्।
वृचीवतोयद्धरियूपीयायांहन्पूर्वेअर्धेभियसापरोदर्त् ॥ ५ ॥ २३ ॥

वधीत्। इन्द्रः। वरऽशिखस्य। शेषः। अभिऽआवर्तिने।
चायमानाय। शिक्षन्। वृचीवतः। यत्। हरिऽयूपीयायाम्।
हन्। पूर्वे। अर्धे। भियसा। अपरः। दर्त् ॥ ५ ॥ २३ ॥

पूर्वोक्तमेवार्थमनयाविवृणोति अयमिन्द्रः चायमानाय चयमानस्यराज्ञःपुत्राय अभ्यावर्तिने एतन्नामकायराज्ञे शिक्षन् ईप्सितानि वसूनि प्रयच्छन् वरशिखस्यासुरस्य शेषः पुत्रान्वधीदवधीदहिंसीत् वरशिखस्यपुत्रान् कथमवधीदित्युच्यते यद्यदा अयमिन्द्रः हरियूपीयायां हरियूपीयानामकाचिन्नदी काचिन्नगरीवा तस्यां पूर्वेअर्धे प्राग्भागेस्थितान् वृचीवतःवृचीवान्नामवरशिखस्यकुलोत्पन्नःपूर्वः तद्गोत्रजान् वरशिखस्यपुत्रान् हन्नवधीत् तदा अपरोपरभागेस्थितोवरशिखस्यश्रेष्ठःपुत्रः भियसा भीत्या दर्त् दीर्णोभूत् ॥ ५ ॥

॥ इतिचतुर्थस्यषष्ठेत्रयोविंशोवर्गः ॥ २३ ॥

५. इन्द्र ने चायमान राजा के अभ्यवर्ती नामक पुत्र को अभिलषित धन देते हुए वरशिख नामक असुर के पुत्रों का संहार किया था। हरियूपिया नामक नदी या नगरी के पूर्व भाग में अवस्थित वरशिख के गोत्रोत्पन्न वृचीवान् के पुत्रों का इन्द्र ने वध किया था। तब अपर भाग में अवस्थित वरशिख के श्रेष्ठ पुत्र भय से विदीर्ण हुए थे।

त्रिंशच्छतंवर्मिणइन्द्रसाकंयव्यावत्यांपुरुहूतश्रवस्या।
वृचीवन्तःशरवेपत्यमानाःपात्राभिन्दानान्यर्थान्यायन् ॥ ६ ॥

त्रिंशत्ऽशतम्। वर्मिणः। इन्द्र। साकम्। यव्याऽवत्याम्।
पुरुऽहूत। श्रवस्या। वृचीवन्तः। शरवे। पत्यमानाः। पात्रा।
भिन्दानाः। निःऽअर्थानि। आयन् ॥ ६ ॥

इदानीमुक्तमेवार्थंविवृणोति हेपुरुहूत बहुभिराहूतेन्द्र श्रवस्या श्रवस्यया श्रवोन्नंयशोवा तद्वांछया युद्धेत्वां जित्वा अन्नंप्राप्नुयाम यशोवाप्राप्नुयामेतिकामयमानाः शरवे हिंसायैत्वां हिंसितुमित्यर्थः पत्यमानाअभिपतन्तोभिगच्छन्तः पात्रा पात्राणियज्ञसाधनानि भिन्दाना भिन्दन्तः वर्मिणः कवचभृतः त्रिंशच्छतं त्रिंशदधिकशतसंख्याकाः वृचीवन्तोवरशिखस्यपुत्राः साकंयुगपदेवयव्यावत्यां पूर्वोक्तायां हरियूपीयायां न्यर्थानि अर्थशून्यानि आयन्नगच्छन् विनाशंप्रापुरित्यर्थः ॥ ६ ॥

६. हे बहुजनाहूत इन्द्र, युद्ध में तुम्हें जीत (मार) कर अन्न अथवा यश प्राप्त करें, ऐसी कामना करनेवाले, यज्ञ-पात्रों का भञ्जन करनेवाले और कवच धारण करनेवाले वरशिख के एक सौ तीस पुत्र यव्यावती (हरियूपिया) के निकट आगमन करके एक काल में ही विनष्ट हुए थे।

यस्यगावावरुषासूयवस्यूअन्तरूषुचरतोरेरिहाणा।
ससृञ्जयायतुर्वशंपरादाद्वृचीवतोदैववातायशिक्षन् ॥ ७ ॥

यस्य। गावौ। अरुषा। सुयवस्यू इति सुऽयवस्यू। अन्तः।
ऊँ इति। सु। चरतः। रेरिहाणा। सः। सृञ्जयाय। तुर्वशम्।
परा। अदात्। वृचीवतः। दैवऽवाताय। शिक्षन् ॥ ७ ॥

अरुषा अरुषौरोचमानौ सुयवस्यू शोभनतृणानीच्छन्तौ रेरिहाणा लेलिहानौ पुनःपुनर्घासमास्वादयन्तौ यद्वा गतिविशेषंकुर्वन्तौ यस्येन्द्रस्यसंबन्धिनौ गावावश्वौ अन्तर्द्यावापृथिव्योर्मध्येन्तरिक्षे चरतोगच्छतः ऊ सु इतीमौपूरणौ सइन्द्रः सृंजयाय एतन्नामकायराज्ञे तुर्वशं राजानं परादाव प्रददौ किंकुर्वन् वृचीवतोवारशिखान् दैववाताय देववातवंशोत्पन्नायाभ्यावर्तिनेराज्ञे शिक्षन् वशीकुर्वन् तेषांधनानिप्रयच्छन्नितिवा ॥ ७ ॥

७. जिनके रोचमान, शोभन तृणाभिलाषी पुनः-पुनः घास का आस्वादन करनेवाले अश्वगण द्यावा-पृथिवी के मध्य भाग में विचरण करते हैं। वे इन्द्र, सृञ्जय नामक राजा के निकट तुर्वश (राजा) को समर्पित करते हैं और देववाक-वंशोत्पन्न अभ्यवर्ती राजा के निकट वरशिख के पुत्रों को वशीभूत किया था।

द्वयाँअग्नेरथिनोविंशतिंगावधूमंतोमघवामह्यंसम्राट्।
अभ्यावर्तीचायमानोददातिदूणाशेयंदक्षिणापार्थवानाम्॥८॥२४॥

द्वयान्। अग्ने। रथिनः। विंशतिम्। गाः। वधूऽमंतः। मघऽवा। मह्यम्। सम्ऽराट्। अभिऽआवर्ती। चायमानः। ददाति। दुःऽनशा। इयम्। दक्षिणा। पार्थवानाम्॥८॥२४॥

अधुना भरद्वाजः स्वस्मै अभ्यावर्तिनादत्तंधनजातमग्नये प्रकथयति हेअग्ने मघवा धनवान् प्रभूतदानोवा सम्राट् राजसूययाजी चायमानश्चयमानस्यपुत्रः अभ्यावर्ती एतदाह्वयोराजा रथिनोरथसहितान् वधूमतः स्त्रीयुक्तान् द्वयान्मिथुनभूतान् विंशतिं विंशतिसंख्याकान् गाः पशून् मह्यं ददाति प्रायच्छत् पार्थवानां पृथोर्वंशजस्याभ्यावर्तिनोराज्ञःसंबन्धिनी पूजार्थे बहुवचनं इयंदक्षिणा दुर्नशा केनापिनाशयितुमशक्याभवति॥८॥

८. हे अग्नि, अतिशय धन देनेवाले और राजसूय यज्ञ करनेवाले चयमान के पुत्र राजा अभ्यवर्त्ती ने हमें (भरद्वाज को) स्त्रियों से युक्त रथ और बीस गौएँ दी थीं। पृथु के वंशधर राजा अभ्यवर्ती की यह दक्षिणा किसी के भी द्वारा अविनाशनीय है।

आगावइत्यष्टर्चंपंचमंसूक्तंअत्रेयमनुक्रमणिका—आगावोगव्यंद्वितीयैन्द्रीवांत्यश्चपादोंत्यानुष्टुप् जागतस्तृचोद्वितीयादिरिति। भरद्वाजऋषिः इन्द्रोयज्वनइत्याद्यस्तृचोजागतः उपेदमित्यंत्यानुष्टुप् शिष्टाश्चतस्रस्त्रिष्टुभः कृत्स्नस्यगौर्देवता द्वितीयायाः सूक्तांत्यपादस्यच विकल्पेनेन्द्रोदेवता गवामुपस्थानेएतत्सूक्तं सूत्रितंच—आगावीयमेकइति।

आगावोअग्मन्नुतभद्रमक्रन्त्सीदन्तुगोष्ठेरणयन्त्वस्मे।
प्रजावतीःपुरुरूपाइहस्युरिन्द्रायपूर्वीरुषसोदुहानाः॥१॥

आ। गावः। अग्मन्। उत। भद्रम्। अक्रन्। सीदन्तु। गोऽस्थे। रणयन्तु। अस्मे इति। प्रजाऽवतीः। पुरुऽरूपाः। इह। स्युः। इन्द्राय। पूर्वीः। उषसः। दुहानाः॥१॥

४ गावः आअगमन् अस्मदीयंगृहंआगच्छन्तु उतापिच भद्रं भजनीयं शुभं अक्रन् कुर्वन्तु तथा गोष्ठे अस्मदीयेगवांस्थाने सीदन्तूपविशन्तु तदनन्तरं अस्मे अस्मासु रणयन्तु रमन्तां अ-

पिच इहास्मिन्गोष्ठे पुरुरूपानानावर्णागावःप्रजावतीः प्रजावत्यः सन्ततिसहिताः स्युर्भवेयुः इन्द्रायेन्द्रार्थं पूर्वीर्बह्वीः उषसोदिवसान् सर्वेषुदिवसेषुइत्यर्थः दुहानाः क्षीरंदोहमानाभवेयुः ॥ १ ॥

१. गौएँ हमारे घर आवें और हमारा कल्याण करें। वे हमारे गोष्ठ में उपवेशन करें और हमारे ऊपर प्रसन्न हों। इस गोष्ठ में नाना वर्ण-वाली गौएँ सन्तति सम्पन्न होकर उषाकाल में इन्द्र के लिए दुग्ध प्रदान करें।

इन्द्रोयज्वनेपृणतेचशिक्षत्युपेद्दातिनस्वंमुषायति ।
भूयोभूयोरयिमिदस्यवर्धयन्नभिन्नेखिल्येनिदधातिदेवयुम् ॥ २॥

इन्द्रः । यज्वने । पृणते । च । शिक्षति । उप । इत् । ददाति ।
न । स्वम् । मुषायति । भूयःऽभूयः । रयिम् । इत् । अस्य ।
वर्धयन् । अभिन्ने । खिल्ये । नि । दधाति । देवऽयुम् ॥ ३ ॥

इन्द्रः यज्वने यजनशीलाय पृणतेच स्तुतिभिःप्रीणयित्रेचस्तोत्रेशिक्षति अपेक्षितंधनंददाति नकेवलंसकृदेवदानं अपितु सर्वदैवेत्याह उपेद्दाति उपेत्यसर्वदाददात्येव यज्वनःस्तोतुश्च स्वं स्वभूतंधनं नमुषायति कदाचिदपिनापहरति अपिच अस्योभयविधस्य रयिं धनमात्मनादत्तं भूयोभूयः पुनःपुनर्वर्धयन्निव वृद्धिमापयन्नेव देवयुं देवमिन्द्रमात्मनइच्छन्तंतंजनं अभिन्नेशत्रुभिरभेद्येखिल्येखिलमप्रतिहतंस्थानंतदेवखिल्यंस्वार्थिकोयत् अन्यैर्गन्तुमशक्येस्थले निदधाति निक्षिपति निवासयतीत्यर्थः ॥ २ ॥

२. इन्द्र यज्ञ करनेवाले और स्तुति करनेवाले को अपेक्षित धन प्रदान करते हैं। वे उन्हें सर्वदा धन प्रदान करते हैं। और उनके स्वकीय धन को कभी भी नहीं लेते हैं। वे निरन्तर उनके धन को बढ़ाते हैं और उन इन्द्राभिलाषी को शत्रुओं के द्वारा दुर्भेद्य स्थान में स्थापित करते हैं।

दैवीनांहविःषुनतानशंतिनताअर्वेतिगोदेवतायायाज्यापुरोनुवाक्ये गोस्तोमेपिमरुत्वतीयनिष्केवल्ययोरेतेसूक्तमुखीये सूत्रितंच—नताअर्वारेणुककाटोअश्रुतेननतानशन्तिनदभातितस्करइति ।

नतानशन्तिनदभातितस्करोनासामामित्रोव्यथिरादधर्षति ।
देवाँश्चयाभिर्यजतेददातिचज्योगित्ताभिःसचतेगोपतिःसह ॥३॥

न । ताः । नशन्ति । न । दभाति । तस्करः । न । आसाम् । आमित्रः ।
व्यथिः । आ । दधर्षति । देवान् । च । याभिः । यजते । ददाति ।
च । ज्योक् । इत् । ताभिः । सचते । गोऽपतिः । सह ॥ ३ ॥

तागावोननशन्ति अस्मत्सकाशान्ननश्यन्तु किंच तस्करश्चौरोपि नदभाति अस्मदीया-गाः नहिंस्यात् तथा आमित्रः अमित्रस्यशत्रोःसंबन्धि व्यथिः शस्त्रं आसांइमागाः नादधर्षति नाक्रमतु गोपतिः एवंभूतानांगवांस्वामीयजमानः याभिर्गोभिः देवांश्चेन्द्रादीनुद्दिश्य यजते यज-नंकरोति योगाःइन्द्रार्थंददातिचप्रयच्छतिच ताभिस्तादृशीभिर्गोभिःसह ज्योगित् चिरकालमे-वसचते संगच्छतां ॥ ३ ॥

३. गौएँ हमारे समीप से नष्ट नहीं हों। चोर हमारी गौओं को नहीं चुरावें। शत्रुओं का शस्त्र हमारी गौओं पर पतित नहीं हों। गो-स्वामी यजमान जिन गौओं से इन्द्रादि का यजन करते हैं और जिन गौओं को इन्द्र के लिए प्रदान करते हैं उन गौओं के साथ वे चिरकाल तक संगत हों।

नताअर्वारेणुकंकाटोअश्नुतेनसंस्कृतत्रमुपयन्तिताअभि।
उरुगायमभयंतस्यताअनुगावोमर्तस्यविचरन्तियज्वनः ॥ ४ ॥

न। ताः। अर्वा। रेणुऽकंकाटः। अश्नुते। न। संस्कृतऽत्रम्।
उप। यन्ति। ताः। अभि। उरुऽगायम्। अभयम्। तस्य।
ताः। अनु। गावः। मर्तस्य। वि। चरन्ति। यज्वनः ॥ ४ ॥

रेणुककाटः रेणोः पार्थिवस्यरजसउद्भेदकः कटिर्भेदनकर्मा अर्वायुद्धार्थमागतोश्वः ता-गाः नाश्नुते नप्राप्नुयात् तथा तागावः संस्कृतत्रं विशसनादिसंस्कारं नाभ्युपयन्ति नाभिगच्छ-न्तु अपिच तागावःयज्वनोयागशीलस्य तस्य मर्तस्य मनुष्यस्य उरुगायं विस्तीर्णगमनं अभयं भयवर्जितप्रदेशं अनूद्दिश्य विचरन्ति विशेषेणगच्छन्तु ॥ ४ ॥

४. रेणुओं के उद्भेदक और युद्धार्थ आगमन करनेवाले अश्व उन्हें (गौओं को) नहीं प्राप्त करें। वे गौएँ विशसनादि संस्कार को नहीं प्राप्त करें। यागशील मनुष्य की गौएँ निर्भय और स्वाधीन भाव से विचरण करती हैं।

गावोभगोगावइन्द्रोमेअच्छान्गावःसोमस्यप्रथमस्यभक्षः।
इमायागावःसजनासइन्द्रइच्छामीद्धृदामनसाचिदिन्द्रम् ॥ ५ ॥

गावः। भगः। गावः। इन्द्रः। मे। अच्छान्। गावः। सोमस्य।
प्रथमस्य। भक्षः। इमाः। याः। गावः। सः। जनासः।
इन्द्रः। इच्छामि। इत्। हृदा। मनसा। चित्। इन्द्रम् ॥ ५ ॥

गावएव मह्यं भगोधनं भवन्तु इन्द्रश्च मे मह्यं गावोगाः अच्छान् प्रयच्छतु गावः प्रथमस्य हविर्षांश्रेष्ठस्यसोमस्य भक्षोभक्षणं भवतु अभिषुतस्यहिसोमस्य गव्येनाज्यादिनासंश्रयण-

त्वात् हेजनासोजनाः इमाएवंभूतायागावःसन्ति सः ताइत्यर्थः ताएवगावः इन्द्रोभवन्ति दधिघृता-दिरूपेणेन्द्रस्याप्यायनत्वात् एवंभूतमिन्द्रं हृदा श्रद्धायुक्तेन मनसा चित् चिदित्यप्यर्थे इच्छामो-त् कामयेएव साधनभूताभिर्गोभिरेवंभूतमिन्द्रंयष्टुमिच्छामीत्यर्थः ॥ ५॥

५. गौएँ हमारे लिए धन हों। इन्द्र हमें गौएँ प्रदान करें। गौएँ हव्य-श्रेष्ठ सोमरस का भक्षण प्रदान करें। हे मनुष्यो, ये गौएँ ही इन्द्र होता हैं, श्रद्धायुक्त मन से हम जिनकी कामना करते हैं।

यूयंगावोमेदयथाकृशंचिदश्रीरंचित्कृणुथासुप्रतीकम्।
भद्रंगृहंकृणुथभद्रवाचोबृहद्वोवयउच्यतेसभासु ॥ ६ ॥

यूयम्। गावः। मेदयथ। कृशम्। चित्। अश्रीरम्। चित्।
कृणुथ। सुऽप्रतीकम्। भद्रम्। गृहम्। कृणुथ। भद्रऽवाचः।
बृहत्। वः। वयः। उच्यते। सभासु ॥ ६ ॥

हेगावोयूयं मेदयथ आप्यायनंकुरुथेत्यर्थः तथा कृशंचित्क्षीणमपि अश्रीरंचिदमंगलमपि सुप्रतीकं शोभनांगं कृणुथ कुरुथ हेभद्रवाचः कल्याणध्वन्युपेतागावः अस्मदीयंगृहं भद्रं क-ल्याणंकृणुथ गोभिरुपेतंकुरुथ सभासु यागपरिषत्सु हेगावोयुष्माकं बृहत् महत् वयोन्नं उच्यते समवेतंक्रियते सर्वैर्दीयतइत्यर्थः ॥ ६ ॥

६. हे गौओ, तुम हमें पुष्ट करो। तुम क्षीण और अमंगल अंग को सुन्दर बनाओ। हे कल्याण-युक्त वचनवाली गौओ, हमारे घर को कल्याण-युक्त करो अर्थात् गौओं से युक्त करो। हे गौओ, याग-सभा में तुम्हारा महान् अन्न ही कीर्तित होता है।

प्रजावतीःसूयवसंरिशन्तीःशुद्धाअपःसुप्रपाणेपिबन्तीः।
मावःस्तेनईशतमाघशंसःपरिवोहेतीरुद्रस्यवृज्याः ॥ ७ ॥

प्रजाऽवतीः। सुऽयवसम्। रिशन्तीः। शुद्धाः। अपः। सुऽप्रपाने।
पिबन्तीः। मा। वः। स्तेनः। ईशत। मा। अघऽशंसः।
परि। वः। हेतिः। रुद्रस्य। वृज्याः ॥ ७ ॥

हेगावोयूयं प्रजावतीः प्रजावत्यः वत्साभिर्युक्ताभवतेतिशेषः सुयवसं शोभनतृणं रिश-न्तीः रिशंत्यः भक्षणार्थंहिंसंत्योभवत सुप्रपाणे सुखेनपातव्येतटाकादौ शुद्धाः निर्मलाअपः उ-दकानि पिबन्तीः पिबंत्यश्चभवत वोयुष्मान् स्तेनः तस्करः माईशत माईशिष्ट ईश्वरोमाभूत् त-थाप्यघशंसः व्याघ्रादिः शत्रुः माईशत अपिच वोयुष्मान् रुद्रस्य कालात्मकस्य परमेश्वरस्य हेतिरायुधंच परिवृज्याः परिवृणक्तु परिहरतु ॥ ७ ॥

७. हे गौओ, तुम सन्तानयुक्त होओ। शोभन तृण का भक्षण करो और सुख से प्राप्त करने योग्य तड़ागादि का निर्मल जल पान करो। तुम्हारा शासक चोर नहीं हो और व्याघ्रादि तुम्हारा ईश्वर नहीं हो अर्थात् हिंसक जन्तु तुम्हारे ऊपर आक्रमण नहीं करें। कालात्मक परमेश्वर का आयुध तुमसे दूर रहे।

उपेदमुपपर्चनमासुगोषूपपृच्यताम्।
उपर्षभस्यरेतस्युपेन्द्रतववीर्ये ॥ ८ ॥ २५ ॥

उप। इदम्। उपऽपर्चनम्। आसु। गोषु। उप। पृच्यताम्।
उप। ऋषभस्य। रेतसि। उप। इन्द्र। तव। वीर्ये ॥ ८ ॥ २५ ॥

आसुगोषु इदमुपपर्चनं आप्यायनं उपपृच्यतां संपृच्यतां हेइन्द्र तववीर्ये त्वदीयवीर्यनिमित्ते ऋषभस्य गवांगर्भमादधानस्यवृषभस्य रेतसि इदमुपपर्चनं आप्यायनं गोषुह्याप्यायितासुसतीषु तत्संबन्धिक्षीरादिहविर्द्वारेणेन्द्रः आप्यायितोभवतीत्यर्थः उपेतिपुनर्वचनंपादभेदानां पूरणार्थमिति ॥ ८ ॥

८. हे इन्द्र, तुम्हारे बलाधान के निमित्त गौओं की पुष्टि प्रार्थित हो एवम् गौओं के गर्भाधानकारी वृषभों का बल प्रार्थित हो अर्थात् गौओं के पुष्ट (सन्तुष्ट) होने पर ततसम्बन्धी क्षीरादि-द्वारा इन्द्र आप्यायित (सन्तुष्ट) होते हैं।

॥ इतिचतुर्थस्यषष्ठेपंचविंशोवर्गः ॥ २५ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येचतुर्थाष्टकेषष्ठोध्यायःसमाप्तः ॥ ६ ॥

## ॥ श्रीगणेशायनमः ॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् । निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरं ॥ १ ॥
अथसप्तमोध्यायआरभ्यते षष्ठस्यमंडलस्यतृतीयेनुवाकेपंचसूक्तानिव्याकृतानि इन्द्रंवइतिषळृचं षष्ठंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रं अनुक्रम्यतेच-इन्द्रंषळिति । गतोविनियोगः ।

तत्रप्रथमा—

अम् इन्द्रंवोनरःसख्यायसेपुर्महोयन्तःसुमतयेचकानाः ।
महोहिदातावज्रहस्तोअस्तिमहामुरण्वमवसेयजध्वम् ॥ १ ॥

इन्द्रम् । वः । नरः । सख्याय । सेपुः । महः । यन्तः । सुऽमतये ।
चकानाः । महः । हि । दाता । वज्रऽहस्तः । अस्ति । महाम् ।
ऊँ इति । रण्वम् । अवसे । यजध्वम् ॥ १ ॥

हेयजमानाः वोयुष्माकंसंबन्धिनः नरोनेतारऋत्विजः सख्याय सखिभावार्थं इन्द्रं सेपुः परिचरन्ति स्पृशन्तिवा कथंभूताः महोमहान्तिस्तोत्राणि यन्तः उपयन्तः प्राप्नुवन्तः कुर्वन्तइत्यर्थः तथा सुमतये सुमतिः शोभनाअनुग्रहात्मिकातदीयाबुद्धिः तांचकानाः कामयमानाः क्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदानसंज्ञा चकानाइतिकामयतेश्छान्दसंरूपं यद्वा महोमहत्कर्मयन्तः अनुतिष्ठन्तः सुमतये सुमतिं शोभनांस्तुतिं चकानाः शब्दयन्तः कैगैशब्देइत्यस्माल्लिटः कानचिरूपं हियस्मात् वज्रहस्तोवज्रपाणिरिन्द्रः महोमहतोधनस्य दातास्तिभवति तस्मात् रण्वं रमणीयं महामु महान्तमेव अवसे रक्षणाय यजध्वं हविर्भिःपूजयत ॥ १ ॥

१. हे यजमानो, तुम्हारे नेतृ-स्वरूप ऋत्विक् लोग सखि-भाव से इन्द्र की परिचर्या करते हैं। वे महान् स्तोत्रों का उच्चारण करते हैं और उनकी बुद्धि शोभन तथा अनुग्रहात्मिका है; क्योंकि वज्रपाणि इन्द्र महान् धन प्रदान करते हैं; इसलिए रमणीय और महान् इन्द्र की पूजा, रक्षा के लिए, करो।

आयस्मिन्हस्तेनर्यामिमिक्षुरारथेहिरण्ययेरथेष्ठाः ।
आरश्मयोगभस्त्योःस्थूरयोराध्वन्नश्वासोवृषणोयुजानाः ॥ २ ॥

आ। यस्मिन्। हस्ते। नर्याः। मिमिक्षुः। आ। रथे। हिरण्यये।
रथेऽस्थाः। आ। रश्मयः। गभस्त्योः। स्थूरयोः। आ। अध्वन्।
अश्वासः। वृषणः। युजानाः॥ २॥

यस्मिन्निन्द्रे नर्या नृभ्योहिता रायः आमिमिक्षुः आसिच्यन्ते आपूर्यन्ते व्यत्ययेनक-र्मणिकर्तृप्रत्ययः इन्द्रे कुत्रेतिचेत् हस्ते तदीयेबाहौ यद्वैतत्समानाधिकरणमिन्द्रस्यविशेषणं हस्तेहन्तरियस्मिन्निन्द्रेइत्यर्थः उक्तंयास्केन—हस्तोहन्तेःप्राशुर्हननइति। यद्वा ईदृशेयस्मिन्निन्द्रे वर्तमानारायः आमिमिक्षुः आसिंचन्ति आपूरयन्तिस्तोतॄन् यश्चेन्द्रः रथेष्ठाः रथस्थाता तत्स्व-भावःसन् हिरण्यये सुवर्णमये रथे आतिष्ठति यद्वा रथेष्ठाः रथेवस्थितारायोधनानि हिरण्म-ये रथेतिष्ठन् यइन्द्रआसिंचत्यभिवर्षति यस्यच स्थूरयोः स्थूलयोर्विस्तृतयोर्गभस्त्योःबाहुना-मैतत् बाह्वोःरश्मयोभीशवः आसिच्यन्ते आयम्यन्ते यस्यचाश्वासोअश्वाः वृषणः सेकारो-युवानः युजानाः रथेयुज्यमानाः अध्वन् अध्वनिमार्गे आमिमिक्षुः आसिंचन्ति आपूरयन्ति आगच्छन्तीत्यर्थः तमिन्द्रंस्तुमइतिशेषः॥ २॥

२. जिस इन्द्र के हाथ में मनुष्यों के हितकर धन सञ्चित हैं, जो रथ पर चढ़नेवाले इन्द्र सुवर्णमय रथ पर आरूढ़ होते हैं, जिनके विशाल बाहुओं में रश्मियाँ नियमित हैं, जिन इन्द्र को सेचन करनेवाले (बलिष्ठ) और रथ में युक्त अश्वगण वहन करते हैं, हम उन इन्द्र का स्तवन करते हैं।

श्रियेतेपादादुवआमिमिक्षुर्धृष्णुर्वज्रीशवसादक्षिणावान्।
वसानोअत्कंसुरभिंदृशेकंस्व१र्णनृतविषिरोबभूथ॥ ३॥

श्रिये। ते। पादा। दुवः। आ। मिमिक्षुः। धृष्णुः। वज्री।
शवसा। दक्षिणऽवान्। वसानः। अत्कम्। सुरभिम्। दृशे।
कम्। स्वः। न। नृतो इति। इषिरः। बभूथ॥ ३॥

हेइन्द्र श्रिये ऐश्वर्यार्थं ते त्वदीययोः पादा पादयोः दुवः परिचरणं आमिमिक्षुः आ-सिंचन्ति समर्पयन्ति भरद्वाजःसमर्पयति व्यत्ययेनबहुवचनं यद्वा ते तव पादौ श्रिये श्रयितुं से-वितुं दुवः परिचरणमासिंचन्तिअनुतिष्ठन्ति यस्त्वं शवसा बलेन धृष्णुः शत्रूणांधर्षकः वज्री व-ज्रवान् दक्षिणावान् दक्षिणास्तोतृभ्योदातव्यंधनं तद्वान् हेनृतोनेतरिन्द्र सत्वं सुरभिं प्रशस्तं अत्कं सततगमनशीलमात्मीयंरूपं दृशे सर्वेषांदर्शनार्थं वसानः आच्छादयन् स्वर्णं सूर्यइव इ-षिरोगन्ता एषणीयोवा बभूथ भवसि कमितिपूरणः॥ ३॥

३. हे इन्द्र, ऐश्वर्यलाभ के लिए भरद्वाज तुम्हारे चरणों में परि-चरण समर्पित करते हैं। तुम बल-द्वारा शत्रुओं को पराजित करते हो,

वज्र धारण करते हो। और श्रोताओं को धन देनेवाले हो। हे नेता इन्द्र, तुम सबके दर्शनार्थ प्रशस्त और सतत-गमनशील रूप धारण करके सूर्य की तरह परिभ्रमणशील होते हो।

ससोमआमिश्लतमःसुतोभूद्यस्मिन्पक्तिःपच्यतेसन्तिधानाः ।
इन्द्रंनरःस्तुवन्तोब्रह्मकाराउक्थाशंसन्तोदेववाततमाः ॥ ४ ॥

सः । सोमः । आमिश्लऽतमः । सुतः । भूत् । यस्मिन् । पक्तिः ।
पच्यते । सन्ति । धानाः । इन्द्रम् । नरः । स्तुवन्तः । ब्रह्मऽकाराः ।
उक्था । शंसन्तः । देववातऽतमाः ॥ ४ ॥

यःसोमोवक्ष्यते ससोमः सुतोभिषुतःसन् आमिश्लतमः आभिमुख्येनमिश्रतमोभूत् इन्द्रेणात्यर्थंसंगच्छते यस्मिन्सोमेभिषुते अतिपक्तिः पक्तव्यः पुरोडाशादिःपच्यते भृष्टयवाधानास्ताश्चसन्तिहविरर्थंसंस्कृताभवन्ति यस्मिंश्च सोमेभिषुते नरोनेतारः ब्रह्मकाराः ब्रह्मणोन्नस्यहविर्लक्षणस्यकर्तारऋत्विजः इन्द्रं स्तोत्रैः स्तुवन्तः उक्था उक्थानिशस्त्राणिच शंसन्तः उच्चारयन्तः देववात तमाः देवानतिशयेनोपगताभवन्ति ससोमइन्द्रेणसंमिश्रितोभूदित्यन्वयः ॥ ४ ॥

४. सोम के अभिषुत होने पर वह भली भाँति मिश्रित हुआ है, जिसके अभिषुत होने पर पाकयोग्य पुरोडाशादि पकाया जाता है। भुने जौ हवि के लिए संस्कृत होते हैं। हविर्लक्षण अन्न के कर्ता ऋत्विक् लोग स्तोत्रों के द्वारा इन्द्र का स्तवन करते हैं। शास्त्रों का उच्चारण करते हुए वे देवता के निकटस्थ होते हैं।

नतेअन्तःशवसोधाय्यस्यवितुबाबधेरोदसीमहित्वा ।
आतासूरिःपृणतितूतुजानोयूथेवाप्सुसमीजमानऊती ॥ ५ ॥

न । ते । अन्तः । शवसः । धायि । अस्य । वि । तु । बाबधे ।
रोदसी इति । महिऽत्वा । आ । ता । सूरिः । पृणति । तूतुजानः ।
यूथाऽइव । अप्ऽसु । सम्ऽईजमानः । ऊती ॥ ५ ॥

हेइन्द्र ते तव अस्योक्तगुणस्य शवसोबलस्य अन्तः अवसानं नधायि अत्रकेवलोपि दधातिरवाङ्पूर्वार्थोद्रष्टव्यः नावाधायि अस्माभिर्नाज्ञायीत्यर्थः यद्बलं रोदसीद्यावापृथिव्यौ महित्वा महत्त्वेन तु क्षिप्रं विबाबधे यस्माद्बलात् द्यावापृथिव्यौबिभीतइत्यर्थः ता तद्बलं सूरिः स्तोता तूतुजानस्त्वरितःसन् ऊती ऊत्यातर्पकेणहविषा समीजमानः सम्यग्यजन्आपृणत्यापूरयति तत्रदृष्टान्तः—यूथेवाप्सुउदकेषुगवांयूथानीव यथा गोपालःअपःपाययन्अद्भिस्तर्पयति तद्वत् ॥ ५ ॥

५. हे इन्द्र, तुम्हारे बल का अवसान नहीं है अर्थात् तुम्हारे बल को हम लोग नहीं जानते। द्यावा-पृथिवी जिस महान् बल से भीत होती हैं, गोपाल जैसे जल-द्वारा गौओं को तृप्त करता है, उसी प्रकार स्तोता शीघ्र ही तृप्तिकारक हव्य-द्वारा भली भाँति यज्ञ करके तुम्हें तृप्त करते हैं।

एवेदिन्द्रः सुहव ऋष्वो अस्तूती अनूती हिरिशिप्रः सत्वा।
एवा हि जातो असमात्योजाः पुरू च वृत्रा हनति नि दस्यून् ॥ ६ ॥ १ ॥

एव। इत्। इन्द्रः। सुऽहवः। ऋष्वः। अस्तु। ऊती। अनूती।
हिरिऽशिप्रः। सत्वा। एव। हि। जातः। असमातिऽओजाः।
पुरु। च। वृत्रा। हनति। नि। दस्यून् ॥ ६ ॥ १ ॥

एव एवंउक्तेनप्रकारेण ऋष्वोमहानिन्द्रः सुहवोस्तु सुखेनाह्वातव्योभवतु इदितिपूरणः हिरिशिप्रः शिप्रेहनूनासिकेवा हरितवर्णेशिप्रेयस्यतादृशइन्द्रः ऊती ऊत्याआगमनेन अनूती अनूत्याअनागमनेनवा सत्वा गमयिताभवतिधनानां स्वयमागतोनागतोपिस्तोतृभ्योधनंप्रयच्छतीत्यर्थः एवाहि एवंहि जातः प्रादुर्भूतोयमिन्द्रः असमात्योजाः असमातिअसमानमनुपमंउत्कृष्टतरमोजोबलंयस्यतादृशःसन् पुरु पुरूणिबहूनिच वृत्रा वृत्राण्यावरकाणिरक्षःप्रभृतीनि हनति हिनस्तु तथा दस्यून् उपक्षपयितॄन् शत्रूँश्चनिहन्तु ॥ ६ ॥

६. हरित नासावाले महेन्द्र इस प्रकार से सुखपूर्वक आह्वान करने के योग्य होते हैं। इन्द्र स्वयं उपस्थित अथवा अनुपस्थित हों; किन्तु स्तोताओं को धन प्रदान करते हैं। इस प्रकार से प्रादुर्भूत होकर उत्कृष्टतर बलवाले इन्द्र बहुतेरे वृत्रादि राक्षसों को तथा शत्रुओं को मारते हैं।

भूयइदितिपंचर्चंसप्तमंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रं भूयःपंचेत्यनुक्रान्तं अग्निष्टोमेमाध्यंदिनसवनेच्छावाकशस्त्रेएतत्सूक्तंशंसनीयं सूत्रितंच—उदिन्न्वस्यरिच्यतेभूयइति। महाव्रतेपिनिष्केवल्येएतत्सूक्तं तथैवपंचमारण्यकेसूत्रितं—भूयइद्वावृधेवीर्यायनृणामुत्वेति।

भूय इद्वावृधे वीर्याय एको अजुर्यो दयते वसूनि।
प्र रिरिचे दिव इन्द्रः पृथिव्या अर्धमिदस्य प्रति रोदसी उभे ॥ १ ॥

भूयः। इत्। ववृधे। वीर्याय। एकः। अजुर्यः। दयते। वसूनि।
प्र। रिरिचे। दिवः। इन्द्रः। पृथिव्याः। अर्धम्। इत्। अस्य।
प्रति। रोदसी इति। उभे इति ॥ १ ॥

अयमिन्द्रः भूयइव बहुतरमेव वावृधे प्रवृद्धोभूत् किमर्थं वीर्याय वीरकर्माणिवृत्रवधादीनि कर्तुं एकोमुख्यः अजुर्योजरयितुमशक्यः सचेन्द्रः वसूनि धनानि दयते स्तोतृभ्योददाति तथा दिवोद्युलोकात् पृथिव्याः भूमेश्च अयमिन्द्रः प्ररिरिचे अतिरिच्यते किंचास्येन्द्रस्य उभेरोदसी द्यावापृथिव्यौ अर्धमिव अर्धमेवप्रति अस्येन्द्रस्यार्धोभागः द्यावापृथिव्योः प्रतिनिधिर्भवती-त्यर्थः ॥ १ ॥

१. वृत्रवधादि वीरकार्य करने के लिए इन्द्र पुनः प्रवृद्ध हुए हैं। मुख्य (श्रेष्ठ) और जरारहित इन्द्र स्तोताओं को धन प्रदान करें। इन्द्र द्यावा-पृथिवी का अतिक्रमण करते हैं। इन्द्र का आधा भाग ही द्यावा-पृथिवी के बराबर है अर्थात् प्रतिनिधि है।

**अधामन्येबृहदसुर्यमस्ययानिदाधारनकिरामिनाति ।**
**दिवेदिवेसूर्योदर्शतोभूद्विसद्मान्युर्वियासुक्रतुर्धात् ॥ २ ॥**

अध । मन्ये । बृहत् । असुर्यम् । अस्य । यानि । दाधार । नकिः । आ । मिनाति । दिवेऽदिवे । सूर्यः । दर्शतः । भूत् । वि । सद्मानि । उर्विया । सुऽक्रतुः । धात् ॥ २ ॥

अध अधुना अस्येन्द्रस्य बृहत् महत् असुर्यं असुरहननकुशलं बलंमन्ये स्तौमि मन्यतिः स्तुतिकर्मा सचेन्द्रः यानिकर्माणि दाधार धारयति तानि नकिरामिनाति नकश्चिदपिहिनस्ति कानिपुनस्तानि उच्यते दिवेदिवे प्रतिदिनं वृत्रेणावृतः सूर्यः दर्शतोदर्शनीयः भूत् भवति आवर-कस्यासुरस्यवधेन सूर्यंप्रकाशितवानित्येकंकर्म सुक्रतुः शोभनकर्मासइन्द्रः सद्मानि भुवनानि उर्विया उरूणिविस्तीर्णानि विधात् व्यधात् अकार्षीत् इदमपरंकर्म एवदादीनिबहूनिकर्माणिकृ-तवानित्यर्थः ॥ २ ॥

२. अभी हम इन्द्र के बल का स्तवन करते हैं। वह बल असुरों के हनन में कुशल है। इन्द्र जिन कर्मों को धारण करते हैं, उनकी हिंसा कोई भी नहीं करता। वे प्रतिदिन वृत्रावृत सूर्य को दर्शनीय बनाते हैं। शोभन कर्म करनेवाले इन्द्र ने भुवनों को विस्तीर्ण किया है।

**अद्याचिन्नूचित्तदपोनदीनांयदाभ्योअरदोगातुमिन्द्र ।**
**निपर्वताअद्मसदोनसेदुस्त्वयादृळ्हानिसुक्रतोरजांसि ॥ ३ ॥**

अद्य । चित् । नु । चित् । तत् । अपः । नदीनाम् । यत् । आभ्यः । अरदः । गातुम् । इन्द्र । नि । पर्वताः । अद्मऽसदः । न । सेदुः । त्वया । दृळ्हानि । सुक्रतो इति सुऽक्रतो । रजांसि ॥ ३ ॥

हेइन्द्र अद्याचित् अद्यापिनूचित् पुरापि तत्नदीनांसंबन्धिकं तदपः कर्म वर्तते आभ्यो-नदीभ्यः गातुं मार्गं अरदः प्रवहनार्थं व्यलिखइतियत्कर्म तत्सर्वेदानुपक्षीणंसद्वर्ततेइत्यर्थः अपि-

च त्वदाज्ञया पर्वतागिरयः निषेदुःनिषण्णाः उत्पतनंपरित्यज्यक्वचिदेवस्थानेनैश्चल्येनोपविष्टाबभूवुः अद्मसदोन अद्म अदनीयमन्नंतदर्थंसीदन्तःपुरुषाइव यथा तेभोजनार्थंनैश्चल्येनासीदन्तित्रथेत्यर्थः अतःकारणात् हेसुक्रतो शोभनकर्मन्निन्द्र त्वया रजांसि सर्वेलोकाः दृह्लानिदृंहितानि स्थिरीकृताआसन् ॥ ३ ॥

३. हे इन्द्र, पहले की तरह आज भी तुम्हारा नदी-सम्बन्धी कार्य विद्यमान है। नदियों को बहने के लिए तुमने मार्ग बनाया है। भोजनार्थ उपविष्ट मनुष्यों की तरह पर्वतगण तुम्हारी आज्ञा से निश्चल भाव से उपविष्ट हैं। हे शोभन कर्म करनेवाले इन्द्र, सम्पूर्ण लोक तुम्हारे द्वारा स्थिर हुए हैं।

सत्यमित्तन्नत्वावाँअन्योअस्तीन्द्रदेवोनमर्त्योज्यायान्।
अहन्नहिंपरिशयानमर्णोवासृजोअपोअच्छासमुद्रम् ॥ ४ ॥

सत्यम्। इत्। तत्। न। त्वाऽवान्। अन्यः। अस्ति। इन्द्र।
देवः। न। मर्त्यः। ज्यायान्। अहन्। अहिम्। परिऽशयानम्।
अर्णः। अव। असृजः। अपः। अच्छ। समुद्रम् ॥ ४ ॥

हेइन्द्र वक्ष्यमाणं तत् सत्यमित् सत्यमेव नानृतं त्वावान् त्वत्सदृशोन्योदेवोनास्ति त्वत्सदृशोन्योमर्त्योमनुष्योपिनैवविद्यते ज्यायान् अधिकोपिदेवोमनुष्योवानखल्वस्तिइतियदुच्यतेतत्सत्यमेवेत्यर्थः अपिच त्वं अर्णउदकं परिशयानं परिवृत्यशयानं अहिं मेघं अहन्अवधीः हत्वाच समुद्रमन्तरिक्षंजलधिंवाच्छाभिमुख्येन अपउदकानि अवासृजः अवाङ्मुखतयाविसृष्टवानसीत्यर्थः ॥ ४ ॥

४. हे इन्द्र, तुम्हारे सदृश अन्य देव नहीं हैं, यह एकदम सत्य है। तुम्हारे सदृश कोई दूसरा मनुष्य भी नहीं है। तुमसे अधिक न कोई देव है, न मनुष्य, यह जो कहा जाता है, सो एकदम सत्य है। वारिराशि को आवृत करके सोनेवाले मेघ का तुमने वध किया था। वारिराशि को समुद्र में पतित होने के लिए तुमने मुक्त किया था।

त्वमपोविदुरोविषूचीरिन्द्रदृह्लमरुजःपर्वतस्य।
राजाभवोजगतश्चर्षणीनांसाकंसूर्यंजनयन्द्यामुषासम् ॥ ५ ॥ २ ॥

त्वम्। अपः। वि। दुरः। विषूचीः। इन्द्र। दृह्लम्। अरुजः।
पर्वतस्य। राजा। अभवः। जगतः। चर्षणीनाम्। साकम्।
सूर्यम्। जनयन्। द्याम्। उषसम् ॥ ५ ॥ २ ॥

हेइन्द्र त्वं दुरः वृत्रेणावृताअपः विषूचीः विविधमंचंत्यः यथा सर्वतः प्रसृताभवन्ति तथा व्यसृजः यतस्त्वं पर्वतस्य पर्ववतोमेघस्य दृह्लं दृढं अपांबन्धकप्रदेशं अरुजः अभांक्षीः

अपिच त्वं जगतःसंबन्धिनीनांचर्षणीनांप्रजानां राजा भवः अधिपतिर्भवसि किंकुर्वन्सूर्यं द्यां द्युलोकं उषसंच तमसावृतमेतत्त्रितयं साकं युगपदेव जनयन् प्रादुर्भावयन् प्रकाशयन्नित्यर्थः॥५॥

५. हे इन्द्र, वृत्र से आवृत जल को सर्वत्र प्रवाहित होने के लिए तुमने मुक्त किया था। तुमने मेघ के दृढ़ बन्धन को छिन्न किया था। तुम सूर्य द्युलोक और उषा को एक काल में ही प्रकाशित करके जगत्-सम्बन्धी प्रजाओं के राजा होओ।

अभूरेकइतिपंचर्चमष्टमंसूक्तं भरद्वाजस्यसुहोत्रस्यार्षं उपांत्याशक्करी शिष्टाश्चतस्रस्त्रिष्टुभः इन्द्रोदेवता अनुक्रम्यतेच—अभूरेकःसुहोत्रस्तुचतुर्थीशक्करीति। महाव्रतस्यनिष्केवल्येइदमादीन्यष्टसूक्तानिशंसनीयानि तथापंचमाण्यकं—अभूरेकोरयिपतेरयीणामित्यष्टौसूक्तानीति। पृष्ठ्यषस्यषष्ठेहनिनिष्केवल्येइदंसूक्तंनिविद्धानं सूत्रितंच—एन्द्रयाह्युपनः प्रघान्वस्याभूरेकइतिनिष्केवल्यमिति। विश्वजितिमाध्यंदिनेच्छावाकशस्त्रेसामसूक्ताख्यमेतच्छंसनीयं सूत्रितंच—अभूरेकोरयिपतेरयीणामितिसामसूक्तानि।

अभूरेकोरयिपतेरयीणामाहस्तयोरधिथाइन्द्रकृष्टीः।
वितोकेअप्सुतनयेचसूरेवोचन्तचर्षणयोविवाचः॥ १॥

अभूः। एकः। रयिऽपते। रयीणाम्। आ। हस्तयोः। अधिथाः।
इन्द्र। कृष्टीः। वि। तोके। अप्ऽसु। तनये। च। सूरे।
अवोचन्त चर्षणयः। विऽवाचः॥ १॥

हेरयिपते धनस्यपालकेन्द्र एकः प्रधानभूतस्त्वं रयीणां धनानांस्वामी अभूर्भवसि यद्वा रयीणांरयिपतेइतिसंबन्धः एकोरयिशब्दोनुवादः यथा गवामसिगोपतिरेकइन्द्रेति तदानीं एकोमुख्यस्त्वंभवसीतियोजनीयं अपिच हेइंद्र त्वं हस्तयोरात्मीययोर्बाह्वोःकृष्टीः प्रजाः आअधिथाः अधत्से सर्वंजगत्तवाज्ञायांवर्ततेइत्यर्थः किंच चर्षणयोमनुष्याः तोके पुत्रे अप्सूदकेषु सूरे शत्रूणांप्रेरके तनये पौत्रेषुच एतेषुनिमित्तभूतेषुसत्सु विवाचः विशिष्टाःस्तुतीःव्यवोचन्त विविधंब्रुवन्ति॥ १॥

१. हे धन के पालक इन्द्र, तुम धन के प्रधान स्वामी हो। हे इन्द्र, तुम अपने बाहुद्वय में प्रजाओं को धारण करते हो अर्थात् सम्पूर्ण जगत् तुम्हारी आज्ञा का अनुवर्ती है। मनुष्यगण विविध प्रकार से तुम्हारा स्तवन पुत्र, शत्रु विजयी पौत्र और वृष्टि के लिए करते हैं।

अथद्वितीया—

त्वद्भियेन्द्रपार्थिवानिविश्वाच्युताचिच्च्यावयन्तेरजांसि।
द्यावाक्षामापर्वतासोवनानिविश्वंदृळ्हंभयतेअज्मन्नाते॥ २॥

१ ऋ० सं० ५. ६. २३.।

त्वत् । भिया । इन्द्र । पार्थिवानि । विश्वा । अच्युता । चित् । च्यवयन्ते । रजांसि । द्यावाक्षामा । पर्वतासः । वनानि । विश्वम् । दृह्ळम् । भयते । अज्मन् । आ । ते ॥ २ ॥

हेइन्द्र त्वत्त्वत्तोभियाभयेन विश्वा विश्वानिव्यापकानि पार्थिवानि पृथिव्यंतरिक्षनाम तत्रभवानि रजांस्युदकानि अच्युताचित् च्यावयितुमशक्यान्यपि च्यावयन्तेमेघाः मच्यावयन्ति वर्षन्तीत्यर्थः अपिच हेइन्द्र तेतव अज्मन् आगमनेसति द्यावाक्षामा द्यावापृथिव्यौ पर्वतासोगिरयोवनानिवृक्षाश्च भयते भयंप्राप्नुवन्ति किंबहुना विश्वं सर्वं दृह्ळं स्थिरं प्राणिजातं भयते बिभेति ॥ २ ॥

२. हे इन्द्र, तुम्हारे भय से व्यापक और अन्तरिक्षोद्भव उदक पतनयोग्य नहीं होने पर भी मेघ द्वारा बरसाये जाते हैं। हे इन्द्र, तुम्हारे आगमन से द्यावापृथिवी, पर्वत, वृक्ष और सम्पूर्ण स्थावर प्राणिजात भीत होते हैं।

त्वंकुत्सेनाभिशुष्णमिन्द्राशुषंयुध्यकुयवंगविष्टौ ।
दशप्रपित्वेअधसूर्यस्यमुषायश्चक्रमविवेरपांसि ॥ ३ ॥

त्वम् । कुत्सेन । अभि । शुष्णम् । इन्द्र । अशुषम् । युध्य । कुयवम् । गोऽइष्टौ । दश । प्रऽपित्वे । अध । सूर्यस्य । मुषायः । चक्रम् । अविवेः । रपांसि ॥ ३ ॥

हेइन्द्र त्वं कुत्सेनसह अशुषं शोषयितुमशक्यं प्रबलं शुष्णं सर्वस्यशोषकमेतत्संज्ञमसुरं अभियुध्य अभ्ययुध्यः कुत्सस्यसाहाय्यार्थं तेनासुरेणसहयुद्धंकृतवानसीत्यर्थः तथागविष्टौ गावोबाणाइष्यन्तिगच्छंतियत्रेतिगविष्टिःसंग्रामः तस्मिन् कुयवमेतत्संज्ञमसुरंच दश अदशः हिंसितवानसि दंशदशनेइत्येतस्माच्छान्दसेलोटिरूपं अध अपिच प्रपित्वे प्रपतनेयुद्धे सूर्यस्यचक्रं रथावयवभूतं मुषायः अमुष्णाः तदाप्रभृतिसूर्यस्यरथएकचक्रोबभूव तथाचाम्नातं—सप्तयुंजन्तिरथमेकचक्रमिति । एतशाख्यस्यऋषेःसूर्येणसहयुद्धे तत्साहाय्यार्थमागतइन्द्रःसूर्यस्यचक्रमपहृतवानित्याख्यातं सूरश्चक्रंप्रवृहज्जातओजसेतिचनिगमान्तरं । अपिचरपांसिपापकारीणि रक्षःप्रभृतीनि अविवेः अस्माल्लोकादगमयः अवधीरित्यर्थः ॥ ३ ॥

३. हे इन्द्र, कुत्स के साथ प्रबल शुष्ण के विरुद्ध तुमने युद्ध किया था अर्थात् कुत्स के साहाय्यार्थ तुमने शुष्ण के साथ युद्ध किया था। संग्राम में तुमने कुयव का वध किया था। संग्राम में तुमने सूर्य के रथचक्र का हरण किया था। तब से सूर्य का रथ ही एक चक्र का हो गया है। पापकारी राक्षसों को तुमने मारा था।

त्वंशतान्यवशम्बरस्यपुरोजघन्थाप्रतीनिदस्योः।
अशिक्षोयत्रशच्याशचीवोदिवोदासायसुन्वतेसुतक्रेभर-
द्वाजायगृणतेवसूनि ॥ ४ ॥

त्वम्। शतानि। अव। शम्बरस्य। पुरः। जघन्थ। अप्रतीनि।
दस्योः। अशिक्षः। यत्र। शच्या। शचीऽवः। दिवःऽदासाय।
सुन्वते। सुतऽक्रे। भरत्ऽवाजाय। गृणते। वसूनि ॥ ४ ॥

हेइन्द्र त्वं शतानि शतसंख्यानि दस्योरुपक्षपयितुरसुरस्य शंबरस्य एतत्संज्ञस्य पुरः पुरीः अप्रतीनि लिंगव्यत्ययः केनाप्यप्रतिगताः अवजघंथ अवाहन् हेशचीवः प्रज्ञावन् हेसुतक्रे अभिषुतेनसोमेनक्रीतेन्द्र यत्र यस्मिन्काले सुन्वते सोमाभिषवंकुर्वते दिवोदासाय शच्या प्रज्ञया अशिक्षोधनानिप्रादाः गृणते स्तुवते भरद्वाजायच वसूनिप्रादाः तस्मिन्काले शांबरीः पुरोवजघंथेत्यन्वयः ॥ ४ ॥

४. हे इन्द्र, तुमने दस्यु शम्बरासुर के सौ नगरों को उच्छिन्न किया था। हे प्रज्ञावान् तथा अभिषुत सोम-द्वारा क्रीत इन्द्र, उस समय तुमने सोमाभिषव करनेवाले दिवोदास को प्रज्ञापूर्वक धन प्रदान किया था तथा स्तुति करनेवाले भरद्वाज को धन प्रदान किया था।

ससत्यसत्वन्महतेरणायरथमातिष्ठतुविनृम्णभीमम्।
याहिप्रपथिन्नवसोपमद्रिक्प्रचश्रुतश्रावयचर्षणिभ्यः ॥ ५ ॥ ३ ॥

सः। सत्यऽसत्वन्। महते। रणाय। रथम्। आ। तिष्ठ।
तुविऽनृम्ण। भीमम्। याहि। प्रऽपथिन्। अवसा। उप।
मद्रिक्। प्र। च। श्रुत। श्रवय। चर्षणिऽभ्यः ॥ ५ ॥ ३ ॥

हेसत्यसत्वन् सत्याः अबाध्याः सत्वानोभटाः यस्यसतथोक्तः हेतुविनृम्ण तुविबहुलंनृम्णं धनंयस्यसतथोक्तः हेतादृशेन्द्र सत्वं महते रणाय संग्रामाय तदर्थं भीमं भयंकरं आत्मीयंरथं आतिष्ठ हेप्रपथिन् प्रकृष्टमार्गेन्द्र अवसा रक्षणेनसह तेनचरथेनोपयाह्यागच्छ मद्रिक् मदभिमुखः तथा हेश्रुत विश्रुतेन्द्र चर्षणिभ्यः प्रजा प्रश्रावयच अस्मान्प्रख्यापयच सर्वासुप्रजासुमध्येअस्मान्प्रख्यातान्कुर्वित्यर्थः ॥ ५ ॥

५. हे अवध्य भटवाले तथा विपुल धनवाले इन्द्र, तुम महान् संग्राम के लिए अपने भयंकर रथ पर आरोहण करो। हे प्रकृष्ट मार्गवाले इन्द्र, तुम रक्षा के साथ हमारे अभिमुख आगमन करो। हे विख्यात इन्द्र, प्रजाओं के मध्य में हमें प्रख्यात करो।

॥ इतिचतुर्थस्यसप्तमेतृतीयोवर्गः ॥ ३ ॥

अपूर्व्येतिपंचर्चंनवमंसूक्तं त्रैष्टुभमैन्द्रं द्वितीयेछान्दोमिकेहनिनिष्केवल्येएतत्सूक्तं सूत्रितं च—अपूर्व्यापुरुतमानितांसुतेकीर्तिमिति । महाव्रतेपिनिष्केवल्येअस्यसूक्तस्यविनियोगउक्तः।

अपूर्व्यापुरुतमान्यस्मैमहेवीरायतवसेतुराय ।
विरप्शिनेवज्रिणेशंतमानिवचांस्यासास्थविरायतक्षम् ॥ १ ॥

अपूर्व्या । पुरुऽतमानि । अस्मै । महे । वीराय । तवसे । तुराय ।
विऽरप्शिने । वज्रिणे । शम्ऽतमानि । वचांसि । आसा ।
स्थविराय । तक्षम् ॥ १ ॥

अपूर्व्या अपूर्व्याणि पूर्वैरकृतानि नूतनानि पुरुतमानि बहुतमानि शंतमानि सुखकृत्तमानि वचांसि स्तुतिरूपाणिवाक्यानि आसा आस्येन अस्मै इन्द्राय तक्षमतक्षंकरोमि कीदृशाय महे महते वीराय विविधशत्रूणांमारयित्रे तवसे तवस्विनेबलवते तुराय त्वरमाणाय विरप्शिने विशेषेणस्तुत्याय वज्रिणे वज्रवते स्थविराय प्रवृद्धाय ॥ १ ॥

१. हमने महान्, विविध शत्रुओं को मारनेवाले, बलवान् वेगसम्पन्न विशेष प्रकार से स्तुतियोग्य वज्रधारी और प्रवृद्ध इन्द्र के लिए, मुख-द्वारा, अपूर्व, सुविस्तीर्ण और सुखदायक स्तोत्रों को पढ़ा है।

समातरासूर्येणाकवीनामवासयद्रुजदद्रिंगृणानः ।
स्वाधीभिर्ऋक्वभिर्वावशानउदुस्त्रियाणामसृजन्निदानम् ॥ २ ॥

सः । मातरा । सूर्येण । कवीनाम् । अवासयत् । रुजत् ।
अद्रिम् । गृणानः । सुऽआधीभिः । ऋक्वऽभिः । वावशानः ।
उत् । उस्त्रियाणाम् । असृजत् । निऽदानम् ॥ २ ॥

सइन्द्रः मातरा मातरौ दिवंचपृथिवींच कवीनां क्रान्तदर्शिनामंगिरसामर्थाय सूर्येण अवासयत् प्राकाशयत् किंकुर्वन् अद्रिं गवामदर्शनाय बलेनस्थापितंपर्वतं रुजद्भंजन् यद्वा कवीनामंगिरसामितितृतीयार्थेषष्ठी अंगिरोभिर्गृणानःस्तूयमानइतिसंबन्धः अपिच स्वाधीभिः शोभनध्यानैर्ऋक्वभिःस्तोतृभिः अंगिरोभिर्वावशानःपुनःपुनःकाम्यमानःसन् उस्त्रियाणां बलस्यभृत्यैःपणिभिरपहृतानांगवां निदानं बंधनं उदसृजत् अमोचयत् ॥ २ ॥

२. इन्द्र ने मेधावी अङ्गिराओं के लिए जननीस्वरूप स्वर्ग और पृथिवी को सूर्य-द्वारा प्रकाशित किया था एवम् अङ्गिराओं-द्वारा स्तूयमान होकर पर्वतों को चूर्ण किया था। इन्द्र ने शोभन ध्यानशील स्तोता अङ्गिराओं-द्वारा बारम्बार प्रार्थित होने पर धेनुओं के बन्धन को मुक्त किया था।

सवह्निभिर्ऋक्वभिर्गोषुशश्वन्मितज्ञुभिः पुरुकृत्वाजिगाय ।
पुरःपुरोहासखिभिःसखीयन्दृह्लारुरोजकविभिःकविःसन् ॥ ३ ॥

सः । वह्निऽभिः । ऋक्वऽभिः । गोषु । शश्वत् । मितज्ञुऽभिः ।
पुरुऽकृत्वा । जिगाय । पुरः । पुरःऽहा । सखिऽभिः । सखिऽयन् ।
दृह्लाः । रुरोज । कविऽभिः । कविः । सन् ॥ ३ ॥

पुरुकृत्वा बहुकर्मकृत् सइन्द्रः वह्निभिः हविषांवोढृभिः ऋक्वभिः स्तोतृभिः शश्वत् सर्वदा मितज्ञुभिः संकुचितजानुभिः अंगिरोभिःसह गोषुनिमित्तभूतेषु जिगाय असुरान्जितवान् जित्वाच पुरोहा पुराणांहन्ता सइन्द्रः सखिभिः समानख्यानैः कविभिःक्रान्तप्रज्ञैरंगिरोभिःसह सखीयन् सखित्वमात्मनइच्छन् कविःसन् स्वयमपिक्रान्तप्रज्ञोभवन् दृह्ला स्थिरा पुरः आसुरीःपुरीरुरोजबभंज ॥ ३ ॥

३, बहुत कर्म करनेवाले इन्द्र ने हवन करनेवाले, स्तुति करनेवाले और संकुचित-जानु अङ्गिराओं के साथ मिलित होकर धेनुओं के लिए शत्रुओं को पराजित किया था। मित्रभूत, मेधावी अङ्गिराओं के साथ मित्राभिलाषी और दूरदर्शी होकर इन्द्र ने असुरपुरियों को भग्न किया था।

सनीव्याभिर्जरितारमच्छामहोवाजेभिर्महद्भिश्चशुष्मैः ।
पुरुवीराभिर्वृषभक्षितीनामागिर्वणःसुवितायप्रयाहि ॥ ४ ॥

सः । नीव्याभिः । जरितारम् । अच्छ । महः । वाजेभिः ।
महत्ऽभिः । च । शुष्मैः । पुरुऽवीराभिः । वृषभ । क्षितीनाम् ।
आ । गिर्वणः । सुवितायं । प्र । याहि ॥ ४ ॥

हेवृषभ कामानांवर्षक हेगिर्वणः गिरास्तुत्यासंभजनीयेन्द्र सत्वं महोमहद्भिः वाजेभिर्वाजैरन्नैः महद्भिःशुष्मैर्बलैश्चसह क्षितीनां प्रजानांमध्ये जरितारं स्तोतारं अच्छाभिमुख्येन नीव्याभिः नव्याभिर्नवतराभिः पुरुवीराभिः पुरूणां बहूनांवीरयित्रीभिर्वडवाभिः आप्रयाहि आगच्छ किमर्थं सुविताय शोभनाय सुखप्राप्त्यर्थंमित्यर्थः ॥ ४ ॥

४. हे कामनाओं के पूरक, हे स्तुति द्वारा संभजनीय इन्द्र, तुम महान् अन्न, महान् बल और बहुत वत्सवती युवती वड़वा के साथ अपने स्तुतिकर्त्ता को मनुष्यों के मध्य में सुख करने के लिए उनके अभिमुख आगमन करते हो।

ससर्गेणशवसातक्तोअत्यैरपइन्द्रोदक्षिणतस्तुराषाट् ।
इत्थासृजानाअनपावृदर्थंदिवेदिवेविविषुरप्रमृष्यम् ॥ ५ ॥ ५ ॥

सः । सऽगैंण । शवसा । तक्तः । अत्यैः । अपः । इन्द्रः । दक्षिणतः ।
तुराषाट् । इत्था । सृजानाः । अनपऽवृत् । अर्थम् । दिवेऽदिवे ।
विविषुः । अप्रऽमृष्यम् ॥ ५ ॥ ४ ॥

तुराषाट् तुराणांहिंसकानांसोढाअभिभविता सइन्द्रः सगैंण सर्वदोद्युक्तेन शवसा बलेन अत्यैरश्वैः सततगामिभिस्तेजोभिर्वा तक्तः संगतःसन् दक्षिणतः दक्षिणायने अपउदकानि विसृजतीतिशेषः इत्था इत्थमनेनप्रकारेणसृजानाः सृज्यमानास्ताआपः अर्थं गंतव्यं अप्रमृष्यमन्यैरक्षोभ्यं समुद्रं दिवेदिवे प्रतिदिनं अनपावृत् अपावर्तनंपुनरागमनंयथानभवतितथाविविषुः व्याप्नुवन्ति अर्तेस्थन्प्रत्ययान्तस्यरूपमर्थमिति ॥ ५ ॥

५. हिंसकों के अभिभवकर्त्ता इन्द्र सदा उद्यत बल-द्वारा सतत गमनशील तेज से युक्त होकर सूर्य के दक्षिणायन होने पर जल को मुक्त करते हैं। इस प्रकार विसृष्ट वारिराशि उस क्षोभशून्य समुद्र में प्रतिदिन पतित होती है, जिससे वारिराशि का पुनः प्रत्यावर्तन नहीं होता।

॥ इतिचतुर्थस्यसप्तमेचतुर्थोवर्गः ॥ ४ ॥

यओजिष्ठइतिपंचर्चंदशमंसूक्तं शुनहोत्रस्यार्षंत्रैष्टुभमैन्द्रं अनुक्रम्यतेच—यओजिष्ठःशुनहोत्रस्त्विति । महाव्रतेपिनिष्केवल्यउक्तोविनियोगः ।

यओजिष्ठइन्द्रतंसुनोदामदोवृषन्त्स्वभिष्टिर्दास्वान् ।
सौवश्व्यंयोवनवत्स्वश्वोवृत्रासमत्सुसासहदमित्रान् ॥ १ ॥

यः । ओजिष्ठः । इन्द्र । तम् । सु । नः । दाः । मदः । वृषन् ।
सुऽअभिष्टिः । दास्वान् । सौवश्व्यम् । यः । वनवत् । सुऽअश्वः ।
वृत्रा । समत्ऽसु । ससहत् । अमित्रान् ॥ १ ॥

हेवृषन् कामानां वर्षयितरिंद्र त्वंयःपुत्रः ओजिष्ठओजस्वितमोबलवत्तमः मदः तवमादयिता स्तुतिभिःस्तोतेत्यर्थः स्वभिष्टिः शोभनाभ्येषणः दास्वान् हविषांदानं दाः तद्वान् एवंगुणविशिष्टंतंपुत्रं नोस्मभ्यं सु सुष्ठु दाः देहि यःपुत्रः स्वश्वःसन्समत्सु संग्रामेषु सौवश्व्यं शोभनाश्वानांसमूहं वनवत् हिंस्यात् तथा वृत्रा वृत्रान् वारयितॄन् अमित्रान् शत्रूंश्च सासहत् अत्यर्थमभिभवेत् तंदाइत्यन्वयः ॥ १ ॥

१. हे अभीष्टवर्षक इन्द्र, तुम हम लोगों को बलवत्तम, स्तुतियों-द्वारा स्तवनकर्त्ता, शोभनयज्ञ-कर्त्ता और हव्य प्रदान करनेवाला एक पुत्र प्रदान करो। वह पुत्र उत्कृष्ट अश्व पर आरूढ़ होकर संगाम में शोभन अश्वों और प्रतिकूलताचारी शत्रुओं को पराभूत करे ।

त्वांही॑ इ॑न्द्राव॑से॒विवा॑चो॒हव॑न्ते॒चर्ष॒णय॒ः शूर॑सातौ ।
त्वंविप्रे॑भि॒र्विप॒णीँर॑शाय॒स्त्वोत॒इत्सनि॑ता॒वाज॒मर्वा॑ ॥ २ ॥

त्वाम् । हि । इ॒न्द्र॒ । अव॑से । वि॒ऽवा॑चः । हव॑न्ते । च॒र्ष॒णय॑ः ।
शूर॑ऽसातौ । त्वम् । विप्रे॑भिः । वि । प॒णीन् । अ॒शा॒य॒ः । त्वाऽऊ॑तः ।
इत् । सनि॑ता । वाज॑म् । अर्वा॑ ॥ २ ॥

हेइन्द्र त्वांहि त्वामेव विवाचः विविधाःस्तुतिरूपावाचोयेषांतादृशाश्चर्षणयोमनुष्याः शूरसातौ शूरैःसंभजनीयेसंग्रामे अवसे रक्षणार्थं हवन्ते आह्वयन्ति किंच त्वं विप्रेभिः विप्रैर्मेधाविभिरंगिरोभिःसार्धं पणीन् बलस्यानुचराः असुराः पणयः तान्व्यशायः विशेषेणअशाययः हतवानित्यर्थः अतः त्वोतइव त्वयाऊतोरक्षिताएव सनिता संभक्ता पुरुषः वाजमन्नं अर्वा अभिगन्ता भवति ॥ २ ॥

२. हे इन्द्र, विविध स्तुतिरूप वचनवाले मनुष्यगण, युद्ध में रक्षा के लिए, तुम्हारा आह्वान करते हैं। तुमने मेधावी अङ्गिराओं के साथ पणियों का संहार किया था। तुम्हारा संभजन करनेवाला पुरुष तुम्हारे द्वारा रक्षित होकर अन्न-लाभ करता है।

त्वंताँइ॑न्द्रो॒भयाँ॑अ॒मित्रा॒न्दासा॑वृ॒त्राण्यार्या॑चशूर ।
वधी॒र्वने॑वसु॒धिते॑भि॒रत्कै॒रापृ॒त्सुद॑र्षिनृ॒णांनृ॑तम ॥ ३ ॥

त्वम् । तान् । इ॒न्द्र॒ । उ॒भया॑न् । अ॒मित्रा॑न् । दासा॑ । वृ॒त्राणि॑ ।
आर्या॑ । च॒ । शू॒र॒ । वधीः॑ । वना॑ऽइव । सु॒ऽधिते॑भिः । अत्कैः॑ । आ ।
पृ॒त्ऽसु । द॒र्षि॒ । नृ॒णाम् । नृ॒ऽत॒म॒ ॥ ३ ॥

हेइन्द्र त्वं तानुभयान् उभयविधान् अमित्रान् शत्रून् वधीः अहिंसीः केते उभयविधाः दासाउपक्षपयितॄन् कर्मविरोधिनोबलप्रभृतीनसुरान् सुपांसुलुगितिशसआकारः आर्या आर्याणि कर्मानुष्ठातृत्वेनश्रेष्ठानि वृत्राणि आवरकाणि विश्वरूपादीनिच तानुभयविधान् हेशूर त्वं हतवानित्यर्थः नृणां नेतॄणांमध्ये नृतमः अतिशयेननेतः हेइन्द्र पृत्सु संग्रामेषु सुधितेभिः सुष्ठुनिहितैः अत्कैः आत्मीयैरायुधैः आदर्षि अन्यानपिशत्रूनादृणासि विदारयसि तत्रदृष्टान्तः—वनेव वनानीव यथा वृक्षजातानि कुठारादिभिः छिनत्ति तद्वत् ॥ ३ ॥

३. हे शूर इन्द्र, तुम दस्युओं अथवा आर्यों दोनों प्रकार के शत्रुओं का संहार करते हो। हे नेतृश्रेष्ठ, जैसे काष्ठछेदक कुठारादि से वृक्षों को छिन्न कर देता है उसी प्रकार तुम संग्राम में भली भांति प्रयुक्त अस्त्रोंद्वारा शत्रुओं का विदारण करते हो।

सत्वंनइन्द्राकवाभिरूतीसखाविश्वायुरविताबृधेभूः।
स्वर्षातायद्ध्वयामसित्वायुध्यन्तोनेमधितापृत्सुशूर ॥ ४ ॥

सः। त्वम्। नः। इन्द्र। अकवाभिः। ऊती। सखा। विश्वऽआयुः।
अविता। वृधे। भूः। स्वःऽसाता। यत्। ह्वयामसि। त्वा। युध्यन्तः।
नेमऽधिता। पृत्ऽसु। शूर ॥ ४ ॥

हेइन्द्र सतादृशस्त्वं अकवाभिरकुत्सिताभिः ऊती ऊतिभिः रक्षाभिः नोस्माकं वृधे वर्धनाय अविता रक्षिताभूर्भव तथा विश्वायुः सर्वतोगन्तात्वं अस्माकं सखाचभव नेमधिता नेमशब्दोर्धवाची उक्तंचःवानेमइत्यर्धस्येति नेमे अर्धाः कतिपयाःपुरुषाः धीयन्तेएष्वितिनेमधितयःसंग्रामाः तादृशेषुपृत्सुपृतनासुसंग्रामेषु युध्यन्तोयुद्धंकुर्वन्तोवयं स्वर्षाता स्वः सुष्ठु अरणीयंधनंतस्यसंभजनार्थं हेशूर त्वां यद्यदाह्वयामसि आह्वयामः तदानीं त्वं अवितासखाचभवेत्यर्थः ॥ ४ ॥

४. हे इन्द्र, तुम सर्वत्र गमन करनेवाले हो। तुम श्रेष्ठ रक्षा के द्वारा हम लोगों की समृद्धि के वर्द्धक तथा मित्र होओ। कुछ पुरुषों से युक्त संग्राम में युद्ध करनेवाले हम लोग धन-लाभ के लिए तुम्हारा आह्वान करते हैं।

नूनंनइन्द्रापरायचस्याभवामृळीकउतनोअभिष्टौ।
इत्थागृणन्तोमहिनस्यशर्मन्दिविष्यामपार्येगोषतमाः ॥ ५ ॥ ५ ॥

नूनम्। नः। इन्द्र। अपराय। च। स्याः। भव। मृळीकः।
उत। नः। अभिष्टौ। इत्था। गृणन्तः। महिनस्य। शर्मन्। दिवि।
स्याम। पार्ये। गोसऽतमाः ॥ ५ ॥ ५ ॥

हेइन्द्र त्वं नूनं अद्य नोस्माकं स्याः अस्मदीयोभव अपरायच अपरस्मिन्नन्यस्मिन्नपि काले अस्मदीयोभव उत अपिच त्वं नोस्माकं अभिष्टावभिगमनेसति मृळीकः सुखयिताभव तथा इत्थमनेनप्रकारेण गृणन्तःस्तुवन्तोवयं गोषतमाः गवांसंभक्तृतमाः सन्तः महिनस्य महतस्तवसंबन्धिनि दिवि द्योतमाने पार्येदुःखस्यपारके शर्मन् शर्मणि सुखे स्याम वर्तमानाभवेम ॥ ५ ॥

५. हे इन्द्र, इस समय में तथा दूसरे समय में तुम निश्चय ही हमारे होओ। हम लोगों की अवस्था के अनुसार सुख-प्रदाता होओ। इस प्रकार से स्तुति करनेवाले हम लोग गौओं के संभजन करनेवाले होकर तुम्हारे द्युतिमान् सुख में अवस्थान करें। तुम महान् हो।

॥ इतिचतुर्थस्यसप्तमेपंचमोवर्गः ॥ ५ ॥

संचत्वेजग्मुरितिपंचर्चमेकादशंसूक्तं शुनहोत्रस्यार्षमैन्द्रंत्रैष्टुभं संचत्वइत्यनुक्रान्तं । तृतीयेछान्दोमिकेहनिइदमादिकेद्वेसूक्ते सूत्रितंच—संचत्वेजग्मुरितिसूक्तेइति । महाव्रतेपिनिष्केवल्ये उक्तोविनियोगः ।

तत्रप्रथमा—

संचत्वेजग्मुर्गिरंइन्द्रपूर्वीर्विचत्वद्यन्तिविभ्वोमनीषाः ।
पुरानूनंचस्तुतयऋषीणांपस्पृध्रइन्द्रेअध्युक्थार्का ॥ १ ॥

सम् । च । त्वे इति । जग्मुः । गिरः । इन्द्र । पूर्वीः । वि । च । त्वत् । यन्ति । विऽभ्वः । मनीषाः । पुरा । नूनम् । च । स्तुतयः । ऋषीणाम् । पस्पृध्रे । इन्द्रे । अधि । उक्थऽअर्का ॥ १ ॥

हेइन्द्र त्वे त्वयि पूर्वीर्बह्वीगिरः स्तुतयश्च संजग्मुः संगच्छन्ते त्वत् त्वत्तः विभ्वोविभवोविस्तृताःमनीषाः स्तोतॄणांमतयश्च वियन्ति विविधंनिर्गच्छंति शेषःपरोक्षकृतः पुरा पूर्वस्मिन्काले नूनं अद्यच ऋषीणां अतीन्द्रियार्थदर्शिनांभरद्वाजादीनांस्तुतयः स्तोत्राणि इन्द्रे अधि अधिकंपस्पृध्रे अस्पर्धन्त अहमहमिकयाइन्द्रस्यस्तवनेत्वरिताबभूवुरित्यर्थः तथा उक्थार्का उक्थंशस्त्रंतद्रूपाण्यर्काणिअर्चनसाधनानिस्तोत्राणिच पस्पृध्रे अस्पर्धन्त ॥ १ ॥

१. हे इन्द्र, तुममें असंख्य स्तोत्र संगत होते हैं। तुमसे स्तोताओं की पर्याप्त प्रशंसा निर्गत होती है। पूर्व काल में और इस समय में भी ऋषियों को स्तोत्र, उपासना और मन्त्र इन्द्र की पूजा के विषय में परस्पर स्पर्द्धा करते हैं।

पुरुहूतोयःपुरुगूर्तऋभ्वाँएकःपुरुप्रशस्तोअस्तियज्ञैः ।
रथोनमहेशवसेयुजानो३ऽस्माभिरिन्द्रोअनुमाद्योभूत् ॥ २ ॥

पुरुऽहूतः । यः । पुरुऽगूर्तः । ऋभ्वा । एकः । पुरुऽप्रशस्तः । अस्ति । यज्ञैः । रथः । न । महे । शवसे । युजानः । अस्माभिः । इन्द्रः । अनुऽमाद्यः । भूत् ॥ २ ॥

पुरुहूतः बहुभिराहूतः पुरुगूर्तःबहुभिरुद्यमितः ऋभ्वा महान् एकः प्रधानभूतः एवंगुणविशिष्टोयइन्द्रः यज्ञैः यष्टृभिःपुरुषैः यजमानसाधनैःस्तोत्रैर्वा पुरुप्रशस्तोस्ति बहुधाप्रशस्त-

स्तुतोभवति सइन्द्रः रथोन रथइव महे महते शवसे बलायतदर्थं युजानोस्मत्स्तुतिभिःयुज्य-मानःसन् अस्माभिःस्तोतृभिः अनुमाद्योभूव सर्वदास्तुत्योभवतु ॥ २ ॥

२. हम लोग सर्वदा इन्द्र को प्रसन्न करते हैं। वे बहुजनाहूत, बहुतों के द्वारा प्रबोधित, महान्, अद्वितीय एवम् यजमानों-द्वारा भली भाँति स्तुत हैं। हम लोग महान् लाभ करने के लिए रथ की तरह इन्द्र के प्रति अनुरक्त होकर सर्वदा उनका स्तवन करें।

नयंहिंसंन्तिधीतयोनवाणीरिन्द्रंनक्षन्तीदभिवर्धयंन्तीः ।
यदिस्तोतारःशतंयत्सहस्रंगृणन्तिगिर्वणसंशंतदस्मै ॥ ३ ॥

न । यम् । हिंसन्ति । धीतयः । न । वाणीः । इन्द्रम् । नक्षन्ति ।
इत् । अभि । वर्धयन्तीः । यदि । स्तोतारः । शतम् । यत् । सहस्रम् ।
गृणन्ति । गिर्वणसम् । शम् । तत् । अस्मै ॥ ३ ॥

यंइन्द्रं धीतयः कर्माणि परिचरणानि नहिंसन्ति नबाधन्ते वाणीर्वाण्यः स्तुतयश्च यन्नबाधन्ते दातुमसमर्थःपुरुषः अन्यकृतैःपरिचरणैःस्तुतिभिश्च भृशंखिद्यते अस्यचेन्द्रस्य बहुधनत्वाद्दातृत्वाच्च तस्मिन्प्रयुज्यमानानिपरिचरणानिस्तोत्राणिच बाधहेतवोनाभूवन्नित्यर्थः किंतर्हीत्यतआह तमिन्द्रं वर्धयन्तीः वर्धयंत्यःअभिनक्षन्तिइत् अभिगच्छन्तिएव अपिच गिर्वणसंगिरांसंभक्तारमिन्द्रं शतं शतसंख्याकाःस्तोतारोयदि गृणन्ति स्तुवन्ति यत् यदिच सहस्रं सहस्रसंख्याकाःस्तोतारः स्तुवन्ति तत्सर्वंस्तोत्रं अस्माइन्द्राय शं सुखकरंभवति ॥ ३ ॥

३. समृद्धि-विधायक स्तोत्र इन्द्र के अभिमुख गमन करे। कर्म और स्तुतियाँ इन्द्र को बाधित नहीं करतीं। शत सहस्र-स्तव-कारी स्तुतिभाजन इन्द्र की स्तुति करके प्रीति उत्पन्न करते हैं।

अस्माएतद्दिव्य१र्चेवंमासामिमिक्षइन्द्रेन्यंयामिसोमः ।
जनंनधन्वंन्नभिसंयदापःसत्रावांवृधुर्हवनानियज्ञैः ॥ ४ ॥

अस्मै । एतत् । दिवि । अर्चाऽइव । मासा । मिमिक्षः । इन्द्रे । नि ।
अयामि । सोमः । जनम् । न । धन्वन् । अभि । सम् । यत् । आपः ।
सत्रा । वावृधुः । हवनानि । यज्ञैः ॥ ४ ॥

एतद् एतस्मिन् दिवि दिवसे सौत्येहनि अर्चेव अर्चनसाधनेन स्तोत्रेणेव मासा मानेन इन्द्रा यत्वावृत्रघ्नइत्यादिमंत्रसाध्येनयुक्तः मिमिक्षः वसतीवर्यैकधनाख्याभिरद्भिरासिक्तःसोमः अस्मै विभक्तिव्यत्ययः अस्मिन्निन्द्रे न्ययामि नियतोभूत् यद्वा अस्मैइन्द्राय एतत्स्तोत्रंप्रवाणीतिशेषः दिविद्युलोके अर्चेव अर्कःसूर्यइव मासा लुप्तोपममेतत् माति परिच्छिनत्तीतिमास-

श्चन्द्रमाः सइव मिमिक्षोः वृष्ट्युदकानांसेक्ता यइन्द्रोवर्तते यस्मिन्निन्द्रे अभिषुतः सोमेनिय-म्यतेस्म किंच तमिन्द्रं यज्ञैर्यजनसाधनैः पुरोडाशादिभिर्हविर्भिःसार्धं हवनानि स्तोत्राणि स-त्रासह वावृधुरवर्धयन् तत्रदृष्टान्तः—धन्वन् धन्वनि मरुदेशे अभि अभिमुखं संयत् सम्यग्गत्यो-गच्छंत्यआपः जनंन प्राणिनमिव यथा मरुदेशे उपलभ्यमानाआपःप्राणिनंवर्धयन्तितद्वत्॥४॥

४. इस यज्ञ-दिन में स्तोत्र की तरह पूजा के साथ प्रवृत्त होने के लिए इन्द्र के निमित्त मिश्रित सोमरस प्रस्तुत हुआ है। मरुदेश के अभिमुख गमन करनेवाला जल जिस प्रकार प्राणियों का पोषण करता है, उसी प्रकार हव्य के साथ स्तोत्र उन्हें वर्द्धित करें।

अस्माएतन्मह्यांङ्गूषमस्माइन्द्रायस्तोत्रंमतिभिरवाचि।
असद्यथामहतिवृत्रतूर्यइन्द्रोविश्वायुरविताबृधश्च॥ ५॥ ६॥

अस्मै। एतत्। महि। आङ्गूषम्। अस्मै। इन्द्राय। स्तोत्रम्। मतिऽभिः। अवाचि। असत्। यथा। महति। वृत्रऽतूर्ये। इन्द्रः। विश्वऽआयुः। अविता। वृधः। च॥ ५॥ ६॥

अस्मैइन्द्राय महि महत् एतत् आंगूषं स्तोत्रं मतिभिः स्तोतृभिरवाचि उक्तमभूत् अ-स्मैइंद्राय स्तोत्रमितिपुनरुक्तिरादरार्था विश्वायुः सर्वत्रगन्ता सइन्द्रः महति प्रभूते वृत्रतूर्ये सं-ग्रामे यथा येनप्रकारेण अस्माकं अविता रक्षकः वृधोवर्धयिताच असद्भवेत् तथा अवाची-त्यन्वयः॥ ५॥

५. सर्वत्र गन्ता इन्द्र महान् संग्राम में हम लोगों के रक्षक और समृद्धिविधायक जिससे हों; अतः स्तोताओं का स्तोत्र आग्रह के साथ इन्द्र के प्रति उक्त होता है॥

कदाभुवन्निति पंचर्चंद्वादशंसूक्तं नरस्यार्षंत्रैष्टुभमैन्द्रं तथाचानुक्रान्तं—कदानरस्त्विति। तृतीयेछन्दोमेमहाव्रतेचर्निष्केवल्येउक्तोविनियोगः।

तत्रप्रथमा—

कदाभुवन्रथक्षयाणिब्रह्मकदास्तोत्रेसहस्रपोष्यंदाः।
कदास्तोमंवासयोस्यरायाकदाधियःकरसिवाजरत्नाः॥ १॥

कदा। भुवन्। रथऽक्षयाणि। ब्रह्म। कदा। स्तोत्रे। सहस्रऽपोष्यम्। दाः। कदा। स्तोमम्। वासयः। अस्य। राया। कदा। धियः। करसि। वाजऽरत्नाः॥ १॥

हेइन्द्र ब्रह्मणि ब्रह्माणि स्तोत्राण्यस्मदीयानि रथक्षयाणि रथनिवासानि कदाकस्मिन् काले भुवन् भवेयुः रथेवस्थितं त्वां कदाप्राप्नुवन्तीत्यर्थः कदा कस्मिन्काले स्तोत्रे स्तुवते मह्यं सहस्रपोष्यं सहस्रसंख्याकपुरुषपोषकं गोसमूहं पुत्रं वादाः दद्याः कदाच अस्यममस्तोतुः स्तोमं स्तोत्रं राया धनेन वासयः धियः कर्माणिचाग्निहोत्रादीनि वाजरत्नाः वाजैरन्नैः रमणीयाः कदाकस्मिन्काले करसि कुर्याः एवंस्तोता फलस्यविलंबमसहमानः इन्द्रमनयापृष्टवान् ॥ १ ॥

१. हे इन्द्र, तुम रथाधिरूढ़ के निकट हमारे स्तोत्र कब उपस्थित होंगे? कब तुम मुझ स्तोत्र करनेवाले को सहस्र पुरुषों के गो-समूह या पुत्र प्रदान करोगे? कब तुम मुझ स्तोता के स्तोत्र को धन-द्वारा पुरस्कृत करोगे? कब तुम अग्नि-होत्रादि कार्य को अन्न से रमणीय बनाओगे?

कर्हिंस्वित्तदिन्द्रयन्नृभिर्नॄन्वीरैर्वीरान्नीळयासेजयाजीन् ।
त्रिधातुगाअधिजयासिगोष्विन्द्रद्युम्नंस्वर्वद्धेह्यस्मे ॥ २ ॥

कर्हि । स्वित् । तत् । इन्द्र । यत् । नृऽभिः । नॄन् । वीरैः । वीरान् । नीळयासे । जय । आजीन् । त्रिऽधातु । गाः । अधि । जयासि । गोषु । इन्द्र । द्युम्नम् । स्वःऽवत् । धेहि । अस्मे इति ॥ २ ॥

फलस्यविलंबमसहमानऋषिः अनयापीन्द्रंपृच्छति हेइन्द्र कर्हिस्वित् कदाखलु तद्भवेत् नृभिरस्मदीयैःपुरुषैः नॄन् शत्रुपुरुषान् तथा वीरैरस्मदीयैःपुत्रैः वीरान्शत्रुपुत्रांश्च यन्नीलयासेत्वं संश्लेषयेः संयोजयेः नीलयतिःसंश्लेषणकर्मा ईदृशं युद्धेयत्संश्लेषणंतत्कदाभवेदितिवितर्कः अपिचास्मदर्थं त्वं आजीन् संग्रामान् कदा जय जयेः कदाच गोष्वभिगन्तृषुशत्रुषु विद्यमानाः त्रिधातु त्रिधातूनां क्षीरदधिघृतानांत्रयाणां धारयित्रीर्गाः अधिजयासि अधिकंजयेः हेइन्द्र त्वं स्वर्वत् व्याप्तिमत् द्युम्नं धनं अस्मे अस्मासु कदा धेहि धारयेः ॥ २ ॥

२. हे इन्द्र, कब तुम हमारे पुरुषों के साथ शत्रुओं के पुरुषों को तथा हमारे पुत्रों के साथ शत्रुओं के पुत्रों को मिलित कराओगे? (युद्ध में इस तरह का संश्लेषण कब होगा?) हमारे लिए तुम कब संग्राम में जय प्राप्त करोगे? कब तुम गमनशील शत्रुओं से क्षीर, दधि और घृतादि धारण करनेवाली गौओं को जीतोगे? हे इन्द्र, कब तुम हम लोगों को व्याप्त धन प्रदान करोगे?

कर्हिंस्वित्तदिन्द्रयज्जरित्रेविश्वप्सुब्रह्मकृणवःशविष्ठ ।
कदाधियोननियुतोयुवासेकदागोमघाहवनानिगच्छाः ॥ ३ ॥

कर्हि । स्वित् । तत् । इन्द्र । यत् । जरित्रे । विश्वऽप्सु । ब्रह्म । कृणवः । शविष्ठ । कदा । धियः । न । निऽयुतः । युवासे । कदा । गोऽमघा । हवनानि । गच्छाः ॥ ३ ॥

अनयापिर्कतिचित्प्रश्नाःक्रियन्ते हेइन्द्र कर्हिस्वित् कदाखलु तद्भवेत् हेशविष्ठ बलवत्तमेन्द्र त्वं जरित्रे स्तोत्रे विश्वप्सु बहुविधरूपं ब्रह्मान्नं कृणवः करोषीतियत् तत्कदाभवेदितिवितर्कः कदाच धियः कर्माणि नेतिसमुच्चये नियुतः स्तुतीश्च युवासे आत्मनियोजयेः कदाच त्वं गोमघाः गोमघानि गवांदातॄणि मंहतेर्दानार्थस्यरूपमुत्तरपदं हवनानि स्तोत्राणि गच्छाः अभिगच्छेः ॥ ३ ॥

३. हे बलवत्तम इन्द्र, कब तुम स्तोता को विविध अन्न प्रदान करोगे? कब तुम अपने में यज्ञ और स्तोत्र को युक्त करोगे? कब तुम स्तोत्रों को गोदायक करोगे?

**सगोमघाजरित्रेअश्वश्चन्द्रावाजश्रवसोअधिधेहिपृक्षः ।**
**पीपिहीषःसुदुघामिन्द्रधेनुंभरद्वाजेषुसुरुचोरुरुच्याः ॥ ४ ॥**

सः । गोऽमघाः । जरित्रे । अश्वऽचन्द्राः । वाजऽश्रवसः । अधि । धेहि । पृक्षः । पीपिहि । इषः । सुऽदुघाम् । इन्द्र । धेनुम् । भरत्ऽवाजेषु । सुऽरुचः । रुरुच्याः ॥ ४ ॥

हेइन्द्र सत्वं जरित्रे स्तोत्रे गोमघाः गवांदात्रीः अश्वश्चन्द्राः अश्वैराह्लादयन्तीः वाजश्रवसः वाजैर्बलैःप्रसिद्धाः एवंभूताः पृक्षोन्नानि भरद्वाजेषु भरद्वाजपुत्रेष्वस्मासु अधिधेहि धारय तथा इषस्तान्यन्नानि सुदुघां शोभनदोग्ध्रीं धेनुं गांच हेइन्द्र पीपिहि प्यायय अपिच ताइषोगौश्च सुरुचः शोभनदीप्तयोयथाभवन्तितथा त्वं रुरुच्याः दीपयेः शोभनदीप्तियुक्ताश्चताःसन्त्वित्यर्थः ॥ ४ ॥

४. हे इन्द्र, तुम गोदायक, अश्वों-द्वारा आह्लादित करनेवाला और बल-द्वारा प्रसिद्ध अन्न हम स्तुति करनेवाले भरद्वाज-पुत्रों को प्रदान करो। तुम अन्नों को तथा सुगमता से दोहन योग्य गौओं को परिपुष्ट करो। वे गौएँ जिससे शोभन दीप्तिवाली हों, वैसा तुम करो।

अथपंचमी—

**तमानूनंवृजनमन्यथाचिच्छूरोयच्छक्रविदुरोगृणीषे ।**
**मानिररंशुक्रदुघस्यधेनोराङ्गिरसान्ब्रह्मणाविप्रजिन्व ॥ ५ ॥ ७ ॥**

तम् । आ । नूनम् । वृजनम् । अन्यथा । चित् । शूरः । यत् । शक्र । वि । दुरः । गृणीषे । मा । निः । अरम् । शुक्रऽदुघस्य । धेनोः । आङ्गिरसान् । ब्रह्मणा । विप्र । जिन्व ॥ ५ ॥ ७ ॥

हेइन्द्र त्वं नूनमद्यतनं वृजनं बाधकमस्मदीयंशत्रुं अन्यथाचित् अन्येनैवप्रकारेण योजय येनप्रकारेणसर्वेजीवन्तितद्विलक्षणंप्रकारंमरणाख्यंप्रापयेत्यर्थः आकारःपूरकः हेशक्र सर्वकार्येषुशक्तेन्द्र शूरः शौर्योपेतः विदुरः विशेषेणदारयिताशत्रूणां यद्वा दुरोद्वाराणिशत्रुसंबंधीनिविघटयंस्त्वं यत्यस्माद्गृणीषेस्माभिःस्तूयसे तस्मात्कारणात् शुक्रदुघस्य शुक्राणांनिर्मलानांदोग्धुरिन्द्रस्य धेनोर्वाचः स्तोत्रात् मानिररं मानिर्गच्छेयं यद्वा शुक्रस्य पयसोदोग्ध्याधेनोः त्वयादत्तायागोःसकाशात् मानिर्गच्छेयं अरमित्याख्यातंक्रगतावित्यस्यरूपं सा सर्वदास्मासुनिवसत्वित्यर्थः हेविप्र प्राज्ञेन्द्र आंगिरसान् अंगिरोगोत्रजानस्मान् ब्रह्मणान्नेन जिन्व प्रीणय ॥५॥

५. हे इन्द्र, तुम हमारे शत्रु को अन्य प्रकार से (जीवन के विपरीत अर्थात् मरणपथ से) युक्त करो। हे इन्द्र, तुम शक्तिमान्, वीर और शत्रु-निहन्ता हो, इस प्रकार से हम लोग तुम्हारा स्तवन करते हैं। हे इन्द्र, तुम विशुद्ध वस्तुओं के प्रदानकर्त्ता हो। हम तुम्हारे स्तोत्र के उच्चारण करने में विरत नहीं हों। हे प्राज्ञ इन्द्र, तुम अङ्गिराओं को अन्न-द्वारा तृप्त (प्रसन्न) करो।

सत्रामदासइतिपंचर्चंत्रयोदशंसूक्तं नरस्यार्षं त्रैष्टुभमैन्द्रं सत्रेत्यनुक्रान्तं पृष्ठ्यस्यपंचमेहनिनिष्केवल्यएतत्सूक्तंशस्यं सूत्रितंच—प्रेदंब्रह्मइन्द्रोमदायसत्रामदासइतिनिष्केवल्यमिति। विश्वजितिमाध्यंदिनसवने प्रशास्तुःशस्त्रे इदं सामसूक्ताख्यंशंसनीयं सूत्रितंच—सत्रामदासोयोजात्तएवा भूरेकइतिसामसूक्तानीति। महाव्रतेपिनिष्केवल्येउक्तोविनियोगः।

स॒त्राम॒दा॑स॒स्तव॑वि॒श्वज॑न्याः स॒त्रारा॒योध॒ये॑पार्थि॑वासः।
स॒त्रावाजा॑नामभवोविभ॒क्ताय॒द्दे॒वेषु॑धा॒रय॑थाअसु॒र्य॑म् ॥ १ ॥
स॒त्रा। मदा॑सः। तव॑। वि॒श्वऽज॑न्याः। स॒त्रा। राय॑ः। अध॑।
ये। पार्थि॑वासः। स॒त्रा। वाजा॑नाम्। अ॒भ॒वः। वि॒ऽभ॒क्ता।
यत्। दे॒वेषु॑। धा॒रय॑थाः। अ॒सु॒र्य॑म् ॥ १ ॥

हेइन्द्र तव त्वदीयामदासःसोमपानजनिताःमदाःसत्रा सत्यनामैतत् सत्यं विश्वजन्याः सर्वजनहिताभवन्ति यद्वा सत्रेतिमहन्नाम महान्तस्तवमदाइतियोज्यं अधापिच पार्थिवासः पृथिव्युपलक्षितेलोकत्रयेभवाःत्वदीयायेरायोधनसमूहाःसन्ति सत्रा तेसत्यं विश्वजनहिताभवन्तीत्यन्वयः किंच त्वं वाजानामन्नानां सत्रासत्यं विभक्ता दाता अभवोभवसि यद्वा सत्रा महतांवाजानामितियोज्यं यत् यस्मात् त्वं देवेषुमध्येअसुर्यंबलं धारयथाः अतःकारणात् त्वमेवंकरोषीत्यर्थः ॥ १ ॥

१. हे इन्द्र, तुम्हारा सोमपानजनित हर्ष निश्चय ही सब लोगों के लिए हितकर होता है। त्रिभुवन में अवस्थित तुम्हारा धन-समूह सचमुच सब लोगों के लिए हितकर है। तुम सचमुच अन्नदाता हो। देवों के मध्य में तुम बल धारण करते हो।

अनु॒प्रये॑जे॒जन॒ओजो॑अस्यस॒त्रादे॑धिरे॒अनु॑वी॒र्या॑य।
स्यू॒म॒गृभे॒दुध॑ये॒र्व॑ते॒च॒क्रतुं॑वृञ्ज॒न्त्यपि॑वृत्र॒हत्ये॑ ॥ २ ॥

अनु॑। प्र। ये॒जे॒। जनः॑। ओजः॑। अ॒स्य॒। स॒त्रा। दे॒धि॒रे॒।
अनु॑। वी॒र्या॑य। स्यू॒म॒ऽगृभे॑। दुध॑ये। अर्व॑ते। च॒। क्रतु॑म्।
वृ॒ञ्ज॒न्ति॒। अपि॑। वृ॒त्र॒ऽहत्ये॑ ॥ २ ॥

अस्येन्द्रस्य ओजोबलं जनोयजमानः अनुप्रयेजे सन्ततंप्रकर्षेणयजतेपूजयति अपिच तमिन्द्रं वीर्याय वीरकर्मकर्तुं सत्रा सत्यं अनुदधिरे पुरोदधिरे यजमानाः यद्वा सत्रा महान्तमिन्द्रमितियोज्यं अपिच स्यूमगृभे स्यूम्नः स्यूतान् अविच्छेदेनवर्तमानान् शत्रून् गृह्णते दुधये दुधिर्हिंसाकर्मा तेषांहिंसकाय अर्वते शत्रूणामभिगंत्रेच तस्माइन्द्राय क्रतुं कर्मपरिचरणात्मकं वृंजन्ति निष्पादयन्ति किमर्थं वृत्रहत्ये वृत्रस्यवारकस्यशत्रोर्हननिमित्तम् ॥ २ ॥

२. यजमान विशेष प्रकार से इन्द्र के बल की पूजा करते हैं। वीरत्व-प्राप्ति के लिए अथवा वीरकर्म करने के लिए यजमान इन्द्र को पुरोभाग में धारण करते हैं। अविच्छिन्न शत्रु-श्रेणी के निरोधकर्त्ता, हिंसाकारी और आक्रमणकारी इन्द्र वृत्र (शत्रु) का संहार करेंगे; अतः यजमान उनकी परिचर्या करते हैं।

तंस॒ध्रीची॑रू॒तयो॒वृष्ण्या॑नि॒पौंस्या॑नि॒नि॒युतः॑सश्चु॒रिन्द्र॑म्।
सम॒द्रंनसिन्ध॑वउ॒क्थशु॑ष्माउरु॒व्यच॑सं॒गिर॒आवि॑शन्ति ॥ ३ ॥

तम्। स॒ध्रीचीः॑। ऊ॒तयः॑। वृष्ण्या॑नि। पौंस्या॑नि। नि॒ऽयुतः॑।
स॒श्चुः॒। इन्द्र॑म्। स॒मु॒द्रम्। न। सिन्ध॑वः। उ॒क्थऽशु॑ष्माः।
उ॒रु॒ऽव्यच॑सम्। गिरः॑। आ। वि॒श॒न्ति॒ ॥ ३ ॥

तंइंद्रं ऊतयोमरुतः सध्रीचीः सहांचंत्यः संगताभूत्वा सश्चुः सचन्ते सेवन्ते यद्वा ऊतयस्तर्पकाण्यन्नानिसहवर्तमानानिभूत्वा सेवन्ते तथा वृष्ण्यानि वीर्याणिपौंस्यानि बलानिच नियुतोरथेयुज्यमानावडवाश्च तमिन्द्रं सेवन्ते अपिच उक्थशुष्माः उक्थंशस्त्रं तदेवशुष्मबलं यासां तादृशागिरः स्तुतयश्च उरुव्यचसं विस्तीर्णव्याप्तिकं तमिन्द्रं आविशन्ति प्रविशन्ति तत्रदृष्टान्तः—समुद्रंनसिन्धवः यथास्यन्दनशीलानद्यः समुद्रमाविशंति आविश्यच विभक्ततयानदृश्यन्ते एवंसर्वाअपिस्तुतयः इन्द्रेणैकीभवन्तीत्यर्थः ॥ ३ ॥

३. संगत होकर मरुद्गण इन्द्र का सेवन करते हैं एवम् वीर्य, बल और रथ में नियोज्यमान अश्व भी इन्द्र का सेवन करते हैं। नदियाँ जिस प्रकार समुद्र में प्रविष्ट होती हैं, उसी प्रकार उपासना (उक्थ, शस्त्र) रूप बलवाली स्तुतियाँ विश्वव्यापी इन्द्र के साथ संगत होती हैं।

सरायस्त्वामुपसृजागृणानःपुरुश्चन्द्रस्यत्वमिन्द्रवस्वः ।
पतिर्बभूथासमोजनानामेकोविश्वस्यभुवनस्यराजा ॥ ४ ॥

सः । रायः । खाम् । उप । सृज । गृणानः । पुरुऽचन्द्रस्य ।
त्वम् । इन्द्र । वस्वः । पतिः । बभूथ । असमः । जनानाम् ।
एकः । विश्वस्य । भुवनस्य । राजा ॥ ४ ॥

हेइन्द्र गृणानः स्तूयमानः सत्वं रायोधनस्य खां नदीनामैतत् अत्रतत्संबद्धाधाराल-क्ष्यते धारां उपसृज विमुंच अस्माभिःसंयोजयेत्यर्थः कीदृशस्यधनस्य पुरुश्चन्द्रस्य बहूना-माह्लादकस्य वस्वः निवासकस्य अपिच असमोनुपमः सर्वोत्कृष्टस्त्वं जनानां सर्वेषांप्राणिनां पतिरधिपतिर्बभूथ बभूविथ तथा विश्वस्य सर्वस्य भुवनस्यभूतजातस्य एकःअसाधारणः राजा ईश्वरश्च बभूविथ ॥ ४ ॥

४. हे इन्द्र, स्तूयमान होने पर तुम बहुतों के अन्नदायक और गृह-प्रदायक धन की धारा को प्रवाहित करो। तुम सम्पूर्ण प्राणी के उत्कृष्ट अधिपति और सम्पूर्ण भूतजात के असाधारण अधीश्वर हो।

सतुश्रुधिश्रुत्यायोदुवोयुर्द्यौर्नभूमाभिरायोअर्यः ।
असोयथानःशवसाचकानोयुगेयुगेवयसाचेकितानः ॥ ५ ॥ ८ ॥

सः । तु । श्रुधि । श्रुत्या । यः । दुवःऽयुः । द्यौः । न । भूम ।
अभि । रायः । अर्यः । असः । यथा । नः । शवसा । चकानः ।
युगेऽयुगे । वयसा । चेकितानः ॥ ५ ॥ ८ ॥

हेइन्द्र श्रुत्या श्रुत्यानि श्रोतव्यानि स्तोत्राणि तु क्षिप्रं श्रुधि शृणु यस्त्वं दुवोयुः अ-स्मदीयंपरिचरणमात्मनइच्छन् अर्यः अरेःसंबन्धीनि रायोधनानि भूम बहुतराणि द्यौर्न सू-र्यइवाभिभवसि सत्वं श्रुधीत्यन्वयः अपिच शवसा आत्मीयेनबलेन स्तोतव्येन युक्तश्चकानः स्तूयमानः युगेयुगे कालेकाले वयसा हविर्लक्षणेनान्नेन चेकितानः प्रज्ञायमानस्त्वं यथा येनप्रकारेणनोस्माकमसाधारणोसि तथा असः स्याः ॥ ५ ॥

५. हे इन्द्र, तुम श्रोतव्य स्तोत्रों को शीघ्र सुनो। हम लोगों की परिचर्या की कामना करके सूर्य की तरह शत्रुओं के धन को जीतो। तुम बल-सम्पन्न हो। प्रत्येक काल में स्तूयमान और हव्यरूप अन्न-द्वारा भली भाँति से ज्ञायमान होकर हमारे निकट पहले की ही तरह (असा-धारण) रहो।

॥ इतिचतुर्थस्यसप्तमेष्टमोवर्गः ॥ ८ ॥

अर्वाग्रथमितिपंचर्चंचतुर्दशंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रं अर्वाग्रथमित्यनुक्रान्तं महाव्रतेनिष्केवल्येउक्तोविनियोगः ।

तत्रप्रथमा—

अर्वाग्रथंविश्ववारन्तउग्रेन्द्रंयुक्तासोहरयोवहन्तु ।
कीरिश्चिद्धित्वाहवतेस्वर्वानृधीमहिसधमादस्तेअद्य ॥ १ ॥

अर्वाक् । रथम् । विश्वऽवारम् । ते । उग्र । इन्द्र । युक्तासः ।
हरयः । वहन्तु । कीरिः । चित् । हि । त्वा । हवते ।
स्वःऽवान् । ऋधीमहि । सधऽमादः । ते । अद्य ॥ १ ॥

हेउग्र उद्गूर्णबलेन्द्र युक्तासोरथेनयुक्ताः हरयोश्वाः तेत्वदीयं विश्ववारं विश्वैर्वरणीयंरथं अर्वाक् अस्मदभिमुखं वहन्तु आनयन्तु हियस्मात् स्वर्वान् स्वः सुष्ठु वरणीयंगुणजातं तद्वान् कीरिश्चित् स्तोता भरद्वाजऋषिः त्वा त्वां हवते आह्वयति तस्मात्कारणात् त्वदीयंरथं अभिमुखं वहन्तित्यर्थः वयंच अद्येदानीं ते त्वया सधमादः सहमाद्यन्तऋधीमहि समृद्धाभवेम ॥ १ ॥

१. हे उद्यतायुध इन्द्र, तुम्हारे रथ में युक्त अश्व हमारे सम्मुख तुम्हारे विश्ववन्दनीय रथ को लावें। गुणवान् स्तोता भरद्वाज ऋषि तुम्हारा आह्वान करते हैं। अभी तुम्हारे साथ हृष्ट होकर हम लोग वर्द्धित हों।

तृतीयेपर्यायेच्छावाकस्यप्रोद्रोणइत्येषाशस्त्रयाज्या सूत्रितंच—प्रोद्रोणेहरयःकर्माग्मन्निति याज्येइति ।

सैषात्रद्वितीया—

प्रोद्रोणेहरयःकर्माग्मन्पुनानासऋज्यन्तोअभूवन् ।
इन्द्रोनोअस्यपूर्व्यःपपीयाद्द्युक्षोमदस्यसोम्यस्यराजा ॥ २ ॥

प्रो इति । द्रोणे । हरयः । कर्म । अग्मन् । पुनानासः ।
ऋज्यन्तः । अभूवन् । इन्द्रः । नः । अस्य । पूर्व्यः । पपीयात् ।
द्युक्षः । मदस्य । सोम्यस्य । राजा ॥ २ ॥

हरयोहरितवर्णाः सोमाः कर्म अस्मदीयंयज्ञं प्रोअग्मन् प्रकर्षेणगच्छन्ति प्राप्नुवन्ति प्राप्यच पुनानासः पूयमानाः द्रोणे द्रोणकलशे ऋज्यन्तःऋजुगच्छन्तःअभूवन्भवन्ति पूर्व्यः

पुरातनः द्युक्षोदीप्तेर्निवासभूतः द्युस्थानोवा मदस्य मदकरस्य सोम्यस्य सोमस्य राजा ईश्वरः एवंभूतइन्द्रश्च अस्य इमं स्तोमं पपीयात् पिबतु ॥ २ ॥

२. हरितवर्ण सोमरस हमारे यज्ञ में प्रवाहित (गमनकर्त्ता) होता है और पूयमान (पवित्र) होकर कलशम ऋजुभाव से गमन करता है। पुरातन, दीप्तिसम्पन्न और मदकारक सोमरस के अधिपति इन्द्र हमारे सोमरस का पान करें।

आसस्राणासःशवसानमच्छेन्द्रंसुचक्रेरथ्यासोअश्वाः।
अभिश्रवऋज्यन्तोवहेयुर्नूचिन्नुवायोरमृतंविदस्येत् ॥ ३ ॥

आऽसस्राणासः। शवसानम्। अच्छ। इन्द्रम्। सुऽचक्रे।
रथ्यासः। अश्वाः। अभि। श्रवः। ऋज्यन्तः। वहेयुः। नु।
चित्। नु। वायोः। अमृतम्। वि। दस्येत् ॥ ३ ॥

आसस्राणासः परितोगच्छन्तः रथ्यासोरथेयुक्ताःअश्वाः ऋज्यन्तः ऋजुगमनाःसन्तः सुचक्रे शोभनचक्रे रथेवस्थितं शवसानं बलमिवाचरन्तमिन्द्रं श्रवः श्रवणीयमस्मदीयंहविरच्छाभिमुख्येनअभिवहेयुरावहेयुः नूचिदितिनिपातोनिषेधेअत्रवर्तते अमृतं अमरणहेतुभूतं सोमलक्षणं हविः वायोर्हेतोः नु इदानीं नूचित् नैवविदस्येत् क्षयंनप्राप्नुयात् पात्रेगृहीतः सोमोवायुनाशुष्यति ततःपुरैवतत्पानार्थं अश्वाइन्द्रमभिवहेयुरित्यर्थः ॥ ३ ॥

३. चतुर्दिक् गमन करनेवाले, रथ में युक्त और सरलतापूर्वक गमन करनेवाले अश्वगण सुदृढ़चक्र रथ पर अवस्थित बलशाली इन्द्र को हमारे अभिमुख लावें। अमृतमय सोमलक्षण हवि वायु से नष्ट (शुष्क) नहीं हों। अर्थात् सोमरस के बिगड़ने के पहले ही इन्द्र सोम को पी जायें।

वरिष्ठोअस्यदक्षिणामियर्तीन्द्रोमघोनांतुविकूर्मितमः।
ययावज्रिवःपरियास्यंहोमघाचधृष्णोदयसेविसूरीन् ॥ ४ ॥

वरिष्ठः। अस्य। दक्षिणाम्। इयर्ति। इन्द्रः। मघोनाम्।
तुविकूर्मिऽतमः। यया। वज्रिऽवः। परिऽयासि। अंहः।
मघा। च। धृष्णो इति। दयसे। वि। सूरीन् ॥ ४ ॥

वरिष्ठउरुतमः तुविकूर्मितमः अतिशयेनबहुविधकर्माइन्द्रः मघोनां मघवतां हविर्लक्षणधनोपेतानांमध्ये अस्ययजमानस्य दक्षिणां यज्ञेदातव्यां इयर्ति प्रेरयति यद्वा मघोनामिति अस्येत्यनेनसमानाधिकरणं वचनव्यत्ययः मघोनोहविष्मतोस्ययजमानस्येत्यर्थः शेषःप्रत्यक्षकृतः हेवज्रिवोवज्रवन्निन्द्र ययादक्षिणयादत्तया अंहः पापं यज्ञसंबन्धि परियासि

विनाशयसि हेधृष्णो धर्षक मघा मघानि धनानि सूरीन्स्तोतॄन्पुत्रांश्च ययाच दक्षिणयाविदयसे प्रयच्छसि तादृशीं दक्षिणां प्रेरयसीत्यर्थः ॥ ४ ॥

४. निरतिशय बलशाली और बहुविधि कार्य करनेवाले इन्द्र हवि-स्वरूप धनवाले व्यक्तियों के मध्य में यजमान को दक्षिणा प्रदान करते हैं। हे वज्रधर, तुम दक्षिणा-द्वारा पाप नाश करो। हे शत्रुविजयी, तुम वैसी दक्षिणा प्रेरित करो, जिससे धन-राशि और स्तुतिकर्त्ता पुत्र हमें प्राप्त हों।

इन्द्रोवाजस्यस्थविरस्यदातेन्द्रोगीर्भिर्वर्धतांवृद्धमहाः।
इन्द्रोवृत्रंहनिष्ठोअस्तुसत्वाऽऽतासूरिःपृणतितूतुजानः ॥ ५ ॥ ९ ॥

इन्द्रः। वाजस्य। स्थविरस्य। दाता। इन्द्रः। गीःऽभिः।
वर्धताम्। वृद्धऽमहाः। इन्द्रः। वृत्रम्। हनिष्ठः। अस्तु। सत्वा।
आ। ता। सूरिः। पृणति। तूतुजानः ॥ ५ ॥ ९ ॥

अयमिन्द्रः स्थविरस्य श्रेष्ठस्य वाजस्यान्नस्य बलस्यवादाताभवतु सचेन्द्रोवृद्धमहाः प्रवृद्धतेजस्कःसन् गीर्भिरस्मदीयाभिः स्तुतिभिःवर्धतांसत्वाशत्रूणांशातयिता सइन्द्रः वृत्रं आवरकंशत्रुंहनिष्ठः हन्तृतमोस्तु भवतु अपिच सूरिः प्रेरकः सइन्द्रस्तूतुजानस्त्वरमाणः ता तानिधनानि आपृणति अस्मभ्यं प्रयच्छतु ॥ ५ ॥

५. इन्द्र श्रेष्ठ अन्न अथवा बल के दाता हों। अत्यधिक तेजोयुक्त इन्द्र हम लोगों की स्तुति-द्वारा वर्द्धित हों। शत्रुओं को सतानेवाले इन्द्र आवरक शत्रु का संहार करें। प्रेरक इन्द्र वेगवान् होकर हम लोगों को समस्त धन प्रदान करें।

अपादितइतिपंचर्चंपंचदशंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रं अपादित्यनुक्रान्तं महाव्रतेनिष्केवल्ये उक्तोविनियोगः।

अपादितउदुनश्चित्रतमोमहींभर्षद्द्युमतीमिन्द्रहूतिम्।
पन्यसींधीतिंदैव्यस्ययामञ्जनस्यरातिंवनतेसुदानुः ॥ १ ॥

अपात्। इतः। उत्। ऊँ इति। नः। चित्रऽतमः। महीम्।
भर्षत्। द्युऽमतीम्। इन्द्रऽहूतिम्। पन्यसीम्। धीतिम्। दैव्यस्य।
यामन्। जनस्य। रातिम्। वनते। सुऽदानुः ॥ १ ॥

चित्रतमश्चायनीयतमःआश्चर्यतमोवासइन्द्रः नोस्मदीयात इतः अस्माद्ग्रहचमसादेःअपात् सोमं पिबतु यद्वा इतोस्माच्छत्रोः नोस्मानपात् पातु रक्षतु उदुइत्येतौपूरणौ तथा महीं मह

तीं द्युमतीं दीप्तिमतीं इन्द्रहूतिं इन्द्रस्यस्तुतिं भर्षेव सइन्द्रोबिभर्तु धारयतु दैव्यस्य देवसंबन्धि नोजनस्य यामन् यामनि यज्ञेक्रियमाणां पन्यसीं स्तुत्यतमांधीतिं परिचरणरूपांक्रियां रातिं दातव्यंहविश्च सुदानुः शोभनदानइन्द्रः वनते संभजतु ॥ १ ॥

१. आश्चर्यतम इन्द्र हम लोगों के पानपात्र से सोमरस पान करें। वे महान् और दीप्तिमान् आह्वान (स्तुति) को स्वीकार करें। दानशील इन्द्र धार्मिक यजमान के यज्ञ में अतिशय स्तुत्य परिचरण और हव्य ग्रहण करें।

दूराच्चिदावसतोअस्यकर्णाघोषादिन्द्रस्यतन्यतिब्रुवाणः।
एयमेनंदेवहूतिर्ववृत्यान्मद्र्य१गिन्द्रमियमृच्यमाना ॥ २ ॥

दूरात्। चित्। आ। वसतः। अस्य। कर्णा। घोषात्। इन्द्रस्य।
तन्यति। ब्रुवाणः। आ। इयम्। एनम्। देवऽहूतिः। ववृत्यात्।
मद्र्यक्। इन्द्रम्। इयम्। ऋच्यमाना ॥ २ ॥

अस्येन्द्रस्य कर्णा कर्णौ दूराच्चिद् दूरदेशादपि आवसतः स्तोत्रश्रवणार्थमागच्छतः इन्द्रस्य घोषाद् घोषणीयात्स्तोत्राद्धेतोः ब्रुवाणः स्तुवन् स्तोता तन्यति शब्दंकरोति यद्वा सर्वंञविस्तारयति देवहूतिः देवस्येन्द्रस्यआह्वानरूपाइयंस्तुतिश्च ऋच्यमानास्वयंप्रेर्यमाणासतीएनमिन्द्रं मद्र्यक् मदभिमुखं आववृत्याद् आवर्तयतु पुनरियमितिपूरणः ॥ २ ॥

२. इन्द्र के कर्णयुगल दूर देश से भी स्तोत्र श्रवण करने के लिए आते हैं। स्तोता उच्च स्वर से स्तोत्र-पाठ करते हैं। इन्द्र का आह्वान करनेवाली यह स्तुति स्वयं प्रेरित होकर इन्द्र को हमारे अभिमुख लावे।

तंवोधियापरमयापुराजामजरमिन्द्रमभ्यनूष्यर्कैः।
ब्रह्माचगिरोदधिरेसमस्मिन्महांश्चस्तोमोअधिवर्धदिन्द्रे ॥ ३ ॥

तम्। वः। धिया। परमया। पुराऽजाम्। अजरम्। इन्द्रम्।
अभि। अनूषि। अर्कैः। ब्रह्म। च। गिरः। दधिरे। सम्। अस्मिन्।
महान्। च। स्तोमः। अधि। वर्धत्। इन्द्रे ॥ ३ ॥

हेइन्द्र तं तादृशमिन्द्रं वः त्वां व्यत्ययेनबहुवचनं परमया उत्कृष्टतमया धिया स्तुत्या अर्कैरर्चनसाधनैर्हविर्भिः सार्धं अभ्यनूषि अभिष्टौमि कीदृशं पुराजां पूर्वस्मिन्कालेजातं चिरन्तनं अजरं जरारहितं नित्यं अतःकारणाद् अस्मिन्निन्द्रे ब्रह्म ब्रह्माणि हविर्लक्षणान्यन्नानि गिरःस्तुतयश्च संदधिरे संधीयन्ते संश्लिष्यन्ते महान्प्रवृद्धःस्तोमश्च अधिवर्धत् अधिकंवर्धते ॥ ३ ॥

३. हे इन्द्र, तुम प्राचीन और क्षयरहित हो। हम उत्कृष्टतम स्तुति और हव्य-द्वारा तुम्हारा स्तवन करते हैं; इसी लिए इन्द्र में हव्यरूप अन्न और स्तोत्र निहित हैं। महान् स्त्रोत्र अधिक वर्द्धमान होता है।

वर्धाद्यंयज्ञउतसोममिन्द्रंवर्धाद्ब्रह्मगिरंउक्थाचमन्म ।
वर्धाहैनमुषसोयामन्नक्तोर्वर्धान्मासाःशरदोद्यावइन्द्रम् ॥ ४ ॥

वर्धात् । यम् । यज्ञः । उत । सोमः । इन्द्रम् । वर्धात् । ब्रह्म । गिरः । उक्था । च । मन्म । वर्ध । अह । एनम् । उषसः । यामन् । अक्तोः । वर्धान् । मासाः । शरदः । द्यावः । इन्द्रम् ॥ ४ ॥

यमिन्द्रं यज्ञोयागः वर्धात् वर्धयति उतापिच तत्साधनभूतःसोमश्च यंइन्द्रं वर्धयति त-थाब्रह्म हविर्लक्षणमन्नंचपुरोडाशादिकं यमिन्द्रं वर्धात् वर्धयतिगिरः स्तोत्राणि मन्म मननी-यानि उक्था उक्थशस्त्राणिचयं वर्धयन्ति एनमिन्द्रं उषसश्च अक्तोः रात्रेः यामन् यामनि गम-नेसति वर्धयन्ति मासाः शरदः संवत्सराश्च द्यावोदिवसाश्चएनमिन्द्रं वर्धान् वर्धयन्ति ॥ ४॥

४. जिन इन्द्र को यज्ञ और सोमरस वर्द्धित करते हैं, जिन इन्द्र को हव्य, स्तुति, उपासना और पूजा वर्द्धित करती हैं, दिन और रात्रि की गति जिन्हें वर्द्धित करती है एवम् जिन्हें मास, संवत्सर और दिन वर्द्धित करते हैं।

एवाजज्ञानंसहसेअसामिवावृधानंराधसेचश्रुताय ।
महामुग्रमवसेविप्रनूनमाविवासेमवृत्रतूर्येषु ॥ ५ ॥ १० ॥

एव । जज्ञानम् । सहसे । असामि । ववृधानम् । राधसे । च । श्रुताय । महाम् । उग्रम् । अवसे । विप्र । नूनम् । आ । विवासेम । वृत्रऽतूर्येषु ॥ ५ ॥ १० ॥

हेविप्र मेधाविन्निन्द्र एव एवंजज्ञानं प्रादुर्भवन्तं सहसे शत्रूणामभिभवार्थं असामि बहु-लं वावृधानं वर्धमानं महां महान्तं उग्रमुद्गूर्णबलंत्वांनूनं अद्य वृत्रतूर्येषु संग्रामेषु श्रुताय विश्रुताय राधसे धनायच अवसे रक्षणायच आविवासेम परिचरेम ॥ ५॥

५. हे मेधावी इन्द्र, तुम इस प्रकार से प्रादुर्भूत, समृद्ध, बलशाली और प्रचण्ड हो। हम लोग आज धन, कीर्ति, रक्षा और शत्रुविनाश के लिए तुम्हारी परिचर्या करते हैं।

॥ इतिचतुर्थस्यसप्तमेदशमोवर्गः ॥ १० ॥

यंद्रस्यकविरितिपंचर्चंषोळशंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रं मन्द्रस्येत्यनुक्रान्तं गतोवि-नियोगः ।

तत्रप्रथमा—

मन्द्रस्यंकुवेर्दिव्यस्यवह्नेर्विप्रंमन्मनोवचनस्यमध्वंः ।

अपांनस्तस्यंसचनस्यंदेवेषोंयुवस्वगृणतेगोअंग्राः ॥ १ ॥

मन्द्रस्यं । कवेः । दिव्यस्यं । वह्नेः । विप्रंऽमन्मनः । वचनस्यं । मध्वंः ।

अपाः । नः । तस्यं । सचनस्यं । देव । इषंः । युवस्व । गृणते । गोऽअंग्राः ॥ १ ॥

मन्द्रस्य मोदनस्य मदकरस्यवा कवेः विक्रान्तस्य दिव्यस्य दिविभवस्य वह्नेर्वोढुः विप्रमन्मनः विप्रामेधाविनोमन्मःस्तोतारोयस्यसःतथोक्तःतस्य वचनस्य वचनीयस्य स्तुत्यस्य तस्यसर्वत्रप्रसिद्धस्य सचनस्य सेव्यस्य एवंभूतस्य मध्वोमधुनः सोमस्य क्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदानत्वाच्चतुर्थ्यर्थेषष्ठी एवंभूतं नोस्मदीयंसोमं हेइन्द्र त्वं अपाःपिब अपिच हेदेव द्योतमानेन्द्र गृणते स्तुवते तृतीयार्थेचतुर्थी स्तुवतामयागोअग्राः गावः अग्रेप्रमुखेयासांताहशा इषोन्नानि युवस्व संयोजय ॥ १ ॥

१. इन्द्र, तुम हमारे उस सोम को पियो, जो मदकारक पराक्रम-कर्त्ता, स्वर्गीय, विज्ञ-सम्मत फलदाता प्रसिद्ध और सेवनीय है। देव, तुम हमें गो-प्रमुख अन्न दो।

अयमुंशानःपर्यद्रिमुस्राऋतधीतिभिर्ऋतयुग्युंजानः ।

रुजदरुंग्णंविवलस्यसानुंपणींर्वचोभिरभियोधदिन्द्रंः ॥ २ ॥

अयम् । उशानः । परिं । अद्रिम् । उस्राः । ऋतधीतिऽभिः ।

ऋतऽयुक् । युजानः । रुजत् । अरुंग्णम् । वि । वलस्यं । सानुम् ।

पणीन् । वचःऽभिः । अभि । योधत् । इन्द्रः ॥ २ ॥

अयमिन्द्रः अद्रिं बलेन गोपिधानाय निर्मितं शिलोच्चयं परि परितः पर्वतसमीपे विद्यमानाउस्रागाः उशानः कामयमानः ऋतधीतिभिः सत्यकर्मभिः अंगिरोभिः युजानः संगच्छमानः ऋतयुक् ऋतेनतत्कृतेनस्तोत्रेणयुक्तश्च भूत्वा बलस्यासुरस्य स्वभूतं सानुमुच्छ्रितंपर्वतंअरुग्णं अन्यैरभग्नं विरुजत् व्यभांक्षीत् किंच पणीन् बलानुचरानेतत्संज्ञानसुरांश्च वचोभिः स्तुत्यैरायुधैः संतर्जनरूपैर्वाक्यैरेववायमिन्द्रः अभियोधत् अभ्ययुध्यत् ॥ २ ॥

२. इन्हीं इन्द्र ने पर्वत के बीच गुप्त रीति से रक्खी गायों के उद्धार के लिए यज्ञ-कर्त्ता अङ्गिरा लोगों के साथ होकर और उनके सत्य-रूप स्तोत्र-द्वारा उत्तेजित होकर दुर्भेद्य पर्वत को भिन्न और ताड़ना-द्वारा पणियों को अभिभूत किया था।

अयंद्योतयदद्युतोव्य१क्तून्दोषावस्तोःशरदइन्दुरिन्द्र ।
इमंकेतुमदधुर्नूचिदह्नांशुचिजन्मनउषसंश्चकार ॥ ३ ॥

अयम् । द्योतयत् । अद्युतः । वि । अक्तून् । दोषा । वस्तोः ।
शरदः । इन्दुः । इन्द्र । इमम् । केतुम् । अदधुः । नु । चित् । अह्नाम् ।
शुचिऽजन्मनः । उषसः । चकार ॥ ३ ॥

हेइन्द्र त्वयानियम्यमानः पीयमानोवा अयमिन्दुः सोमः अद्युतः अद्योतमानान् अक्तून् अक्तुरितिरात्रिनाम अत्रचतत्संबन्धात्पक्षमासादयोलक्ष्यन्ते पक्षमासादीन्तथादोषारात्रिं वस्तोः दिवसंशरदः संवत्सरांश्च विद्योतयत् व्यदीपयत् कुतइत्यतआह नूचित् पुरादेवा इमंसोमं चन्द्रात्मना नभसिवर्तमानं अह्नां दिवसानां केतुं प्रज्ञापकं यस्माददधुर्व्यदधुः अकुर्वन् तस्मादनेन पक्षमासादयःसर्वेप्रकाश्यन्ते चन्द्रगत्यधीनत्वात्तिथिविभागानां अपिचायंसोमः उषसः उषःकालान् शुचिजन्मनः आत्मीयेनतेजसा शुद्धोदयान् चकार करोति ॥ ३ ॥

३. इन्द्र, इस सोम ने दीप्ति-शून्य रात्रि, दिन और वर्ष---सबको प्रदीप्त किया था। प्राचीन समय में देवों ने इस सोम को दिन का केतु-स्वरूप स्थापित किया था। इसी सामने अपनी दीप्ति से उषाओं को प्रकाशित किया था।

अयंरोचयदरुचोरुचानो३ऽयंवासयद्व्यृ१तेनपूर्वीः ।
अयमीयतऋतयुग्भिरश्वैःस्वर्विदानाभिनाचर्षणिप्राः ॥ ४ ॥

अयम् । रोचयत् । अरुचः । रुचानः । अयम् । वासयत् । वि ।
ऋतेन । पूर्वीः । अयम् । ईयते । ऋतयुक्ऽभिः । अश्वैः । स्वःऽविदा ।
नाभिना । चर्षणिऽप्राः ॥ ४ ॥

अयमिन्द्रः रुचानोरोचमानः सूर्यात्मनादीप्यमानः अरुचः प्रकाशरहितान् तमसामलीमसान्सर्वांल्लोकान् रोचयत् प्रकाशयति तथा पूर्वीर्बह्वीरुषसश्च अयमिन्द्रः ऋतेन सत्यभूतेन सर्वत्रगमनशीलेनवा तेजसा विवासयत् व्यापयति तत्रत्यानितमांसिनिवर्तयतीत्यर्थः तथा ऋतयुग्भिः ऋतेनस्तोत्रेणयुज्यमानैरश्वैः नाभिना संनद्धेन स्वर्विदासुष्ठु अरणीयस्य धनस्य लंभकेनरथेन चर्षणिप्राः चर्षणीनांमनुष्याणांकामैःपूरयितासन् अयमेवेन्द्रः ईयते गच्छति ॥ ४ ॥

४. इन्हीं इन्द्र ने सूर्य-रूप से प्रकाशित होकर प्रकाश-शून्य भुवनों को प्रकाशित किया था और सर्वत्र गतिशील दीप्ति-द्वारा उषाओं का अन्धकार नष्ट किया था। मनुष्यों के अभीष्ट फलदाता ये इन्द्र स्तोत्र-द्वारा नियोजित होनेवाले अश्वों-द्वारा आकृष्ट और धनपूर्ण रथ पर आरूढ़ होकर गये थे।

अथपंचमी--

नूगृणानोगृणतेप्रत्नराजन्निषःपिन्ववसुदेयायपूर्वीः ।
अपओषधीरविषावनानिगाअर्वतोनॄनृचसेरिरीहि ॥ ५ ॥ ११ ॥

नु । गृणानः । गृणते । प्रत्न । राजन् । इषः । पिन्व । वसुऽदेयाय ।
पूर्वीः । अपः । ओषधीः । अविषा । वनानि । गाः । अर्वतः ।
नॄन् । ऋचसे । रिरीहि ॥ ५ ॥ ११ ॥

हेप्रत्न पुरातन राजन् राजमानेन्द्र गृणानः स्तूयमानस्त्वं वसुदेयाय वसूनिधनानित्वया देयानियस्मैतादृशाय गृणते स्तुवते पूर्वीर्बह्वीः इषोन्नानि नु क्षिप्रं पिन्व सिंच प्रयच्छेत्यर्थः किंच ऋचसे अर्चयित्रेस्तोत्रे अपः वृष्टिलक्षणान्युदकानि ओषधीः व्रीह्यादीन् अविषाविषरहिता निरक्षकाणिवा वनानि वृक्षजातानि चूतपनसादीनि गाः अर्वतोश्वान्नॄन्मनुष्यांश्च कर्मकरान् रिरीहि देहि ॥ ५ ॥

५. हे पुरातन और प्रकाशमान इन्द्र, तुम स्तुति किये जाने पर धन देने योग्य स्तोता को प्रचुर धन दो। तुम स्तोता को जल, ओषधि, विष-शून्य वृक्षावली, धेनु, अश्व और मनुष्य प्रदान करो।

॥ इतिचतुर्थस्यसप्तमेएकादशोवर्गः ॥ ११ ॥

इन्द्रपिबेतिपंचर्चंसप्तदशंसूक्तं भरद्वाजस्यार्षं त्रैष्टुभमैन्द्रं इन्द्रपिबेत्यनुक्रान्तं। गतः सूक्तविनियोगःप्रथमेरात्रिपर्यायेअच्छावाकस्यआद्याशस्त्रयाज्या सूत्रितंच--इन्द्रपिबतुभ्यंसुतोमदायेति।

सैषाप्रथमा--

इन्द्रपिबतुभ्यंसुतोमदायावस्यहरीविमुचासखाया ।
उतप्रगायगणआनिषद्याथायज्ञायगृणतेवयोधाः ॥ १ ॥

इन्द्र । पिब । तुभ्यम् । सुतः । मदाय । अव । स्य । हरी इति ।
वि । मुच । सखाया । उत । प्र । गाय । गणे । आ । निऽसद्य ।
अथ । यज्ञाय । गृणते । वयः । धाः ॥ १ ॥

हेइन्द्र तं सोमं पिब यः सोमस्तुभ्यं मदाय मदार्थं सुतोभिषुतः यतस्त्वयासोमः पातव्यः अतःकारणात् सखाया समानख्यानौ मित्रभूतौवा हरी अश्वौ अवस्य अवस्थापय तदनन्तरं

विमुच रथाद्विमुंच उतापिच गणे अस्मदस्तोतृसंघे आ आभिमुख्येन निषद्योपविश्य प्रगायअस्मा भिःकृतंस्तोत्रमुपश्लोकय अथानन्तरं यज्ञाय यजमानाय गृणते स्तुवते वयोन्नंधाः देहि ॥१॥

१. इन्द्र, तुम्हारे मद-वर्द्धन के लिए जो सोम अभिषुत हुआ है, उसे पान करो। अपने मित्र-भूत दोनों अश्वों को रथ में जोतो और इसके पीछे रथ में उन्हें छोड़ दो। स्तोताओं के बीच बैठकर हमारे द्वारा किये गये स्तोत्रों के उच्चारण में योग दो। स्तोता यजमान को अन्न दो।

अस्यपिबयस्यजज्ञानइन्द्रमदायक्त्वेअपिबोविरप्शिन्।
तमुतेगावोनरआपोअद्रिरिन्दुंसमह्यन्पीतयेसमस्मै ॥ २ ॥

अस्य। पिब। यस्य। जज्ञानः। इन्द्र। मदाय। क्रत्वे। अपिबः।
विऽरप्शिन्। तम्। ऊँ इति। ते। गावः। नरः। आपः। अद्रिः।
इन्दुम्। सम्। अह्यन्। पीतये। सम्। अस्मै ॥ २ ॥

हेइन्द्र अस्यइमंसोमंपिव हेविरप्शिन् महन्जज्ञानोजायमानएवत्वंयस्ययंसोमंअपिबःपूर्वं पीतवानसि किमर्थं मदायहर्षाय क्रत्वेकर्मणे वृत्रवधादिलक्षणंवीर्यंकर्मकर्तुंच तमुतादृशमेवेन्दुंसो मंगावःगविभवाःश्रपणसाधनाःक्षीरादयः नरोनेतारोध्वर्यवः आपोवसतीवर्याख्याः अद्रिरभिषवा- र्थोग्रावाएतेसर्वे अस्मैअस्येन्द्रस्यतेतवपीतयेपानार्थं समह्यन्समगमयन् हिगतावित्यस्यैतद्रूपं पुनःसमितिपूरकः ॥ २ ॥

२. हे महेन्द्र, तुमने उल्लास और वीरता प्रकट करने के लिए जन्म लेते ही जैसे सोमपान किया था, उसी तरह सोमपान करो। तुम्हारे लिए सोम तैयार करने के लिए गायें, ऋत्विक्, जल और पाषाण इकट्ठे होते हैं।

समिद्धेअग्नौसुतइन्द्रसोमआत्वावहन्तुहरयोवहिष्ठाः।
त्वायतामनसाजोहवीमीन्द्रायाहिसुवितायमहेनः ॥ ३ ॥

सम्ऽइद्धे। अग्नौ। सुते। इन्द्र। सोमे। आ। त्वा। वहन्तु।
हरयः। वहिष्ठाः। त्वाऽयता। मनसा। जोहवीमि। इन्द्र।
आ। याहि। सुवितायं। महे। नः ॥ ३ ॥

अग्नौसमिद्धेसम्यगिन्धनैःदीप्ते सोमेसुते अभिषुतेसति हेइन्द्र त्वात्वांवहिष्ठाः वोढृतमाः हरयोश्वाःआवहन्तु इमंयज्ञंप्रत्यानयन्तु अहंचत्वायता त्वांकामयमानेनमनसाजोहवीमि पुनः पुनराह्वयामि हेइन्द्र त्वंनोस्माकंमहेमहते सुवितायकल्याणाय आयाहिआगच्छ ॥ ३ ॥

३. इन्द्र, आग प्रज्वलित और सोमरस अभिषुत हुआ है। ढोने में शक्तिशाली तुम्हारे अश्व इस यज्ञ में ले आवें। हम तुम्हारी ओर चित्त लगाकर तुम्हें बुला रहे हैं। तुम हमारी विशाल समृद्धि के लिए आओ।

आयाहिशश्वदुशतायंयाथेन्द्रंमहामनसासोमपेयम् ।
उपब्रह्माणिशृणवइमानोथातेयज्ञस्तन्वेवयोधात् ॥ ४॥

आ । याहि । शश्वत् । उशता । ययाथ । इन्द्र । महा । मनसा ।
सोमऽपेयम् । उप । ब्रह्माणि । शृणवः । इमा । नः । अथ ।
ते । यज्ञः । तन्वे । वयः । धात् ॥ ४ ॥

हेइन्द्र पुराशश्वद्बहुकृत्वोययाथ सोमपानार्थंयज्ञंगतवानसि अतःकारणात् उशताअस्मान्कामयमानेन महामहतामनसासह सोमपेयंसोमःपीयतेयस्मिन्तादृशमस्मदीयंयज्ञं आयाहिअभिगच्छ आगत्यच ब्रह्माणिस्तोत्राणि इमाइदानींप्रयुज्यमानानि नोस्मदीयानिउपशृणवःउपशृणु अथानन्तरं यज्ञोयजमानस्तेतवतन्वेशरीरायत्वच्छरीरपोषार्थं वयोन्नंसोमात्मकंधावद्ददातु ॥४॥

४. इन्द्र, तुम सोमपान के लिए कई बार यज्ञ में उपस्थित हुए हो। इसलिए इस समय सोमपान की इच्छा से महान् अन्तःकरण के साथ इस यज्ञ में आओ। हमारे स्तोत्रों को सुनो। तुम्हारी देह की पुष्टि के लिए यजमान तुम्हें सोमरूप अन्न प्रदान करे।

यदिन्द्रदिविपार्येयदृधग्यद्वास्वेसदनेयत्रवासि ।
अतोनोयज्ञमवसेनियुत्वान्त्सजोषाःपाहिगिर्वणोमरुद्भिः ॥ ५॥१२॥

यत् । इन्द्र । दिवि । पार्ये । यत् । ऋधक् । यत् । वा । स्वे ।
सदने । यत्र । वा । असि । अतः । नः । यज्ञम् । अवसे ।
नियुत्वान् । सऽजोषाः । पाहि । गिर्वणः । मरुत्ऽभिः ॥ ५ ॥ १२ ॥

हेइन्द्र पार्येपारगेदूरदेशे दिविद्युलोकाख्ये यद्यदित्वंवर्तसे यदिवा ऋधक्एतत्पृथक्शब्देनसमानार्थं पृथगन्यस्मिन्देशेवर्तसे यद्वा स्वेस्वकीयेसदनेगृहे अथवा किंमनेनविशेषणेन यत्रयस्मिन्देशेअसिभवसि अतोस्मात्स्थानादागत्यहेगिर्वणः गिरांसंभक्तरिन्द्र नियुत्वान्नियुतोश्वाःतद्वान् मरुद्भिःसजोषाःसहप्रीयमाणस्त्वं नोस्माकमवसेरक्षणाययज्ञमस्मदीयंयागंपाहिरक्ष यद्वा यज्ञंयजमानसाधनंअस्मदीयंसोमं अवसेतर्पणायपाहि पिब॥ ५ ॥

५. इन्द्र, तुम दूरस्थित स्वर्ग, किसी अन्य स्थान वा अपने गृह में अथवा कहीं हो; स्तुति-पात्र और अश्वों के अधिपति तुम मरुतों के साथ प्रसन्न होकर हमारी रक्षा करने के लिए हमारे यज्ञ की रक्षा करो।

॥ इतिचतुर्थस्यसप्तमेद्वादशोवर्गः ॥ १२ ॥

अहेळमानइतिपंचर्चमष्टादशंसूक्तंभरद्वाजस्यार्षंत्रैष्टुभमैन्द्रं अनुक्रान्तंच—अहेळमानइति। गतोविनियोगः।

अहेळमान उपयाहियज्ञंतुभ्यंपवन्तइन्दवःसुतासः।
गावोनवज्रिन्त्स्वमोकोअच्छेन्द्रागहिप्रथमोयज्ञियानाम् ॥ १ ॥

अहेळमानः। उप। याहि। यज्ञम्। तुभ्यम्। पवन्ते। इन्दवः।
सुतासः। गावः। न। वज्रिन्। स्वम्। ओकः। अच्छ।
इन्द्र। आ। गहि। प्रथमः। यज्ञियानाम् ॥ १ ॥

हेइन्द्र अहेळमानोऽक्रुध्यंस्त्वं यज्ञमस्मदीयंउपयाहि उपगच्छ यतःकारणात्तुभ्यंत्वदर्थं सुतासःअभिषुताःइन्दवःसोमाःपवन्तेपूयन्ते दशापवित्रेणशोध्यन्ते हेवज्रिन् वज्रवन्निन्द्र गावोन गावःस्वकीयंगोष्ठमिव स्वंस्वकीयंओकःस्थानंद्रोणकलशादिलक्षणं अच्छाभिमुख्येनप्राप्नुवन्तीतिशेषः अतःकारणात् हेइन्द्र यज्ञियानांयज्ञार्हाणांदेवानांमध्येप्रथमोमुख्यस्त्वं आगहि आगच्छ ॥ १ ॥

१. इन्द्र तुम क्रोध-शून्य होकर हमारे यज्ञ में आओ; क्योंकि तुम्हारे लिए पवित्र सोमरस अभिषुत हुआ है। वज्रधर, जैसे गायें गोशाला में जाती हैं, वैसे ही सोमरस कलश में पैठ रहा है। इसलिए इन्द्र, तुम आओ। तुम यज्ञ-योग्य देवों में प्रधान हो।

यातेकाकुत्सुकृतायावरिष्ठाययाशश्वत्पिबसिमध्वऊर्मिम्।
तयापाहिप्रतेअध्वर्युरस्थात्सन्तेवज्रोवर्ततामिन्द्रगव्युः ॥ २ ॥

या। ते। काकुत्। सुऽकृता। या। वरिष्ठा। यया। शश्वत्।
पिबसि। मध्वः। ऊर्मिम्। तया। पाहि। प्र। ते। अध्वर्युः।
अस्थात्। सम्। ते। वज्रः। वर्तताम्। इन्द्र। गव्युः ॥ २ ॥

हेइन्द्र या ते तवकाकुज्जिह्वा सुकृतासुष्ठुधात्रानिर्मिता याच वरिष्ठाउरुतमाविस्तीर्णतमा ययाचमध्वोमधुनःसोमस्यऊर्मिंरसंशश्वद्बहुकृत्वःपिबसि तयाजिह्वयास्मदीयंसोमंपाहिपिब तदर्थमध्वर्युरध्वरस्यनेताऋत्विग्गृहीतसोमःसन् प्रास्थात् हविर्धानादुत्तरवेदिदेशंप्रत्यगमत् अपिच हेइन्द्र गव्युःशत्रुसंबंधिनीर्गाःआत्मनइच्छन् तेत्वदीयोवज्रःसंवर्ततां शत्रुभिःसंगतोभवतु तान्हंत्वित्यर्थः ॥ २ ॥

२. इन्द्र, तुम जिस सुनिर्मित और सुविस्तृत जीभ से सदा सोमपान करते हो उसी जीभ से हमारे सोमरस का पान करो। सोमरस लेकर ऋत्विक् तुम्हारे सामने खड़ा है। इन्द्र, शत्रुओं की गौओं को आत्मसात् करने के लिए अभिलाषी तुम्हारा वज्र शत्रुओं का संहार करे।

एषद्रप्सोवृषभोविश्वरूपइंद्रायवृष्णेसमकारिसोमः ।
एतंपिबहरिवःस्थातरुग्रयस्येशिषेप्रदिवियस्तेअन्नम् ॥ ३॥

एषः । द्रप्सः । वृषभः । विश्वऽरूपः । इन्द्राय । वृष्णे । सम् ।
अकारि । सोमः । एतम् । पिब । हरिऽवः । स्थातः । उग्र ।
यस्य । ईशिषे । प्रऽदिवि । यः । ते । अन्नम् ॥ ३ ॥

द्रप्सोद्रवणशीलोवृषभःकामानांवर्षिता विश्वरूपःबहुविधरूपोपेतः ईदृग्विधएषसोमः वृष्णेकामानांवर्षित्रेइंद्रायइन्द्रस्यपानार्थं समकारिअभिषवादिभिःसंस्कृतोभूत् हेहरिवः हरीअश्वौ तद्वन्हेस्थातः सर्वेषामधिष्ठातः उग्रउद्गूर्णबलेन्द्र एतमीदृशंसोमंपिब यस्यसोमस्यप्रदिवि जातावेकवचनं प्रभूतेषुदिवसेषु प्रगतेष्वहःसुवा ईशिषे त्वमेवेश्वरोभवसि यश्चसोमस्ते तवअन्नंअन्नत्वेनपरिकल्पितः एतंपिबेत्यन्वयः ॥ ३ ॥

३. द्रवीभूत, अभीष्टवर्षी और विविध-मूर्ति यह सोम मनोरथवर्षक इन्द्र के लिए सुसंस्कृत हुआ है। हे अश्वों के अधिपति सबके शासक और प्रचण्ड बलशाली इन्द्र, बहुत दिनों से, जिसके ऊपर तुमने प्रभुत्व किया है और जो तुम्हारे लिए अन्नरूप माना गया है, वही तुम इस सोमरस का पान करो।

सुतःसोमोअसुतादिन्द्रवस्यानयंश्रेयांचिकितुषेरणाय ।
एतंतितिर्वउपयाहियज्ञंतेनविश्वास्तविषीरापृणस्व ॥ ४ ॥

सुतः । सोमः । असुतात् । इन्द्र । वस्यान् । अयम् । श्रेयान् ।
चिकितुषे । रणाय । एतम् । तितिर्वः । उप । याहि । यज्ञम् ।
तेन । विश्वाः । तविषीः । आ । पृणस्व ॥ ४ ॥

हेइन्द्र सुतोभिषुतोयंसोमः असुतात्अकृताभिषवात्सोमादन्यदीयात्वस्यान्वसीयान् वसुमत्तरःप्रशस्यतरः तथा चिकितुषेविदुषेअभिज्ञायतुभ्यं रणायरमणीयाय तदर्थं श्रेयान्श्रेष्ठश्चभवति त्वामतिशयेनरमयितेत्यर्थः हेतितिर्वः शत्रूणांतरितरिन्द्र यज्ञंयजनसाधनमेतं सोमंउपयाहि उपगच्छ तेनचसोमेनविश्वास्तविषीः सर्वाणिबलानिआपृणस्व आपूरय ॥ ४ ॥

४. इन्द्र, अभिषुत सोम अनभिषुत सोम से श्रेष्ठतर है और विचारशाली तुम्हारे लिए अधिक प्रसन्नताकारक है। शत्रु-विजयी इन्द्र, तुम यज्ञ-साधन इस सोम के पास आओ। और इसके द्वारा अपनी सारी शक्तियां सम्पूर्ण करो।

ह्वयामसित्वेन्द्रयाह्यर्वाङरंतेसोमस्तन्वेभवाति ॥
शतक्रतोमादयस्वासुतेषुप्रास्माँअवपृतनासुप्रविक्षु ॥ ५ ॥ १३ ॥

ह्वयामसि । त्वा । आ । इन्द्र । याहि । अर्वाङ् । अरम् । ते ।
सोमः । तन्वे । भवाति । शतक्रतो इति शतऽक्रतो । मादयस्व ।
सुतेषु । प्र । अस्मान् । अव । पृतनासु । प्र । विक्षु ॥ ५ ॥ १३ ॥

हेइन्द्र त्वात्वांह्वयामसिआह्वयामः अतःकारणात्त्वंअर्वाङस्मदभिमुखःसन्आयाहिआगच्छ अस्मदीयःसोमश्च तेतन्वेतवशरीरायअरंपर्याप्तंभवातिभवतु त्वदीयंशरीरंयथाभिलाषं तर्पयत्वित्यर्थः हेशतक्रतो बहुविधकर्मन्निन्द्र त्वंचसुतेष्वभिषुतेष्वस्मदीयेषुसोमेषु मादयस्व तृप्यस्व मदतृप्तियोगे तदनन्तरं पृतनासुसंग्रामेषु अस्मान्प्राव प्रकर्षेणरक्ष नकेवलंपृतनासु किन्तु विक्षुसर्वासुप्रजासु अस्मान्प्राव प्ररक्ष ॥ ५ ॥

५. इन्द्र, हम तुम्हें बुलाते हैं। तुम हमारे सामने आओ। हमारा यह सोम तुम्हारे शरीर के लिए पर्याप्त हो। शतक्रतु इन्द्र, अभिषुत सोम-पान के द्वारा उल्लासित होओ और युद्ध में सब लोगों से हमें चारों ओर से रक्षित करो।

॥ इतिचतुर्थस्यसप्तमेत्रयोदशोवर्गः ॥ १३ ॥

प्रत्यस्माइतिचतुर्ऋचमेकोनविंशंसूक्तं भरद्वाजस्यार्षमैन्द्रं चतुर्थीबृहती शिष्टाअनुष्टुभः तथाचानुक्रान्तं—प्रत्यस्मैचतुष्कमानुष्टुभंबृहत्यन्तमिति । प्रातःसवनेच्छावाकस्यइदमुन्नीयमानसूक्तं सूत्रितंच—प्रत्यस्माइत्युन्नीयमानायानूच्येइति ।

प्रत्यस्मैपिपीषतेविश्वानिविदुषेभर ।
अरंगमायजग्मयेपश्चाद्दघ्वनेनरे ॥ १ ॥

प्रति । अस्मै । पिपीषते । विश्वानि । विदुषे । भर । अरम्ऽगमाय ।
जग्मये । अपश्चात्ऽदघ्वने । नरे ॥ १ ॥

हेअध्वर्यो अस्माइन्द्रायप्रतिभर अभिहर सोमंप्रयच्छेत्यर्थः कीदृशायेन्द्राय पिपीषतेपातुमिच्छते विश्वानिसर्वाणिवेद्यानिविदुषेजानते अरंगमाय पर्याप्तगमनाय जग्मयेयज्ञेषुगमनशीलाय अपश्चाद्दघ्वने दघिर्गतिकर्मा अपश्चाद्गमनाय सर्वेषामग्रगामिने नरेनेत्रेयज्ञानां ॥ १ ॥

१. ऋत्विको, इन्द्र को सोमरस दो; क्योंकि वे पिपासु, सर्वज्ञाता, सर्वगामी, यज्ञ में अधिष्ठाता, यज्ञ के नायक और सबके अग्रगामी हैं।

तृतीयेस्वरसाम्नि निष्केवल्येएमेनमितिस्तोत्रियस्तृचः सूत्रितंच—एमेनंप्रत्येतनेत्याद्योवासवैषामिति ।

एमेनंप्रत्येतनसोमेभिःसोमपातमम् ।
अमत्रेभिर्ऋजीषिणमिन्द्रंसुतेभिरिन्दुभिः ॥ २ ॥

आ । ईम् । एनम् । प्रति॒ऽएतन । सोमेभिः । सोमऽपातमम् ।
अमत्रेभिः । ऋजीषिणम् । इन्द्रम् । सुतेभिः । इन्दुऽभिः ॥ २ ॥

हेअध्वर्यवः सोमेभिःसोमैःकरणभूतैः सोमपातमंअतिशयेनसोमस्यपातारमेनमिन्द्रं आ-अभिमुखंप्रत्येतनप्रतिगच्छत ईमितिनिपातोनर्थकः कीदृशमिन्द्रं अमत्रेभिःअमत्रैः सोमपात्रैः ग्रहचमसादिभिः ऋजीषिणं ऋजीषंशत्रूणामुपार्जकंबलं तद्वन्तं यद्वा ऋजीषिणमित्युत्तरत्रसंबन्धनीयं सुतेभिरभिषुतैरिन्दुभिः सोमैःऋजीषिणं गतसारःसोमऋजीषः तद्वन्तं अथवा अमत्रेभिः अमत्रैरमात्रैरपरिमितैःअभिषुतैःसोमैः ऋजीषिणं ऋजेर्गत्यर्थात् भावसाधनऋजीषशब्दः ततोमत्वर्थीयइनिः संगतमित्यर्थः एवंविधमिन्द्रंप्रतिगच्छतेत्यन्वयः अन्यआह—अमत्रेभिः ग्रहचमसादिगतैः अभिषुतैः सोमैः ऋजीषिणं बलवन्तमेनंइन्द्रंप्रतिगच्छतेति ॥ २ ॥

२. ऋत्विको, तुम सोमरस के साथ, अतिशय सोमरस-पानकारी इन्द्र के पास उपस्थित होओ। अभिषुत सोमरस से भरे हुए पात्र के साथ बलशाली इन्द्र के सम्मुख आओ।

यदींसुतेभिरिन्दुभिःसोमेभिःप्रतिभूषथ ।
वेदाविश्वस्यमेधिरोधृषत्तन्तमिदेषते ॥ ३ ॥

यदि । सुतेभिः । इन्दुऽभिः । सोमेभिः । प्रतिऽभूषथ । वेद ।
विश्वस्य । मेधिरः । धृषत् । तम्ऽतम् । इत् । आ । ईषते ॥ ३ ॥

हेअध्वर्यवः सुतेभिरभिषुतैः इंदुभिरुंदनशीलैः दीप्तैर्वासोमेभिःसोमैः यदिप्रतिभूषथ इन्द्रंप्रतियूयंप्रतिगच्छथ भूषाप्ताप्तावित्यस्यैतद्रूपं तदानींमेधिरोमेधावी मेधोयज्ञस्तद्वान्वासइन्द्रः विश्वस्य विश्वंसर्वंभवदीयंकामंवेद वेत्ति जानाति ज्ञात्वाच धृषत् शत्रूणांधर्षकःसन् तंतमित्तंतंकाममेव एषतेप्रापयति ॥ ३ ॥

३. ऋत्विको, अभिषुत और दीप्त सोमरस के साथ इन्द्र के पास उपस्थित होओ। मेधावी इन्द्र तुम्हारा अभिप्राय जानते हैं और शत्रु-संहार के साथ वह तुम्हारे मनोरथ को पूर्ण करते हैं।

अस्माअस्माइदन्धसोध्वर्योप्रभंरासुतम् ।
कुवित्समस्यजेन्यस्यशर्धतोभिशस्तेरवस्परत् ॥ ४ ॥१४॥

अस्मैऽअस्मै । इत् । अन्धसः । अध्वर्यो इति । प्र । भर । सुतम् ।
कुवित् । समस्य । जेन्यस्य । शर्धतः । अभिऽशस्तेः । अवऽस्परत् ॥ ४॥१४॥

अस्मा अस्माइव अस्माएवेन्द्राय नान्यस्मै हेअध्वर्यो त्वंअन्धसः सोमलक्षणस्यान्नस्य सुतमभिषुतंरसं प्रभर संप्रहर प्रयच्छेतियावत् सचेन्द्रः समस्यसर्वस्यजेन्यस्य जेतव्यस्य शर्धतः उत्सहमानस्यशत्रोः अभिशस्तेः अभिशंसनात् तत्कृताद्धिंसनात्कुविद्बहुशः अवस्परत् अस्मान्पालयतु ॥ ४ ॥

४. ऋत्विक्, एकमात्र इन्द्र को ही सोम-रूप अन्न का अभिषुत रस दो। इन्द्र हमारे सारे उत्साही और जीते जानेवाले रिपुओं के द्वेष से हमारी सदा रक्षा करे।

॥ इतिचतुर्थस्यसप्तमेचतुर्दशोवर्गः ॥ १४ ॥

यस्यत्यदितिचतुर्ऋचंविंशंसूक्तं । भरद्वाजस्यार्षमौष्णिहमैन्द्रं अनुक्रम्यतेच—यस्यौष्णिहमिति । महाव्रतेपिनिष्केवल्येऔष्णिहतृचाशीतावेतत्सूक्तं तथैवपंचमारण्यकेसूत्रितं—यस्यत्यच्छंबरंमदइतित्रयस्तृचागायत्र्यइति ।

यस्यत्यच्छम्बरंमदेदिवोदासायरन्धयः । अयंससोमइन्द्रतेसुतःपिब ॥१॥

यस्य । त्यत् । शंबरम् । मदे । दिवःऽदासाय । रन्धयः । अयम् ।
सः । सोमः । इन्द्र । ते । सुतः । पिब ॥ १ ॥

हेइन्द्र यस्यसोमस्यमदेपानेनजनितेहर्षेसति शंबरमसुरं दिवोदासायराज्ञेरंधयः अहिंसीः यद्वा वशीकृतवानसि रध्यतिर्वशगमनइतियास्कः । त्यदितिक्रियाविशेषणं त्यत्तत्प्रसिद्धं यथा भवतितथाअरन्धयइत्यर्थः हेइन्द्र सोयंसोमस्तेत्वदर्थंसुतोभिषुतः अतस्तंपिब ॥ १ ॥

१. इन्द्र, जिस सोमरस-पान के उल्लास में तुमने, दिवोदास के लिए, शम्बर को वश किया था, वही सोमरस तुम्हारे लिए अभिषुत हुआ है। इसलिए इसे तुम पान करो।

यस्यंतीव्रसुतंमदंमध्यमन्तंचरक्षसे । अयंससोमइन्द्रतेसुतःपिब ॥२॥

यस्य । तीव्रऽसुतम् । मदम् । मध्यम् । अन्तम् । च । रक्षसे ।
अयम् । सः । सोमः । इन्द्र । ते । सुतः । पिब ॥ २ ॥

हेइन्द्र त्वंयस्यसोमस्यअवयवभूतंतीव्रसुतंतीक्ष्णंसुतमभिषवोयस्यसतीव्रसुतः प्रातःसवनिकः तंमदंमदकरंसोमरसं मध्यं मध्यंदिनसवनगतं अंतं तृतीयसवनगतंचसोमरसं रक्षसे रक्षसि सोयंसोमस्त्वदर्थमभिषुतस्तंपिबेति ॥ २ ॥

२. इन्द्र, जब सोम का मादक रस, प्रातः, मध्याह्न और सायं की पूजा में अभिषुत होता है, तब तुम इसे धारण करते हो। यही सोमरस तुम्हारे लिए अभिषुत हुआ है। इसे पान करो।

यस्यगाअन्तरश्मनोमदेदृळ्हाअवासृजः।
अयंससोमइन्द्रतेसुतःपिब ॥ ३ ॥

यस्य । गाः । अन्तः । अश्मनः । मदे । दृळ्हाः । अव्ऽअसृजः ।
अयम् । सः । सोमः । इन्द्र । ते । सुतः । पिब ॥ ३ ॥

यस्यसोमस्यमदेमदकरेरसेपीतेसति अश्मनः बलासुरेणनिहितस्यपर्वतस्यअन्तर्मध्येवि-घमानाः दृळ्हाः दृढपिधानाश्चगाःपणिभिरपहृताः अवासृजः बलस्यबन्धनाद्यसृजः ससोम-इत्यादिगतं ॥ ३ ॥

३. इन्द्र, जिस सोम के मादक रस का पान करके तुमने पर्वत के बीच, अच्छी तरह से बँधी हुई गायों को छुड़ाया था, वही सोमरस तुम्हारे लिए अभिषुत है इसे पान करो।

यस्यमन्दानोअन्धसोमाघोनंदधिषेशवः।
अयंससोमइन्द्रतेसुतःपिब ॥ ४ ॥ १५ ॥

यस्य । मन्दानः । अन्धसः । माघोनम् । दधिषे । शवः । अयम् ।
सः । सोमः । इन्द्र । ते । सुतः । पिब ॥ ४ ॥ १५ ॥

हेइन्द्र त्वंयस्यअन्धसःसोमलक्षणस्यान्नस्यपानेनमन्दानोमदमानः हृष्टःसन् माघोनंऐ-न्द्रंशवः असाधारणंबलं दधिषे धारयसि येनसोमेन तवेन्द्रत्वंजातमित्यर्थः सोयंसोमः सुतो-भिषुतस्तंपिब ॥ ४ ॥

४. इन्द्र, जिस सोमरूप अन्न के रस-पान से उल्लसित होकर तुम असाधारण बल को धारण करते हो, वही सोमरस तुम्हारे लिए अभि-षुत हुआ है। इसे पान करो।

॥ इतिषष्ठेमंडलेतृतीयोनुवाकः ॥ ३ ॥

चतुर्थेनुवाकेषट्सूक्तानि तत्रयोरयिवइतिचतुर्विंशत्यृचंप्रथमंसूक्तं बृहस्पतिपुत्रस्यशंयोरार्षं ऐन्द्रं आदितःषळनुष्टुभः सप्तम्यष्टमीनवम्योविराजः अष्टम्यैकैववाविराट् शिष्टास्त्रिष्टुभः तथाचा-नुक्रान्तं—योरयिवश्चतुर्विंशतिःशंयुर्बार्हस्पत्योह्यादौषळनुष्टुभस्तिस्रश्चविराजोमध्यमैववासामिति। गतःसूक्तविनियोगः।

योरयिवोरयिन्तमोयोद्युम्नैर्द्युम्नवत्तमः।
सोमःसुतःसइन्द्रतेस्तिस्वधापतेमदः ॥ १ ॥

यः । रयिऽवः । रयिम्ऽतमः । यः । द्युम्नैः । द्युम्नवत्ऽतमः ।
सोमः । सुतः । सः । इन्द्र । ते । अस्ति । स्वधाऽपते । मदः ॥ १ ॥

हेरयिवोधनवन्निन्द्र यःसोमःरयिन्तमःअतिशयेनरयिमान् धनवान् यश्चद्युम्नैर्द्योतमानैर्यशोभिः द्युम्नवत्तमोतिशयेनयशस्वी हेस्वधापते स्वधायाःअन्नस्यसोमलक्षणस्यपालकेन्द्र ससोमोभिषुतः सन् तेतवमदःमदकरःअस्ति भवति ॥ १ ॥

१. हे धनशाली और सोमरूप अन्न के रक्षक इन्द्र, जो सोम अतिशय धनशाली है और जो दीप्त यश के द्वारा समुज्ज्वल है, वही सोम अभिषुत होकर तुम्हें उल्लसित करता है।

यःशग्मस्तुविशग्मतेरायोदामामतीनाम् ।
सोमःसुतःसइन्द्रतेस्तिस्वधापतेमदः ॥ २ ॥

यः । शग्मः । तुविऽशग्म । ते । रायः । दामा । मतीनाम् ।
सोमः । सुतः । सः । इन्द्र । ते । अस्ति । स्वधाऽपते । मदः ॥ २ ॥

हेतुविशग्म बहुसुखेन्द्र यःशग्मःसुखकरः तेत्वदीयःसोमः मतीनांस्तोतॄणांरायोधनस्यदामा दाताभवति हेस्वधापतेइन्द्र ससोमोभिषुतस्तवमदकरोभवति ॥ २ ॥

२. हे विपुल-सुखकारी और सोमरूप अन्न के रक्षाकारी इन्द्र, जो सोम तुम्हारा प्रसन्नता-कारक और तुम्हारे स्तोताओं का ऐश्वर्य-विधायक है, वही सोम अभिषुत होकर तुम्हें उल्लसित करता है।

येनवृद्धोनशवसातुरोनस्वाभिरूतिभिः ।
सोमःसुतःसइन्द्रतेस्तिस्वधापतेमदः ॥ ३ ॥

येन । वृद्धः । न । शवसा । तुरः । न । स्वाभिः । ऊतिऽभिः ।
सोमः । सुतः । सः । इन्द्र । ते । अस्ति । स्वधाऽपते । मदः ॥ ३ ॥

उभौनशब्दौसमुच्चयार्थौ येनपीतेनसोमेनवृद्धोनप्रवृद्धश्चसन्स्वाभिरूतिभिःआत्मीयैर्मरुद्भिः सार्धं शवसाबलेनतुरःशत्रूणांहिंसकश्चभवसि ससोमइत्यादिपूर्ववत् ॥ ३ ॥

३. हे सोमरूप अन्न के रक्षक, इन्द्र, जिस सोम के पान से प्रवृद्ध-बल होकर, अपने रक्षक मरुतों के साथ, रिपु-विनाश करते हो, वही सोम अभिषुत होकर तुम्हें उल्लसित करता है।

पृष्ठ्यषडहस्यचतुर्थेहनिप्रउगशस्त्रेत्यमुवइत्यैन्द्रस्तृचः सूत्रितंच—त्यमुवोअप्रहणमपत्वंवृजिनरिपुमिति ।

त्यमुवोअप्रहणंगृणीषेशवसस्पतिम् ।
इन्द्रंविश्वासाहंनरंमंहिष्ठंविश्वचर्षणिम् ॥ ४ ॥

त्यम् । ॐ इति॑ । वः॒ । अप्र॑ऽहनम् । गृ॒णी॒षे । शव॑सः । पति॑म् ।
इन्द्र॑म् । वि॒श्व॒ऽसह॑म् । नर॑म् । मंहि॑ष्ठम् । वि॒श्वऽच॑र्षणिम् ॥ ४ ॥

हेऋत्विग्यजमानाः वोयुष्मदर्थं त्यमुतमेवेन्द्रंगृणीषे स्तौमि यद्वा वोयूयंगृणीषे गृणीत स्तुत वचनव्यत्ययः कीदृशमिन्द्रं अप्रहणं अप्रहन्तारंभक्तानामनुग्राहकं शवसोबलस्यपतिं पालकं विश्वासाहं विश्वस्यशत्रोरभिभवितारं नरंनेतारं मंहिष्ठंदातृतमं विश्वचर्षणिं सर्वस्यद्रष्टारं ॥ ४ ॥

४. यजमानो, हम तुम्हारे लिए उन इन्द्र की स्तुति करते हैं, जो भक्तों के कृपालु, बल के स्वामी, विश्वजेता, यागादि क्रियाओं के नायक और श्रेष्ठ दाता तथा सर्व-दर्शक हैं।

यंव॒र्धय॒न्तीद्गिर॒ःपतिं॑तु॒रस्य॒राध॑सः ।
तमिन्न्व॑स्य॒रोद॑सीदे॒वीशुष्मं॑सपर्यतः ॥ ५ ॥ १६ ॥

यम् । व॒र्धय॑न्ति । इत् । गिर॑ः । पति॑म् । तु॒रस्य॑ । राध॑सः । तम् ।
इत् । नु । अ॒स्य॒ । रोद॑सी॒ इति॑ । दे॒वी इति॑ । शुष्म॑म् । स॒प॒र्य॒तः ॥ ५॥१६॥

गिरःस्तुतयःइन्द्रसंबन्धिनंयमित् यमेवशुष्मंबलंवर्धयन्ति कीदृशंपतिं ईश्वरं कस्यतुरस्य हिंसकस्यशत्रोराधसोधनस्यशत्रुधनानामपहर्तारमित्यर्थः अस्येन्द्रस्यतमित् तमेवशुष्मंशोषकं बलं देवीदेवनशीलेरोदसी द्यावापृथिव्यौ नुक्षिप्रंसपर्यतः परिचरतः ॥ ५ ॥

५. हमारी स्तुतियों द्वारा इन्द्र का जो शत्रु-धन-हरण करनेवाला बल वर्द्धित होता है, उसी बल की परिचर्या स्वर्गदेव और पृथ्वी-देवी करती हैं।

॥ इतिचतुर्थस्यसप्तमेषोडशोवर्गः ॥ १६ ॥

अथषष्ठी—

तद्वंउ॒क्थस्य॑ब॒र्हणेन्द्रा॑योपस्तृणी॒षणि॑ ।
विपो॒नयस्यो॒तयो॒वियद्रोह॑न्तिस॒क्षितः ॥ ६ ॥

तत् । व॒ः । उ॒क्थस्य॑ । ब॒र्हणा॑ । इन्द्रा॑य । उ॒प॒ऽस्तृ॒णी॒षणि॑ ।
विप॑ः । न । यस्य॑ । ऊ॒तय॑ः । वि । यत् । रोह॑न्ति । स॒ऽक्षित॑ः ॥ ६ ॥

हेस्तोतारः वोयुष्मदीयस्योक्थस्यस्तोत्रस्यतद्बर्हणा बहुत्वंमाहात्म्यं इन्द्राय इन्द्रार्थं उपस्तृणीषणि उपस्तरणीयं उपेत्यविस्तरणीयं इन्द्रोयथास्तोत्रस्यमाहात्म्यंजानीयात् तथाविस्तारयतइत्यर्थः यस्येन्द्रस्य ऊतयोरक्षाःविपोनमेधाविनइवभवन्ति सर्वकार्यकुशलाइत्यर्थः यद्वाने-

तिपूरकः विप्रोविप्रस्यमेधाविनोयस्येन्द्रस्येतियोज्यं यत्यस्मिन्चेन्द्रेसक्षितः समाननिवासाः सं-हताऊतयः विरोहन्ति प्रादुर्भवंति तस्माइन्द्रायेत्यर्थः ॥ ६ ॥

६. स्तोताओ, इन्द्र के लिए अपना स्तोत्र विस्तृत करो; क्योंकि मेघावी व्यक्ति की भाँति तुम्हारी रक्षा इन्द्र के साथ है।

अविंदद्दक्षंमित्रोनवीयान्पपानोदेवेभ्योवस्योअचैत् ।
ससवान्स्तौलाभिर्धौतरीभिरुरुष्यापायुरभवत्सखिभ्यः ॥७॥

अविंदत् । दक्षम् । मित्रः । नवीयान् । पपानः । देवेभ्यः । वस्यः ।
अचैत् । ससऽवान् । स्तौलाभिः । धौतरीभिः । उरुष्या । पायुः ।
अभवत् । सखिऽभ्यः ॥ ७ ॥

सइन्द्रः दक्षंकर्मसुसमर्थं प्रवृद्धंवायष्टारं अविदत् जानाति कीदृशःमित्रोमित्रभूतः नवी-यान्नवतरः कल्याणतरःस्तुत्यतरोवा सचपपानःसोमंपिबन् देवेभ्यःस्तोतृभ्यः वस्योवसीयः श्रे-ष्ठंधनंअचैत्चिनोति उपचितंकरोति ददातीतियावत् अपिच ससवान्ससमित्यन्ननाम हविर्ल-क्षणान्नोपेतःसइन्द्रः स्तौलाभिःस्थूलाभिःप्रवृद्धाभिः धौतरीभिःकंपनकारिणीभिर्वडवाभिः ईदृ-शैर्मरुद्भिर्वायुक्तःसन् सखिभ्यःस्तोतृभ्यःउरुष्यारक्षणेच्छयाआगत्यपायुरभवत् रक्षकोभवति यद्वा ससवानितिसनतेःक्वसौरूपं स्तौलाभिर्धौतरीभिःससवान्संभजमानइतिसंबंधः ॥ ७ ॥

७. जो यजमान यज्ञादि कार्य में दक्ष हैं, उसकी बातें इन्द्र जानते हैं। मित्र और नवीनतर सोम का पान करनेवाले इन्द्र स्तोताओं को श्रेष्ठ धन प्रदान करते हैं। हव्य-रूपी अन्न भोजन करनेवाले वह इन्द्र प्रवृद्ध और पृथ्वी को कँपानेवाले अश्वों के साथ स्तोताओं की रक्षा की इच्छा से आकर उनकी रक्षा करते हैं।

ऋतस्यपथिवेधाअपायिश्रियेमनांसिदेवासोअक्रन् ।
दधानोनाममहोवचोभिर्वपुर्दृशयेवेन्योव्यावः ॥ ८ ॥

ऋतस्य । पथि । वेधाः । अपायि । श्रिये । मनांसि । देवासः ।
अक्रन् । दधानः । नाम । महः । वचःऽभिः । वपुः । दृशये । वेन्यः ।
वि । आवरित्यावः ॥ ८ ॥

ऋतस्ययज्ञस्यपथि मार्गे वेधाः विधाता सर्वस्यद्रष्टासोमः अपायि इन्द्रेणपीतोभूत् यद्वा वेधा विधाता इन्द्रःअपायि सोमंपिबतु व्यत्ययेनकर्तरिचिण् तस्मिन्सोमेइन्द्रस्यमनांसि श्रिये श्रयितुं देवाःस्तोतारऋत्विजः अक्रन् कर्माणिकुर्वन्ति सचेन्द्रःनाम शत्रूणांनामकं महोमहत्वआ-त्मीयंवपुःशरीरंदधानोधारयन् वचोभिः स्तुतिभिः वेन्योवननीयःसंभजनीयश्चसन्दृशयेदर्शनार्थं

व्यावःविवृणोतु प्रकाशयतु अनुकूलंतेजइतिशेषः यद्वा वेन्यइतिवेनतेःकान्तिकर्मणोरूपं वपुरि-
तिचरूपनाम वेन्यःकमनीयः वपुःभास्वरंरूपं दर्शयेदर्शनार्थं व्यावः विवृणोतु वचोभिःस्तूयमानः
सन् ॥ ८ ॥

८. यज्ञमार्ग में सर्वदर्शी सोम पिया गया है। ऋत्विक् लोग उसी सोम को, इन्द्र का चित्त आकृष्ट करने के लिए प्रदर्शित करते हैं। शत्रुजेता और विशाल देह धारण करनेवाले वही इन्द्र हमारे स्तव से प्रसन्न होकर हमारे सामने प्रकट हों।

द्युमत्तमंदक्षंधेह्यस्मेसेधाजनानांपूर्वीरराती:।
वर्षीयोवयःकृणुहिशचीभिर्धनस्यसातावस्माँअविड्ढि ॥ ९ ॥

द्युमत्ऽतमम्। दक्षम्। धेहि। अस्मे इति। सेध। जनानाम्। पूर्वीः।
अरातीः। वर्षीयः। वयः। कृणुहि। शचीभिः। धनस्य। सातौ।
अस्मान्। अविड्ढि ॥ ९ ॥

हेइन्द्र द्युमत्तमं दीप्तिमत्तमं दक्षंबलंअस्मेअस्मासुधेहि धारय जनानांस्तोतॄणामस्माकं
पूर्वीर्बह्वीररातीः शत्रुसेनाः सेध निषेध निवारय अपिचास्माकं वर्षीयःवृद्धतरं वयोन्नं शचीभि-
रात्मीयाभिः प्रज्ञाभिः कृणुहिकुरु तथाधनस्यसातौसंभजनेअस्मान्अविड्ढि गमय यद्वाधनस्य
संभजनार्थंअस्मान्रक्ष ॥ ९ ॥

९. इन्द्र, तुम हमें अतीव दीप्ति से युक्त बल दो। अपने उपासकों के असंख्य शत्रुओं को दूर करो। अपनी बुद्धि से हमें यथेष्ट अन्न दो। धन का भोग करने के लिए हमारी रक्षा करो।

इन्द्रतुभ्यमिन्मघवन्नभूमवयंदात्रेहरिवोमाविवेनः।
नकिरापिर्ददृशेमर्त्यत्राकिमङ्गरध्रचोदनंत्वाहुः ॥ १० ॥ १७ ॥

इन्द्र। तुभ्यम्। इत्। मघऽवन्। अभूम। वयम्। दात्रे।
हरिऽवः। मा। वि। वेनः। नकिः। आपिः। ददृशे। मर्त्यऽत्रा।
किम्। अङ्ग। रध्रऽचोदनम्। त्वा। आहुः ॥ १० ॥ १७ ॥

हेमघवन् धनवन्निन्द्र दात्रेकामानांदात्रे तुभ्यमित् तुभ्यमेव वयंशेषभूताअभूम यद्वा त्व-
दर्थमेवदात्रे हविषांदानेवर्तमानाः अभूम हेहरिवः हरिवन्निन्द्र अतःकारणात्माविवेनः माविग-
तकामोभूः अस्मान्सर्वदाकामयस्व वेनतिःकान्तिकर्मा मर्त्यत्रा मर्त्येषुमनुष्येषुमध्ये आपिर्बन्धुः
त्वत्तोन्यःकश्चिदपिनकिर्ददृशे नैवदृश्यते किमनेनविशेषकथनेन अंग हेइन्द्र त्वा त्वां रध्रचोदन
रध्रस्यराधकस्यसमृद्धस्यधनस्यचोदनं चोदयितारं आहुः कथयन्ति पुराजाः ॥ १० ॥

॥ इतिचतुर्थस्यसप्तमेसप्तदशोवर्गः ॥ १७ ॥

१०. धनशाली इन्द्र, तुम्हारे लिए ही हम हव्य दे रहे हैं। अश्वों के स्वामी इन्द्र, हमारे प्रतिकूल नहीं होना। मनुष्यों के बीच हम तुम्हारे सिवा किसी को अपना मित्र नहीं देखते। इन्द्र, यदि तुम्हारे अन्दर यह गुण नहीं रहता, तो तुम्हें प्राचीन लोग "धनद" क्यों कहते ?

माजस्वनेवृषभनोररीथामातेरेवतःसख्येरिषाम ।

पूर्वीष्टइन्द्रनिष्षिधोजनेषुजह्यसुष्वीन्प्रवृहापृणतः ॥ ११ ॥

मा । जस्वने । वृषभ । नः । ररीथाः । मा । ते । रेवतः । सख्ये । रिषाम । पूर्वीः । ते । इन्द्र । निःऽसिधः । जनेषु । जहि । असुस्वीन् । प्र । वृह । अपृणतः ॥ ११ ॥

हेवृषभ कामानांवर्षितरिन्द्र जस्वने जसिरुपक्षयकर्मा उपक्षयित्रे राक्षसादये नोस्मान् माररीथाः मादाः रेवतोधनवतस्तेतवसख्येसखित्वेवर्तमानावयंमारिषाम हिंसितामाभूम हेइन्द्र तेत्वदीयाःपूर्वीःबह्वीः निःषिधःनिःषेधाः निवारणानिजनेषुशत्रुषुनिहिताःसन्ति यद्वा निःषिधो-निषेधार्थारज्जवः ताःशत्रुजनेषुतवबह्व्योविद्यन्ते अतःकारणात् असुस्वीन्अनभिषोतॄन्अयजमानान्जहि मारय अपृणतः हवींष्यप्रयच्छतश्चप्रवृह उन्मूलय पृणदानेइतिधातुः ॥ ११ ॥

११. अभीष्ट-वर्षी इन्द्र, तुम हमें कार्य-विनाशक राक्षसादिकों के पास नहीं छोड़ना। तुम धनयुक्त हो। तुम्हारे बन्धुत्व के ऊपर अव-लम्बित होकर हम कोई विघ्न न पावें। मनुष्यों के बीच तुम्हारे लिए अनेक प्रकार के विघ्न उत्पन्न किये जाते हैं। जो अभिषवकर्त्ता नहीं हैं, उनका संहार करो और जो तुम्हें हव्य नहीं देते, उनका विनाश करो।

उदभ्राणीवस्तनयन्नियर्तीन्द्रोराधांस्यश्व्यानिगव्या ।

त्वमसिप्रदिवःकारुधायामात्वादामानआदभन्मघोनः ॥ १२ ॥

उत् । अभ्राणिऽइव । स्तनयन् । इयर्ति । इन्द्रः । राधांसि । अश्व्यानि । गव्या । त्वम् । असि । प्रऽदिवः । कारुऽधायाः । मा । त्वा । अदामानः । आ । दभन् । मघोनः ॥ १२ ॥

अभ्राणीवस्तनयन्गर्जयन्पर्जन्यःयथामेघान्उद्गमयति एवमिन्द्रःअश्व्यानि अश्वसंबन्धीनि गव्यागव्यानिगोसंबन्धीनि एतत्समूहद्वयरूपाणि राधांसिधनानि उदियर्ति उदीरयति उद्गमयति स्तोतृभ्योदातुं उत्तरार्धःप्रत्यक्षकृतः हेइन्द्र प्रदिवःपुराणस्त्वं कारुधायाःकारूणांस्तोतॄणांधार-यितासि भवसि तादृशंत्वात्वांमघोनोधनवन्तःकृपणाः अदामानःहविषामदातारःमाआदभन् माहिंसिषुः यद्वावचनव्यत्ययः मघवानंधनवन्तंत्वामितिसंबंधः ॥ १२ ॥

१२. गर्जन करनेवाले पर्जन्य जैसे मेघ उत्पन्न करते हैं, वैसे ही इन्द्र स्तोताओं को देने के लिए अश्व और गायें उत्पन्न करते हैं। इन्द्र, तुम स्तोताओं के प्राचीन रक्षक हो। तुम्हें हव्य न देकर धनी लोग तुम्हारे प्रति अन्यथा आचरण न करें।

अध्वर्यो वीर प्र महे सुतानामिन्द्राय भर स ह्यस्य राजा।
यः पूर्व्याभिरुत नूतनाभिर्गीर्भिर्वावृधे गृणतामृषीणाम् ॥ १३ ॥

अध्वर्यो इति। वीर। प्र। महे। सुतानाम्। इन्द्राय। भर।
सः। हि। अस्य। राजा। यः। पूर्व्याभिः। उत। नूतनाभिः।
गीःऽभिः। वव्रधे। गृणताम्। ऋषीणाम् ॥ १३ ॥

हेवीर हविषांविशेषेणप्रेरयितरध्वर्यो महेमहतेअस्मैइन्द्रायसुतानां कर्मणिषष्ठी सुतानभिषुतान्सोमान्प्रभर प्रहर प्रगमय सहिखल्विन्द्रःअस्यसोमस्यराजास्वामीभवति यइन्द्रः पूर्व्याभिः पूर्वकालेकृताभिः उतापिच नूतनाभिःइदानींक्रियमाणाभिः गृणतांस्तुवतांऋषीणांसंबन्धिनीभिर्गीर्भिः उभयविधाभिःस्तुतिभिर्वावृधेवर्धते सइन्द्रः यस्मात्सोमस्यराजातस्मादस्मैसोमःप्रदेयइत्यर्थः ॥१३ ॥

१३. ऋत्विको, तुम इन्हीं महेन्द्र को अभिषुत सोम अर्पित करो; क्योंकि ये ही सोम के स्वामी हैं। यही इन्द्र स्तोता ऋषियों के प्राचीन और नवीन स्तोत्रों के द्वारा परिवर्द्धित हुए हैं।

प्रथमेरात्रिपर्यायेमैत्रावरुणस्यअस्यमदइतिशस्त्रयाज्या सूत्रितंच—अस्यमदेपुरुवर्पांसिविद्वानितियाज्येति।

अस्य मदे पुरु वर्पांसि विद्वानिन्द्रो वृत्राण्यप्रती जघान।
तमु प्र होषि मधुमन्तमस्मै सोमं वीराय शिप्रिणे पिबध्यै ॥ १४ ॥

अस्य। मदे। पुरु। वर्पांसि। विद्वान्। इन्द्रः। वृत्राणि।
अप्रति। जघान। तम्। ऊँ इति। प्र। होषि। मधुऽमन्तम्।
अस्मै। सोमम्। वीराय। शिप्रिणे। पिबध्यै ॥ १४ ॥

अस्यसोमस्यपानेनमदेहर्षे सति विद्वानभिज्ञइन्द्रः पुरुपुरूणिबहूनिवर्पांसि आवरकाणिवृत्राणिशत्रूनप्रतिस्वयमन्यैरप्रतिगतःसन् जघान हतवान् यद्वा वर्पइतिरूपनाम बहूनि वर्पांसिअसुरमाययानिर्मितानि रूपाणि विद्वान्जानन्निन्द्रः वृत्राण्यावरकाणिरक्षःप्रभृतीनि इतःपूर्वमन्यैरप्रतिगतानि जघानहतवान् मधुमन्तंमाधुर्यवन्तंतमुतमेवसोमंशिप्रिणेशोभनहनुकायअस्मैवीराय शत्रूणांवारयित्रेइन्द्राय पिबध्यैपातुंप्रहोषि हेअध्वर्योप्रजुहुधि ॥ १४ ॥

१४. ज्ञानी और अबाध प्रभाव इन्द्र ने इसी सोम का पान कर और उल्लसित होकर असंख्य प्रतिकूल आचरण करनेवाले शत्रुओं का विनाश किया है।

द्वितीयेरात्रिपर्यायेमैत्रावरुणस्यैवपातासुतमितिशस्त्रयाज्या सूत्रितंच-पातासुतमिन्द्रोअस्तुसोमंहन्तावृत्रमितियाज्येति ।

पातासुतमिन्द्रोअस्तुसोमंहन्तावृत्रंवज्रेणमन्दसानः ।
गंतायज्ञंपरावतश्चिदच्छावसुर्धीनामविताकारुधायाः ॥ १५ ॥

पाता । सुतम् । इन्द्रः । अस्तु । सोमम् । हन्ता । वृत्रम् । वज्रेण ।
मन्दसानः । गन्ता । यज्ञम् । पराऽवतः । चित् । अच्छ । वसुः ।
धीनाम् । अविता । कारुऽधायाः ॥ १५ ॥ १८ ॥

अयमिन्द्रः सुतमभिषुतंसोमंपातास्तु साधुपाताभवतु साधुकारिणितृन् अतएवनलोकाव्ययेतिषष्ठीषतिषेधाद्द्वितीया एवंहन्तेत्यादावपिद्रष्टव्यं तेनचसोमेनमन्दसानः माद्यन्वज्रेणायुधेनवृत्रमावरकंशत्रुंहन्तास्तु भवतु एतदुभयार्थंपरावतश्चित् दूरदेशादपियज्ञमच्छअस्मदीयंयज्ञमभिगन्ताभवतु दूरदेशस्थोपिशीघ्रमस्मद्यज्ञेसोमपानायागच्छत्वित्यर्थः कीदृशइन्द्रः वसुःसर्वेषांनिवासयिता धीनांध्यातॄणांस्तोतॄणांकर्मणांवाअवितारक्षिता कारुधायाःकारूणांकर्तॄणांयजमानानां धारयिता ॥ १५ ॥

१५. इन्द्र इस अभिषुत सोम का पान करें और इससे उल्लसित होकर वज्र-द्वारा वृत्र का संहार करें। गृहदाता, स्तोतृरक्षक और यजमान-पालक वह इन्द्र दूर देश से भी हमारे यज्ञ में आवें।

॥ इतिचतुर्थस्यसप्तमेष्टादशोवर्गः ॥ १८ ॥

तृतीयेरात्रिपर्यायेप्रशास्तुरिदंत्यदितिशस्त्रयाज्या सूत्रितंच—इदंत्यत्पात्रमिन्द्रपानमितियाज्येति ।

सैषासूक्तेषोडशी—

इदंत्यत्पात्रमिन्द्रपानमिन्द्रस्यप्रियममृतमपायि ।
मत्सद्यथासौमनसायदेवंव्य१स्मद्द्वेषोयुयवद्व्यंहः ॥ १६ ॥

इदम् । त्यत् । पात्रम् । इन्द्रऽपानम् । इन्द्रस्य । प्रियम् ।
अमृतम् । अपायि । मत्सत् । यथा । सौमनसाय । देवम् ।
वि । अस्मत् । द्वेषः । युयवत् । वि । अंहः ॥ १६ ॥

पात्रंपातव्यंइन्द्रपानं इन्द्रस्यपानार्हं इन्द्रस्यप्रियंअनुकूलं त्यवत्तदिदंसोमात्मकममृतंअपायि इन्द्रःपिबतु व्यत्ययेनकर्तरिचिण् यद्वा एतदमृतंअपायि इन्द्रेणपीयतां यथायेनप्रकारेणपीतःसोमः सौमनसायसुमनस्त्वायदेवमिन्द्रं मत्सत्मादयेत् तथापीयतामित्यर्थः सपीतसोमइन्द्रः द्वेषोद्वेष्टॄन्अस्मत्अस्मत्तःवियुयवत् वियोजयतु अंहःपापंचअस्मत्तोवियोजयतु ॥ १६ ॥

१६. इन्द्र के पीने के योग्य और प्रिय यह सोम-रूप अमृत इन्द्र के द्वारा इस प्रकार पिया जाय कि वे उल्लसित होकर हमारे ऊपर अनुग्रह करें और हमारे शत्रुओं तथा पाप को हमसे दूर करें।

एनामन्दानोजहिशूरशत्रूंञामिमजामिंमघवन्नमित्रान् ।
अभिषेणाँअभ्या३देदिशानान्पराचइन्द्रप्रमृणाजहीच ॥१७॥

एना । मन्दानः । जहि । शूर । शत्रून् । जामिम् । अजामिम् ।
मघऽवन् । अमित्रान् । अभिऽसेनान् । अभि । आऽदेदिशानान् ।
पराचः । इन्द्र । प्र । मृण । जहि । च ॥ १७ ॥

हेमघवन् धनवन् शूर शौर्यवन्निन्द्र एनाएनेनप्रकृतेनानेनसोमेनमन्दानोमन्दमानोमाद्यन् जामिंज्ञातिंअजामिंतद्विलक्षणं एवमुभयविधानमित्रान्अस्मत्प्रतिकूलाचरणपरान्शत्रून् जहि हिंसितान्कुरु किंच अभिषेणान्प्रत्यभिगताःसेनायेषांतादृशान् अस्मदभिमुखंआदेदिशानान् आयुधानिपुनःपुनःआदिशतोविसृजतःशत्रूंश्च हेइन्द्र पराचः प्रमृणवेयथापराङ्मुखाभवन्ति तथाबाधस्व तदनन्तरंतान्जहिच ॥ १७ ॥

१७. शौर्यशाली इन्द्र, इस सोम के पान से प्रसन्न होकर हमारे आत्मीय और अनात्मीय प्रतिकूलाचरण-कर्ता शत्रुओं का विनाश करो। इन्द्र, हमारे सामने आये हुए अस्त्र छोड़नेवाले शत्रु-सैन्यों को पराङमुख और उच्छिन्न करो।

आसुष्मांणोमघवन्निन्द्रपृत्स्व१स्मभ्यंमहिवरिवःसुगंकः ।
अपांतोकस्यतनंयस्यजेषइन्द्रसूरीन्कृणुहिस्मांनोअर्धम् ॥ १८ ॥

आसु । स्म । नः । मघऽवन् । इन्द्र । पृत्ऽसु । अस्मभ्यम् ।
महि । वरिवः । सुऽगम् । करितिकः । अपाम् । तोकस्य । तनयस्य ।
जेषे । इन्द्र । सूरीन् । कृणुहि । स्म । नः । अर्धम् ॥ १८ ॥

हेमघवन् धनवन्निन्द्र नोस्मदीयासु आसुपृत्सुपृतनासुसंग्रामेषु अस्मभ्यंमहिमहत् सुगं सुखेनप्राप्यं वरिवोधनं कःकुरु स्मेतिपूरणः अपिच हेइन्द्र अपांआप्तव्यानांधनानांउदकानांवा

तोकस्यपुत्रस्यतनयस्यपौत्रस्यच जेषे जयार्थंसूरीन्स्तोतॄन्नोस्मान्अर्धंअर्धानसमृद्धान्कृणुहि कुरु यद्वा अर्धकारिणः शत्रूणांखंडयितॄन् कुरु स्मेतिपूरकः ॥ १८ ॥

१८. इन्द्र, हमारे इस सारे संग्राम में अतुल धन हमें सुलभ करो। जय-प्राप्ति में हमें समर्थ बनाओ। वर्षा, पुत्र और पौत्र के द्वारा हमें समृद्ध करो।

आत्वाहर॑यो॒वृष॑णोयुजा॒नावृष॑रथासो॒वृष॑रश्म॒योत्याः॑ ।
अ॒स्म॒त्रांचो॒वृष॑णोवज्र॒बाहो॒वृष्णे॒मदा॑यसु॒युजो॑वहन्तु ॥ १९॥

आ । त्वा॒ । हर॑यः । वृष॑णः । यु॒जा॒नाः । वृष॑ऽरथासः । वृष॑ऽरश्मयः ।
अत्याः॑ । अ॒स्म॒ऽत्राञ्चः॑ । वृष॑णः । व॒ज्र॒ऽवा॒हः॑ । वृष्णे॑ । मदा॑य ।
सु॒ऽयुजः॑ । व॒ह॒न्तु॒ ॥ १९ ॥

हेइन्द्र त्वात्वांहरयोश्वाः वृष्णेवर्षित्रेमदायमदकरायसोमायईदृशंसोमंपाययितुंआवहन्तु कीदृशाअश्वाः वृषणःकामानांवर्षितारः युजानाःस्वयमेवरथेयुज्यमानाः वृषरथासःवृषाकामाभिवर्षकोरथोयेषांतेतथोक्ताः वृषरश्मयः वर्षितारोरश्मयःप्रग्रहायेषांतादृशाः अत्याःसततगामिनःअस्मत्रांचःअस्मान्प्रत्यंचन्तोगच्छन्तःवृषणोनित्यतरुणाः वज्रवाहःवज्रादीन्यायुधानिवहन्तः सुयुजःशोभनयोजनाः ॥ १९ ॥

१९. इन्द्र, तुम्हारे अभीष्ट-वर्षक, स्वेच्छा के अनुसार रथ में नियुक्त, अभीष्ट-दाता रथ के ढोनेवाले, वारिवर्षक, किरणों-द्वारा संयुक्त, द्रुतगामी, हमारे सामने आनेवाले, नित्य तरुण, वज्र-वाहक और शोभन रूप से योजित अश्व बहुत नशा करनेवाले सोम को पीने के लिए तुम्हें ले आवें।

आतेवृ॑ष॒न्वृष॑णो॒द्रोण॑मस्थुर्घृ॒तप्रु॑षो॒नोर्मयो॒मद॑न्तः ।
इन्द्र॒प्रतु॒भ्यं॒वृष॑भिः॒सु॒ता॒नां॒वृष्णे॑भरन्ति॒वृष॒भाय॒सोम॑म् ॥२०॥१९॥

आ । ते॒ । वृ॒ष॒न् । वृष॑णः । द्रोण॑म् । अ॒स्थुः॒ । घृ॒त॒ऽप्रुषः॑ । न ।
ऊ॒र्मयः॑ । मद॑न्तः । इन्द्र॑ । प्र । तु॒भ्य॑म् । वृष॑ऽभिः । सु॒ताना॑म् ।
वृष्णे॑ । भ॒र॒न्ति॒ । वृ॒ष॒भाय॑ । सोम॑म् ॥ २० ॥ १९ ॥

हेवृषन् कामानांवर्षितरिन्द्र वृषणःसेक्तारोयुवानःत्वदीयाअश्वाःघृतप्रुषोनोर्मयः घृतमुदकंसिंचन्तः सामुद्राःतरंगाइवमदन्तः हृष्यन्तः मत्ताःसन्तःतेत्वदीयंद्रोणंद्रुममयंरथंआस्थुः आस्थितवन्तः अतस्त्वमागच्छेतिभावः कुतइत्यतआह हेइन्द्र वृष्णेयूनेनित्यतरुणायवृषभायकामानांवर्षयित्रेतुभ्यं वृषभिःकामाभिवर्षकैः ग्रावभिःसुतानामभिषुतानांसोमानांमध्येत्वद्भागरूपंसोमंयस्मादध्वर्यवः प्रभरन्ति प्रहरन्ति होमार्थंप्रणयन्ति तस्मादागच्छेत्यर्थः ॥ २० ॥

॥ इतिचतुर्थस्यसप्तमेएकोनविंशोवर्गः ॥ १९ ॥

२०. अभीष्टवर्षी इन्द्र, तुम्हारे जल-वर्षक और तरुण अश्व जल का सेवन करनेवाली समुद्र-तरङ्गों के समान उल्लसित होकर तुम्हारे रथ में जुते हैं। तुम तरुण और काम-वर्षक हो। ऋत्विक् लोग तुम्हें पाषाण-द्वारा अभिषुत सोमरस अर्पण करते हैं।

वृषासिदिवोवृषभःपृथिव्यावृषासिन्धूनांवृषभस्तियानाम्।
वृष्णेतइन्दुर्वृषभपीपायस्वादूरसोमधुपेयोवराय॥ २१॥

वृषा। असि। दिवः। वृषभः। पृथिव्याः। वृषा। सिन्धूनाम्।
वृषभः। स्तियानाम्। वृष्णे। ते। इन्दुः। वृषभ। पीपाय। स्वादुः।
रसः। मधुऽपेयः। वराय॥ २१॥

हेइन्द्र त्वंदिवोद्युलोकस्यवृषासि हविर्भिःसेक्ताभवसि पृथिव्याःभूमेश्चवृषभः कामानांवर्षिता सिंधूनांस्यन्दनशीलानांचनदीनांवृषा वर्षेणपूरयितासि तथास्तियानांसंघीभूतानां स्थावरजंगमात्मनांप्राणिनांवृषभः कामानांवर्षिताभवसि यद्वा स्तियाःसंघीभूताआपःतासांवर्षितासि वृषभकामाभिवर्षकेन्द्र वरायश्रेष्ठायवृष्णे सेक्त्रे तेतुभ्यं त्वदर्थंस्वादुर्मधुरःरसोरसनीयःप्रशस्यो-रसवान्वारसात्मकोवा मधुपेयोमधुवत्पातव्यः इन्दुःसोमः पीपायप्यायतेवर्धते अतस्त्वमागत्यतं-सोमंपिबेतिभावः॥ २१॥

२१. इन्द्र, तुम स्वर्ग के सेवनकर्त्ता, पृथ्वी के वर्षण-कर्त्ता, नदियों के पूरण-कर्त्ता और एकत्र समवेत स्थावर और जङ्गम विश्व-भूतों के अभीष्ट-कर्त्ता हो। अभीष्ट-प्रदायक इन्द्र, तुम श्रेष्ठ सेचनकारी हो। तुम्हारे लिए मधु की तरह पीने योग्य माठा सोमरस बढ़ रहा है।

अथद्वाविंशी—

अयंदेवःसहसाजायमानइन्द्रेणयुजापणिमस्तभायत्।
अयंस्वस्यपितुरायुधानीन्दुरमुष्णादशिवस्यमायाः॥ २२॥

अयम्। देवः। सहसा। जायमानः। इन्द्रेण। युजा। पणिम्।
अस्तभायत्। अयम्। स्वस्य। पितुः। आयुधानि। इन्दुः।
अमुष्णात्। अशिवस्य। मायाः॥ २२॥

देवोद्योतमानःअयमिन्दुःसोमः इन्द्रेणयुजासख्यासहजायमानः प्रादुर्भवन् पणिंवणिजंगवामादातारं बलाख्यमसुरं यद्वा पणीनांस्वामित्वात्पणिरित्युच्यते तमसुरंसहसाबलेनअस्तभायत् अस्तभ्नात् न्यरुधत् अपिचअयंसोमःस्वस्यधनस्यगोरूपस्यपितुःपालयितुः अशिवस्यासुखकरस्यबलस्यायुधानि वज्रादीनिअमुष्णादपाहरत् तदीयामायाश्चामुष्णात् हेइन्द्र त्व-त्सख्यबलात्एतत्सर्वंसोमःकृतवान् अतस्तवमहिमाकेनवर्णयितुंशक्यतइतीन्द्रस्तुतिः॥ २२॥

२२. इस दीप्तिमान् सोम ने मित्र इन्द्र के साथ जल लेकर बल-पूर्वक पणि की स्तुति की थी। इसी सोम ने गोरूप धन को चुरानेवाले द्वेषियों की माया और अस्त्रों को व्यर्थ किया था।

अयमंकृणोदुषसंः सुपत्नीरयंसूर्येअदधाज्ज्योतिंरन्तः।
अयंत्रिधातुंदिविरोंचनेषुंत्रितेषुंविन्ददमृतंनिगूंह्ळम् ॥ २३ ॥

अयम्। अकृणोत्। उषसंः। सुऽपत्नीः। अयम्। सूर्यें। अदधात्। ज्योतिंः। अन्तरितिं। अयम्। त्रिऽधातुं। दिवि। रोचनेषु। त्रितेषुं। विन्दत्। अमृतंम्। निऽगूंह्ळम् ॥ २३ ॥

अयंसोमः उषसःउषःकालान् सुपत्नीःशोभनःपतिःपालकःसूर्योयासामुषसांतादृशीरकृणोत् अकरोत् अयमेवसूर्येसूर्यमंडलेन्तर्मध्येज्योतिस्तेजःअदधात् निहितवान् त्रिधातुसवनत्रयरूपेणत्रिप्रकारं अयंलतारूपःसोमःदिविद्युलोके रोचनेषुरोचमानेषु त्रितेषुतृतीयेस्थाने ततेषुविस्तृतेषुदेवेषुनिगूह्ळं नितरांगूढंअदृश्यतयावर्तमानं अमृतंअमृतत्वकारणं पीयूषंविन्दत्अविन्दत्अलभत हेइन्द्रत्वत्साहाय्यादेवमेवंसोमःकृतवानितीन्द्रस्यस्तुतिरधिगंतव्या यद्वा इदंशब्देनइन्द्रएवपरामृश्यते अयमिन्द्रः उषसःशोभनपतिकाअकरोत् अयमेवसूर्येतज्ज्योतिरदधात्दिविद्युलोकेरोचमानेषुत्रिस्थानगतेषुदेवेषुमध्ये अयमेवेन्द्रः त्रिधातु सवनत्रयात्मनात्रिप्रकारंनिगूढंपात्रैःसंवृतं अमृतंअमरणहेतुभूतंसोमंअविन्ददलभत ॥ २३ ॥

२३. इसी सोम ने उषाओं के पति-स्वरूप सूर्य को शोभा-सम्पन्न किया था। इसी सोम ने सूर्य-मण्डल में दीप्ति स्थापित की थी। इसी सोम ने दीप्ति-संयुक्त तीनों भुवनों के बीच स्वर्ग में गूढ़ भाव से अवस्थित त्रिविध अमृतों को प्राप्त किया था।

अथचतुर्विंशी—

अयंद्यावापृथिवीविष्कंभायदयंरथमयुनक्सप्तरंश्मिम्।
अयंगोषुशच्यांपक्वमन्तःसोमोंदाधारदशंयन्त्रमुत्संम् ॥२४॥२०॥

अयम्। द्यावापृथिवी इतिं। वि। स्कभायत्। अयम्। रथंम्। अयुनक्। सप्तऽरंश्मिम्। अयम्। गोषुं। शच्यां। पक्वम्। अन्तरितिं। सोमंः। दाधार। दशंऽयन्त्रम्। उत्संम् ॥ २४ ॥ २० ॥

अयंसोमः द्यावापृथिवीदिवंचपृथिवींचविष्कभायत् विविधमस्थापयत् अपिचायंसोमः सूर्यस्यचरथंसप्तरश्मिंसप्तरश्मिभिःकिरणैरुपेतं सप्ताश्वंसप्तचक्रंवाअयुनक् अयोजयत् तथा-अयंसोमः गोष्वन्तर्मध्येपक्वंनिष्पन्नं शच्याप्रज्ञयासंकल्परूपयाउत्समुत्सरणशीलंपयःदाधार धारयति दशयंत्रं उत्सस्यहेतुगर्भविशेषणमेतत् उत्सरणहेतुभूतैर्दशभिःचक्षुःश्रोत्रादिभिःयंत्रैरुपा-

येर्युक्तं इदंचपदंखैलिकेनमंत्रान्तरेणव्याख्यायते—चक्षुश्चश्रोत्रंचमनश्चवाक्चप्राणापानौदेहइदं शरीरं। द्यौप्रत्यंचावनुलोमौविसर्गावेतंतंमन्येदशयंत्रमुत्समिति। यद्वाअयमिन्द्रः द्यावापृथिवी-विष्कभायत् स्वेस्वेस्थानेस्थितेअकरोत् अयमेवसप्तरश्मिं सूर्यस्यरथमयुनक् अयमेवेन्द्रोगो-ष्वन्तःशच्याआत्मीयेनकर्मणापक्वंपयोधारयति एवंभूतेन्द्रार्थंसोमःदशयंत्रं दशसंख्याकैरैन्द्रवा-यवादिभिःग्रहैर्यंत्रितैःगृहीतैरुपेतं उत्संउत्सरणशीलं रसं दाधारधारयति प्रातःसवनेऐन्द्र-वायवादयोदशग्रहागृह्यंते तथाचब्राह्मणं—नवप्रातर्ग्रहागृह्यंतेनवभिर्बहिष्पवमानेस्तुवतेस्तुतेस्तोमे-दशमंगृह्णातीति। अन्यत्राम्नातं—दशैतानध्वर्युःप्रातःसवनेग्रहान्गृह्णातीति। तदभिप्रायेणेदंदशयं-त्रमितिविशेषणं ॥ २४ ॥

२४. इसी सोम ने स्वर्ग और पृथ्वी को अपने-अपने स्थानों पर संस्थापित किया था। इसी सोम ने सप्तरश्मि रथ को योजित किया था। इसी सोम ने स्वेच्छानुसार गौओं के बीच परिणत दुग्ध के दस यन्त्रों के कूप को या बहुधारा-विशिष्ट प्रस्रवण को स्थापित किया था।

॥ इतिचतुर्थस्यसप्तमेविंशोवर्गः ॥ २० ॥

यआनयदितित्रयस्त्रिंशत्यृचंद्वितीयंसूक्तं बृहस्पतिपुत्रस्यशंयोरार्षं पुरूतममित्येषातिनिचृत् अधिबृबुरित्येषापादनिचृत् त्रयःसप्तकाःपादनिचृत्मध्यमःषट्कश्चेदतिनिचृदित्युक्तलक्षणात्त्रयस्त्रि-श्यनुष्टुप् शिष्टागायत्र्यः अधिबृबुःपणीनामित्येस्मिन्नंत्येतृचेबृबुर्नामतक्षास्तूयते अतःसतृचःतद्दे-वताकः शिष्टास्त्रिंशदैन्द्र्यः तथाचानुक्रान्तं—यआनयत्त्रयस्त्रिंशद्गायत्रंपुरूतममितिनिचृदंत्यानुष्टुप् तृचेंत्येबृबुस्तक्षादैवतमिति। महाव्रतेपिनिष्केवल्येअंत्यस्तृचवर्जमेतत्सूक्तं तथैवपंचमारण्यकं य-आनयत्परावतइतितिस्रउत्तमामुद्धरतीति।

तत्रप्रथमा—

य आनयत्परावतः सुनीती तुर्वशं यदुम्। इन्द्रः स नो युवा सखा ॥ १ ॥

यः। आ। अनयत्। पराऽवतः। सुऽनीती। तुर्वशम्। यदुम्।
इन्द्रः। सः। नः। युवा। सखा ॥ १ ॥

यइन्द्रः तुर्वशंयदुंचएतत्संज्ञौराजानौशत्रुभिर्दूरदेशेप्रक्षिप्तौ सुनीतीसुनीत्याशोभनेननयने-नपरावतःतस्माद्दूरदेशात्आनयदानीतवान् युवातरुणःसइन्द्रःनोस्माकंसखाभवतु ॥ १ ॥

१. जो उत्कृष्ट नीति-द्वारा तुर्वश और यदु को दूर देश से लाये थे, वही तरुण इन्द्र हमारे मित्र बनें।

अविप्रे चिद्वयो दधदनाशुना चिदर्वता। इन्द्रो जेता हितं धनम् ॥ २ ॥

---

१ ऐ० ब्रा० ३. १.

अविप्रे । चित् । वयः । दधत् । अनाशुना । चित् । अर्वता । इन्द्रः । जेता । हितम् । धनम् ॥ २ ॥

अविप्रेचित् विप्रःस्तोता तद्विलक्षणेपिपुरुषे वयोन्नंदधत्इन्द्रोधारयति किमुवक्तव्यंस्तोतरिधारयतीति सइन्द्रःअनाशुनाचित्अक्षिप्रगमनेनापिअर्वता अश्वेनहितं शत्रुषुनिहितंस्थापितं धनंजेता जयशीलोभवति जयतेस्ताच्छीलिकस्तृन् अतोनलोकाव्ययेतिषष्ठीप्रतिषेधः ॥ २ ॥

२. जो व्यक्ति इन्द्र की स्तुति नहीं करता, उसे भी इन्द्र अन्न प्रदान करते हैं। इन्द्र मन्थर-गति अश्व पर चढ़कर शत्रुओं के बीच निहित सम्पत्ति को जीतते हैं।

महीरस्यप्रणीतयःपूर्वीरुतप्रशस्तयः । नास्यक्षीयन्तऊतयः ॥ ३ ॥

महीः । अस्य । प्रऽनीतयः । पूर्वीः । उत । प्रऽशस्तयः । न । अस्य । क्षीयन्ते । ऊतयः ॥ ३ ॥

अस्येन्द्रस्यप्रणीतयः प्रकृष्टानीतयः प्रापणानि महीःमह्योमहत्योभवन्ति उतापिचप्रशस्तयःप्रकृष्टाःस्तुतयःस्तोतृभिःक्रियमाणाःपूर्वीर्बह्व्योभवन्ति तथास्येन्द्रस्यऊतयोरक्षाःनक्षीयन्ते नापचीयन्ते किन्तुसर्वदावर्धन्तएव ॥ ३ ॥

३. इन्द्र की नीतियाँ उत्कृष्ट और महान् हैं। उनकी स्तुतियाँ भी नाना प्रकार की हैं। उनकी रक्षा का कथन कभी क्षीण नहीं होता।

सखायोब्रह्मवाहसेर्चतप्रचगायत । सहिनःप्रमतिर्मही ॥ ४ ॥

सखायः । ब्रह्मऽवाहसे । अर्चत । प्र । च । गायत । सः । हि । नः । प्रऽमतिः । मही ॥ ४ ॥

हेसखायः समानख्यानाःस्तोतारः ब्रह्मवाहसे ब्रह्मभिर्मन्त्रैर्वहनीयायप्राप्तव्यायेन्द्रायअर्चत शस्त्राणिशंसत प्रगायतच स्तोत्राणि सहिसखल्विन्द्रःनोस्माकंमहीमहतीप्रमतिःप्रकृष्टाबुद्धिःईदृश्याबुद्धेःप्रदातेत्यर्थः ॥ ४ ॥

४. बन्धुओ, मन्त्र-द्वारा आह्वान के योग्य उन्हीं इन्द्र की पूजा करो और उन्हीं की स्तुति करो; क्योंकि वही हमें वस्तुतः प्रकृष्ट बुद्धि प्रदान करते हैं।

त्वमेकस्यवृत्रहन्नविताद्वयोरसि । उतेदृशेयथावयम् ॥ ५ ॥ २१ ॥

त्वम् । एकस्य । वृत्रऽहन् । अविता । द्वयोः । असि । उत । ईदृशे । यथा । वयम् ॥ ५ ॥ २१ ॥

हेवृत्रहन् वृत्राणांशत्रूणांहन्तरिन्द्र त्वंएकस्यस्तोतुःद्वयोर्वास्तोत्रोःअवितारक्षितासि सर्वेषां स्तोतॄणांरक्षकोभवसीत्यर्थः उतअपिच ईदृशेजनेप्यविताभवसि यथायादृशावयंत्वयारक्षिताब-हुविधपुत्रपौत्राअभूम ईदृशस्यापिजनस्यत्वमेवरक्षकोनान्यइत्यर्थः ॥ ५ ॥

५. वृत्र-विनाशक इन्द्र, तुम एक वा दो स्तोताओं के रक्षक हो। तुम्हीं हमारे जैसे लोगों के रक्षक हो।

॥ इतिचतुर्थस्यसप्तमेएकविंशोवर्गः ॥ २१ ॥

अथषष्ठी—

नयसीद्वतिद्विषःकृणोष्युक्थशंसिनः । नृभिःसुवीरउच्यसे ॥ ६ ॥

नयसि । इत् । ऊँ इति । अति । द्विषः । कृणोषि । उक्थऽशंसिनः ।
नृऽभिः । सुऽवीरः । उच्यसे ॥ ६ ॥

हेइन्द्र इवत्वमेवद्विषः द्वेष्टॄन् अतिनयसि अस्मान्नयसितारयसि उइतिपूरकः तथाउक्थ-शंसिनःउक्थानिशस्त्राणिशंसतःस्तोतॄनस्मान्कृणोषि समृद्धान्करोषि यस्मात्त्वंनृभिः स्तुवानैने-तृभिः पुरुषैः सुवीरःशोभनैः वीरैःपुत्रपौत्रादिभिः स्तोतृभ्योदातव्यैरुपेतइत्युच्यसे स्तूयसेअतस्ता-नप्यस्मभ्यंप्रयच्छेतिशेषः ॥ ६ ॥

६. इन्द्र, हमारे पास से विद्वेषियों को दूर करो और स्तोताओं को समृद्धि दो। इन्द्र, तुम शोभन पुत्र-पौत्र आदि देनेवाले हो; इसलिए मनुष्य तुम्हारी स्तुति करते हैं।

ब्रह्माणंब्रह्मवाहसंगीर्भिःसखायमृग्मियम । गांनदोहसेहुवे ॥ ७ ॥

ब्रह्माणम् । ब्रह्मऽवाहसम् । गीःऽभिः । सखायम् । ऋग्मियम् ।
गाम् । न । दोहसे । हुवे ॥ ७ ॥

ब्रह्माणंपरिवृढं ब्रह्मवाहसं ब्रह्मभिःस्तुतिरूपैर्मन्त्रैर्वहनीयं सखायंअस्माकंसखिभूतंऋग्मि-यं ऋग्माऋचस्तदर्हं स्तुत्यर्हमित्यर्थः एवंभूतमिन्द्रं दोहसेदोग्धुं गांन गामिव गीर्भिः स्तुतिभिः हुवेआह्वयामि अस्मदीयान्कामान्दोग्धुम् ॥ ७ ॥

७. मैं स्तोत्र के बल से मित्र, महान् मन्त्र-द्वारा आह्वान के योग्य और स्तुति-पात्र इन्द्र को, धेनु की तरह अभीष्ट दूहने के लिए, बुलाता हूँ।

अथाष्टमी—

यस्यविश्वानिहस्तयोरूचुर्वसूनिनिद्विता । वीरस्यपृतनासहः ॥ ८ ॥

यस्य । विश्वानि । हस्तयोः । ऊचुः । वसूनि । नि । द्विता ।
वीरस्य । पृतनाऽसहः ॥ ८ ॥

वीरस्यवीर्यवतः पृतनाषहः पृतनाःशत्रुसेनाः तासामभिभवितुः यस्येन्द्रस्यहस्तयोः बाह्वोः विश्वानिसर्वाणिद्विता दिव्यपार्थिवरूपेणद्वैधं वर्तमानानिवसूनिविद्यन्तइतिन्यूचुः ऋषयोनिवरांवदन्ति तमिन्द्रंहुवइतिपूर्वत्रसंबन्धः ॥ ८ ॥

८. वीर्यवान् और शत्रु-सेना को पराजित करनेवाले इन्द्र के दोनों हाथों में दिव्य और पार्थिव धन है—ऐसा ऋषि लोग बराबर कहा करते हैं।

विदृळ्हानिचिदद्रिवोजनानांशचीपते। वृहमायाअनानत ॥ ९ ॥

वि। दृळ्हानि। चित्। अद्रिऽवः। जनानाम्। शचीऽपते। वृह। मायाः। अनानत ॥ ९ ॥

हेअद्रिवः आदृणात्यनेनेत्यद्रिर्वज्रः तद्वन्शचीपते इन्द्र जनानांशत्रूणांदृळ्हानिचिवदृढानिस्थिराण्यपि पुराणिबलानिवा विवृह विभिंधि विविधमुन्मूलयेत्यर्थः हेअनानव अप्रह्वीभूत सर्वोच्छ्रितेन्द्र मायाश्चशत्रुभिर्निर्मिताः विवृह विनाशय ॥ ९॥

९. हे वज्रधारक और यज्ञपति इन्द्र, तुम शत्रुओं के दृढ़ नगरों को निर्मूल करते हो। हे सर्वोन्नत इन्द्र, तुम शत्रुओं की मायाओं को विनष्ट करते हो।

तमुत्वासत्यसोमपाइन्द्रवाजानांपते। अहूमहिश्रवस्यवः ॥१०॥२२॥

तम्। ऊँ इति। त्वा। सत्य। सोमऽपाः। इन्द्र। वाजानाम्। पते। अहूमहि। श्रवस्यवः ॥ १० ॥ २२ ॥

हेसत्य अवितथस्वभाव सोमपाः सोमस्यपातः हेवाजानांपते अन्नानांपालयितः एवंभूतहेइन्द्र श्रवस्यवः श्रवोन्नंआत्मनइच्छन्तोवयं तमुत्वा तादृशंत्वामेवअहूमहि आह्वयामः स्तुमइत्यर्थः ॥ १० ॥

१०. हे सत्यस्वभाव, सोमपायी और अन्नरक्षक इन्द्र, हम, अन्नाभिलाषी होकर, ऐसे गुणों से संयुक्त तुम्हें ही बुलाते हैं।

॥ इतिचतुर्थस्यसप्तमेद्वाविंशोवर्गः ॥ २२ ॥

अथैकादशी—

तमुत्वायःपुरासिथयोवानूनंहितेधने। हव्यःसश्रुधीहवम् ॥ ११ ॥

तम्। ऊँ इति। त्वा। यः। पुरा। आसिथ। यः। वा। नूनम्। हिते। धने। हव्यः। सः। श्रुधि। हवम् ॥ ११ ॥

हेइन्द्र तमुत्वा तमेवत्वां स्तुमइतिशेषः यस्त्वं पुरापूर्वस्मिन्काले हव्योह्वातव्यःआसिथ बभू-विथधनलाभार्थं योवायश्चत्वं हिवे शत्रुपुनिहितेधनेनिमित्तभूतेसति नूनमद्यापिहव्योह्वातव्यो-बभूविथ स्त्वमस्मदीयंहवंस्तोत्रंश्रुधि शृणु ॥ ११ ॥

११. इन्द्र, तुम पहले आह्वान के योग्य थे और इस समय शत्रुओं के बीच रखे हुए धन की प्राप्ति के लिए आहुत होते हो। हम तुम्हें बुलाते हैं। तुम हमारा आह्वान सुनो।

धीभिरर्वद्भिरर्वतोवाजाँइन्द्रश्रवाय्यान् । त्वयाजेष्महितंधनम् ॥ १२॥

धीभिः । अर्वत्ऽभिः । अर्वतः । वाजान् । इन्द्र । श्रवाय्यान् ।
त्वया । जेष्म । हितम् । धनम् ॥ १२ ॥

हेइन्द्र धीभिः स्तुतिभिः त्वद्विषयाभिःप्रीतेनत्वयाअनुगृहीतावयमर्वद्भिरस्मदीयैरश्वैः अर्वतः शत्रुसंबन्धिनोश्वान्श्रवाय्यान् श्रवणीयान् प्रशस्यान्वाजान् अन्नानिच हितंशत्रुपुनि-हितंधनंच जेष्म त्वदनुग्रहाज्जयेम ॥ १२ ॥

१२. इन्द्र, हमारे स्तोत्र को सुनकर तुम्हारे प्रसन्न होने पर तुम्हारी कृपा से हम अश्वों के द्वारा शत्रुओं के अश्व, उत्कृष्ट अन्न और गूढ़ धन को जीतने में समर्थ हों।

अभूरुवीरगिर्वणोमहाँइन्द्रधनेहिते । भरेवितन्तसाय्यः ॥ १३ ॥

अभूः । ऊँ इति । वीर । गिर्वणः । महान् । इन्द्र । धने । हिते ।
भरे । वितन्तसाय्यः ॥ १३ ॥

हेवीर विविधंईरयितःशत्रूणां हेगिर्वणोगीर्भिर्वननीयेन्द्र हितेशत्रुपुनिहितेधनेनिमित्तभू-तेसति महान्प्रवृद्धस्त्वं भरेसंग्रामेवितंतसाय्यः शत्रूणांजेताभूः तंतसइतिधातुःजयार्थःकंड्वादौ पठ्यते तस्मात्क्युपस्सृष्टादौणादिकःकर्तरिआय्यप्रत्ययः ॥ १३ ॥

१३. वीर और स्तुति-पात्र इन्द्र, तुम शत्रुओं के बीच निहित धन की प्राप्ति के लिए युद्ध में शत्रुओं को जीतने में समर्थ हुए हो।

यातेऊतिरमित्रहन्मक्षूजवस्तमासति । तयानोहिनुहीरथम् ॥ १४ ॥

या । ते । ऊतिः । अमित्रऽहन् । मक्षुजवःऽतमा । असति । तया ।
नः । हिनुहि । रथम् ॥ १४ ॥

हेअमित्रहन् अमित्राणांशत्रूणांहन्तरिन्द्र तेत्वदीयामक्षुजवस्तमा अतिशयेनशीघ्रजवा याऊतिर्गतिःअसतिअस्ति तयागत्यानोस्माकंरथंहिनुहि प्रेरय शत्रुजयार्थंशीघ्रंगमय ॥ १४ ॥

१४. रिपुञ्जय इन्द्र, तुम्हारी गति अतिशय वेग से संयुक्त है। उसी गति के द्वारा शत्रु की जय करने के लिए हमारा रथ चलाओ।

सरथैनरथीतमोस्माकैनाभियुग्वंना । जेषिजिष्णोहितंधनम् ॥ १५॥२३॥

सः । रथैन । रथिऽतमः । अस्माकैन । अभिऽयुग्वंना । जेषि ।
जिष्णो इति । हितम् । धनम् ॥ १५ ॥ २३ ॥

हेजिष्णो जयशीलेन्द्र रथीतमः अतिशयेनरथीमहारथः सत्वंअस्माकेन अस्मदीयेन अभियुग्वना अभियोक्ताशत्रूणामभिभवितारथेन हितंशत्रुषुनिहितंधनंजेषि अस्मदर्थंजय ॥१५॥

१५. जयशील और रथि-श्रेष्ठ इन्द्र, तुम हमारे शत्रु-विजयी रथ के द्वारा शत्रुओं के द्वारा निहित धन को जीतो।

॥ इतिचतुर्थस्यसप्तमेत्रयोविंशोवर्गः ॥ २३ ॥

अथषोडशी—

यएकइत्तमुंष्टुहिकृष्टीनांविचर्षणिः । पतिर्जज्ञेवृषक्रतुः ॥ १६ ॥

यः । एकः । इत् । तम् । ऊँ इति । स्तुहि । कृष्टीनाम् ।
विऽचर्षणिः । पतिः । जज्ञे । वृषऽक्रतुः ॥ १६ ॥

विचर्षणिर्विशेषेणसर्वस्यद्रष्टा वृषक्रतुर्वर्षकर्मायइन्द्रः एकइव एकएव कृष्टीनांप्रजानांपतिरधिपतिर्जज्ञे अजायत नान्यःकश्चिद् तमुतमेवेन्द्रंहेस्तोतःस्तुहि ॥ १६॥

१६. जो सर्वदर्शी और वर्षणशील हैं, जिन्होंने एक-एक मनुष्यों के अधिपति-रूप से जन्म धारण किया है, उन्हीं इन्द्र की स्तुति करो।

अथसप्तदशी—

योगृणतामिदासिथापिरूतीशिवःसखा । सत्वंनइन्द्रमृळय ॥ १७ ॥

यः । गृणताम् । इत् । आसिथ । आपिः । ऊती । शिवः ।
सखा । सः । त्वम् । नः । इन्द्र । मृळय ॥ १७ ॥

हेइन्द्र यस्त्वं ऊतीऊत्या रक्षयाशिवःसुखकरः अतएवसखामित्रभूतश्चसन् गृणतामिव स्तुवतामस्माकमेवआपिर्बंधुरासिथ पुराबभूविथ सताहशस्त्वं नोस्मानिदानींमृळय सुखय ॥१७॥

१७. इन्द्र, तुम रक्षा के कारण सुखदाता और मित्र हो। हमारी स्तुति पर तुमने प्राचीन समय में बन्धुता प्रकट की थी। इस समय हमें सुखी करो।

अथाष्टादशी—

धिष्ववज्रंगभस्त्योरक्षोहत्यायवज्रिवः । सासहीष्ठाअभिस्पृधः ॥ १८ ॥

धिष्व । वज्रम् । गभस्त्योः । रक्षःऽहत्याय । वज्रिऽवः ।
ससहीष्ठाः । अभि । स्पृधः ॥ १८ ॥

हेवज्रिवः वज्रवन्निन्द्र गभस्त्योरात्मीययोर्हस्तयोर्वज्रंकुलिशंधिष्व धारय किमर्थं रक्षोहत्याय रक्षसांहननार्थं धृत्वाच स्पृधःस्पर्धमानाःअभि अभिगंत्रीरासुरीःसेनाः ससहीष्ठाः अत्यर्थमभिभव ॥ १८ ॥

१८. वज्रधर इन्द्र, तुम राक्षसों के नाश के लिए अपने हाथों में वज्र धारण करते हो और स्पर्द्धावालों को भली भाँति पराजित करते हो।

प्रत्नंरयीणांयुजंसखायंकीरिचोदनम् । ब्रह्मवाहस्तमंहुवे ॥ १९ ॥

प्रत्नम् । रयीणाम् । युजम् । सखायम् । कीरिऽचोदनम् ।
ब्रह्मवाहःऽतमम् । हुवे ॥ १९ ॥

प्रत्नं चिरंतनं सर्वेषामाद्यं रयीणांधनानांयुजं योजयितारं दातारंसखायंमित्रभूतं कीरिचोदनं कीरीणांस्तोतॄणांचोदयितारं ब्रह्मवाहस्तमं अतिशयेनब्रह्मभिर्मंत्रैर्वहनीयं एवंविधमिन्द्रं हुवे आह्वयामि ॥ १९ ॥

१९. जो धनद, मित्र, स्तोताओं के उत्साहदाता और मन्त्रों के द्वारा आह्वान के योग्य हैं, उन्हीं प्राचीन इन्द्र को मैं आह्वान करता हूं।

सहिविश्वानिपार्थिवाँएकोवसूनिपत्यते । गिर्वणस्तमोअध्रिगुः ॥ २० ॥ २४ ॥

सः । हि । विश्वानि । पार्थिवा । एकः । वसूनि । पत्यते ।
गिर्वणःऽतमः । अध्रिऽगुः ॥ २० ॥ २४ ॥

सहि सखल्विन्द्रः विश्वानिसर्वाणिपार्थिवा पृथिव्यांभवानि वसूनिधनानिएकएवपत्यते ईष्टे नान्यःकश्चिव पत्यतिरैश्वर्यकर्मा कीदृशइन्द्रः गिर्वणस्तमः अतिशयेनगीर्भिःस्तुतिभिःसंभजनीयः अध्रिगुरधृतगमनः अप्रतिहतगतिरित्यर्थः ॥ २० ॥

२०. जो स्तुति-द्वारा वन्दनीय और अप्रतिहत गति हैं, वही एकमात्र इन्द्र ही सारे पार्थिव धनों के ऊपर एकाधिपत्य करते हैं।

॥ इतिचतुर्थस्यसप्तमेचतुर्विंशोवर्गः ॥ २४ ॥

अथैकविंशी—

सनोनियुद्भिरापृणकामंवाजेभिरश्विभिः । गोमद्भिर्गोपतेधृषत् ॥ २१ ॥

सः । नः । नियुत्ऽभिः । आ । पृण । कामम् । वाजेभिः ।
अश्विऽभिः । गोमत्ऽभिः । गोऽपते । धृषत् ॥ २१ ॥

हेगोपते गवांपालयितः सत्वंनोस्माकंकामंनियुद्भिर्वडवाभिः धृषद्धृष्टंदारिद्र्यनाशनसमर्थंयथाभवतितथाआपृणापूरय यद्वा धृषदितीन्द्रविशेषणं शत्रूणांधर्षकस्त्वमित्यर्थः तथागोमद्भिर्बहुभिर्गोभिर्युक्तैःअश्विभिःबहुभिरश्वैरुपेतैर्वाजैरन्नैश्च अस्मदीयंकाममापूरय ॥ २१ ॥

२१. हे गौओं के अधिपति, तुम बड़वा लोगों के साथ आकर अन्न, असंख्य अश्वों और धेनुओं से भली भाँति हमारे मनोरथ को पूरा करो।

तद्वोगायसुतेसचापुरुहूतायसत्वने । शंयद्गवेनशाकिने ॥ २२ ॥

तत् । वः । गाय । सुते । सचा । पुरुऽहूताय । सत्वने । शम् । यत् । गवे । न । शाकिने ॥ २२ ॥

हेस्तोतारोवोयूयंसुतेअभिषुतेसोमेसति पुरुहूतायबहुभिर्यजमानैराहूताय सत्वने शत्रूणांसादयित्रे धनानांवासनित्रेदात्रेइन्द्राय तद्वस्तोत्रंसचा सह संहताभूत्वा गायगायत यद्वस्तोत्रं शाकिनेशक्तिमतेइन्द्राय शंसुखकरंभवति गवेनयथागवेयवसंसुखकरं भवति तद्वदित्यर्थः॥ २२ ॥

२२. स्तोताओं, जैसे घास गौ के लिए सुखावह होती है, वैसे ही सोमरस के तैयार होने पर इन्द्र का सुखदायक स्तोत्र भी बहुसंख्यक लोगों के द्वारा वन्दनीय होता है। रिपुञ्जय इन्द्र के पास एकत्र होकर गान करो।

नघावसुर्नियमतेदानंवाजस्यगोमतः । यत्सीमुपश्रवद्गिरः ॥ २३ ॥

न । घ । वसुः । नि । यमते । दानम् । वाजस्य । गोऽमतः । यत् । सीम् । उप । श्रवत् । गिरः ॥ २३ ॥

वसुर्वासयितासइन्द्रः गोमतोबहुभिर्गोभिर्युक्तस्यवाजस्यान्नस्यबलस्यवा दानंप्रदानं नघ नखलु नियमते नियच्छति उपरतंकरोति यद्यदि सींसर्वतः गिरःअस्मदीयाःस्तुतीः उपश्रवत उपशृणुयात् स्तोत्रश्रवणेसति सर्वदाददातीत्यर्थः ॥ २३ ॥

२३. गृह-प्रदाता इन्द्र जिस समय हमारा स्तोत्र सुनते हैं, उस समय वे धेनुओं के साथ अन्न प्रदान करने में विरत नहीं होते।

कुवित्संस्यप्रहिव्रजंगोमन्तंदस्युहागमत् । शचीभिरपनोवरत् ॥ २४ ॥

कुवित्ऽसस्य । प्र । हि । व्रजम् । गोऽमन्तम् । दस्युऽहा । गमत् । शचीभिः । अप । नः । वरत् ॥ २४ ॥

कुवित्सस्य कुविद्बहुशःस्यतिहिनस्तीतिकुवित्सोनामकश्चित् तस्यस्वभूतं गोमंतं बहुभिर्गोभिर्युक्तं व्रजंगोष्ठं दस्युहादस्यूनामुपक्षपयितृणांहन्तेन्द्रः प्रगमत् प्रकर्षेणगच्छति हियस्मादेवंतस्मात्शचीभिरात्मीयैः कर्मभिः प्रज्ञाभिर्वा नोस्माकंतागाः अपवरत् निगूढास्ताअपावृणोत् ॥ २४ ॥

२४. दस्युओं के वधकर्ता इन्द्र कुवित्स की असंख्य धेनुओंवाली गोशाला में गये और उन्होंने अपने बुद्धि-बल से हमारे लिए उस निगूढ़ गो-वृन्द को प्रकट किया।

इमाउंत्वाशतक्रतोभिप्रणोनुवुर्गिरः । इन्द्रंवत्संनमातरः ॥ २५ ॥२५॥

इमाः । ऊँ इति । त्वा । शतक्रतो इति शतऽक्रतो । अभि । प्र ।
नोनुवुः । गिरः । इन्द्रं । वत्सम् । न । मातरः ॥ २५ ॥ २५ ॥

हेशतक्रतो बहुविधकर्मंच् बहुविधप्रज्ञवेन्द्र त्वात्वामभिइमाअस्मदीयागिरः स्तुतयः प्रणोनुवुः प्रकर्षेणपुनःपुनर्गच्छन्ति नौतिरत्रगतिकर्मा तत्रदृष्टान्तः—वत्संनमातरः यथामातरोगावोगृहेवर्तमानंवत्संशीघ्रमभिगच्छन्तितद्वत् यद्वास्मदीयावाचस्त्वां अभिनो नुवुः अभितःशब्दयन्ति स्तुवन्ति यथागावोवत्समभिलक्ष्यहंभारवंकुर्वन्तितद्वत् ॥ २५॥

२५. बहुविध कर्मों के अनुष्ठाता इन्द्र, जैसे गायें बार-बार बछड़ों के सामने जाती हैं, वैसे ही हमारी ये सारी स्तुतियाँ बार-बार तुम्हारी ओर जाती हैं।

॥ इतिचतुर्थस्यसप्तमेपंचविंशोवर्गः ॥ २५ ॥

दूणाशंसख्यंतवगौरसिवीरगव्यते । अश्वोअश्वायतेभव ॥ २६ ॥

दुःऽनशम् । सख्यम् । तव । गौः । असि । वीर । गव्यते ।
अश्वः । अश्वऽयते । भव ॥ २६ ॥

हेइन्द्र तवत्वदीयंसख्यंसखित्वं दूणाशं दुर्नाशं नाशयितुमशक्यं अतिदृढमित्यर्थः अतोहेवीर वीरयितरिन्द्र गव्यतेगामात्मनइच्छतेत्वंगौरसि गवांप्रदाताभवसि उपचारात्कारणेकार्यशब्दः तथाअश्वायतेअश्वानात्मनइच्छतेअश्वोभव अश्वप्रदोभवसि ॥ २६ ॥

२६. इन्द्र, तुम्हारे बन्धुत्व का विनाश नहीं होता। वीर, तुम गौ चाहनेवाले को गौ और घोड़ा चाहनेवाले को घोड़ा देते हो।

समन्दस्वाह्यन्धसोराधसेतन्वामहे । नस्तोतारंनिदेकरः ॥ २७ ॥

सः । मन्दस्व । हि । अन्धसः । राधसे । तन्वा । महे । न ।
स्तोतारम् । निदे । करः ॥ २७ ॥

हेइन्द्र सताद्दशस्त्वं अन्धसःसोमस्यपानेनहृष्टया तन्वाआत्मीयेनशरीरेणमन्दस्व मोदस्व किमर्थं महेमहते राधसेधनार्थं हिपूरणः अपिच त्वदीयंस्तोतारंनिदेनिंदकायतस्यवशंनकरः नकुर्याः ॥ २७॥

२७. इन्द्र, महाधन के लिए प्रदत्त सोमरस का पान करके अपने को परितृप्त करो। तुम अपने उपासक को निन्दक के हाथ नहीं सौंपते।

इमाउंत्वासुतेसुतेनक्षन्तेगिर्वणोगिरः। वत्संगावोनधेनवः ॥ २८ ॥

इमाः। ॐ इति। त्वा। सुतेऽसुते। नक्षन्ते। गिर्वणः।
गिरः। वत्सम्। गावः। न। धेनवः ॥ २८ ॥

हेगिर्वणोगीर्भिर्वननीयेन्द्र सुतेसुतेसोमेभिषुतेभिषुतेसति इमाअस्मदीयागिरःस्तुतयःत्वा त्वांनक्षन्ते व्याप्नुवन्ति धेनवोदोग्ध्र्यः गावोन गावइव वत्सं तायथाशीघ्रंवत्संव्याप्नुवन्तितद्वत् उपूरणः ॥ २८ ॥

२८. स्तुति द्वारा वन्दनीय इन्द्र, जैसे दूध देनेवाली गायें बछड़ों के पास जाती हैं, वैसे ही बार-बार सोमरस के अभिपुत होने पर हमारी ये स्तुतियां, बड़े वेग से, तुम्हारी ओर जाती हैं।

पुरूतमंपुरूणांस्तोतॄणांविवाचि। वाजेभिर्वाजयताम् ॥ २९ ॥

पुरुऽतमम्। पुरूणाम्। स्तोतॄणाम्। विऽवाचि। वाजेभिः।
वाजऽयताम् ॥ २९ ॥

हेइन्द्र पुरुतमंपुरूणांबहूनांशत्रूणांतमयितारंग्लपयितारंत्वां पुरूणांबहूनांस्तोतॄणांअस्माकंस्तुतिःप्राप्नोत्विति शेषः कीदृशानां विवाचिविविधाः स्तुतशस्त्रात्मिकावाचःयस्मिन्यज्ञेतस्मिन्वाजेभिर्वाजैर्हविर्लक्षणैरन्नैर्वाजयतांवाजवन्तंवेगवन्तंबलवन्तंवात्वांकुर्वताम् ॥ २९ ॥

२९. यज्ञ-मण्डप में हव्यरूप अन्न के साथ दिये गये असंख्य स्तोताओं के स्तोत्र, असंख्य शत्रुओं के नाशक तुम्हें, बलशाली करें।

अस्माकमिन्द्रभूतुतेस्तोमोवाहिष्ठोअन्तमः। अस्मान्रायेमहेहिनु॥३०॥

अस्माकम्। इन्द्र। भूतु। ते। स्तोमः। वाहिष्ठः। अन्तमः।
अस्मान्। राये। महे। हिनु ॥ ३० ॥

हेइन्द्र वाहिष्ठोवोढृतमःअस्माकंस्तोम स्तोत्रंतेतवअन्तमःअन्तिकतमोभूतुभवतु त्वंचास्मान् महेमहते रायेधनायहिनुप्रेरय ॥ ३० ॥

३०. इन्द्र, अतीव उन्नति-कारक हमारे स्तोत्र तुम्हारे पास जायें। हमें, महाधन की प्राप्ति के लिए, प्रेरित करो।

अथैकात्रिंशी—

अधिबृबुःपणीनांवर्षिष्ठेमूर्धन्नस्थात्। उरुःकक्षोनगाङ्ग्यः ॥ ३१ ॥

अधि। बृबुः। पणीनाम्। वर्षिष्ठे। मूर्धन्। अस्थात्। उरुः।
कक्षः। न। गाङ्ग्यः ॥ ३१ ॥

बृबुर्नामपणीनांतक्षा तत्सकाशाल्लब्धधनोभरद्वाजः तदीयंदानमनेनतृचेनास्तौत् एतच्चम-नुनास्मर्यते—भरद्वाजःक्षुधार्तस्तुसपुत्रोनिर्जनेवने । बह्वीर्गाःप्रतिजग्राहबृबोस्तक्ष्णोमहायशाइति ॥ पणनात्पणयोवणिजःएतत्संज्ञाअसुरावा तेषांतक्षाबृबुःवर्षिष्ठेमूर्धन्मूर्धनिमूर्धवदुच्छ्रितेस्थलेअध्य-स्थात् अधिष्ठितोभूत् गांग्यः गंगायाःकूलेउन्नतेभवः कक्षोन कक्षइव उरुविस्तीर्णःसन्जातितो-हीनोतिदातृत्वात्सर्वत्रश्रेष्ठोभवतीत्यर्थः ॥ ३१ ॥

३१. गङ्गा के ऊँचे तटों की तरह प्राणियों के बीच ऊँचे स्थान पर बृबु ने अधिष्ठान किया था।

यस्य॑वा॒योरि॑वद्र॒वद्भ॒द्रारा॒तिःस॑ह॒स्रिणी॑ । स॒द्योदा॒नाय॒मंह॑ते ॥ ३२ ॥

यस्य॑ । वा॒योःऽइ॑व । द्र॒वत् । भ॒द्रा । रा॒तिः । स॒ह॒स्रिणी॑ ।
स॒द्यः । दा॒नाय॑ । मंह॑ते ॥ ३२ ॥

वायोरिवद्रवत्क्षिप्रगामिनोयस्यबृबोः भद्राकल्याणी सहस्रिणीसहस्रसंख्यायुक्ता राति-र्दानंसद्यःस्तुतिसमयेएवदानायदानकामाययाचमानाय महांमंहतेअपेक्षितं धनंददाति तंबृबुमि-तिउत्तरस्यामृचिसंबन्धः ॥ ३२ ॥

३२. मैं धनार्थी हूँ। बृबु ने मुझे वायु-वेग के समान वदान्यता के साथ एक हजार गायें तुरत दी थीं।

तत्सुनो॒विश्वे॑अ॒र्यआसदा॑गृणन्तिका॒रवः॑ ।
बृबुंस॑ह॒स्रदा॑तमंसू॒रिंस॑ह॒स्रसा॑तमम् ॥ ३३ ॥ २३ ॥

तत् । सु । नः॒ । विश्वे॑ । अ॒र्यः । आ । सदा॑ । गृ॒णन्ति॒ । का॒रवः॑ ।
बृबुम् । स॒ह॒स्र॒ऽदा॑तमम् । सू॒रिम् । स॒ह॒स्र॒ऽसा॑तमम् ॥ ३३ ॥ २६ ॥

तवत्तंबृबुंनोस्मदीयाःविश्वेसर्वेअर्यःस्तुतीनामीरयितारःकारवः स्तोतारः सुसुष्ठुआगृणन्ति अभिगृणन्ति अभिष्टुवन्ति कीदृशं सहस्रदातमंअतिशयेनसहस्रसंख्यस्यधनस्यदातारं सूरिंमाज्ञं यद्वा प्रेरयितारंसहस्रसातमं अतिशयेनसहस्रसंख्यस्यस्तोत्रस्यधनस्यवासंभक्तारं ॥ ३३ ॥

३३. हम सब लोग स्तुति करके हजार गायें देनेवाले, विद्वान् और हजारों स्तोत्रों के पात्र उन्हीं बृबु की सदा प्रशंसा करते हैं।

॥ इतिचतुर्थस्यसप्तमेषड्विंशोवर्गः ॥ २६ ॥

त्वामिद्धीतिचतुर्दशर्चंतृतीयंसूक्तं बृहस्पतिपुत्रस्यशंयोरार्षमैन्द्रं प्रथमातृतीयाद्ययुजो-बृहत्यः द्वितीयाचतुर्थ्याद्यायुजःसतोबृहत्यः तथाचानुक्रान्तं—त्वामिद्धिषळूनाप्रागाथमिति । सू-

कविनियोगो लैंगिकः यदि ज्योतिष्टोमो बृहत्पृष्ठः स्यात्तदानीं निष्केवल्यस्य आद्यः प्रगाथः स्तोत्रियः सूत्रितं च—यद्युवै बृहत्त्वामिद्धि हवामह इति । महाव्रते पि निष्केवल्ये अयं प्रगाथः शंसनीयः तथैव पंचमारण्यके सूत्रितं—त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति बृहतः स्तोत्रियानुरूपाविति ।

तत्र प्रथमा—

त्वामिद्धि हवामहे साता वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ १ ॥

त्वाम् । इत् । हि । हवामहे । साता । वाजस्य । कारवः ।
त्वाम् । वृत्रेषु । इन्द्र । सत्ऽपतिम् । नरः । त्वाम् ।
काष्ठासु । अर्वतः ॥ १ ॥

कारवः स्तोतारो वयं वाजस्यान्नस्य साता सातौ संभजने निमित्तभूते सति हे इन्द्र त्वामिद्धि त्वामेव हवामहे स्तुतिभिराह्वयामः हे इन्द्र सत्पतिं सतां पालयितारं श्रेष्ठं त्वां नरः अन्येपि मनुष्याः वृत्रेष्वावरकेषु शत्रुषु सत्सु हवंते आह्वयन्ति तज्जयार्थं अपि च अर्वतोश्वस्य संबन्धिनीषु काष्ठासु यत्राश्वः क्रान्त्वा तिष्ठति तासु काष्ठासु संग्रामेषु युद्धकामा अश्वत्वामेवाह्वयन्ति अतो वयं त्वामेवाह्वयाम इत्यर्थः ॥ १ ॥

१. हम स्तोता हैं। अन्न-प्राप्ति के लिए तुम्हें बुलाते हैं। तुम साधुओं के रक्षक हो; इसलिए अश्वों से युक्त संग्राम में शत्रुओं को जीतने के लिए वे तुम्हें ही बुलाते हैं।

स त्वं नश्चित्र वज्रहस्त धृष्णुया मह स्तवानो अद्रिवः ।
गामश्वं रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे ॥ २ ॥

सः । त्वम् । नः । चित्र । वज्रऽहस्त । धृष्णुऽया । महः ।
स्तवानः । अद्रिऽवः । गाम् । अश्वम् । रथ्यम् । इन्द्र ।
सम् । किर । सत्रा । वाजम् । न । जिग्युषे ॥ २ ॥

हे चित्र चायनीय वज्रहस्त वज्रबाहो अद्रिवः वज्रवन् यद्वा आदृणात्यनेनेत्यद्रिरशनिः तद्वन् एवंभूत इन्द्र धृष्णुया धृष्णुः शत्रूणां धर्षयिता महो महान् सतादृशस्त्वं स्तवानोस्माभिः स्तूयमानः सन् गां रथ्यं रथवाहनमश्वं च संकिर सम्यक्प्रयच्छ जिग्युषे जितवते पुरुषाय भोगार्थं सत्रा महत्प्रभूतं वाजं न अन्नमिव यथा शत्रून् जितवते भोगार्थं बहुन्नं प्रयच्छसि तद्वत् ॥ २ ॥

२. विचित्र-वज्र-पाणि वज्री, जैसे तुम युद्ध में विजयी पुरुष को यथेष्ट अन्न देते हो, वैसे ही तुम हमारे स्तव से प्रसन्न होकर हमें यथेष्ट गो और रथ वहन करने में पटु अश्व दो; तुम शत्रु-नाशक और प्रतापी हो।

महाव्रतेनिष्केवल्येयःसत्राहेत्यादिसूक्तशेषःशंसनीयः सूत्र्यतेहि—यःसत्राहाविचर्षणिरि-तिशेषोऽयंतेअस्तुहर्यतइतिसूक्तेइति । चातुर्विंशिकेहनिमाध्यंदिनसवनेयःसत्राहेतिप्रगाथोवैक-ल्पिकोनुरूपः सूत्रितंच—यःसत्राहाविचर्षणिःस्वादोरित्थाविषूवतइति ।

प्रगाथेप्रथमासूक्तेतृतीया—

यःसत्राहाविचर्षणिरिन्द्रंतंहूमहेवयम् ।
सहस्रमुष्कतुविनृम्णसत्पतेभवासमत्सुनोवृधे ॥ ३ ॥

यः । सत्राऽहा । विऽचर्षणिः । इन्द्रम् । तम् । हूमहे । वयम् ।
सहस्रऽमुष्क । तुविऽनृम्ण । सत्ऽपते । भव । समत्ऽसु ।
नः । वृधे ॥ ३ ॥

यः इन्द्रःसत्राहा महतांशत्रूणांहन्ता विचर्षणिर्विशेषेणसर्वस्यद्रष्टा तमिन्द्रंवयंहूमहे स्तुतिप्रदेराह्वयामः उत्तरार्धःप्रत्यक्षकृतः हेसहस्रमुष्क सहस्रशेफ यांकांचस्त्रियंसंभवन्निन्द्रः भोगलोलुपतया स्वशरीरेपर्वणिपर्वणिशेफान्ससर्जेतिकौषीतकिभिराम्नातं तदभिप्रायेणेदंसंबोधनं हेतुविनृम्ण बहुधन सत्पते सतांपालयितरिन्द्र समत्सुसंग्रामेषु नोस्माकंवृधेवर्धनायभव ॥ ३ ॥

३. जो प्रबल शत्रुओं के निधन-कर्त्ता और सर्वदर्शी हैं, उन्हीं इन्द्र को हम बुलाते हैं। सहस्र-शेफ, अतुलधन-सम्पन्न और सत्पालक इन्द्र, रण-स्थल में तुम हमें समृद्धि दो।

बाधसेजनान्वृषभेवमन्युनाघृषौमीळ्हऋचीषम ।
अस्माकंबोध्यविताममहाधनेतनूष्वप्सुसूर्ये ॥ ४ ॥

बाधसे । जनान् । वृषभाःऽइव । मन्युना । घृषौ । मीळ्हे । ऋचीषम ।
अस्माकम् । बोधि । अविता । महाऽधने । तनूषु । अप्ऽसु । सूर्ये ॥ ४ ॥

हेऋचीषम ऋचासम ऋक्यादृशंरूपंप्रतिपादयतितादृग्रूपेन्द्र घृषौशत्रूणांघर्षकेबाधकेमीळ्हेसंग्रामेजनान् अस्मदीयान्शत्रून् वृषभेव वृषभेणेव बलवतामन्युनाक्रोधेनबाधसे बाधस्व तथा महाधने महतोधनस्यनिमित्तभूतेसंग्रामेच अस्माकमवितारक्षिताबोधि बुध्यस्व रक्षितृत्वेनात्मानंजानीहि रक्षकोभवेतियावत् किमर्थं तनूषुतनयेषुअप्सूदकेषुसूर्येचलब्धव्येषुसत्सु एतेषांलाभार्थंसूर्यस्यलाभसंदर्शनंतदर्थमित्यर्थः ॥ ४ ॥

४. इन्द्र, जैसा ऋचा में वर्णन मिलता है, वैसा ही तुम्हारा रूप है। तुम तुमुल युद्ध में, वृषभ की तरह, अत्यन्त क्रोध के साथ हमारे शत्रुओं पर आक्रमण करो। जिससे हम सन्तति, जल और सूर्य का दर्शन (अथवा बहुत समय तक भोग) कर सकें, उसके लिए तुम रण-भूमि में हमारे रक्षक बनो।

चातुर्विंशिकेहनिमाध्यंदिनसवनेब्राह्मणाच्छंसिनःइन्द्रज्येष्ठंनआभरेतिप्रगाथोवैकल्पिकोनुरूपः सूत्रितंच—इन्द्रज्येष्ठंनआभरात्वासहस्रमाशतमिति।

तत्रप्रथमासूक्तेपंचमी—

इन्द्र॒ज्येष्ठं॑न॒आभ॑रँ॒ओजि॑ष्ठं॒पपु॑रि॒श्रव॑ः।
येने॒मेचि॑त्रवज्रहस्त॒रोद॑सी॒ओभेसु॑शिप्र॒प्राः॥ ५॥२७॥

इन्द्र॑। ज्येष्ठ॑म्। न॒ः। आ। भ॒र॒। ओजि॑ष्ठम्। पपु॑रि। श्रव॑ः। येन॑। इ॒मे इति॑। चि॒त्र॒। व॒ज्र॒ऽह॒स्त॒। रोद॑सी॒ इति॑। आ। उ॒भे इति॑। सु॒ऽशि॒प्र॒। प्राः॥ ५॥

हेइन्द्र ज्येष्ठंप्रशस्यतमं ओजिष्ठंओजस्वितमं अतिशयेनबलकरं पपुरिपूरकंश्रवोन्नंनोस्मभ्यंआभर आहर प्रयच्छ हेचित्र चायनीय वज्रहस्त वज्रबाहो हेसुशिप्र शोभनहनुक एवंभूत हेइन्द्र येनान्नेनइमेपरिदृश्यमानेउभेरोदसीद्यावापृथिव्यौआप्राः आपूरयसि तदन्नमाभरेत्यन्वयः॥ ५॥

५. शोभन हनु (केहुनी) वाले और अद्भुत-वज्रपाणि इन्द्र, जिस अन्न से तुम स्वर्ग और पृथ्वी का पोषण करते हो, हमारे पास वही प्रकृष्टतम, अत्यन्त बल-वर्द्धक और पुष्टिसाधक अन्न ले आओ।

॥ इतिचतुर्थस्यसप्तमेसप्तविंशोवर्गः॥ २७॥

त्वामु॒ग्रमव॑सेचर्षणी॒सहं॒राज॑न्दे॒वेषु॑हूमहे।
विश्वा॒सुनो॑विथु॒रापि॒ब्दना॑वसो॒मित्रा॑न्त्सु॒षहा॑न्कृधि॥ ६॥

त्वाम्। उ॒ग्रम्। अव॑से। च॒र्ष॒णि॒ऽसह॑म्। राज॑न्। दे॒वेषु॑। हू॒म॒हे॒। विश्वा॑। सु। न॒ः। वि॒थु॒रा। पि॒ब्द॒ना। व॒सो॒ इति॑। अ॒मित्रा॑न्। सु॒ऽसहा॑न्। कृ॒धि॒॥ ६॥

हेराजन् राजमानेन्द्र देवेषुदेवानांमध्ये उग्रमुद्गूर्णबलं चर्षणीसहं चर्षणीनांशत्रुभूतानां प्रजानामभिभवितारंत्वां अवसेरक्षणाय हूमहे आह्वयामः त्वंविश्वा सर्वाणि पिब्दना पिब्दनानि रक्षांसि पिहितं अव्यक्तंशब्दयन्तइतिपिब्दनानि पृषोदरादिः तानि सु सुष्ठु विथुरा व्यथितानि बाधितानि कुरु हेवसो वासकेन्द्र नोस्मदीयानमित्रान्शत्रूंश्च सुषहान्सुखेनाभिभवितुंशक्यान्कृधि कुरु॥ ६॥

६. दीप्तिशाली इन्द्र, तुम हमारी रक्षा करोगे; इसलिए तुम्हें हम बुलाते हैं। तुम देवों में सबसे बली और शत्रु-जयी हो। गृहदाता इन्द्र, तुम समस्त राक्षसों को अलग करो और हमें शत्रुओं के ऊपर विजय दो।

अथसप्तमी—

यदिन्द्रनाहुषीष्वाँओजोनृम्णंचकृष्टिषु ।
यद्वापञ्चक्षितीनांद्युम्नमाभरसत्राविश्वानिपौंस्या ॥७॥

यत् । इन्द्र । नाहुषीषु । आ । ओजः । नृम्णम् । च । कृष्टिषु । यत् ।
वा । पञ्च । क्षितीनाम् । द्युम्नम् । आ । भर । सत्रा । विश्वानि । पौंस्या ॥७॥

हेइन्द्र नाहुषीषु नहुषइतिमनुष्यनाम तत्संबन्धिनीषुकृष्टिषुप्रजासु आकारःसमुच्चये यच्चओजोबलंनृम्णंधनंचविद्यते यद्वा यच्चपंचपंचानांक्षितीनां निषादपंचमाश्चत्वारोवर्णाःपंचक्षितयः तेषांस्वरूपं द्युम्नंद्योतमानमन्नं तत्सर्वमस्मभ्यंआभराहर प्रयच्छ तथासत्रामहान्तिविश्वानिसर्वाणिपौंस्यानिबलानिचास्मभ्यंआहर ॥ ७ ॥

७. इन्द्र, मनुष्यों में जो कुछ बल और धन है और पाँचो वर्णों में जो अन्न है, सो सब सारे महान् बल के साथ, हमें दो।

अथाष्टमी—

यद्वातृक्षौमघवन्द्रुह्यावाजनेयत्पूरौकच्चवृष्ण्यम् ।
अस्मभ्यंतद्रिरीहिसंनृषाह्येमित्रान्पृत्सुतुर्वणे ॥ ८ ॥

यत् । वा । तृक्षौ । मघ ऽवन् । द्रुह्यौ । आ । जने । यत् । पूरौ ।
कत् । च । वृष्ण्यम् । अस्मभ्यम् । तत् । रिरीहि । सम् । नृऽसह्ये ।
अमित्रान् । पृत्ऽसु । तुर्वणे ॥ ८ ॥

हेमघवन् धनवन्निन्द्र तृक्षौएतत्संज्ञेराजनि यद्वा यच्चबलंविद्यतेद्रुह्यावाद्रुह्यौच एतत्संज्ञेचजनेयद्बलमस्ति पूरौएतत्संज्ञेनृपेचयत्कच्चयत्किंचनवृष्ण्यंवीर्यंविद्यते तत्सर्वमस्मभ्यंस्तोतृभ्यः सम्यग्रिरीहि प्रयच्छ कदा नृषह्येनृभिर्योद्धृभिःसोढव्येयुद्धेप्रवृत्ते किमर्थं पृत्सुपृतनासुसंग्रामेषु अमित्रान्शत्रून्तुर्वणेतुर्वितुंहिंसितुं ॥ ८ ॥

८. ऐश्वर्यशाली इन्द्र, शत्रुओं के साथ युद्ध प्रारम्भ होने पर हम उन्हें युद्ध में जीत सकें, इसके लिए तुम हमें तक्षु, द्राह्य और पुरु का सारा बल दे देना।

चातुर्विंशिकेहनिनिष्केवल्येइन्द्रत्रिधात्विति त्रिवैरूपस्यसामप्रगाथःशंसनीयः सूत्रितंच—इन्द्रत्रिधातुशरणंत्वमिन्द्रप्रतूर्तिष्विति ।

तत्रप्रथमासूक्तेनवमी—

इन्द्रत्रिधातुशरणंत्रिवरूथंस्वस्तिमत् ।
छर्दिर्यच्छमघवद्भ्यश्चमह्यंचयावयादिद्युमेभ्यः ॥ ९ ॥

इन्द्रं। त्रिऽधातु। शरणम्। त्रिऽवरूथम्। स्वस्तिऽमत्।
छर्दिः। यच्छ। मघवत्ऽभ्यः। च। मह्यम्। च। यवय। दिद्युम्।
एभ्यः॥ ९॥

हेइन्द्र त्रिधातु त्रिप्रकारंत्रिभूमिकंत्रिवरूथंत्रयाणांशीतातपवर्षाणांवारकंस्वस्तिमत् अविनाशयुक्तं छर्दिःछर्दिष्मत् आच्छादनयुक्तं एवंगुणविशिष्टंशरणंगृहंमघवद्भ्यश्चमघंहविर्लक्षणंधनंतद्वद्भ्यश्चास्मदीयेभ्यःमह्यंभरद्वाजायचयच्छ देहि अपिचएभ्यःसकाशात् दिद्युं शत्रुप्रेरितं द्योतमानमायुधंयवय पृथक्कुरु॥ ९॥

९. इन्द्र, हव्यरूप धन से युक्त मनुष्यों कोऔर मुझे एक ऐसा घर दो, जो लकड़ी, ईंट और पत्थर का बना हुआ हो और जिसमें शीत, ताप और ग्रीष्म न सतावें तथा जो घर समृद्ध और आच्छादक हो। शत्रुओं के सारे दीप्तियुक्त आयुधों को दूर करो।

येगंव्यतामनंसाशत्रुंमादभुरंभिप्रघ्नन्तिधृष्णुया।
अधंस्मानोमघवन्निन्द्रगिर्वणस्तनूपाअन्तंमोभव॥१०॥२८॥

ये। गव्यता। मनसा। शत्रुम्। आऽदभुः। अभिऽप्रघ्नन्ति। धृष्णुऽया।
अध। स्म। नः। मघऽवन्। इन्द्र। गिर्वणः। तनूऽपाः। अन्तमः।
भव॥ १०॥ २८॥

येजनाः गव्यताशत्रूणांगाइच्छतामनसायुक्ताःसन्तःशत्रुंशातयितारं वैरिणंआदभुःहिंसिषुः येचधृष्णुयाधृष्णवःधृष्टाःसन्तःअस्मानभिलक्ष्यप्रघ्नंति प्रकर्षेणहिंसंति हेमघवन् धनवन् गिर्वणोगिरांसंभक्तरिन्द्र अधस्म अस्मिन्काले तेभ्यःसकाशात्नोस्माकंतनूपाः तनूनांशरीराणांरक्षिता सन् अन्तमःअन्तिकतमोभव॥ १०॥

१०. ऐश्वर्यशाली इन्द्र, जिन्होंने हमारी गायें अपहृत करने के लिए हमारे ऊपर शत्रुवत् आक्रमण किया था अथवा जिन्होंने धृष्टता के साथ हमें उत्पीड़ित किया था, उनसे (हमारे स्तोत्रों से. प्रसन्न होकर) हमारी रक्षा करने के लिए हमारे पास आओ।

॥ इतिचतुर्थस्यसप्तमेष्टाविंशोवर्गः॥ २८॥

अथैकादशी—

अधंस्मानोवृधेभवेन्द्रंनायमंवायुधि।
यदन्तरिक्षेपतयंन्तिपर्णिनोंदिद्यवंस्तिग्ममूर्धानः॥ ११॥

अध। स्म। नः। वृधे। भव। इन्द्र। नायम्। अव। युधि।
यत्। अन्तरिक्षे। पतयन्ति। पर्णिनः। दिद्यवः। तिग्मऽमूर्धानः॥११॥

हेइन्द्र अधस्मतदानींनोस्माकंवृधेवर्धनायभव अपिचनायंयोस्माकंनयोनेतायुधियुद्धे तमपिअवरक्ष तदेत्युक्तंकदेत्यतआह पर्णिनः पक्षवन्तः तिग्ममूर्धानस्तीक्ष्णास्याः दिद्यवोदीप्ताःबाणाः यद्यदाअन्तरिक्षेन्योन्निपतयन्तिशत्रुभिर्विसृष्टाःपतन्ति तदानींवृधेभवेत्यन्वयः ॥ ११ ॥

११. इन्द्र, इस समय हमें धन दो। जिस समय पक्ष-युक्त, तीक्ष्णाग्र और दीप्त शत्रुओं के वाण आकाश से गिरते हैं, उस समय जो हमारी रक्षा करते हैं, उनकी रक्षा तुम समर-भूमि में करना।

यत्र॒शूरा॑सस्त॒न्वो॑वितन्व॒तेप्रि॒याशर्म॑पि॒तॄणा॑म् ।

अध॑स्मायच्छत॒न्वे॒३तने॑चछ॒र्दिर॒चित्तं॑या॒वय॒द्वेषः॑ ॥ १२ ॥

यत्र॑ । शूरा॑सः । त॒न्वः॑ । वि॒ऽत॒न्व॒ते । प्रि॒या । शर्म॑ । पि॒तॄणा॑म् । अध॑ । स्म॒ । य॒च्छ॒ । त॒न्वे॑ । तने॑ । च॒ । छ॒र्दिः॑ । अ॒चित्त॑म् । य॒वय॑ । द्वेषः॑ ॥ १२ ॥

यत्र यस्मिन्काले शूरासःशूराः शौर्यवन्तोयोद्धारः तन्वः स्वकीयानिशरीराणिवितन्वते विस्तारयन्ति स्वामिनोजयायशत्रूणांपुरतोदर्शयन्ति तथायस्मिन्कालेप्रियाप्रियाणि शर्मशर्माणि स्थानानि पितॄणांजनकानांसंबन्धीनि तैरर्जितानीतियावत एतानिचवितन्वते शत्रूणांपुरस्ताद्विस्तारयन्ति परित्यजन्तीतियावत् अधस्मअस्मिन्कालेतन्वेशरीरायतनेतनयायच छर्दिः छादनंआयुधानांनिवारकंकवचं अचित्तं शत्रुभिरज्ञातं यथाभवतितथायच्छ प्रयच्छ शत्रुज्ञानात्पूर्वमेवदेहीत्यर्थःअपिचद्वेषोद्वेष्टॄन्शत्रून्यावय तेभ्योवियोजय ॥ १२ ॥

१२. शत्रुओं के सामने जिस समय वीर लोग अपनी देह को दिखाते और पैतृक स्थानों का परित्याग करते हैं, उस समय तुम हमें और हमारी सन्तानों को शरीर-रक्षा के लिए, गुप्त रूप से, कवच देना और शत्रुओं को दूर करना।

यदि॑न्द्र॒सर्गे॒अर्व॑तश्चो॒दया॑सेमहा॒धने॑ ।

अ॒स॒म॒नेअध्व॑निवृ॒जि॒नेप॒थिश्ये॒नाँइ॑वश्रव॒स्य॒तः ॥ १३ ॥

यत् । इ॒न्द्र॒ । सर्गे॑ । अर्व॑तः । चो॒दया॑से । म॒हा॒ऽध॒ने । अ॒स॒म॒ने । अध्व॑नि । वृ॒जि॒ने । प॒थि । श्ये॒नान्ऽइ॑व । श्र॒व॒स्य॒तः ॥ १३ ॥

हेइन्द्र महाधनेजेतव्यस्यमहतोधनस्यनिमित्तेमहतिसंग्रामेसर्गेउद्योगेसति असमनेविषमे अध्वनिमार्गेअर्वतोस्मदीयानश्वान् यद्यदाचोदयासे प्रेरयसि वृजिनेकुटिलेपथिमार्गेअन्तरिक्षलक्षणेश्रवस्यतः श्रवःअन्नमामिषरूपंआत्मनइच्छतः श्येनानइवयथाआमिषार्थिनःश्येनाःअन्तरिक्षेशीघ्रंगच्छन्ति तथास्मदीयानश्वान्यदात्वंशीघ्रंगमयसि तदानीमस्माकंतन्वेतनयायच छर्दिर्यच्छेतिपूर्वस्यामृचिसंबन्धः ॥ १३ ॥

१३. महायुद्ध का समारोह होने पर तुम विकट मार्ग से हमारे अश्वों को, कुटिल प्रान्त से जानेवाले, द्रुतगति और आमिषार्थी श्येन की तरह, भेजना।

सिन्धूँरिवप्रवणआशुयायतोयदिक्लोशमनुष्वणि।
आयेवयोनवर्वृतत्यामिषिगृभीताबाह्वोर्गवि ॥ १४ ॥ २९ ॥

सिन्धून्ऽइव। प्रवणे। आशुऽया। यतः। यदि। क्लोशम्। अनु। स्वनि। आ। ये। वयः। न। वर्वृतति। आमिषि। गृभीताः। बाह्वोः। गवि ॥ १४ ॥ २९ ॥

उक्तस्यैवार्थस्यअतिशयप्रतिपादनार्थेयं प्रवणेनिम्नदेशेसिन्धूनिव स्यन्दमानानदीरिव आशुयाआशुशीघ्रंयतोगच्छतोश्वान् हेइन्द्र यदिचोदयासे प्रेरयसि कदाक्लोशमनुक्रोशमिति भय नाम भयमनुलक्ष्यस्वनिस्वनेआक्रोशेसति कीदृशास्तेश्वाः बाह्वोर्बाहुमूलयोर्गृभीताः कक्ष्यायाबद्धायेअश्वाः गविगोरूपेधनेजेतव्येसति आवर्वृतति पुनःपुनरावर्तन्ते आमिषिआमिषे मांसे ग्रहीतव्ये सति वयोन यथाश्येनादयःपक्षिणःपुनःपुनरावर्ततेतद्वत् एवंभूतानश्वान्भयेनक्रोशेसतियदात्वंप्रेरयसि तदानीमस्मदीयेभ्यः छर्दिःप्रयच्छेतिसंबन्धः यद्यपिऋषेर्युद्धेप्रसक्तिर्नास्तितथापिराजपुरोहितत्वेनराजकीयानां पुरुषाणांजयःप्रार्थ्यतइतिनकश्चिद्विरोधः ॥ १४ ॥

१४. यद्यपि डर के मारे घोड़े ज़ोर से हिनहिनाते हैं, तथापि निम्नगामिनी नदियों की तरह, वे ही वेगगामी और दृढ़संयत घोड़े, आमिषार्थी पक्षियों की तरह, धेनु-प्राप्ति के लिए, प्रवृत्त संग्राम में, बार-बार दौड़ते हैं।

॥ इतिचतुर्थस्यसप्तमएकोनात्रिंशोवर्गः ॥ २९ ॥

स्वादुरितिएकत्रिंशदृचंचतुर्थंसूक्तंभरद्वाजपुत्रस्यगर्गस्यार्षं प्रस्तोकइन्वित्येषात्रिष्टुप् दशाश्वानित्यनुष्टुप् दशरथानितिगायत्री महिराधइतिद्विपदाव्येकादशका युजानोहरितइत्येषाबृहती दिवस्पृथिव्याइतिजगती शिष्टास्त्रिष्टुभः आदितःपंचानांसोमोदेवता अगव्यूतिक्षेत्रमित्यर्धर्चंप्रथमपादेदेवाउत्तरस्यभूमिः तृतीयस्यबृहस्पतिः चतुर्थस्यैन्द्रः प्रस्तोकइत्याद्याश्चतस्रःसृंजयपुत्रस्य राज्ञोदानस्तुतिरूपत्वात्तद्देवताकाः वनस्पतेवीड्वंगइत्ययंतृचोरथदेवत्यः उपश्वासयेतितृचोदुंदुभिदेवत्यः समश्वपर्णाइत्यर्धर्चऐन्द्रः शिष्टाइन्द्रदेवताकाः तथाचानुक्रान्तं—स्वादुरेकात्रिंशद्गर्गःपंचादौसौम्योगव्यूत्यर्धर्चोलिंगोक्तदेवतः प्रस्तोकइतित्रिष्टुबनुष्टुप्गायत्रीद्विपदासाऽयस्यप्रस्तोकस्य दानस्तुतिः परौतृचौरथदुंदुभिदेवत्यावैन्द्रोन्त्योर्धर्चोयुजानोबृहतीदिवस्पृथिव्याजगतीति। आग्निमारुतेआदितश्चतस्रःशंसनीयाः सूत्रितंच—स्वादुष्किलायमितिचतस्रोमध्येचाह्वानमिति।

तत्रप्रथमा—

स्वादुष्किलायंमधुमाँउतायंतीव्रःकिलायंरसवाँउतायम् ।
उतोन्वस्यपपिवांसमिन्द्रंनकश्चनसहतआहवेषु ॥ १ ॥

स्वादुः । किल । अयम् । मधुऽमान् । उत । अयम् । तीव्रः ।
किल । अयम् । रसऽवान् । उत । अयम् । उतो इति । नु । अस्य ।
पपिऽवांसम् । इन्द्रम् । न । कः । चन । सहते । आऽहवेषु ॥ १ ॥

अयंअभिषुतःसोमः स्वादुरास्वादनीयःकिलभवति उतापिच मधुमान्माधुर्यवांश्चायंसोमो-भवति तथायंसोमः तीव्रःकिल मदोत्पादनेतीक्ष्णःखलुभवति उतापिच अयंसोमोरसवान् सारवां-श्चभवति अनेनवाक्यचतुष्टयेनसोमस्यमाधुर्यातिशयत्वंचप्रतिपादितं उतोअपिच अस्यसोमस्य द्वितीयार्थेषष्ठी इमंसोमंपपिवांसंपीतवन्तमिन्द्रं आहवेषुसंग्रामेषुनकश्चननकोपिसहते अभिभव-ति नुइतिपूरकः ॥ १ ॥

१. यह अभिषुत सोम सुस्वादु, मधुर, तीव्र और रसवान है। इसका इन्द्र पान कर लेते हैं, तब संग्राम में उनके सामने कोई नहीं ठहर सकता।

अथद्वितीया—

अयंस्वादुरिहमदिष्ठआसयस्येन्द्रोवृत्रहत्येममाद ।
पुरूणियश्च्यौत्नाशम्बरस्यविनवतिंनवचदेह्योहन् ॥ २ ॥

अयम् । स्वादुः । इह । मदिष्ठः । आस । यस्य । इन्द्रः ।
वृत्रऽहत्ये । ममाद । पुरूणि । यः । च्यौत्ना । शम्बरस्य ।
वि । नवतिम् । नव । च । देह्यः । हन् ॥ २ ॥

इहास्मिन्यज्ञेअयंसोमः स्वादुरास्वादितःपीतःसन् मदिष्ठः अतिशयेनमदयिता आसब-भूव यस्यसोमस्यपानेनइन्द्रोवृत्रहत्ये वृत्रहननकाले ममाद मत्तोबभूव यःसोमः शंबरस्यासुरस्य पुरूणिबहूनिच्यौत्नाच्यौत्नानिबलानिजघान तथादेह्यः दिग्धाःउपचिताःआसुरीःपुरीः तदीयान् देहान्वानवतिंनवचनवोत्तरनवतिसंख्याकाःयःसोमोविहन् व्यहन् अयंसोमइतिप्रथमपादे-नसंबन्धः ॥ २ ॥

२. इस यज्ञ में पीने पर ऐसे ही सोम ने अत्यन्त हर्ष प्रदान किया था। वृत्र के विनाश के समय इन्द्र ने इसे पीकर प्रसन्नता प्राप्त की थी। इसने शम्बर की निन्यानवे पुरियों का विनाश किया था।

अथतृतीया—

अयंमेपीतउदियर्तिवाचमयंमनीषामुशतीमजीगः ।
अयंषळुर्वीरमिमीतधीरोनयाभ्योभुवनंकच्चनारे ॥ ३ ॥

अयम् । मे । पीतः । उत् । इयर्ति । वाचम् । अयम् । मनीषाम् ।
उशतीम् । अजीगरिति । अयम् । षट् । उर्वीः । अमिमीत । धीरः ।
न । याभ्यः । भुवनम् । कत् । चन । आरे ॥ ३ ॥

अयंसोमःपीतःसन् मेममवाचंउदियर्ति उद्गमयति अयमेवसोमउशतींकान्तांमनीषांबुद्धिं उदजीगः उद्गारयति प्रकाशयति गॄनिगरणेइत्यस्माण्ण्यन्ताल्लुङिचङिरूपं अपिचायंधीरोधीमान् सोमःषळुर्वीः षण्मोर्वीरंहसस्पान्तु द्यौश्चपृथिवीचाहश्चरात्रिश्चापश्चौषधयश्चेतिप्रतिपादिताद्युपृथिव्याद्याःषट्अमिमीत निर्मितवान् याभ्यउर्वीभ्यआरेदूरे विप्रकृष्टेदेशे कच्चन किंचन भुवनंभूतजातं नभवति अपितुआस्वेवसर्वंभूतजातंवर्ततेतादृशीरुर्वीर्निर्मितवान् ॥ ३ ॥

३. पीने पर यह सोमरस मेरे वाक्य की स्फूर्ति को बढ़ाता है। यह अभिलषित बुद्धि को प्रदान करता है। इसी सुबुद्धि सोम ने स्वर्ग, पृथ्वी, दिन-रात्रि, जल और ओषधि आदि छः अवस्थाओं की सृष्टि की ह। भूतगण में कोई भी इससे दूर नहीं ठहर सकता।

अयंसयोवरिमाणंपृथिव्यावर्ष्माणंदिवोअकृणोदयंसः ।
अयंपीयूषंतिसृषुप्रवत्सुसोमोदाधारोर्व[1]न्तरिक्षम् ॥ ४ ॥

अयम् । सः । यः । वरिमाणम् । पृथिव्याः । वर्ष्माणम् ।
दिवः । अकृणोत् । अयम् । सः । अयम् । पीयूषम् ।
तिसृषु । प्रवत्ऽसु । सोमः । दाधार । उरु । अन्तरिक्षम् ॥ ४ ॥

सखल्वयंसोमः यःपृथिव्यावरिमाणं उरुत्वंविस्तृतत्वंअकृणोत्अकरोत् तथायंसोमोदिवोद्युलोकस्यवर्ष्माणं संहतत्वंदृढत्वंअकृणोदकरोत्अयंसोमःसहिभवति अपिचायंसोमः तिसृष्वोषधीषुअप्सुगोषुचप्रवत्सुप्रकृष्टास्वेतासुपीयूषंरसंदाधार धारयति तथाउरुविस्तीर्णमन्तरिक्षं चधारयति तथाचमंत्रान्तरं—त्वमिमाओषधीःसोमविश्वास्त्वमपोअजनयस्त्वंगाः । त्वमाततंथोर्व[1]न्तरिक्षमिति ॥ ४ ॥

४. फलतः इसी सोमरस ने पृथ्वी का विस्तार और स्वर्ग की दृढ़ता की है। इसी सोमरस ने ओषधि, जल और धेनु नामक तीन उत्कृष्ट आधारों में रस दिया था। यही विस्तृत अन्तरिक्ष को धारण किये हुए है।

अथपंचमी—

अयंविदच्चित्रदृशीकमर्णःशुक्रसद्मनामुषसामनीके ।
अयंमहान्महतास्कम्भनेनोद्द्यामस्तभ्नाद्वृषभोमरुत्वान् ॥५॥३०॥

[1] ऋ० सं० १. ६. २३.

अयम् । विदत् । चित्रऽदृशीकम् । अर्णः । शुक्रऽसद्मनाम् ।
उषसाम् । अनीके । अयम् । महान् । महता । स्कम्भनेन । उत् ।
द्याम् । अस्तभ्नात् । वृषभः । मरुत्वान् ॥ ५ ॥ ३० ॥

अयंसोमः चित्रदृशीकंविचित्रदर्शनं यद्वा आश्चर्यत्वेनदर्शनीयं अर्णःसर्वस्यप्रेरकं सौरं ज्योतिःविदवलंभयति कस्मिन्काले शुक्रसद्मनांशुक्रंनिर्मलमन्तरिक्षंसद्मसदनंयासांतासामुषसां अनीकेप्रमुखेउषःकालइत्यर्थः अपिच महान्प्रवृद्धोयंसोमः महतास्थविष्ठेनस्कंभनेन स्तंभनसाधनेनमध्यवर्तिनान्तरिक्षेणद्यांद्युलोकंउदस्तभ्नात् ऊर्ध्वमस्थापयत् यथाअधोनपततितथाअन्तरिक्षंतस्याधारत्वेनकृतवानित्यर्थः कीदृशःसोमः वृषभोवृष्टेर्जनयिता सोमाहुत्याहिवृष्टिर्जन्यतेमरुत्वान्मरुद्भिर्युक्तः ॥ ५ ॥

५. निर्मल आकाश में स्थित उषा के पहले यही सोम विचित्र दर्शन सूर्य-ज्योति को प्रकट करता है, वारिवर्षी और बलशाली यह सोमरस ही मरुतों के साथ सुदृढ़ स्तम्भ-द्वारा स्वर्ग को धारण किये हुए हैं।

॥ इतिचतुर्थस्यसप्तमेत्रिंशोवर्गः ॥ ३० ॥

धृषत्पिबकलशेसोममिन्द्रवृत्रहाशूरसमरेवसूनाम् ।
माध्यंन्दिनेसवनआवृषस्वरयिस्थानोरयिमस्मासुधेहि ॥ ६ ॥

धृषत् । पिब । कलशे । सोमम् । इन्द्र । वृत्रऽहा । शूर ।
समऽअरे । वसूनाम । माध्यन्दिने । सवने । आ । वृषस्व ।
रयिऽस्थानः । रयिम् । अस्मासु । धेहि ॥ ६ ॥

हेशूर शौर्यवन्निन्द्र वृत्रहा वृत्राणामावरकाणांशत्रूणांहन्तात्वं वसूनांधनानांसमरेसंग्रामे निमित्तभूतेसति कलशेद्रोणकलशेवस्थितंसोमंधृषत्धृष्टंयथाभवतितथापिब अपिच माध्यंदिने सवने आवृषस्व आसिंचस्व जठरंसोमेनपूरय सर्वैन्द्रंहिमाध्यंदिनंसवनं किंचरयिस्थानःरयीणांधनानांस्थानभूतस्त्वंरयिंधनमस्मासुधेहिधारय ॥ ६ ॥

६. वीर इन्द्र, धन-प्राप्ति के लिए आरम्भ किये गये संग्राम में तुम शत्रु संहार करो। साहस के साथ कलस-स्थित सोमरस का पान करो। मध्याह्न के यज्ञ में तुम बहुत सोम पान करो। हे धन-पात्र, हमें धन दो।

अथसप्तमी—

इन्द्रप्रणःपुरएतेवपश्यप्रनोनयप्रतरंवस्योअच्छ ।
भवांसुपारोअतिपारयोनोभवासुनीतिरुतवामनीतिः ॥ ७ ॥

इन्द्रं । प्र । नः । पुरएताऽइंव । पश्य । प्र । नः । नय । प्रऽतरम् ।
वस्यः । अच्छं । भवं । सुऽपारः । अतिऽपारयः । नः । भवं ।
सुऽनीतिः । उत । वामऽनीति ॥ ७ ॥

हेइन्द्र त्वंपुरएतेव पुरतोगंतेव नोस्मानप्रपश्य प्रकर्षेणईक्षस्व यथामार्गरक्षकःस्वयंपुरतोगच्छन्अनुगच्छतोरक्षणीयान्पथिकान्पश्यति तथापश्येत्यर्थः तथावस्योवसीयःश्रेष्ठंधनंअच्छाभिमुख्येनप्रतरं प्रकृष्टतरंअतिशयेनप्रणयअस्मान्प्रापय तथासुपारःसुष्ठुपारयिता दुःखेभ्यस्तारयिताभव तथानोस्मान्स्तोतॄन्अतिपारयः शत्रूनतिक्रामय सुनीतिःशोभननयनश्चास्माकंभव उतापिच वामनीतिः वामानांवननीयानांधनानांनेताभव यद्वास्मदर्थंश्रेष्ठप्रापणोभव ॥ ७ ॥

७. इन्द्र, मार्गरक्षक की तरह तुम अग्रगामी होकर हमारे प्रति दृष्टि रखना और हमारे सामने श्रेष्ठ धन ले आना। तुम भली भाँति हमें दुःख और शत्रु से बचाओ और उत्कृष्ट नेता होकर हमें अभिलषित धन में ले जाओ।

ऐन्द्रेपशौउरुंनइत्येषावपायायाज्या सूत्रितंच—उरुंनोलोकमनुनेषिविद्वान्प्रससाहिषेपुरुहूतशत्रूनिति । होत्रकैःसदःप्रसर्पणसमयेप्येषाजप्या सूत्रितंच—उरुंनोलोकमनुनेषिविद्वानितिजपंतइति । चातुर्विंशिकेहन्यहर्गणेषुचद्वितीयादिष्वहःसुमाध्यंदिनसवनेच्छावाकस्यैषाचारंभणीया सूत्रितंच—उरुंनोलोकमनुनेषिविद्वानितिकद्वत्यआरंभणीयाइति ।

सैषासूक्तेष्टमी—

उरुंनोलोकमनुनेषिविद्वान्त्स्वर्वज्ज्योतिरभयंस्वस्ति ।
ऋष्वातइन्द्रस्थविरस्यबाहूउपंस्थेयामशरणाबृहन्ता ॥ ८ ॥

उरुम् । नः । लोकम् । अनु । नेषि । विद्वान् । स्वःऽवत् । ज्योतिः ।
अभयम् । स्वस्ति । ऋष्वा । ते । इन्द्र । स्थविरस्य । बाहू इति ।
उप । स्थेयाम । शरणा । बृहन्ता ॥ ८ ॥

हेइन्द्र विद्वान्जानंस्त्वंउरुं विस्तीर्णंलोकंस्थानंस्वर्गाख्यंनोस्मानअनुनेषि अनुगमय तथास्वर्वत्सुखवतअभयंभयरहितंज्योतिश्चस्वस्तिक्षेमेणअनुनेषि अस्माननुगमय हेइन्द्र स्थविरस्यस्थूलस्यवृद्धस्यतेतवसंबंधिनौऋष्वादर्शनीयौ बृहन्तामहान्तौ बाहूत्वदीयौहस्तौशरणाशरणौरक्षकौरक्षकत्वयाउपस्थेयाम उपतिष्ठेम सेवेमहि ॥ ८ ॥

८. इन्द्र, तुम ज्ञानी हो। हमें विस्तीर्ण लोक में—सुखमय और भयशून्य आलोक में भी—निर्विघ्न ले जाना। तुम प्राचीन हो। हम तुम्हारे मनोज्ञ और बृहत् बाहुओं के ऊपर रक्षा के लिए आश्रित हैं।

वरिष्ठेनइन्द्रवन्धुरेंधावहिंष्ठयोःशतावन्नस्वयोरा ।
इषमावक्षीषांवर्षिष्ठांमानस्तारीन्मघवन्रायोअर्यः ॥ ९ ॥

वरिष्ठे । नः । इन्द्र । वन्धुरे । धाः । वहिष्ठयोः । शतऽवन् ।
अश्वयोः । आ । इषम् । आ । वक्षि । इषाम् । वर्षिष्ठाम् ।
मा । नः । तारीत् । मघऽवन् । रायः । अर्यः ॥ ९ ॥

हेइन्द्र वरिष्ठेउरुतमेविस्तीर्णतमेवंधुरे आत्मीयेरथे नोस्मान्धाःधेहिधारय अपिच हेशत-वन् शतसंख्यधनेन्द्र वहिष्ठयोर्वोढृतमयोः आकारःसमुच्चये अश्वयोरात्वदीययोःअश्वयोश्चा-स्मान्धारय तथाइषामन्नानांमध्येवर्षिष्ठांवृद्धतमांइषमन्नमावक्षि अस्मदर्थमावह आनय हेम-घवन्धनवन्निंद्र अर्योधनस्यस्वामी अन्यःकश्चिद्नोस्माकंरायोधनानिमातारीन्माहिंसीत् ॥ ९ ॥

९. धनाढ्य इन्द्र, तुम हमें अपने पराक्रमी अश्वों के पीछे विस्तृत रथ पर चढ़ाओ। विविध अन्नों के बीच तुम हमारे लिए प्रकृष्टतम अन्न ले आओ। मघवन् कोई भी धनी धन में हमें न लाँघ सके।

इन्द्रंमृळमह्यंजीवातुमिच्छचोदयधियमयसोनधाराम् ।
यत्किंचाहन्त्वायुरिदंवदामितज्जुषस्वकृधिमादेववन्तम् ॥१०॥३१॥

इन्द्र । मृळ । मह्यम् । जीवातुम् । इच्छ । चोदय । धियम् ।
अयसः । न । धाराम् । यत् । किम् । च । अहम् । त्वाऽयुः ।
इदम् । वदामि । तत् । जुषस्व । कृधि । मा । देवऽवन्तम् ॥१०॥३१॥

हेइन्द्र मृळ मृळय अस्मान्सुखय जीवातुंजीवनौषधंचमह्यंदातुमिच्छ तथाधियंबुद्धिंचोद-य स्तुतिविषयांकर्मविषयांवाप्रेरय तीक्ष्णीकुरु अयसोनधारां अयोमयस्यखड्गादेःधारामिव सा यथासूक्ष्मातद्वत् सूक्ष्मविषयांधियंचोदयेत्यर्थः किंचत्वायुःत्वामात्मनइच्छन्इदमिदानींयत्किंच-नाहंवदामिसमीचीनमसमीचीनंवातज्जुषस्व मामांचदेववन्तंरक्षकैर्देवैरुपेतंकृधिकुरु ॥ १० ॥

१०. इन्द्र, तुम मुझे सुखी करो। मेरी जीवन-वृद्धि करने में प्रसन्न होओ। लौहमय खड्ग की धार की तरह मेरी बुद्धि को तेज करो। तुम्हें प्रसन्न करने के लिए इस समय जो कुछ मैं कह रहा हूँ, सो सब ग्रहण करो। देवगण मेरी रक्षा करें।

॥ इतिचतुर्थस्यसप्तमेएकत्रिंशोवर्गः ॥ ३१ ॥

आयुष्कामेष्टयांइन्द्रस्यत्रातुस्त्रातारमित्यनुवाक्या सूत्रितंच—त्रातारमिन्द्रमवितारमिन्द्रंमाते-अस्यांसहसावन्परिष्टाविति ।

सैषात्रैकादशी—

त्रातारमिन्द्रमवितारमिन्द्रंहवेहवेसुहवंशूरमिन्द्रम् ।
ह्वयामिशक्रंपुरुहूतमिन्द्रंस्वस्तिनोमघवाधात्विन्द्रः ॥ ११ ॥

त्रातारम् । इन्द्रम् । अवितारम् । इन्द्रम् । हवेऽहवे । सुऽहवम् ।
शूरम् । इन्द्रम् । ह्वयामि । शक्रम् । पुरुऽहूतम् । इन्द्रम् ।
स्वस्ति । नः । मघऽवा । धातु । इन्द्रः ॥ ११ ॥

त्रातारंशत्रुभ्यःपालयितारमिन्द्रमाह्वयामि तथाअवितारं कामैस्तर्पयितारमिन्द्रमाह्वयामि हवेहवेसर्वेष्वाहवनेषु सुहवंसुखेनाह्वातुंशक्यंशूरंशौर्यवन्तं शक्रंसर्वकार्येषुशक्तं पुरुहूतंपुरुभिर्बहुभिःपालनार्थमाहूतं एवंविधमिन्द्रंह्वयाम्याह्वयामि एवमाहूतोमघवाधनवान्सइन्द्रःस्वस्ति अविनाशंनोस्मभ्यंधातुददातु यद्वास्माकंविदधातु ॥ ११ ॥

११. जो शत्रुओं से रक्षा करते और मनोरथ पूर्ण करते हैं, जो अनायास आह्वान-योग्य, शौर्यशाली और सभी कामों में समर्थ हैं, मैं उन्हीं बहुलोक-वन्दनीय इन्द्र को, प्रत्येक यज्ञ में, बुलाता हूँ। धनवान् इन्द्र हमें समृद्धि दें।

इन्द्रःसुत्रामास्ववाँअवोभिःसुमृळीकोभवतुविश्ववेदाः ।
बाधतांद्वेषोअभयंकृणोतुसुवीर्यस्यपतयःस्याम ॥ १२ ॥

इन्द्रः । सुऽत्रामा । स्वऽवान् । अवःऽभिः । सुऽमृळीकः ।
भवतु । विश्वऽवेदाः । बाधताम् । द्वेषः । अभयम् । कृणोतु ।
सुऽवीर्यस्य । पतयः । स्याम ॥ १२ ॥

सुत्रामासुष्ठुत्राता स्ववान्धनवान्सइन्द्रः अवोभीरक्षणैःसुमृळीकः सुष्ठुसुखयिताभवतु तथाचविश्ववेदाःसर्वधनःसर्वविद्वान्वासइन्द्रः द्वेषःद्वेष्टॄन्शत्रून्बाधतां हिनस्तु अभयंभयरहितंचास्माकंकृणोतु करोतु वयंचतत्प्रसादात्सुवीर्यस्यशोभनवीर्यस्यपतयःस्याम भवेम ॥ १२

१२. शोभन रक्षा करनेवाले और धनशाली इन्द्र रक्षा-द्वारा हमें सुख देते हैं। वही सर्वज्ञ इन्द्र हमारे शत्रुओं का वध करके हमें निर्भय करते हैं। उनकी प्रसन्नता से हम अतीव वीर्य-शाली बनें।

अथत्रयोदशी—

तस्यवयंसुमतौयज्ञियस्यापिभद्रेसौमनसेस्याम ।
ससुत्रामास्ववाँइन्द्रोअस्मेआराच्चिद्द्वेषःसनुतर्युयोतु ॥ १३ ॥

तस्य । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे ।
स्याम । सः । सुऽत्रामा । स्वऽवान् । इन्द्रः । अस्मे इति ।
आरात् । चित् । द्वेषः । सनुतः । युयोतु ॥ १३ ॥

यज्ञियस्ययज्ञार्हस्यतस्येन्द्रस्यसुमतौ शोभनायामनुग्रहात्मिकायांबुद्धौवयंस्याम विषयभूताभवेम तथाभद्रेकल्याणेसौमनसेसुमनोभावेपितदीयेस्याम भवेम सइन्द्रोस्मासुअनुग्रहात्मिकां बुद्धिंसौमनस्यंचकरोत्वित्यर्थः सुत्रामासुष्ठुत्रातास्ववान् धनवान् सइन्द्रश्च अस्मेअस्मत्तः आराच्चिद्दूरदेशेएवद्वेषःद्वेष्टॄन्सनुतः अन्तर्हितनामैतत् अंतर्हितान्युयोतुपृथक्करोतु ॥ १३ ॥

१३. हम उन्हीं योगार्ह इन्द्र के अनुग्रह, बुद्धि और कल्याणवाही प्रीति के पात्र बनें। रक्षक और धनी वही इन्द्र विद्वेषियों को बहुत दूर ले जायँ।

अव॒त्वेइ॑न्द्रप्र॒वतो॒नोर्मिर्गिरो॒ब्रह्मा॑णिनि॒युतो॑धवन्ते।
उ॒रूनराधः॒सव॑नापु॒रूण्य॒पोगाव॑ज्रिन्युवसे॒समिन्दू॑न् ॥ १४ ॥

अव॑। त्वे इति॑। इन्द्र॒। प्र॒ऽवतः॑। न। ऊ॒र्मिः॑। गिरः॑।
ब्रह्मा॑णि। नि॒ऽयुतः॑। ध॒वन्ते॒। उ॒रु। न। राधः॑। सव॑ना।
पु॒रूणि॑। अ॒पः। गाः। व॒ज्रि॒न्। यु॒वसे॒। सम्। इन्दू॑न् ॥ १४ ॥

हेइन्द्र त्वेत्वांनियुतःस्तोतुःगिरः उक्थात्मिकावाचः ब्रह्माणिसामरूपाणिस्तोत्राणिच अवधवन्ते अवगच्छन्ति तत्रदृष्टान्तः—ऊर्मिःजलसंघः प्रवतोन प्रवणदेशानिव यथाउच्छ्रितात्स्थलान्निम्नदेशंशीघ्रंगच्छतितद्वत् नशब्दःसमुच्चये उरुउरूणि राधोराधांसिच हविर्लक्षणानिधनानि पुरूणिबहूनि सवनासवनानि बहवोभिषुताःसोमाश्च त्वामेवाभिगच्छन्ति हेवज्रिन् वज्रवन्निन्द्र अपोवसतीवर्याख्यागाःगोविकारान्श्रृतदध्यादीन्श्रयणार्थान्इन्दून्सोमांश्च संयुवसेसम्यग्मिश्रयसि त्वांयष्टुंवसतीवरीभिरभिषुत्यतंसोममाशिरादिभिःश्रपणद्रव्यैःसंस्कुर्वन्तीत्यर्थः ॥ १४ ॥

१४. इन्द्र, स्तोताओं की स्तुति, उपासना, विशाल धन और प्रचुर अभिषुत सोमरस, निम्न देश-प्रवण जलराशि की तरह, तुम्हारी ओर जाते हैं। वज्रधर इन्द्र, तुम जल, दूध और सोमरस भली भाँति मिलाते हो।

अथपंचदशी—

कई॑स्तव॒त्कः॑पृ॒णा॒त्कोय॑ंजाते॒यदु॒ग्रमिन्म॒घवा॑वि॒श्वहावे॑त्।
पादा॑विवप्र॒हर॑न्न॒न्यमं॑न्यंकृ॒णोति॒पूर्व॒मप॑रं॒शची॑भिः ॥ १५ ॥ ३२ ॥

कः। ई॒म्। स्त॒व॒त्। कः। पृ॒णा॒त्। कः। य॒जा॒ते॒। यत्। उ॒ग्रम्।
इत्। म॒घऽवा॑। वि॒श्वहा॑। अवे॑त्। पादौ॑ऽइव। प्र॒ऽहर॑न्।
अ॒न्यम्ऽअ॑न्यम्। कृ॒णोति॑। पूर्व॑म्। अप॑रम्। शची॑भिः ॥ १५ ॥ ३२ ॥

कःस्तोता ईमेनमिन्द्रंस्तवत् स्तुयात् स्तोतुंशक्नुयात् कोवापृणात् एनंप्रीणयेत् कश्चयजाते एनंहविर्भिर्यजेत यद्यस्मात्अयंमघवाधनवानिन्द्रःउग्रमित्उद्गूर्णमेव विश्वहासर्वदाअवेत् आ-

त्मानंवेत्तिजानातिसर्वदाउग्रएवभवति तस्मात्कारणात् नकोप्येनंस्तोतुंमीणयितुंयष्टुंवाशक्नोतीतिभावः इतोपिस्तुत्यादेरविषयइत्याह—यस्मादयमिन्द्रःशचीभिरात्मीयाभिःप्रज्ञाभिःपूर्वंप्रथमभाविनंसन्तं स्तोतारंअपरंपश्चाद्भाविनंचअन्यमन्यंपरस्परव्यतिहारेणकृणोतिकरोति यःप्रथमभावी मुख्यस्तोतातंजघन्यंकरोति यश्चजघन्यःस्तोतातंमुख्यंकरोति तत्रदृष्टान्तः—प्रहरन्पादाविव पादौप्रहरन्मार्गेप्रक्षिपन्पुरुषःपूर्वंपादमपरंकरोति अपरंचपूर्वंतद्वत् अतोपिकारणातइन्द्रःस्तुत्यादेरविषयइतिभावः एतदादिकेनपंचर्चेनइन्द्रस्यातिस्वातंत्र्यंप्रतिपाद्यते ॥ १५ ॥

१५. भली भाँति कौन मनुष्य इन्द्र की स्तुति, प्रसन्नता और यज्ञ करने में समर्थ है ? धनशाली इन्द्र प्रतिदिन अपनी उग्र शक्ति को जानते हैं। जैसे पथिक अपने पैरों को कभी आगे और कभी पीछे करता है, वैसे ही इन्द्र अपने बुद्धि-बल से स्तोता को कभी परवर्ती और कभी अग्रवर्ती करते हैं।

॥ इतिचतुर्थस्यसप्तमेद्वात्रिंशोवर्गः ॥ ३२ ॥

अथषोडशी—

शृण्वेवीरउग्रमुग्रंदमायन्नन्यमन्यमतिनेनीयमानः ।
एधमानद्विळुभयस्यराजाचोष्कूयतेविशइन्द्रोमनुष्यान् ॥ १६ ॥

शृण्वे । वीरः । उग्रम्ऽउग्रम् । दमऽयन् । अन्यम्ऽअन्यम् ।
अतिऽनेनीयमानः । एधमानऽद्विट् । उभयस्य । राजा ।
चोष्कूयते । विशः । इन्द्रः । मनुष्यान् ॥ १६ ॥

अयमिन्द्रोवीरोवीर्यवानितिशृण्वे श्रूयते किंकुर्वन् उग्रमुग्रंउद्गूर्णउद्गूर्णंबलिनंशत्रुंप्रतिदमायन् दमःदमनं बाधनमिच्छन् अन्यमन्यंप्रथमंनेतव्यमन्यंपश्चान्नेतव्यंचान्यं पूर्वमपरंपरस्परव्यवहारेण स्तोतॄन्अतिनेनीयमानः अत्यन्तंपुनःपुनर्नयन् अपिचएधमानद्विट् एधमानानांवर्धमानानांअसुन्वतांद्वेष्टा उभयस्यदिव्यस्यपार्थिवस्यचधनस्यराजाईश्वरोयमिन्द्रःविशःनिवेशयितॄन् स्वस्यपरिचारकान्मनुष्यान्चोष्कूयते रक्षणार्थंपुनःपुनराह्वयति ॥ १६ ॥

१६. प्रबल शत्रु का दमन करके और स्तोताओं का स्थान सदा परिवर्तन करके इन्द्र, अपनी वीरता के लिए, प्रसिद्धि प्राप्त करते हैं। उद्धत व्यक्तियों के द्वेषी और स्वर्गीय तथा पार्थिव धनों के अधिपति इन्द्र अपने सेवकों को, रक्षा के लिए, बार-बार बुलाते हैं।

परापूर्वेषांसख्यावृणक्तिवितर्तुराणोअपरेभिरेति ।
अनानुभूतीरवधून्वानःपूर्वीरिन्द्रःशरदस्तर्तरीति ॥ १७ ॥

परा । पूर्वेषाम् । सख्या । वृणक्ति । विऽतर्तुराणः । अपरेभिः ।
एति । अननुऽभूतीः । अवऽधून्वानः । पूर्वीः । इन्द्रः ।
शरदः । तर्तरीति ॥ १७ ॥

अयमिन्द्रः पूर्वेषांपूर्वभाविनांप्रशस्तानांकर्मणांकुर्वतांपुरुषाणांसख्यासखित्वानिपरावृणक्ति वर्जयति अपिच विततुराणस्तान्हिंसन् अपरेभिरपरैः अमुख्यैरप्रशस्तैरपिकर्मानुष्ठातृभिः एति सख्यंप्राप्नोति तथाअनानुभूतीः अपरिचरणाःप्रजाः अवधून्वानः परित्यजन् पूर्वीर्बह्वीः शरदःसंवत्सरान्अयमिन्द्रः तर्तरीति भृशमतिक्रामति स्तोतृभिःसहसख्यंकुर्वन् चिरकालंवसतीत्यर्थः ॥ १७ ॥

१७. इन्द्र पूर्वतन प्रशस्त कर्मों के अनुष्ठाताओं की मित्रता त्याग देते हैं और उनसे द्वेष करके उनकी अपेक्षा निकृष्ट व्यक्तियों के साथ मित्रता करते हैं। अथवा अपनी उपासना से रहित व्यक्तियों को छोड़कर परिचारकों के साथ अनेक वर्ष रहते हैं।

रूपंरूपंप्रतिरूपोबभूवतदस्यरूपंप्रतिचक्षणाय।
इन्द्रोमायाभिःपुरुरूपईयतेयुक्ताह्यस्यहरयःशतादश ॥१८॥

रूपम्ऽरूपम् । प्रतिऽरूपः । बभूव । तत् । अस्य । रूपम् ।
प्रतिऽचक्षणाय । इन्द्रः । मायाभिः । पुरुऽरूपः । ईयते ।
युक्ताः । हि । अस्य । हरयः । शता । दश ॥ १८ ॥

अयमिन्द्रःप्रतिरूपोरूपाणांप्रतिनिधिःसन् रूपंरूपंतत्तदग्न्यादिदेवतास्वरूपंबभूवप्राप्नोति भूप्राप्ताविति धातुः इन्द्रःस्वमाहात्म्येनतत्तद्देवतारूपोभवतीत्यर्थः अस्यचेन्द्रस्यतत्प्राप्तमग्न्यादिदेवतास्वरूपंप्रतिचक्षणायप्रतिनियतदर्शनाय अयमग्निरयंविष्णुरयंरुद्रइत्येवमसंकीर्णदर्शनायभवति अपिचायमिन्द्रोमायाभिः ज्ञाननामैतत् ज्ञानैरात्मीयैःसंकल्पैःपुरुरूपोबहुविधशरीरःसन् ईयतेबहून्यजमानान्गच्छति ननुद्वावेवास्याश्वौ एकश्चरथः कथमनेनयुगपद्बहून्गच्छतीत्यतआह—अस्येन्द्रस्यहरयोश्वाःयुक्तारथेयोजिताःशतादश सहस्रसंख्याकाःअपरिमिताःसन्तिहि यस्मादेवंतस्माद्बहुशरीराणिस्वीकृत्ययुगपद्विष्मतोयजमानान्गच्छतीत्यर्थः अन्येमन्यन्ते इदिपरमैश्वर्येइत्यस्यधातोःरथानुगमादिन्द्रःपरमात्मासचाकाशवत्सर्वगतःसदानंदरूपः सएवोपाधिभिरन्तःकरणैःप्रतिशरीरमवच्छिन्नःसन् जीवात्मेतिव्यपदिश्यते सएवअनादिमायाशक्तिभिः वियदादिजगदात्मनाविवर्ततेशब्दादिविषयहरणशीलाःइन्द्रियवृत्तयश्चतेनैवसंबद्धाः एतत्सर्वंतस्य परमात्मनोयद्वास्तवंरूपंतस्यदर्शनायेति अयमर्थोनयाप्रतिपाद्यते रूपंरूपंरूप्यतइतिरूपं शरीरादिप्रतिशरीरंचिद्रूपःसर्वगतःपरमात्माप्रतिरूपः प्रतिबिंबरूपःसन् सर्वाणिशरीराणिबभूव प्राप्नोत् तच्चप्राप्तंप्रतिबिंबरूपंअस्यपरमात्मनःप्रतिचक्षणायप्रतिनियताकारस्यदर्शनायभवति सचेन्द्रः

परमेश्वरःमायाभिर्मायाशक्तिभिःपुरुरूपःवियदादिभिर्बहुविधरूपैरुपेतःसन्नीयते चेष्टते एतदपि अस्यपरमात्मनःप्रतिचक्षणायभवति अस्यचदशशतासहस्रसंख्याकाहरयःइन्द्रियवृत्तयःयुक्ताः विषयग्रहणायोद्युक्ताःसन्ति तदपिअस्यवास्तवरूपस्यदर्शनायभवतीति एवंस्थूलसूक्ष्मशरीरयो-र्वियदादिमहाप्रपंचस्यचतत्वज्ञानहेतुत्वमनयाप्रत्यपादीति ॥ १८ ॥

१८. सारे देवों के प्रतिनिधि इन्द्र तीन प्रकार की मूर्तियाँ धारण करते हैं और इन रूपों को धारण कर वे अलग-अलग प्रकट होते हैं। वे माया-द्वारा अनेक रूप धारण करके यजमानों के पास उपस्थित होते हैं; क्योंकि इन्द्र के रथ में हजार घोड़े जोते जाते हैं।

युजानोहरितारथेभूरित्वष्टेहराजति ।
कोविश्वाहाद्विषतःपक्षआसतउतासीनेषुसूरिषु ॥ १९ ॥

युजानः । हरिता । रथे । भूरि । त्वष्टा । इह । राजति । कः ।
विश्वाहा । द्विषतः । पक्षः । आसते । उत । आसीनेषु । सूरिषु ॥ १९ ॥

हरिताहरितावश्वौ रथेयुजानोयुंजन्त्वष्टादीप्तइन्द्रःइहत्रैलोक्येभूरिभूरिषु बहुषुप्रदेशेषु राजति दीप्यते उतअपिच सूरिषुस्तोतृषुअस्मादृशेषु आसीनेषुसत्सु विश्वाहासर्वदाइन्द्रादन्यः कोनामद्विषतःशत्रोः पक्षःपाचकोबाधकः सन् आसते आस्ते इन्द्रएवसर्वदा शत्रून्बाधतइत्यर्थः यद्वा पक्षइतिसकारान्तंसमीपवचनं इन्द्रादन्यः कोनामद्विषतः शत्रोः समीपेआसते आस्तेइन्द्र-एवनिर्भयःसन्शत्रुसमीपेस्थातुंशक्नोतीतिभावः ॥ १९ ॥

१९. रथ में इन्द्र ही घोड़े जोतकर त्रिभुवनों के अनेक स्थानों में प्रकट होते हैं। दूसरा कौन व्यक्ति प्रतिदिन उपस्थित स्तोताओं के बीच जाकर शत्रुओं से उनकी रक्षा करता है?

अथविंशी—

अगव्यूतिक्षेत्रमागन्मदेवाउर्वीसतीभूमिरंहूरणाभूत् ।
बृहस्पतेप्रचिकित्सागविष्टावित्थासतेजरित्रइन्द्रपन्थाम् ॥२०॥३३॥

अगव्यूति । क्षेत्रम् । आ । अगन्म । देवाः । उर्वी । सती ।
भूमिः । अंहूरणा । अभूत् । बृहस्पते । प्र । चिकित्स । गोऽइष्टौ ।
इत्था । सते । जरित्रे । इन्द्र । पन्थाम् ॥ २० ॥ ३३ ॥

अत्रोक्तं—अरण्येनिर्जनेगर्गोदेवान्भूमिंबृहस्पतिं । इन्द्रंचास्तौत्स्वरक्षार्थंमृचामागंव्युतोन-येति ॥ १ ॥ अगव्यूतीत्यत्रदेवान्पादेभूमिमथोत्तरे । बृहस्पतिंतृतीयेतुइन्द्रएवोत्तमेस्तुतइतिच ॥ २ ॥ हेदेवाः अगव्यूतिअगोचरंगोसंचाररहितंक्षेत्रंदेशंआगन्म आगतास्मः अतोमांरक्षतेति-

शेषः उर्वीविस्तीर्णासती भूमिश्चअंहूरणाअंहवः आहन्तारोदस्यवः तेषांरमणारमयित्रीअभूव भवति अस्मान्अतःसापिरक्षतु हेबृहस्पते त्वंगविष्टौगवामन्वेषणेउपायेप्रचिकित्स प्रवेदय इत्थाइत्थमनेनप्रकारेणसतेभवते दुःखमनुभवतेजरित्रेस्तोत्रेमह्यं हेइन्द्र पंथांपंथानंमार्गंप्रचिकित्स प्रज्ञापय ॥ २० ॥

२०. देवो, हम गगन घूमते-घूमते उस देश में आ पहुंचे हैं, जहां गायें नहीं हैं। विस्तृत पृथ्वी दस्युओं को आश्रय देती है। बृहस्पति, तुम धेनुओं के अनुसन्धान में हमें परिचालित करो। इन्द्र, इस तरह से पथ-भ्रष्ट अपने उपासक को मार्ग दो।

॥ इतिचतुर्थस्यसप्तमेत्रयस्त्रिंशोवर्गः ॥ ३३ ॥

दिवेदिवेसदृशीरन्यमर्धंकृष्णाअसेधदपसद्मनोजाः।
अहंदासावृषभोवस्नयन्तोदव्रजेवर्चिनंशम्बरंच ॥ २१ ॥

दिवेऽदिवे। सऽदृशीः। अन्यम्। अर्धम्। कृष्णाः। असेधत्।
अप। सद्मनः। जाः। अहन्। दासा। वृषभः। वस्नऽयन्ता।
उदऽव्रजे। वर्चिनम्। शम्बरम्। च ॥ २१ ॥

अयमिन्द्रः सद्मनः सदनात्स्वकीयादंतरिक्षैकदेशावस्थानात्जाःजायमानःसूर्यात्मना प्रादुर्भवन् सदृशीस्तुल्यरूपाःकृष्णाःकृष्णवर्णारात्रीःदिवेदिवेप्रतिदिवसंअपासेधत् निवर्तयति किमर्थं अन्यमर्धंअहरर्धमपरंभागंप्रकाशयितुं अहोरात्रात्मकस्यदिवसस्यहिरात्रिरेकोभागः अपिचवृषभोवर्षयितासइन्द्रः दासादासौउपक्षपयितारौ यज्ञकर्मणांवस्नयन्तावस्नंनिवासहेतुभूतंधनं तदिच्छन्तौ वर्चिनंशंबरंचएतत्संज्ञावसुरौउदव्रजे उदकानिव्रजंत्यस्मिन्नितिउदव्रजोदेशविशेषः तस्मिन्अहन्हतवान् ॥ २१ ॥

२१. इन्द्र अन्तरिक्षस्थित गृह से सूर्य-रूप से प्रकट होकर दिन का अपरार्द्ध प्रकाशित करने के लिए प्रतिदिन, समान रीति से रात्रि को दूर करते हैं। "उदवज्र" नामक देश में शम्बर और वर्ची नाम के दो धनार्थी दासों का वर्षक इन्द्र ने संहार किया था।

प्रस्तोकइन्नुराधसस्तइन्द्रदशकोशयीर्दशवाजिनोदात्।
दिवोदासादतिथिग्वस्यराधःशाम्बरंवसुप्रत्यग्रभीष्म ॥ २२ ॥

प्रऽस्तोकः। इत्। नु। राधसः। ते। इन्द्र। दश। कोशयीः।
दश। वाजिनः। अदात्। दिवःऽदासात्। अतिथिऽग्वस्य।
राधः। शाम्बरम्। वसु। प्रति। अग्रभीष्म ॥ २२ ॥

एतदाद्यासुचतसृषुसृंजयपुत्रस्यप्रस्तोकस्यराज्ञोदानस्तुतिः सएवदिवोदासःअश्वथःअतिथिग्वइतिचाख्यायते हेइन्द्र तेतवराधसःआराधयितुःस्तोतुः चतुर्थ्यर्थेषष्ठी त्वांस्तुवते मह्यंगर्गायप्रस्तोकोराजादशकोशयीः सुवर्णपूर्णान्दशसंख्याकान्कोशानदशवाजिनोश्वांश्च नुक्षिप्रंअदात् प्रायच्छत् इदितिपूरणः वयंचतस्माद्दिवोदासात्एतत्संज्ञात्प्रस्तोकात् वसुधनंप्रत्यग्रभीष्म प्रतिगृहीतवन्तः कीदृशं अतिथिग्वस्य तस्यैवप्रस्तोकस्यस्वभूतंराधःराधकं शांबरं शंबरादसुरादागतंशंबरंहत्वा त्वयादत्तंतदीयमित्यर्थः ॥ २२ ॥

२२. इन्द्र, प्रस्तोक ने तुम्हारे स्तोताओं को (हमें) सोने से भरे दस कोश और दस घोड़े प्रदान किये थे। अतिथिग्व ने शम्बर को जीतकर जो धन प्राप्त किया था, उसी धन को हमने दिवोदास से पाया है।

दशाश्वान्दशकोशान्दशवस्त्राधिभोजना ।
दशोहिरण्यपिण्डान्दिवोदासादसानिषम् ॥ २३ ॥

दश । अश्वान् । दश । कोशान् । दश । वस्त्रा । अधिऽभोजना ।
दशो इति । हिरण्यऽपिण्डान् । दिवःऽदासात् । असानिषम् ॥ २३ ॥

दशदशसंख्याकानश्वान् दशसंख्याकान्हिरण्यपूर्णान्कोशान् अधिभोजना भोजनमितिधननाम अधिकंधनंयेषांमूल्यंतादृशानिदशसंख्यानिवस्त्राणिच दशोदशचदशसंख्याकांश्च हिरण्यपिंडान् सुवर्णपिंडान्एतान्सर्वान्दिवोदासात्प्रस्तोकात्अहमसानिषंसमभजं लब्धवानस्मि ॥ २३ ॥

२३. मैंने दिवोदास के पास से दस घोड़े, दस सोने के कोश, कपड़े, यथेष्ट अन्न और दस हिरण्य पिण्ड पाये हैं।

अथचतुर्विंशी—

दशरथान्प्रष्टिमतःशतंगाअथर्वभ्यः । अश्वथःपायवेदात् ॥ २४

दश । रथान् । प्रष्टिऽमतः । शतम् । गाः । अथर्वऽभ्यः ।
अश्वथः । पायवे । अदात् ॥ २४ ॥

दशदशसंख्याकान्प्रष्टिमतः प्रष्टिस्त्रिपदआधारः तद्वद्वहन्तीतिप्रष्टयोश्वाः तद्युक्तान्रथान् शतंशतसंख्याकागाश्चअथर्वभ्यः अथर्वगोत्रेभ्यऋषिभ्यः पायवेभरद्वाजपुत्रायएतत्संज्ञायास्मद्भ्रात्रेच अश्वथः अश्ववानेतत्संज्ञःप्रस्तोकः अदात् दत्तवान् ॥ २४ ॥

२४. मेरे भाई अश्वत्थ ने पायु को घोड़ों के साथ दस रथ और अथर्व-गोत्रीय ऋषियों को एक सौ गायें प्रदान कीं।

अथपंचविंशी—

महिराधोविश्वजन्यंदधानान्भरद्वाजान्त्सार्ञ्जयोअभ्ययष्ट ॥२५॥३४॥

मंहि । राधः । विश्वऽजन्यम् । दधानान् । भरत्ऽवाजान् ।
सार्ञ्जयः । अभि । अयष्ट ॥ २५ ॥ ३४ ॥

विश्वजन्यंसर्वजनहितंमहिमहद्राधोधनंदधानान्धारयतोभरद्वाजान्भरद्वाजपुत्रानस्मान् सार्ञ्जयःसृंजयपुत्रःप्रस्तोकः अभ्ययष्ट अपूजयत् ॥ २५ ॥

२५. भरद्वाज के पुत्र ने सबकी भलाई के लिए जो ये सब ऐश्वर्य ग्रहण किये थे, सृञ्जयपुत्र ने उनकी पूजा की थी।

॥ इतिचतुर्थस्यसप्तमेचतुर्स्त्रिंशोवर्गः ॥ ३४ ॥

वनस्पतइत्येषारथारोहणेविनियुक्ता सूत्रितंच—वनस्पतेवीड्वंगोहिभूयाइत्येतयान्यान्यपि वानस्पत्यानीति ।

सैषात्रषड्विंशी—

वनस्पतेवीड्वंगोहिभूयाअस्मत्सखाप्रतरणःसुवीरः ।
गोभिःसन्नद्धोअसिवीळयस्वास्थातातेजयतुजेत्वानि ॥ २६ ॥

वनस्पते । वीळुऽअङ्गः । हि । भूयाः । अस्मत्ऽसखा । प्रऽतरणः ।
सुऽवीरः । गोभिः । सम्ऽनद्धः । असि । वीळयस्व ।
आऽस्थाता । ते । जयतु । जेत्वानि ॥ २६ ॥

हेवनस्पते वनस्पतिविकाररथ त्वं वीड्वंगःदृढावयवोभूयाः भव अस्मत्सखावयंसखायोय-स्यसतादृशश्चभव प्रतरणःप्रवर्धयितासुवीरःशोभनैःवीरैःशूरभटैःपुत्रादिभिर्वायुक्तश्चभव अपिच त्वंगोभिःगोविकारैश्चर्मभिः सन्नद्धोसि सम्यग्बद्धोभवसि तादृशस्त्वंवीळयस्व अस्मान्दृढीकुरु तेतवआस्थातात्वय्यवस्थितोरथीच जेत्वानिजेतव्यानिशत्रुसैन्यानिजयतु ॥ २६ ॥

२६. वनस्पति-निर्मित रथ, तुम्हारे सब अवयव दृढ़ हों। तुम हमारे रक्षक और मित्र बनो। तुम प्रतापी वीरों से युक्त होओ। तुम गोचर्म द्वारा बाँधे गये हो। हमें सुदृढ़ करो। तुम्हारे ऊपर आरूढ़ रथी अनायास ही संग्राम में शत्रुओं को जीतने में समर्थ हो।

दिवस्पृथिव्याःपर्योजउद्भृतंवनस्पतिभ्यःपर्याभृतंसहः ।
अपामोज्मानंपरिगोभिरावृतमिन्द्रस्यवज्रंहविषारथंयज ॥२७॥

दि॒वः । पृ॒थि॒व्याः । परि॑ । ओजः॑ । उत्ऽभृ॑तम् । वन॒स्पति॑ऽभ्यः ।
परि॑ । आऽभृ॑तम् । सहः॑ । अ॒पाम् । ओ॒ज्मान॑म् । परि॑ । गोभिः॑ ।
आऽवृ॑तम् । इन्द्र॑स्य । वज्र॑म् । ह॒विषा॑ । रथ॑म् । य॒ज॒ ॥ २७ ॥

दिवोद्युलोकात्पृथिव्याभूमेश्चउद्भृतं उद्धृतंसारत्वेनोपात्तं यदोजोबलमस्ति तद्रूपंवनस्पतिविकारत्वाद्रथस्यवनस्पतयोहिपृथिव्याःसारभूताः तेचद्युसंबन्धिभिरुदकैःप्रवृद्धाः अतोरथस्यलोकद्वयसारत्वमुपपन्नं परिःपंचम्यर्थानुवादी अपिच वनस्पतिभ्योवृक्षेभ्यःपरिपूर्ववत्आभृतमाहृतंसहोबलरूपं अपामुदकानांओज्मानंप्रेरकं यद्वा ओज्मावेगः अपांवेगइववेगवन्तंगोभिः गोविकारैःचर्मभिःपरितआवृतं आवेष्टितं इन्द्रस्यवज्रंवज्रैकदेशं श्रूयतेहि—इन्द्रोवृत्रायवज्रमुदयच्छत्सत्रेधाव्यभजत् वज्रस्तृतीयंरथस्तृतीयंयूपस्तृतीयमिति । एवंगुणविशिष्टंरथंहविषापुरोडाशादिनाहेअध्वर्यो यजनूनमेषाउत्तराचरथदेवत्यस्यहविषोयाज्यानुवाक्येलिंगादवगंतव्ये॥२७॥

२७. ऋत्विको, तुम हव्य से रथ का यज्ञ करो। यह रथ स्वर्ग और पृथ्वी के सारांश से बना है, वनस्पतियों के स्थिरांश से घटित है, जल के वेग की तरह वेगवान् है, गोचर्म द्वारा ढका हुआ तथा वज्र की तरह है।

इन्द्र॑स्य॒ वज्रो॑ म॒रुता॒मनी॑कं मि॒त्रस्य॒ गर्भो॒ वरु॑णस्य॒ नाभिः॑ ।
सेमां नो॑ ह॒व्यदा॑तिं जुषा॒णो देव॑ रथ॒ प्रति॑ ह॒व्या गृ॑भाय ॥ २८ ॥

इन्द्र॑स्य । वज्रः॑ । म॒रुता॑म् । अनी॑कम् । मि॒त्रस्य॑ । गर्भः॑ ।
वरु॑णस्य । नाभिः॑ । सः । इ॒माम् । नः॒ । ह॒व्यऽदा॑तिम् ।
जु॒षा॒णः । देव॑ । र॒थ॒ । प्रति॑ । ह॒व्या । गृ॒भा॒य॒ ॥ २८ ॥

योरथःइन्द्रस्यवज्रः उक्तप्रकारेणवज्रैकदेशः मरुतांएतत्संज्ञानांदेवगणानांअनीकंअग्रभूतं तद्वच्छीघ्रगामीमित्रस्यअहरभिमानिनोदेवस्यगर्भोगर्भवदंतर्वर्तमानः अहनिहिरथःसंचरति वरुणस्यरात्र्यभिमानिदेवस्यनाभिःनाभिस्थानीयःनाभिर्यथादेहमध्येनैश्चल्येनावतिष्ठतेतद्वत् रात्रौक्वचिदेवस्थितः हेदेव द्योतमानरथयउक्तगुणः सतादृशस्त्वं इमांनोस्मदीयांहव्यदातिंहविर्दानवतींयागक्रियां जुषाणःसेवमानःसन्हव्या हव्यान्यस्मदीयानिहवींषि प्रतिगृभाय प्रतिगृहाण॥२८॥

२८. हे दिव्य रथ, हमारे यज्ञ में प्रसन्न होकर हव्य ग्रहण करो; क्योंकि तुम इन्द्र के वज्रस्वरूप, मरुतों के अग्रवर्ती, मित्र के गर्भ और वरुण की नाभि हो।

परेणतृचेनसंग्रामेदुंदुभिरभिमर्शनीयः सूत्रितंच—उपश्वासयपृथिवीमुतद्यामितितृचेनदुंदुभिमभिमृशेदिति ।[1]

---

1 तै० सं० ६. १. ३.।

सैषात्रैकोनात्रिंशी—

उपं श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत्।
स दुंन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अप सेध शत्रून् ॥ २९ ॥

उप । श्वासय । पृथिवीम् । उत । द्याम् । पुरुऽत्रा । ते ।
मनुताम् । विऽस्थितम् । जगत् । सः । दुन्दुभे । सऽजूः । इन्द्रेण ।
देवैः । दूरात् । दवीयः । अप । सेध । शत्रून् ॥ २९ ॥

हेदुंदुभे पृथिवींउतअपिच द्यांदिवंउपश्वासय आत्मीयेनजयघोषेणाश्वासय यथा लोकद्वयंत्वदीयेनशब्देनापूरितंभवति तादृशंशब्दंकुर्वित्यर्थः अपिचविस्थितंविशेषेणस्थितं स्थावरंजंगमंच उभयविधंप्राणिजातंतेत्वदीयंशब्दंपुरुत्राबहुधामनुतांमन्यतांजानातु हेदुंदुभे स-त्वंइन्द्रेणअन्यैर्देवैश्चसजूःसहदूराद्दवीयः दूरादपिदूरतरंशत्रूनस्मदीयान्अपसेध अपगमय अत्र-निरुक्तं—दुंदुभिरितिशब्दानुकरणंद्रुमोभिन्नमितिवादुंदुभ्यतेर्वास्याद्वधकर्मणइत्यादि ॥ २९ ॥

२९. हे युद्ध-दुन्दुभि, अपने शब्द से स्वर्ग और धरणी को परिपूर्ण करो—स्थावर और जंगम इस बात को जानें। तुम इन्द्र और अन्य देवों के साथ होकर हमारे रिपुओं को दूर फेंक दो।

आ क्रन्दय बलमोजो न आ धा निः ष्टनिहि दुरिता बाधमानः।
अप प्रोथ दुन्दुभे दुच्छुना इत इन्द्रस्य मुष्टिरसि वीळयस्व ॥ ३० ॥

आ । क्रन्दय । बलम् । ओजः । नः । आ । धाः । निः ।
स्तनिहि । दुःऽइता । बाधमानः । अप । प्रोथ । दुन्दुभे ।
दुच्छुनाः । इतः । इन्द्रस्य । मुष्टिः । असि । वीळयस्व ॥ ३० ॥

हेदुंदुभे आक्रन्दयअस्मच्छत्रून्रोदय बलंसेनारूपंओजःशरीरबलंच नोस्मभ्यंआधाः आधेहि प्रयच्छ तथादुरितादुरितानि दुर्गमनानिबाधमानोहिंसंस्त्वंनिस्तनिहि नितरांशब्दंकु-रुस्तनशब्दइतिधातुः हेदुंदुभे दुच्छुनाःअस्मद्दुःखहेतुभूतंशुनंसुखंयासांतादृशीःशत्रुसेनाःइतो-स्मात्स्थानात्अपप्रोथबाधस्वत्वंचेन्द्रस्यमुष्टिरसि मुष्टिरिवशत्रूणांहन्ताभवसि अतोस्मान्वीळयस्व दृढीकुरु ॥ ३० ॥

३०. दुन्दुभि, हमारे शत्रुओं को रुलाओ हमें बल दो। इतने जोर से बजो कि दुर्द्धर्ष शत्रुओं को दुःख मिले। दुन्दुभि, जो हमारा अनिष्ट करके आनन्दित होते हैं, उन्हें दूर हटाओ। तुम इन्द्र की मुष्टिका-सी हो; इसलिए हमें दृढ़ता दो।

---

1 नि० ९. १२.

अथैकत्रिंशी—

आमूरंजप्रत्यावर्तयेमाःकेतुमद्दुंदुभिर्वावदीति ।
समश्वपर्णाश्चरन्तिनोनरोस्माकमिन्द्ररथिनोजयन्तु ॥३१॥३५॥

आ । अमूः । अज । प्रतिऽआवर्तय । इमाः । केतुऽमत् ।
दुन्दुभिः । वावदीति । सम् । अश्वऽपर्णाः । चरन्ति । नः ।
नरः । अस्माकम् । इन्द्र । रथिनः । जयन्तु ॥ ३१ ॥ ३५ ॥

अस्याःपूर्वार्धोदुंदुभिदेवत्यः उत्तरार्धश्चैन्द्रः यद्वा उभावप्यर्धर्चावैन्द्रौ हेइन्द्र अमूःशत्रुषु स्थिताःतागाःआजअस्मान्प्रत्यागमय इमाःअस्मदीयागाःशत्रुभिर्जिघृक्षिताःप्रत्यावर्तय प्रतिनिवर्तय अयंचदुंदुभिःकेतुमत्प्रज्ञानवत् यथासर्वैर्ज्ञायतेतथावावदीतिभृशंशब्दंकरोति अश्वपर्णाःअश्वपतनाःअश्ववाहाश्चनोस्मदीयाश्चनरःपुरुषाःसंचरन्ति शत्रुभिर्युध्यमानावर्तन्ते तथासति हेइन्द्र अस्माकंरथिनः रथारूढाःपुरुषाःशत्रून्जयन्तु ॥ ३१ ॥

३१. इन्द्र, हमारी सारी गायों को रोककर हमारे पास ले आओ। सबके पास घोषणा करने के लिए दुन्दुभि नियत उच्च रव करता है। हमारे सेनानी घोड़ों पर चढ़कर इकट्ठे हुए हैं। इन्द्र, हमारे रथारूढ़ सैनिक और सेनायें युद्ध में विजयी बनें।

॥ इतिचतुर्थस्यसप्तमेपंचत्रिंशोवर्गः ॥ ३५ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥
इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येचतुर्थाष्टकेसप्तमोध्यायःसमाप्तः ॥ ७॥

## ॥ श्रीगणेशायनमः ॥

यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् । निर्ममेतमहंवन्देविद्यातीर्थंमहेश्वरम् ॥ १ ॥
अथाष्टमोध्यायआरभ्यते। षष्ठमंडलस्यचतुर्थेनुवाकेचत्वारिसूक्तानिव्याकृतानि यज्ञायज्ञेतिद्वाविंशत्यृचंपंचमंसूक्तंबृहस्पतिपुत्रस्यशंयोरार्षं अत्रानुक्रम्यते—यज्ञायज्ञाद्व्यधिकाशंयुस्तृणपाणिकंपृश्निसूक्तंप्रगाथौबृहतीमहासतोबृहतीमहाबार्हतबार्हतौप्रगाथावित्याग्नेय्यःकाकुभःप्रगाथः पुरउष्णिग्बृहत्यतिजगतीतिमारुत्यौत्यास्तिस्रोवासांलिंगोक्तदेवताःकाकुभःप्रगाथःपुरउष्णिक्बृहतीतिपौष्ण्योबृहतीमहाबृहतीयवमध्यांत्यानुष्टुप्मारुत्यौत्याद्यावाभूम्योर्वापृश्नेर्वेति। यज्ञायज्ञावइत्येषाबृहती तृतीयद्वादशकात्र्यष्टकेतितल्लक्षणसद्भावात् द्वितीयासतोबृहती अयुजौजागतौ सतोबृहतीत्युक्तलक्षणोपेतत्वात् तृतीयाचतुर्थीबृहतीसतोबृहत्यौ पंचमीबृहती षष्ठीमहासतोबृहती अष्टाक्षरास्त्रयःपादाः द्वादशाक्षरौद्वौपादौसामहासतोबृहती सप्तमीमहाबृहतीअष्टाक्षराश्चत्वारः पादाः एकोद्वादशाक्षरःसामहाबृहती अष्टमीमहासतोबृहतीअष्टिनस्त्रयःद्वौजागतौसामहासतोबृहती नवमीबृहतीदशमीसतोबृहती एतादशाग्निदेवत्याः एकादशीककुप्मध्यमोयदिद्वादशाक्षरःउभयतोष्टकौद्वौपादौसाककुप् द्वादशीसतोबृहतीत्रयोदशीपुरउष्णिक् आद्योजागतः द्वितीयतृतीयौगायत्रौसापुरउष्णिक् चतुर्दशीबृहतीपंचदशीअतिजगतीद्वापंचाशदक्षरा एकादश्याद्याःपंचमरुद्देवताकाः त्रयोदश्यादीनांतिसृणांलिंगोक्ताइन्द्रादयोवादेवताः षोडशीककुप् सप्तदशीसतोबृहतीअष्टादशीपुरउष्णिक् एकोनविंशीबृहतीषोळश्यादीनांचतसृणांपूषादेवताविंशीबृहतीएकविंशीयवमध्यामहाबृहतीआद्यौद्वावष्टकौतृतीयोद्वादशकःचतुर्थपंचमावष्टकौसायवमध्यामहाबृहतीविंश्येकविंश्योः पृश्निसूक्तमित्युक्तत्वान्मरुतांमातापृश्निर्देवताद्वाविंश्यनुष्टुप्साचापिपृश्निदेवत्याद्यावाभूमिदेवत्यावा सूक्तविनियोगोलैंगिकः । आग्निमारुतेयज्ञायज्ञावइत्ययंस्तोत्रियप्रगाथः सूत्रितंच—यज्ञायज्ञावोअग्नयेदेवोवोद्रविणोदाइतिप्रगाथौस्तोत्रियानुरूपाविति ।

तत्रैषाप्रथमा—

यज्ञायंज्ञावोअग्नयेगिरागिराचदक्षसे ।
प्रप्रंवयममृतंजातवेदसंप्रियंमित्रंनशंसिषम् ॥ १ ॥

युज्ञाऽयंज्ञा । वः । अग्नये । गिराऽगिरा । च । दक्षसे । प्रऽप्र । वयम् । अमृतम् । जातऽवेदसम् । प्रियम् । मित्रम् । न । शंसिषम् ॥ १ ॥

हेस्तोतारोवोयूयंयज्ञायज्ञा यज्ञेयज्ञे सर्वेषुयागेषुदक्षसेप्रवृद्धायाग्नये गिरागिरास्तुतिरूपया वाचावाचास्तोत्रंकुरुतेतिशेषः चशब्दोभिन्नक्रमोवक्ष्यत्यस्मात्परोद्रष्टव्यः यूयंचस्तोत्रंकुरुत वयमपितमग्निंप्रप्रशंसिषं प्रसमुपोदःपादपूरणइतिप्रशब्दस्यद्विरुक्तिःपादपूरणार्था व्यत्ययेनैकवचनं छान्दसोलुङ् प्रशंसाम कीदृशंअमृतंमरणरहितं जातवेदसंजातानांवेदितारं जातप्रज्ञंजातधनंवा मित्रंन सखिभूतमिवप्रियंअनुकूलं यद्वा व्यत्ययेनत्वमित्यस्यवसादेशः अग्नयइतिचकर्मणिचतुर्थी क्रियाग्रहणमपिकर्तव्यमितिकर्मणःसंप्रदानत्वाच्चशब्दश्चणितिनिपातश्चेदर्थेवर्तते दक्षसइतिचदक्षेर्वृद्धिकर्मणोन्तर्भावितण्यर्थाल्लटिरूपं चणायोगाद्निपातैर्यद्यदिहन्तेतिनिघातप्रतिषेधः तत्रायमर्थः—हेस्तोतस्त्वंयज्ञे यज्ञेइममग्निंगिरागिरास्तुत्यादक्षसेचवर्धयसिचेद्वयमपिअमृतत्वादिगुणकंतंप्रशंसाम ॥ १ ॥

१. स्तोताओ, तुम प्रत्येक यज्ञ में स्तोत्र-द्वारा शक्तिमान् अग्नि की बार-बार स्तुति करो। हम उन अमर, सर्व-द्रष्टा और मित्र की तरह अनुकूल अग्निदेव की प्रशंसा करते हैं।

ऊर्जोनपातंसहिनायमस्मयुर्दाशेमहव्यदातये ।
भुवद्वाजेष्ववितामुवद्वृधउतत्रातातनूनाम् ॥ २ ॥

ऊर्जः । नपातम् । सः । हिन । अयम् । अस्मऽयुः । दाशेम । हव्यऽदातये । भुवत् । वाजेषु । अविता । भुवत् । वृधः । उत । त्राता । तनूनाम् ॥ २ ॥

ऊर्जोन्नस्यबलस्यवानपातंपुत्रंप्रशंसिषमित्यनुषंगाद्प्रशंसामेत्यर्थः हिनेतिनिपातद्वयसमुदायोहीत्यस्यार्थे सहिसखल्वयमग्निः अस्मयुरस्मान्कामयमानोभवति वयंचहव्यदातये हव्यानांहविषांदेवेभ्योदाने तस्मैअग्नयेदाशेम हवींषिदधाम सचाग्निःवाजेषुसंग्रामेषुअवितारक्षितावृधोवर्धकश्चास्माकंभुवद्भवतु उतअपिच तनूनांतनयानामस्मत्पुत्राणांचत्रातारक्षिताभवतु ॥ २ ॥

२. हम शक्ति-पुत्र की प्रशंसा करते हैं; क्योंकि वे वस्तुतः हमसे प्रसन्न हैं। हव्य वहन करनेवाले अग्नि को हम हव्य प्रदान करते हैं। वे संग्राम में हमारे रक्षक और समृद्धि-विधायक हों। वे हमारे पुत्रों की रक्षा करें।

अथतृतीया—

वृषाह्यग्नेअजरोमहान्विभास्यर्चिषा ।
अजस्रेणशोचिषाशोशुचच्छुचेसुदीतिभिःसुदीदिहि ॥ ३ ॥

वृषा। हि। अग्ने। अजरः। महान्। विऽभासि। अर्चिषा।
अजस्रेण। शोचिषा। शोशुचत्। शुचे। सुदीतिऽभिः।
सु। दीदिहि॥ ३॥

हेअग्ने वृषावर्षिताकामानांवृष्टेःकर्तावा अजरोजरारहितः महान्गुणैरधिकः एवंभूतस्त्वं अर्चिषादीप्त्याविभासिहि विशेषेणप्रकाशसेखलु हेशुचे दीप्ताग्ने अजस्रेणअविच्छिन्नेनशोचिषा तेजसाशोशुचत् भृशंदीप्यमानस्त्वं सुदीतिभिःसुदीप्तिभिःसुदीदिहि सुष्ठुअस्मान्दीपय प्रकाशय॥ ३॥

३ हे अग्नि, आप ईप्सित फलों के देनेवाले जरारहित, महान् और दीप्ति से विभाषित हैं। हे दीप्ताग्नि, अविच्छिन्न तेज से दीप्यमान् आप अपनी दीप्ति-द्वारा हमें भी प्रकाशित कीजिए।

महोदेवान्यजसियक्ष्यानुषक्तवक्रत्वोतदंसना।
अर्वाचःसींकृणुह्यग्नेवसेरास्वावाजोतवंस्व॥ ४॥

महः। देवान्। यजसि। यक्षि। आनुषक्। तव। क्रत्वा।
उत। दंसना।। अर्वाचः। सीम्। कृणुहि। अग्ने। अवसे।
रास्व। वाजा। उत। वंस्व॥ ४॥

हेअग्ने त्वंमहोमहतोदेवान्यजसि यजमानानांयज्ञेहविर्भिःपूजयसि अतोस्माकमपियज्ञे-आनुषक् अनुषक्तंसन्ततंयथाभवतितथायक्षि तान्देवान्यज तदर्थंतवक्रत्वाप्रज्ञया उतापिचदंसनाकर्मणाच सीमितिपरिग्रहार्थीयः तान्सर्वान्देवान्अर्वाचः अस्मदभिमुखान् कृणुहिकुरु अवसेअस्मद्रक्षणार्थं तथावाजावाजान्हविर्लक्षणान्यन्नानिरास्वतेभ्योदेवेभ्योदेहि उतापिच त्वमपिवंस्वतुभ्यंप्रत्तानिहवींषिसंभजस्व॥ ४॥

४. अग्नि, तुम महान् देवों का यज्ञ किया करते हो; इसलिए हमारे यज्ञ में सदा देवों का यज्ञ करो। हमारी रक्षा के लिए अपनी बुद्धि और काय से देवों को हमारे सामने ले आओ। तुम हमें हव्य-रूप अन्न दो और स्वयं इसे स्वीकार करो।

अथपंचमी—

यमापोअद्रयोवनागर्भमृतस्यपिप्रति।
सहसायोमथितोजायतेनृभिःपृथिव्याअधिसानवि॥ ५॥ १॥

यम्। आपः। अद्रयः। वना। गर्भम्। ऋतस्य। पिप्रति।
सहसा। यः। मथितः। जायते। नृऽभिः। पृथिव्याः।
अधि। सानवि॥ ५॥ १॥

आपोवसतीवर्याख्याः अद्रयोग्रावाणः वनावनानिकाष्ठानिच ऋतस्ययज्ञस्योदकस्यवा गर्भं गर्भवदन्तर्वर्तमानंयमग्निंपिप्रति पूरयन्ति यद्वा आपःसमुद्रियाअद्रयोमेघाः वनान्यरण्यानिच ऋतस्यगर्भंवाडववैद्युतदावरूपेणवर्तमानं यमग्निंपिप्रति पूरयन्ति यश्चाग्निःनृभिर्नेतृभिःऋत्विग्भिःसहसाबलेनमथितःसन् पृथिव्याअधिभूमेरुपरि सानविसमुच्छ्रितेउत्कृष्टेदेवयजनदेशेजायतेप्रादुर्भवति सत्वंवंस्वेत्यन्वयः यद्वायःपप्रावित्यनयासंबन्धः ॥ ५ ॥

५. तुम यज्ञ के गर्भ हो, तुम्हें सोम में मिलाने के लिए जल (वसतीवरी), अभिषव-पाषाण और अरणि-काष्ठ पुष्ट करते हैं। तुम ऋत्विकों-द्वारा बल-पूर्वक मथे जाकर पृथ्वी के अत्युन्नत स्थान में (देवयजन-देश में) प्रादुर्भूत होओ।

॥ इतिचतुर्थस्याष्टमेप्रथमोवर्गः ॥ १ ॥

आयःपप्रौभानुनारोदसीउभेधूमेनधावतेदिवि।
तिरस्तमोददृशऊर्म्यास्वाश्यावास्वरुषोवृषाश्यावाअरुषोवृषा॥६॥

आ। यः। पप्रौ। भानुना। रोदसी इति। उभे इति। धूमेन।
धावते। दिवि। तिरः। तमः। ददृशे। ऊर्म्यासु। आ।
श्यावासु। अरुषः। वृषा। आ। श्यावाः। अरुषः। वृषा॥ ६ ॥

योग्निः भानुनादीप्त्याउभेरोदसीद्यावापृथिव्यौआपप्रौ आपूरयति सः धूमेनदिविअन्तरिक्षेधावतेगच्छति धूमोहिमेघात्मनापरिणतःसन् अन्तरिक्षेगच्छति कार्यकारणयोरभेदविवक्षया तद्गमनमग्नावुपचर्यते अपिचायंअरुषः आरोचमानः वृषावर्षिताकामानां एवंगुणकोग्निःश्यावासुश्यावर्णासुकृष्णासुऊर्म्यासु रात्रिनामैतत् निशासुतमोंधकारंतिरःतिरस्कृत्यआसमंताद्ददृशे दृश्यतेश्यावाः श्याववर्णारात्रीश्च आतिष्ठति अरुषोवृषेतिपुनरुक्तिरादरार्थापादपूरणार्थावा॥६॥

६. जो अग्नि दीप्ति-द्वारा स्वर्ग और पृथिवी को पूर्ण करते हैं, जो धुएँ के साथ आकाश में उठते हैं, वही दीप्तिमान् और अभीष्ट-वर्षी अग्नि अँधेरी रात का तम नष्ट करते देखे जाते हैं। दीप्तिमान् और अभीष्टवर्षी वे ही अग्नि रात्रियों के ऊपर अधिष्ठान करते हैं।

बृहद्भिरग्नेअर्चिभिःशुक्रेणदेवशोचिषा।
भरद्वाजेसमिधानोयविष्ठ्यरेवन्नःशुक्रदीदिहिद्युमत्पावकदीदिहि॥७॥

बृहत्ऽभिः। अग्ने। अर्चिऽभिः। शुक्रेण। देव। शोचिषा।
भरत्ऽवाजे। सम्ऽइधानः। यविष्ठ्य। रेवत्। नः। शुक्र।
दीदिहि। द्युऽमत्। पावक। दीदिहि॥ ७॥

हेदेव दानादिगुणयुक्त यविष्ठ्य युवतम शुक्र दीप्ताग्ने शुक्रेण निर्मलेनशोचिषातेजसा भरद्वाजेअस्मद्भ्रातरि समिधानः समिध्यमानस्त्वं बृहद्भिर्महद्भिरर्चिभिः तेजोभिः नोस्मदर्थं रेवद्धनयुक्तंयथाभवतितथादीदिहि दीप्यस्व तथापावक हेशोधकाग्ने द्युमद्द्योतमानेनचयुक्तं यथाभवतितथादीदिहि दीप्यस्व ॥ ७ ॥

७. देव, देवों में कनिष्ठ और प्रदीप्त अग्नि, तुम हमारे भ्राता भारद्वाज-द्वारा समिध्यमान होकर हमें धन देते हुए निर्मल और प्रबल दीप्ति के साथ प्रज्वलित होओ। प्रदीप्त अग्नि, तुम प्रज्वलित होओ।

विश्वा॑सां गृ॒हप॑ति॒र्वि॒शाम॑सि॒ त्वम॑ग्ने॒ मानु॑षीणाम्।
श॒तं पू॒र्भिर्य॑विष्ठ पा॒ह्यंह॑सः समे॒द्धारं॑ श॒तं हि॒माः स्तो॒तृभ्यो॒ ये च॒ दद॑ति ॥८॥

विश्वा॑साम्। गृ॒हऽप॑तिः। वि॒शाम्। अ॒सि॒। त्वम्। अ॒ग्ने॒।
मानु॑षीणाम्। श॒तम्। पूः॒ऽभिः। य॒वि॒ष्ठ॒। पा॒हि॒। अंह॑सः।
स॒म्ऽए॒द्धार॑म्। श॒तम्। हि॒माः। स्तो॒तृऽभ्यः॑। ये। च॒। दद॑ति ॥ ८ ।

हेअग्ने त्वंमानुषीणांमनोरपत्यभूतानां विश्वासांसर्वासांविशांप्रजानांगृहपतिरसि गृहस्वामीभवसि हेयविष्ठ युवतमाग्ने अतस्त्वंशतंहिमाः शतंहेमन्तान्संवत्सरान्समेद्धारंत्वांसम्यगिद्धं कृतवन्तंमांशतंशतेनशतसंख्याकैः पूर्भिःपालकैः अंहसः पापात् आहन्तुः शत्रोर्वापाहिरक्ष येचस्तोतृभ्योददति धनंतवसमिन्धनस्यकर्तॄरिप्रयच्छन्ति तांश्चपाहि ॥ ८ ॥

८. अग्नि, तुम सारे मनुष्यों के गृहपति हो। मैं तुम्हें सौ हेमन्तों तक प्रज्वलित करता हूँ। तुम मुझे सैकड़ों रक्षाओं-द्वारा पाप से बचाओ, जो तुम्हारे स्तोताओं को अन्न देते हैं, उन्हें भी बचाओ।

त्वं न॑श्चि॒त्र ऊ॒त्या वसो॒ राधां॑सि चोदय।
अ॒स्य रा॒यस्त्वम॑ग्ने र॒थीर॑सि वि॒दा गा॒धं तु॒चे तु नः॑ ॥ ९ ॥

त्वम्। नः॒। चि॒त्रः। ऊ॒त्या। वसो॒ इति॑। राधां॑सि। चो॒द॒य॒। अ॒स्य।
रा॒यः। त्वम्। अ॒ग्ने॒। र॒थीः। अ॒सि॒। वि॒दाः। गा॒धम्। तु॒चे। तु। नः॒॥९।

हेवसो वासकाग्ने चित्रोदर्शनीयस्त्वंऊत्यारक्षयासह राधांसिधनानिनोस्मभ्यंचोदय प्रेरय सर्वत्रलोकेपरिदृश्यमानस्यरायोधनस्यत्वंरथीरसि रंहितानेताभवसि अतःकारणादस्मभ्यं धनानिप्रेरयेत्यर्थः अपिच नोस्माकंतुचेअपत्यनामैतत्अपत्यायअपतनहेतुभूताय पुत्रादयेगाधं प्रतिष्ठांतुक्षिप्रंविदाः लंभय ॥ ९ ॥

९. गृहदाता विचित्र अग्नि, तुम हमारे पास रक्षक के साथ धन भेजो; क्योंकि तुम्हीं सारे धनों के प्रेरक हो। शीघ्र ही हमारी सन्तानों को प्रतिष्ठित करो।

अथदशमी—

पर्षितोकंतनयंपर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः।
अग्नेहेळांसिदैव्यायुयोधिनोदेवानिह्वरांसिच ॥ १० ॥ २ ॥

पर्षि। तोकम्। तनयम्। पर्तृऽभिः। त्वम्। अदब्धैः।
अप्रयुत्वऽभिः। अग्ने। हेळांसि। दैव्या। युयोधि। नः।
अदेवानि। ह्वरांसि। च॥ १० ॥ २ ॥

हेअग्ने त्वं अदब्धैःकेनाप्यहिंसितैः अप्रयुत्वभिः यौतिरत्रपृथग्भावार्थः अपृथग्भूतैः संहतैः पर्तृभिःपालनसाधनैःतोकंपुत्रंतनयंपौत्रंचपर्षिपालय दैव्यादेवसंबन्धीनिच हेळांसिक्रोधान्नोस्मत्तोयुयोधि पृथक्कुरु अदेवानि मनुष्यसंबन्धीनिच ह्वरांसिहिंसनानिच अस्मत्तः पृथक्कुरु॥१०॥

१०. अग्नि, समवेत और हिंसा-रहित रक्षा के द्वारा हमारे पुत्र-पौत्र का पालन करो। हमारे यहाँ से तुम देवों का क्रोध और मनुष्यों का विद्वेष हटाओ।

॥ इतिचतुर्थस्याष्टमेद्वितीयोवर्गः ॥ २ ॥

आसंखायःसबर्दुघांधेनुमजध्वमुपनव्यसावचः।
सृजध्वमनपस्फुराम् ॥ ११ ॥

आ। सखायः। सबःऽदुघाम्। धेनुम्। अजध्वम्। उप।
नव्यसा। वचः। सृजध्वम्। अनपऽस्फुराम् ॥ ११ ॥

हेसखायः समानख्यानाअध्वर्यवः सबर्दुघां सबरितिपयसोनाम अमरणहेतुभूतस्यपयसोदोग्ध्रींधेनुंगांआअजध्वं अभिगच्छत प्रामुत केनसाधनेन नव्यसानवीयसा नवतरेणवचःवचसा आह्वानरूपेणशब्देन तदनंतरंअनपस्फुरां स्फुरतिर्वधकर्मा अनपबाध्यांतांधेनुंउपसृजध्वं वत्सेनोपसृष्टांकुरुत मरुद्देवत्यत्वात्मरुतांयागायपयोदोग्धुमितिशेषः अथवामरुतांमातापृश्न्याख्यामाध्यमिकावाग्धेनुः हेसखायःस्तोतारः सबर्दुघांमरुज्जनहेतुभूतस्यपयसोदोग्ध्रींधेनुंपृश्निंनव्यसानवतरेणवचसास्तोत्रेणउपाजध्वमुपागच्छत अनपस्फुरांअनपबाधनीयांतांसृजध्वं बन्धनाद्विसृजत मुंचत ईदृशीमहतीधेनुः मरुतांमाताकिमुवक्तव्यंतेषांमाहात्म्यमितिमरुत्स्तुतिः॥११॥

११. बन्धुगण, नये स्तोत्रों के साथ तुम दूध देनेवाली गाय के पास आओ। इसके पश्चात् उसे इस प्रकार छुड़ाओ, जिससे उसकी कोई हानि न होने पावे।

अथद्वादशी—

याशर्धा॑यमारु॑ताय॒स्वभा॑नवे॒श्रवोऽमृ॑त्यु॒धुक्ष॑त ।
याम॑ृळी॒केम॒रुता॑ंतु॒राणा॒ंयासु॒म्नैरे॑व॒यावरी ॥ १२ ॥

या । शर्धा॑य । मारु॑ताय । स्वऽभा॑नवे । श्रवः॑ । अमृ॑त्यु । धुक्ष॑त ।
या । मृ॒ळी॒के । म॒रुता॑म् । तु॒राणा॑म् । या । सु॒म्नैः । ए॒व॒ऽयाव॑री॥१२॥

याधेनुः अमृत्युअमरणहेतुश्रवोन्नंपयोलक्षणंमारुतायमरुत्संघायधुक्षतअधुक्षत् कीदृशाय शर्धायप्रसहनशीलाय स्वभानवेस्वायत्तदीप्तये याचतुराणांक्षिप्रकारिणांमरुतांमृळीकेसुखेतत्परावर्तते याचसुम्नैःसुखैर्हेतुभूतैः एवयावरीएवैर्गंतृभिरश्वैः मध्यमस्थानैरुदकैर्वासहयातीअन्येषामपिसुखार्थंवृष्टिजलैः सहागच्छन्ती तांधेनुंउपाजध्वमितिपूर्वत्रान्वयः अत्रापिपूर्ववन्मरुत्स्तुतिरधिगन्तव्या ॥ १२ ॥

१२. जो सहिष्णु, स्वाधीनतेजा, मरुतों को अमरण-हेतु पयोरूप अन्न देती है, जो वेग मरुतों के सुख-साधन में तत्पर है और जो वृष्टि-जल के साथ सुख वर्षण करके अन्तरिक्ष मार्ग में घूमती है, उस धेनु के पास आओ।

अथत्रयोदशी—

भ॒रद्वा॑जा॒याव॑धुक्षत॒द्विता ।
धे॒नुंच॑वि॒श्वदो॑ह॒स॒मिषं॑चवि॒श्वभो॑जसम् ॥ १३ ॥

भ॒रत्ऽवा॑जाय । अव॑ । धु॒क्ष॒त॒ । द्विता । धे॒नुम् । च॒ ।
वि॒श्वऽदो॑हसम् । इषम् । च॒ । वि॒श्वऽभो॑जसम् ॥ १३ ॥

हेमरुतः भरद्वाजायास्मद्धात्रेद्विताद्वितयंअवधुक्षत दत्त किंतद्द्वितयं धेनुंचगांच इषंचअन्नंच कीदृशींधेनुं विश्वदोहसं विश्वस्यव्याप्तस्यबहुलस्यदोग्ध्रीं कीदृशमन्नं विश्वभोजसंसर्वेषांभोगपर्याप्तं ॥ १३ ॥

१३. मरुतो, भरद्वाज के लिए विशेष दूध देनेवाली गाय और सभी के खाने के लिए यथेष्ट अन्न इन दो सुखों का दोहन करो।

अथचतुर्दशी—

तं॑व॒इन्द्रं॑नसु॒क्रतुं॒वरु॑णमिवमा॒यिन॑म् ।
अ॒र्य॒मणं॒नम॒न्द्रंसृ॒प्रभो॑जसं॒विष्णुं॒नस्तु॒षआ॒दिशे॑ ॥ १४ ॥

तम् । वः । इन्द्रम् । न । सुऽक्रतुम् । वरुणम्ऽइव । मायिनम् । अर्यमणम् । न । मन्द्रम् । सृप्रऽभोजसम् । विष्णुम् । न । स्तुषे । आऽदिशे ॥ १४ ॥

हेमरुद्गण तंतादृशंवःत्वांस्तुषेस्तौमि किमर्थंआदिशे आदेशनाय धनानामतिसर्जनाय प्रदानाय कीदृशंत्वां इन्द्रंनइन्द्रमिव सुक्रतुंसुकर्माणं वरुणमिवमायिनं मायावन्तंप्रज्ञावन्तंअर्यमणंअर्यमणमिव मन्द्रंस्तुत्यं विष्णुंन विष्णुमिवसृप्रभोजसं प्रसृप्तधनं यद्यात्वस्यालिंगोक्तदेवतास्तदानींनेवशब्दौचशब्दार्थेद्रष्टव्यौ ॥ १४ ॥

१४. मरुतो, तुम इन्द्र के महान् कर्मों के अनुष्ठाता हो, वरुण की तरह बुद्धिमान् हो, अर्यमा के समान स्तुति-पात्र हो, विष्णु के समान दानशील हो। धन के लिए मैं तुम्हारी स्तुति करता हूँ।

त्वेषंशर्धोनमारुतंतुविष्वण्यनर्वाणंपूषणंसंयथाशता।
संसहस्राकारिषच्चर्षणिभ्यआँआविर्गूळ्हावसूकरत्सुवेदानोवसूकरत्॥१५

त्वेषम् । शर्धः । न । मारुतम् । तुविऽस्वनि । अनर्वाणम् । पूषणम् । सम् । यथा । शता । सम् । सहस्रा । कारिषत् । चर्षणिऽभ्यः । आ । आविः । गूळ्हा । वसु । करत् । सुऽवेदा । नः । वसु । करत् ॥ १५

नेतिसंप्रत्यर्थे नसंप्रतिइदानीं त्वेषंदीप्तंतुविष्वणि बहुस्वनं अनर्वाणंअप्रत्यृतंशत्रुभिरनभिगतं पूषणंपोषकंमारुतंमरुत्संघरूपमीदृशंशर्धोबलं स्तौमीतिशेषः सचमरुद्गणः यथायेनप्रकारेण शता शतसंख्याकानिधनानिसंसहैवचर्षणिभ्योमनुष्येभ्योस्मभ्यंकारिषत् कुर्यात् आकारःसमुच्चये यथावासहस्रासहस्रसंख्याकानिधनानिचसंसहैवकारिषत्कुर्यात् तथास्तौमीतिपूर्वत्रान्वयः अपिच समरुद्गणः गूळ्हागूढानि संवृतानिवसुवसूनिधनानिआविष्करत् अस्मभ्यमाविष्करोतु तथावसुवसूनिधनानिसुवेदासुलभानिचनोस्माकंकरत् करोतु यद्यातुलिंगादियंपौष्णीतदामारुतं शर्धइवत्वेषंपूषणंपूषकमेतत्संज्ञंदेवंस्तौमीतियोजनीयं ॥ १५ ॥

१५. मरुद्गण सैकड़ों-हजारों तरह के धन हमें एक ही समय दें। इसके लिए मैं उच्च शब्दकारी हूँ अप्रतिहत-प्रभाव और पुष्टिकारक मरुतों के दीप्त बल की स्तुति करता हूँ। वे ही मरुद्गण हमारे पास गूढ़ धन प्रकट करें और समस्त धन सुलभ करें।

अथषोडशी—

आमापूषन्नुपद्रवशंसिषन्नुतेअपिकर्णआघृणे।
अघाअर्योअरातयः॥ १६ ॥ ३ ॥

आ। मा। पूषन्। उप। द्रव। शंसिषम्। नु। ते। अपिऽकर्णे।
आघृणे। अघाः। अर्यः। अरातयः॥ १६॥ ३॥

हेपूषन् मामांआद्रव रक्षणार्थमभिगच्छ हेआघृणे आगतदीप्ते अघाःआहंत्रीः अर्यः अरीः अभिगंत्रीः अरातयः शत्रुभूताः प्रजाः उपद्रवबाधस्व उपपूर्वोद्रवतिर्बाधायांवर्तते यथाप्रजांपशून्यजमानस्यउपद्रावयति अहंचतेतवअपिकर्णेकर्णांवपिगतेसमीपदेशेस्थितःसन् नुक्षिप्रंशंसिषंप्रशंसामि॥ १६॥

१६. हे पूषन् तुम शीघ्र मेरे पास आओ। दीप्तिमान् देव भीषण आक्रमण करनेवाले शत्रुओं को पीड़ा पहुँचाओ। मैं भी तुम्हारे कान के पास आकर गुण-गान करता हूँ।

॥ इतिचतुर्थस्याष्टमेतृतीयोवर्गः॥ ३॥

अथसप्तदशी–

माकाकंबीरमुद्वृहोवनस्पतिमशस्तीर्विहिनीनशः।
मोतसूरोअहएवाचनग्रीवाआदधतेवेः॥ १७॥

मा। काकम्बीरम्। उत्। वृहः। वनस्पतिम्। अशस्तीः। वि। हि। नीनशः। मा। उत। सूरः। अहरिति। एव। चन। ग्रीवाः। आऽदधते। वेरितिवेः॥ १७॥

ऋषिः पुत्रपौत्रसहितमात्मानंबहुपक्ष्याश्रयवनस्पतित्वेनरूपयन्तस्यानुद्धारमाशास्ते हे-पूषन् माकाकंबीरंकाकानांभर्तारंवनस्पतिंवृक्षंमाउद्वृहः उद्धर माबाधस्व पुत्रपौत्रादिभिः सखीभूतैरुपेतंअन्यैश्चबहुभिराश्रितंमांमाहिंसीरित्यर्थः हिशब्दश्चार्थे अशस्तीरशंसनीयाः अशंसनीयस्यदुःखस्यकीर्तयित्रीर्वाशत्रुभूताः प्रजाः विनीनशोहि विनाशयच मोतमाचसूरः प्रेरकः शत्रुः एवएवंमाअहःअस्मान्माहार्षीत् एवमित्यभिसंबन्धात् आख्यातस्योदात्तवत्वाच्चअश्रुतोपि-यथेत्येतद्वाक्येध्याह्रियते ग्रीवाःगिरन्तिअन्तरवस्थापयन्तिबध्नन्तीतिग्रीवाःदामानि यथाव्याधाःवेःपक्षिणोहरणार्थंग्रीवाः दामानिजालरूपाणिआदधते भूम्यांनिदधते तैश्चनिहितैः पक्षिणोहरन्ति एवमस्मान्बन्धनोपायैःशत्रुर्माहार्षीरित्यर्थः॥ १७॥

१७. पूषन् तुम कौओं (सन्तानों) के आश्रय-भूत वनस्पति को (मुझे) नष्ट नहीं करना। मेरे निन्दकों को पूर्णतः नष्ट कर दो। जैसे व्याध चिड़ियों को फँसाने के लिए जाल फैलाता है, वैसे शत्रु लोग, किसी तरह भी, मुझे नहीं बाँध सकें।

अथाष्टादशी–

४ दृतेरिवतेवृकमस्तुसख्यम्।
अच्छिद्रस्यदधन्वतःसुपूर्णस्यदधन्वतः॥ १८॥

दृतेःऽइव । ते । अवृकम् । अस्तु । सख्यम् । अच्छिद्रस्य ।
दधन्ऽवतः । सुऽपूर्णस्य । दधन्ऽवतः ॥ १८ ॥

हेपूषन् तेतवसख्यंसखित्वंअवृकंबाधकरहितंसर्वदैकरूपेणवर्तमानं अस्माकमस्तुसर्वदाभवतु दृतेरिवयथादृतेस्त्वदीयंसख्यंअविच्छिन्नंतद्वत् कीदृशोदृतिःअच्छिद्रस्यछिद्ररहितस्यसंश्लिष्टस्यदधन्वतोदधिमतःसुपूर्णस्यदध्नासुष्ठुपूरितस्यपुनर्दधन्वतइतिधन्वोधिकत्वद्योतनार्थः ईदृशोदृतिःसर्वदापूष्णोरथेवर्तते सइववयमपितवसखायोभवेमेत्यृषिराशास्ते ॥ १८ ॥

१८. पूषन् दधिपूर्ण और निश्छिद्र चर्म की तरह तुम्हारी मित्रता सदा अविच्छिन्न रहे। अथैकोनविंशी—

परोहिमर्त्यैरसिसमोदेवैरुतश्रिया ।
अभिख्यःपूषन्पृतनासुनस्त्वमवानूनंयथापुरा ॥ १९ ॥

परः । हि । मर्त्यैः । असि । समः । देवैः । उत । श्रिया । अभि ।
ख्यः । पूषन् । पृतनासु । नः । त्वम् । अव । नूनम् । यथा । पुरा ॥ १९ ॥

हेपूषन् मर्त्यैर्मर्त्येभ्योमनुष्येभ्यःपरःपरस्तादवस्थितोसि श्रियासंपदादेवैरुतसर्वैःदेवैश्चसमः समानोसि अतस्त्वंपृतनासुसंग्रामेषुनोस्मानभिख्यः अभिपश्य अनुग्रहदृष्ट्याविलोकय यथापुरायेनप्रकारेणपूर्वकालीनान्पुरुषान् ररक्षिथ एवंनूनमद्यइदानींअवअस्मान्रक्षहीतिपूरणः ॥ १९ ॥

१९. पूषन् तुम मनुष्यों को अतिक्रम करके अवस्थित हो। धन में देवों के बराबर हो। इसलिए संग्राम में हमारी ओर अनुकूल दृष्टि रखना। प्राचीन समय में तुमने मनुष्यों की जैसे रक्षा की थी, वैसे ही इस समय हमारी रक्षा करो।

वामीवामस्यधूतयःप्रणीतिरस्तुसूनृता ।
देवस्यवामरुतोमर्त्यस्यवेजानस्यप्रयज्यवः ॥ २० ॥

वामी । वामस्य । धूतयः । प्रऽनीतिः । अस्तु । सूनृता । देवस्य ।
वा । मरुतः । मर्त्यस्य । वा । ईजानस्य । प्रऽयज्यवः ॥ २० ॥

हेधूतयःकंपयितारः प्रयज्यवः प्रकर्षेणयष्टव्यामरुतः सासूनृताप्रियसत्यात्मिकामाध्यमिकायुष्मदीयावाक् प्रणीतिरस्तु अस्मदर्थंधनानांप्रणेत्रीभवतु देवस्यवामर्त्यस्यमनुष्यस्यवाईजानस्य इष्टवतः उभयविधस्यपुरुषस्यवामीप्रशस्तायावाक् वामस्यवननीयस्यधनस्यप्रणीतिः प्रणेत्री सासूनृतेत्यन्वयः प्रणीतिरस्तुअस्मदर्थं ॥ २० ॥

२०. कम्पनकारी और भली भाँति स्तुति-पात्र मरुतो, तुम्हारी जो प्रशस्त वाणी देवों और यजमानों को वाञ्छित धन देती है, वही सदय और सूनृत वाणी हमारी पथ-प्रदर्शिका बने।

सद्यश्चिद्यस्यंचर्कृतिःपरिद्यांदेवोनैतिसूर्यः।
त्वेषंशवोदधिरेनामंयज्ञियंमरुतोंवृत्रहंशवोज्येष्ठंवृत्रहंशवः ॥ २१ ॥

सद्यः। चित्। यस्यं। चर्कृतिः। परिं। द्याम्। देवः। न। एतिं।
सूर्यः। त्वेषम्। शवः। दधिरे। नामं। यज्ञियंम्। मरुतः।
वृत्रऽहम्। शवः। ज्येष्ठम्। वृत्रऽहम्। शवः ॥ २१ ॥

यस्यचमरुद्गणस्यचर्कृतिः कर्मसद्यश्चित् सद्यएव द्यांपर्येति परिगच्छति दिव्यन्तरिक्षेपरितोवर्तते देवोन देवोद्योतमानःसूर्यइव तादृशागणात्मकामरुतः त्वेषंदीप्तंनामशत्रूणांनमयितृ यज्ञियंयज्ञार्हंशवोबलं दधिरेअधारयन् तच्च शवोबलंवृत्रहंवृत्रादेरसुरस्यहन्तृ भवति तच्चवृत्रहंशवः ज्येष्ठंसर्वेभ्यः प्रशस्ततमंभवति ॥ २१ ॥

२१. जिन मरुतों के सारे कार्य दीप्तिमान् सूर्य की तरह सहसा आकाश में व्याप्त होते हैं, वे ही मरुद्गण दीप्त, शत्रु-विजयी, पूजनीय और शत्रुनाशक बल धारण करते हैं। शत्रु-नाशक बल सर्वापेक्षा प्रशस्त होता है।

सकृद्धद्यौरंजायतसकृद्भूमिरजायत।
पृश्न्यांदुग्धंसकृत्पयस्तदन्योनानुंजायते ॥ २२ ॥

सकृत्। ह। द्यौः। अजायत। सकृत्। भूमिः। अजायत।
पृश्न्याः। दुग्धम्। सकृत्। पयः। तत्। अन्यः। न।
अनुं। जायते ॥ २२ ॥

सकृद्धसकृदेवद्यौरजायत उदपद्यत सकृदुत्पन्नैवस्थिताभवति नपुनस्तस्यांनष्टायांअन्या तत्सदृशीद्यौर्जायते भूमिश्चसकृदेवाजायत पृश्न्याः मरुतांमातुर्गोः पयश्चसकृदेकवारमेवदुग्धं यस्मात्पयसोमरुतोजज्ञिरे पृश्न्यैवैपयसोमरुतोजाताइतितैत्तिरीयकं[1]। यथाद्यावापृथिव्यौसकृदेवोत्पद्येते एवंपृश्निरपिसकृत् दुग्धेनैवपयसोमरुतोजीजनत् ततःपरंअन्यः पदार्थोनानुजायते तत्सदृशोनोत्पद्यते ॥ २२ ॥

२२. एक ही बार स्वर्ग उत्पन्न हुआ और एक ही बार पृथिवी। एक ही बार पृश्णि (पृश्नि) या मरुतों की माता गाय से दूध दुहा गया है। इनके समय और कुछ उत्पन्न नहीं हुआ।

॥ इतिचतुर्थस्याष्टमेचतुर्थोवर्गः ॥ ४ ॥

---

1 तै० सं २. २. ११.।

स्तुषेजनमितिपंचदशर्चंषष्ठंसूक्तं भारद्वाजस्यऋजिश्वनआर्षं वैश्वदेवं अंत्याषट्पंचाशदक्षराशक्करी शिष्टास्त्रिष्टुभः तथाचानुक्रान्तं—स्तुषेपंचोनाऋजिश्वाहवैश्वदेवंहशक्कर्यन्तमिति । व्यूळ्हेदशरात्रेपंचमेहनिइदंवैश्वदेवनिविद्धानं सूत्रितंच—ऋभुर्विभ्वास्तुषेजनमितिवैश्वदेवमिति । आद्यामहानाम्नीव्रतेजप्या ।

सैषाप्रथमा—

स्तुषेजनंसुव्रतंनव्यसीभिर्गीर्भिर्मित्रावरुणासुम्नयन्ता ।
तआगमन्तुतइहश्रुवन्तुसुक्षत्रासोवरुणोमित्रोअग्निः ॥ १ ॥

स्तुषे । जनम् । सुऽव्रतम् । नव्यसीभिः । गीःऽभिः । मित्रावरुणा ।
सुम्नऽयन्ता । ते । आ । गमन्तु । ते । इह । श्रुवन्तु ।
सुऽक्षत्रासः । वरुणः । मित्रः । अग्निः ॥ १ ॥

सुव्रतं सुकर्माणंजनंदैव्यंजनंदेवसंघंनव्यसीभिःनवतराभिर्गीर्भिःस्तुतिभिः स्तुषे अहंस्तुवे तथा मित्रावरुणामित्रःप्रमीयतेस्त्रायकःवरुणःपापानांनिवारयिता एतावपिदेवौस्तौमि कीदृशौ सुम्नयन्तासुम्नंसुखंस्तोतॄणामिच्छन्तौ सुक्षत्रासःशोभनबलास्तेवरुणादयःसर्वेदेवाःइहास्मिन्यज्ञेआगमन्तु आगच्छन्तु तेतादृशाःश्रुवन्तु अस्मदीयाःस्तुतीःशृण्वन्तुच अत्रमित्रादीनांपरिगणनमुपलक्षणं सूक्तस्यसर्वस्यदेवताप्रतिपादकत्वात्अतएवपूर्वंजनमितिसामान्यनिर्देशः ॥ १ ॥

१. मैं नये स्तोत्रों के द्वारा देवों और स्तोताओं के सुखाभिलाषी मित्र और वरुण की स्तुति करता हूँ। अतीव बली मित्र, वरुण और अग्नि इस यज्ञ में आवें और हमारे स्तोत्र सुनें।

अथद्वितीया—

विशोविशईड्यमध्वरेष्वदृप्तक्रतुमरतिंयुवत्योः ।
दिवःशिशुंसहसःसूनुमग्निंयज्ञस्यकेतुमरुषंयजध्यै ॥ २ ॥

विशःऽविशः । ईड्यम् । अध्वरेषु । अदृप्तऽक्रतुम् । अरतिम् ।
युवत्योः । दिवः । शिशुम् । सहसः । सूनुम् । अग्निम् । यज्ञस्य ।
केतुम् । अरुषम् । यजध्यै ॥ २ ॥

विशोविशःसर्वस्याःप्रजायाःअध्वरेषुयज्ञेषुईड्यं ऋत्विग्भ्यःस्तुत्यं अदृप्तक्रतुंदर्परहितकर्माणंअमूढप्रज्ञंवा युवत्योर्द्यावापृथिव्योररतिमभिगन्तारंअर्यंस्वामिनंदिवोद्युल्लोकस्यशिशुंपुत्रं दि-

वसपरिप्रथमंजज्ञेअग्निरितिनिगमः। अथवादिवःस्तोतुःपुत्रभूतं तथापिनिगमोभवति त्वंपुत्रोभवसियस्तेविधेदिति सहसोबलस्यसूनुंपुत्रंयज्ञस्ययागस्यकेतुंप्रज्ञापकं अरुषमारोचमानं एवंगुणकर्माग्नियजध्यैयष्टुंस्तुषइत्यनुषज्यते स्तुषेस्तुवे ॥ २ ॥

२. जो अग्नि प्रत्येक व्यक्ति के यज्ञ में पूजा-पात्र हैं, जो कार्य करके अहंकार नहीं करते, जो स्वर्ग और पृथिवी नामक दो कन्याओं के स्वामी हैं, जो स्तोता के पुत्र-भूत शक्ति-पुत्र हैं और जो यज्ञ के प्रदीप्त केतु-रूप हैं, मैं उन्हीं अग्नि का यज्ञ करने के लिए यजमान को उत्तेजित करता हूँ।

अथतृतीया—

अरुषस्यंदुहितराविरूपेस्तृभिरन्यापिपिशेसूरोअन्या।
मिथस्तुराविचरन्तीपावकेमन्मश्रुतंनक्षतऋच्यमाने ॥ ३ ॥

अरुषस्य। दुहितरा। विरूपेइतिविऽरूपे। स्तृऽभिः। अन्या।
पिपिशे। सूरः। अन्या। मिथःऽतुरा। विचरन्तीइतिविऽचरन्ती।
पावके इति। मन्म। श्रुतम्। नक्षतः। ऋच्यमाने इति ॥ ३ ॥

इयमहोरात्रयोःस्तुतिः अरुषस्यरोचमानस्यसूर्यस्यदुहितरौ सूर्येणहिअहोरात्रयोर्विभागःक्रियते अतस्तदधीनात्मलाभत्वात्तस्यदुहितरावित्युच्यते विरूपेशुक्लकृष्णतयानानारूपेतयोरन्याएकारात्रिःस्तृभिर्नक्षत्रैः पिपिशेपिश्यते संश्लिष्यते पिशअवयवइतिधातुः अन्याअहरात्मिकादुहिता सूरःसूर्येणपिपिशेसंश्लिष्यते तेचनक्षत्रैःसूर्येणचालंकृतेभवतइत्यर्थः मिथस्तुरापरस्परंबाधयंत्यौअह्नारात्रिर्निवर्त्यते रात्र्याचाहरितिपरस्परंबाधः अतएवविचरन्तीविविधंपृथक्चरंत्यौपावकेसर्वस्यशोधयित्र्यौ एवंभूतेअहश्चरात्रिश्चऋच्यमाने अस्माभिःस्तूयमानेसत्यौ श्रुतं श्रोतव्यंमन्ममननीयं स्तोत्रमस्मत्कृतंनक्षतःव्याप्नुतां ॥ ३ ॥

३. दीप्तिमान् सूर्य की विभिन्न-रूपिणी दो कन्यायें (दिन और रात्रि) हैं। इनमें एक नक्षत्र-समूह और एक सूर्य के द्वारा समुज्ज्वल है। परस्पर-विरोधी, पृथक् रूप से संचरण-शील, पवित्रता-विधायक और हमारे स्तुति-भाजन ये दोनों हमारा स्तोत्र सुनकर प्रसन्न हों।

प्रवायुमच्छाबृहतीमनीषाबृहद्रयिंविश्ववारंरथप्राम्।
द्युतद्यामानियुतःपत्यमानःकविःकविमियक्षसिप्रयज्यो ॥ ४ ॥

प्र। वायुम्। अच्छ। बृहती। मनीषा। बृहत्ऽरयिम्।
विश्वऽवारम्। रथऽप्राम्। द्युतत्ऽयामा। निऽयुतः। पत्यमानः।
कविः। कविम्। इयक्षसि। प्रयज्योइतिप्रऽयज्यो ॥ ४ ॥

---

१ ऋ० सं० ७. ३. २८।   २ ऋ० सं० २.५. १८।

बृहतीमहतीमनीषास्मदीयास्तुतिः वायुमच्छाभिमुख्येनप्रगच्छतु उपसर्गश्रुतेर्योग्यक्रियाध्याहारः कीदृशंवायुं बृहद्रयिंमहाधनं विश्ववारं विश्वैर्वरणीयं संभजनीयंरथप्रां रथस्यात्मीयस्यप्रातारंपूरयितारं यद्वा स्तोतॄणांरथंधनैःपूरयितारं अथप्रत्यक्षस्तुतिः हेप्रयज्यो प्रकर्षेणयष्टव्य वायो द्युतद्यामा प्रदीप्तस्थानःनियुतःआत्मीयरथयोज्याःवड़वाःताःपत्यमानःअभिपतन् अभिगच्छन् यद्वा पत्यतिरैश्वर्यकर्मा तासांवड़वानामीश्वरःकविःक्रान्तदर्शी एवंभूतस्त्वंकविंमेधाविनं स्तोतारंइयक्षसि धनेनपूजय ॥ ४ ॥

४. हमारी महती स्तुति महाधन-सम्पन्न, अखिल लोकों के वन्दनीय और रथ के पूरक वायु के सामने उपस्थित हों। हे सम्यक् यज्ञ-पात्र, समुज्ज्वल रथ पर आरूढ़, जुते हुए अश्वों के अधिपति और दूरदर्शी मरुत्, तुम मेधावी स्तोता को धन के द्वारा संवर्द्धित करो।

समेवपुश्छदयदश्विनोर्योरथोविरुक्मान्मनसायुजानः ।
येननरानासत्येषयध्यैवर्तिर्याथस्तनयायत्मनेच ॥ ५ ॥ ५ ॥

सः । मे । वपुः । छदयतु । अश्विनोः । यः । रथः । विरुक्मान् ।
मनसा । युजानः । येन । नरा । नासत्या । इषयध्यै ।
वर्तिः । याथः । तनयाय । त्मने । च ॥ ५ ॥

अश्विनोःस्वभूतःसरथः मेमदीयंवपुः शरीरंछदयतच्छादयतु तेजसाआच्छादयतु योरथोविरुक्मान्विरोचनवान् विशेषेणदीप्यमानः मनसामनोव्यापारमात्रेणयुजानःअश्वैःसंयुज्यमानोभवति हेनरानेतारौ हेनासत्यासत्यस्वभावौ सत्यनेतारौ नासिकाप्रभवौवा अश्विनौ येनरथेन वर्तिःस्तोतृगृहं तनयायपुत्रायत्मनेआत्मनेतत्पित्रेस्तोत्रेचइषयध्यै कामान्प्रापयितुंयाथः गच्छथः सरथइतिपूर्वत्रान्वयः ॥ ५ ॥

५. जो रथ सोचने के साथ अश्व से जुत जाता है, अश्विनीकुमारों का वही समुज्ज्वल रथ दीप्ति-द्वारा मेरी देह को आच्छादित करे। नेता अश्विनीकुमारो, रथ पर चढ़कर, अपने स्तोता का मनोरथ पूर्ण करने के लिए उसके घर जाना।

" इतिचतुर्थस्याष्टमेपंचमोवर्गः ॥ ५ ॥

पर्जन्यवातावृषभापृथिव्याःपुरीषाणिजिन्वतमप्यानि ।
सत्यश्रुतःकवयोयस्यगीर्भिर्जगतःस्थातर्जगदाकृणुध्वम् ॥ ६ ॥

पर्जन्यवाता । वृषभा । पृथिव्याः । पुरीषाणि । जिन्वतम् ।
अप्यानि । सत्यऽश्रुतः । कवयः । यस्य । गीःऽभिः । जगतः ।
स्थातः । जगत् । आ । कृणुध्वम् ॥ ६ ॥

हेपर्जन्यवाता पर्जन्यवायू वृषभावृष्टेःकर्तारौपृथिव्याः अन्तरिक्षनामैतद् अन्तरिक्षाद् आप्यानि आप्तव्यानिपुरीषाणिपूरकाण्युदकानि जिन्वतंप्रेरयतं उत्तरोर्धचौमारुतः हेसत्यश्रुतः सत्यस्यस्तोत्रस्यश्रोतारः कवयोमेधाविनोमरुतः यस्यस्तोतुःगीर्भिःस्तुतिभिःयूयंस्तुताभवथ तस्यस्तोतुःजगत्स्थावरजंगमात्मकंसर्वंप्राणिजातंआकृणुध्वं आभिमुख्येनकुरुत हेजगतःस्थातःगणाभिप्रायमेकवचनं स्थावरजंगमात्मकस्यजगतोवस्थापकहेमरुद्गणेतियोज्यं ॥ ६ ॥

६. वर्षा करनेवाले पर्जन्य और वायु, अन्तरिक्ष से तुम प्राप्त जल भेजो। ज्ञान-सम्पन्न, स्तोत्र सुननेवाले और संसार-स्थापक मरुतो, जिसके स्तोत्र से तुम प्रसन्न होते हो, उसके सारे प्राणियों को समृद्ध करते हो।

अन्वारंभणीयायांसारस्वतस्यहविषोयाज्यापावीरवीत्येषा सूत्रितंच—पावीरवीकन्याचित्रायुःपीपिवांसंसरस्वतइति । एकादशिनेसारस्वतेपशौएषैवपुरोडाशस्ययाज्या सूत्रितंच—पावीरवीकन्याचित्रायुर्यस्तेस्तनःशशयोमयोभूरिति । आग्निमारुतेशस्त्रेप्येषा सूत्रितंच—राकामहमितिद्वेपावीरवीकन्याचित्रायुरिति ।

पावीरवीकन्याचित्रायुःसरस्वतीवीरपत्नीधियंधात् ।
ग्नाभिरच्छिद्रंशरणंसजोषादुराधर्षंगृणतेशर्मयंसत् ॥ ७ ॥

पावीरवी । कन्या । चित्रऽआयुः । सरस्वती । वीरऽपत्नी ।
धियम् । धात् । ग्नाभिः । अच्छिद्रम् । शरणम् । सऽजोषाः ।
दुःऽआधर्षम् । गृणते । शर्म । यंसत् ॥ ७ ॥

पावीरवीशोधयित्री कन्याकमनीया चित्रायुश्चित्रगमनाचित्रान्नावा वीरपत्नीवीरः प्रजापतिः पतिर्यस्यास्तादृशी यद्वा वीराणांपालयित्री एवंभूतासरस्वतीधियं अस्मदीयंकर्मयज्ञाख्यं धात्दधातु धारयतु ददातु वाशब्देनप्रतिपादितोह्यर्थोनुष्ठीयते अपिचग्नाभिर्देवपत्नीभिः सजोषाः सहप्रीयमाणाः यद्वाग्नाःगायत्र्यादीनिच्छंदांसि छन्दांसिवैग्नाइतिश्रुतेः । तैःसहप्रीयमाणाःगृणते स्तुवते मह्यंअच्छिद्रंछिद्ररहितंदुराधर्षं शत्रुभिः शीतवातादिभिश्चधर्षितुमशक्यं शरणंगृहं शर्मसुखंचयंसत्प्रयच्छतु ॥ ७ ॥

७. पवित्रता-कारिणी, मनोहरा, विचित्र-गमना और वीर-पत्नी सरस्वती, हमारे यागादि कर्मों का निर्वाह करें। वे देव-पत्नियों के साथ प्रसन्न होकर स्तोता को छेद-रहित, शीत और वायु के लिए दुर्द्धर्ष गृह और सुख प्रदान करें।

एकादशिनेपौष्णेपशौपथस्पथइतिहविषोयाज्या सूत्रितंच—पथस्पथःपरिपतिंवचस्याबृहस्पतेयापरमापरावादतिद्वेइति ।

---

१ तै० सं० ५. १. ७. ।

अथाष्टमी—

पथस्पंथःपरिपतिंवचस्याकामेनकृतोअभ्यांनळर्कम् ।
सनोरासच्छुरुधश्चन्द्राग्राधियंधियंसीषधातिप्रपूषा ॥ ८ ॥

पथःऽपंथः । परिऽपतिम् । वचस्या । कामेन । कृतः । अभि ।
आनट् । अर्कम् । सः । नः । रासत् । शुरुधः । चन्द्रऽअंग्राः ।
धियम्ऽधियम् । सीसधाति । प्र । पूषा ॥ ८ ॥

पथस्पथः सर्वस्यमार्गस्यपरिपतिमधिपतिंअर्कमर्चनीयं पूषणं कामेनकाम्यमानेनफलेन कृतोवशीकृतःस्तोता वचस्यास्तुत्याअभ्यानट् अभ्यश्नुतां प्राप्नोतु सचपूषा नोस्मभ्यंशुरुधः शुचोरोधयित्रीर्गाः चन्द्राग्राः चन्द्रमितिहिरण्यनाम हिरण्यप्रमुखाः यद्वास्वर्णश्रृंगाः रासद्-दातु रादानेअस्माल्लेटिरूपं तथाधियंधियंसर्वमस्मदीयंकर्म सपूषाप्रसीषधातिप्रसाधयतु ॥ ८ ॥

८. स्तोता, वाञ्छित फल के वश में आकर सारे मार्ग के अधि-पति पूजनीय पूषा के पास, स्तोत्र के साथ, उपस्थित होओ। वे हमें सोने की सींगवाली गायें दें। पूषा हमारे सारे कार्य पूर्ण करें।

वाष्ट्रेपशौप्रथमभाजमितिहविषोयाज्या सूत्रितंच—प्रथमभाजंयशसंवयोधांसोमापूषणाज-ननारयीणामितिसूक्तमिति ।

सैषासूक्तेनवमी—

प्रथमभाजंयशसंवयोधांसुपाणिंदेवंसुगभस्तिमृभ्वम् ।
होतायक्षद्यजतंपस्त्यानामग्निस्त्वष्टारंसुहवंविभावा ॥ ९ ॥

प्रथमऽभाजम् । यशसम् । वयःऽधाम् । सुऽपाणिम् ।
देवम् । सुऽगभस्तिम् । ऋभ्वम् । होता । यक्षत् । यजतम् ।
पस्त्यानाम् । अग्निः । त्वष्टारम् । सुऽहवम् । विभाऽवा ॥ ९ ॥

प्रथमभाजं प्रथमेउत्पत्तिकालएवविभक्तारंजंतूनां यावच्छोवैरेतसःसिक्तस्यत्वष्टारूपा-णिविकरोतितावच्छोवैतत्प्रजायतइतिश्रुतेः[1] । यशसंयशस्विनं वयोधांवयसोन्नस्यहविर्लक्ष-णस्यधातारं धारयितारं यद्वा स्तोतृभ्योन्नप्रदं सुपाणिंहस्तस्यमणिबंधादूर्ध्वप्रदेशः पाणिः शोभनपाणिकंदेवंदानादिगुणयुक्तंसुगभस्तिं गभस्तिरितिबाहुनाम शोभनदोर्दंडं ऋभ्वंउरुभास-

1 तै० सं० १. ५. ९. ।

मानं महान्तंवापस्त्यानां पस्त्यमितिगृहनाम तत्स्थानांयजतंयष्टव्यं गृहस्थैर्यजनीयमित्यर्थः सुहवंसुखेनह्वातुंशक्यं एवंभूतंत्वष्टारंहोतादेवानामाह्वाता विभावा दीप्यमानोग्निः यक्षद्यजत् अनेनहविषायजतु ॥ ९ ॥

९. देवों को बुलानेवाले और दीप्तिमान् अग्नि त्वष्टा का यज्ञ करें। त्वष्टा सबके आदि विभाजक, प्रसिद्ध अन्नदाता, शोभन-पाणि, दान्तशील महान् गृहस्थों के यजनीय और अनायास आह्वान के योग्य हैं।

भुवनस्यपितरंगीर्भिराभीरुद्रंदिवावर्धयारुद्रमक्तौ।
बृहन्तमृष्वमजरंसुषुम्नमृधग्घुवेमकविनेषितासः ॥ १० ॥ ६ ॥

भुवनस्य। पितरम्। गीःऽभिः। आभिः। रुद्रम्। दिवा।
वर्धय। रुद्रम्। अक्तौ। बृहन्तम्। ऋष्वम्। अजरम्। सुऽसुम्नम्।
ऋधक्। हुवेम। कविना। इषितासः ॥ १० ॥ ॥ ६ ॥

भुवनस्यभूतजातस्यपितरंपालयितारंरुद्रं रुद्दुःखंतद्द्रावयितारमीश्वरं आभिर्गीर्भिःस्तुतिभिःदिवाअहनिहेस्तोतर्वर्धय अक्तौरात्र्यांचतमेवरुद्रंस्तुतिभिर्वर्धय वयंचकविनाप्राज्ञेनरुद्रेणइषितासःप्रेषिताःप्रेरिताःसन्तः बृहन्तंमहान्तंऋष्वंदर्शनीयमजरंजरारहितं सुषुम्नंशोभनसुखं एवंगुणविशिष्टंरुद्रंऋधक् ऋद्धंसमृद्धंयथाभवतितथाहुवेम स्तवाम ॥ १० ॥

१०. स्तोता, दिन में इन सारे स्तोत्रों के द्वारा भुवन-पालक रुद्र को वर्द्धित करो और रात्रि में रुद्र की संवर्द्धना करो।

॥ इतिचतुर्थस्याष्टमेषष्ठोवर्गः ॥ ६ ॥

अथैकादशी—

आयुवानःकवयोयज्ञियासोमरुतोगन्तगृणतोवरस्याम्।
अचित्रंचिद्धिजिन्वथावृधन्तइत्थानक्षन्तोनरोअङ्गिरस्वत् ॥ ११ ॥

आ। युवानः। कवयः। यज्ञियासः। मरुतः। गन्त। गृणतः।
वरस्याम्। अचित्रम्। चित्। हि। जिन्वथ। वृधन्तः। इत्था।
नक्षन्तः। नरः। अङ्गिरस्वत् ॥ ११ ॥

हेयुवानोनित्यतरुणाः कवयः प्राज्ञाः यज्ञियासोयज्ञार्हाः एवंभूताहेमरुतः गृणतःस्तुवतः वरस्यांवरणीयांस्तुतिंप्रतिआगन्त आगच्छत अपिच हेनरोनेतारोमरुतः इत्थाइत्थमनेनप्र-

कारेणवृधन्तोवर्धमानाः यद्वा इत्थाअमुत्रान्तरिक्षेनक्षन्तोव्याप्नुवन्तः अंगिरस्वत्अंगिरसोगम-
नशीलारश्मयः तेयथाशीघ्रंनभस्थलंव्याप्नुवन्ति तद्वत् यद्वाऋषयएवांगिरसः तद्वत्शीघ्रगामिनः
एवंभूतायूयं अचित्रंचिवओषधिवनस्पतिभिर्निबिडोदेशश्चित्रंतद्विलक्षणं ओषध्यादिभिर्वियुक्त-
मपिदेशंजिन्वथ वृष्ट्यातर्पयथ हीतिपूरणः ॥ ११ ॥

११. नित्य तरुण, ज्ञान-सम्पन्न और पूजनीय मरुद्गण, जहाँ यजमान स्तोत्र करता है, वहाँ आओ। नेताओ, तुम इसी प्रकार समृद्ध होकर और चलनेवाली रश्मियों की तरह व्याप्त होकर वृष्टि-द्वारा विरल-पादप वनों को तृप्त करो।

प्रवीरायप्रतवसेतुरायाजायूथेवपशुरक्षिरस्तम्।
सपिस्पृशातितन्विश्रुतस्यस्तृभिर्ननाकंवचनस्यविपः ॥ १२ ॥

प्र। वीरायं। प्र। तवसे। तुरायं। अजं। यूथाऽइंव। पशुऽरक्षिः।
अस्तम्। सः। पिस्पृशति। तन्वि। श्रुतस्यं। स्तृऽभिः। न।
नाकम्। वचनस्यं। विपः ॥ १२ ॥

वीरायविक्रान्तायविविधंशत्रूणामीरकायवा मरुद्गणाय प्राज हेस्तोतः स्तुतिंप्रगमय तथा
तवसेबलिनेतुरायक्षिप्रगमनायचतस्मैगणायप्राज तत्रदृष्टान्तः—पशुरक्षिःपशुपालकः यूथेव स-
यथागोयूथानिसायंकालेअस्तंगृहंशीघ्रंगमयति तद्वत् शीघ्रंस्तुतिंप्रेरयेत्यर्थः सचमरुद्गणः वचन-
स्यवक्तुःविपःविप्रस्यमेधाविनःस्तोतुःश्रुतस्य क्रियाग्रहणमपिकर्तव्यमितिकर्मणःसंप्रदानत्वाच्च-
तुर्थ्यर्थेषष्ठी श्रुतंश्रोतव्यंस्तोत्रं तन्वि आत्मीयेशरीरेपिस्पृशतिस्पर्शयतु संश्लेषयतु तत्स्तोत्रं
हृद्गतंभवत्वित्यर्थः स्पर्शनेदृष्टान्तः—स्तृभिर्ननाकं यथानक्षत्रैर्नाकमन्तरिक्षंस्पर्शयतिसंश्लेषयति
तद्वत् ॥ १२ ॥

१२. जैसे पशु-पालक गोयूथ को शीघ्र परिचालित करता है, वैसे ही पराक्रान्त, बली और द्रुतगामी मरुतों के पास शीघ्र स्तोत्र प्रेरित करो। जैसे अन्तरिक्ष नक्षत्र-मण्डल-द्वारा संश्लिष्ट है, वैसे ही वे ही मरुद्गण मेधावी स्तोता के सुश्राव्य स्तोत्र-द्वारा अपनी देह को संश्लिष्ट करें।

अथत्रयोदशी—

योरजांसिविममेपार्थिवानित्रिश्चिद्विष्णुर्मनवेबाधिताय।
तस्यतेशर्मन्नुपदद्यमानेरायामदेमतन्वा३तनाच ॥ १३ ॥

यः। रजांसि। विऽममे। पार्थिवानि। त्रिः। चित्। विष्णुः।
मनवे। बाधितायं। तस्यं। ते। शर्मन्। उपऽदद्यमाने। राया।
मदेम। तन्वा। तना। च ॥ १३ ॥

योविष्णुःबाधितायअसुरैर्हिंसिताय मनवेप्रजापतये तदर्थंपार्थिवानिपृथिव्यासंबद्धानि रजांसिलोकान्त्रीन्लोकानितियावत् त्रिरित्थं विममे चिदित्यवधारणे त्रिभिरेवविक्रमणैः परिमितवान् हेविष्णो तस्यतादृशस्यतेतव तृतीयार्थेषष्ठी ईदृशेनत्वयाउपदद्यमाने अस्मभ्यंदीयमाने शर्मन्शर्मणिगृहेसुखेवावर्तमानाःसन्तोवयं रायाधनेनतन्वारोगादिरहितेनशरीरेणच तनातनयेनपुत्रेणच मदेम मोदेम हृष्टाभवेम ॥ १३ ॥

१३. जिन विष्णु ने उपद्रुत मनु के लिए त्रिपाद पराक्रम के द्वारा पार्थिव लोकों को नाप डाला था, वही तुम्हारे द्वारा प्रदत्त गृह में निवास करें और हम धन, देह और पुत्र-द्वारा अनुभव करें।

अथचतुर्दशी—

तन्नोअहिर्बुध्न्योअद्भिरर्कैस्तत्पर्वतस्तत्सविताचनोधात् ।
तदोषधीभिरभिरातिषाचोभगःपुरंधिर्जिन्वतुप्रराये ॥ १४ ॥

तत् । नः । अहिः । बुध्न्यः । अत्ऽभिः । अर्कैः । तत् । पर्वतः ।
तत् । सविता । चनः । धात् । तत् । ओषधीभिः । अभि ।
रातिऽसाचः । भगः । पुरम्ऽधिः । जिन्वतु । प्र । राये ॥ १४ ॥

बुध्न्यःबुध्नमंतरिक्षंतत्रभवःअहिः एत्यन्तरिक्षइत्यहिः उक्तंच—अहिरयनादेत्यंतरिक्षइति । एतत्पदद्वयाभिधेयोदेवः अर्कैः अर्चनसाधनैर्मंत्रैःस्तूयमानःसन्नोस्मभ्यंतत्लोकेप्रसिद्धंचनोन्नं अद्भिःउदकैःसार्धंधान्दधातु विदधातु प्रयच्छतु पर्वतःपूरयिता पर्वपूरणेइतिधातुः यद्वा पर्ववत्पर्वतःतद्वान् पर्वतस्यगिरेःशत्रुरितिवापर्वतःसचतच्चनोदधातु तथासवितापेरकोदेवश्चतच्चनोदधातु अपिचरातिषाचःरातिंदानंसचन्तेसेवन्तइतिरातिषाचोविश्वेदेवाः तेचओषधीभिः ओषःपाकःआसुधीयतइतिओषधयस्तिलमाषाद्याः ताभिःसार्धंतदन्नमभिप्रयच्छन्तु तथापुरन्धिर्बहुधीःबहुप्रज्ञोवाबहुकर्मावाभगोभजनीयएतत्संज्ञोदेवश्चरायेधनार्थं प्रजिन्वतु अस्मान्प्रेरयतु ॥ १४ ॥

१४. हमारे मन्त्रों-द्वारा स्तूयमान अहिर्बुध्न, पर्वत और सविता हमें जल के साथ अन्न दें। दानशील विश्वदेवगण हमें ओषधि के साथ वही अन्न दें। सुबुद्धिदेव भग हमें धन के लिए प्रेरित करें।

अथपंचदशी—

नूनोरयिंरथ्यंचर्षणिप्रांपुरुवीरंमहऋतस्यगोपाम् ।
क्षयंदाताजरंयेनजनान्स्पृधोअदेवीरभिचक्रमामविश आदेवीरभ्यश्नवाम ॥ १५ ॥ ७ ॥

---

१ नि० २. १७.

नु । नः । रयिम् । रथ्यम् । चर्षणिऽप्राम् । पुरुऽवीरम् । महः । ऋतस्य । गोपाम् । क्षयम् । दात । अजरम् । येन । जनान् । स्पृधः । अदेवीः । अभि । च । क्रमाम । विशः । आऽदेवीः । अभि । अश्नवाम ॥ १५॥७॥

हेसर्वेदेवाः नोस्मभ्यंनुक्षिप्रंरयिंधनंक्षयंगृहंच दात प्रयच्छत कीदृशंरयिं रथ्यंरथसंबन्धिनं-रथयुक्तमित्यर्थः चर्षणिप्रां चर्षणयोमनुष्यास्तेषांपूरयितारं पुरुवीरं वीर्याज्जायन्तइतिवीराःपुत्रा-दयः बहुभिःवीरैरुपेतं महोमहतःऋतस्ययज्ञस्यगोपांरक्षकंदक्षिणारूपेणधनेनहियज्ञोरक्ष्यते मृ-तोयज्ञस्त्वदक्षिणइतिवचनात् कीदृशंक्षयं अजरंजरारहितं येनरयिणाक्षयेणचजनान्शत्रून्स्पृधः स्पर्धमानाः अदेवीःअदेवसंबन्धिनीरासुरीःसेनाश्च अभिक्रमाम अभिभवेम तथाआदेवीःआ-गतादेवायासुहविःस्वीकारार्थं ताआदेव्यः तादृशीश्चविशःप्रजाःयज्ञानुष्ठायिनीःयेनधनेनगृहेण चअस्यश्नवाम अभिप्राप्नवाम तादृशंधनंगृहंचदातेत्यन्वयः ॥ १५ ॥

१५. विश्वदेवगण, तुम हमें रथ-युक्त और असंख्य अनुचरों के साथ अनेक पुत्रों से युक्त यज्ञ का साधन-भूत गृह और अक्षय्य अन्न प्रदान करो, जिसके द्वारा हम स्पर्द्धा करके शत्रुओं और देवशून्य सैन्यों को पराजित करेंगे और देव-भक्तों को आश्रय प्रदान करने में समर्थ होंगे।

॥ इतिचतुर्थस्याष्टमेसप्तमोवर्गः ॥ ७ ॥

॥ इतिषष्ठेमंडलेचतुर्थोनुवाकः ॥ ४ ॥

पंचमेनुवाकेद्वादशसूक्तानि तत्रहुवेवइतिपंचदशर्चंप्रथमंसूक्तं ऋजिश्वनआर्षं बहुदेवताकं त्रैष्टुभं हुवेवइत्यनुक्रान्तं गतःसूक्तविनियोगः ।

हुवेवोदेवीमदितिंनमोभिर्मृळीकायवरुणंमित्रमग्निम् ।
अभिक्षदामर्यमणंसुशेवंत्रातॄन्देवान्त्सवितारंभगंच ॥ १ ॥

हुवे । वः । देवीम् । अदितिम् । नमःऽभिः । मृळीकाय । वरुणम् । मित्रम् । अग्निम् । अभिऽक्षदाम् । अर्यमणम् । सुऽशेवम् । त्रातॄन् । देवान् । सवितारम् । भगम् । च ॥ १ ॥

हेदेवाः वोयुष्माकंमातरंदेवींद्योतमानां अदितिंअखंडनीयां अदीनांवा एतत्संज्ञांदेवतांमृ-ळीकायसुखार्थंनमोभिःनमस्कारैःस्तोत्रैर्वाहुवे ह्वयामि स्तौमि तथावरुणंवारकं मित्रंप्रमीतेस्त्रा-यकं देवं अग्निंचएतांश्चदेवान्नमोभिर्हुवेतथाअभिक्षदां क्षदिर्हिंसाकर्मा अभिक्षत्तारं शत्रूणां हिंसितारं सुशेवं सुसुखंअर्यमणंचनमोभिर्हुवे सवितारंभगंचनमोभिर्हुवे किंबहुना त्रातॄन्पाल-यितॄन्सर्वान्देवान्नमोभिःस्तोत्रैर्हुवेस्तौमि ॥ १ ॥

१. देवो, मैं सुख के लिए स्तोत्र के साथ अदिति, वरुण, मित्र, अग्नि, शत्रु-हन्ता और सेव्य, अर्यमा, सविता, भग और समस्त रक्षक देवों को बुलाते हैं।

अथद्वितीया—

सुज्योतिषःसूर्यदक्षंपितॄननागास्त्वेसुमहोवीहिदेवान् ।
द्विजन्मानोयऋतसापःसत्याःस्वर्वन्तोयजताअग्निजिह्वाः ॥ २ ॥

सुऽज्योतिषः । सूर्य । दक्षंऽपितॄन् । अनागाःऽत्वे । सुऽमहः । वीहि । देवान् । द्विऽजन्मानः । ये । ऋतऽसापः । सत्याः । स्वःऽवन्तः । यजताः । अग्निऽजिह्वाः ॥ २ ॥

हेसुमहः शोभनदीप्ते सूर्य सर्वस्यप्रेरक दक्षपितॄन्दक्षःपितामहोयेषांतेदक्षपितरः पितृशब्दोहिसामान्येनपूर्वपुरुषत्वमात्रंब्रूते यथाआहंपितॄन्त्सुविदत्राँअवित्सीति । एषांदक्षपितृत्वंचअदितिर्ह्यजनिष्टेतिमंत्रादेवगम्यते । ईदृशान्ज्योतिषःशोभनज्योतिष्कान् देवान् अनागास्त्वेअनपराधत्वे वीहिकामयस्व यथास्माकंअपराधंतेनकुर्वन्तितथाकुर्याइत्यर्थः येदेवाःद्विजन्मानःद्वयोर्लोकयोर्जायमानाः प्रादुर्भवन्तः ऋतसापः ऋतंयज्ञंस्पृशन्तः सत्याःअवितथाःसत्यवादिनोवा स्वर्वन्तोधनवन्तः यजतायष्टव्याः अग्निजिह्वाःअग्निःजिह्वास्थानीयोयेषांते एवंभूतायेदेवाःसन्ति तान्देवान्वीहीत्यन्वयः ॥ २ ॥

२. दीप्तिसम्पन्न सूर्य, दक्ष से सम्भूत शोभन-दीप्तिशाली देवों को हमारे अनुकूल करो। द्विजन्मा (स्वर्ग और पृथिवी से उत्पन्न) देवगण यज्ञ-प्रिय, सत्यवादी, धन-सम्पन्न, यागार्ह और अग्नि-जिह्व होते हैं।

उतद्यावापृथिवीक्षत्रमुरुबृहद्रोदसीशरणंसुषुम्ने ।
महस्करथोवरिवोयथानोस्मेक्षयायधिषणेअनेहः ॥ ३ ॥

उत । द्यावापृथिवी इति । क्षत्रम् । उरु । बृहत् । रोदसी इति । शरणम् । सुसुम्ने इतिसुऽसुम्ने । महः । करथः । वरिवः । यथा । नः । अस्मे इति । क्षयाय । धिषणे इति । अनेहः ॥ ३ ॥

उतापिच हेद्यावापृथिवी द्यावापृथिव्यौ उरुविस्तीर्णंक्षत्रंबलंकरथः कुरुतं तथारोदसी द्यावापृथिव्यौ सुषुम्ने सुसुखे युवांबृहन्महच्छरणंगृहंचकरथः कुरुतं महोमहत् वरिवोधनंनोस्माकंयथास्यात्तथाकुरुतमित्यर्थः अपिच हेधिषणे धारयित्र्यौ द्यावापृथिव्यौ अनेहःपापराहित्यंचअस्मेअस्माकंक्षयायनिवासार्थंकुरुतं ॥ ३ ॥

३. स्वर्ग और पृथ्वी तुम अधिक बल दो। स्वर्ग और पृथ्वी, हमारी स्वतन्त्रता के लिए विशाल गृह हमें दो। ऐसा उपाय करो कि हमारे पास अतुल ऐश्वर्य हो जाय। सदय देव-द्वय, हमारे घर से पाप को हटाओ।

---

१ ऋ० सं० ७. ६. १७. । २ ऋ० सं० ८. ३. १. ।

अथचतुर्थी—

आनोरुद्रस्यसूनवोनमन्तामद्याहूतासोवसवोधृष्टाः ।
यदीमर्भेमहतिवाहितासोबाधेमरुतोअह्वामदेवान् ॥ ४ ॥

आ । नः । रुद्रस्य । सूनवः । नमन्ताम् । अद्य । हूतासः ।
वसवः । अधृष्टाः । यत् । ईम् । अर्भे । महति । वा । हितासः ।
बाधे । मरुतः । अह्वाम । देवान् ॥ ४ ॥

रुद्रस्यसूनवः पुत्रामरुतः अद्यास्मिन्कालेआहूतासःआहूताःसन्तः नोस्मान्प्रतिआनमन्तां आनताभवन्तु आगच्छन्तु कीदृशाः वसवोवासयितारः अधृष्टाः अन्यैरहिंसिताः यद्यदाईमेनान्मरुतोदेवान अर्भेअल्पेमहतिप्रभूतेवाबाधे संग्रामे हितासोनिहिताःस्थिताःसन्तोवयं अह्वाम आह्वयाम तदानीमद्येत्यन्वयः ॥ ४ ॥

४ गृह-दाता और अजेय रुद्र पुत्रगण इस समय बुलाये जाकर हमारे पास आवें। ये महान् और क्षुद्र क्लेश के समय हमें सहायता देंगे; इसलिए हम मरुतों को बुलाते हैं।

मिम्यक्षयेषुरोदसीनुदेवीसिषक्तिपूषाअभ्यर्धयज्वा ।
श्रुत्वाहवंमरुतोयद्धयाथभूमारेजन्तेअध्वन्प्रविक्ते ॥ ५ ॥ ८ ॥

मिम्यक्ष । येषु । रोदसी । नु । देवी । सिसक्ति । पूषा ।
अभ्यर्धऽयज्वा । श्रुत्वा । हवम् । मरुतः । यत् । ह । याथ ।
भूम । रेजन्ते । अध्वनि । प्रऽविक्ते ॥ ५ ॥ ८ ॥

येषुमरुत्सुरोदसीरुद्रस्यपत्नीदेवीद्योतमानामाध्यमिकावाक् मिम्यक्ष नुक्षिप्रंसंगच्छते तथाअभ्यर्धयज्वा स्तोतॄन्अभ्यर्धयन् समृद्धान्कुर्वन्योयजति धनेनपूजयति तादृशःपूषापोषकोदेवश्च सिषक्ति यान्मरुतःसेवते अभ्यर्धयज्वाभ्यर्धयन्यजतीतियास्कः[1] । हेमरुतस्तेयूयंहवमस्मदीयमाह्वानंश्रुत्वा यद्ध यदाखलु याथागच्छथ तदानींअध्वनिमार्गेप्रविक्तेगमनार्थपृथक्कृतेसति तत्रविद्यमानानिभूमभूतजातानिरेजन्ते कंपन्ते तथाचमंत्रान्तरं—प्रवेपयन्तिपर्वतान्विविंचंतिवनस्पतीन्[2] ॥ ५ ॥

५. जिन मरुतों के साथ दीप्तिमान् स्वर्ग और पृथ्वी संश्लिष्ट हैं, जिन मरुतों की सेवा, धन के द्वारा, स्तोताओं को समृद्ध करनेवाले पूषा करते हैं, ऐसे तुम, मरुतो, जिस समय हमारा आह्वान सुनकर आते हो, उस समय तुम्हारे विभिन्न मार्गों में अवस्थित प्राणी काँप जाते हैं।

॥ इतिचतुर्थस्याष्टमेष्टमोवर्गः ॥ ८ ॥

---

१ नि० ६. ६. । २ ऋ० सं० १. ३. १८. ।

अथषष्ठी—

अभित्यंवीरंगिर्वणसमर्चेन्द्रंब्रह्मणाजरितर्नवेन।

श्रवदिद्धवमुपंचस्तवानोरासद्वाजाँउपंमहोगृणानः ॥ ६ ॥

अभि। त्यम्। वीरम्। गिर्वणसम्। अर्च। इन्द्रम्। ब्रह्मणा।

जरितः। नवेन। श्रवत्। इत्। हवम्। उप। च। स्तवानः।

रासत्। वाजान्। उप। महः। गृणानः ॥ ६ ॥

हेजरितःस्तोतः त्यंतंप्रसिद्धंवीरंवीर्यवन्तंविशेषेणशत्रूणामीरकंवा गिर्वणसंगिरांसभक्तारं एवंविधमिन्द्रंनवेनाभिनवेनशोभनेनब्रह्मणास्तोत्रेण अभ्यर्चअभिष्टुहि सचस्तवा स्तूयमानः सन् हवमस्मदीयंस्तोत्रंउपश्रवदित् उपशृणुयादेव अपिच गृणानःस्तूयमानइन्द्रः महोमहतः प्रभूतान्वाजान्अन्नानिचउपरासत् प्रदेयात् यतएवंअतःस्तुहीत्यर्थः ॥ ६ ॥

६. स्तोता, अभिनव स्तुति-द्वारा स्तुति-पात्र वीर इन्द्र की स्तुति करो। इस प्रकार स्तुति किये जाने पर इन्द्र हमारा आह्वान सुनें; हमें प्रभूत अन्न दें।

ओमानमापोमानुषीरमृक्तंधातंतोकायतनयायशंयोः।

यूयंहिष्ठाभिषजोमातृतमाविश्वस्यस्थातुर्जगतोजनित्रीः ॥ ७ ॥

ओमानम्। आपः। मानुषीः। अमृक्तम्। धात। तोकाय।

तनयाय। शम्। योः। यूयम्। हि। स्थ। भिषजः। मातृऽतमाः।

विश्वस्य। स्थातुः। जगतः। जनित्रीः ॥ ७ ॥

हेआपः मानुषीर्मनुष्यहितायूयंअमृक्तमहिंसितं ओमानंअवतिरक्षतीत्योमारक्षकमन्नंतोकायपुत्रायतनयायतत्पुत्रायचधात धत्त प्रयच्छत तथाशंशमनमुपद्रवाणांयोर्यावनंपृथक्करणंच पृथक्कर्तव्यानांधत्त प्रयच्छत कुतइत्यतआह—हियस्माद्यूयंमातृतमाः मातृभ्योप्यधिकाभिषजः स्थभवथ तस्माद्धातेत्यन्वयः कथं मातृभ्योप्यधिकंभैषज्यमस्तीत्यतआह—विश्वस्यसर्वस्य स्थातुः स्थावरस्यजगतोजंगमस्यजनित्रीर्जनयित्र्योभवथ अतोयूयंभिषजःस्थ ॥ ७ ॥

७. वारि-राशि तुम मानव-हितैषी हो; इसलिए हमारे पुत्र-पौत्रों के लिए अनिष्ट-घातक और रक्षक अन्न प्रदान करो। तुम सारे उपद्रवों को शान्त और विदूरित करो। तुम माताओं की अपेक्षा श्रेष्ठ चिकित्सक हो। तुम स्थावर-जंगम-रूप संसार के उत्पादक हो।

अथाष्टमी—

आनोदेवःसविताप्रायमाणोहिरण्यपाणिर्यजतोजगम्यात्।

योदत्रवाँउषसोनप्रतीकंव्यूर्णुतेदाशुषेवार्याणि ॥ ८ ॥

आ । नः । देवः । सविता । त्रायमाणः । हिरण्यऽपाणिः ।
यजतः । जगम्यात् । यः । दत्रऽवान् । उषसः । न । प्रतीकम् ।
विऽऊर्णुते । दाशुषे । वार्याणि ॥ ८ ॥

त्रायमाणोरक्षन् हिरण्यपाणिःसुवर्णहस्तःहितरमणीयपाणिर्वा यजतोयष्टव्यः एवंभूतः सवितापेरकोदेवः नःअस्मान्आजगम्यादागच्छतु योदेवः दत्रवान्धनवान् उषसोनप्रतीकं उषसःप्रमुखमिव दाशुषेहवींषिदत्तवतेयजमानाय वार्याणि वरणीयानिधनानिव्यूर्णुते विवृणोति प्रकाशयति ससवितेत्यन्वयः ॥ ८ ॥

८. जो उषा-मुख की तरह यजमान के पास अभिलषित धन प्रकट करते हैं, वे ही रक्षक, हिरण्य-पाणि और पूजनीय सविता हमारे पास आवें।

अथनवमी—

उतत्वंसूनोसहसोनोअद्यादेवाँअस्मिन्नध्वरेववृत्याः ।
स्यामहन्तेसदमिद्रातौतवस्यामग्नेवंसासुवीरः ॥ ९ ॥

उत । त्वम् । सूनो इति । सहसः । नः । अद्य । आ । देवान् ।
अस्मिन् । अध्वरे । ववृत्याः । स्याम । अहम् । ते । सदम् ।
इत् । रातौ । तव । स्याम् । अग्ने । अवसा । सुऽवीरः ॥ ९ ॥

उतअपिच हेसहसःसूनो बलस्यपुत्राग्ने त्वंअद्यास्मिन्कालेनो स्मदीयेअस्मिन्नध्वरेयागे देवान्यष्टव्यानिन्द्रादीन्आववृत्याः आवर्तयआगमय अपिचाहं तेतवरातौधनस्यदाने सदमित् सर्वदैववर्तमानःस्यांभवेयं तथाहेअग्ने तवावसात्वदीयेनरक्षणेनसुवीरःशोभनैःवीरैःपुत्रपौत्रादिभिरुपेतश्चस्यांभवेयं ॥ ९ ॥

९. शक्ति-पुत्र अग्नि, हमारे यज्ञ में आज देवों को ले आओ। मैं सदा तुम्हारी उदारता का अनुभव करूँ। देव, तुम्हारी रक्षा के कारण मैं शोभन पुत्र-पौत्र आदि से युक्त बनूँ।

अथदशमी—

उतत्यामेहवमाजग्म्यातंनासत्याधीभिर्युवमङ्गविप्रा ।
अत्रिंनमहस्तमसोमुमुक्तंतूर्वतंनरादुरितादभीके ॥ १० ॥ ९ ॥

उत । त्या । मे । हवम् । आ । जग्म्यातम् । नासत्या । धीभिः ।
युवम् । अङ्ग । विप्रा । अत्रिम् । न । महः । तमसः । अमुमुक्तम् ।
तूर्वतम् । नरा । दुःऽइतात् । अभीके ॥ १० ॥ ९ ॥

उतअपिच हेविप्रा प्राज्ञौ नासत्या सत्यस्वभावौ सत्यस्यनेतारौवा हे अश्विनौ त्यावौमस्मिद्धौयुवंयुवांधीभिःपरिचरणकैःकर्मभिरुपेतं मेमदीयंहवंस्तोत्रंअंग क्षिप्रं आजग्म्यातं आगच्छतं आगत्यच महोमहतस्तमसःअसुरकृतादंधकाराद् अत्रिं न यथात्रिमृषिंअमुमुक्तं मोचितवन्तौस्थः हेनरानेतारावश्विनौ तथास्मानपिअभीकेअभ्यक्ते प्राप्तेसंग्रामेदुरिताद्दुःखावशनुकृतात्युवंतंअस्मांस्तारयतं ॥ १० ॥

१०. हे प्राज्ञ अश्विनीकुमारो, तुम शीघ्र परिचर्यावाले मेरे स्तोत्र के पास आओ। जैसे अन्धकार से तुमने अत्रि ऋषि को छुड़ाया था, वैसे ही हमें भी छुड़ाओ। नेतृद्वय तुम हमें युद्ध-दुःख से बचाओ।

॥ इतिचतुर्थस्याष्टमेनवमोवर्गः ॥ ९ ॥

अथैकादशी—

तेनो॑रा॒यो॑द्यु॒मतो॒वाज॑वतोदा॒तारो॑भूतनृ॒वत॑ःपुरु॒क्षोः।
द॒श॒स्यन्तो॑दि॒व्याःपार्थि॑वासो॒गोजा॑ता॒अप्या॑मृ॒ळता॑चदे॒वाः ॥ ११ ॥

ते। नः॒। रा॒यः। द्यु॒ऽमत॑ः। वाज॑ऽवतः। दा॒तार॑ः। भू॒त।
नृ॒ऽवत॑ः। पु॒रु॒ऽक्षोः। द॒श॒स्यन्त॑ः। दि॒व्याः। पार्थि॑वासः।
गोऽजा॑ताः। अप्या॑ः। मृ॒ळत॑। च॒। दे॒वाः॒ ॥ ११ ॥

हेदेवास्तेयूयंद्युमतोदीप्तिमतः वाजवतोबलयुक्तस्यनृवतःनृभिःपुत्रादिभिरुपेतस्य पुरुक्षोःबहुभिःकीर्तनीयस्य रायोधनस्यनोस्मभ्यंदातारोभूतभवत अपिच दशस्यन्तः कामान्प्रयच्छन्तः दिव्याःदिविभवाआदित्याः पार्थिवासः पृथिव्यांभवावसवः गोजाताःगौःपृश्निर्माध्यमिकावाक्तस्याः उत्पन्नामरुतः अप्याःअप्सुअन्तरिक्षेभवाःरुद्राश्च तेसर्वेयूयंअस्मान्मृळत सुखयत ॥ ११ ॥

११. देवो, तुम हमें दीप्ति-युक्त, बलकारी, पुत्रादि-सम्पन्न और सुप्रसिद्ध धन प्रदान करो। स्वर्गीय (आदित्यगण), पार्थिव (वसुगण), गोजात (पृश्नि-पुत्र मरुद्गण) और जलजात (रुद्रगण), हमारे मनोरथ को पूर्ण कर सुखी करो।

तेनो॑रु॒द्रःसर॑स्वतीस॒जोषा॑मी॒ळ्हुष्म॑न्तो॒विष्णु॑र्मृळन्तुवा॒युः।
ऋ॒भु॒क्षावाजो॒दैव्यो॑विधा॒तापर्जन्या॒वाता॑पिप्यता॒मिषं॑नः ॥ १२ ॥

ते। नः॒। रु॒द्रः। सर॑स्वती। स॒ऽजोषा॑ः। मी॒ळ्हुष्म॑न्तः। विष्णु॑ः।
मृ॒ळन्तु॒। वा॒युः। ऋ॒भु॒क्षाः। वाज॑ः। दैव्य॑ः। वि॒ऽधा॒ता।
प॒र्जन्या॒वाता॑। पि॒प्य॒ता॒म्। इष॑म्। नः॒ ॥ १२ ॥

मीळ्हुष्मन्तोवर्षणवन्तः तेदेवाः नोस्मान्मृळन्तुमृळयन्तुसुखयन्तु केतेइतिचेदुच्यते—रुद्रःसरस्वतीचसजोषाः सहप्रीयमाणाः विष्णुर्वायुश्चऋभुक्षाः ऋभुर्विभ्वावाजइतित्रयःसौधन्वनाः तेषामाद्यः ऋभुश्चवाजोन्तिमश्चउपलक्षणमेतत् विभ्वाचदैव्योदेवेभ्योहितः विधाताप्रजापतिश्च अपिचपर्जन्यावातापर्जन्यश्चवायुश्चउभौ नोस्मभ्यमिषमन्नंपिप्यतांवर्धयतां ॥ १२ ॥

१२. रुद्र, सरस्वती, विष्णु, वायु, ऋभुक्षा, वाज और विधाता-समान-रूप से प्रसन्न होकर हमें सुखी करें। पर्जन्य और वायु हमारे अन्न को बढ़ावें। अथत्रयोदशी—

उतस्यदेवःसंविताभगोंनोपांनपादवतुदानुपप्रिः ।
त्वष्टादेवेभिर्जनिभिःसजोषाद्यौर्देवेभिःपृथिवीसंमुद्रैः ॥ १३ ॥

उत । स्यः । देवः । सविता । भगः । नः । अपाम् । नपात् ।
अवतु । दानु । पप्रिः । त्वष्टा । देवेभिः । जनिऽभिः । सऽजोषाः ।
द्यौः । देवेभिः । पृथिवी । समुद्रैः ॥ १३ ॥

उतापिच स्यः सः यःप्रेरकतयासर्वत्रप्रख्यातः ससवितादेवःभगश्चअपांनपाच्चअपामेघस्थानांपुत्रोमाध्यमिकोग्निः सचनोस्मानरक्षतु कीदृशोपांनपात् दानु दातव्यंधनंपप्रिःप्रातापूरयिता प्रापूरणइत्यस्माद्दादृगमहनइतिकिनोलिङ्वद्भावान्नलोकाव्ययेतिषष्ठीप्रतिषेधः तथादेवेभिर्देवैः जनिभिस्तत्पत्नीभिश्चसजोषाः सहप्रीतिस्त्वष्टाचदेवेभिर्देवैःसहप्रीयमाणा द्यौश्चसमुद्रैःसहप्रीयमाणा पृथिवीचएताश्चसर्वादेवताअस्मानवन्तु ॥ १३ ॥

१३. प्रसिद्ध देव सविता, भग और वारि-राशि के पौत्र दानशील अग्नि हमारी रक्षा करें। देवों और देव-स्त्रियों के साथ समान-रूप से प्रसन्न हुए त्वष्टा, देवों के साथ समान-प्रसन्न स्वर्ग तथा समुद्रों के साथ समान-प्रसन्न पृथिवी हमारी रक्षा करें।

आग्निमारुतेउतनोहिरित्येषा सूत्रितंच—उतनोहिर्बुध्न्यःशृणोतुदेवानांपत्नीरुशतीरवन्तुनइति। सैषासूक्तेचतुर्दशी—

उतनोहिर्बुध्न्यःशृणोत्वजएकंपात्पृथिवीसंमुद्रः ।
विश्वेदेवाऋंतावृधोहुवानाःस्तुतामन्त्राःकविशस्ताअंवन्तु ॥१४॥

उत । नः । अहिः । बुध्न्यः । शृणोतु । अजः । एकऽपात् ।
पृथिवी । समुद्रः । विश्वे । देवाः । ऋतऽवृधः । हुवानाः । स्तुताः ।
मन्त्राः । कविऽशस्ताः । अवन्तु ॥ १४ ॥

उतअपिचअहिर्बुध्न्योनोस्माकंस्तोत्रंश्रृणोतु अजोजन्मरहितःएकःअसहायएवपद्यतेगच्छतीत्येकपात्एतत्पदद्वयाभिधेयोदेवश्चपृथिवीसमुद्रश्चअस्मदीयंस्तोत्रंश्रृणोतु अपिच ऋतावृधःऋतस्ययज्ञस्यसत्यस्यवावर्धयितारः हुवानाः अस्माभिराहूयमानाः पूर्वैःऋषिभिश्चस्तोत्रैःस्तुताः मंत्राःमंत्रणीयाःगुप्तंभाषितव्याः मंत्रप्रतिपाद्यावा कविशस्ताः कविभिर्मेधाविभिःऋषिभिःशस्त्रैःशंसिताईदृशाःविश्वेदेवाः अवन्त्वस्मान्रक्षन्तु ॥ १४ ॥

१४. अहिर्बुध्न, अज-एक-पाद, पृथिवी और समुद्र हमारे स्तोत्र सुनें। यज्ञ के समृद्धिकर्त्ता, हमारे द्वारा, आहूत और स्तुत, मन्त्र-प्रतिपाद्य और मेधावी ऋषियों-द्वारा स्तूयमान विश्वदेवगण हमारी रक्षा करें।

अथपंचदशी—

एवानपातोममतस्यधीभिर्भरद्वाजाअभ्यर्चन्त्यर्कैः।
ग्नाहुतासोवसवोधृष्टाविश्वेस्तुतासोभूतायजत्राः ॥ १५ ॥ १० ॥

एव । नपातः । मम । तस्य । धीभिः । भरत्ऽवाजाः । अभि ।
अर्चन्ति । अर्कैः । ग्नाः । हुतासः । वसवः । अधृष्टाः । विश्वे ।
स्तुतासः । भूत । यजत्राः ॥ १५ ॥ १० ॥

एवएवं योहंदेवान्स्तुतवान् तस्यममऋजिश्वनोनपातःपुत्राःभरद्वाजाः भरद्वाजगोत्रजाः सुहोत्रादयःधीभिःस्तोत्रैरर्कैरर्चनसाधनैरभ्यर्चन्ति अभिष्टुवन्ति हेयजत्राः यष्टव्यादेवाहुतासःपुरोडाशादिभिर्हविर्भिर्हुताःतर्पिताः वसवोनिवासयितारःअधृष्टाःकैरप्यहिंसिताः एवंभूताःविश्वेतेसर्वेयूयंग्नाः देवपत्न्यश्च स्तुतासोभूत तैःसुहोत्रादिभिःस्तुताभवत ॥ १५ ॥

१५. भरद्वाज-गोत्रीय मेरे पुत्र इसी प्रकार के पूजा-साधक स्तोत्र-द्वारा देवों की स्तुति करते हैं। यज्ञार्ह देवो, तुम हव्य-द्वारा हुत, गृहदाता और अजेय हो। तुम देव-पत्नियों के साथ नियत पूजित होते हो।

॥ इतिचतुर्थस्याष्टमेदशमोवर्गः ॥ १० ॥

उदुत्यदितिषोडशर्चंद्वितीयंसूक्तंऋजिश्वनआर्षंवैश्वदेवं त्रयोदश्याद्यास्तिस्रउष्णिहःषोळश्यनुष्टुप् शिष्टास्त्रिष्टुभः तथाचानुक्रान्तं—उदुत्यतषोळशन्त्युष्णिगनुष्टुबन्तमिति । गतःसूक्तविनियोगः ।

तत्रप्रथमा—

उदुत्यच्चक्षुर्महिमित्रयोराँएतिप्रियंवरुणयोरदब्धम ।
ऋतस्यशुचिदर्शतमनीकंरुक्मोनदिवउदिताव्यद्यौत् ॥ १ ॥

उत् । ऊँ इति । त्यत् । चक्षुः । महि । मित्रयोः । आ । एति ।
प्रियम् । वरुणयोः । अदब्धम् । ऋतस्य । शुचि । दर्शतम् ।
अनीकम् । रुक्मः । न । दिवः । उत्ऽइता । वि । अद्यौत् ॥ १ ॥

त्यत् तत्प्रसिद्धंचक्षुः प्रकाशकंमहिमहद्विस्तृतंमित्रयोर्वरुणयोःप्रियं मित्रशब्दोवरुणशब्द-श्चेतरेतरयोगान्मित्रावरुणावुभावप्याचष्टेमित्रावरुणयोरतिप्रियंअदब्धंरक्षोभिरहिंसितं शुचिशुद्धं निर्मलं दर्शतंदर्शनीयं एवंभूतंऋतस्यादित्यस्यअनीकंतेजः आसवैंषामभिमुखं उदेति उद्गच्छति उदिताउदितौसूर्यस्योदयेसतिउदितंतत्तेजःदिवोन्तरिक्षस्यरुक्मोन भूषणमिवव्यद्यौत् विद्यो-ततेप्रकाशते ॥ १ ॥

१. सूर्य की प्रसिद्ध, प्रकाशक, विस्तृत तथा मित्र और वरुण की प्रिय, अप्रतिहत, निर्मल और मनोहर दीप्ति प्रकाशित होकर अन्तरिक्ष में भूषण की तरह शोभा पा रही है।

वेद॒यस्त्रीणि॑वि॒दथा॑न्येषां॑दे॒वानां॒जन्म॑सनु॒तरा॒च॒विप्रः॑ ।
ऋ॒जुमर्ते॑षुवृजि॒ना॒च॒पश्य॑न्न॒भिच॑ष्टे॒सूरो॑अ॒र्यए॑वा॑न् ॥ २ ॥

वेद॑ । यः । त्रीणि॑ । वि॒दथा॑नि । ए॒षा॒म् । दे॒वाना॑म् । जन्म॑ । स॒नु॒तः । आ । च॒ । विप्रः॑ । ऋ॒जु । मर्ते॑षु । वृ॒जि॒ना । च॒ । पश्य॑न् । अ॒भिः । च॒ष्टे॒ । सूरः॑ । अ॒र्यः । एवा॑न् ॥ २ ॥

यःसूर्यः त्रीणित्रिसंख्यानि विदथानिवेदितव्यानिस्थानानि त्रीन्लोकानवेदवेत्तिजाना-ति एषांएतल्लोकत्रयवर्तिनांदेवानांवसुरुद्रादित्यात्मकानां सनुतरंतर्हितनामैतत् अन्तर्हितं अप्रज्ञायमानं जन्मजननंचयोविप्रोमेधावीसूर्योवेत्ति आकारःपूरकः ससूरःसूर्यः मर्तेषुमनु-ष्येषुविद्यमानानिऋजुऋजूनिशोभनानिकर्माणिवृजिनावृजिनानिअशोभनानिकर्माणिच पश्य-न्साक्षितयाजानन्अभिचष्टे अभितःसर्वंजगत्प्रकाशयति तथाअर्यःस्वामीभूत्वाएवान् प्राप्तव्या-न् कामांश्चमनुष्येषुप्रकाशयति ॥ २ ॥

२. जो तीनों ज्ञातव्य भुवनों को जानते हैं, जो ज्ञानशाली हैं और देवों के दुर्ज्ञेय जन्म को जानते हैं, वही सूर्य मनुष्यों के सत् और असत् कर्मों का परिदर्शन करते हैं और स्वामी होकर मानवों के अनुकूल मनो-रथ को पूर्ण करते हैं। अथतृतीया—

स्तु॒षउ॑वोम॒हऋ॒तस्य॑गो॒पानदि॑तिंमि॒त्रंवरु॑णंसु॒जा॒तान् ।
अ॒र्य॒मणं॒भग॒मद॑ब्धधीती॒नच्छा॑वोचेसध॒न्यः॑पाव॒कान् ॥ ३ ॥

स्तु॒षे । ॐ इति॑ । व॒ः । म॒हः । ऋ॒तस्य॑ । गो॒पान् । अदि॑तिम् । मि॒त्रम् । वरु॑णम् । सु॒ऽजा॒तान् । अ॒र्य॒मण॑म् । भग॑म् । अद॑ब्धऽधीतीन् । अच्छ॑ । वो॒चे॒ । स॒ऽध॒न्यः॑ । पा॒व॒कान् ॥ ३ ॥

हेदेवाः महोमहतऋतस्ययज्ञस्यगोपान्रक्षकान्वोयुष्मानस्तुषेस्तुवे उइतिपूरणः तानेवदेवानाह—अदितिमदीनांदेवमातरंमित्रंवरुणंचएतान् सुजातान् शोभनजननान् अर्यमणंभगंचअदब्धधीतीन् अहिंसितकर्मणः सधन्यःधनसहितान्पावकान् विश्वस्यशोधकान् इंद्रशान्सर्वान्देवान्अच्छवोचे अभिप्रब्रवीमीत्यर्थः ॥ ३ ॥

३. मैं यज्ञ-रक्षक और शोभन-जन्मा अदिति, मित्र, वरुण, अर्यमा और भग की स्तुति करता हूँ। जिनके कार्य अप्रतिहत हैं, जो धनशाली और संसार को पवित्र करनेवाले हैं, उनके यश का मैं कीर्तन करता हूँ।

रि॒शाद॑सः॒सत्प॑तीँ॒रद॑ब्धान्म॒होराज्ञः॑सु व॒स॒नस्य॑दा॒तॄन् ।
यून॑ःसु॒क्ष॒त्रान्क्षय॑तोदि॒वोनॄना॑दि॒त्यान्या॒म्यादि॑तिं॒दु॒वो॒यु ॥ ४ ॥

रि॒शाद॑सः । सत्ऽप॑तीन् । अद॑ब्धान् । म॒हः । राज्ञः॑ । सु॒ऽव॒स॒नस्य॑ । दा॒तॄन् । यून॑ः । सु॒ऽक्ष॒त्रान् । क्षय॑तः । दि॒वः । नॄन् । आ॒दि॒त्यान् । या॒मि॒ । अदि॑तिम् । दु॒वः॒ऽयु ॥ ४ ॥

रिशादसः रिशतांहिंसकानांअसितॄन् क्षेप्तॄन् यद्वा रिशानांहिंसकानांअत्तॄन्भक्षयितॄन् सत्पतीन् सतांपालयितॄन् अदब्धानहिंसितान् महोमहतः राज्ञोराजमानानईश्वरान्त्रासुवसनस्य शोभननिवासस्यदातॄन् यूनोनित्यतरुणान् सुक्षत्रान् शोभनधनान्शोभनबलान्वा क्षयतःसर्वत्र निवसतः यद्वा क्षयतिरैश्वर्यकर्मा ईशानान्दिवोद्युलोकस्यनॄन्नेतॄन् आदित्यान् अदितेः पुत्रान् इंद्रशान्सर्वान्देवान्दुवोयु लुप्तविभक्तिकमेतत् दुवोयुंदुवोस्मदीयंपरिचरणंकामयमानांअदितिंदेवमातरंच यामि प्राप्नोमि यद्वा यामियाचामि ॥ ४ ॥

४. हे हिंसकों को फेंकनेवाले, साधुओं के पालक, अबाध-प्रभाव, शक्तिमान् अधीश्वर, शोभन-गृह-दाता, नित्य तरुण, अतीव ऐश्वर्यशाली स्वर्ग के नेता अदिति-पुत्रो, मैं अदिति की शरण लेता हूँ; क्योंकि वह मेरी परिचर्या चाहती है।

अथपंचमी—

द्यौ३॑ष्पित॒ःपृथि॑वि॒मात॒रध्रु॒गग्ने॑भ्रातर्वसवोमृ॒ळता॑नः ।
विश्व॑आदित्याअदिते॒स॒जोषा॑अ॒स्मभ्यं॒शर्म॑बहु॒लंवि॑यन्त ॥५॥११॥

द्यौः॑ । पित॒रिति॑ । पृथि॑वि । मात॑ः । अध्रु॑क् । अग्ने॑ । भ्रा॒तः॒ । वस॒वः॒ । मृ॒ळत॑ । न॒ः । विश्वे॑ । आ॒दि॒त्या॒ः । अ॒दि॒ते॒ । स॒ऽजोषा॑ः । अ॒स्मभ्य॑म् । शर्म॑ । ब॒हु॒लम् । वि । य॒न्त॒ ॥ ५ ॥ ११ ॥

हेपितः पितृस्थानीयद्यौःद्युलोकहेमातः मातृस्थानीयेअध्रुगद्रोग्धि पृथिवि हेभ्रातःभ्रातृस्थानीयाग्ने हेवसवोवासयितारोदेवाः तेसर्वेयूयंनोस्मान्मृळतसुखयत हेविश्वआदित्याःसर्वे-

अदितिपुत्रादेवाः हेअदिते यूयंसजोषाः संगताभूत्वाअस्मभ्यंवहुलंअधिकंशर्मसुखं विस्तृतंवा-गृहंवियन्तमयच्छत ॥ ५ ॥

५. हे पिता स्वर्ग, माता पृथिवी, भ्राता अग्नि और वसुओ, तुम हमें सुखी करो। हे अदिति के पुत्रो और अदिति, इकट्ठे होकर तुम हमें अधिक सुख दो।

॥ इतिचतुर्थस्याष्टमेएकादशोवर्गः ॥ ११ ॥

मानोवृकायवृक्यैसमस्माअघायतेरीरधतायजत्राः।
यूयंहिष्ठारथ्योनस्तनूनांयूयंदक्षस्यवचसोबभूव ॥ ६ ॥

मा। नः। वृकाय। वृक्यै। समस्मै। अघऽयते। रीरधत।
यजत्राः। यूयम्। हि। स्थ। रथ्यः। नः। तनूनाम्। यूयम्।
दक्षस्य। वचसः। बभूव ॥ ६ ॥

हेयजत्रायष्टव्यादेवाः नोस्मान्वृकायहिंसकायस्तेनायवृक्येतस्यस्त्रियैचमारीरधत मावशंनैष्ट मावशीकुरुत यद्वा वृकःअरण्यश्वा तस्यस्त्रीवृकी अपिचसमस्मैसर्वस्मैअघायतेअघमनर्थमस्माकमिच्छते शत्रुजनायअस्मान्मावशंनयत यूयंहियूयंखलु नोस्माकंतनूनांशरीराणांरथ्योनेतारःस्थ भवथ यूयमेवदक्षस्यास्मदीयस्यवलस्यवचसोवाक्यस्यचनेतारोबभूव अतःकारणात्अस्मान्मारीरधतेत्यन्वयः ॥ ६ ॥

६. यागयोग्य देवो, तुम हमें वृक और वृकी (अरण्य-कुक्कुर और कुक्करी अथवा दस्यु और उसकी पत्नी) के हाथ में नहीं जाने देना। तुम हमारी देह, बल और वाक्य के संचालक हो।

अथसप्तमी—

मावएनोअन्यकृतंभुजेममातत्कर्मवसवोयच्चयध्वे।
विश्वस्यहिक्षयथविश्वदेवाःस्वयंरिपुस्तन्वंरीरिषीष्ट ॥ ७ ॥

मा। वः। एनः। अन्यऽकृतम्। भुजेम। मा। तत्। कर्म।
वसवः। यत्। चयध्वे। विश्वस्य। हि। क्षयथ। विश्वऽदेवाः।
स्वयम्। रिपुः। तन्वम्। रिरिषीष्ट ॥ ७ ॥

हेदेवाः वोयुष्माकंस्वभूतावयंअन्यकृतंअन्यैःशत्रुभिःकृतमुत्पादितं एनःपापं माभुजेम माभुक्ष्महि हेवसवोवासयितारोदेवाः यत्येनकृतेनपापेन चयध्वेअस्मान्बाधध्वे चयतिर्हिंसाकर्मा तच्चपापंकर्म माकार्ष्म करोतेर्माङिलुङिमंत्रेघसेतिच्लेर्लुक् हेविश्वेदेवाः सर्वेदेवाः विश्व-

स्यसर्वस्यजगतोयूयंहिक्षयथ ईश्वराभवथ अतःकारणात्अस्मदीयोरिपुःशत्रुः तन्वंस्वशरीरं स्वयमेवरिरिषीष्ट हिंस्यात् यथैवंभवतितथाकुरुतेतिभावः ॥ ७ ॥

७. देवो, हम तुम्हारे ही हैं। हम दूसरे के पापी क्लेश का अनुभव न करें। वसुओ, जिसका तुम निषेध करते हो, उसका अनुष्ठान हम न करें। विश्वदेवगण, तुम विश्व के अधिपति हो; इसलिए ऐसा उपाय करो कि शत्रु अपनी देह का अनिष्ट कर डाले।

नमइदुग्रंनमआविवासेनमोदाधारपृथिवीमुतद्याम्।
नमोदेवेभ्योनमईशएषांकृतंचिदेनोनमसाविवासे ॥ ८ ॥

नमः। इत्। उग्रम्। नमः। आ। विवासे। नमः। दाधार। पृथिवीम्।
उत। द्याम्। नमः। देवेभ्यः। नमः। ईशे। एषाम्। कृतम्।
चित्। एनः। नमसा। आ। विवासे ॥ ८ ॥

आस्तांतावद्देवानांमाहात्म्यं तदीयोनमस्कारोपिइत्थंमहाभागइतिब्रुवाणः कैमुतिकन्यायेनदेवान्स्तौति—नमइत्नमस्कारएवउग्रमुद्गूर्णबलंसर्वोत्कृष्टंतेनहिसर्वंलभ्यते अतोनमःनमस्कारं आविवासे परिचरामि नमःनमस्कारएव पृथिवींउतद्यांद्युलोकंचदाधार धारयति द्यावापृथिव्यौप्राणिभिर्नमस्क्रियमाणे सत्यौ तदुपभोगायचिरकालमवतिष्ठेते अतोदेवेभ्यइदंशंनमस्करोमि एषांदेवानांनमोनमस्कारः ईशेईष्टे यतस्तेनतेवशीकृताः कृतंचित्कृतमपिआचरितमप्येनः पापंनमसानमस्कारेणआविवासे विवासोवर्जनं वर्जयामि विनाशयामि ॥ ८ ॥

८. नमस्कार सबसे बड़ी वस्तु है; इसलिए मैं नमस्कार करता हूँ। नमस्कार ही स्वर्ग और पृथिवी को धारण करता है; इसलिए मैं देवों को नमस्कार करता हूँ। देवता लोग नमस्कार के वशीभूत हैं; इसलिए मैं नमस्कार-द्वारा किये हुए पापों का प्रायश्चित्त करता हूँ।

ऋतस्यवोरथ्यःपूतदक्षानृतस्यपस्त्यसदोअदब्धान्।
ताँआनमोभिरुरुचक्षसोनॄन्विश्वान्वआनमेमहोयजत्राः ॥ ९ ॥

ऋतस्य। वः। रथ्यः। पूतऽदक्षान्। ऋतस्य। पस्त्यऽसदः।
अदब्धान्। तान्। आ। नमःऽभिः। उरुऽचक्षसः। नॄन्।
विश्वान्। वः। आ। नमे। महः। यजत्राः ॥ ९ ॥

हेयजत्रायष्टव्यादेवाः वोयुष्मदीयस्यऋतस्ययज्ञस्यरथ्योरंहितॄन् नेतॄन्पूतदक्षान्शुद्धबलान् ऋतस्ययज्ञस्यपस्त्यसदः यज्ञसंबन्धिनिपस्त्येदेवयजनलक्षणेगृहेसीदतोनिषण्णान् अदब्धान्रक्षःप्रभृतिभिरहिंसितान् उरुचक्षसोबहुद्रष्टॄन्नॄन्नेतॄन् महोमहतःतान्विश्वान्सर्वान्वोयुष्मान् आ-आभिमुख्येन क्रियमाणैर्नमोभिर्नमस्कारैःआनमे आनतोस्मि ॥ ९ ॥

९. यज्ञ-पाल देवो, मैं नमस्कार के साथ तुम लोगों के पास प्रणत हो रहा हूँ; क्योंकि तुम यज्ञ के नेता, विशुद्ध बल से युक्त, देव-यजन-गृह के निवासी, अजेय, बहुदर्शी, अधिनायक और महान् हो।

तेहिश्रेष्ठंवर्चसस्तउनस्तिरोविश्वानिदुरितानयन्ति ।
सुक्षत्रासोवरुणोमित्रोअग्निर्ऋतधीतयोवक्मराजसत्याः ॥१०॥१२॥

ते । हि । श्रेष्ठऽवर्चसः । ते । ऊँ इति । नः । तिरः । विश्वानि ।
दुःऽइता । नयन्ति । सुऽक्षत्रासः । वरुणः । मित्रः । अग्निः ।
ऋतऽधीतयः । वक्मराजऽसत्याः । १० ॥ १२ ॥

येदेवाःवक्ष्यमाणगुणाः तेहितेखलु श्रेष्ठवर्चसः प्रशस्यतमदीप्तयोभवन्ति अतः तउतएव-नोस्माकंविश्वानिसर्वाणिदुरितापापानि तिरःतिरोहितानियथाभवन्तितथानयन्ति नयन्तु विनाशयन्त्वित्यर्थः येवरुणादयोदेवाः सुक्षत्रासः शोभनबलाःशोभनधनावाऋतधीतयः सत्यकर्माणः वक्मराजसत्याः वक्मवचनंस्तोत्रं तस्यराजानःईशानावक्मराजानः स्तोतारः तेषुसत्याःअवितथाः एवंभूतास्तेहीत्यन्वयः ॥ १० ॥

१०. वे अच्छी तरह से दीप्ति-सम्पन्न हैं। वे ही हमारे सारे पापों का नाश करें। वरुण, मित्र और अग्नि शोभन बलवाले, सत्यकर्मा और स्तोत्र-निरत व्यक्तियों के एकान्त पक्षपाती हैं।

॥ इतिचतुर्थस्याष्टमेद्वादशोवर्गः ॥१२ ॥

तेनइन्द्रःपृथिवीक्षामवर्धन्पूषाभगोअदितिःपञ्चजनाः ।
सुशर्माणःस्ववसःसुनीथाभवन्तुनःसुत्रात्रासःसुगोपाः ॥ ११ ॥

ते । नः । इन्द्रः । पृथिवी । क्षाम । वर्धन् । पूषा । भगः ।
अदितिः । पञ्च । जनाः । सुऽशर्माणः । सुऽअवसः । सुऽनीथाः ।
भवन्तु । नः । सुऽत्रात्रासः । सुऽगोपाः ॥ ११ ॥

तेदेवानोस्माकंक्षामनिवासभूमिंवर्धन्वर्धयन्तु केते इन्द्रः पृथिवीच पूषाचभगश्च अदितिरदीनादेवमाताच पंचजनादेवमनुष्याणांगंधर्वाप्सरसामित्यादिर्नाल्लणोक्तादेवमनुष्यादयश्चतेचनोस्मदर्थंसुशर्माणः सुसुखाःस्ववसः शोभनान्नाः सुनीथाः सुप्रापणाश्चभवन्तु अस्मभ्यंशोभनसुखादिकंप्रयच्छन्त्वितिभावः तथासुत्रात्रासः सुष्ठुत्रातारः सुगोपाः शोभनगोपायितारश्चभवन्तु उपस्थितेभ्यः शत्रुभ्योरक्षणंत्राणं तेषांउत्पत्तिनिरोधेन रक्षणंगोपनं ॥ ११ ॥

११. इन्द्र, पृथिवी, पूषा, भग, अदिति और पञ्चजन (देव, गन्धर्व आदि) हमारी वास-भूमि को वर्द्धित करें। वे हमारे सुखदाता, अन्नदाता, सत्पथ-प्रदर्शक, शोभन रक्षा करनेवाले और आश्रयदाता हों।

१ ऐ० ब्रा० ३. ३१.

अथद्वादशी—

नूसद्मानंदिव्यंनंशिदेवाभारद्वाजःसुमतिंयातिहोता ।
आसानेभिर्यजमानोमियेधैर्देवानांजन्मवसूयुर्ववन्द ॥ १२ ॥

नु । सद्मानम् । दिव्यम् । नंशि । देवाः । भारत्ऽवाजः । सुऽमतिम् । याति । होता । आसानेभिः । यजमानः । मियेधैः । देवानाम् । जन्म । वसुऽयुः । ववन्द ॥ १२ ॥

अनयाऋषिरात्मानंपरोक्षवदाह—हेदेवाः भारद्वाजःभरद्वाजगोत्रजः होतास्तोतायमृषिः दिव्यंदिविभवंसद्मानंसदनंस्थानंनुक्षिप्रंनंशि व्याप्नोतु तथासुमतिंशोभनांमतिंयुष्मदीयामनुग्रहबुद्धिंच यातियाचते यातिर्याञ्चाकर्मा तदर्थंआसानेभिः आसीनैः सत्रासनंकुर्वद्भिः मियेधैर्मेध्यैर्मेधार्हैः अन्ययजमानैः सार्धं यजमानःयागंकुर्वन्नयमृषिः वसूयुर्वसूनिधनान्यात्मनइच्छन्देवानांजन्मजननंसंघंववंदवंदते स्तौति ॥ १२ ॥

१२. देवो, भरद्वाज-गोत्रीय यह स्तोता शीघ्र ही एक स्वर्गीय निवास (या दीप्तिमान् गृह) प्राप्त करे; क्योंकि वह तुम्हारी कृपा चाहता है। हव्यदाता ऋषि, अन्य यजमानों के साथ, धनार्थी होकर देवों की स्तुति करते हैं।

दशरात्रस्यचतुर्थेहनिप्रउगशस्त्रेअपत्यंवृजिनमित्येषवैश्वदेवस्तृचः सूत्रितंच—अपत्यंवृजिनंरिपुमंबितमेनदीतमइत्यानुष्टुभंप्रउगमिति ।

तृचेप्रथमासूक्तेत्रयोदशी—

अपत्यंवृजिनंरिपुंस्तेनमग्नेदुराध्यम् ।
दविष्ठमस्यसत्पतेकृधीसुगम् ॥ १३ ॥

अप । त्यम् । वृजिनम् । रिपुम् । स्तेनम् । अग्ने । दुःऽआध्यम् । दविष्ठम् । अस्य । सत्ऽपते । कृधि । सुऽगम् ॥ १३ ॥

हेअग्ने त्वंत्यंतंप्रसिद्धंवृजिनंकुटिलंरिपुंपापकारिणं दुराध्यं दुःखस्याध्यातारंदुष्टाभिप्रायं एवंभूतंस्तेनंहिंसकंदविष्ठंदूरतमं अपास्य अपक्षिप असुक्षेपणइतिधातुः हेसत्पते सतांपालयितरग्ने अस्माकंसुगंशोभनेनगंतव्यंसुखंकृधि कुरु अत्रसर्वदेवात्मकस्याग्नेःस्तवनाद्वैश्वदेवत्वं ॥ १३ ॥

१३. अग्नि, तुम कुटिल, पापी और दुष्ट शत्रु को दूर करो। हे साधुओं के रक्षक, हमें सुख दो।

अथचतुर्दशी—

ग्रावाणःसोमनोहिकंसखित्वनायवावशुः ।
जहीन्य१त्रिणंपणिंवृकोहिषः ॥ १४ ॥

ग्रावा॑णः । सोमा॑ नः । हि । कम् । स॒खि॒ऽत्व॒नाय॑ । वा॒व॒शुः । ज॒हि ।
नि । अ॒त्रिण॑म् । प॒णिम् । वृकः॑ । हि । सः ॥ १४ ॥

हेसोम नोस्मदीयाइमेग्रावाणःअभिषवार्थाःपाषाणाः तवसखित्वनायसख्यार्थंवावशुः काम-यन्ते कमितिपूरकः हियस्मादर्थे यस्मादेवंतस्मात्त्वंपणिंवणिजमदातारं अत्रिणं अदनशीलं रा-क्षसादिकंनिजहि विनाशय सपणिर्वृकोहि आदानपरःखलुसर्वदास्मत्तोपहरणशीलः अतस्त्वंज-हात्यर्थः वृकआदानइतिधातुः ॥ १४ ॥

१४. हे सोम, हमारे ये अभिषव पोषण तुम्हारी मित्रता चाहते हैं। तुम भोजन-निपुण पणि का संहार करो; क्योंकि वह वास्तविक दस्यु है।

यू॒यंहिष्ठासु॑दानव॒इन्द्र॑ज्येष्ठाअ॒भिद्य॑वः ।
कर्ता॑नोअध्व॒न्नासु॒गंगो॒पाअ॒मा ॥ १५ ॥

यूयम् । हि । स्थ । सु॒ऽदा॒न॒वः॒ । इन्द्र॑ऽज्येष्ठाः । अ॒भि॒ऽद्य॑वः । कर्त॑ ।
नः॒ । अध्व॑न् । आ । सु॒ऽगम् । गो॒पाः । अ॒मा ॥ १५ ॥

हेसुदानवः शोभनदानादेवाः यूयंहिष्ठ यूयंखलुप्रभवथ समृद्धाःस्थ इन्द्रज्येष्ठाः इन्द्रःज्ये-ष्ठःमुख्योयेषांते अभिद्यवःअभिगतदीप्तयः तेयूयं अध्वन्अध्वनिमार्गेनोस्माकं अमासहैवगोपाः गोपायितारोरक्षितारःसन्तः सुगंसुखं आकारःसमुच्चये सुखंच कर्त कुरुत ॥ १५ ॥

१५. इन्द्रादि देवो, तुम दान-शील और दीप्ति-शाली हो। मार्ग में तुम हमारे रक्षक और सुख-दाता बनो।

प्रवासादागमनेअपिपंथामित्येषायजमानेनजप्या सूत्रितंच—अपिपंथामगन्महीतिप्रत्येत्य-समित्पाणिरिति ।

सैषासूक्तेषोडशी—

अपि॒पन्था॑मगन्महिस्वस्ति॒गाम॑ने॒हस॑म् ।
येन॒विश्वाः॒परि॒द्विषो॑वृ॒णक्ति॑वि॒न्दते॒वसु॑ ॥ १६ ॥ १३ ॥

अपि॑ । पन्था॑म् । अ॒ग॒न्म॒हि॒ । स्व॒स्ति॒ऽगाम् अ॒ने॒हस॑म् । येन॑ ।
विश्वाः॑ । परि॑ । द्विषः॑ । वृ॒णक्ति॑ । वि॒न्दते॑ । वसु॑ ॥ १६ ॥ १३ ॥

पंथांपंथानंमार्गंअप्यगन्महि अपिगताःप्राप्ताःस्मः कीदृशं स्वस्तिगां सुखेनगन्तव्यं अने-हसं पापरहितं येनपथागच्छन् विश्वाःसर्वाःद्विषोद्वेष्ट्रीःप्रजाः परिवृणक्ति परिवर्जयति बाधते वसुधनंचविंदते लभते तादृशंपंथानमित्यर्थः ॥ १६ ॥

१६. हम उस पवित्र और सरल मार्ग में आगये हैं, जिसमें जाने पर शत्रु का परिहार और धन का लाभ होता है।

॥ इतिचतुर्थस्याष्टमेत्रयोदशोवर्गः ॥ १३ ॥

नतद्दिवेतिसप्तदशर्चंतृतीयंसूक्तंऋजिश्वनआर्षंवैश्वदेवं आदितःषट्त्रिष्टुभः सप्तम्याद्याःष-ड्गायत्र्यः त्रयोदशीत्रिष्टुप् चतुर्दशीजगती शिष्टास्तिस्त्रस्त्रिष्टुभः तथाचानुक्रान्तं—नतदृत्र्यूना-सप्तम्याद्याःषङ्गायत्र्यश्चतुर्दशीजगतीति । गतोविनियोगः ।

तत्रप्रथमा—

नतद्दिवानपृथिव्यानुंमन्येनयज्ञेननोतशमींभिराभिः ।
उब्जन्तुतंसुभ्व१ःपर्वतासोनिहींयतामतियाजस्यंयष्टा ॥ १ ॥

न । तत् । दिवा । न । पृथिव्या । अनु । मन्ये । न । यज्ञेनं ।
न । उत । शमींभिः । आभिः । उब्जन्तुं । तम् । सुऽभ्वंः । पर्वतासः ।
नि । हीयताम् । अतिऽयाजस्यं । यष्टा ॥१॥

अतियाजोनामकश्चिदृषिरस्मादृजिश्वनःउत्कृष्टस्यामहमितिबुध्यादेवान्यियक्षुरासऋषि-स्तदीयंयजनंनिराचष्टाथया नतदतियाजस्यऋषेःतद्यजनंदिवाद्युलोकेनतत्रत्येनदेवगणेनयुक्त-मित्यहंनानुमन्ये नानुमतिंकरोमि नचपृथिव्यापार्थिवेनापिदेवगणेनयुक्तमितिनानुमन्ये नचयज्ञे-नमयानुष्ठितेनसदृशंतदित्यहंनानुमन्ये उतापिचआभिःशमीभिःअन्यैरपिमयाकृतैःएभिःकर्मभिः सदृशमित्यपिनानुमन्ये मयावशीकृतादेवास्तदीयंयजनंनांगीकुर्वन्तिसचानभिज्ञत्वात्सम्यग्यष्टु-मपिनशक्नोतीतिभावः अपिचतमृषिं सुभ्वःसुष्ठुभवन्तः पर्वतासः पर्वताः इन्द्रेणमहिताःसन्तः उब्जन्तुहिंसन्तु उब्जिर्हिंसाकर्मा तथातस्यातियाजस्यऋजिश्वनोप्यतिशयेनाहंदेवान्यजामी-तिबुध्यायुक्तस्यऋषेःयोयष्टायाजकःसनिहीयतां नितरांहीनोभवतु ॥१ ॥

१. मैं इसे (ऋजिश्वा के यज्ञ को) स्वर्गीय अथवा देवों के उपयुक्त नहीं समझता। यह मेरे द्वारा अनुष्ठित यज्ञ अथवा दूसरों द्वारा सम्पादित यज्ञ की तुलना करेगा, यह भी नहीं समझता। इसलिए सारे महान् पर्वत उसको (अतियाज ऋषि को) पीड़ित करें। अतियाज के ऋत्विक् भी अत्यन्त दीनता प्राप्त करें।

अथद्वितीया—

अतिवायोमंरुतोमन्यंतेनोब्रह्मंवायःक्रियमांणंनिनिंत्सात् ।
तपूंषितस्मैंवृजिनानिसन्तुब्रह्मद्विषंमभितंशोंचतुद्यौः ॥ २ ॥

अति । वा । यः । मरुतः । मन्यंते । नः । ब्रह्मं । वा । यः ।
क्रियमांणम् । निनिंत्सात् । तपूंषि । तस्मैं । वृजिनानि । सन्तु ।
ब्रह्मऽद्विषंम् । अभि । तम् । शोचतु । द्यौः ॥ २ ॥

हेमरुतः यःपुरुषोनोस्मानतिमन्यतेअतीत्यस्वस्याधिक्यंमन्यतेअस्मत्तोपिस्वयमधिकइति-बुध्यतेअस्माभिःक्रियमाणंब्रह्मस्तोत्रंवायोनिनित्सात् निन्दितुमिच्छेत्तस्मैपुरुषायतपूंषितेजांसि वृजिनानिबाधकानिसन्तुभवन्तुब्रह्मद्विषन्तंशत्रुंद्यौरादित्यश्चअभिशोचतुअभितपतुअभिदहतु॥२॥

२. मरुतो, जो व्यक्ति तुमको हमारी अपेक्षा श्रेष्ठ समझता है और मेरे किये स्तोत्र की निन्दा करता है, सारी शक्तियाँ उसका अनिष्टकारिणी बनें और स्वर्ग उस ब्राह्मण-द्वेषी को दग्ध करे ।

किमङ्गत्वाब्रह्मणःसोमगोपांकिमङ्गत्वाहुरभिशस्तिपांनः ।
किमङ्गनःपश्यसिनिद्यमानान्ब्रह्मद्विषेतपुषिंहेतिमस्य ॥ ३ ॥

किम् । अङ्ग । त्वा । ब्रह्मणः । सोम । गोपाम् । किम् । अङ्ग । त्वा । आहुः । अभिशस्तिऽपाम् । नः । किम् । अङ्ग । नः । पश्यसि । निद्यमानान् । ब्रह्मऽद्विषे । तपुषिम् । हेतिम् । अस्य ॥ ३ ॥

किमंगेतिप्रसिद्धद्योतकौनिपातौ हेसोम त्वात्वांखलुब्रह्मणोमंत्रस्यकर्मणोवाब्रह्मजातेर्वागोपांगोपायितारं आहुः कथयन्तिपुराविदः तथानोस्माकमभिशस्तिपां अभिशंसकेभ्यःपालयितारंत्वामेवखल्वाहुः यद्वाअंगेत्यभिमुखीकरणे अंग हेसोम किंकारणंत्वांब्रह्मणोगोपामाहुः किंकारणंत्वात्वांअस्माकमभिशस्तिपामाहुः निंद्यमानान्परैर्दूष्यमाणान्नोस्मान् अंगहेसोम किंकारणंपश्यसि त्वामेवसर्वेब्रह्मणोरक्षकंशत्रुभ्यःपालकंचकथयन्ति अतोस्मासुपरैर्निन्द्यमानेषु औदासीन्यंतवानुचितं अतोब्रह्मद्विषेब्राह्मणद्वेष्ट्रेतस्मैतपुषिंतापकं हेतिमायुधंअस्यक्षिपप्रेरय ॥ ३ ॥

३. सोम, लोग तुम्हें क्यों मन्त्र-रक्षक कहते हैं? और, क्यों तुम्हें निन्दा से हमें उद्धार करनेवाला बताया जाता है? शत्रुओं द्वारा हमारे निन्दित होने पर तुम क्यों निरपेक्ष भाव से देखते रहते हो? ब्राह्मण-विद्वेषी के प्रति अपना सन्तापक आयुध फेंको ।

अवन्तुमामुषसोजायमानाअवन्तुमासिन्धवःपिन्वमानाः ।
अवन्तुमापर्वतासोध्रुवासोवन्तुमापितरोदेवहूतौ ॥ ४ ॥

अवन्तु । माम् । उषसः । जायमानाः । अवन्तु । मा । सिन्धवः । पिन्वमानाः । अवन्तु । मा । पर्वतासः । ध्रुवासः । अवन्तु । मा । पितरः । देवऽहूतौ ॥ ४ ॥

जायमानाःप्रादुर्भवन्त्यउषसः मांअवन्तु रक्षंतु तथापिन्वमानाः वर्धमानाः सिन्धवः स्यन्दनशीलानद्यश्च मामामवन्तु तथाध्रुवासोनिश्चलाःपर्वतासःपर्वताश्च मामामवन्तु तथादेवहूतौदेवानांहूतिराह्वानमस्मिन्निितिदेवहूतिर्यागः तत्रविद्यमानाःपितरः पितृदेवताश्चमामामवन्तु ॥ ४ ॥

४. आविर्भूत उषायें मेरी रक्षा करें । सारी स्फीत नदियाँ मेरी रक्षा करें । निश्चल पर्वत मेरी रक्षा करें । देव-यजन-काल में यज्ञ में उपस्थित पितर और देवता मेरी रक्षा करें ।

विश्वदानींसुमनसःस्यामपश्येमनुसूर्यमुच्चरन्तम् ।
तथाकरद्वसुपतिर्वसूनांदेवाँओहानोवसागमिष्ठः ॥ ५ ॥ १४ ॥

विश्वऽदानीम् । सुऽमनसः । स्याम । पश्येम । नु । सूर्यम् ।
उत्ऽचरन्तम् । तथा । करत् । वसुऽपतिः । वसूनाम् । देवान् ।
ओहानः । अवसा । आऽगमिष्ठः ॥ ५ ॥ १४ ॥

हेदेवाः विश्वदानींसर्वदावयंसुमनसःस्याम शोभनमनस्काभवेम नुशब्दःसमुच्चये उच्चरन्तं उद्यन्तं सूर्यं सर्वदापश्येमच वसूनांवसुपतिः उत्कृष्टधनाधिपतिरग्निः देवानवसाअस्मदीयेनहविषाओहानोवहन् प्रापयन् आगमिष्ठः आगंतृतमः एवंगुणविशिष्टःसन् तथाकरत्अस्मान् तथाविधानुक्तप्रकारान्करोतु ॥ ५ ॥

५. हम सदा स्वतन्त्र-चित्त हों। हम सदा उदयोन्मुख सूर्य के दर्शन करें। देवों के पास हमारा हव्य ढोनेवाले यज्ञ के अधिष्ठाता और महैश्वर्यशाली अग्नि हमें उक्त प्रकार से बनावें।

॥ इतिचतुर्थस्याष्टमेचतुर्दशोवर्गः॥ १४ ॥

इन्द्रोनेदिष्ठमवसागमिष्ठःसरस्वतीसिन्धुभिःपिन्वमाना ।
पर्जन्योनओषधीभिर्मयोभुरग्निःसुशंसःसुहवःपितेव ॥ ६ ॥

इन्द्रः । नेदिष्ठम् । अवसा । आऽगमिष्ठः । सरस्वती । सिन्धुऽभिः ।
पिन्वमाना । पर्जन्यः । नः । ओषधीभिः । मयःऽभुः ।
अग्निः । सुऽशंसः । सुऽहवः । पिताऽइव ॥ ६ ॥

अयमिन्द्रोनेदिष्ठमन्तिकतमंयथाभवतितथा अवसारक्षणेनसार्धंआगमिष्ठः आगन्तृतमोस्तु सिंधुभिः स्यन्दनैरुदकैःपिन्वमाना वर्धमानानदीरूपासरस्वतीच आगन्तृतमाभवतु ओषधीभिःसार्धं पर्जन्यश्चनोस्माकं मयोभूः सुखस्यभावयिताभवतु अग्निश्चपितेवपुत्रस्यजनकइव सुशंसः सुखेनशंसनीयः सुहवःसुखेनाह्वातव्यश्चभवतु ॥ ६ ॥

६. इन्द्र और वारि-राशि के द्वारा स्फीत सरस्वती नदी, रक्षा के साथ, हमारे पास आवें। ओषधियों के साथ पर्जन्य हमारे लिए सुख-दाता हों। पिता की तरह अग्नि अनायास स्तुत्य और आह्वान-योग्य हों।

आग्रयणेवैश्वदेवस्यचरोःविश्वेदेवासआगतेत्यनुवाक्या सूत्रितंच—विश्वेदेवासआगतयेकेचज्मामहिनोअहिमायाइति ।

सैषासूक्तेसप्तमी—

विश्वेदेवासआगतशृणुतामइमंहवम् । एदंबर्हिर्निषीदत ॥ ७ ॥

विश्वे । देवासः । आ । गत । शृणुत । मे । इमम् । हवम् ।
आ । इदम् । बर्हिः । नि । सीदत ॥ ७ ॥

विश्वेदेवासः सर्वेदेवाः आगतआगच्छत आगत्यच मेमदीयंइमंहवंइदमाह्वानं श्रृणुत श्रुत्वाच इदमास्तीर्णं बर्हिरानिषीदत आस्तीर्णेबर्हिषिनिषण्णाभवत उपविशत ॥ ७ ॥

७. विश्वदेवगण, आओ, मेरे आह्वान को सुनो और बिछे हुए कुशों पर बैठो।

योवोदेवाघृतस्नुनाहव्येनप्रतिभूषति । तंविश्वउपगच्छथ ॥ ८ ॥

यः । वः । देवाः । घृतऽस्नुना । हव्येन । प्रतिऽभूषति ।
तम् । विश्वे । उप । गच्छथ ॥ ८ ॥

हेदेवाः वोयुष्मान्योजनः घृतस्नुना घृतप्रक्षरणेनहव्येनहविषाप्रतिभूषति परिचरति तंजनंविश्वेसर्वेयूयं उपगच्छथ उपगताभवथ ॥ ८ ॥

८. देवो, जो व्यक्ति घृत में मिले हव्य के द्वारा तुम्हारी सेवा करता है, उसके पास तुम सब आओ।

उपनःसूनवोगिरःश्रृण्वन्त्वमृतस्ययये । सुमृळीकाभवन्तुनः ॥ ९ ॥

उप । नः । सूनवः । गिरः । श्रृण्वन्तु । अमृतस्य ।
ये । सुऽमृळीकाः । भवन्तु । नः ॥ ९ ॥

अमृतस्यमरणरहितस्यप्रजापतेः येसूनवः पुत्राः तेदेवाःनोस्माकंगिरःस्तुतीः उपश्रृण्वन्तु नोस्माकंसुमृळीकाः सुष्ठुमृडयितारः सुखयितारश्चभवन्तु ॥ ९ ॥

९. जो अमर के पुत्र हैं, वही विश्वदेवगण हमारा स्तोत्र सुनें और हमें सुख दें।

विश्वेदेवाऋतावृधऋतुभिर्हवनश्रुतः । जुषन्तांयुज्यंपयः ॥ १० ॥ १५ ॥

विश्वे । देवाः । ऋतऽवृधः । ऋतुऽभिः । हवनऽश्रुतः ।
जुषन्ताम् । युज्यम् । पयः ॥ १० ॥ १५ ॥

ऋतावृधः ऋतस्ययज्ञस्यवर्धकाः ऋतुभिःकालविशेषैः हवनश्रुतः हवनस्यस्तोत्रस्यश्रोतारः तस्मिन्तस्मिन्यागकालेस्तूयमानाः ईदृशाविश्वेसर्वेदेवाःयुज्यंयोग्यंपयःआमिक्षारूपं जुषंतांसेवन्तां श्रूयतेहि—तस्मैपयसिदध्यानयतिसावैश्वदेव्यामिक्षेति ॥ १० ॥

१०. यज्ञ के समृद्धिकारी और यथासमय स्तोत्र-श्रवणकारी विश्वदेवगण, अच्छी तरह से अपने-अपने उपयुक्त दुग्ध ग्रहण करो।

॥ इतिचतुर्थस्याष्टमेपंचदशोवर्गः ॥ १५ ॥

---

१ श० प० ब्रा०

अथैकादशी–

स्तोत्रमिन्द्रोमरुद्गणस्त्वष्टृमान्मित्रोअर्यमा । इमाहव्याजुषन्तनः ॥११॥

स्तोत्रम् । इन्द्रः । मरुत्ऽगणः । त्वष्टृऽमान् । मित्रः । अर्यमा ।
इमा । हव्या । जुषन्त । नः ॥ ११ ॥

मरुद्गणः मरुतोगणभूताः परिजनभूतायस्यतादृशइन्द्रः त्वष्टृमान्त्वष्टृसहितोमित्रोर्यमाच नोस्माकंस्तोत्रं इमाहव्या इमानिहवींषिच जुषन्त सेवंतां ॥ ११ ॥

११. मरुतों के साथ इन्द्र, त्वष्टा के साथ मित्र और अर्यमा हमारे स्तोत्र और समस्त हव्य को ग्रहण करें।

इमंनोअग्नेअध्वरंहोतर्वयुनशोयज । चिकित्वान्दैव्यंजनम् ॥ १२ ॥

इमम् । नः । अग्ने । अध्वरम् । होतः । वयुनऽशः ।
यज । चिकित्वान् । दैव्यम् । जनम् ॥ १२ ॥

हेहोतः देवानामाह्वातरग्ने दैव्यंदेवसंबन्धिनंजनंसंघंयजनीयं चिकित्वान्जानंस्त्वंनोस्मदीय-मिममध्वरंहिंसारहितंयज्ञंवयुनशः ज्ञानक्रमेणयथानुपूर्व्यांदेवाबुद्धिस्थाःतथायज यागंकुरु॥१२॥

१२. देवों को बुलानेवाले अग्नि, देवों में जो महायोग्य हैं, उन्हें जानकर उनकी मर्यादा के अनुसार हमारी इस यज्ञ-क्रिया का सम्पादन करो।

वैश्वदेवशस्त्रस्यविश्वेदेवाइतियाज्या सूत्रितंच–आश्रुत्यैत्वेतिशस्त्वाजपेद्विश्वेदेवाःशृणुते-मंहवंमइतियाज्येति । वैश्वदेवेपशौएषैवयाज्या सूत्रितंच–विश्वेदेवाःशृणुतेमंहवंमेयेकेचज्माम-हिनोअहिमायाइति ।

सैषासूक्तेनयोदशी–

विश्वेदेवाःशृणुतेमंहवंमेयेअन्तरिक्षेयउपद्यविष्ठ ।
येअग्निजिह्वाउतवायजत्राआसद्यास्मिन्बर्हिषिमादयध्वम् ॥१३॥

विश्वे । देवाः । शृणुत । इमम् । हवम् । मे । ये । अन्तरिक्षे ।
ये । उप । द्यवि । स्थ । ये । अग्निऽजिह्वाः । उत । वा । यजत्राः ।
आऽसद्य । अस्मिन् । बर्हिषि । मादयध्वम् ॥ १३ ॥

हेविश्वेदेवाः मेमदीयमिमंहवंआह्वानंश्रृणुत येयूयंअन्तरिक्षेस्थ अन्तरिक्षलोकेवर्तमाना-भवथ येचउपतत्समीपस्थेभूलोकेभवथ येचद्यविद्युलोकेस्थ येचाग्निजिह्वाः अग्निर्जिह्वास्था-नीयोयेषां यद्वा अग्नेर्जिह्वा तयापोष्यमाणत्वात् जिव्हाइत्युच्यन्ते उतवा अपिवा येयजत्राः यजनीयाः तेसर्वेयूयंआस्तीर्णेस्मिन्बर्हिषि आसद्योपविश्यमादयध्वं सोमेनात्मानंतर्पयथ ॥१३॥

१३. विश्वदेवगण, तुम अन्तरिक्ष, भूलोक वा स्वर्ग में रहते हो। हमारा आह्वान सुनो। अग्नि-रूप जिह्वा-द्वारा वा किसी भी प्रकार से हमारे इस यज्ञ को ग्रहण करो। सब लोग इन बिछे कुशों पर बैठकर और सोम-रस पान कर उल्लसित होओ।

विश्वेदेवाममंश्रृण्वन्तुयज्ञियाउभेरोदसीअपांनपाच्चमन्म।
मावोवचांसिपरिचक्ष्याणिवोचंसुम्नेष्विद्वोअन्तमामदेम ॥ १४ ॥

विश्वे। देवाः। मम। श्रृण्वन्तु। यज्ञियाः। उभे इति।
रोदसीइति। अपाम्। नपात्। च। मन्म। मा। वः। वचांसि।
परिऽचक्ष्याणि। वोचम्। सुम्नेषु। इत्। वः। अन्तमाः। मदेम ॥ १४ ॥

यज्ञियायज्ञार्हाविश्वेदेवाः ममदीयं मन्ममननीयं स्तोत्रं श्रृण्वन्तु चित्तेवधारयन्तु तथाउभेरोदसी द्यावापृथिव्यौअपांनपात्मध्यमस्थानोग्निश्च अस्मदीयंस्तोत्रंश्रृण्वन्तु अथप्र-त्यक्षकृतः हेदेवाः वोयुष्मभ्यंपरिचक्ष्याणि वर्जनीयानि वचांसिस्तोत्राणि मावोचंमाब्रवीमि अ-पितुसमीचीनानिअतोवोयुष्माकमन्तमाःअन्तिकतमाःसन्तोवयं सुम्नेष्वित् युष्माभिर्दत्तेषुसुखे-ष्वेववर्तमानाः मदेम मोदेम ॥ १४ ॥

१४. यज्ञार्ह विश्वदेवगण, स्वर्ग, पृथिवी और जल-राशि के पौत्र अग्नि हमारे स्तोत्र को सुनें। देवो, जो स्तोत्र तुम्हें अग्राह्य है, उसका हम उच्चारण न करें। हम तुम्हारे निकटस्थ होकर और सुख प्राप्त कर उल्लसित हों।

आग्रयणेवैश्वदेवस्ययेकेचज्मेतियाज्या सूत्रितंच—विश्वेदेवासआगतयेकेचज्मामहिनो-अहिमायाइति। वैश्वदेवपुरोडाशस्यैषैवायाज्या सूत्रमुदाहृतं।

येकेचज्मामहिनोअहिमायादिवोजज्ञिरेअपांसधस्थे।
तेअस्मभ्यमिषयेविश्वमायुःक्षपउस्रावरिवस्यन्तुदेवाः ॥ १५ ॥

ये। के। च। ज्मा। महिनः। अहिऽमायाः। दिवः। जज्ञिरे।
अपाम्। सधऽस्थे। ते। अस्मभ्यम्। इषये। विश्वम्। आयुः।
क्षपः। उस्राः। वरिवस्यन्तु। देवाः ॥ १५ ॥

महिनोमहान्तः अहिमायाः मायेतिप्रज्ञानाम आहन्तृप्रज्ञाः एवंभूतायेकेचनदेवाः ज्मा पृथिवीनामैतत् पृथिव्यांजज्ञिरे प्रादुर्बभूवः येकेचन दिवोद्युलोकाद्वजज्ञिरे येकेचनअपांसधस्थे सहमादनेस्थाने अन्तरिक्षेजज्ञिरे तेसर्वेदेवाः अस्मभ्यं इषये इष्यतइतिइषिःपुत्रादिः तस्मैच विश्वंसर्वमायुरन्नंजीवनंवाक्षपः सर्वारात्रीः उस्राः सर्वाण्यहानिच सर्वदानैरंतर्येणवरिवस्यन्तु प्रयच्छन्तु ॥ १५ ॥

१५. पृथिवी, स्वर्ग अथवा अन्तरिक्ष में प्रादुर्भूत, महान् और संहारक शक्ति से युक्त देवगण दिन-रात हमें और हमारी सन्ततियों को अन्न दें।

अग्नीपर्जन्या॒वव॑तं॒ धियं॑मे॒स्मिन्हवे॑सुहवासुष्टु॒तिं नः।
इळा॑म॒न्योज॒नय॒द्गर्भ॑म॒न्यः प्र॒जाव॑ती॒रिष॒ आध॑त्तम॒स्मे ॥ १६ ॥

अग्नीं॑पर्ज॑न्यौ। अव॑तम्। धियम्। मे॒। अ॒स्मिन्। हवे॑।
सु॒ऽह॒वा॒। सु॒ऽस्तु॒तिम्। न॒ः। इळा॑म्। अ॒न्यः। ज॒नय॑त्। गर्भ॑म्।
अ॒न्यः। प्र॒जाऽव॑तीः। इष॑ः। आ। ध॒त्त॒म्। अ॒स्मे इति॑ ॥ १६ ॥

हेअग्नीपर्जन्यौ मेमदीयंधियंकर्मयज्ञलक्षणं अवतं गच्छतं रक्षतंवा हेसुहवासुखेनह्वातुं शक्यौ अस्मिन्हवेयज्ञेनोस्मदीयांसुष्टुतिंशोभनांस्तुतिंचरक्षतं यद्वाअनुवृत्तोअवतिःश्रवणार्थः अवतं शृणुतं युवयोर्मध्येअन्यः पर्जन्यः इळामन्नंजनयज्जनयति वृष्ट्याह्योषधितनस्पतयोजायन्ते तेभ्यश्चान्नंजायते अन्योग्निर्गर्भंजनयति पुरुषेणभुक्तमन्नंजाठरेणाग्निनापक्वंसद्वरेतोरूपेणपरिणमते तदेवयोषित्सुगर्भोभवति अतोयुवांप्रजावतीः प्रजाभिर्युक्ताः इषोन्नानि अस्मे अस्मासुआधत्तं अवस्थापयतं ॥ १६ ॥

१६. अग्नि और पर्जन्य, हमारे यज्ञ-कार्य की रक्षा करो। तुम अनायास आह्वान के योग्य हो; इसलिए इस यज्ञ में हमारा स्तोत्र सुनो। तुममें से एक व्यक्ति अन्न देते हैं और दूसरे गर्भ उत्पन्न करते हैं। इसलिए तुम हमें सन्तति के साथ अन्न दो।

अथसप्तदशी—

स्तीर्णे॑ब॒र्हिषि॑समिधा॒नेअ॒ग्नौसू॒क्तेन॑म॒हानम॒साविवासे।
अ॒स्मिन्नो॑अ॒द्यवि॒दथे॑यजत्रा॒विश्वे॑देवाह॒विषि॑मादयध्वम् ॥ १७ ॥ १६ ॥

स्तीर्णे॑। ब॒र्हिषि॑। स॒म्ऽइ॒धा॒ने। अ॒ग्नौ। सु॒ऽउ॒क्तेन॑। म॒हा।
नम॑सा। आ। वि॒वा॒से॒। अ॒स्मिन्। न॒ः। अ॒द्य। वि॒दथे॑।
य॒ज॒त्रा॒ः। विश्वे॑। दे॒वा॒ः। ह॒विषि॑। मा॒दय॒ध्व॒म् ॥ १७ ॥ १६ ॥

हेविश्वेदेवाः बर्हिषिदर्भपुंजेवेद्यांस्तीर्णेसति अग्नौचसमिधानेसमिद्धेसति अनेनसूक्तेन स्तोत्रेणचमहामहतानमसानमस्कारेणच आविवासे पर्यचरं हेयजत्रायजनीयाविश्वेदेवाः अप-

अस्मिन्नदिनेनोस्मदीयेस्मिन्विदथेयज्ञेहविषि तृतीयार्थेसप्तमी हविषाअस्माभिर्दत्तेनमादयध्वं तृप्यध्वं ॥ १७ ॥

१७. पूजनीय विश्वदेवगण, आज हमारे इस यज्ञ में, कुश बिछने पर, अग्नि प्रज्वलित होने पर और मेरे स्तोत्रोच्चारण और नमस्कार के साथ तुम्हारी सेवा करने पर हव्य-द्वारा तुम तृप्ति प्राप्त करो।

॥ इतिचतुर्थस्याष्टमेषोडशोवर्गः ॥ १६ ॥

वयमुत्वेतिदशर्चंचतुर्थंसूक्तं भरद्वाजस्यार्षंपौष्णं यांपूषन्नित्यनुष्टुप् शिष्टागायत्र्यः तथाचानुक्रान्तं—वयंदशपौष्णंतद्वायत्रंवैयांपूषन्ननुष्टुबिति। अर्थार्थिभिःप्रवसद्भिरेतज्जप्यं सूत्रितंच—वयमुत्वापथस्पथइत्यर्थंचर्यांचरिष्यन्नितिजपेदितिशेषः।

तत्रप्रथमा—

वयमुत्वापथस्पतेरथंनवाजंसातये। धियेपूषन्नयुज्महि ॥ १ ॥

वयम्। ऊँ इति। त्वा। पथः। पते। रथम्। न। वाजऽसातये।
धिये। पूषन्। अयुज्महि ॥ १ ॥

हेपथस्पते मार्गस्यपालयितः पूषन् धियेकर्मार्थंवाजसातये अन्नस्यलाभायच वयंरथंनयुद्धेरथमिव त्वात्वांअयुज्महियुंज्महि अस्मदभिमुखंकुर्मः ऊंइतिपूरकः ॥ १ ॥

१. मार्ग-पति पूषन्, कर्मानुष्ठान और अन्न-लाभ के लिए रण-स्थल में रथ की तरह हम तुम्हें अपने अभिमुख करते हैं।

अभिनोनर्यंवसुवीरंप्रयतदक्षिणम्। वामंगृहपतिंनय ॥ २ ॥

अभि। नः। नर्यम्। वसु। वीरम्। प्रयतऽदक्षिणम्। वामम्।
गृहऽपतिम्। नय ॥ २ ॥

हेपूषन् नर्योनृभ्योहितंवसुधनं अभिप्राप्तुंवीरंदारिद्र्यस्यविशेषेणईरयितारं गमयितारं प्रयतदक्षिणंपूर्वमन्येभ्योपिदत्तधनं यद्वाप्रयतंशुद्धंदक्षिणंधनंयस्यतादृशंवामंवननीयं एवंविधं गृहपतिंगृहस्थंनोस्मान्नयप्रापय ॥ २ ॥

२. पूषन्, हमारे यहाँ मानव-हितैषी, धन-दान में मुक्तहस्त और विशुद्ध दानवाला एक गृहस्थ भेजो।

अदित्सन्तंचिदाघृणेपूषन्दानायचोदय। पणेश्चिद्विम्रदामनः ॥ ३ ॥

अदित्सन्तम्। चित्। आघृणे। पूषन्। दानाय। चोदय।
पणेः। चित्। वि। म्रद। मनः ॥ ३ ॥

हेआघृणे आगतदीप्ते पूषन् अदित्सन्तंचित् दातुमनिच्छन्तमपिपुरुषं दानायअस्मद्दानार्थंचोदय प्रेरय पणेश्चित्वणिजोपिवार्धुषिकस्यलुब्धस्यापिमनोहृदयंविम्रद दानार्थंमृदूकुरु ॥ ३ ॥

३. दीप्ति-सम्पन्न पूषन्, कृपण को दान देने के लिए उत्तेजित करो और उसके हृदय को कोमल करो।

विपथोवाजंसातयेचिनुहिविमृधोंजहि। साधंन्तामुग्रनोधियः ॥ ४ ॥

वि। पथः। वाजंऽसातये। चिनुहि। वि। मृधः। जहि।
साधंन्ताम्। उग्र। नः। धियः ॥ ४ ॥

हेउग्र उद्गूर्णबलपूषन् पथोमार्गान्वाजसातयेन्नलाभायविचिनुहि शोधितान्कुरु यैःपथिभिर्गताधनंलभेमहि तादृशान्पथःपृथक्कुर्वित्यर्थः मृधोबाधकान्तस्करादींश्चविजहि बाधस्व तथा नोस्माकं धियः कर्माणिअन्नलाभार्थंक्रियमाणानिसाधन्तां सिध्यन्तु सफलानिभवन्तु ॥ ४॥

४. प्रचण्ड-बलशाली पूषन्, अन्न-लाभ के लिए सारे पथ परिष्कृत करो। विघ्नकारी चोर आदि का संहार करो और हमारे अनुष्ठानों को सफल करो।

परितृन्धिपणीनामारंयाहृदंयाकवे। अथेमस्मभ्यंरन्धय ॥ ५ ॥१७॥

परिं। तृन्धि। पणीनाम्। आरंया। हृदंया। कवे। अर्थ।
ईम्। अस्मभ्यम्। रन्धय ॥ ५ ॥ १७ ॥

हेकवे प्राज्ञ पूषन् पणीनांवणिजांलुब्धानांहृदयाहृदयानिकठिनानिआरयासूक्ष्मलोहाग्रोदंडःप्रतोदइत्यारेतिचाख्यायते तथापरितृन्धि परिविध्यहृद्गतंकाठिन्यमपनयेत्यर्थः अथानन्तरं ईमेनान्पणीनअस्मभ्यंरंधय वशीकुरु ॥ ५ ॥

५. ज्ञानी पूषन्, सूक्ष्म लोहाग्रदण्ड (आरा) से पणियों या लुब्धकों का हृदय विद्ध करो और उन्हें हमारे वश में करो।

॥ इतिचतुर्थस्याष्टमेसप्तदशोवर्गः ॥ १७ ॥

विपूषन्नारंयातुदपणेरिच्छहृदिप्रियम्। अथेमस्मभ्यंरन्धय ॥ ६ ॥

वि। पूषन्। आरंया। तुद। पणेः। इच्छ। हृदि। प्रियम्।
अर्थ। ईम्। अस्मभ्यम्। रन्धय ॥ ६ ॥

हेपूषन् आरयाप्रतोदेनपणेर्वणिजोहृदयंवितुद विविध्य तस्यपणेर्हृदिहृदयेप्रियमस्मभ्यंअनुकूलंधनंइच्छ दातव्यमितीच्छांजनय अथानन्तरंअस्मभ्यंईमेनान्रन्धय वशीकुरु ॥ ६ ॥

६. पूषन्, सूक्ष्म लोहाग्रदण्ड (प्रतोद या आरा) से पणि या चोर का हृदय चीरो। उसके हृदय में सद्भावना भरो और उसे मेरे वश में करो।

अथसप्तमी—

आरिखकिकिराकृणुपणीनांहृदयाकवे। अथेमस्मभ्यंरन्धय ॥ ७॥

आ। रिख। किकिरा। कृणु। पणीनाम्। हृदया। कवे।
अथ। ईम्। अस्मभ्यम्। रन्धय ॥ ७॥

हेकवे प्राज्ञपूषन् पणीनांवणिजांहृदयाहृदयानिआरिखआलिख आलिख्यचकिकिराकीर्णानिप्रशिथिलानिकृणु कुरु मृदूनिकुर्वित्यर्थः अन्यद्गतं ॥ ७॥

७. ज्ञानी पूषन्, चोरों के हृदयों को रेखाङ्कित करो। उनके हृदयों की कठोरता को भली भाँति कम करो और उन्हें हमारे वश में करो।

यांपूषन्ब्रह्मचोदनीमारांबिभर्ष्याघृणे।
तयासमस्यहृदयमारिखकिकिराकृणु ॥ ८॥

याम्। पूषन्। ब्रह्मऽचोदनीम्। आराम्। बिभर्षि। आघृणे॥
तया। समस्य। हृदयम्। आ। रिख। किकिरा। कृणु ॥ ८॥

हेआघृणे आगतदीप्ते पूषन् ब्रह्मचोदनींब्रह्मणोन्नस्यप्रेरयित्रींयामारांविभर्षि हस्तेधारयसि तयासमस्यसर्वस्यलुब्धजनस्यहृदयंआरिख आलिख किकिराकिकिराणिकीर्णानिप्रशिथिलानिचकुरु ॥ ८॥

८. दीप्ति-सम्पन्न पूषन्, तुम अन्न-प्रेरक प्रतोद धारण करो और उसके द्वारा सारे लोभी व्यक्तियों का हृदय रेखाङ्कित करो एवम् उसकी कठोरता शिथिल करो।

यातेअष्ट्रागोओपशाघृणेपशुसाधनी। तस्यास्तेसुम्नमीमहे ॥ ९॥

या। ते। अष्ट्रा। गोऽओपशा। आघृणे। पशुऽसाधनी।
तस्याः। ते। सुम्नम्। ईमहे ॥ ९॥

हेआघृणे आगतदीप्ते पूषन् तेत्वदीयायाअष्ट्राआरागोओपशाउपशेरतइत्योपशाः गावः ओपशायस्याःतादृशी अतएवपशुसाधनीपशूनांसाधयित्रीभवति तेत्वदीयायास्तस्याःसंबंधिसुम्नंसुखंमहे ॥ ९॥

९. दीप्तिशाली पूषन्, तुम जिस अस्त्र से धेनुओं और पशुओं को परिचालित करते हो, तुम्हारे उसी अस्त्र से हम उपकार की प्रार्थना करते हैं।

अथदशमी—

उतनोगोषणिंधियमश्वसांवाजसामुत। नृवत्कृणुहिवीतये ॥ १०॥ १९

उत । नः । गोऽसनिम् । धियंम् । अश्वऽसाम् । वाजऽसाम् ।
उत । नृऽवत् । कृणुहि । वीतये । १० ॥ १८ ॥

उतअपिच हेपूषन् गोषणिंगवांसनित्रीं अश्वसांअश्वानांसनित्रीं वाजसांवाजानामन्ना-नांसनित्रीं उतअपिचनृवत्नृवतींनृणांवनित्रींदात्रीं एवंभूतांधियंबुद्धिंकर्मवानोस्माकंवीतयेखा-दनायउपभोगार्थं कृणुहि कुरु ॥ १० ॥

१०. पूषन्, हमारे उपभोग के लिए हमारे याग-कर्म को गौ, अश्व, अन्न और परिचारकों का उत्पादन करो।

॥ इतिचतुर्थस्याष्टमेष्टादशोवर्गः ॥ १८ ॥

संपूषन्नितिदशर्चंपंचमंसूक्तंभरद्वाजस्यार्षंपौष्णंगायत्रं संपूषन्नित्यनुक्रान्तं नष्टधनमन्वि-च्छतापुरुषेणैतज्जप्यं सूत्रितंच—संपूषन्विदुषेतिनष्टधनमधिजिगमिषन्मूह्ळोवेति ।

तत्रप्रथमा—

संपूषन्विदुषानययोअञ्जसानुशासति । यएवेदमितिब्रवत् ॥ १ ॥

सम् । पूषन् । विदुषा । नय । यः । अञ्जसा । अनुऽशासति ।
यः । एव । इदम् । इति । ब्रवत् ॥ १ ॥

हेपूषन् पोषकदेव विदुषाजानतातेनजनेनसन्नय अस्मान्संगमय योविद्वान्अंजसाऋजुमा-र्गेण अनुशासति अनुशास्ति नष्टद्रव्यप्राप्त्युपायमुपदिशति यश्चएवएवंइदंनष्टंभवदीयंधनमिति-ब्रवत्ब्रवीति नष्टंधनंदर्शयतीत्यर्थः तेनविदुषेत्यन्वयः ॥ १ ॥

१. पूषन्, तुम हमें एक ऐसे विलक्षण व्यक्ति से मिलाओ, जो हमें वस्तुतः पथ-प्रदर्शन करावेगा और जो हमारे अपहृत द्रव्य को मिला देगा।

अथद्वितीया—

समुपूष्णागमेमहियोगृहाँअभिशासति । इमएवेतिचब्रवत् ॥ २ ॥

सम् । ऊँ इति । पूष्णा । गमेमहि । यः । गृहान् । अभिऽशासति ।
इमे । एव । इति । च । ब्रवत् ॥ २ ॥

पूष्णानुगृहीतावयंसंगमेमहि तेनजनेनसंगच्छेमहि योजनोगृहान्येषुगृहेष्वस्मदीयानष्टाः पशवस्तिष्ठन्ति तान्गृहान्अभिशासति अभिशास्ति आभिमुख्येनबोधयति यश्चइमेत्वदीयान-ष्टाःपशवःएवएवंतिष्ठन्तीतिचब्रवत् ब्रूयात् ॥ २ ॥

२. हम पूषा की कृपा से ऐसे व्यक्ति से मिलें, जो सारे गृह में दिखा-वेगा और कहेगा कि ये ही तुम्हारे खोये हुए पशु हैं।

अथतृतीया—

पूष्णश्चक्रंनरिष्यतिनकोशोवपद्यते । नोअस्यव्यथतेपविः ॥ ३ ॥

पूष्णः । चक्रम् । न । रिष्यति । न । कोशः । अव । पद्यते ।
नो इति । अस्य । व्यथते । पविः ॥ ३ ॥

पूष्णःपोषकस्यदेवस्यचक्रंआयुधंनरिष्यति नविनश्यति अस्यचक्रस्यकोशश्चनावपद्यते नहीयते अस्यपविर्धाराचनोनैवव्यथते कुंठीभवति तेनचक्रेणचोरान्हत्वाअस्मदीयंधनंप्रकाशयेतिभावः ॥ ३ ॥

३. पूषा का आयुध-चक्र विनष्ट नहीं होता। इस चक्र का कोश हीन नहीं होता और इसकी धार कुण्ठित नहीं होती।

योअस्मैहविषाविधन्नतंपूषापिमृष्यते । प्रथमोविन्दतेवसु ॥ ४ ॥

यः । अस्मै । हविषा । अविधत् । न । तम् । पूषा । अपि ।
मृष्यते । प्रथमः । विन्दते । वसु ॥ ४ ॥

योयजमानः अस्मैपूष्णेहविषाचरुपुरोडाशादिना अविधत् परिचरति तंयजमानंपूषानापिमृष्यते अपिशब्दईषदर्थे ईषदपिनहिनस्ति सचप्रथमोमुख्यःसन्वसुधनंविन्दते लभते ॥ ४ ॥

४. जो व्यक्ति हव्य-द्वारा पूषा की सेवा करता है, उसका पूषा जरा भी अपकार नहीं करते और प्रधानतः वही व्यक्ति धन पाता भी है।

अथपंचमी—

पूषागाअन्वेतुनःपूषारक्षत्वर्वतः । पूषावाजंसनोतुनः ॥ ५ ॥ १९ ॥

पूषा । गाः । अनु । एतु । नः । पूषा । रक्षतु । अर्वतः ।
पूषा । वाजम् । सनोतु । नः ॥ ५ ॥ १९ ॥

पूषापोषकोदेवः नोस्मदीयागाःअन्वेतु रक्षणार्थमनुगच्छतु सचपूषाअर्वतोश्वान्रक्षतु चोरेभ्यःतथावाजमन्नंचनोस्मभ्यंपूपासनोतु प्रयच्छतु ॥ ५ ॥

५. रक्षा के लिए हमारी गायों का पूषा अनुसरण करें। वे हमारे अश्वों की रक्षा करें। वे हमें अन्न दें।

॥ इतिचतुर्थस्याष्टमेएकोनविंशोवर्गः ॥ १९ ॥

अथषष्ठी—

पूषन्ननुप्रगाइहियजमानस्यसुन्वतः । अस्माकंस्तुवतामुत ॥ ६ ॥

पूषन् । अनु । प्र । गाः । इहि । यजमानस्य । सुन्वतः ।
अस्माकम् । स्तुवताम् । उत ॥ ६ ॥

हेपूषन् सुन्वतःसोमाभिषवंकुर्वतोयजमानस्यगाःपशून्अनुमेहि रक्षणार्थमनुगच्छ उत-अपिचस्तुवतांत्वद्विषयंस्तोत्रंकुर्वतामस्माकंगाश्चानुगच्छ ॥ ६ ॥

६. पूषन्, रक्षा के लिए सोम का अभिषव करनेवाले यजमान की गायों का अनुसरण करो और स्तोत्र उच्चारण करनेवाली हमारी गायों का भी अनुसरण करो।

माकिर्नेशन्माकीं रिषन्माकीं सं शारि केवटे ।
अथारिष्टाभिरा गहि ॥ ७ ॥

माकिः । नेशत् । माकीम् । रिषत् । माकीम् । सम् । शारि । केवटे
अथ । अरिष्टाभिः । आ । गहि ॥ ७ ॥

हेपूषन् अस्मदीयंगोधनंमाकिर्नेशत् मानश्यतु माकिर्माकीमित्येतौप्रतिषेधमात्रेवर्तेते माकींरिषत्माव्याघ्रादिभिर्हिंस्यतांमाकींमाचकेवटेकूपेसंशारि संशीर्णंभूत् कूपपातेनापिर्हिंसितंमाभवतु अथएवंसतिअरिष्टाभिरहिंसिताभिर्गोभिःसहआगहि सायंकालेआगच्छ ॥ ७ ॥

७. पूषन्, हमारा गोधन नष्ट न करने पावे। यह व्याघ्रादि-द्वारा निहित न होने पावे। यह कुएं में न गिरे। इसलिए तुम अहिंसित धेनुओं के साथ सायंकाल आओ। अथाष्टमी—

शृण्वन्तं पूषणं वयमिर्यमनष्टवेदसम् । ईशानं राय ईमहे ॥ ८ ॥

शृण्वन्तम् । पूषणम् । वयम् । इर्यम् । अनष्टऽवेदसम् ।
ईशानम् । रायः । ईमहे ॥ ८ ॥

अस्मत्स्तोत्राणिशृण्वंतं इर्यंदरिद्रस्यप्रेरकं अनष्टवेदसं अविनष्टधनं ईशानंसर्वस्येश्वरं एवंविधंपूषणंदेवंवयंरायोधनानिईमहे याचामहे ॥ ८ ॥

८. हमारे स्तोत्रों को सुननेवाले, दारिद्र्य-नाशक, अविनष्ट-धन और सारे संसार के अधिपति पूषा के पास हम धन की प्रार्थना करते हैं।

चातुर्मास्येषुवैश्वदेवेपर्वणिपौष्णस्यहविषःपूषन्तवव्रतइत्येषानुवाक्या सूत्रितंच—वामंमद्यसवितर्वाममुश्वःपूषन्तवव्रतेवयमिति।

पूषन्तव व्रते वयं न रिष्येम कदा चन । स्तोतारस्त इह स्मसि ॥ ९ ॥

पूषन् । तव । व्रते । वयम् । न । रिष्येम । कदा । चन ।
स्तोतारः । ते । इह । स्मसि ॥ ९ ॥

हेपूषन् पोषक तेत्वदीयेव्रतेकर्मणिवर्तमानावयं कदाचनकदाचिदपिनरिष्येम हिंसितान भवेम तादृशाश्चवयंइहास्मिन्कर्मणितेतवस्तोतारःस्मसिस्मः भवामः ॥ ९ ॥

९. पूषन्, जब तक हम तुम्हारी उपासना में लगे रहते हैं, तब तक हम कभी मारे न जायें। इस समय हम तुम्हारी स्तुति करके वैसे ही हों।

अथदशमी—

परिपूषापरस्ताद्धस्तंदधातुदक्षिणम् ।
पुनर्नोनष्टमाजतु॥ १० ॥ २० ॥

परि । पूषा । परस्तात् । हस्तम् दधातु । दक्षिणम् । पुनः । नः ।
नष्टम् । आ । अजतु ॥ १० ॥ २० ॥

पूषापोषकोदेवः परस्तात्परस्मिन्देशे सुसंचारादन्यस्मिन्चोरव्याघ्रादिभिरुषितेदेशे गच्छतोगोधनस्यनिवारणायस्वकीयंदक्षिणंहस्तंपरिदधातु परिधानंनिवारकंकरोतु नोस्मदीयंनष्टंच गोधनंपुनराजतु आगच्छतु आगमयतु ॥ १० ॥

१०. पूषा अपने दाहिने हाथ से हमारे गोधन को विपथगामी होने से बचावें। वे हमारे नष्ट गोधन को फिर ले आवें।

॥ इतिचतुर्थस्याष्टमेविंशोवर्गः ॥ २० ॥

एहिवामितिषळृचंषष्ठंसूक्तं भरद्वाजस्यार्षंगायत्रंपौष्णं अनुक्रम्यतेच—एहिवांषडिति। गतोविनियोगः।

तत्रप्रथमा—

एहिवांविमुचोनपादाघृणेसंसचावहै ।
रथीर्ऋतस्यनोभव ॥ १ ॥

आ । इहि । वाम् । विऽमुचः । नपात् । आघृणे । सम् ।
सचावहै । रथीः । ऋतस्य । नः । भव ॥ १ ॥

हेविमुचोनपात् विमुंचतिसृष्टिकालेस्वसकाशात्सर्वाःप्रजाःविसृजतीतिविमुक् प्रजापतिः तस्यपुत्र आघृणेआगतदीप्ते पूषन् वांवातिगच्छतिस्तुतिंप्राप्नोतीतिवास्तोता वागतिगंधनयोरित्यस्मादातोमनिन्क्विनिविच् वांगन्तारंस्तोतारंमांएहि आगच्छ आवांचसंसचावहै समयावसंगच्छावहै यद्वा आवामित्यस्याद्याक्षरलोपेवामितिभवति आवांसचावहैइतिसंबन्धः यावसंगच्छावहैतादृशस्त्वंनोस्माकंऋतस्ययज्ञस्यरथीःरंहितानेताभव तथासतितत्त्वंहंविस्त्वयापिलभ्यतइत्यर्थः ॥१॥

१. हे दीप्ति-सम्पन्न प्रजापतिपुत्र पूषन्, तुम्हारा स्तोता मेरे पास आवे। हम दोनों मिलें। तुम हमारे यज्ञ के नेता बनो।

अथद्वितीया—

रथीतमंकपर्दिनमीशानंराधसोमहः ।
रायःसखायमीमहे ॥ २ ॥

रथिऽतमम् । कपर्दिनम् । ईशानम् । राधसः । महः ।
रायः । सखायम् । ईमहे ।॥ २ ॥

रथितमंअतिशयेनरथिनं यद्वाअतिशयेनरंहितारंनेतारंकपर्दिनं कपर्दश्चूडातद्वन्तं राध्नो-त्यनेनेतिराधोधनं महोमहतोराधसोधनस्यईशानंस्वामिनं सखायं अस्माकंमित्रं एवंविधंपूषणंरा-योधनानिईमहेयाचामहे ॥ २ ॥

२. हम अपने रथि-श्रेष्ठ, चूड़ावान् (कपर्दी), अतुल ऐश्वर्य के अधि-पति और अपने मित्र पूषा के पास धन की प्रार्थना करते हैं।

रायोधारास्याघृणेवसोराशिरजाश्व । धीवतोधीवतःसखा ॥ ३ ॥

रायः । धारा । असि । आघृणे । वसोः । राशिः । अजऽअश्व ।
धीवतःऽधीवतः । सखा ॥ ३ ॥

हेआघृणे आगतदीप्ते पूषन् रायोधनस्यधारासि प्रवाहोभवसि स्तोतृभ्योबहुधनंनैरंतर्येण प्रयच्छसीत्यर्थः अजाश्वः अजाः छागाएवअश्वाः अश्वकार्योपन्नायस्यतादृशपूषन् वसोः वसुनोधनस्यराशिः संघश्चभवसि धनसंघश्चत्वय्येवनिवसतीत्यर्थः धीवतोधीवतः सर्वस्यस्तो त्रवतः पुरुषस्यसखामित्रभूतश्चभवसि ॥ ३ ॥

३. दीप्ति-शाली पूषन् तुम धन के प्रवाह हो, धन की राशि हो और छाग ही तुम्हारे अश्व का कार्य करता है। तुम प्रत्येक स्तोता के मित्र हो।

अथचतुर्थी—

पूषणंन्व१जाश्वमुपस्तोषामवाजिनम् । स्वसुर्योजारउच्यते ॥४॥

पूषणम् । नु । अजऽअश्वम् । उप । स्तोषाम । वाजिनम् ।
स्वसुः । यः । जारः । उच्यते । ४

अजाश्वंछागवाहनंवाजिनंअन्नवन्तंबलवन्तंवा पूषणंपोषकंदेवंनुअद्यउपस्तोषाम उपस्तु-वाम यः पूषास्वसुरुषसोजारः उपपतिरित्युच्यते तंपूषणमित्यन्वयः ॥ ४ ॥

४. आज हम उन्हीं छाग वाहन और अन्नयुक्त सूर्य वा पूषा की स्तुति करते हैं, जिन्हें लोग भगिनी या उषा का प्रणयी अथवा जार कहते हैं।

अथपञ्चमी—

मातुर्दिधिषुमब्रवंस्वसुर्जारःशृणोतुनः ।
भ्रातेन्द्रस्यसखामम ॥ ५ ॥

मातुः। दिधिषुम्। अब्रवम्। स्वसुः। जारः। शृणोतु। नः।
भ्राता। इन्द्रस्य। सखा। मम॥ ५ ॥

मातुः निर्मात्र्याः रात्रेः दिधिषुंपतिंपूषणंअब्रवं स्तौमि स्वसुरुषसोजारश्चपूषानोस्माकंस्तोत्राणिंशृणोतु इन्द्रस्यभ्रातासहजातः पूषाममस्तोतुः सखामित्रभूतोस्तु ॥ ५ ॥

५. रात्रि-रूपिणी माता के पति पूषा की हम स्तुति करते हैं। अपनी भगिनी (उषा) के जार पूषा (सूर्य) हमारा स्तोत्र सुने। इन्द्र के सहोदर पूषा हमारे मित्र हों।

आजासःपूषणंरथेनिशृम्भास्तेजनश्रियम्।
देवंवहन्तुबिभ्रतः॥ ६ ॥ २१

आ। अजासः। पूषणम्। रथे। निऽशृम्भाः। ते।
जनऽश्रियम्। देवम्। वहन्तु। बिभ्रतः॥ ६ ॥ २१ ॥

अजासःअजाः छागाः निशृंभाःनिश्रथ्यसंबध्यहर्तारः तेपूष्णोवाहनतयाप्रसिद्धाः छागाः जनश्रियंजनंस्तोतृसंघंश्रयतिगच्छतीतिजनश्रीः तंपूषणंदेवंरथेबिभ्रतोधारयन्तःआवहन्तुआनयन्तु॥ ६॥

६. रथ में नियुक्त छागगण स्तोताओं के आश्रय पूषा का रथ ढोते हुए उन्हें यहाँ ले आवें।

॥ इतिचतुर्थस्याष्टमेएकविंशोवर्गः ॥ २१ ॥

यएनमितिषळृचंसप्तमंसूक्तं भरद्वाजस्यार्षंपौष्णमंत्यानुष्टुप् आदौपंचगायत्र्यः तथाचानुक्रान्तं—यएनमन्त्यानुष्टुबिति। गतोविनियोगः।

तत्रप्रथमा—

यएनमादिदेशतिकरम्भादितिपूषणम्। नतेनदेवआदिशे॥ १ ॥

यः। एनम्। आऽदिदेशति। करम्भऽअत्। इति।
पूषणम्। न। तेन। देवः। आऽदिशे॥ १॥

यःस्तोता एनंपूषणंपोषकंकरंभादकरंभानांघृतमिश्रानांयवसक्तूनांअत्तेतिआदिदेशति अभिष्टौति तेनपुरुषेणअन्योदेवःनआदिशे आदेष्टव्यः स्तोतव्योनभवति पूष्णएवसर्वस्याभितमस्यधनस्यलाभाद्देवतान्तरंनस्तौतिइत्यर्थः॥ १ ॥

१. जो पूषा को घी-मिले जौ के सत्तू का भोगी कहकर उनकी स्तुति करता है, उसे अन्य देवों की स्तुति नहीं करनी पड़ती।

अथद्वितीया-

उतघासरथीतमःसख्यासत्पतिर्युजा । इन्द्रोवृत्राणिजिघ्नते॥ २ ॥

उत । घ । सः । रथिऽतमः । सख्या । सत्ऽपतिः । युजा ।
इन्द्रः । वृत्राणि । जिघ्नते ॥ २ ॥

उतघ अपिच सःयःशत्रूणांहन्तृत्वेनप्रसिद्धस्तादृशः रथीतमः अतिशयेनरथीमहारथः सत्पतिः सतांपालयिता एवंगुणइन्द्रः सख्यामित्रभूतेनपूष्णायुजासहायभूतेनयुक्तःसन्वृत्राणि-शत्रून्जिघ्नतेहन्ति इन्द्रस्यापिअयमेवसाहाय्यकारीत्यर्थः ॥ २ ॥

२. रथि-श्रेष्ठ, साधुओं के रक्षक और सुप्रसिद्ध देव इन्द्र अपने मित्र पूषा की सहायता से शत्रु-संहार करते हैं ।

उतादःपरुषेगविसूरश्चक्रंहिरण्ययम् । न्यैरयद्रथीतमः ॥ ३ ॥

उत । अदः । परुषे । गवि । सूरः । चक्रम् । हिरण्ययम् ।
नि । ऐरयत् । रथिऽतमः ॥ ३ ॥

उतापिच सूरः प्रेरकः रथीतमः अतिशयेनरथीनेतृतमोवापूषापरुषेपरुष्मतिपर्ववतिभास्व-तिवागविगच्छतीतिगौरादित्यः तस्मिन्हिरण्ययंहिरणमयंसुवर्णनिर्मितंअदस्तद्रथस्यचक्रंन्यैरय-वनितरां प्रेरयतिस्म ॥ ३ ॥

३. चालक और रथि-श्रेष्ठ पूषा सूर्य के हिरणमय रथ का चक्र नियत परिचालित करते हैं ।

अथचतुर्थी-

यदद्यत्वापुरुष्टुतब्रवामदस्रमन्तुमः । तत्सुनोमन्मसाधय ॥ ४ ॥

यत् । अद्य । त्वा । पुरुऽस्तुत । ब्रवाम । दस्र । मन्तुऽमः ।
तत् । सु । नः । मन्म । साधय ॥ ४ ॥

हेपुरुष्टुत बहुभिर्यजमानैःस्तुत दस्रदर्शनीय मन्तुमःज्ञानवन् पूषन् अद्येदानींयदुद्दिश्य त्वांब्रवाम स्तवाम नोस्माकंमन्ममननीयंसुसुष्ठुतद्धनं साधय उत्पादय ॥ ४ ॥

४. हे बहुलोक-वन्दनीय, मनोहर-मूर्ति और ज्ञानी पूषन्, रोज हम जिस धन को लक्ष्य करके तुम्हारी स्तुति करते हैं, उसी वांच्छित धन को हमें प्रदान करो ।

अथपंचमी-

इमंचनोगवेषणंसातयेसीषधोगणम् । आरात्पूषन्नसिश्रुतः ॥ ५ ॥

इमम् । च । नः । गोऽएषणम् । सातये । सीसधः ।
गणम् । आरात् । पूषन् । असि । श्रुतः ॥ ५ ॥

हेपूषन् नोस्माकंसातयेलाभायइमंचगणंमनुष्यसंघं गवेषणं गवामेषयितारं सीषधःसाधय हेपूषन्आराद्दूरदेशेपित्वंश्रुतोविश्रुतःप्रख्यातोसि भवसि ॥ ५ ॥

५. गोकामी इन समस्त मनुष्यों को गो-लाभ कराओ। पूषन्, तुमने दूर देश में भी प्रसिद्धि पाई है।

आतेस्वस्तिमीमहआरेअघामुपावसुम् ।
अद्याचसर्वतातयेश्वश्चसर्वतातये ॥ ६ ॥२२॥

आ । ते । स्वस्तिम् । ईमहे । आरेऽअघाम् । उपऽवसुम् ।
अद्य । च । सर्वऽतातये । श्वः । च । सर्वऽतातये ॥ ६ ॥ २२ ॥

हेपूषन्त्वदीयांत्वयादेयांस्वस्तिंकल्याणींरक्षांआरेअघांआरेदूरेअघंपापंयस्याः तादृशीं उपावसुं उपगतधनां ईदृशींस्वस्तिं अद्यचअस्मिंश्वकाले सर्वतातये सर्वैर्ऋत्विग्भिः स्तायतइति- सर्वतातिर्यज्ञः तदर्थं यद्वासर्वेषांभोगानांविस्तारय श्वश्चपरस्मिन्नपिदिनेसर्वतातयेसर्वदासर्वतात्यर्थंआईमहे अतियाचामहे ॥ ६ ॥

६. पूषन्, हम आज और कल के यज्ञों के सम्पादन के लिए तुम्हारी उसी रक्षा को चाहते हैं। वह रक्षा पाप से दूर और धन के पास है।

॥ इतिचतुर्थस्याष्टमेद्वाविंशोवर्गः ॥ २२ ॥

इन्द्रानुपूषणेतिषळृचमष्टमंसूक्तं भरद्वाजस्यार्षंगायत्रमैन्द्रापौष्णं अनुक्रान्तंच—इन्द्रान्वैन्द्रंचेति । गतोविनियोगः ।

तत्रप्रथमा—

इन्द्रानुपूषणावयंसख्यायस्वस्तये । हुवेमवाजसातये ॥ १ ॥

इन्द्रा । नु । पूषणा । वयम् । सख्याय । स्वस्तये ।
हुवेम । वाजऽसातये ॥ १ ॥

इतरेतरयोगादिन्द्रपूषन्शब्दयोरुभयत्रद्विवचनं इन्द्रापूषणौदेवौनुअद्यवयंस्वस्तयेसख्यायशोभनायसखित्वाय वाजसातये वाजस्यान्नस्यबलस्यवासातये संभजनायचहुवेम आह्वयाम स्तवाम ॥ १ ॥

१. हे इन्द्र और पूषन्, अपने मंगल के लिए आज हम तुम्हारी मित्रता और अन्न की प्राप्ति के लिए तुम्हें बुलाते हैं।

अथद्वितीया—

सोमंमन्यउपांसदत्पातवेचम्वोंःसुतम् । करम्भमन्यइच्छति ॥२॥

सोमम् । अन्यः । उप । असदत् । पातवे । चम्वोंः । सुतम् ।
करम्भम् । अन्यः । इच्छति ॥ २ ॥

चम्वोःअधिषवणफलकयोः सुतमभिषुतंसोमंअन्यःअनयोरेकतरइन्द्रः पातवेपातुंउपासदत् उपसीदति उपगच्छति अन्यएकतरः पूषाकरंभंघृतसिक्तंसक्तात्मकंहविःभक्षयितुमिच्छति ॥ २ ॥

२. तुममें से एक (इन्द्र) पात्र-स्थित अभिसुत सोम का पान करने के लिए जाते हैं और दूसरे (पूषा) जौ का सत्तू खाने की इच्छा करते हैं।

अथतृतीया—

अजाअन्यस्यवह्नयोहरीअन्यस्यसंभृता । ताभ्यांवृत्राणिजिघ्नते॥३॥

अजाः । अन्यस्य । वह्नयः । हरी इति । अन्यस्य ।
सम्ऽभृता । ताभ्याम् । वृत्राणि । जिघ्नते ॥ ३ ॥

अनयोरिन्द्रापूष्णोःअन्यस्यएकस्यपूष्णः अजाः छागाः वह्नयोवाहकाअश्वाः अन्यस्यापरस्येन्द्रस्यसंभृतासंभृतौसम्यक्पुष्टौ हरीएतत्संज्ञावश्वौ वाहकौसचेन्द्रःताभ्यांवृत्राणिशत्रून्जिघ्नते हन्ति ॥ ३ ॥

३. एक के वाहन छाग हैं और दूसरे के वाहन स्थूल-काय दो अश्व हैं। दूसरे (इन्द्र) इन्हीं दोनों अश्वों के साथ वृत्रासुर का संहार करते हैं।

यदिन्द्रोअनयद्रितोमहीरपोवृषंतमः । तत्रपूषाभवत्सचा ॥ ४ ॥

यत् । इन्द्रः । अनयत् । रितः । महीः । अपः ।
वृषन्ऽतमः । तत्र । पूषा । अभवत् । सचा ॥ ४ ॥

यद्यदा वृषन्तमः अतिशयेनवर्षिताइन्द्रः परितःपरितोगंत्रीर्महीः महतीः अपःवृष्ट्युदकानि अनयत्इमंलोकंप्रापयति तत्रतदानींपूषापोषकोदेवः सचाभवत्अस्येन्द्रस्यसहायोभवति ॥ ४ ॥

४. जिस समय अतिशय वर्षक इन्द्र महावृष्टि करते हैं उस समय इनके सहायक पूषा होते हैं।

अथपंचमी—

तांपूष्णःसुमतिंवयंवृक्षस्यप्रवयामिव । इन्द्रस्यचारंभामहे ॥ ५॥

ताम् । पूष्णः । सुऽमतिम् । वयम् । वृक्षस्य । प्र ।
वयाम्ऽइव । इन्द्रस्य । च । आ । रभामहे ॥ ५ ॥

पूष्णःपोषकस्यदेवस्यइन्द्रस्यच तांप्रसिद्धांसुमतिंकल्याणींमतिंअनुग्रहबुद्धिं वृक्षस्यमहीरुहस्यप्रवयां प्रकृष्टांदृढांशाखामिववयंआरभामहे अवलंबामहे आश्रयामहइत्यर्थः ॥ ५ ॥

५. हम वृक्ष की सुदृढ़ शाखा की तरह पूषा और इन्द्र की कृपा-वृद्धि के ऊपर निर्भर रहते हैं। अथषष्ठी—

उत्पूषणंयुवामहेभीशूँरिवसारथिः । मह्याइन्द्रंस्वस्तये॥६॥२३॥

उत् । पूषणम् । युवामहे । अभीशून्ऽइव । सारथिः ।
मह्यै । इन्द्रम् । स्वस्तये ॥ ६ ॥ २३ ॥

पूषणंपोषकंदेवमिन्द्रंचमह्यैमहत्यै स्वस्तयेरक्षार्थंउद्युवामहे उद्योजयामः उद्योजनमाकर्षणं तत्रदृष्टान्तः—सारथिःसूतः अभीशूनिव अभीशून्रश्मीन्अश्वबन्धनार्थान्आकर्षतितद्वत्॥ ६ ॥

६. जैसे सारथि रश्मि (लगाम) खींचता है, वैसे ही हम भी, अपने प्रहृष्ट कल्याण के लिए, पूषा और इन्द्र को अपने पास खींचते हैं।

॥ इतिचतुर्थस्याष्टमेत्रयोविंशोवर्गः ॥ २३ ॥

शुक्रंतइतिचतुर्ऋचंनवमंसूक्तं भरद्वाजस्यार्षंपौष्णं द्वितीयाजगती शिष्टास्त्रिष्टुभः तथाचानुक्रान्तं—शुक्रंचतुष्कंद्वितीयाजगतीति। वैश्वदेवेपर्वणिवैश्वदेवस्यहविषःशुक्रंतइतियाज्या सूत्रितंच—शुक्रंतेअन्यद्यजतंतेअन्यदिहेहवःस्वतवसइति। एकादशिनस्यपौष्णस्यपशोर्वपायाएषैवयाज्या सूत्रितंच—शुक्रंतेअन्यद्यजतंतेअन्यत्प्रपथेपथामजनिष्टपूषाइति। अमाभिष्टवेप्येषासूत्रितंच—शुक्रंतेअन्यद्यजतंतेअन्यदपश्यंगोपामनिपद्यमानमिति।

सैषाप्रथमा—

शुक्रंतेअन्यद्यजतन्तेअन्यद्विषुरूपेअहनीद्यौरिवासि ।
विश्वाहिमायाअवसिस्वधावोभद्रातेपूषन्निहरातिरस्तु ॥ १ ॥

शुक्रम् । ते । अन्यत् । यजतम् । ते । अन्यत् । विषुरूपेइतिविषुऽरूपे ।
अहनी इति । द्यौःऽइव । असि । विश्वाः । हि । मायाः । अवसि ।
स्वधाऽवः । भद्रा । ते । पूषन् । इह । रातिः । अस्तु ॥ १ ॥

हेपूषन् तेतवशुक्रंशुक्लवर्णंअन्यदेकमहर्भवतिवासरात्मकं तथातेतवसंबन्धियजतं यजिरत्रसंगतिकरणेवर्तते यजनीयं प्रकाशेनसंगमनीयं स्वतः कृष्णवर्णं अन्यदेकमहर्भवतिरात्र्याख्यं इत्थंविषुरूपे शुक्लकृष्णतयानानारूपे अहनीतवमहिम्नानिष्पद्येते यद्वाहेपूषन् त्वदीयमन्यदेकं रूपंशुक्लंनिर्मलंदिवसस्योत्पादकं त्वदीयमन्यदेकंरूपंयजतं केवलंयजनीयंनप्रकाशकं रात्रेरुत्पादकं अतएवविषुरूपे विषमरूपेअहनीअहश्चरात्रिश्चभवतः अहोरात्रयोः निर्माणेसूर्यएवकर्ता कथमस्यप्रसक्तिरितितत्राह—द्यौरिवासि यथाद्यौरादित्यः प्रकाशयितातथात्वंप्रकाशकोसि कुतइत्यतआह—हेस्वधावोन्नवन्पूषन् विश्वाः सर्वाः मायाः प्रज्ञाःहियस्मात्कारणात्अवसिरक्षसि अतःकारणात्त्वंसूर्यइवभवसीत्यर्थः तादृशस्यतेतवभद्राकल्याणीरातिर्दानंइहास्मासुअस्तुभवतु यास्कस्त्वाह—शुक्रंतेअन्यल्लोहितंतेअन्यद्यजियंतेअन्यदयज्ञियंते अन्यदितिवाविषमरूपेअहनीकर्मणाद्यौरिवचासिसर्वाणिचप्रज्ञानान्यवस्यन्नंवन्निति ॥ १ ॥

१. पूषन्, तुम्हारा यह रूप (दिन) शुक्लवर्ण है और अन्य रूप (रात्रि) केवल यजनीय है। इस प्रकार दिन और रात्रि के रूप विभिन्न प्रकार के हैं। तुम सूर्य की तरह प्रकाशमान हो; क्योंकि तुम अभी दाता हो और सब प्रकार के ज्ञान धारण करते हो। इस समय तुम्हारा कल्याणवाही दान प्रकाशित हो। अथद्वितीया—

अजाश्वः पशुपा वाजपस्त्यो धियंजिन्वो भुवने विश्वे अर्पितः ।
अष्ट्रां पूषा शिथिरामुद्वरीवृजत्संचक्षाणो भुवना देव ईयते ॥ २ ॥

अजऽअश्वः । पशुऽपाः । वाजऽपस्त्यः । धियम्ऽजिन्वः । भुवने । विश्वे । अर्पितः । अष्ट्राम् । पूषा । शिथिराम् । उत्ऽवरीवृजत् । सम्ऽचक्षाणः । भुवना । देवः । ईयते ॥ २ ॥

अजाश्वः छागवाहनः पशुपाः पशूनांपालयिता वाजपस्त्यः वाजाअन्नानिपस्त्येगृहेयस्य तादृशः धियंजिन्वः धियः स्तोतारः कर्माणिवातेषांप्रीणयिता विश्वेविश्वस्मिन्सर्वस्मिन्भुवने लोकेअर्पितः प्रजापतिनापोषकत्वेनस्थापितः अतएवंभूतः पूषापोषकोदेवः अष्ट्रांआरांस्वहस्तगतांशिथिरांशिथिलांसतींउद्वरीवृजत् उद्यच्छन्भुवनाभुवनानि सर्वांल्लोकान्भूतजातानिवासंचक्षाणः संपश्यन् सूर्यात्मनाप्रकाशयन्नईयते नभसिगच्छति ॥ २ ॥

२. जो छाग-वाहन और पशु-पालक हैं, जिनका गृह अन्न से परिपूर्ण है, जो स्तोताओं के प्रीतिदाता हैं, जो अखिल भुवनों के ऊपर स्थापित हैं, वही देव (पूषा) सूर्यरूप से सारे प्राणियों को प्रकाशित करके और अपने हाथ से आरा उठाकर नभोमण्डल में जाते हैं।

---

१ नि० १२. १७.

पौष्णस्यपशोर्वपापुरोडाशयोर्यास्तेपूषन्नित्यादिकेद्वेऋचावनुवाक्ये सूत्रितंच—यास्तेपूषन्नावोअन्तःसमुद्रइतिद्वेपूषेमाआशाअनुवेदसर्वाइति ।

यास्तेपूषन्नावोअन्तःसमुद्रेहिरण्ययीरन्तरिक्षेचरन्ति ।
ताभिर्यासिदूत्यांसूर्यस्यकामेनकृतश्रवइच्छमानः ॥ ३ ॥

याः । ते । पूषन् । नावः । अन्तरिति । समुद्रे । हिरण्ययीः ।
अन्तरिक्षे । चरन्ति । ताभिः । यासि । दूत्याम् । सूर्यस्य ।
कामेन । कृत । श्रवः । इच्छमानः ॥ ३ ॥

हेपूषन् तेत्वदीयाःयाहिरण्ययीःहिरण्मय्यःहितरमणीयानावः समुद्रेउदधावन्तर्मध्येअन्तरिक्षेनभसिचचरन्ति संचरन्ति ताभिर्नौभिःसूर्यस्यदूत्यंयासिगच्छसि कदाचिद्देवैःसार्धंसूर्येअसुरवधार्थंमस्थितेसति तस्यभार्यास्वभर्तरिसंजातोत्सुकाबभूव तांप्रतिसूर्यःपूषणंप्राहैषीत् तेनचात्रपूषास्तूयते अपिचत्वंश्रवोहविर्लक्षणमन्नंइच्छमानः इच्छन्कामेनपश्वादिविषयेण स्तोतृभिःकृतःवशीकृतोसि ॥ ३ ॥

३. पूषन् तुम्हारी जो सारी हिरणमयी नौकायें समुद्र-मध्यस्थित अन्तरिक्ष में चलती हैं, उनके द्वारा तुम सूर्य का दूत-कार्य करते हो। तुम हव्यरूप अन्न चाहते हो। स्तोता लोग तुम्हें स्वेच्छा से दिये पशु आदि के द्वारा वशीभूत करते हैं।

पूषासुबन्धुर्दिवआपृथिव्याइळस्पतिर्मघवादस्मवर्चाः ।
यंदेवासोअददुःसूर्यायैकामेनकृतंतवसंस्वञ्चम् ॥४॥२४॥

पूषा । सुऽबन्धुः । दिवः । आ । पृथिव्याः । इळः । पतिः । मघऽवा ।
दस्मऽवर्चाः । यम् । देवासः । अददुः । सूर्यायै । कामेन । कृतम् ।
तवसम् । सुऽअञ्चम् ॥ ४ ॥ २४ ॥

पूषापोषकोदेवः दिवआ द्युलोकस्यचपृथिव्याश्चसुबन्धुः शोभनोबन्धुर्भवति तथाइळस्पतिः इळायाअन्नस्यपतिः मघवा मघमितिधननामतद्वान् यद्वा मंहतेर्दानकर्मणोभावसाधनोमघशब्दः दानवान् दस्मवर्चाःवर्चइतिरूपनाम दस्मंदर्शनीयं वर्चोयस्यतादृशः यंपूषणंदेवासःसर्वेदेवाः सूर्यायैसूर्यस्यपत्न्यै यद्वासावित्र्यैसूर्याख्यायै अश्विनोर्वरणायअददुःदत्तवन्तः पुत्रःपितरावबृणीतपूषेतिहिश्रूयते—कीदृशंपूषणं कामेनपश्वादिविषयेणकृतं स्तोतृभिर्वशीकृतं तवसंबलवन्तंप्रवृद्धंवास्वंचंस्वंचनंसुष्ठुगच्छन्तं एवंविधंयंपूषणंददुः सपूषासुबन्धुरित्यन्वयः ॥ ४ ॥

४. पूषा स्वर्ग और पृथिवी के शोभन बन्धु हैं, अन्न के अधिपति हैं, ऐश्वर्यशाली हैं, मनोहर-मूर्त्ति हैं। वे बलशाली, स्वेच्छा से दिये पशु आदि के द्वारा प्रसन्नता के योग्य और शोभन गमन-कर्त्ता हैं। उन्हें देवों ने सूर्य की स्त्री के पास भेजा था।

१ ऋ० सं० ८. ३. २२.।

प्रनुवोचेतिदशर्चंदशमंसूक्तंभरद्वाजस्यार्षं इन्द्राग्निदेवताकं सप्तम्याद्याश्चतस्रोनुष्टुभः शिष्टाः षड्बृहत्यः तथाचानुक्रान्तं—प्रनुदशैन्द्राग्नंतुबार्हतंचतुरनुष्टुबन्तमिति । गतोविनियोगः ।

तत्रप्रथमा—

प्रनुवोचासुतेषुवांवीर्या३ यानिचक्रथुः ।
हतासोवांपितरोदेवशत्रवइन्द्राग्नीजीवथोयुवम् ॥ १ ॥

प्र । नु । वोच । सुतेषु । वाम् । विर्या । यानि । चक्रथुः । हतासः ।
वाम् । पितरः । देवऽशत्रवः । इन्द्राग्नी इति । जीवथः । युवम् ॥१॥

हेइन्द्राग्नी यानिवीर्याविर्याणिवीरकर्माणिचक्रथुःकृतवन्तौ युवांसुतेषुअभिषुतेषुसोमेषु अस्मद्यज्ञे वांयुवयोस्तानिवीर्याणि नुक्षिप्रंप्रवोच प्रवोचंब्रवीमि।तदेववीर्यंदर्शयतिहेइन्द्राग्नी देवशत्रवःदेवाः शत्रवःशातयितारोयेषांतादृशाअसुराः पितरःहिंसकाःपीयतिर्हिंसाकर्मा तस्यैतद्रूपं ईदृशाअसुराः वांयुवाभ्यांहतासोहताआसन्युवंयुवांतु जीवथःजीवनवन्तोभवथः असुरैर्नबाधितावितियावत्॥१॥

१. इन्द्र और अग्नि, तुमने जो वीरता प्रकट की है, उसी वीरता का बखान हम, सोमरस के अभिषुत होने पर, बड़े आग्रह के साथ करते हैं। देवद्वेष्टा असुर तुम्हारे द्वारा मारे गये हैं और तुम लोग अक्षत हो।

बळित्थामहिमावामिन्द्राग्नीपनिष्ठआ ।
समानोवांजनिताभ्रातरायुवंयमाविहेहमातरा ॥ २ ॥

बट् । इत्था । महिमा । वाम् । इन्द्राग्नी इति । पनिष्ठः । आ ।
समानः । वाम् । जनिता । भ्रातरा । युवम् । यमौ । इहेहऽमातरा ॥२॥

हेइन्द्राग्नी वांयुवयोःमहिमामहत्त्वं इत्थाइत्थंअनेनप्रकारेण बट्सत्यं युष्मद्विषयंयज्जन्म महत्वंप्रतिपाद्यते तत्सर्वंयथार्थमित्यर्थः पनिष्ठःआपनिष्ठःस्तुत्यतमश्चप्रजापतिःसमानः एकएव वांयुवयोर्जनिताजनयिता अतोयुवंयुवांभ्रातराभ्रातरौस्थः अपिच यमौयमलौसहोत्पन्नौ इहेह-मातराइहचेहचसर्वत्रमाताययोस्तादृशौस्थः अदितिर्ह्यनयोर्मातासैवविस्तीर्णाभूमिरितिइहेहमात-राविविस्तूयते ॥ २ ॥

२. इन्द्र और अग्नि, तुम लोगों को जो जन्म-माहात्म्य प्रतिपादित होता है, वह सब यथार्थ और अतीव प्रशस्य है। तुम दोनों के एक ही पिता हैं। तुम यमज भाई हो और तुम्हारी माता सर्वत्र विद्यमान हैं।

अथतृतीया—

ओकिवांसासुतेसचाँअश्वासप्तीइवादने ।
इन्द्रान्व१ग्नीअवसेहवज्रिणावयंदेवाहवामहे ॥ ३ ॥

ओकिऽवांसा । सुते । सचा । अश्वा । सप्तीइवेतिसप्तीःइव ।
आदने । इन्द्रा । नु । अग्नी इति । अवसा । इह । वज्रिणा । वयम् ।
देवाः । हवामहे ॥ ३ ॥

हेइन्द्राग्नी सुतेअभिषुतेसोमेयुवांसचासहओकिवांसाओकिवांसौसमवेतौसंगतौभवतं उच समवायइत्यस्यैतद्रूपं तत्रदृष्टान्तः—आदनेभक्षणीयेघासेसप्तीइवाश्वा सर्पणशीलावश्वाविव नुअ-धवयंतादृशाविन्द्राइन्द्रौअग्नीइन्द्राग्नी इहास्मिन्यज्ञेअवसारक्षणेनहेतुनाहवामहे आह्वयामहे । इ-तरेतरयोगाद्वइन्द्रशब्देअग्निशब्देचद्विवचनं कीदृशाविन्द्राग्नी वज्रिणावज्रिणौ आयुधोपेतौ देवादानादिगुणयुक्तौ ॥ ३ ॥

३. इन्द्र और अग्नि, जैसे द्रुतगामी दोनों अश्व भक्षणीय घास की ओर जाते हैं, तुम भी उसी तरह, सोमरस के अभिषुत होने पर, एक साथ जाते हो। अपनी रक्षा के लिए आज हम वज्रधर और दानादि गुण से युक्त इन्द्र और अग्नि को इस यज्ञ में बुलाते हैं।

यइन्द्राग्नीसुतेषुवांस्तवत्तेष्वृतावृधा ।
जोषवाकंवदतःपज्रहोषिणानदेवाभसथश्चन ॥ ४ ॥

यः । इन्द्राग्नी इति । सुतेषु । वाम् । स्तवत् । तेषु । ऋतऽवृधा ।
जोषऽवाकम् । वदतः । पज्रऽहोषिणा । न । देवा । भसथः । चन ॥४॥

हेऋतावृधा ऋतस्यसत्यस्ययज्ञस्यवावर्धयितारावि‌न्द्राग्नी सुतेष्वभिषुतेषुसोमेषु यःस्तोता वांयुवांस्तवदकुत्सितंस्तूयात् तेषुसोमेषुमध्येजोषवाकंवदतः जोषंजोषयितव्यंप्रीतिहेतुत्वेनकर्तव्यं स्वयमप्रीतिकरंतादृशंवाकंवाक्यंवदतस्तस्यस्तोतुःसोमंहेपज्रहोषिणा पज्रःमार्जितःप्रसिद्धः हो-षोघोषः स्तोत्रंययोस्तादृशौहेदेवौ युवांनभसथोनभक्षयथः चनेतिपादपूरकःअत्रनिरुक्तं—जोष-वाकमित्यविज्ञातनामधेयंजोषयितव्यंभवति।यइन्द्राग्नीसुतेषुवांसोमेषुस्तौतितेष्वृतस्यवर्धयितारौ-नस्याश्नीथोयोयंजोषवाकंवदतिविजंजयःमार्जितहोषिणौदेवौनतस्याश्नीथइति[1] ॥ ४ ॥

४. यज्ञ के समृद्धिदाता इन्द्र और अग्नि, तुम्हारा स्तोत्र प्रसिद्ध है। जो व्यक्ति सोमरस के अभिषुत होने पर प्रेम-रहित स्तोत्र द्वारा, कुत्सित रूप से, तुम्हारी स्तुति करता है, उसका दिया सोम तुम नहीं छूते।

अथपंचमी—

इन्द्राग्नीकोअस्यवान्देवौमर्तश्चिकेतति ।
विषूचोअश्वान्युयुजानईयतएकःसमानआरथे ॥ ५ ॥ २५ ॥

---

1 नि० ५. २१.

इन्द्राग्नी इति॑ । कः॑ । अ॒स्य । वा॒म् । दे॒वौ॒ । मर्तः॑ । चि॒के॒त॒ति॒ । विषू॑चः ।
अश्वा॑न् । यु॒यु॒जा॒नः । ई॒य॒ते॒ । एकः॑ । स॒मा॒ने । आ । रथे॑ ॥५॥२५॥

हेदेवौ द्योतमानाविन्द्राग्नी वांयुवयोःअस्यइदंकर्मकोमर्तोमनुष्यःचिकेतति जानीयात् न-कोपीत्यर्थः किंतत्कर्म विषूचः नानाअंचतोगच्छतोअश्वान्समानेउभयार्थेएकस्मिन्रथेयुवयोरेकइन्द्रः सूर्यात्मनावर्तमानः युयुजानः तादृशानश्वान्योजयन्आईयते सर्वंजगदभिगच्छति । यद्वाविषूचोनानारूपान्अश्वान्व्यापकान्रश्मीन् समानेएकरूपेरथेसंवत्सरात्मकेयुयुजानोयोजयन् युवयोरेकःसूर्यात्माइन्द्रःआईयतेआगच्छति । एतद्युवयोःकर्मकोयथावज्जानीयादित्यर्थः ॥५॥

५. दीप्ति-सम्पन्न इन्द्र और अग्नि, जिस समय तुममें से सूर्यात्मक इन्द्र नाना प्रकार का गमन करनेवाले अश्वों को जोतकर, अग्नि के साथ एक रथ पर चढ़कर, जाते हैं, उस समय कौन मनुष्य तुम्हारे इस कार्य का विचार करेगा या जानेगा? (कोई भी नहीं)

॥ इतिचतुर्थस्याष्टमेपंचविंशोवर्गः ॥ २५ ॥

इन्द्राग्नीअ॒पादि॒यंपूर्वागा॑त्प॒द्वती॑भ्यः ।
हि॒त्वीशिरो॑जि॒व्हया॒वाव॑द॒च्चर॑त्त्रि॒ंशत्प॒दान्य॑क्रमीत् ॥ ६ ॥

इन्द्रा॑ग्नी इति॑ । अ॒पात् । इ॒यम् । पूर्वा॑ । आ । अ॒गा॒त् ।
प॒त्ऽवती॑भ्यः । हि॒त्वी । शिरः॑ । जि॒ह्वया॑ । वाव॑दत् । चर॑त् । त्रि॒ंशत् ।
प॒दा । नि । अ॒क्र॒मी॒त् ॥ ६ ॥

हेइन्द्राग्नी अपात्पादरहिताइयमुषाःपद्वतीभ्यःपादयुक्ताभ्यःसुप्ताभ्यःप्रजाभ्यः पूर्वाप्रथमाभाविनीसती आगात्आगच्छति । तथाप्राणिनांशिरोहित्वीप्रेरयित्री यद्वाशिरोहित्वात्यक्त्वा स्वयमशिरस्कासती जिह्वयाप्राणिस्थयातदीयेनवागिन्द्रियेणवावदत् भृशंशब्दंकुर्वन्तीचरत् एवंचरन्तीउषास्त्रिंशत्पदानिअवयवभूतान्त्रिंशन्मुहूर्तान्न्यक्रमीत् एकेनदिवसेनातिक्रामति एतच्च युवयोःकर्मतत्कोजानीयादितिपूर्वेणान्वयः ॥ ६ ॥

६. हे इन्द्र और अग्नि, पाद-रहित यही उषा प्राणियों के शिरोदेश को उत्तेजित करके और उनकी जिह्वाओं से उच्च शब्द कराकर पादसम्पन्न और निद्रित जीवों की अभिमुख वर्त्तिनी हो रही हैं और इसी प्रकार तीस पद (मुहूर्त्त) अतिक्रम करती हैं।

इन्द्रा॑ग्नी॒आहि॒तन्व॒तेनरो॒धन्वा॑निबा॒ह्वोः ॥
मानो॑अ॒स्मिन्म॑हाध॒नेपरा॑वर्क्तंगवि॑ष्टिषु ॥ ७ ॥

इन्द्रा॑ग्नी॒ इति॑ । आ । हि । त॒न्वते॑ । नरः॑ । धन्वा॑नि । बा॒ह्वोः॑ । मा ।
नः॒ । अ॒स्मिन् । म॒हा॒ऽध॒ने । परा॑ । व॒र्क्त॒म् । गोऽइ॑ष्टिषु ॥ ७ ॥

हेइन्द्राग्नी नरोयोद्धारोमनुष्याःबाह्वोर्हस्तयोःधन्वानिधनूंषिअतन्वतेहि आततज्यानिकुर्वंते-हि। युवांचास्मिन्महाधनेजेतव्येनमहाधनेनोपेतेसंग्रामे गविष्टिषुगवामन्वेषणेषुनोस्मान्मापरावर्क्तं मापरित्यजतं ॥ ७॥

७. इन्द्र और अग्नि, योद्धा लोग दोनों हाथों से धनुष फैलाते हैं। इस महासंग्राम में, गौओं के अनुसन्धान के समय, हमें नहीं छोड़ना।

इन्द्राग्नीतपन्तिमाघाअर्योअरातयः।
अपद्वेषांस्याकृतंयुयुतंसूर्यादधि ॥ ८॥

इन्द्राग्नी इति। तपन्ति। मा। अघाः। अर्यः। अरातयः।
अप। द्वेषांसि। आ। कृतम्। युयुतम्। सूर्यात्। अधि ॥ ८॥

हेइन्द्राग्नी अघाआहंत्र्यः अर्यःअभिगंत्र्यः अरातयःशत्रुसेनामातपन्तिमांबाधन्ते ताअपाकृतंअपाकुरुतं। तथाद्वेषांसिद्वेष्टॄन्शत्रून्सूर्यादधि अधिःपंचम्यर्थानुवादकः सूर्यदर्शनाद्युयुतं-पृथक्कुरुतंचयथातेसूर्यंनपश्यन्तितथाकुरुतं मारयतमित्यर्थः ॥ ८॥

८. इन्द्र और अग्नि, हनन-परायण और आक्रमण-कर्त्ता शत्रु हमें पीड़ित कर रहे हैं। उन्हें तुम दूर करो और उन्हें सूर्य-दर्शन से भी वञ्चित करो (विनष्ट करो)।

इन्द्राग्नीयुवोरपिवसुदिव्यानिपार्थिवा।
आनइहप्रयच्छतंरयिंविश्वायुपोषसम् ॥ ९॥

इन्द्राग्नी इति। युवोः। अपि। वसु। दिव्यानि। पार्थिवा। आ।
नः। इह। प्र। यच्छतम्। रयिम्। विश्वायुऽपोषसम् ॥ ९॥

हेइन्द्राग्नी युवोर्युवयोःदिव्यानिदिविभवानि पार्थिवापृथिव्यांभवानि लोकद्वयसंबन्धीनि वसुवसूनि अपिहितानियुवयोरेववर्तन्ते अतःकारणाद्इहास्मिन्यज्ञेनोस्मभ्यंरयिंधनंआअभिप्रयच्छतं। कीदृशंरयिं विश्वायुपोषसं आयवइतिमनुष्यनाम सर्वेषांमनुष्याणांपोषणायपर्याप्तं यद्वासर्वस्यायुषःपोषणेशक्तं छान्दसोवर्णलोपः ॥ ९ ॥

९. इन्द्र और अग्नि, तुम लोग दिव्य और पार्थिव—सारे धनों के अधिपति हो; इसलिए इस यज्ञ में हमें जीवन-पोषक सारे धन दो।

इन्द्राग्नीउक्थवाहसास्तोमेभिर्हवनश्रुता।
विश्वाभिर्गीर्भिरागतमस्यसोमस्यपीतये ॥ १० ॥२६॥

इन्द्राग्नी इति। उक्थऽवाहसा। स्तोमेभिः। हवनऽश्रुता। विश्वाभिः।
गीःऽभिः। आ। गतम्। अस्य। सोमस्य। पीतये ॥ १० ॥२६॥

हेउकथवाहसाउक्थैःस्तुतिभिर्वहनीयौ हेहवनश्रुता हवनस्यआह्वानस्यश्रोतारौ एवंभूतौ हेइन्द्राग्नी स्तोमेभिःस्तोत्रैःविश्वाभिःसर्वाभिर्गीर्भिःशस्त्ररूपाभिर्वाग्भिश्च हेतुभूताभिरागतमागच्छतं। किमर्थं अस्यास्मदीयस्यसोमस्यपीतयेपानार्थं ॥ १० ॥

१०. स्तोत्र-द्वारा आकर्षणीय इन्द्र और अग्नि, हमारे इस सोमरस का पान करने के लिए आओ; क्योंकि तुम लोग स्तोत्रों और उपासनाओं से युक्त आह्वान सुनते हो।

॥ इतिचतुर्थस्याष्टमेषड्विंशोवर्गः ॥ २६ ॥

श्नथद्वृत्रमितिपंचदशर्चमेकादशंसूक्तं भरद्वाजस्यार्षमैन्द्राग्नं आदौतिस्रस्त्रिष्टुभः चतुर्थ्याद्यानवगायत्र्यः त्रयोदशीत्रिष्टुप् चतुर्दशीबृहती पंचदश्यनुष्टुप् तथाचानुक्रान्तं—श्नथत्पंचोनागायत्रंतुत्रित्रिष्टुबादित्रिष्टुब्बृहत्यनुष्टुबन्तमिति। गतःसूक्तविनियोगः। वरुणप्रघासेषुऐन्द्राग्नस्यहविषः श्नथदित्येषायाज्या सूत्रितंच—इन्द्राग्नीअवसागतंश्नथद्वृत्रमुतसनोतिवाजमिति।

सैषाप्रथमा—

श्नथंद्वृत्रमुतसंनोतिवाजमिन्द्रायोअग्नीसहुरीसपर्यात्।
इरज्यन्तावसव्यस्यभूरेःसहस्तमासहसावाजयन्ता ॥ १ ॥
श्नथंत्। वृत्रम्। उत। सनोति। वाजम्। इन्द्रा। यः।
अग्नी इति। सहुरी इति। सपर्यात्। इरज्यन्ता। वसव्यस्य।
भूरेः। सहःऽतमा। सहसा। वाजऽयन्ता ॥ १ ॥

सपुरुषः वृत्रमावरकंशत्रुंश्नथत् हिनस्ति उतअपिच वाजमन्नंबलंवासनोति लभते यःपुरुषः सहुरीशत्रूणामभिभवितारौविन्द्राग्नीसपर्यात् परिचरेत्। इतरेतरयोगादुभयत्रपूर्ववद्विवचनं कीदृशाविन्द्राग्नी भूरेःप्रभूतस्यवसव्यस्य वसुसमूहस्य यद्वास्वार्थिकोयत् धनस्यइरज्यन्ता ईशानौस्वामिनौ इरज्यतिरैश्वर्यकर्मा सहसाबलेनसहस्तमाअतिशयेनाभिभवितारौ शत्रूणांवाजयन्तावाजं हविर्लक्षणमन्नंआत्मनइच्छन्तौ यद्वावाजंस्तोतृभ्योदातव्यमन्नंकामयमानौ ॥ १ ॥

१. जो विशाल धन के स्वामी हैं, जो बलात् शत्रुहन्ता हैं और जो अन्नाभिलाषी इन्द्र और अग्नि की सेवा करते हैं, वे शत्रु-संहार और अन्न-लाभ करते हैं। अथद्वितीया—

तायोधिष्टमभिगाइन्द्रनूनमपःस्वरुषसोअग्नऊह्ळाः।
दिशःस्वरुषसइन्द्रचित्राअपोगाअग्नेयुवसेनियुत्वान् ॥ २ ॥
ता। योधिष्टम्। अभि। गाः। इन्द्र। नूनम्। अपः। स्वः।
उषसः। अग्ने। ऊह्ळाः। दिशः। स्वः। उषसः। इन्द्र।
चित्राः। अपः। गाः। अग्ने। युवसे। नियुत्वान् ॥ २ ॥

हेइन्द्र हेअग्ने ता तौ युवांगाःआपःउदकानिस्वःसूर्यंउषसःउषःकालान् ऊह्लाःपणिभिर-पहृताः एतान्गवादीनभिलक्ष्ययोधिष्टं तैरसुरैःयुद्धंकृतवन्तौ नूनमितिपादपूरणार्थः हेइन्द्र त्वंदिशःप्राच्याद्याःस्वःसूर्यंउषसश्चचित्राश्चायनीयाअपउदकानिच गाश्च पणिभिरपहृतानेतान्युवसे अनेनलोकेनायोजयःयद्वाअसुरैरावृतान्दिगादीन्असुरवधेनावरणमपनीय पृथक्कृतवानसीत्यर्थः हेअग्ने नियुत्वान्नियुद्भिरश्वैर्युक्तःसन् त्वमप्येवमकार्षीरित्यर्थः ॥ २ ॥

२. इन्द्र और अग्नि, तुमने अपहृत धेनुओं, वारि-राशि, सूर्य और उषा के लिए युद्ध किया था। इन्द्र, तुमने दिशाओं, सूर्य, उषाओं, विचित्र जल और गौओं को संसार के साथ योजित किया है। हे अश्वों के अधिपति अग्नि, तुमने भी ऐसे कार्य किये हैं।

ऐन्द्राग्नस्यपशोर्वपायाआवृत्रहणेत्यनुवाक्या सूत्रितंच—आवृत्रहणावृत्रहभिःशुष्मैराभरतं शिक्षतंवज्रबाहूइति ।

**आवृत्रहणावृत्रहभिःशुष्मैरिन्द्रयातंनमोभिरग्नेअर्वाक् ।**
**युवंराधोभिरकवेभिरिन्द्राग्नेअस्मेभवतमुत्तमेभिः ॥ ३ ॥**

आ । वृत्रऽहना । वृत्रऽहभिः । शुष्मैः । इन्द्र । यातम् ।
नमःऽभिः । अग्ने । अर्वाक् । युवम् । राधःऽभिः । अकवेभिः ।
इन्द्र । अग्ने । अस्मे इति । भवतम् । उत्ऽतमेभिः ॥ ३ ॥

हेवृत्रहणा वृत्रस्यासुरस्यहन्तारौ हेइन्द्र हेअग्ने वृत्रहभिःवृत्रस्यहन्तृभिःवृत्रहनननिमित्तैः शुष्मैर्बलैः नमोभिःअस्मभ्यंदातव्यैरन्नैश्च सार्धं अर्वाक्अस्मदभिमुखंआयातमागच्छतं। हेइन्द्र हेअग्ने युवंयुवांअकवेभिःअकुत्सितैर्महद्भिःउत्तमेभिः उत्कृष्टतमैःराधोभिःधनैःसहअस्मेअस्मासुभवतमाविर्भवतं ॥ ३ ॥

३. हे वृत्र-हन्ता इन्द्र और अग्नि, तुम हमारे हव्यान्न-द्वारा परिपुष्ट होने के लिए शत्रु-नाशक बल के साथ हमारे सामने आओ। इन्द्र और अग्नि, तुम लोग अनिन्द्य और अत्युत्कृष्ट धन के साथ हमारे पास आविर्भूत होओ।

चातुर्विंशिकेहनिप्रातःसवनेच्छावाकशस्त्रेताहुवेइतिषळहःस्तोत्रियस्तृचः सूत्रितंच—ताहुवेययोरिदमियंवामस्यमन्मनइति । पृष्ठ्याभिप्लवषडहयोःस्तोमवृद्धौताहुवइत्याद्यानवर्चआवापार्थाः सूत्रितंच—ताहुवेययोरिदमितिनवेयंवामस्यमन्मनइत्येकादशेति ।

**ताहुवेययोरिदंपप्नेविश्वंपुराकृतम् । इन्द्राग्नीनमर्धतः ॥ ४ ॥**

ता । हुवे । ययोः । इदम् । पप्ने । विश्वम् । पुरा । कृतम् ।
इन्द्राग्नी इति । न । मर्धतः ॥ ४ ॥

ता तौ तादृशाविन्द्राग्नी हुवे आह्वये ययोरिन्द्राग्न्योः पुरापूर्वस्मिन्कालेकृतंविश्वंसर्वंइदं पूर्वास्वृक्षुकीर्तितंवीर्यंपमेपन्यते ऋषिभिःस्तूयते ताविन्द्राग्नीहुवइत्यन्वयः तौचेन्द्राग्नीनमर्धतःस्तोतॄन्नहिंस्तः अतःअस्मानप्याहूतोरक्षतामितिभावः मर्धतिर्हिंसाकर्मा ॥ ४ ॥

४. प्राचीन समय में ऋषियों-द्वारा जिनके सारे वीर-कार्य कीर्त्तित हुए हैं, मैं उन्हीं इन्द्र और अग्नि को बुलाता हूँ। वे स्तोताओं की हिंसा नहीं करते।

अथपंचमी—

उग्राविघनिनामृधइन्द्राग्नीहवामहे। तानोमृळातईदृशे॥५॥२७॥

उग्रा। विऽघनिना। मृधः। इन्द्राग्नी इति।

हवामहे। ता। नः। मृळातः। ईदृशे॥ ५॥ २७॥

उग्राउग्रौ उद्गूर्णबलौ अतएवमृधःशत्रून्विघनिनौविघनिनाविशेषेणहतवन्तौ इन्द्राग्नीहवामहे आह्वयामहे। तौचेन्द्राग्नीईदृशेस्मिन्संग्रामेनोस्मान्मृळातःसुखयतां यद्वामृळतिरुपदयाकर्मा नोस्माकंमृळतःउपदयांकुरुतां ॥ ५ ॥

५. हम प्रचण्ड-बलशाली, शत्रुहन्ता इन्द्र और अग्नि को बुलाते हैं। वे हमें ऐसे युद्ध में कृतकार्य्य करके सुखी बनावें।

॥ इतिचतुर्थस्याष्टमेसप्तविंशोवर्गः ॥ २७ ॥

अथषष्ठी—

हतोवृत्राण्यार्याहतोदासानिसत्पती। हतोविश्वाअपद्विषः॥६॥

हतः। वृत्राणि। आर्या। हतः। दासानि। सत्पतीइतिसत्ऽपती।

हतः। विश्वाः। अप। द्विषः॥ ६॥

ताविन्द्राग्नीआर्याआर्यैःकर्मानुष्ठातृभिःकृतानिवृत्राण्युपद्रवजातानिहतःहिंस्तः तथासत्पतीसतांपालयितारौइन्द्राग्नी दासानिदासाः कर्महीनाः शत्रवःतैः कृतानिचोपद्रवजातानि हितः अपिचविश्वाःसर्वाद्विषः द्वेष्ट्रीःशत्रुभूताःप्रजाः अपहतःविनाशयतः अतोस्माकमप्येवमेवकुरुतामितिभावः ॥ ६ ॥

६. साधुओं के रक्षक इन्द्र और अग्नि, धार्मिकों और अधार्मिकों-द्वारा कृत समस्त उपद्रवों का निवारण करते हैं। उन्होंने सारे विद्वेषियों का संहार किया है।

चातुर्विंशिकेहनिप्रातःसवनेच्छावाकशस्त्रेइन्द्राग्नीयुवामितिषळृचःस्तोत्रियस्तृचः सूत्रितंच—इन्द्राग्नीयुवामिमेयज्ञस्यहिस्थऋत्विजेत्यच्छावाकस्येति।

इन्द्राग्नीयुवामिमेऽभिस्तोमाअनूषत। पिबतंशम्भुवासुतम्॥७॥

इन्द्राग्नी इति। युवाम्। इमे। अभि। स्तोमाः।

अनूषत। पिबतम्। शम्ऽभुवा। सुतम्॥ ७॥

हेइन्द्राग्नी युवांइमेस्तोमाःस्तोतारः अभ्यनूषत अभिष्टुवन्ति हेशंभुवा सुखस्यभावयिताराविन्द्राग्नी सुतमभिषुतमस्मदीयंसोमंपिबतं ॥ ७ ॥

७. इन्द्र और अग्नि, ये स्तोता तुम्हारी स्तुति करते हैं। हे सुखदाता इन्द्र और अग्नि, तुम इस अभिषुत सोम को पियो।

यावांसन्तिपुरुस्पृहोनियुतोदाशुषेनरा । इन्द्राग्नीताभिरागतम् ॥ ८ ॥

या । वाम् । सन्ति । पुरुऽस्पृहः । निऽयुतः । दाशुषे ।
नरा । इन्द्राग्नी इति । ताभिः । आ । गतम् ॥ ८ ॥

हेनरानेताराविन्द्राग्नी वांयुवयोःस्वभूताःपुरुस्पृहःपुरुभिर्बहुभिःस्पृहणीयाः दाशुषेहवींषि दत्तवतेयजमानार्थंउत्पन्नाः या नियुतोश्वाःसन्ति हेइन्द्राग्नी ताभिर्नियुद्भिरागतंआगच्छतं ॥ ८ ॥

८. नेता इन्द्र और अग्नि, बहु-लोग-वाञ्छनीय और हव्यदाता के लिए उत्पन्न जो तुम्हारे घोड़े हैं, उन सब पर चढ़कर आओ।

ताभिरागच्छतंनरोपेदंसवनंसुतम् । इन्द्राग्नीसोमपीतये ॥ ९ ॥

ताभिः । आ । गच्छतम् । नरा । उप । इदम् । सवनम् ।
सुतम् । इन्द्राग्नी इति । सोमऽपीतये ॥ ९ ॥

हेनरानेताराविन्द्राग्नी सूयतेअभिषूयतेइतिसवनःसोमः इदंसवनंइमंसोमंसुतमभिषुतंउपप्रति यद्वाइदंप्रातःसवनंउपअस्मिन्सवनेसुतमभिषुतंसोमंप्रतिताभिःनियुद्भिरागच्छतं किमर्थं सोमपीतये तस्यसोमस्यपानार्थं॥ ९ ॥

९. नेता इन्द्र और अग्नि, इस सवन में अभिषुत सोमरस का पान करने के लिए आओ।

तमीळिष्वयोअर्चिषावनाविश्वापरिष्वजत् । कृष्णाकृणोतिजिह्वया ।१०।२८।

तम् । ईळिष्व । यः । अर्चिषा । वना । विश्वा । परिऽस्वजत् ।
कृष्णा । कृणोति । जिह्वया ॥ १० ॥ २८ ॥

हेस्तोतः तमग्निंईळिष्वस्तुहि योग्निःअर्चिषाज्वालारूपेणतेजसाविश्वासर्वाणिवनान्यरण्यानिपरिष्वजत् परिष्वजति परितोवेष्टयति यश्चतानिवनानिजिह्वयाज्वालयादग्धाकृष्णाकृष्णवर्णानिकृणोतिकरोति ॥ १० ॥

१०. स्तोता, जो अग्नि अपनी शिखा-द्वारा समस्त वनों को ढक लेते हैं और ज्वाला-रूप जिह्वा-द्वारा उन्हें काले कर देते हैं, तुम उन्हीं अग्नि की स्तुति करो।

॥ इतिचतुर्थस्याष्टमेष्टाविंशोवर्गः ॥ २८ ॥

अथैकादशी—

यइद्धआविवासतिसुम्नमिन्द्रस्यमर्त्यः । द्युम्नायसुतराअपः ॥११॥

यः । इद्धे । आऽविवासति । सुम्नम् । इन्द्रस्य ।
मर्त्यः । द्युम्नाय । सुऽतराः । अपः ॥ ११ ॥

योमर्त्योमनुष्यः इद्धेदीप्तेऽग्नौसुम्नंसुखकरंहविःइन्द्रस्यइन्द्रायआविवासति परिचरतिप्रयच्छति चतुर्थ्यर्थेषष्ठी तस्यमर्त्यस्यद्युम्नायद्योतमानायान्नाय तदर्थंसुतराःसुखेनतरणीयाःअपः उदकानिवृष्ट्यात्मकानिइन्द्रःकरोतीतिशेषः ॥ ११ ॥

११. जो मनुष्य प्रज्वलित अग्नि में इन्द्र के लिए सुखकर हव्य प्रदान करते हैं, इन्द्र उन्हीं व्यक्ति के दीप्ति-सम्पन्न अन्न के लिए कल्याणकर वारि-वर्षण करते हैं।

तानोवाजवतीरिषआशून्पिपृतमर्वतः । इन्द्रमग्निंचवोळ्हवे ॥ १२ ॥

ता । नः । वाजऽवतीः । इषः । आशून् । पिपृतम् ।
अर्वतः । इन्द्रम् । अग्निम् । च । वोळ्हवे ॥ १२ ॥

हेइन्द्राग्नी ता तौयुवांवाजवतीःअन्नवतीःइषःइष्यमाणावृष्टीः यद्वा वाजोबलंतद्वतीरिषोऽन्नानि आशून्शीघ्रगान् अर्वतोऽश्वांश्चनोस्मभ्यंपिपृतंपूरयतं प्रयच्छतं । किमर्थं इन्द्रमग्निंचयुवां वोळ्हवेवोढुं हविर्भिःप्रापयितुं॥ १२ ॥

१२. इन्द्र और अग्नि, हमें बलकर अन्न दो और हमारे हव्य को बलवान् करने के लिए हमें वेगवान् अश्व दो।

ऐन्द्राग्नस्यपशोर्हविषोनुवाक्याउभावामित्येषा सूत्रितंच—उभावामिन्द्राग्नीआहुवध्यैशुचिंनुस्तोमंनवजातमद्येति ।

सैषासूक्तेत्रयोदशी—

उभावामिन्द्राग्नीआहुवध्याउभाराधसःसहमादयध्यै ।
उभादातारविषांरयीणामुभावाजस्यसातयेहुवेवाम् ॥ १३ ॥

उभा । वाम् । इन्द्राग्नी इति । आऽहुवध्यै । उभा । राधसः ।
सह । मादयध्यै । उभा । दातारौ । इषाम् । रयीणाम् । उभा ।
वाजस्य । सातये । हुवे । वाम् ॥ १३ ॥

हेइन्द्राग्नी उभाउभौसंहत्यवर्तमानौवांयुवांहुवेआह्वयामि किमर्थंआहुवध्यै आभिमुख्येनहोतुं तथाउभाउभौयुवामाह्वये राधसःराधसाराधकेनहविषासहयुगपदेवमादयध्यै मादयितुंतर्पयितुंसर्वेषुदेवेषुसत्सुआवयोराह्वानेकिंकारणमितिचेदुच्यते—उभाउभौतौयुवां इषामन्नानांरयीणां धनानांचदातारौस्थः अतःकारणात्उभाउभौ वांयुवां वाजस्यान्नस्यसातये संभजनायहुवे आह्वये ॥ १३ ॥

१३. हे इन्द्र और अग्नि, होम-द्वारा तुम्हें अनुकूल करने के लिए मैं तुम दोनों को बुलाता हूँ। हव्य-द्वारा तुरत तृप्ति करने के लिए मैं तुम दोनों को बुलाता हूँ। तुम दोनों अन्न और धन को देनेवाले हो; इसलिए मैं अन्न-लाभ के लिए दोनों को बुलाता हूँ।

आनोगव्येभिरश्व्यैर्वसव्यै३रुपंगच्छतम् ।
सखायौदेवौसख्यायशम्भुवेन्द्राग्नीताहवामहे ॥ १४ ॥

आ । नः । गव्येभिः । अश्व्यैः । वसव्यैः । उप । गच्छतम् ।
सखायौ । देवौ । सख्याय । शम्ऽभुवा । इन्द्राग्नी इति ।
ता । हवामहे ॥ १४ ॥

हेइन्द्राग्नी गव्येभिर्गोसमूहैः अश्व्यैरश्वसमूहैः वसव्यैर्वसुसमूहैश्चसार्धं नोस्मानाभिमुख्येनउपगच्छतं शेषःपरोक्षकृतः सखायौसमानख्यानौदेवौ दानादिगुणयुक्तौ शंभुवा शंभुवौ सुखस्यभावयितारौ ता तादृशाविन्द्राग्नी सख्यायसखित्वार्थंवयंहवामहे आह्वयामहे ॥ १४ ॥

१४. इन्द्र और अग्नि, तुम गौओं, अश्वों और विपुल धन के साथ हमारे सामने आओ। हम मित्रता के लिए मित्रभूत, दानादि गुणों से युक्त और सुख-प्रदाता इन्द्र और अग्नि का आह्वान करते हैं।

इन्द्राग्नीशृणुतंहवंयजमानस्यसुन्वतः ।
वीतंहव्यान्यागतंपिबतंसोम्यंमधु ॥ १५ ॥ २९ ॥

इन्द्राग्नी इति । शृणुतम् । हवम् । यजमानस्य । सुन्वतः । वीतम् ।
हव्यानि । आ । गतम् । पिबतम् । सोम्यम् । मधु ॥ १५ ॥ २९ ॥

हेइन्द्राग्नी सुन्वतः सोमाभिषवंकुर्वतोयजमानस्यहवमाह्वानंस्तोत्रंशृणुतं श्रुत्वाचतदीयानिहव्यानिहवींषिवीतं कामयेथां। कामयित्वाच आगतंआगच्छतं। आगत्यचसोम्यंसोमात्मकंमधुपिबतं ॥ १५ ॥

१५. इन्द्र और अग्नि, तुम सोम का अभिषव करनेवाले यजमान का आह्वान सुनो। हव्य की इच्छा करो, आओ और मधुर सोमरस का पान करो।

॥ इतिचतुर्थस्याष्टमेएकोनत्रिंशोवर्गः ॥ २९ ॥

इयमददादितिचतुर्दशर्चंद्वादशंसूक्तं भरद्वाजस्यार्षं सरस्वतीदेवताकं आदितस्तिस्रोजगत्यः त्रयोदश्यपिजगती चतुर्दशीत्रिष्टुप् शिष्टागायत्र्यः तथाचानुक्रांतं—इयंषळूनासारस्वतंत्रिजगत्यादिजगतीत्रिष्टुबन्तमिति। अत्रशौनकः—इयमित्येतदाद्यन्तुसूक्तंसारस्वतंजपेत्। द्विजः प्रातः शुचिर्भूत्वावाग्मीभवतिबुद्धिमानिति १ पार्ष्ठिकेषष्ठेहनिप्रउगेइयमददादितिसारस्वतस्तृचः सूत्रितंच—इयमददाद्रभसमृणच्युतमितिप्रउगमिति।

तत्रप्रथमा—

इ॒यम॑ददाद्र॒भ॒सम्॑ण॒च्युतं॒ दिवो॑दासंवध्र्य॒श्वाय॑दा॒शुषे॑।
याशश्वं॑न्तमाच॒खादा॑व॒सं प॒णिंता ते॑दा॒त्राणि॑त॒विषा सर॑स्वति ॥१॥

इ॒यम्। अद॑दा॒त्। र॒भ॒सम्। ऋ॒ण॒ऽच्युत॑म्। दिवः॑ऽदासम्। व॒ध्र्य॒ऽश्वाय॑। दा॒शुषे॑। या। शश्व॑न्तम्। आ॒ऽच॒खाद॑। अ॒व॒सम्। प॒णिम्। ता। ते॒। दा॒त्राणि॑। त॒वि॒षा। सर॑स्व॒ति॒ ॥ १ ॥

इयंसरस्वती रभसंवेगवन्तंऋणच्युतं वैदिकस्यदेवऋषिपितृसंबन्धिनोलौकिकस्यचऋणस्यच्यावयितारं दिवोदासमेतत्संज्ञंपुत्रं दाशुषेहवींषिदत्तवतेवध्र्यश्वाय एतत्संज्ञायऋषयेअददात् दत्तवती। यासरस्वतीशश्वन्तंबहुलंपणिंपणनशीलंवणिजं अदातृजनं अवसंकेवलंस्वात्मनएवतर्पकं आचखादआजघान। सेयमददादित्यन्वयः अथप्रत्यक्षीकृत्यस्तौति हेसरस्वति देवि तातानि पुत्रदानादीनितेत्वदीयानिदात्राणिदानानि तविषातविषाणिमहान्तिभवन्ति ॥ १ ॥

१. इन्हीं सरस्वती देवी ने हव्यदाता बध्र्यश्व को वेगवान् तथा ऋणमोचक दिवोदास नाम का एक पुत्र दिया है। उन्होंने बहुल आत्म-तर्पक तथा दान-विमुख पणि का संस्कार किया। सरस्वति, तुम्हारे ये दान बहुत महान् हैं।

अथद्वितीया—

इ॒यंशुष्मे॑भिर्बिस॒खाइ॑वारुज॒त्सानु॑गिरी॒णांत॑वि॒षेभि॑रू॒र्मिभिः॑।
पा॒रा॒व॒त॒घ्नीमव॑सेसुवृ॒क्तिभि॒ः सर॑स्वती॒मावि॑वासेमधी॒तिभिः॑ ॥ २ ॥

इ॒यम्। शुष्मे॑भिः। बि॒स॒खाःऽइ॑व। अ॒रु॒ज॒त्। सानु॑। गि॒री॒णाम्। त॒वि॒षेभिः॑। ऊ॒र्मिऽभिः॑ पा॒रा॒व॒त॒ऽघ्नीम्। अव॑से। सु॒वृ॒क्तिऽभिः॑। सर॑स्वतीम्। आ। वि॒वा॒से॒म॒। धी॒तिऽभिः॑ ॥ २ ॥

सरस्वतीदेवतारूपेणनदीरूपेणचवर्तते देवतारूपास्तुताधुनानयानदीरूपांसरस्वतींस्तौति। इयं नदीरूपासरस्वतीशुष्मैःशोषकैरात्मीयैर्बलैःतविषेभिः महद्भिरूर्मिभिःतरंगैःगिरीणांपर्वतानांतीरसंबद्धानां सानुसानूनिअरुजद्भनक्ति। बिसखाइवबिसंखनतीतिबिसखाःसयथाबिसार्थंपंकंरुजतिवद्व तांसरस्वतींपारावतघ्नीं परावतिदूरदेशेविद्यमानस्यापिवृक्षादेर्हंत्रीं सुवृक्तिभिःस्तुतिभिःधीतिभिःकर्मभिश्चअवसेरक्षणार्थंआविवासेम परिचरेम। यद्वा पारावतघ्नीं पारावारेपरार्वाचीतीरेतयोर्घातिनीं। उक्तंच—पारावतघ्नींपारावारघातिनीमिति॥ २॥

२. ये सरस्वती (नदी) मृणाल-खननकारी की तरह प्रबल और वेगवान् तरंगों के साथ पर्वततटों को भग्न करती हैं। रक्षा के लिए हम स्तुति और यज्ञ द्वारा दोनों तटों का विनाश करनेवाली सरस्वती की परिचर्या करते हैं। अथतृतीया—

सरस्वतिदेवनिदोनिर्बर्हयप्रजांविश्वस्यबृसयस्यमायिनः।
उतक्षितिभ्योवनीरविन्दोविषमेभ्योअस्रवोवाजिनीवति॥ ३॥

सरस्वति। देवऽनिदः। नि। बर्हय। प्रऽजाम्। विश्वस्य। बृसयस्य। मायिनः। उत। क्षितिऽभ्यः। अवनीः। अविन्दः। विषम्। एभ्यः। अस्रवः। वाजिनीऽवति॥ ३॥

हेसरस्वति देवनिदोदेवानांनिन्दकानसुरान्निबर्हयन् न्यवर्हयः अवधीः। तथाविश्वस्यव्याप्तस्यमायिनोमायाविनःबृसयस्य बृसयइतित्वष्टुर्नामधेयं त्वष्टुःप्रजांपुत्रंवृत्रासुरंचन्यवधीः। त्वत्साहाय्यादेवइन्द्रोहतवानित्यर्थः। उतअपिच हेवाजिनीवति अन्नवतिसरस्वति त्वंक्षितिभ्योमनुष्येभ्यः अवनीः असुरैरपहृताभूमीःअविन्दः अलंभयः। एभ्योमनुष्येभ्यःविषमुदकंचअस्रवःअक्षारयः। यद्वा क्षितयोसुरजनाः तेभ्यःसकाशात्अवनीःभूमीः अविन्दोलब्धवानसि तान्हत्वाएभ्यश्चासुरेभ्यः विषंप्रतिहेतुभूतंगरलंअस्रवः॥ ३॥

३. सरस्वति, तुमने देव-निन्दकों का वध किया है और सर्वव्यापी वृसय वा त्वष्टा के पुत्र का संहार किया है अथवा तुम्हारी सहायता से इन्द्र ने संहार किया है। अन्न-सम्पन्ना सरस्वति, तुमने मनुष्यों को भूमि-प्रदान किया है और उनके लिए वारि-वर्षण भी किया है।

प्रणोदेवीसरस्वतीवाजेभिर्वाजिनीवती। धीनामवित्र्यवतु॥ ४॥

प्र। नः। देवी। सरस्वती। वाजेभिः। वाजिनीऽवती। धीनाम्। अवित्री। अवतु॥ ४॥

---

1 नि० २. २४.।

देवी दानादिगुणयुक्ता वाजिनीवती वाजोऽन्नंयस्यांक्रियायांसावाजिनी तद्युक्ता धीनां ध्यातॄणांस्तोतॄणांअवित्रीरक्षित्री एवंभूतासरस्वती वाजेभिरन्नैर्नोस्मान्प्रावतुप्रकर्षेणतर्पयतु ॥ ४ ॥

४. दानशालिनी, अन्न-युक्ता और स्तोताओं की रक्षाकारिणी सरस्वती अन्न द्वारा भली भाँति हमारी तृप्ति करें।

यस्त्वांदेविसरस्वत्युपब्रूतेधनेहिते । इन्द्रंनवृत्रतूर्ये ॥ ५ ॥ ३० ॥

यः । त्वा । देवि । सरस्वति । उपऽब्रूते । धने । हिते । इन्द्रम् । न । वृत्रऽतूर्ये ॥ ५ ॥ ३० ॥

हेदेवि सरस्वति यःस्तोतावृत्रतूर्येसंग्रामेधनेहितेनिहितेनिमित्तभूतेसति इन्द्रंनइन्द्रमिवत्वां उपब्रूते स्तौति तंरक्षेतिशेषः ॥ ५ ॥

५. देवी सरस्वति, जो व्यक्ति इन्द्र की तरह तुम्हारी स्तुति करता है, वही व्यक्ति जिस समय धन-प्राप्ति के लिए युद्ध में प्रवृत्त होता है, उस समय उसकी तुम रक्षा करना।

॥ इतिचतुर्थस्याष्टमेत्रिंशोवर्गः ॥ ३० ॥

त्वंदेविसरस्वत्यवावाजेषुवाजिनि । रदांपूषेवनःसनिम् ॥ ६ ॥

त्वम् । देवि । सरस्वति । अव । वाजेषु । वाजिनि । रद । पूषाऽइव । नः । सनिम् ॥ ६ ॥

हेदेवि दानादिगुणयुक्ते हेवाजिनि वाजोबलमन्नंवातद्युक्तेहेसरस्वति त्वंवाजेषुसंग्रामेषुअव अस्मान्रक्ष । अपिच नोस्मभ्यंपूषेवपोषकोदेवइव सनिंसंभजनीयंधनंरद विलिख प्रयच्छेतियावत् ॥ ६ ॥

६. अन्न-शालिनी सरस्वति, संग्राम में हमारी रक्षा करना और पूषा की तरह हमारे भोग्य के लिए धन प्रदान करना।

उतस्यानःसरस्वतीघोराहिरण्यवर्तनिः । वृत्रघ्नीवष्टिसुष्टुतिम् ॥ ७ ॥

उत । स्या । नः । सरस्वती । घोरा । हिरण्यऽवर्तनिः । वृत्रऽघ्नी । वष्टि । सुऽस्तुतिम् ॥ ७ ॥

उतअपिच स्यासाप्रसिद्धासरस्वती घोराशत्रूणांभयकारिणी हिरण्यवर्तनिः वर्ततेअनेनेतिवर्तनिःरथःहिरण्मयोवर्तनिर्यस्याःसातथोक्ता वृत्रघ्नी वृत्राणाशत्रूणांहंत्री एवंभूतासासरस्वती नोस्मदीयांसुष्टुतिं शोभनांस्तुतिंवष्टिकामयतां ॥ ७ ॥

७. भीषण, हिरण्मय रथ पर आरूढ़ और शत्रुघातिनी वही सरस्वती हमारे मनोहर स्तोत्र की इच्छा करें।

अथाष्टमी—

यस्याअनन्तोअह्रुतस्त्वेषश्चरिष्णुरर्णवः । अमश्चरतिरोरुवत् ॥८॥

यस्याः । अनन्तः । अह्रुतः । त्वेषः । चरिष्णुः । अर्णवः । अमः । चरति । रोरुवत् ॥ ८ ॥

यस्याःसरस्वत्याः अमोबलंअनन्तः अपर्यन्तः अपरिमितः अह्रुतः अहिंसितः अकुटिलोवात्वेषोदीप्तः चरिष्णुः चरणशीलः सर्वत्राप्रतिहतगतिरित्यर्थः अर्णवः उदकवान्उदकप्रदइत्यर्थः एवंभूतःसन् रोरुवत्भृशंशब्दंकुर्वन्चरति वर्तते । सानोविश्वाइत्युत्तरत्रसंबन्धः ॥८॥

८. सरस्वती का अपरिमित, अकुटिल, दीप्त और अप्रतिहत-गति जलवर्षक वेग, प्रचण्ड शब्द करता, विचरण करता है।

सानोविश्वाअतिद्विषःस्वसॄरन्याऋतावरी । अतन्नहेवसूर्यः ॥९॥

सा । नः । विश्वाः । अति । द्विषः । स्वसॄः । अन्याः । ऋतऽवरी । अतन् । अहाऽइव । सूर्यः ॥ ९ ॥

सासरस्वतीनोस्मान्विश्वाःसर्वाद्विषोद्वेष्ट्रीःप्रजाःअतिनयतु अतितारयतु तथास्वसॄः स्वयंसारिणीः सहोत्पन्नावा ऋतावरी ऋतमित्युदकनाम तद्युक्ताअन्याश्चनदीः अस्मान्अतिनयतु यद्वा जस्येव वाच्छन्दसीतिपूर्वसवर्णदीर्घः उदकवत्यःस्वसारोभगिन्योअन्याःगंगाद्यानद्यश्चअस्मान् शत्रूनतिनयन्तु तत्रदृष्टान्तः—सूर्यःसर्वस्यप्रेरकआदित्यः अतन्सततंगच्छन् अहेवअहानीवयथाअहानिशीघ्रमतिनयतितद्वत् ॥ ९ ॥

९. नियत भ्रमणकारी सूर्य जैसे दिन को ले आते हैं, वैसे ही वे सरस्वती हमारे सारे शत्रुओं को पराजित करें और अपनी अन्यान्य जलमयी भगिनियों को हमारे पास ले आवें।

दशरात्रेतृतीयेहनिप्रउगेउतनःप्रियेतिसारस्वतस्तृचः सूत्रितंच—उतनःप्रियाप्रियास्वित्यौष्णिहंप्रउगमिति । पवित्रेष्ट्यांउतनःप्रियेतिसारस्वतस्यहविषोनुवाक्या सूत्रितंच—उतनः प्रियाप्रियास्विमाजुह्वानायुष्मदानमोभिरिति ।

तृचेप्रथमासूक्तेदशमी—

उतनःप्रियाप्रियासुसप्तस्वसासुजुष्टा । सरस्वतीस्तोम्याभूत् ॥१०॥३१॥

उत । नः । प्रिया । प्रियासु । सप्तऽस्वसा । सुऽजुष्टा । सरस्वती । स्तोम्या । भूत् ॥ १० ॥ ३१ ॥

उतअपिच नोस्माकंमियासुमियाणांमध्येमियामियतमा सप्तस्वसागायत्र्यादीनिच्छंदासि स्वसारोयस्यास्तादृशी नदीरूपायास्तुगंगाद्याःसप्तनद्यः स्वसारः सुजुष्टाः सुष्ठुपुरातनैर्ऋषिभिः सेविता एवंभूतासरस्वतीदेवीस्तोम्याभूत् स्तोतव्याभवतु ॥ १० ॥

१०. सप्तनदी-रूपिणी, सप्त भगिनी-संयुता, प्राचीन ऋषियों-द्वारा सेविता और हमारी प्रियतमा सरस्वती देवी सदा हमारी स्तुति-पात्री हों।

॥ इतिचतुर्थस्याष्टमेएकत्रिंशोवर्गः ॥ ३१ ॥

अथैकादशी—

आपप्रुषीपार्थिवान्युरुरजोअन्तरिक्षम्। सरस्वतीनिदस्पातु ॥ ११ ॥

आऽपप्रुषी । पार्थिवानि । उरु । रजः । अन्तरिक्षम् । सरस्वती । निदः । पातु ॥ ११ ॥

पार्थिवानि पृथिव्याःसंबन्धीनि उरुउरूणि विस्तीर्णानि रजोरजांसिलोकान्अन्तरिक्षं अन्तराक्षान्तंनभश्च आपप्रुषी स्वतेजसापूरितवती। सरस्वतीदेवी निदःनिन्दकाच्छत्रोः पातु अस्मात्रक्षतु ॥ ११ ॥

११. पृथिवी और स्वर्ग के विस्तीर्ण प्रदेशों को जिन्होंने अपनी दीप्ति से पूर्ण किया है, वही सरस्वती देवी निन्दकों से हमारी रक्षा करें।

अथद्वादशी—

त्रिषधस्थासप्तधातुःपञ्चजातावर्धयन्ती। वाजेवाजेहव्याभूत् ॥ १२॥

त्रिऽसधस्था । सप्तऽधातुः । पञ्च । जाता । वर्धयन्ती । वाजेऽवाजे । हव्या । भूत् ॥ १२ ॥

त्रिषधस्था त्रिषुलोकेषुसहावतिष्ठमाना त्रिलोकव्यापिनी सप्तधातुःसप्तधातवोवयवाः गायत्र्याद्यागंगाद्यावायस्याःसातथोक्ता पंचजाताजातानिनिषादपंचमान्चतुरोवर्णान्गंधर्वादीन्वा-वर्धयन्ती अभिवृद्धान्कुर्वन्ती ईदृशीसरस्वती वाजेवाजे युद्धेयुद्धेसर्वेषुयुद्धेषु हव्याभूद्ध्वातव्या भवति ॥ १२ ॥

१२. त्रिलोक-व्यापिनी, गंगा आदि सप्त नदियों से युक्ता, चारों वर्णों और निषाद की समृद्धि-विधायिनी सरस्वती देवी प्रतियुद्ध में लोगों के आह्वान योग्य होती हैं।

अथत्रयोदशी—

प्रयामहिम्नामहिनासुचेकितेद्युम्नेभिरन्याअपसामपस्तमा।
रथइवबृहतीविभ्वनेकृतोपस्तुत्याचिकितुषासरस्वती ॥ १३ ॥

प्र । या । महिम्ना । महिना । आसु । चेकिते । द्युम्नेभिः । अन्याः । अपसाम् । अपःऽतमा । रथःऽइव । बृहती । विऽभ्वने । कृता । उपऽस्तुत्या । चिकितुषा । सरस्वती ॥ १३ ॥

महिम्नामाहात्म्येनमहिनामहती द्युम्नेभिःद्युम्नैर्द्योतमानैःयशोभिरन्नैर्वायुक्तासती आसु आसांनदीनांदेवतानांमध्येयासरस्वतीप्रचेकिते प्रकर्षेणज्ञायते । याचअन्याःअन्यासां सुपांसुलुगितिषष्ठीवहुवचनस्यजस् अपसांवेगवतीनांमध्येअपस्तमावेगवत्तमा याचरथइवविभ्वनेविभुत्वायबृहती परिवृढा गुणैरधिकाकृता प्रजापतिनानिर्मिता सासरस्वतीचिकितुषा जानतास्तोत्रा उपस्तुत्याउपस्तोतव्याभवति ॥ १३॥

१३. जो माहात्म्य और कीर्ति-द्वारा देवों में प्रसिद्ध हैं, जो नदियों में सबसे वेगवती हैं और श्रेष्ठता के कारण जो अतीव गुण-शालिनी हैं, वही सरस्वती देवी ज्ञानी स्तोता की स्तुति-पात्रा होती हैं ।

सरस्वत्यभिनोनेषिवस्योमापस्फरीःपयसामानआधक् ।
जुषस्वनःसख्यावेश्याचमात्वत्क्षेत्राण्यरणानिगन्म ॥१४॥३२॥

सरस्वति । अभि । नः । नेषि । वस्यः । मा । अप । स्फरीः । पयसा । मा । नः । आ । धक् । जुषस्व । नः । सख्या । वेश्या । च । मा । त्वत् । क्षेत्राणि । अरणानि । गन्म ॥ १४ ॥ ३२ ॥

हेसरस्वति नोस्मान्वस्योवसीयः प्रशस्तंवसुधनंअभिनेषि अभिप्रापय मापस्फरीः अप्रवृद्धान्माकार्षीः । स्फारोवृद्धिः उपसर्गवशात्तद्विपरीतेवर्तते तथापयसोदकेनअधिकेननोस्मान्माआधक् नाभिदह नवाधस्व । अपिचनोस्माकंसख्यासख्यानिसखिकर्माणिवेश्याप्रवेशनानिचजुषस्व सेवस्व । वयंचत्वत्सकाशात्अरणानिअरमणानिनिकृष्टानिक्षेत्राणिमागन्म माप्रापाम अपितुरमणीयान्येव ॥ १४ ॥

१४. सरस्वती, हमें प्रशस्त धन में ले जाओ । हमें हीन नहीं करो । अधिक जल-द्वारा हमें उत्पीड़ित नहीं करना । तुम हमारा बन्धुत्व और गृह स्वीकार करो । हम तुम्हारे पास से निकृष्ट स्थान में न जायें ।

॥ इतिचतुर्थस्याष्टमेद्वात्रिंशोवर्गः ॥ ३२ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येचतुर्थाष्टकेअष्टमोध्यायः समाप्तः ॥ ८ ॥

॥ चतुर्थाष्टकः समाप्तः ॥ ४ ॥

## वैदिक-संहिता

- ☆ **ऋग्वेद संहिता।** मूलमात्र (गुटका)
- ☆ **ऋग्वेद संहिता।** मूलमात्र।
- ☆ **ऋग्वेद संहिता।** भाषामात्र। रामगोविन्द त्रिवेदी
- ☆ **ऋग्वेद संहिता।** सायणाचार्य कृत भाष्य एव हिन्दी व्याख्या सहित। 1-8 भाग सर्म्पूण
- ☆ **ऋग्वेद संहिता।** (प्रथम अध्याय, सूक्त 1-19) हिन्दी व्याख्या तथा हिन्दी अंग्रेजी अनुवाद। सम्पादक-प्रो. उमाशंकर शर्मा 'ऋषि'
- ☆ **शुक्लयजुर्वेद संहिता।** मूलमात्र (गुटका)
- ☆ **शुक्लयजुर्वेद संहिता।** सम्पा. श्री दौलतराम गौड़
- ☆ **शुक्लयजुर्वेद संहिता।** मूलमात्र। (निर्णयसागर संस्करण)
- ☆ **शुक्लयजुर्वेद संहिता।** पदपाठ-उव्वट-महीधरभाष्य संवलित तत्वबोधिनी हिन्दी व्याख्या सहित। डॉ. रामकृष्ण शास्त्री
- ☆ **सामवेद संहिता।** मूलमात्र (गुटका)
- ☆ **सामवेद संहिता।** सायणभाष्य तथा पं. रामस्वरूप शर्मा 'गौड़' कृत हिन्दी भाषानुवाद सहित।
- ☆ **अथर्ववेद संहिता।** मूलमात्र (गुटका)
- ☆ **अथर्ववेद संहिता।** सायणभाष्य तथा पं. रामस्वरूप 'गौड' कृत हिन्दी भाषानुवाद सहित। 1-8 भाग



**चौखम्बा विद्याभवन**

**वाराणसी**